॥ २४ ॥ एतत्श्रवणंअधिष्ठानंप्रतिष्ठाहेतुः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ नसशोचेत्कृताकृतैरितिमयापापंकृतंधर्मोनकृतइतिप
श्चात्तापेननशोचेत् एतच्छ्रवणंसर्वपापनाशनंसर्वक्रतुफलप्रदंचेत्यर्थः ॥ ३४ ॥ इतिश्रीमहाभारतेहरिवंशेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ आसीत ॥ [illegible] २ ॥ काल[illegible]

ततोमन्वंतरेऽतीतेचाक्षुषेऽमितते[illegible]सि ॥ वैवस्वतायमनवेब्रह्मा[illegible]यमथादिशत् ॥ तस्यविस्तरमाख्यास्येमनोर्वैवस्वतस्यह २४ तवानुकू
ल्याद्राजेंद्रयदिशुश्रूषसेनघ ॥ महद्ध्येतदधिष्ठानंपुराणेपरिकीर्तितम् ॥ धन्यंयशस्यमायुष्यंस्वर्गवासंकरंशुभम् २५ ॥ जनमेजयउवाच ॥
विस्तरेणपृथोर्जन्मवैशंपायनकीर्तय ॥ यथामहात्मनातेनदुग्धाचेयंवसुंधरा २६ यथाचापितृभिर्दुग्धायथादेवैर्यथर्षिभिः ॥ यथादैत्यैश्चना
गैश्चयथायक्षैर्यथाद्रुमैः २७ यथाशैलैःपिशाचैश्चगंधर्वैश्चद्विजोत्तमैः ॥ राक्षसैश्चमहासत्त्वैर्यथादुग्धावसुंधरा २८ तेषांपात्रविशेषां
श्चवैशंपायनकीर्तय ॥ वत्सान्क्षीरविशेषांश्चदोग्धारंचानुपूर्वशः २९ यस्माच्चकारणात्पाणिर्वेनस्यमथितःपुरा ॥ क्रुद्धैर्महर्षिभिस्ताततका
रणंतच्चकीर्तय ३० वैशंपायनउवाच ॥ हंततेकथयिष्यामिपृथोर्वैन्यस्यविस्तरम् ॥ एकाग्रःप्रयतश्चैवशृणुष्वजनमेजय ३१ नाशुचेःक्षुद्रमन
सःकुशिष्यायाव्रतायच ॥ कीर्तनीयमिमंराजन्कृतघ्नायाहितायवा ३२ स्वर्ग्यंयशस्यमायुष्यंधर्म्यंवेदेनसंमितम् ॥ रहस्यमृषिभिःप्रोक्तंशृ
णुराजन्यथातथम् ३३ यश्चैनंकथयेन्नित्यंपृथोर्वैन्यस्यविस्तरम् ॥ ब्राह्मणेभ्योनमस्कृत्यनसशोचेत्कृताकृतैः ३४ इतिश्रीमहाभारतेखिले
षुहरिवंशपर्वणिपृथूपाख्यानेचतुर्थोऽध्यायः ४ वैशंपायनउवाच ॥ आसीद्धर्मस्यगोप्तावैपूर्वमत्रिसमःप्रभुः ॥ अत्रिवंशसमुत्पन्नस्त्वंगोनाम
प्रजापतिः १ तस्यपुत्रोभवद्वेनोनात्यर्थंधर्मकोविदः ॥ जातोमृत्युसुतायांवैसुनीथायांप्रजापतिः २ समातामहदोषेणवेनःकालात्मजात्मजः
स्वधर्मंपृष्ठतःकृत्वाकामाल्लोभेष्ववर्तत ३ मर्यादांस्थापयामासधर्मापेतांसपार्थिवः ॥ वेदधर्मानतिक्रम्यसोऽधर्मनिरतोऽभवत् ४ निःस्वाध्याय
वषट्कारस्तस्मिन्राजनिशासति ॥ प्रवृत्तंनपपुःसोमंहुतंयज्ञेषुदेवताः ५ नयष्टव्यंनहोतव्यमितितस्यप्रजापतेः ॥ आसीत्प्रतिज्ञाक्रूरेयंवि
नाशेप्रत्युपस्थिते ६ अहमिज्यश्चयष्टाचयज्ञश्चेतिकुरूद्वह ॥ मयियज्ञोविधातव्योमयिहोतव्यमित्यपि ७ तमतिक्रांतमर्यादमाददानमसां
प्रतम् ॥ ऊचुर्महर्षयःसर्वेमरीचिप्रमुखास्तदा ८ वयंदीक्षांप्रवेक्ष्यामःसंवत्सरगणान्बहून् ॥ अधर्मंकुरुमावेननैषधर्मःसनातनः ९

याः आत्मजः ॥ ३ ॥ ४ ॥ प्रवृत्तंदेवतोद्देशेनत्यक्तम् हुतंअग्नौप्रक्षिप्तमपिसामंनपपुः यतोनिःस्वाध्यायवषट्काराः ॥ ५ ॥ तत्रहेतुमाह नेति धर्मद्वेष्टरिराज्ञिदत्तमपिहविर्देवान
भंजतइतिभावः ॥ ६ ॥ मयिदेवतारूपेमन्निमित्तंनत्वन्यदेवतार्थम् मयिअग्निरूपे ॥ ७ ॥ ८ ॥ ९ ॥

निधनेवंशेनिधनंकुलनाशयोरितिविश्वः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ पाठांतरेअपनेतुंअधर्मादपाक्रष्टुम् ॥ १५ ॥ निगृह्यजीवंतमपिपातयित्वा॥१६॥१७॥१८॥ धीवरान्नाविकान् ॥ १९ ॥ तुषारास्तुंबराश्चप्रांत्यदेशीयाःम्लेच्छविशेषाःविंध्यनिलयाःगोंडइतिकोलइतिचप्रसिद्धाःमध्यदेशीयाः ॥ २० ॥ २१ ॥ २२ ॥ गृह्यगृहीत्वा

निधनेत्रप्रसूतस्त्वंप्रजापतिरसंशयम् ॥ प्रजाश्चपालयिष्येऽहमितितेसमयःकृतः १० तांस्तदाब्रुवतःसर्वान्महर्षीनब्रवीत्तदा ॥ वेनःप्रहस्य दुर्बुद्धिरिममर्थमनर्थवित् ११ ॥ वेनउवाच ॥ स्रष्टाधर्मस्यकश्चान्यःश्रोतव्यंकस्यवैमया ॥ श्रुतवीर्यतपःसत्यैर्मयावाकःसमोभुवि १२ प्रभवं सर्वभूतानांधर्माणांचविशेषतः ॥ संमूढानविदुर्नूनंभवंतोमामचेतसः १३ इच्छन्दहेयंपृथिवींप्लावयेयंतथाजलैः ॥ खंभुवंचैवरुंधेयंनात्रका र्याविचारणा १४ यदानशक्यतेमोहादवलेपाच्चपार्थिवः ॥ अनुनेतुंतदावेनस्ततःक्रुद्धामहर्षयः १५ निगृह्यतंमहात्मानोविस्फुरंतंमहाबलम् ततोस्यसव्यमूरुंतेममंथुर्जातमन्यवः १६ तस्मिंस्तुमथ्यमानेवैराज्ञऊरौप्रजज्ञिवान् ॥ ह्रस्वोतिमात्रःपुरुषःकृष्णश्चातिबभूवह १७ सभी तःप्रांजलिर्भूत्वास्थितवान्जनमेजय ॥ तमत्रिर्विह्वलंदृष्ट्वानिषीदेत्यब्रवीत्तदा १८ निषादवंशकर्त्तासौबभूववदतांवर ॥ धीवरानसृज च्चाथवेनकल्मषसंभवान् १९ येचान्येविंध्यनिलयास्तुषारास्तुंबरास्तथा ॥ अधर्मरुचयोयेचविद्धितान्वेनसंभवान् २० ततःपुनर्महा त्मानःपाणिंवेनस्यदाक्षिणम् ॥ अरणीमिवसंरब्धाममंथुस्तेमहर्षयः २१ पृथुस्तस्मात्समुत्तस्थौकरात्ज्वलनसंनिभः ॥ दीप्यमानःस्ववपुषासाक्षादग्निरिवज्वलन् २२ सधन्वीकवचीजातःप्रथुरेवमहायशाः ॥ आद्यमाजगवंनामधनुर्गृह्यमहावरम् ॥ शरांश्चदिव्यान्रक्षार्थंक वचंचमहाप्रभम् २३ तस्मिन्जातेथभूतानिसंप्रहृष्टानिसर्वशः ॥ समापेतुर्महाराजवेनश्चत्रिदिवंगतः २४ समुत्पन्नेनकौरव्यसत्पुत्रेणमहा त्मना ॥ त्रातःसपुरुषव्याघ्रपुन्नाम्नोनरकात्तदा २५ तंसमुद्राश्चनद्यश्चरत्नान्यादायसर्वशः ॥ तोयानिचाभिषेकायसर्वएवोपतस्थिरे २६ पि तामहश्चभगवान्देवैरांगिरसैःसह ॥ स्थावराणिचभूतानिजंगमानितथैवच २७ समागम्यतदावैन्यमभ्यषिंचन्नराधिपम् ॥ महताराजरा ज्येनप्रजापालंमहाद्युतिम् २८ सोभिषिक्तोमहातेजाविधिवद्धर्मकोविदैः ॥ आदिराज्येतदाराज्ञांपृथुर्वैन्यःप्रतापवान् २९ पित्राऽपरंजिता स्तस्यप्रजास्तेनानुरंजिताः ॥ अ[illegible]रागात्ततस्तस्यनामराजेत्य[illegible]त ३० आपस्तस्तंभिरेचास्यसमुद्रमभियास्यतः ॥ पर्वताश्चददुर्मार्गंध्व जभंगश्चनाभवत् ३१

रक्षार्थंप्रजानांस्थितइतिशेषः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ अपरंजिता[illegible]डिताः अ[illegible]दात अनु[illegible] स्मिन्[illegible]जाइतिराजपदनिर्वचनंदर्शितम् ॥ ३० ॥ तस्तंभिरेस्थलवत्कठिनाबभूवुः अभिउपरियास्यतोगंतुमिच्छतः ध्वजभंगोवृक्षाणांशाखादिभिर्गोपुरादिभिर्वा ॥ ३१ ॥

पुटकेपुटकेपत्रेपत्रे ॥ ३२ ॥ सूत्यांसोमाभिषवकाले अभिषवःसोमवल्ल्याःकंडनंरसनिष्काशनार्थम् ॥ ३३ ॥ अन्यत्रतुवैन्यस्यैवयज्ञेऽग्निकुंडात्सूतमागधौजाताविस्यु क्तम् व[illegible]भेदात्समाधेयम्॥ ३४ ॥ ३५ ॥ ३६ ॥ विद्रःजानीवइत्युत्तमस्यद्विवचनं ॥ ३७ ॥ पश्चात्पूर्वस्मिन्कल्पेयानिकृतवान्तैरेवअस्मिन्कल्पेभाविष्यैःकर्मभिःस्तूयता

अकृष्टपच्यापृथिवीसिध्यत्यन्नानि[illegible]चिंतया ॥ सर्वकामदुघागावःपुटकेपुटकेमधु ३२ एतस्मिन्नेवकालेतुयज्ञेपैतामहेशुभे ॥ सूतःसूत्यांसमुत्प न्नःसौत्येहनिमहामतिः [illegible]स्मिन्नेवमहा[illegible]जज्ञेप्राज्ञोऽथमागधः ॥ पृथोःस्तवार्थंतौतत्रसमाहूतौसुरर्षिभिः ३४ तावूचुर्ऋषयःसर्वेस्तूय तामेषपार्थिवः॥कर्मैस्तदनुरूपंवांपात्रंचायंनराधिपः ३५ तावूचतुस्तदासर्वांस्तानृषीन्सूतमागधौ॥आवांदेवानृषींश्चैवप्रीणयावःस्वकर्मभिः ३६ नचास्यविद्वोवैकर्मनतथालक्षणंयशः॥स्तोत्रंयेनास्यकुर्यावराज्ञस्तेजस्विनोद्विजाः ३७ ऋषिभिस्तौनियुक्तौचभविष्यैस्तूयतामिति॥या निकर्माणिकृतवान्पृथुःपश्चान्महाबलः ३८ सत्यवाग्दानशीलोयंसत्यसंधोनरेश्वरः॥श्रीमान्जैत्रःक्षमाशीलोविक्रांतोदुष्टशासनः ३९ धर्मज्ञ श्चकृतज्ञश्चदयावान्प्रियभाषणः ॥ मान्योमानयितायज्वाब्रह्मण्यःसत्यसंगरः ४० शमःशांतश्चनिरतोव्यवहारस्थितोनृपः ॥ ततःप्रभृतिलो केषुस्तवेषुजनमेजय ॥ आशीर्वादाःप्रयुज्यंतेसूतमागधबंदिभिः ४१ तयोःस्तवैस्तैःसुप्रीतःपृथुःप्रादात्प्रजेश्वरः ॥ अनूपदेशंसूतायमगधान्मा गधायच ४२ तंदृष्ट्वापरमप्रीताःप्रजाप्राहुर्महर्षयः॥वृत्तीनामेषवोदाताभविष्यतिजनेश्वरः ४३ ततोवैन्यंमहाराजप्रजाःसमभिदुद्रुवुः ॥ त्वंनो वृत्तिंविधत्स्वेतिमहर्षिवचनात्तदा ४४ सोभिद्रुतःप्रजाभिस्तुप्रजाहितचिकीर्षया ॥ धनुर्गृह्यपृषत्कांश्चपृथिवीमाद्रयद्बली ४५ ततोवैन्यभयत्र स्तागौर्भूत्वाप्राद्रवन्मही॥तांपृथुर्धनुरादायद्रवंतीमन्वधावत ४६ सालोकान्ब्रह्मलोकादीन्गत्वावैन्यभयात्तदा ॥ प्रददर्शाग्रतोवैन्यंप्रगृहीत शरासनम् ४७ ज्वलद्भिर्निशितैर्बाणैर्दीप्ततेजसमच्युतम् ॥ महायोगंमहात्मानंदुर्धर्षममरैरपि ४८ अलभंतीतुसात्राणंवैन्यमेवान्वपद्यत ॥ कृ तांजलिपुटाभूत्वापूज्यालोकैस्त्रिभिःसदा ४९ उवाचवैन्यंनाधर्मंस्त्रीवधंकर्तुमर्हसि ॥ कथंधारयिताचासिप्रजाराजन्विनामया ५० मयिलोकाः स्थिताराजन्मयेदंधार्यतेजगत्॥मद्विनाशेविनश्येयुःप्रजाःपार्थिवविद्धितत् ५१ नत्वमर्हसिमांहंतुंश्रेयश्चेत्त्वंचिकीर्षसि ॥ प्रजानांपृथिवीपाल शृणुचेदंवचोमम ५२ उपायतःसमारब्धाःसर्वेसिध्यंत्युपक्रमाः ॥ उपायंपश्ययेनत्वंधारयेथाःप्रजान्नृप ५३

मितियोजना प्रतिकल्पंसमाननामरूपायाएवसृष्टेः सूर्याचंद्रमसौधातायथापूर्वमकल्पयदितिश्रवणात् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ इतिहरिवंशेटीकायांपंचमोऽध्यायः ॥ ५ ॥ पृथुनावशतांनीतापृथ्वीमन्वादिभिःक्रमात् ॥ दुग्धास्वाभीष्टदुग्धानिषष्ठेऽध्यायइतीर्यते ॥ १ ॥ अवध्यां स्त्रियमितियदुक्तंतत्रोत्तरमाह एकस्येतिद्वाभ्याम् ॥ १ ॥ निहतेअशुभेइतिच्छेदः ॥ २ ॥ ३ ॥ ४ ॥ कथंधारयितेत्यस्योत्तरंत्वांनिहत्येति आत्मानंदेहंधारयिताधारयिष्यामि

हत्वापिमांनशक्तस्त्वंप्रजाधारयितुंनृप ॥ अनुभूताभविष्यामियच्छकोपंमहाद्युते ५४ अवध्याश्चस्त्रियःप्राहुस्तिर्यग्योनिगतेष्वपि ॥ सत्त्वे षुपृथिवीपालनधर्मंत्यक्तुमर्हसि ५५ एवंबहुविधंवाक्यंश्रुत्वाराजामहामनाः ॥ कोपंनिगृह्यधर्मात्मावसुधामिदमब्रवीत् ५६ इतिश्रीमहा भारतेखिलेषुहरिवंशेहरिवंशपर्वणिपृथूपाख्यानेपंचमोऽध्यायः ५ ॥ ७ ॥ पृथुरुवाच ॥ एकस्यार्थाययोहन्यादात्मनोवापरस्यवा ॥ बहून्वैप्रा णिनोलोकेभवेत्तस्येहपातकम् १ सुखमेधंतिबहवोयस्मिंस्तुनिहतेऽशुभे ॥ तस्मिन्नास्तिहतेभद्रेपातकंचोपपातकम् २ एकस्मिन्यत्रनिध नंप्रापितेदुष्टकारिणि ॥ बहूनांभवतिक्षेमंतत्रपुण्यप्रदोबुधः ३ सोहंप्रजानिमित्तंत्वांहनिष्यामिवसुंधरे ॥ यदिमेवचनंनाद्यकरिष्यसिजग द्धितम् ४ त्वांनिहत्याद्यबाणेनमच्छासनपराङ्मुखीम् ॥ आत्मानंप्रथयित्वाहंप्रजाधारयिताचिरम् ५ सात्वंशासनमास्थायममधर्मभूतां वरे ॥ संजीवयप्रजाःसर्वाःसमर्थाह्यसिधारणे ६ दुहितृत्वंचमेगच्छततएनमहंशरम् ॥ नियच्छेयंत्वद्वधार्थमुद्यतंघोरदर्शनम् ७ पृथिव्यु वाच ॥ सर्वमेतदहंवीरविधास्यामिनसंशयः ॥ उपायतःसमारब्धाःसर्वेसिध्यंत्युपक्रमाः ८ उपायंपश्ययेनत्वंधारयेथाःप्रजाइमाः ॥ वत्सं तुममसंपश्यक्षरेयंयेनवत्सला ९ समांचकुरुसर्वत्रमांत्वंधर्मभृतांवर ॥ यथाविस्पंदमानंमेक्षीरंसर्वत्रभावयेत् १० वैशंपायनउवाच ॥ तत उत्सारयामासशैलांच्छतसहस्रशः ॥ धनुष्कोटयातदावैन्यस्तेनशैलाविवर्द्धिताः ११ पृथुर्वैन्यस्तदाराजामहींचक्रेसमांततः ॥ मन्वंतरे ष्वतीतेषुविषमासीद्वसुंधरा १२ स्वभावेनाभवन्ह्यस्याःसमानिविषमाणिच ॥ चाक्षुषस्यांतरेपूर्वमासीदेवंतदाकिल १३ नाहिपूर्वविसर्गेवै विषमेपृथिवीतले ॥ प्रविभागःपुराणांचग्रामाणांवातदाऽभवत् १४ नसस्यानिनगोरक्षानकृषिर्नवणिक्पथः ॥ नैवसत्यानृतंतत्रनलोभोन चमत्सरः १५ वैवस्वतेंतरे[illegible]स्मिन्नूसांप्रत[illegible]मुपस्थिते ॥ वैन्यात्प्रभृतिराजेंद्रसर्वस्यैतस्यसंभवः १६

प्रथयित्वाविस्तार्य ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ संपश्यदिव्यदृष्ट्याकल्पय वत्सलास्नेहेन क्षरेयंदुग्धंस्त्रवेयं ॥ ९ ॥ विस्पंदमानंक्षरत् भावयेत् स्वार्थेणिच्सर्वत्रभवेत् ॥ १० ॥ तेनशैले[illegible]शैलंस्थापयताशैलाःविवृद्धिंप्रापिताःइष्टकाभित्तिवत् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ वाणिगेववणिक्पथःसत्यानृतंवाणिज्यं ॥ १५ एतस्यपुराविभागादेः १६

१ पाठान्तरंनृपोवैन्यइति ।

समरोचयन्प्रीत्याचक्रुः ॥१७॥ तदावैन्येनभूमेर्दोहनात्प्राक् ॥ १८ ॥ पृथ्वींपृथिवीतः सस्यजातानिव्रीह्यादीनिदुहोहप्रपूरितवान् ॥ १९ ॥ वर्ततेउपजीवंतिसोमःब्राह्मणराजत्वा तूवत्सः ॥ २० ॥ छंदांसिवेदाः तत्रहितदर्थभूतंतपोब्रह्मचकृच्छ्रचांद्रायणंअग्निहोत्रादिकंच शाश्वतंनात्विदानींकल्पितम् ॥ २१ ॥ २२ ॥ ऊर्जस्करंअमृतंयज्ञियंहविरित्य

यत्रयत्रसमंत्वस्याभूमेरासीदिहानघ ॥ तत्रतत्रप्रजाःसर्वाःसंवासंसमरोचयन् १७ आहारःफलमूलानिप्रजानामभवत्तदा ॥ कृच्छ्रेणमहतायुक्तइत्येवमनुशुश्रुम १८ संकल्पयित्वावत्संतुमनुंस्वायंभुवंप्रभुम् ॥ स्वपाणौपुरुषश्रेष्ठदुदोहपृथिवींततः ॥ सस्यजातानि सर्वाणिपृथुर्वैन्यःप्रतापवान् १९ तेनान्नेनप्रजास्तातवर्ततेद्यापिनित्यशः ॥ ऋषिभिःश्रूयतेचापिपुनर्दुग्धावसुंधरा ॥ वत्सःसोमोभव त्तेषांदोग्धाचांगिरसःसुतः २० बृहस्पतिर्महातेजाःपात्रंछंदांसिभारत ॥ क्षीरमासीदनुपमंतपोब्रह्मचशाश्वतम् २१ पुनर्देवगणैः सर्वैःपुरंदरपुरोगमैः ॥ कांचनंपात्रमादायदुग्धेयंश्रूयतेमही २२ वत्सस्तुमघवानासीद्दोग्धाचसविताप्रभुः ॥ क्षीरमूर्जस्करंचैववर्तंते येनदेवताः २३ पितृभिःश्रूयतेचापिपुनर्दुग्धावसुंधरा ॥ राजतंपात्रमादायस्वधाममितविक्रमैः २४ यमोवैवस्वतस्तेषामासीद्वत्सः प्रतापवान् ॥ अंतकश्चाभवद्दोग्धाकालोलोकप्रकालनः २५ नागैश्चश्रूयतेदुग्धावत्संकृत्वातुतक्षकम् ॥ अलाबुंपात्रमादायविषंक्षीरं नरोत्तम २६ तेषामैरावतोदोग्धाधृतराष्ट्रःप्रतापवान् ॥ नागानांभरतश्रेष्ठसर्पाणांचमहीपते २७ तेनैववर्तयंत्युग्रामहाकायाविषो ल्बणाः ॥ तदाहारास्तदाचारास्तद्वीर्यास्तदुपाश्रयाः २८ असुरैःश्रूयतेचापिपुनर्दुग्धावसुंधरा ॥ आयसंपात्रमादायमायांशत्रुनिबर्हिणी म् २९ विरोचनस्तुप्राह्लादिर्वत्सस्तेषामभूत्तदा ॥ ऋत्विक्द्विमूर्द्धादैत्यानांमधुर्दोग्धामहाबलः ३० तयैतेमाययाद्यापिसर्वेमायाविनो सुराः ॥ वर्तयंत्यमितप्रज्ञास्तदेषाममितंबलम् ३१ यक्षैश्चश्रूयतेतातपुनर्दुग्धावसुंधरा ॥ आमपात्रेमहाराजपुरांतर्द्धानमक्षयम् ३२ वत्संवैश्रवणंकृत्वायक्षैःपुण्यजनैस्तदा ॥ दोग्धारजतनाभस्तुपितामणिवरस्ययः ३३ यक्षानुजोमहातेजात्रिशीर्षःसुमहातपाः ॥ तेन तेवर्तयंतीतिपरमर्षिरुवाचह ३४ राक्षसैश्चपिशाचैश्चपुनर्दुग्धावसुंधरा ॥ शावंकपालमादायप्रजाभोक्तुंनरर्षभ ३५ दोग्धारजतना भस्तुतेषामासीत्कुरूद्वह ॥ वत्सःसुमालीकौरव्यक्षीरंरुधिरमेवच ३६

वत् ॥ २३ ॥ स्वधांपितृन्नं ॥ २४ ॥ २५ ॥ अलाबुंतुंबीफलम् ॥ २६ ॥ नागानांऐरावतःसर्पाणांधृतराष्ट्रःदोग्धेतिशेषः ॥ २७ ॥ २८ ॥ २९ ॥ द्विमूर्द्धेतिमधोर्विशेषणम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ तेनअंतर्धानेनतेयक्षाः वर्तयंति परशरीरमाविश्याप्रत्यक्षास्तेजीवंतीत्यर्थः ॥ ३४॥ प्रजाभोक्तुंस्वसंतानानितर्पयितुम् ॥ ३५ ॥३६ ॥

॥ ३७ ॥ गंधान्सुरभिद्रव्याणि ॥ ३८ ॥ ३९ ॥ औषधीःज्योतिष्मत्यादिकाः ॥ ४० ॥ शैलंशिलामयं ॥ ४१ ॥ पालाशंपर्णमयम् ॥ ४२ ॥ धात्रीपाययित्रीमातेव पोषणकरीवैधात्रीतद्विपरीतासर्वमात्मन्युपसंहरतीत्यर्थः ॥ ४३ ॥ प्रतिष्ठाआश्रयः योनिः रत्नादिक्रमेणउत्पत्तिस्थानम् दोग्ध्रीधेनुरूपाचतुर्वर्गस्यापि ॥ ४४ ॥ ४५ ॥ अ

तेनक्षीरेणयक्षाश्चराक्षसाश्चामरोपमाः ॥ वर्तयंतिपिशाचाश्चभूतसंघास्तथैवच ३७ पद्मपात्रेपुनर्दुग्धागंधर्वैःसाप्सरोगणैः ॥ वत्संचि
त्ररथंकृत्वाशुचीन्गंधान्नरर्षभ ३८ तेषांचसुरुचिस्त्वासीद्दोग्धाभरतसत्तम ॥ गंधर्वराजोतिबलोमहात्मासूर्यसन्निभः ३९ शैलैश्चश्रूय
तेराजन्पुनर्दुग्धावसुंधरा ॥ औषधीर्वैमूर्तिमतीरत्नानिविविधानिच ४० वत्सस्तुहिमवानासीन्मेरुर्दोग्धामहागिरिः ॥ पात्रंतुशैलमेवा
सीत्तेनशैलाविवर्धिताः ४१ वीरुद्भिःश्रूयतेराजन्पुनर्दुग्धावसुंधरा ॥ पालाशंपात्रमादायदग्धच्छिन्नप्ररोहणम् ४२ दुदोहपुष्पितःसा
लोवत्सःप्लक्षोभवत्तदा ॥ सेयंधात्रीविधात्रीचपावनीचवसुंधरा ४३ चराचरस्यसर्वस्यप्रतिष्ठायोनिरेवच ॥ सर्वकामदुघादोग्ध्रीसर्वस
स्यप्ररोहिणी ४४ आसीदियंसमुद्रांतामेदिनीतिपरिश्रुता ॥ मधुकैटभयोःकृत्स्नामेदसाभिपरिप्लुता ॥ तेनेयंमेदिनीदेवीप्रोच्यतेब्रह्मवा
दिभिः ४५ ततोभ्युपगमाद्राज्ञःपृथोर्वैन्यस्यभारत ॥ दुहितृत्वमनुप्राप्तादेवीपृथ्वीतिचोच्यते ॥ पृथुनाप्रविभक्ताचशोधिताचवसुंधरा ॥
४६ सस्याकरवतीस्फीतापुरपत्तनमालिनी ॥ एवंप्रभावोवैन्यःसराजासीद्राजसत्तमः ४७ नमस्यश्चैवपूज्यश्चभूतग्रामैर्नसंशयः ॥ ब्रा
ह्मणैश्चमहाभागैर्वेदवेदांगपारगैः ४८ पृथुरेवनमस्कार्योब्रह्मयोनिःसनातनः ॥ पार्थिवैश्चमहाभागैःपार्थिवत्वमभीप्सुभिः ४९ आ
दिराजोनमस्कार्यःपृथुर्वैन्यःप्रतापवान् ॥ योधैरपिचविक्रांतैःप्राप्तुकामैर्जयंयुधि ॥ पृथुरेवनमस्कार्योयोधानांप्रथमोनृपः ५० योहियो
द्धारणंयातिकर्त्तयित्वापृथुंनृपम् ॥ सघोररूपान्संग्रामान्क्षेमीतरतिकीर्तिमान् ५१ वैश्यैरपिचवित्ताढ्यैःपण्यवृत्तिमनुष्ठितैः ॥ पृथुरेव
नमस्कार्योवृत्तिदातामहायशाः ५२ तथैवशूद्रैःशुचिभिस्त्रिवर्णपरिचारिभिः ॥ आदिराजोनमस्कार्यःश्रेयःपरमभीप्सुभिः ५३ एतेव
त्सविशेषाश्चदोग्धारःक्षीरमेवच ॥ पात्राणिचमयोक्तानिकिंभूयोवर्णयामिते ५४

भ्युपगमात्पुत्रीत्वेनअंगीकारात् ॥ ४६ ॥ पुरंराजधानी पत्तनंमहापणिकनगरम् पुराणांपत्तनानांमालासमूहोस्तियस्यांसा वैन्यः पृथुः ॥ ४७ ॥ भूतग्रामैः प्राणिसमूहैः ॥ ॥ ४८ ॥ ब्रह्मयोनिः आत्रेयःसनातनोविष्णुरूपः ॥ ४९ ॥ ५९ ॥ ५१ ॥ पण्यवृत्तिमनुष्ठितैर्वाणिज्याद्युपजीविभिः ॥ ५२ ॥ ५३ ॥ ५४ ॥

वेनांध्येननिरोध्यसत्वरजसीधीधर्मनाशेकृतेसंतःसत्वपृथुंपृथग्व्यधुरितस्तद्वद्रजोधीवरं ॥ सत्त्वाक्रांतमनोवनिंप्रियपयःसंकल्पवत्साजनाधीपात्रेदुदुहुर्यथैवामितरैःप्राज्ञैरनुष्ठीयतां ॥
आख्यायिकायाअवांतरतात्पर्यंतुपुण्यभाजिराज्ञिपृथ्वीबीजानिप्रसूतेपापानिग्रसतीति ॥ ५५ ॥ इतिश्रीहरिवंशेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ मन्वंतराणिमनवोदेवाऋष्याद
यस्तथा ॥ सप्तमेचानुवर्ण्यंतेक्रमशोवैपृथक्पृथक् ॥१॥ मन्वंतराणीति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ मेरुसावर्णाश्चत्वारः ब्रह्मसावर्णिः रुद्रसावर्णिः मेरुसावर्णिः दक्षसावर्णि

यइदंशृणुयान्नित्यंपृथोश्चरितमादितः ॥ पुत्रपौत्रसमायुक्तोमोदतेसुचिरंभुवि ५५ इतिश्रीमहाभारतेखिलेषहुरिवंशेहरिवंशपर्वणिषष्ठो ध्यायः ॥ ६ ॥ ॥ जनमेजयउवाच ॥ मन्वंतराणिसर्वाणिविस्तरेणतपोधन ॥ तेषांसृष्टिंविसृष्टिंचवैशंपायनकीर्तय १ यावंतोमनवश्चै वयावंतंकालमेवच ॥ मन्वंतरंतथाब्रह्मन्श्रोतुमिच्छामितत्त्वतः २ ॥ वैशंपायनउवाच ॥ नशक्योविस्तरस्तातवक्तुंवर्षशतैरपि ॥ मन्वंत राणांकौरव्यसंक्षेपंत्वेवमेशृणु ३ स्वायंभुवोमनुस्तातमनुःस्वारोचिषस्तथा ॥ उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्तथा ४ वैवस्वतश्चकौरव्य सांप्रतोमनुरुच्यते ॥ सावर्णिश्चमनुस्तातभौत्योरौच्यस्तथैवच ५ तथैवमेरुसावर्णाश्चत्वारोमनवःस्मृताः ॥ अतीतावर्त्तमानाश्चतथैवानाग ताश्चये ६ कीर्तितामनवस्तातमयैतेतुयथाश्रुतम् ॥ ऋषींस्तेषांप्रवक्ष्यामिपुत्रान्देवगणांस्तथा ७ मरीचिरत्रिर्भगवानंगिराःपुलहःक्रतुः ॥ पुलस्त्यश्चवसिष्ठश्चसप्तैतेब्रह्मणःसुताः ८ उत्तरस्यांदिशितथाराजन्सप्तर्षयोऽपरे ॥ देवाश्चशान्तरजसस्तथाप्रकृतयःपरे ॥ यामानाम तथादेवाआसन्स्वायंभुवेंतरे ९ आग्नीध्रश्चाग्निबाहुश्चमेधामेधातिथिर्वसुः ॥ ज्योतिष्मान्द्युतिमान्हव्यःसवनःपुत्रएवच १० मनोः स्वायंभुवस्यैतेदशपुत्रामहौजसः ॥ एतत्तेप्रथमंराजन्मन्वंतरमुदाहृतम् ११ औवोंवसिष्ठपुत्रश्चस्तंबःकाश्यपएवच ॥ प्राणोबृहस्पति श्चैवदत्तोनिश्च्यवनस्तथा १२ एतेमहर्षयस्तातवायुप्रोक्तामहाव्रताः ॥ देवाश्चतुषितानामस्मृताःस्वारोचिषेंतरे १३ हविर्ध्रःसुकृति ज्योतिरापोमूर्तिरयस्मयः ॥ प्रथितश्चनभस्यश्चनभऊर्जस्तथैवच १४

श्चएतेमेरौतपःकृत्वासिद्धिप्राप्ताइतिसर्वेऽपिमेरुसावर्णाइत्युच्यंते ॥ ६ ॥ यथाश्रुतंगुरूपदेशमनतिक्रम्येति तेषांमनूनांपुत्रान् ॥ ७ ॥ प्रथममन्वंतरगतं ऋष्यादित्रयमाह मरीचि रितिचतुर्भिः ॥ ८ ॥ अपरेवैवस्वतगतसप्तर्षिभ्योमरीच्यादिभ्योन्ये ॥ ९ ॥ पुत्रइतिपुत्रनामा ॥ १० ॥ ११ ॥ स्वारोचिषगतऋष्यादित्रयमाह औवेंतिसार्द्धचतुष्ट येनद्वितीयमन्वंतरगताऋष्यादयउक्ताः वसिष्ठपुत्रऔर्वनामा ॥ १२ ॥ १३ ॥ १४ ॥

१ मनस्यश्चेति पाठान्तरम्.

॥ १५ ॥ १६ ॥ वसिष्ठेतिसप्तवासिष्ठपुत्रावासिष्ठाइतिविश्रुताऋषयोत्रउत्तमेमयाप्रोक्ताइत्याग्रिमेणान्वयःकेतेवासिष्ठायेपूर्वंहिरण्यगर्भपुत्राःऊर्जसंज्ञाःसुतेजसःअतिप्रतापाआसन्नितिपश्चात्वसिष्ठजाताइत्यन्वयः ॥ १७ ॥ सप्तर्षयोमयाप्रोक्ताइतिपूर्वान्वयिकीर्त्यमानान्औत्तमेयान्निबोधेत्युत्तरेणान्वयः ॥ १८ ॥ तनूजःतनूजनामा ॥ १९ ॥ चतुर्थ

स्वारोचिषस्यपुत्रास्तेमनोस्तातमहात्मनः ॥ कीर्तिताःपृथिवीपालमहावीर्यपराक्रमाः १५ द्वितीयमेतत्कथितंतवमन्वंतरंमया ॥ इदं तृतीयंवक्ष्यामितन्निबोधनराधिप १६ वसिष्ठपुत्राःसप्तासन्वासिष्ठाइतिविश्रुताः ॥ हिरण्यगर्भस्यसुताऊर्ज्जानामसुतेजसः १७ ऋषयोत्रमयाप्रोक्ताःकीर्त्यमानान्निबोधमे ॥ औत्तमेयान्महाराजदशपुत्रान्मनोरमान् १८ ईषऊर्जस्तनूजश्चमधुर्माधवएवच ॥ शुचिःशुक्रः सहश्चैवनभस्योनभएवच १९ भानवस्तत्रदेवाश्चमन्वंतरमुदाहृतम् ॥ मन्वंतरंचतुर्थंतेकथयिष्यामितच्छृणु २० काव्यःपृथुस्तथैवाग्निर्जन्युर्द्धाताचभारत ॥ कपीवानकपीवांश्चतत्रसप्तर्षयोऽपरे २१ पुराणेकथितास्तातपुत्राःपौत्राश्चभारत॥ सत्यादेवगणाश्चैवतामसस्यांतरेमनोः २२ पुत्रांश्चैवप्रवक्ष्यामितामसस्यमनोर्नृप ॥ द्युतिस्तपस्यःसुतपास्तपोमूलस्तपोधनः २३ तपोरतिरकल्माषस्तन्वीधन्वीपरंतपः ॥ तामसस्यमनोरेतेदशपुत्रामहाबलाः २४ वायुप्रोक्तामहाराजपंचमंतदनंतरम् ॥ वेदबाहुर्यदुध्रश्चमुनिर्वेदशिरास्तथा २५ हिरण्यरोमापर्ज्जन्यऊर्ध्वबाहुश्चसोमजः ॥ सत्यनेत्रस्तथात्रेयएतेसप्तर्षयोऽपरे २६ देवाश्चभूतरजसस्तथाप्रकृतयोऽपरे ॥ पारिप्लवश्चरैभ्यश्चमनोरंतरमुच्यते २७ अथपुत्रानिमांस्तस्यनिबोधगदतोमम ॥ धृतिमानव्ययोयुक्तस्तत्वदर्शीनिरुत्सुकः २८ अरण्यश्चप्रकाशश्चनिर्मोहःसत्यवाक्कविः ॥ रैवतस्यमनोःपुत्राःपंचमंचैतदंतरम् २९ षष्ठंतेसंप्रवक्ष्यामितन्निबोधनराधिप ॥ भृगुर्नभोविवस्वांश्चसुधामाविरजास्तथा ३० अतिनामासहिष्णुश्चसप्तैतेवैमहर्षयः ॥ चाक्षुषस्यांतरेतातमनोर्देवानिमान्शृणु ३१ आद्याःप्रभूताऋभवःपृथग्भावादिवौकसः ॥ लेखाश्चनामराजेंद्रपंचदेवगणास्मृताः ॥ ऋषेरंगिरसःपुत्रामहात्मानोमहौजसः ३२ नाड्वलेयामहाराजदशपुत्राश्चविश्रुताः ॥ ऊरुप्रभृतयोराजन्षष्ठंमन्वंतरंस्मृतम् ३३

माहमन्वंतरमिति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ पंचममाह वेदबाहुरितिसार्धैश्चतुर्भिः मुनिरितिवेदशिरसोविशेषणं ॥२५ ॥ सोमजःऊर्ध्वबाहुः आत्रेयः सत्यनेत्रः ॥ २६ ॥ तथाप्रकृतयःअभूतरजःस्वभावाः पारिप्लवरैभ्यश्चदेवतागणविशेषौ ॥ २७ ॥ २८ ॥ २९ ॥ षष्ठंतइति ॥ ३० ॥ ३१ ॥ आद्यादयः पंचदेवगणाः दिवौकसइतिसर्वेषांविशेषणम् आद्याइत्यत्रास्ताआप्याइतिवागौडाःपठंति ॥ ३२ ॥ नड्वलायाःपुत्रानाड्वलेयाः ॥ ३३ ॥

सप्तमंवैवस्वतमन्वंतरमाह अत्रिरित्यादिपंचभिः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ प्राग्दिशःपूर्वकल्पप्रकाराःसप्तसप्तकाः एकोनपंचाशत्मरुतोदेवाः प्रागुक्ताअपिप्र
तिमन्वंतरंभवंतीतिज्ञेयम् ॥ ३९ ॥ तेषांमध्येचत्वारःसप्तकाअष्टाविंशतिर्मरुतःमन्वंतरसमाप्तौक्रममुक्तिपदंब्रह्मणःस्थानंप्राप्नुवंति ॥ ४० ॥ ततोन्येजायमानाः तपोबलान्म
न्वंतरांतरेतत्पदमारुह्यस्थानंपूरयंतितेनसप्तसप्तकाःपूर्यंतेएवंप्रतिमन्वंतरंज्ञेयम् एतेनकर्मिणामपिपरंपरयामुक्तिरस्तीतिदर्शितम् ॥ ४१ ॥ सप्तातीतानिएकंचानागतमित्यष्टावुक्ता

अत्रिर्वसिष्ठोभगवान्कश्यपश्चमहानृषिः ॥ गौतमोथभरद्वाजोविश्वामित्रस्तथैवच ३४ तथैवपुत्रोभगवानृचीकस्यमहात्मनः ॥ स
प्तमोजमदग्निश्चऋषयःसांप्रतंदिवि ३५ साध्यारुद्राश्चविश्वेचमरुतोवसवस्तथा ॥ आदित्याश्चाश्विनौचैवदेवौवैवस्वतौस्मृतौ ३६ म
नोर्वैवस्वतस्यैतेवर्ततेसांप्रतेंतरे ॥ इक्ष्वाकुप्रमुखाश्चैवदशपुत्रामहात्मनः ३७ एतेषांकीर्तितानांतुमहर्षीणांमहौजसाम् ॥ राजपुत्रा
श्चपौत्राश्चदिक्षुसर्वासुभारत ३८ मन्वंतरेषुसर्वेषुप्राग्दिशःसप्तसप्तकाः ॥ स्थितालोकव्यवस्थार्थंलोकसंरक्षणायच ३९ मन्वंतरेव्य
तिक्रांतेचत्वारःसप्तकागणाः ॥ कृत्वाकर्मदिवंयांतिब्रह्मलोकमनामयम् ४० ततोन्येतपसायुक्ताःस्थानमापूरयंत्युत ॥ अतीतावर्त्त
मानाश्चक्रमेणैतेनभारत ४१ एतान्युक्तानिकौरव्यसप्तातीतानिभारत ॥ मन्वंतराणिषट्चापिनिबोधानागतानिमे ४२ सावर्णामनव
स्तातपंचतांश्चनिबोधमे ॥ एकोवैवस्वतस्तेषांचत्वारस्तुप्रजापतेः ४३ परमेष्ठिसुतास्तातमेरुसावर्णतांगताः ॥ दक्षस्यैतेहिदौहित्राःप्रि
यायास्तनयानृप ॥ महांतस्तपसायुक्तामेरुपृष्ठेमहौजसः ४४ रुचेःप्रजापतेःपुत्रारौच्योनाममनुःस्मृतः ॥ भूत्यांचोत्पादितोदेव्यांभौ
त्योनामरुचेःसुतः ४५ अनागताश्चसप्तैतेस्मृतादिविमहर्षयः ॥ मनोरंतरमासाद्यसावर्णस्येहतान्शृणु ४६ रामोव्यासस्तथात्रेयोदी
प्तिमानितिविश्रुतः ॥ भारद्वाजस्तथाद्रौणिरश्वत्थामामहाद्युतिः ४७ गौतमस्यात्मजश्चैवशरद्वान्गौतमःकृपः ॥ कौशिकोगालवश्चैवरु
रुःकाश्यपएवच ४८ एतेसप्तमहात्मानोभविष्यामुनिसत्तमाः ॥ ब्रह्मणःसदृशाश्चैतेधन्याःसप्तर्षयःस्मृताः ४९ अभिजात्याथतपसामं
त्रव्याकरणैस्तथा ॥ ब्रह्मलोकप्रतिष्ठास्तुस्मृताःसप्तर्षयोमलाः ५०

नीतिद्रष्टव्यम् अनागतानिषट्मेमत्तः निबोधबुध्यस्व ॥ ४२ ॥ सावर्णाः पंचतेषामेकोवैवस्वतउक्तः ॥ ४३ ॥ परमेष्ठिसुताइतिसमासैकदेशस्थविशेषणंप्रजापतेरिति लुप्तवि
भक्तिकंवापरमेष्ठिपदंद्रष्टव्यम् तेषांचतुर्णामपिमेरुसावर्णित्वेयोगमाह महांतइतियतोमेरौतपश्चक्रुरतोमेरुसावर्णास्तेजाताइत्यर्थः ॥ ४४ ॥ ४५ ॥ सप्तैवमहर्षयःप्रतिमन्वंतरमि
तिशेषः अष्टममाहमनोरिति ॥ ४६ ॥ दीप्तिमान्तृतीयःअश्वत्थामाचतुर्थः ॥ ४७ ॥ कृपःपंचमःगालवःषष्ठःरुरुःसप्तमःइतराणिपदानितेषामेवविशेषणानि॥४८॥४९॥५०॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ प्रथमेमेरुसावर्णाख्येनवमे मेधातिथ्यादीनांगोत्राणिपौलस्त्यादीनि ॥ ६० ॥ ६१ ॥ रोहितइत्यस्यैवमनोर्नामांतरम् ॥ ६२॥ अयंपुत्रिकापुत्रोपिदक्षपुत्रइत्युच्यते ॥६३ ॥ पृथुरित्येकः ॥ ६४ ॥ द्वितीयस्यदक्षसावर्णस्य हविष्मदादीनांगोत्राणिपौलहादीनिवसिष्ठपुत्राणांशक्त्यादीनां मध्येअष्टमश्चइत्येके अष्टमइतिसंज्ञैववातस्य ॥ ६५॥ नभसःनभःसंज्ञस्यअंगिराःपुत्रःसत्योनामसप्तमःअंगेनोरसारातियोगादौरसः पुत्रोंऽगिराइत्युच्यते नभसइतिषष्ठंतस्यैवपुत्रेल



भूतभव्यभवज्ज्ञानंबुध्वाचैवतुयेस्वयम् ॥ तपसावैप्रसिद्धायेसंगताःप्रविचिंतकाः ५१ मंत्रव्याकरणाद्यैश्चऐश्वर्यात्सर्वशश्चये ॥ एतान्भार्यान्द्विजोज्ञात्वानैष्ठिकानिचनामच ५२ सप्ततेसप्तभिश्चैवगुणैःसप्तर्षयःस्मृताः ॥ दीर्घायुषोमंत्रकृतईश्वरादीर्घचक्षुषः ५३ बुद्ध्याप्रत्यक्षधर्माणोगोत्रप्रावर्त्तकास्तथा ॥ कृतादिषुयुगाख्येषुसर्वेष्वेवपुनःपुनः ५४ प्रावर्त्तयंतितेवर्णानाश्रमांश्चैवसर्वशः ॥ सप्तर्षयोमहाभागाःसत्यधर्मपरायणाः ५५ तेषांचैवान्वयोत्पन्नाजायंतीहपुनःपुनः ॥ मंत्रब्राह्मणकर्त्तारोधर्मेप्रशिथिलेतथा ५६ यस्माच्चवरदाःसप्तपरेभ्यश्चापराःस्मृताः ॥ तस्मान्नकालोनवयःप्रमाणमृषिभावने ५७ एषसप्तर्षिकोद्देशोव्याख्यातस्तेमयानृप ॥ सावर्णस्यमनोःपुत्रान्भविष्याञ्छृणुसत्तम ५८ वरीयांश्चावरीयांश्चसंमतोधृतिमान्वसुः ॥ चरिष्णुरप्यधृष्णुश्चवाजःसुमतिरेवच ॥ सावर्णस्यमनोःपुत्राभविष्यादशभारत ५९ प्रथमेमेरुसावर्णेःप्रवक्ष्यामिमुनीन्शृणु ॥ मेधातिथिस्तुपौलस्त्योवसुःकाश्यपएवच ६० ज्योतिष्मान्भार्गवश्चैवद्युतिमानंगिरास्तथा ॥ सवनश्चैववासिष्ठआत्रेयोहव्यवाहनः ६१ पौलहःसप्तइत्येतेमुनयोरोहितेंतरे ॥ देवतानांगणास्तत्रत्रयएवनराधिप ६२ दक्षपुत्रस्यपुत्रास्तेरोहितस्यप्रजापतेः ॥ मनोःपुत्रोधृष्टकेतुःपंचहोत्रोनिराकृतिः ६३ पृथुश्रवाभूरिधामाऋचीकोष्ठहतोगयः ॥ प्रथमस्यतुसावर्णेर्नवपुत्रामहौजसः ६४ दशमेत्वथपर्यायेद्वितीयस्यांतरेमनोः ॥ हविष्मान्पौलहश्चैवसुकृतिश्चैवभार्गवः आपोमूर्त्तिस्तथात्रेयोवासिष्ठश्चाष्टमःस्मृतः ६५ पौलस्त्यःप्रामतिश्चैवनभोगश्चैवकाश्यपः ॥ अंगिरानभसःसत्यःसप्तैतेपरमर्षयः ६६ देवतानांगणौद्वौतौऋषिमंत्राश्चयेस्मृताः ॥ मनोःसुतोत्तमौजाश्चनिकुंपंजश्चवीर्यवान् ६७

ब्धेसत्यइतिअंगिरसःस्तुत्यर्थविशेषणंसत्यवादी ॥ ६६ ॥ द्वौगणौदक्षिणोत्तरमार्गाभिमानिनौअग्न्यादिभूम।दिऋषिमंतोमंत्रप्रतिपाद्यादेवाःमनोःसुतइतिछेदःमनोःतृतीयस्यसुतइत्येवप्रथमस्ययौगिकंनामवीर्यवान्तंतृतीयः अन्यथादशसंख्यायाअपूर्तिर्मनोःसुताइत्यस्यपुनरुक्तिश्चदुःसमाधेयास्यात् ॥ ६७ ॥



१ भूरिद्युम्नइतिपाठान्तरम् । २

शतानीकोनिरामित्रोवृषसेनोजयद्रथः ॥ भूरिद्युम्नःसुवर्चाश्चदशत्वेतेमनोःसुताः ६८ एकादशेथपर्यायेतृतीयस्यांतरेमनोः ॥ तस्यसप्तऋ
र्षीश्चापिकीर्त्यमानान्निबोधमे ६९ हविष्मान्काश्यपश्चापिहविष्मान्यश्चभार्गवः ॥ तरुणश्चतथात्रेयोवासिष्ठस्त्वनघस्तथा ७० अंगिरा
श्चोदधिष्ण्यश्चपौलस्त्योनिश्चरस्तथा ॥ पुलहश्चाग्नितेजाश्चभाव्याःसप्तमहर्षयः ७१ ब्रह्मणस्तुसुतादेवागणास्तेषांत्रयःस्मृताः ॥ संव
र्त्तकःसुशर्माचदेवानीकःपुरूद्वहः ७२ क्षेमधन्वादृढायुश्चआदर्शःपंडकोमनुः ॥ सावर्णस्यतुपुत्रावैतृतीयस्यनवस्मृताः ७३ चतुर्थस्यतु
सावर्णेऋषीन्सप्तनिबोधमे ॥ द्युतिर्वसिष्ठपुत्रश्चआत्रेयःसुतपास्तथा ७४ अंगिरास्तपसोमूर्त्तिस्तपस्वीकाश्यपस्तथा ॥ तपोशनश्चपौल
स्त्यःपौलहश्चतपोरविः ७५ भार्गवःसप्तमस्तेषांविज्ञेयस्तुततोधृतिः ॥ पंचदेवगणाःप्रोक्तामानसाब्रह्मणश्चते ७६ देववायुरदूरश्चदेवश्रे
ष्ठोविदूरथः ॥ मित्रवान्मित्रदेवश्चमित्रसेनश्चमित्रकृत् ॥ मित्रबाहुःसुवर्चाश्चद्वादशस्यमनोःसुताः ७७ त्रयोदशेथपर्यायेभाव्येम
न्वंतरेमनोः ॥ अंगिराश्चैवधृतिमान्पौलस्त्योहव्यपस्तुयः ७८ पौलहस्तत्वदर्शीचभार्गवश्चनिरुत्सुकः ॥ निष्प्रकंपस्तथात्रेयोनिर्मोहः
कश्यपस्तथा ७९ सुतपाश्चैववासिष्ठःसप्तैतेतुमहर्षयः ॥ त्रयएवगणाःप्रोक्तादेवतानांस्वयंभुवा ८० त्रयोदशस्यपुत्रास्तेविज्ञेयास्तुरु
चेःसुताः ॥ चित्रसेनोविचित्रश्चनयोधर्मभृतोधृतः ८१ सुनेत्रःक्षत्रवृद्धिश्चसुतपानिर्भयोदृढः ॥ रौच्यस्यैतेमनोःपुत्राअंतरेतुत्रयोदशे ॥
८२ चतुर्दशेथपर्यायेभौत्यस्यैवांतरेमनोः ॥ भार्गवोह्यतिबाहुश्चशुचिरांगिरसस्तथा ८३ युक्तश्चैवतथात्रेयोशुक्रोवासिष्ठएवच ॥ अजि
तःपौलहश्चैवअंत्याःसप्तर्षयश्चते ८४ एतेषांकल्यउत्थायकीर्तनात्सुखमेधते ॥ यशश्चाप्नोतिसुमहदायुष्मांश्चभवेन्नरः ८५ अतीता
नागतानांवैमहर्षीणांसदानरः ॥ देवतानांगणाःप्रोक्ताःपंचवैभरतर्षभ ८६ तरंगभीरुर्वप्रश्चतरस्वानुग्रएवच ॥ अभिमानीप्रवीणश्चजि
ष्णुस्संक्रंदनस्तथा ८७ तेजस्वीसबलश्चैवभौत्यस्यैतेमनोःसुताः ॥ भौत्यस्यैवाधिकारेतुपूर्णेकल्पस्तुपूर्यते ८८ इत्येतेनामतोतीताम
नवःकीर्तितामया ॥ तैरियंपृथिवीतातसमुद्रांतासपत्तना ८९

॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८९ ॥ ८१ ॥ ८२ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥

१ सर्वत्रगः इतिप्राचीनपाठः

॥ १० ॥ इतिहरिवंशेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ मन्वंतरप्रसंख्यानंयुगमानंतथैवच ॥ ब्रह्मणोह्नःप्रसंख्यानंअष्टमेध्यायईर्यते ॥१॥ मन्वंतरस्येतिअध्यायःसर्वस्यकालपरिच्छेददर्शनार्थः ॥१॥ देवादीनांअहोरात्राणिभजेत् पृथक्कुर्यात् विभजतेइतिपाठेसूर्यइतिशेषः लौकिकंअस्मदीयंमानवंमनोःपरंद्विपरार्धरूपंब्राह्मंतांतत्संबंधिनींलोकप्रसिद्धांगणनामुपादायउपजीव्य देवाद्यहोरात्राणांसंख्यांशृणु ॥ २ ॥ अष्टादशनिमेषास्तुकाष्ठाइत्यस्यमूलंमृग्यंविष्णुपुराणेपिकाष्ठानिमेषादशपंचचैवेत्येतावत्याएवसंख्यायादर्शनात् तैर्मुहूर्तैस्त्रिंशताऽहोरात्रमितिप्राहुरित्युत्तरेणान्वयः ॥३ ॥ अहोरात्रलक्षणमाह चंद्रेतिविशेषेणपरिदृश्यमानाचंद्रसूर्ययोर्गतिरुदयादुदयांतरावधिःतांतावंतंकालंसर्वेषुमेरोःपरितोभूप्रदेशेषुअहोरात्रइतिप्राहुरित्यनुषज्यतेनित्यशइतिसार्वदिकत्वमेतयोरुक्तम् ॥४५६॥७॥ कृष्णेति चंद्रलोकस्थाः पितरः शुक्लपक्षेचंद्रांतर्हितंसूर्यंनपश्यंति कृष्णेतुचंद्रसूर्या

पूर्णंयुगसहस्रंतुपरिपाल्यानराधिप ॥ प्रजाभिश्चैवतपसासंहारस्तेषुनित्यशः १० इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिमन्वंतरवर्णनंनामसप्तमोऽध्यायः ७ ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ ॥ मन्वंतरस्यसंख्यानंयुगानांचमहामते ॥ ब्रह्मणोह्नःप्रमाणंचवक्तुमर्हसिमेद्विज १ ॥ वैशंपायनउवाच॥ अहोरात्रंभजेत्सूर्योमानवंलौकिकंपरम् ॥ तामुपादायगणनांशृणुसंख्यामरिंदम २ निमेषैःपंचदशभिःकाष्ठात्रिंशत्तुताःकला ॥ त्रिंशत्कलोमुहूर्तस्तुत्रिंशतातैर्मनीषिणः ३ अहोरात्रमितिप्राहुश्चंद्रसूर्यगतिंनृप ॥ विशेषेणतुसर्वेषुअहोरात्रेचनित्यशः ४ अहोरात्राःपंचदशपक्षइत्यभिशब्दितः ॥ द्वौपक्षौतुस्मृतोमासोमासौद्वावृतुरुच्यते ५अब्दंद्व्ययनमुक्तंचअयनंत्वृतुभिस्त्रिभिः ॥ दक्षिणंचोत्तरंचैवसंख्यातत्वविशारदैः ६ मानेनानेनयोमासःपक्षद्वयसमन्वितः ॥ पितृणांतदहोरात्रमितिकालविदोविदुः ७ कृष्णपक्षस्त्वहस्तेषांशुक्लपक्षस्तुशर्वरी ॥ कृष्णपक्षेत्वहःश्राद्धंपितृणांवर्ततेनृप ८ मानुषेणतुमानेनयोवैसंवत्सरःस्मृतः ॥ देवानांतदहोरात्रंदिवाचैवोत्तरायणम् ॥ दक्षिणायनंस्मृतारात्रिःप्राज्ञैस्तत्त्वार्थकोविदैः ९ दिव्यमब्दंदशगुणमहोरात्रंमनोःस्मृतम् ॥ अहोरात्रंदशगुणंमानवःपक्षउच्यते १० पक्षोदशगुणोमासोमासैर्द्वादशभिर्गुणैः ॥ ऋतुर्मनूनांसंप्रोक्तःप्राज्ञैस्तत्त्वार्थदर्शिभिः ॥ ऋतुत्रयेणत्वयनंतद्द्वयेनैववत्सरः ११

भिमुख्यात्तदाश्रितास्तंपश्यंतीतिशुक्लकृष्णपक्षौतेषांक्रमेणराज्यहनीअतएवकृष्णपक्षःसंपूर्णोवादिनांतत्वादत्यावश्यकतयाअमावास्याश्राद्धकालइत्यर्थः ॥ ८ ॥ मानुषेणेतिसार्द्धेनमकरादामिथुनांतंरविरथाक्षरश्म्योर्ध्रुवेणाकर्षणेऽनुदिनंक्रियमाणेउत्तराभिमुखःसूर्योमेरुमूर्धस्थानांदेवानांदृश्योभवतीति तेषांतदादिनम् कर्कादायावद्धनुरंतंतयोरेवरश्म्योर्ध्रुवेणक्रमादुन्मोचनेक्रियमाणेदक्षिणाभिमुखःसूर्योदेवानामदृश्योभवतीतितदातेषांरात्रिरिति ॥ ९ ॥ दिव्यमितिदेवानांदशभिर्वर्षैर्मनोरहोरात्रएकःदशभिस्तैःपक्षः ॥ १० ॥ दशभिपक्षैर्मासःतैर्द्वादशभिर्ऋतुः तैस्त्रिभिरयनं तयोःद्वयेनतैःषड्भिःसंवत्सरःद्विसप्ततिसहस्राणिदिव्याब्दाएकंमनोर्वर्षमित्यर्थः ॥ ११ ॥

संध्यांशश्चतस्यपूर्वापरौभागौ ॥ १२ ॥ १३॥ १४ ॥ १५ ॥ द्वादशसाहस्त्रीवर्षाणांयुगमित्युच्यते ॥ १६ ॥ युगपदार्थमाह कृतमिति चतुर्युगीयुगशब्दार्थः तत्युगंएकसप्त त्यागणितंकिंचिदधिकंचमन्वंतरंप्रोक्तंसहस्त्रस्यचतुर्दशांशत्वात् ॥१७॥ एतावतःकालस्यांतेमनोर्ब्रह्मलोकंप्रतिगमनेनादर्शनंभवतीतितदेवअयनमित्युच्यते तस्यापिमनोःद्वेअयने भवतः पूर्वरूपमार्षम् अयंभावःइतःपूर्वंधूमादिमार्गेणगत्वादेवलोकंप्राप्याधिकारंनिर्वर्त्यतदंतेअधः पतनमंतरेणैवउत्तरायणमार्गेणब्रह्मलोकंगच्छतीति तथाचोक्तंअधिकारिकान् प्रकृत्य कृत्वाकर्मदिवंयांतिब्रह्मलोकंसनातनमिति ॥ १८ ॥ प्रभोःलीनस्यमनोरयनेगमनकालेसमाप्तेसम्यक्प्राप्तेसति ॥ १९ ॥ समतीतेष्वितिसार्द्धःअनेनैवक्रमेणअनेकेषुम

चत्वार्येवसहस्त्राणिवर्षाणांतुकृतंयुगम् ॥ तावच्छतीभवेत्संध्यासंध्यांशश्चतथानृप १२ त्रीणिवर्षसहस्त्राणित्रेतास्यात्परिमाणतः ॥ त स्याश्चत्रिशतीसंध्यासंध्यांशश्चतथाविधः १३ तथावर्षसहस्त्रेद्वेद्वापरंपरिकीर्त्तितम् ॥ तस्यापिद्विशतीसंध्यासंध्यांशश्चतथाविधः १४ कलिर्वर्षसहस्त्रंचसंख्यातोत्रमनीषिभिः ॥ तस्यापिशतिकासंध्यासंध्यांशश्चैवतद्विधः १५ एषाद्वादशसाहस्त्रीयुगसंख्याप्रकीर्त्तिता ॥ दिव्येनानेनमानेनयुगसंख्यांनिबोधमे १६ कृतंत्रेताद्वापरंचकलिश्चैवचतुर्युगी ॥ युगंतदेकसप्तत्यागणितंनृपसत्तम १७ मन्वंतरमिति प्रोक्तंसंख्यानार्थविशारदैः ॥ अयनंचापितत्प्रोक्तंद्वेऽयनेदक्षिणोत्तरे १८ मनुःप्रलीयतेयत्रसमाप्तेचायनेप्रभोः ॥ ततोपरोमनुःकालमे तावंतंभवत्युत १९ समतीतेषुराजेंद्रप्रोक्तःसंवत्सरःसवै ॥ तदेवचायुतंप्रोक्तंमुनिनातत्वदर्शिना २० ब्रह्मणस्तदहःप्रोक्तंकल्पश्चेतिस कथ्यते ॥ सहस्त्रयुगपर्यंतायानिशाप्रोच्यतेबुधैः २१ निमज्जत्यप्सुयत्रोर्वीसशैलवनकानना ॥ तस्मिन्युगसहस्त्रेतुपूर्णेभरतसत्तम २२ ब्राह्मेदिवसपर्यंतेकल्पोनिःशेषउच्यते ॥ युगानिसप्ततिस्तानिसाग्राणिकथितानिते २३ कृतत्रेतानिबद्धानिमनोरंतरमुच्यते ॥ चतुर्दशैते मनवःकीर्तिताःकीर्तिवर्द्धनाः २४ वेदेषुसपुराणेषुसर्वेषुप्रभविष्णवः ॥ प्रजानांपतयोराजन्धन्यमेषांप्रकीर्त्तनं २५

नुषुअतीतेषुसवक्ष्यमाणोब्रह्मणःसंवत्सरःप्रोक्तः कियद्भिर्मन्वंतरैःसंवत्सरःपूर्यतइत्याह तदेवेति अयुतंमन्वंतराणिब्रह्मणोहोरात्रमुक्तंतदनुपातेनअहरपिब्रह्मणःकल्पश्चकथ्यतइति योजना अयंभावः षष्ट्यधिकशतत्रयंसंवत्सरस्यअंशाः प्रत्यंशंचतुर्दशमनवः तेनचतुर्दशभिर्गुणितंषष्ट्यधिकशतत्रयंचत्वारिंशदधिकंसहस्त्रपंचकंमनूनांअह्निभवति तावानेवका लोरात्रिरितिअशीत्यधिकमयुतंमनवः ब्रह्मणोंशरूपेअहोरात्रेभवंति अत्रचांशानांदिनानिकिंचिदधिकानिपंचवर्द्धंतेतानिविहायअह्नांषष्ट्यधिकशतत्रयेणयावंतोंशाःमनूनामयुतेन पूर्यंतेतावानेवब्रह्मणोहोरात्रस्तदर्द्धंचाहरिति ॥ २० ॥ २१ ॥ युगसहस्त्रेचतुर्युगसहस्त्रे ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

संहारसंभवधारायाअंतरंविच्छेदोब्रह्मतत्तुवक्तुमशक्यंतज्ज्ञानंविनाचनधाराविच्छेदोस्तीतिभावः ॥ २६ ॥ प्रजानांजरायुजादीनांसृष्टिसंहारौमन्वंतरेषुचतुर्दशस्वपिमध्येमध्येउ
परतौभवतः ॥ २७ ॥ शेषाःस्थूलभूतानितत्सहितादेवास्तिष्ठंतितत्रहेतुस्तपसेति ॥ २८ ॥ निःशेषत्वमेवाहतत्रेति ॥ २९ ॥ आदित्याअपिदग्धेंधनानलवत्स्वात्मानमुपसंहृ
त्यब्रह्मणासहविष्णुंप्रविशंतितितेनस्थूलानांपृथिव्यप्तेजसांनाशोदर्शितः ॥ ३० ॥३१ ॥ अयंचलयःसुषुप्तिसदृशइत्याह तत्रेत्यादिना ॥ ३२ ॥ ३३ ॥ ३४॥ ३५ ॥ देवा
नांसूर्यादीनांचक्षुरादीनांचब्रह्मांडेपिंडेचतान्येवनकिंचिदपूर्वंदृश्यतेकेवलंविपर्ययः दर्शनानामदर्शनैःसहविपर्ययोमणिप्रवालधारामात्रमित्यर्थः ॥३६॥ दग्धानिपूर्वंआसन्तानि

मन्वंतरेषुसंहाराःसंहारांतेपुसंभवाः ॥ नशक्यमंतरंतेषांवक्तुंवर्षशतैरपि २६ विसर्गस्यप्रजानांवैसंहारस्यचभारत ॥ मन्वंतरेषुसंहाराःश्रू
यंतेभरतर्षभ२७सशेषास्तत्रतिष्ठंतिदेवाःसप्तर्षिभिःसह ॥ तपसाब्रह्मचर्येणश्रुतेनचसमाहिताः २८पूर्णेयुगसहस्रेतुकल्पोनिःशेषउच्यते
तत्रसर्वाणिभूतानिदग्धान्यादित्यतेजसा २९ ब्रह्माणमग्रतःकृत्वासहादित्यगणैर्विभुम् ॥ योगंयोगीश्वरंदेवमजंक्षेत्रज्ञमच्युतं॥प्रविशं
तिसुरश्रेष्ठंहरिंनारायणंप्रभुं ३० यःस्रष्टासर्वभूतानांकल्पांतेषुपुनःपुनः ॥ अव्यक्तःशाश्वतोदेवस्तस्यसर्वमिदंजगत् ३१ तत्रसंवर्ततेरा
त्रिःसकलैकार्णवेतदा ॥ नारायणोदरेनिद्रांब्राह्मींवर्षसहस्रकम् ३२ तावंतमितिकालस्यरात्रिरित्यभिशब्दिता ॥ निद्रायोगमनुप्राप्तोय
स्यांशेतेपितामहः ३३ साचरात्रिरपक्रांतासहस्रयुगपर्यया ॥ तदाप्रबुद्धोभगवान्ब्रह्मालोकपितामहः ३४ पुनःसिसृक्षयायुक्तःसर्गाय
विदधेमनः ॥ सैवस्मृतिःपुराणेयंतद्वृत्तंतद्विचेष्टितम् ३५ देवस्थानानितान्येवकेवलंचविपर्ययः ॥ ततोदग्धानिभूतानिसर्वाण्यादित्यर
श्मिभिः ३६ देवर्षियक्षगंधर्वाःपिशाचोरगराक्षसाः ॥ जायंतेचपुनस्तातयुगेभरतसत्तम ३७ यथर्त्तावृतुलिंगानिनानारूपाणिपर्यये ॥
दृश्यंतेतानितान्येवतथाब्राह्मीपुरात्रिषु ३८ निष्क्रमित्वाप्रजाकारःप्रजापतिरसंशयम् ॥ येचवैमानवादेवाःसर्वेचैवमहर्षयः ३९ तेसं
गताःशुद्धसंगाःशश्वद्धर्मविसर्गतः ॥ नभवंतिपुनस्तातयुगेभरतसत्तम ४०

देवादयश्चप्राग्विष्णौलीनाःसंतःपुनर्जायंते ॥ ३७ ॥ ऋतुलिंगानिशीतोष्णवृष्ट्यादीनि॥३८॥ निष्क्रमित्वानारायणात्निष्क्रम्यपृथग्भूय प्रजाकारःप्रजाकर्तापुनःपुनर्भूतानिससृ
जेइतिचतुर्थेनसंबंधः ॥ सर्वाणिभूतान्यविशेषेणपुनःसृजति नेत्याह येचेतिसार्द्धेन ॥ ३९ ॥ तेसंगताःशुद्धेनब्रह्मणासहसंगःएकीभावेनगतिर्येषांतेतत्त्वविदःशुद्धसंगाःशुद्धसत्त्वे
हेतुःशश्वदितिशश्वद्धर्मःस्वाभाविकोगुणोदेहादिष्वात्मबुद्धिःतस्याविसर्गतस्त्यागात्तेपुनर्नभवंति नावर्ततेअन्येतुनविष्णुंप्राप्ताअपिमोहकंचुकापनयनाभावाज्जायंतइत्यर्थः॥४०॥

१ ब्रह्मर्षिभि सहेति पाठान्तरम् । २ समन्विताः इ० पा० । ३ 'नारायणो दधे निद्राम्' इ० मु० पा० ।

तत्पूर्वोक्तप्रकारंयुगसंख्यानं ॥ ४१ ॥ ४२ ॥ व्यक्ताव्यक्तःस्थूलसूक्ष्मरूपःतस्यमनोःतदंशस्यमनोः विसर्गंकीर्तयिष्यामीत्युत्तरेणसंबंधः ॥ ४३ ॥ ४४ ॥ यत्रवृष्णिवंशे ॥ ४५ ॥ इतिहरिवंशेटीकायांअष्टमोऽध्यायः ॥ ८ ॥ छ ॥ विवस्वतोथसंज्ञायाःश्राद्धदेवमनोर्भवः ॥ अश्विनोश्चापिचक्रस्यजनुर्नवमईर्यते ॥ १ ॥ वैवस्वतस्यमनोःविसर्गंकीर्तयिष्यामीत्युक्तंतदेवाह विवस्वानित्यादिना दाक्षायण्यांदक्षकन्यायांअदित्यां त्वाष्ट्रीत्वष्टुःपुत्री ॥ १ ॥ सुरेणुरितिसंज्ञायाएवनामांतरंभामिनीकोपना भाविनीतिपाठशुद्धाचेतीति ॥ २ ॥ दीप्तेनअत्युष्णेनभर्तृरूपेण ॥ ३ ॥ तद्रूपंतस्याः संज्ञायाःरूपंमंडलस्थस्यतेजसागात्रेषुदग्धं ॥ ४ ॥ दाहेहेतुमाह नखल्वितिद्वाभ्यां भिक्षार्थंआगतेनबुधेनगर्भगौरवात्तच्छीघ्रं

तत्सर्वंक्रमयोगेनकालसंख्याविभागवित् ॥ सहस्रयुगसंख्यानंकृत्वादिवसमीश्वरः ४१ रात्रिंयुगसहस्रांतांकृत्वाचभगवान्विभुः ॥ संहरत्यथभूतानिसृजतेचपुनःपुनः ४२ व्यक्ताव्यक्तोमहादेवोहरिर्नारायणःप्रभुः ॥ तस्यतेकीर्तयिष्यामिमनोर्वैवस्वतस्यह ४३ विसर्गंभरतश्रेष्ठसांप्रतस्यमहाद्युते ॥ वृष्णिवंशप्रसंगेनकथ्यमानंपुरातनम् ४४ यत्रोत्पन्नोमहात्मासहरिर्वृष्णिकुलेप्रभुः ॥ सर्वासुरविनाशायसर्वलोकहितायच ४५ इतिश्रीमहाभारतेखिलेषुहरिवंशपर्वणिअष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ विवस्वान्कश्यपाज्जज्ञेदाक्षायण्यामरिंदम ॥ तस्यभार्याभवत्संज्ञात्वाष्ट्रीदेवीविवस्वतः १ सुरेणुरितिविख्याताात्रिषुलोकेषुभामिनी ॥ सावैभार्याभगवतोमार्तंडस्यमहात्मनः २ भर्तृरूपेणनातुष्यद्रूपयौवनशालिनी ॥ संज्ञानाम्नीसुतपसादीप्तेनेहसमन्विता ३ आदित्यस्यहितद्रूपंमंडलस्यसुतेजसा ॥ गात्रेषुपरिदग्धंवैनातिकांतमिवाभवत् ४ नखल्वयंमृतोंडस्थइतिस्नेहादभाषत ॥ अज्ञानात्कश्यपस्तस्मान्मार्तंडइतिचोच्यते ५ तेजस्त्वभ्यधिकंतातनित्यमेवविवस्वतः ॥ येनातितापयामासत्रीँल्लोकान्कश्यपात्मजः ६ त्रीण्यपत्यानिकौरव्यसंज्ञायांतपतांवरः ॥ आदित्योजनयामासकन्यांद्वौचप्रजापती ७ मनुर्वैवस्वतःपूर्वंश्राद्धदेवःप्रजापतिः ॥ यमश्चयमुनाचैवयमजौसंबभूवतुः ८

भिक्षामप्रयच्छतोअदितिः शप्तातवगर्भोयंम्रियतामितितच्छ्रुत्वाव्याकुलामदितिंप्रतिभार्यास्नेहात्कश्यपः स्वसामर्थ्यात्बुधशापंनिवार्यअभाषत अयंखलुइतिनिश्चयेनममृतः अपितुअंडस्थएवास्तीतितस्माददितेरज्ञानात् ममअंडंमृतमित्येवंरूपात्विपरीतज्ञानात्अयंमार्तंडइत्युच्यते मृतंअंधमस्येतिमृतांडंतस्माज्जातोमार्तंडःशकंध्वादित्वात्पररूपं ॥ ५ ॥ तेजइतिसएवंकश्यपमाहात्म्याज्जीवितोऽतितेजस्वीसंज्ञांअतिसान्निध्याद्दह्यंतंतापयामासेतिभावः ॥ ६ ॥ ७ ॥ प्रजापतीनाहमनुरितिमनुःश्राद्धदेवाख्योयमश्चयमजौयमलौ ॥ ८ ॥

१ संज्ञानामसुतपसा इतिपाठान्तरम् ।

विवर्णविषमवर्णंदुःसहकारकं स्वांछायांस्वस्यप्रतिमांसवर्णांसमानरूपां ॥ ९॥ छायासंज्ञामुवाचेतिसंबंधः ॥१०॥ शाधिआज्ञापय ॥११॥ मह्यंमम ॥ १२ तेत्वयाइदंमत्कृत्य भगवतेसूर्याय ॥ १३ ॥ तुभ्यंतव ॥ १४ ॥ व्रीडितेवलज्जितेवयतस्तपस्विनीआलोचनवतीअनाकारितायाममइहागमनंभर्तुस्त्यागश्चाकीर्तिकरइत्याशयः ॥ १५ ॥ १६ ॥

साविवर्णंतुतद्रूपंदृष्ट्वासंज्ञाविवस्वतः ॥ असहंतीचस्वांछायांसवर्णांनिर्ममेततः ९मायामयीतुसासंज्ञातस्याश्छायासमुत्थिता ॥ प्रांज
लिःप्रणताभूत्वाछायासंज्ञांनरेश्वर १० उवाचकिंमयाकार्यंकथयस्वशुचिस्मिते ॥ स्थितास्मितवनिर्देशेशाधिमांवरवर्णिनि ११ ॥
संज्ञोवाच ॥ ॥ अहंयास्यामिभद्रंतेस्वमेवभवनंपितुः ॥ त्वयेहभवनेमह्यंवस्तव्यंनिर्विकारया १२ इमौचबालकौमह्यंकन्याचेयंसुम
ध्यमा ॥ संभाव्यास्तेनचाख्येयमिदंभगवतेक्वचित् १३ ॥ छायोवाच ॥ आकचग्रहणाद्देविआशापान्नैवकर्हिचित् ॥ आख्यास्यामि
मतंतुभ्यंगच्छदेवियथासुखम् १४ ॥ ॥ वैशंपायनउवाच ॥ ॥ समादिश्यसवर्णांतांतथेत्युक्त्वाचसातया ॥ त्वष्टुःसमीपमगमत्व्रीडि
तेवतपस्विनी १५ पितुःसमीपगासातुपित्रानिर्भर्त्सितातदा ॥ भर्तुःसमीपंगच्छेतिनियुक्ताचपुनःपुनः १६ अगच्छद्वडवाभूत्वाच्छाद्य
रूपमनिंदिता ॥ कुरूनथोत्तरान्गत्वातृणान्येवचचारह १७ द्वितीयायांतुसंज्ञायांसंज्ञेयमितिचिंतयन् ॥ आदित्योजनयामासपुत्रमा
त्मसमंतदा १८ पूर्वजस्यमनोस्तातसदृशोयमितिप्रभुः ॥ सवर्णत्वान्मनोर्भूयःसावर्णइतिचोक्तवान् १९ मनुरेवाभवन्नाम्नासावर्णइति
चोच्यते ॥ द्वितीयोयःसुतस्तस्याःसविज्ञेयःशनैश्चरः २० संज्ञातुपार्थिवीतातस्वस्यपुत्रस्यवैतदा ॥ चकाराभ्यधिकंस्नेहंनतथापूर्वजेषु
वै २१ मनुस्तस्याक्षमत्तत्तुयमस्तस्यानचक्षमे ॥ तांसरोषाच्चबाल्याच्चभाविनोर्थस्यवैबलात् ॥ यदासंतर्जयामाससंज्ञांवैवस्वतोयमः
२२ तंशशापततःक्रोधात्सावर्णजननीनृप ॥ चरणःपततामेषतवेतिभृशदुःखिता २३ यमस्तुतत्पितुःसर्वंप्रांजलिःप्रत्यवेदयत् ॥ भृशं
शापभयोद्विग्नःसंज्ञावाक्यप्रतोदितः २४ शापोयंविनिवर्तेतप्रोवाचपितरंतदा ॥ मात्रास्नेहेनसर्वेषुवर्तितव्यंसुतेषुवै २५

आच्छाद्यगोपयित्वा ॥ १७ ॥ १८ ॥ पूर्वस्यभ्रातुः समानवर्णत्वादयंसावर्णइत्युक्तोनतुसवर्णायाअपत्यत्वादित्यर्थः ॥१९ ॥ पृथिवीतिपूर्वोक्तासुरेणुरेवसंज्ञाख्यातस्याइयंप्रकृ
तिःपार्थिवीद्वितीयासंज्ञाअन्येतुछायानिपातेनपृथिव्याउत्थितत्वात्पार्थिवीत्याहुः ॥ २१ ॥ तत्तस्याः मनुः क्षमतक्षांतवान्आर्षअडभावादि ॥ २२ ॥ २३ ॥ प्रतोदितःव्य
थितः विरेजितइतिपाठेतापितः ॥ २४ ॥ २५ ॥

१ भगवतेत्वया इ० पा०

१८

वुभूपतिभूपयितुमिच्छति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अभ्यधिकः स्नेहः कनीयसितत्संज्ञाकृत्यंपरिहरंतीगूहमाना ॥ ३४ ॥
सुसमाधायसुस्थिरंकृत्वायोगात्ध्यानात् ॥ ३५ ॥ समयेआकेशग्रहणात् आशापाश्चनैतत्प्रकाशयिष्यामीतिनियमेअतिगमेअतिक्रांतेसति ॥ ३६ ॥ ३७ ॥ शाड्वलेहरिततृणे

सेयमस्मानपाहायययवीयांसंबुभूषति ॥ तस्यांमयोद्यतःपादोनतुदेहेनिपातितः २६ बाल्याद्वायादिवामोहात्तद्भवान्क्षंतुमर्हसि ॥ यस्मा
त्तेपूजनीयाहंलंघितास्मित्वयासुत २७ यस्मात्तवैषचरणःपतिष्यतिनसंशयः ॥ अपत्यंदुरपत्यंस्यान्नांबाकुजननीभवेत् २८ शप्तोहम
स्मिलोकेशजनन्यातपतांवर ॥ तवप्रसादाच्चरणोनपतेन्ममगोपते २९ ॥ विवस्वानुवाच ॥ असंशयंपुत्रमहद्भविष्यत्यत्रकारणम् ॥
येनत्वामाविशत्क्रोधोधर्मज्ञंसत्यवादिनम् ३० नशक्यमन्यथाकर्तुंमयामातुर्वचस्तव ॥ कृमयोमांसमादायंयास्यंतिधरणीतलम् ३१ तव
पादान्महाप्राज्ञततस्त्वंप्राप्स्यसेसुखम् ॥ कृतमेवंवचस्तथ्यंमातुस्तवभविष्यति ३२ शापस्यपरिहारेणत्वंचत्राताभविष्यसि ॥ आदि
त्योथाब्रवीत्संज्ञांकिमर्थंतनयेषुवै ३३ तुल्येष्वभ्यधिकःस्नेहःक्रियतेऽतिपुनःपुनः ॥ सातत्परिहरंतीतुनाचचक्षेविवस्वते ३४ आत्मानं
सुसमाधाययोगात्तथ्यमपश्यत ॥ तांशप्तुकामोभगवन्नाशायकुरुनंदन ३५ मूर्द्धजेषुचजग्राहसमयेऽतिगतेपिच ॥ सातत्सर्वंयथावृ
त्तमाचचक्षेविवस्वते ३६ विवस्वानथतच्छ्रुत्वाक्रुद्धस्त्वष्टारमभ्यगात् ॥ त्वष्टातुतंयथान्यायमर्चयित्वाविभावसुम् ॥ निर्दग्धुकामंरो
षेणसांत्वयामासवैतदा ३७ ॥ त्वष्टोवाच ॥ तवातितेजसाविष्टमिदंरूपंनशोभते ॥ असहंतीचतत्संज्ञावनेचरतिशाड्वले ३८ द्रष्टाहितां
भवानद्यस्वांभार्यांशुभचारिणीम् ॥ नित्यंतपस्यभिरतांवडवारूपधारिणीम् ३९ पर्णाहारांकृशांदीनांजटिलांब्रह्मचारिणीम् ॥ ह
स्तिहस्तपरिक्लिष्टांव्याकुलांपद्मिनीमिव ॥ श्लाघ्यांयोगबलोपेतांयोगमास्थायगोपते ४० अनुकूलंतुदेवेशयदिस्यान्ममतन्मतम् ॥ रूपं
निवर्तयाम्यद्यतवकांतमरिंदम ४१ रूपंविवस्वतश्चासीत्तिर्यगूर्ध्वसमंतुवै ॥ तेनासौसंभृतोदेवरूपेणतुविभावसुः ४२ तस्मात्त्वष्टुःसवै
वाक्यंबहुमेनेप्रजापतिः ॥ समनुज्ञातवांश्चैवत्वष्टारंरूपसिद्धये ४३ ततोभ्युपगमात्त्वष्टामार्तंडस्यविवस्वतः ॥ भ्रमिमारोप्यतत्तेजः
शातयामासभारत ४४

॥ ३८ ॥ भवान्द्रष्टाद्रक्ष्यति ॥ ३९ ॥ हस्तिहस्तेनगजशुंडादंडेनपरिक्लिष्टांपद्मिनीमिव ॥ ४० ॥ तत्मदंतःकरणस्थंमतंअद्यतवरूपंकांतंमनोहरंनिवर्त्तयामिसंपादयामीति
॥४१॥ तेनपूर्वेणरूपेणसंभृतःसंपन्नः ॥ ४२ ॥ ४३ ॥ भ्रमिंभ्रामणयंत्रंआरोप्यरूपंशातयामासतनूकृतवान्घृष्टवानित्यर्थः ॥ ४४ ॥

निर्भासितंप्रकटीकृतंअसंहतेनपृथक्कृतेनतेजसाहेतुनासंहतेनेतिस्पष्टार्थः ॥ ४५ ॥ निर्वर्तितंभ्रामणयोगान्निकषणेनसंपादितम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥



१९ ततोनिर्भासितंरूपंतेजसासंहतेनवै ॥ कांतात्कांततरंद्रष्टुमधिकंशुशुभेतदा ४५ मुखेनिर्वर्तितंरूपंतस्यदेवस्यगोपते: ॥ ततःप्रभृतिदे
वस्यमुखमासीत्तुलोहितम् ॥ मुखरागंतुयत्पूर्वंमार्त्तंडस्यमुखच्युतम् ४६ आदित्याद्वादशैवेहसंभूतामुखसंभवाः ॥ धातार्यमाचमित्रश्च अ०९
वरुणोंशोभगस्तथा ४७ इंद्रोविवस्वान्पूषाचपर्जन्योदशमस्तथा ॥ ततस्त्वष्टाततोविष्णुरजघन्योजघन्यजः ४८ हर्षंलेभेततोदेवो
दृष्ट्वादित्यान्स्वदेहजान् ॥ गंधैःपुष्पैरलंकारैर्भास्वतामुकुटेनच ४९ एवंसंपूजयामासत्वष्टावाक्यमुवाचह ॥ गच्छदेवनिजांभार्यांकु
रूंश्चरतिसोत्तरान् ५० वडवारूपमास्थायवनेचरतिशाड्वले ॥ सतथारूपमास्थायस्वभार्यारूपलीलया ५१ ददर्शयोगमास्थाय
स्वांभार्यांवडवांततः ॥ अधृष्यांसर्वभूतानांतेजसानियमेनच ५२ वडवावपुषाराजंश्चरंतीमकुतोभयाम् ॥ सोऽश्वरूपेणभगवांस्तां
मुखेसमभावयत् ५३ मैथुनायविचेष्टंतीपरपुंसोपशंकया ॥ सातन्निरवमच्छुक्रंनासिकायांविवस्वतः ५४ देवौतस्यामजायेतामश्विनौभि
षजांवरौ ॥ नासत्यश्चैवदस्त्रश्चस्मृतौद्वावश्विनाविति ५५ मार्तंडस्यात्मजावेतावष्टमस्यप्रजापतेः ॥ संज्ञायांजनयामासवडवायांसभा
रत ॥ तांतुरूपेणकांतेनदर्शयामासभास्करः ५६ साचदृष्ट्वैवभर्त्तारंतुतोषजनमेजय ॥ यमस्तुकर्मणातेनभृशंपीडितमानसः ५७ धर्मेण
रंजयामासधर्मराजइवप्रजाः ॥ सलेभेकर्मणातेनपरमेणमहाद्युतिः ५८ पितॄणामाधिपत्यंचलोकपालत्वमेवच ॥ मनुःप्रजापतिस्त्वा
सीत्सावर्णःसतपोधनः ५९ भाव्यःसोनागतेकालेमनुःसावर्णिकेंतरे ॥ मेरुपृष्ठेतपोघोरमद्यापिचरतिप्रभुः ६० भ्राताशनैश्चरश्चास्य
ग्रहत्वमुपलब्धवान् ॥ नासत्यौयौसमाख्यातौस्ववैद्यौतौबभूवतुः ६१ सेवतोपितथाराजन्नश्वानांशांतिदोऽभवत् ॥ त्वष्टातुतेजसाते
नविष्णोश्चक्रमकल्पयत् ६२ तदप्रतिहतंयुद्धेदानवांतचिकीर्षया ॥ यवीयसीतयोर्यातुयमीकन्यायशस्विनी ६३ अभवत्सासरिच्छ्रे
ष्ठायमुनालोकभाविनी ॥ मनुरित्युच्यतेलोकेसावर्णइतिचोच्यते ६४ द्वितीयोयःसुतस्तस्यमनोर्भ्राताशनैश्चरः ॥ ग्रहत्वंसचलेभेवै
सर्वलोकाभिपूजितम् ६५

स्वभार्यारूपलीलयाभा
र्यायैअनुरूपालीलाअश्वरूपेणसंचरणम् ॥ ५१ ॥ ५२ ॥ समभावयत् संगमकरोत् ॥ ५३ ॥ विचेष्टंतीमैथुनप्रतिकूलांचेष्टांकुर्वाणा परपुंसोपशंकयाशुक्रंनिरवमत् ॥ १९
॥ ५४ ॥ ५५ ॥ ५६ ॥ तेनभ्रातुःमातृशापजक्लेशेनममाप्येवंमाभूदितिधर्ममेवाश्रयदित्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ तयोर्मनुयमयोः ॥ ६३ ॥ ६४ ॥ ६५ ॥

देवानांयमादीनामश्विनोश्च ॥ ६६ इतिश्रीमहाभारतेखिलेषुहरिवंशेटीकायांनवमोध्यायः ॥ ९ ॥ मनोर्वैश्राद्धदेवस्यसंततिर्दशधातथा ॥ सौम्यात्तदंशभेदश्चदशमेध्यायइष्यते ॥ १ ॥ तत्समाः मनुतुल्याः ॥ १ ॥ नाभागारिष्टइत्यत्रदिष्टइत्यपिपठंतिनाभानेदिष्ठंवैमानवमितिश्रुतेः नाभानेदिष्टइतिपाठः प्रामाणिकः २ प्रजापतिर्मनुः ३ ४ ५ ६

यइदंजन्मदेवानांशृणुयाद्वापिधारयेत् ॥ आपद्भ्यःसविमुच्येतप्राप्नुयाच्चमहद्यशः ६६ इतिश्रीमहाभारतेखिलेषुहरिवंशेवैवस्वतोत्पत्तौनवमोध्यायः ॥ ९ ॥ ९ ॥ वैशंपायनउवाच ॥ ॥ मनोर्वैवस्वतस्यासन्पुत्रावैनवतत्समाः ॥ इक्ष्वाकुश्चैवनाभागोधृष्णुःशर्यातिरेवच १ नरिष्यंश्चतथाप्रांशुर्नाभागारिष्टसप्तमाः ॥ करूषश्चपृषध्रश्चनवैतेभरतर्षभ २ अकरोत्पुत्रकामस्तुमनुरिष्टिंप्रजापतिः ॥ मित्रावरुणयोस्तातपूर्वमेवविशांपते ३ अनुत्पन्नेपुनवसुपुत्रेष्वेतेपुभारत ॥ तस्यांतुवर्तमानायामिष्ट्यांभरतसत्तम ४ मित्रावरुणयोरंशेमुनिराहुतिमाजुहोत् ॥ आहूत्यांहूयमानायांदेवगंधर्वमानुषाः ५ तुष्टिंतुपरमांजग्मुर्मुनयश्चतपोधनाः ॥ अहोस्यतपसोवीर्यमहोस्यश्रुतमद्भुतम् ६ तत्रदिव्यांबरधरादिव्याभरणभूषिता ॥ दिव्यसंहननाचैवइलाजज्ञेइतिश्रुतिः ७ तामिलेत्येवहोवाचमनुर्दंडधरस्तदा ॥ अनुगच्छस्वमांभद्रेतमिलाप्रत्युवाचह ॥ धर्मयुक्तमिदंवाक्यंपुत्रकामंप्रजापतिम् ८ ॥ इलोवाच ॥ मित्रावरुणयोरंशेजातास्मिवदतांवर तयोःसकाशंयास्यामिनमांधर्मोहतोवधीत् ९ सैवमुक्तामनुंदेवंमित्रावरुणयोरिला ॥ गत्वांतिकंवरारोहाप्रांजलिर्वाक्यमब्रवीत् १० अंशेस्मियुवयोर्जातादेवौकिंकरवाणिवाम् ॥ मनुनाचाहमुक्तावैअनुगच्छस्वमामिति ११ तांतथावादिनींसाध्वीमिलांधर्मपरायणाम् ॥ मित्रश्चवरुणश्चोभावूचतुर्यन्निबोधतत् १२ अनेनतवधर्मेणप्रश्रयेणदमेनच ॥ सत्येनचैवसुश्रोणिप्रीतौस्वोवरवर्णिनि १३ आवयोस्त्वंमहाभागेख्यातिंकन्येतियास्यसि ॥ मनोर्वंशधरःपुत्रस्त्वमेवचभविष्यसि १४ सुद्युम्नइतिविख्यातस्त्रिषुलोकेषुशोभने ॥ जगतिप्रियोधर्मशीलोमनोर्वंशविवर्द्धनः १५ निवृत्तासातुतच्छ्रुत्वागच्छंतीपितुरंतिकं ॥ बुधेनांतरमासाद्यमैथुनायोपमंत्रिता १६ सोमपुत्राद्बुधाद्राजन्तस्यांजज्ञेपुरूरवाः ॥ जनयित्वासुतंसातमिलासुद्युम्नतांगता १७

इलातन्नाम्नीकन्या ॥७ ॥ दंडधरोराजाभद्रेमांअनुगच्छस्वेतितामिलामुवाचेतिपूर्वेणसंवंधः तंमनुंइलाप्रत्युवाचेत्युत्तरेणसंवध्यते ॥ ८ ॥९॥१०॥११॥१२॥१३ ॥ मानवीघृतपदीमैत्रावरुणीतिमंत्रलिंगादिलायाउभयसंबंधोघटते तत्राद्यमाह आवयोरिति द्वितीयमाह मनोरिति ॥ १४ ॥१५॥ तत्तुमित्रावरुणयोर्वाक्यंश्रुत्वापितुर्मनोः॥१६॥१७॥

॥ १८ ॥ १९ ॥ प्रविष्टइति मनौसूर्यंप्रविष्टेपुत्रान्उत्पाद्यत्यक्ताधिकारेसति इक्ष्वाकुप्रभृतयोदशमनोःपुत्राः पृथिवींदशधाविभज्यगृहीतवंतः ॥ २० ॥ २१ ॥ सुद्युम्नएनंगुणं मध्यदेशराजत्वं वसिष्ठानुग्रहात्तुसुद्युम्नोपितत्समीपदेशेराज्यंलेभेइत्याहवसिष्ठेतिप्रतिष्ठानेप्रयागैकदेशे ॥ २२ ॥ अत्रास्थितिः ॥ २३ ॥ नृपक्रियांराज्यंकारयामासपुरूरवसः



सुद्युम्नस्यतुदायादास्त्रयःपरमधार्मिकाः ॥ उत्कलश्चगयश्चैवविनताश्वश्चभारत १८ उत्कलस्योत्कलाराजन्विनताश्वस्यपाश्चिमा ॥ दिक्पूर्वाभरतश्रेष्ठगयस्यतुगयापुरी १९ प्रविष्टेतुमनौतातदिवाकरमरिंदम ॥ दशधातद्दधत्क्षत्रमकरोत्पृथिवीमिमाम् २० यूपांकिताव सुमतीयस्येयंसवनाकरा ॥ इक्ष्वाकुर्ज्येष्ठदायादोमध्यदेशमवाप्तवान् २१ कन्याभावाच्चसुद्युम्नोनैनंगुणमवाप्तवान् ॥ वसिष्ठवचनाच्चासीत्प्रतिष्ठानेमहात्मनः २२ प्रतिष्ठाधर्मराजस्यसुद्युम्नस्यकुरूद्वह ॥ तत्पुरूरवसेप्रादाद्राज्यंप्राप्यमहायशाः २३ सुद्युम्नःकारयामासप्रतिष्ठानेनृपक्रियां ॥ उत्कलस्यत्रयःपुत्रास्त्रिपुलोकेषुविश्रुताः ॥ धृष्टकश्चांबरीषश्चदंडश्चेतिसुतास्त्रयः २४ यश्चकारमहात्मावैदंडकारण्यमुत्तमं ॥ वनंतल्लोकविख्यातंतापसानामनुत्तमं २५ तत्रप्रविष्टमात्रस्तुनरःपापात्प्रमुच्यते ॥ सुद्युम्नश्चदिवंयातऐलमुत्पाद्यभारत २६ मानवेयोमहाराजस्त्रीपुंसोर्लक्षणैर्युतः ॥ धृतवान्यइलेत्येवसुद्युम्नश्चेतिविश्रुतः २७ नरिष्यतःशकाःपुत्रानाभागस्यतुभारत ॥ अंबरीषोभवत्पुत्रःपार्थिवर्षभसत्तमः २८ धृष्णोस्तुधार्ष्टकंक्षत्रंरणधृष्टंबभूवह ॥ करूषस्यतुकारूषाःक्षत्रियायुद्धदुर्मदाः २९ सहस्त्रंक्षत्रियगणोविक्रान्तःसंबभूवह ॥ नाभागारिष्टपुत्रश्चक्षत्रियावैश्यतांगताः ३० प्रांशोरेकोऽभवत्पुत्रःशर्यातिरितिविश्रुतः॥नरिष्यन्तस्यदायादोराजादण्डधरोदमः ॥ शर्यातेर्मिथुनंचासीदानर्त्तोनामविश्रुतः ३१ पुत्रःकन्यासुकन्याख्यायापत्नीच्यवनस्यह ॥ आनर्त्तस्यतुदायादोरेवोनाममहाद्युतिः ३२ आनर्तविषयश्चासीत्पुरीचास्यकुशस्थली ॥ रेवस्यरैवतःपुत्रःककुद्मीनामधार्मिकः ३३ ज्येष्ठःपुत्रशतस्यासीद्राज्यंप्राप्यकुशस्थलीम् ॥ सकन्यासहितःश्रुत्वागांधर्वंब्रह्मणोंतिके ३४ मुहूर्त्तभूतंदेवस्यगतंबहुयुगंप्रभो ॥ आजगामयुवैवाथस्वांपुरींयादवैर्वृताम् ३५ कृतांद्वारवतींनाम्नाबहुद्वारांमनोरमाम् ॥ भोजवृष्ण्यंधकैर्गुप्तांवासुदेवपुरोगमैः ३६ ततःसरैवतोज्ञात्वायथातत्वमरिंदम ॥ कन्यांतांबलदेवायसुव्रतांनामरेवतीम् ३७

सुताः ॥ २४ ॥ २५ ॥ दंडोयच्छब्दार्थः ॥ २६ ॥ २७ ॥ नरिष्यत्नाभागौमनोःपंचमद्वितीयौपुत्रौ ॥ २८ ॥ धृष्णोःतृतीयस्य ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ आनर्त्तविषयोद्वारकादेशःकुशस्थलीद्वारवती ॥ ३३ ॥ ३४ ॥ युवैवतत्रजरादिपरिणामाभावात् ॥ ३५ ॥ ३६ ॥ ३७ ॥

२०

॥ ३८ ॥ इतिहरिवंशेटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ शर्यातेरन्वयाख्यानंपूर्वंधुंधुकमारणं ॥ उक्तमेकादशेविष्णोरुक्तंकस्यप्रसादजं ॥ १ ॥ कथमितिजन्मनंतरःप रिणामावश्यंभावात्कथंतयोर्जरायाअप्राप्तिरितिप्रश्नः ॥ १ ॥ शर्यातिप्रपौत्रस्यरैवतस्य ॥२॥ उत्तरमाह नजरेति जठराग्निप्रभावेणक्षुधादयोभवंतितत्पाचितान्नेनपरिणामांतरंजा यतेपूर्वपरिणामश्चनश्यति ततोजराप्रवर्त्ततेअन्नेश्वप्रवर्त्तकः कालःसूर्यादिनिर्वर्त्यः ब्रह्मलोकेतुसूर्याद्यभावान्नतन्मूलकाःकालाग्निक्षुज्जराइत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

दत्वाजगामशिखरंमेरोस्तपसिसंस्थितः॥ रेमेरामोपिधर्मात्मारेवत्यासहितःसुखी ३८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंश पर्वणिदशमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ जनमेजयउवाच ॥ कथंबहुयुगेकालेसमतीतेद्विजोत्तम ॥ नजरारेवतींप्राप्तारैवतंचककुद्मिन म् १ मेरुंगतस्यवातस्यशार्यातेःसंततिःकथम् ॥ स्थिताप्टथिव्यामद्यापिश्रोतुमिच्छामितत्वतः २ वैशंपायनउवाच ॥ नजराक्षुत्पिपासे वानमृत्युर्भरतर्षभ ॥ ऋतुचक्रंनभवतिब्रह्मलोकेसदानघ ३ ककुद्मिनस्तुतंलोकंरैवतस्यगतस्यह ॥ हतापुण्यजनैस्तातराक्षसैःसाकुश स्थली ४ तस्यभ्रातृशतंचासीद्धार्मिकस्यमहात्मनः ॥ तद्वध्यमानंरक्षोभिर्दिशःप्राद्रवदच्युतम् ५ विद्रुतस्यतुराजेंद्रतस्यभ्रातृशत स्यवै ॥ तेषांतुतेभयाक्रांताःक्षत्रियास्तत्रतत्रह ६ अन्ववायस्तुसुमहांस्तत्रतत्रविशांपते ॥ येषामेतेमहाराजशार्याताइतिविश्रुताः ७ क्ष त्रियाभरतश्रेष्ठदिक्षुसर्वासुधार्मिकाः ॥ सर्वशःपर्वतगणान्प्रविष्टाःकुरुनंदन ८ नाभागादिष्टपुत्रौद्वौवैश्यौब्राह्मणतांगतौ ॥ करूषस्य चकारूषाःक्षत्रियायुद्धदुर्मदाः ९ प्रांशोरेकोभवत्पुत्रःप्रजातिरितिनःश्रुतम् ॥ पृषध्रोहिंसयित्वातुगुरोर्गांजनमेजय १० शापाच्छूद्रत्व मापन्नोनवैतेपरिकीर्त्तिताः ॥ वैवस्वतस्यतनयामनोर्वैभरतर्षभ ११ क्षुवतश्चमनोस्तातइक्ष्वाकुरभवत्सुतः ॥ तस्यपुत्रशतंत्वासीदिक्ष्वा कोर्भूरिदक्षिणम् १२ तेषांविकुक्षिर्ज्येष्ठस्तुविकुक्षित्वादयोधताम् ॥ प्राप्तःपरमधर्मज्ञःसोऽयोध्याधिपतिःप्रभुः १३ शकुनिप्रमुखास्तस्य पुत्राःपंचाशदुत्तमाः ॥ उत्तरापथदेशस्थारक्षितारोमहीपते १४ चत्वारिंशदथाष्टौचदक्षिणस्यांतथादिशि ॥ शशादप्रमुखाश्चान्येरक्षि तारोविशांपते १५ इक्ष्वाकुस्तुविकुक्षिंवैअष्टकायामथादिशत् ॥ मांसमानयश्राद्धार्थंमृगान्हत्वामहाबल १६

॥ ८ ॥ वैश्यौवैश्यायामुत्पन्नत्वात्मातृजातयःपुत्राःस्युरितिवचनात् ब्राह्मणतांउपशांतिंगतौ ॥ ९ ॥ १० ॥ ११ ॥ क्षुवतःक्षुतंकुर्वतः ॥ १२ ॥ विकुक्षित्वात्विपुलकुक्षि त्वात् अयोधताम् अप्रतियोधृताम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

 श्राद्धेति एतेनयदर्थंयदुद्दिष्टंतस्मैतददत्वान्यत्रविनियुज्यतेचेद्दोषःभवतीतिदर्शितम् मृगयांगतःमृगयातआगतएवइक्ष्वाकुणापरित्यक्तइत्युत्तरेणान्वयः ॥ १७ ॥ वसिष्ठवचना 
त्इहविरिदमुच्छिष्टंनपितृयोग्यमित्येवंरूपात् संस्थितेमृते ॥ १८ ॥ ककुत्स्कंधः तत्रतिष्ठतीतिककुत्स्थः ॥ १९ ॥ २० ॥ २१ ॥ श्रावस्तीपुरी ॥ २२ ॥ २३ ॥ २४ ॥

 श्राद्धकर्मणिचोद्दिष्टअकृतेश्राद्धकर्मणि ॥ भक्षयित्वाशशंतातशशादोमृगयांगतः १७ इक्ष्वाकुणापरित्यक्तोवासिष्ठवचनात्प्रभुः ॥ इक्ष्वा 
कौसंस्थितेतातशशादःपुरमावसत् १८ शशादस्यतुदायादःककुत्स्थोनामवीर्यवान् ॥ इंद्रस्यवृषभूतस्यककुत्स्थोजयतासुरान् १९
पूर्वमाडीबकेयुद्धेककुत्स्थस्तेनहिस्मृतः ॥ अनेनास्तुककुत्स्थस्यपृथुरानेनसःस्मृतः २० विष्टराश्वःपृथोःपुत्रस्तस्मादार्द्रस्त्वजायत ॥
आर्द्रस्ययुवनाश्वस्तुश्रावस्तस्यतुचात्मजः २१ जज्ञेश्रावस्तकोराजाश्रावस्तीयेननिर्मिता ॥ श्रावस्तस्यतुदायादोबृहदश्वोमहायशाः
२२ कुवलाश्वःसुतस्तस्यराजापरमधार्मिकः ॥ यःसधुंधुवधाद्राजाधुंधुमारत्वमागतः २३ जनमेजयउवाच ॥ धुंधोर्वधमहंब्रह्मन्श्रो
तुमिच्छामितत्वतः ॥ यदर्थंकुवलाश्वःसन्धुंधुमारत्वमागतः २४ वैशंपायनउवाच ॥ कुवलाश्वस्यपुत्राणांशतमुत्तमधन्विनाम् ॥ सर्वे
विद्यासुनिष्णताबलवंतोदुरासदाः २५ बभूवुर्धार्मिकाःसर्वेयज्वानोभूरिदक्षिणाः ॥ कुवलाश्वंसुतंराज्येबृहदश्वोन्ययोजयत् २६ पुत्रसं
क्रामितश्रीस्तुवनंराजासमाविशत् ॥ तमुत्तंकोथविप्रर्षिःप्रयांतंप्रत्यवारयत् २७ ॥ ॥ उत्तंकउवाच ॥ ॥ भवतारक्षणंकार्यंतत्तावत्क
र्तुमर्हसि ॥ निरुद्विग्नस्तपश्चर्तुंनहिशक्नोषिपार्थिव २८ त्वयाहिपृथिवीराजन्रक्षमाणामहात्मना ॥ भविष्यतिनिरुद्विग्नानारण्यंगं
तुमर्हसि २९ पालनेहिमहान्धर्मःप्रजानामिहदृश्यते ॥ नतथादृश्यतेऽरण्येमातेऽभूद्बुद्धिरीदृशी ३० ईदृशोनहिराजेंद्रधर्मःक्वचनदृश्य
ते ॥ प्रजानांपालनेयोवैपुराराजर्षिभिःकृतः ॥ रक्षितव्याप्रजाराज्ञातास्त्वंरक्षितुमर्हसि ३१ ममाश्रमसमीपेहिसमेषुमरुधन्वसु ॥
समुद्रोवालुकापूर्णउज्जानकइतिश्रुतः ॥ देवतानामवध्यश्चमहाकायोमहाबलः ३२ अंतर्भूमिगतस्तत्रवालुकांतर्हितोमहान् ॥ रा
क्षसस्यमधोःपुत्रोधुंधुनामामहासुरः ॥ शेतेलोकविनाशायतपआस्थायदारुणम् ३३

॥ २५ ॥ २६ ॥ २७ ॥ रक्षणंअस्माकमितिशेषः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ समेषुपर्वताद्यभावान्निम्नोन्नतवर्जितेषु मरुषुनिर्जलेषुधन्वसुअल्पोदकेषुउज्जानकःज 
नस्यसमूहोजानकंतद्रहितउज्जानकःउज्जालकेतिपाठेजलसमूहवर्जितः ॥ ३२ ॥ ३३ ॥

१ देवासुरे इति०पु०पा० २

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ निवारणेविनाशेनिमित्ते ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ वालुकार्णवंवालुकापूर्णमु

संवत्सरस्यपर्यंतेसनिःश्वासंप्रमुंचति ॥ यदातदाभूश्चलतिसशैलवनकानना ३४ तस्यनिःश्वासवातेनरजउद्धूयतेमहत् ॥ आदि
त्यपथमावृत्यसप्ताहंभूमिकंपनम् ३५ सविस्फुलिंगंसांगारंसधूममतिदारुणम् ॥ तेनतातनशक्नोमितस्मिन्स्थातुंस्वकाश्रमे ३६ तंमा
रयमहाकायंलोकानांहितकाम्यया ॥ लोकाःस्वस्थाभवंत्यद्यतस्मिन्विनिहतेऽसुरे ३७ त्वंहितस्यवधायैकःसमर्थःपृथिवीपते॥ विष्णु
नाचवरोदत्तोमह्यंपूर्वयुगेऽनघ ३८ यस्त्वंमहासुरंरौद्रंहनिष्यसिमहाबलम् ॥ तस्यत्वंवरदानेनतेजआप्याययिष्यसि ३९ नहिधुंधुर्म
हातेजास्तेजसाल्पेनशक्यते ॥ निर्दग्धुंपृथिवीपालसहिवर्षशतैरपि ॥ वीर्यंहिसुमहत्तस्यदेवैरपिदुरासदम् ४० सएवमुक्तोराजर्षिरु
त्तंकेनमहात्मना ॥ कुवलाश्वंसुतंप्रादात्तस्मैधुंधुनिवारणे ४१ बृहदश्वउवाच ॥ भगवन्न्यस्तशस्त्रोहमयंतुतनयोमम ॥ भविष्यतिद्वि
जश्रेष्ठधुंधुमारोनसंशयः ४२ सतंव्यादिश्यतनयंराजर्षिर्धुंधुमारणे ॥ जगामपर्वतायैवतपसेसंशितव्रतः ४३ कुवलाश्वस्तुपुत्राणांश
तेनसहपार्थिवः ॥ प्रायादुत्तंकसहितोधुंधोस्तस्यविनिग्रहे ४४ तमाविशत्तदाविष्णुर्भगवांस्तेजसाप्रभुः ॥ उत्तंकस्यनियोगाद्वैलो
कस्यहितकाम्यया ४५ तस्मिन्प्रयातेदुर्धर्षेदिविशब्दोमहानभूत् ॥ एषश्रीमानवध्योद्यधुंधुमारोभविष्यति ४६ दिव्यैर्माल्यैश्चतंदेवाः
समंतात्समवाकिरन् ॥ देवदुंदुभयश्चापिप्रणेदुर्भरतर्षभ ४७ सगत्वाजयतांश्रेष्ठस्तनयैःसहवीर्यवान् ॥ समुद्रंखानयामासवालुका
र्णवमव्ययम् ४८ नारायणेनकौरव्यतेजसाप्यायितःसवै ॥ बभूवसमहातेजाभूयोबलसमन्वितः ४९ तस्यपुत्रैःखनद्भिस्तुवालुकांत
र्हितस्तदा ॥ धुंधुरासादितोराजन्दिशमावृत्यपश्चिमाम् ५० ॥ मुखजेनाग्निनाक्रोधाल्लोकानुद्वर्तयन्निव ॥ वारिसुस्राववेगेनमहोदधि
रिवोदये ५१ सोमस्यभरतश्रेष्ठधारोर्मिकलिलंमहत्॥ तस्यपुत्रशतंदग्धंत्रिभिरूनंतुरक्षसा ५२ ततःसराजाकौरव्यराक्षसंतंमहाबल
म् ॥ आससादमहातेजाधुंधुंधुंधुनिबर्हणः ५३ तस्यवारिमयंवेगमापीयसनराधिपः ॥ योगीयोगेनवह्निंचशमयामासवारिणा ५४ नि
हत्यतंमहाकायंबलेनोदकराक्षसम् ॥ उत्तंकंदर्शयामासकृतकर्मानराधिपः ५५

दकमयं वालुकापूर्णमितिगौडाः ४८ ४९ ५० मुखजेनाग्निनातस्यपुत्रशतंदग्धमित्युत्तरेणसंबंधःसचवारिसुस्रावस्वदेहजलेनभुवमाप्लावितवानित्यर्थः ५१ ५२ ५३ ५४ ५५

---

१ एषं श्रीमान्नृपसुतो धन्धुमार इतिपाठान्तरम् ।

॥ ५६ ॥ ५७ ॥ इतिहरिवंशेटीकायांएकादशोऽध्यायः ॥ ११ ॥ ॥ सगरांतोद्दढाश्वादिर्वंशोद्वादशईरितः ॥ विश्वामित्रकुटुंबादिर्भरणंचत्रिशंकुतः ॥ १ ॥ तस्यधुंधुमारस्य ॥ १ ॥ २ ॥ ३ ॥ तस्यसंहताश्वस्यदाराहैमवतीहिमवतःकन्या अस्यांप्रसेनजित्जातइतिशेषः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ पाणीतिमंत्राणांनावेहिसंभवावहैसहतोदेधावहरेपुंसेपुत्रायवेत्तवैइत्याद्यर्थानांविघ्नंप्रतिबंधंचक्रे ॥ १२ ॥ परस्परेणपूर्वंकृतोद्वाहाऊढाकन्यास्वभार्याकृतेत्यन्वयःसखासप्तपदीभवेत्यंतिममंत्रांते

उत्तंकस्तुवरंप्रादात्तस्मैराज्ञेमहात्मने ॥ ददौतस्याक्षयंवित्तंशत्रुभिश्चापराजयम् ५६ धर्मेरतिंचसततंस्वर्गवासंतथाक्षयम् ॥ पुत्राणांचाक्षयाँल्लोकान्स्वर्गेयेरक्षसाहताः ५७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥

वैशंपायनउवाच ॥ तस्यपुत्रास्त्रयःशिष्टाद्दढाश्वोज्येष्ठउच्यते ॥ चंद्राश्वकपिलाश्वौतुकुमारौद्वौकनीयसौ १ धौंधुमारिर्दृढाश्वस्तुहर्यश्वस्तस्यचात्मजः ॥ हर्यश्वस्यनिकुंभोभूत्क्षत्रधर्मरतःसदा २ संहताश्वोनिकुंभस्यपुत्रोरणविशारदः ॥ अकृशाश्वःकृशाश्वश्चसंहताश्वसुतौनृप ३ तस्यहैमवतीकन्यासतांमाताद्दषद्वती ॥ विख्यातात्रिषुलोकेषुपुत्रश्चास्याःप्रसेनजित् ४ लेभेप्रसेनजिद्भार्यांगौरींनामपतिव्रताम् ॥ अभिशप्तातुसाभर्त्रानदीवैबाहुदाभवत् ५ तस्याःपुत्रोमहानासीद्युवनाश्वोमहीपतिः ॥ मांधातायुवनाश्वस्यत्रिलोकविजयीसुतः ६ तस्यचैत्ररथीभार्याशशबिंदोःसुताऽभवत् ॥ साध्वीबिंदुमतीनामरूपेणासदृशीभुवि ७ पतिव्रताचज्येष्ठाचभ्रातॄणामयुतस्यसा ॥ तस्यामुत्पादयामासमांधाताद्वौसुतौनृप ८ पुरुकुत्संचधर्मज्ञंमुचुकुंदंचधार्मिकम् ॥ पुरुकुत्ससुतस्त्वासीत्त्रसद्दस्युर्महीपतिः ९ नर्मदायामथोत्पन्नःसंभूतस्तस्यचात्मजः ॥ संभूतस्यतुदायादःसुधन्वानामपार्थिवः १० सुधन्वनःसुतश्चासीत्त्रिधन्वारिपुमर्दनः ॥ राज्ञःस्त्रिधन्वनस्त्वासीद्विद्वांस्त्रय्यारुणःसुतः ११ तस्यसत्यव्रतोनामकुमारोभून्महाबलः ॥ पाणिग्रहणमंत्राणांविघ्नंचक्रेसुदुर्मतिः १२ येनभार्याहृतापूर्वंकृतोद्वाहापरस्यवै ॥ बाल्यात्कामाच्चमोहाच्चसंहर्षाच्चापलेनच १३ जहारकन्यांकामात्सकस्यचित्पुरवासिनः ॥ अधर्मशंकुनातेनराजात्रय्यारुणोत्यजत् १४ अपध्वंसेतिबहुशोवदन्क्रोधसमन्वितः ॥ पितरंसोऽब्रवीत्त्यक्तःक्वगच्छामीतिवैमुहुः १५ पितात्वेनमथोवाचश्वपाकैःसहवर्त्तय ॥ नाहंपुत्रेणपुत्रार्थीत्वयाद्यकुलपांसन १६

भार्यात्वमुत्पद्यते नततःप्राक् अतस्तांप्रागेवजहारसंहर्षादभिनिवेशात् ॥ १३ ॥ अधर्मशंकुनापापरूपेणकीलेनविद्धत्वात्तंअत्यजत् ॥ १४ ॥ हेअपध्वंसविलोमजेतिवदन्नूसंबोधयन् ॥ १५ ॥ वर्त्तयवस ॥ १६ ॥

तंएवंवदंतंपितरं ॥ १७ ॥ चांडालगृहसमीपे ॥ १८ ॥ पाकशासनइंद्रः तेनाधर्मेणविप्रविवाहविघ्नजेनपितृक्षोभेण नतुराज्ञःप्रजात्यागेन प्रव्रजतोविरक्तस्यदोषाभावात् तस्मिन्नपरितोषोयःपितुरासीदित्यादिशेषग्रंथाच्च ॥ १९ ॥ तस्यत्रिशंकोर्विषयेदेशेसंन्यस्यन्यासरूपेणस्थापयित्वा ॥ २० ॥ शेषस्यकुटुंबस्य ॥ २१ ॥ विक्रीयंतंविक्रीयमाणम् ॥२२॥ २३ ॥ यस्माद्गलेवद्धः अतोगालवइति ॥ २४ ॥ इतिहरिवंशेटीकायांद्वादशोऽध्यायः॥१२॥ अथत्रयोदशेध्यायेत्रय्यारुणसुतस्यवै ॥ पितुश्चापरितोषाद्वैत्रिशंकुत्वमिहोच्यते

इत्युक्तःसनिराक्रामन्नगराद्वचनात्पितुः ॥ नचतंवारयामासवसिष्ठोभगवानृषिः १७ सतुसत्यव्रतस्तातश्वपाकावसथांतिके ॥ पित्रात्यक्तोवसद्वीरःपितातस्यवनंययौ १८ ततस्तस्मिंस्तुविषयेनावर्षत्पाकशासनः ॥ समाद्वादशराजेंद्रतेनाधर्मेणवैतदा १९ दारांस्तुतस्यविषयेविश्वामित्रोमहातपाः ॥ संन्यस्यसागरानूपेचचारविपुलंतपः २० तस्यपत्नीगलेबध्वामध्यमंपुत्रमौरसं ॥ शेषस्यभरणार्थायव्यक्रीणाद्गोशतेनवै २१ तंतुबद्धंगलेदृष्ट्वाविक्रीयंतंनृपात्मजः ॥ महर्षिपुत्रंधर्मात्मामोक्षयामासभारत २२ सत्यव्रतोमहाबाहुर्भरणंतस्यचाकरोत् ॥ विश्वामित्रस्यतुष्ट्यर्थमनुकंपार्थमेवच २३ सोभवद्गालवोनामगलबंधान्महातपाः ॥ महर्षिःकौशिकस्ताततेनवीरेणमोक्षितः २४ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ सत्यव्रतस्तुभक्त्याचकृपयाचप्रतिज्ञया ॥ विश्वामित्रकलत्रंतद्बभारविनयेस्थितः १ हत्वामृगान्वराहांश्चमहिषांश्चवनेचरान् ॥ विश्वामित्राश्रमाभ्याशेमांसंवृक्षेबबंधसः २ उपांशुव्रतमास्थायदीक्षांद्वादशवार्षिकीम् ॥ पितुर्नियोगादवसत्तस्मिन्वनगतेनृपे ३ अयोध्यांचैवराष्ट्रंचतथैवांतःपुरंमुनिः ॥ याज्योपाध्यायसंबंधाद्वसिष्ठःपर्यरक्षत ४ सत्यव्रतस्तुबाल्याच्चभाविनोर्थस्यवाबलात् ॥ वसिष्ठेऽभ्यधिकंमन्युंधारयामासवैतदा ५ पित्रातुतंतदाराष्ट्रात्त्यज्यमानंस्वमात्मजं ॥ नवारयामासमुनिर्वसिष्ठःकारणेनह ६ पाणिग्रहणमंत्राणांनिष्ठास्यात्सप्तमेपदे ॥ नचसत्यव्रतस्तस्यतमुपांशुमबुध्यत ७

॥ १ ॥ सत्येति भक्तिर्विश्वामित्रस्याराध्यत्वात् कृपातत्कुटुंबस्यअनाथत्वात् प्रतिज्ञावसिष्ठशिष्यत्वस्यपरिहारेप्सुत्वात्एभिस्त्रिभिःकारणैर्विश्वामित्रकलत्रंबभारपुपोष ॥ १ ॥ ॥ २ ॥ उपांशुव्रतंपरेषामविदितनियमम् आस्थायअंगीकृत्यवनगतेप्यवसत् ॥ ३ ॥ ४ ॥ ५ ॥ कारणेनअपराधीअयंकंचित्कालंप्रायश्चित्तंचरतुइत्याशयेन ॥ ६ ॥ निष्ठासमाप्तिःउपांशुंनायंपरदारहरःअपितुकन्याहरोतएनंद्वादशवार्षिक्यांदीक्षायांसमाप्तायामभिषेक्ष्यामीतिगूढंआशयम् ॥ ७ ॥

---

१ मांसं सतु बबन्धतत् इति पाठान्तरम् ।

वसिष्टाशयमबुध्वैवतदुपरिरोषमकरोदित्याह जानन्निति ॥ ८ ॥ ९ ॥१० ॥ वसिष्टाशयंविवृणोति ॥ ११ ॥ इतिनन्यवारयदितिपूर्वेणसंबंधः ॥१२॥ १३॥ १४ ॥ दशे
ति मत्तःप्रमत्तउन्मत्तःश्रांतःक्रुद्धोबुभुक्षितः ॥ त्वरमाणश्चभीरुश्चलुब्धःकामीचतेदश ॥ अनुपदोक्ताःक्रोधादयश्चत्वारअध्यायादौचोक्ताः सत्यव्रतत्वादयश्चत्वारःपूर्वाध्यायांतेवि
श्वामित्रस्यतुष्टयर्थमनुकंपार्थमेवचेतिद्वौइत्येवंदशधर्मास्तद्गतः तत्क्षुधेतिअन्यालाभोदर्शितः ॥ श्रमादित्यन्यान्वेषणाशक्तिरुक्ताअनुकंपापरदुःखेनदुःखित्वं कृपा परदुःखपारे

जानन्धर्मंवसिष्ठस्तुनमांत्रातीतिभारत ॥ सत्यव्रतस्तदारोषंवसिष्ठमनसाकरोत् ८ गुणबुध्यातुभगवान्वासिष्ठःकृतवांस्तथा ॥ नचसत्य
व्रतस्तस्यतमुपांशुमबुध्यत ९ तस्मिन्नपरितोषोयःपितुरासीन्महात्मनः ॥ तेनद्वादशवर्षाणिनावर्षत्पाकशासनः १० तेनत्विदानींवह
तादीक्षांतांदुर्वहांभुवि ॥ कुलस्यनिष्कृतिस्तातकृतासावैभवेदिति ११ नतंवसिष्ठोभगवान्पित्रात्यक्तंन्यवारयत् ॥ अभिषेक्ष्याम्यहं
पुत्रमस्येत्येवंमतिर्मुनेः १२ सतुद्वादशवर्षाणिदीक्षांतामुद्वहद्बली ॥ उपांशुव्रतमास्थायमहत्सत्यव्रतोनृप १३ अविद्यमानेमांसेतुवसि
ष्ठस्यमहात्मनः ॥ सर्वकामदुघांदोग्ध्रींददर्शसनृपात्मजः १४ तांवैक्रोधाच्चमोहाच्चश्रमाच्चैवक्षुधार्दितः ॥ दशधर्मान्गतोराजाजघानजन
मेजय १५ तच्चमांसंस्वयंचैवविश्वामित्रस्यचात्मजान् ॥ भोजयामासतच्छ्रुत्वावसिष्ठोप्यस्यचुक्रुधे ॥ क्रुद्धस्तुभगवान्वाक्यमिदमाहनृ
पात्मजम् १६ ॥ ॥ वसिष्ठउवाच ॥ ॥ पातयेयमहंक्रूरतवशंकुमसंशयम् ॥ यदितेद्वाविमौशंकूनस्यातांवैकृतौपुनः १७ पितुश्चा
परितोषेणगुरोर्दोग्ध्रीवधेनच ॥ अप्रोक्षितोपयोगाच्चत्रिविधस्तेव्यतिक्रमः १८ ॥ वैशंपायनउवाच ॥ एवंत्रिण्यस्यशंकूनितानिदृष्ट्वा
महातपाः ॥ त्रिशंकुरितिहोवाचत्रिशंकुरितिसस्मृतः १९ विश्वामित्रस्तुदाराणामागतोभरणेकृते ॥ सतुतस्मैवरंप्रादान्मुनिःप्रीतस्त्रि
शंकवे २० छंद्यमानोवरेणाथवरंवव्रेनृपात्मजः ॥ सशरीरोव्रजेस्वर्गमित्येवंयाचितोमुनिः २१ अनावृष्टिभयेतस्मिन्गतेद्वादशवार्षिके
राज्येऽभिषिच्यपित्र्येतुयाजयामासतंमुनिः २२ मिषतांदेवतानांचवसिष्ठस्यचकौशिकः ॥ सशरीरंतदातंतुदिवमारोपयत्प्रभुः २३ त
स्यसत्यरथानामभार्याकैकयवंशजा ॥ कुमारंजनयामासहरिश्चंद्रमकल्मषम् २४

हारार्थीयत्नइतिविशेषःएतान्दशधर्मान्गतःसन्राजेतिभाविसंज्ञांगृहीत्वा ॥ १५ ॥ १६ ॥ शंकुंपूर्वोक्तंदोषम् इमौवक्ष्यमाणौ ॥ १७ ॥ शंकुत्रयमेवविवृणोति पितुरिति अ
प्रोक्षितोपयोगात्असंस्कृतमांसभक्षणात् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ भयेगतेविश्वामित्रप्रसादमात्रादितिशेषः ॥ २२ ॥ मिषतामित्यनादरेषष्ठीपश्यतोदेवादीननादृ
त्येत्यर्थःकौशिकोविश्वामित्रः ॥ २३ ॥ तस्यात्रिशंकोः ॥ २४ ॥

23

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ शकादयोम्लेछभेदाः ॥ ३० ॥ निरसंतिस्मराज्यात्दूरीकुर्वतिस्मतत्रहेतुर्नात्यर्थमिति ॥ ३१ ॥ गरेणविषेणसहजातइतिसगर त्वंमातुर्गरसंयोगेप्यमरणेहेतुमाह और्वस्येतिभार्गवेणऔर्वेण ॥ ३२ ॥ ३३ ॥ निरसन्निरस्तवान् अच्युतःपारिपूर्णशक्तिः ॥ ३४ ॥ इतिहरिवंशेटीकायांत्रयोदशोऽध्यायः १३

सवैराजाहरिश्चंद्रस्त्रैशंकवइतिस्मृतः ॥ आहर्त्ताराजसूयस्यससम्राडितिविश्रुतः २५ हरिश्चंद्रस्यपुत्रोभूद्रोहितोनामवीर्यवान् ॥ येने दंरोहितपुरंकारितंराज्यसिद्धये २६ कृत्वाराज्यंसराजर्षिःपालयित्वात्वथप्रजाः ॥ संसारासारतांज्ञात्वाद्विजेभ्यस्तत्पुरंददौ २७ हरि तोरोहितस्याथचंचुर्हारीतउच्यते ॥ विजयश्चसुदेवश्चचंचुपुत्रौबभूवतुः २८ जेताक्षत्रस्यसर्वस्यविजयस्तेनसंस्मृतः ॥ रुरुकस्तनयस्त स्यराजधर्मार्थकोविदः २९ रुरुकस्यवृकःपुत्रोवृकाद्बाहुस्तुजज्ञिवान् ॥ शकैर्यवनकांबोजैःपारदैःपह्लवैःसह ३० हैहयास्तालजंघाश्च निरस्यंतिस्मतंनृपम् ॥ नात्यर्थंधार्मिकस्तातसहिधर्मयुगेभवत् ३१ सगरस्तुसुतोबाहोर्जज्ञेसहगरेणच ॥ और्वस्याश्रममागम्यभार्ग वेणाभिरक्षितः ३२ आग्नेयमस्त्रंलब्ध्वाचभार्गवात्सगरोनृपः ॥ जिगायपृथिवींहत्वातालजंघान्सहैहयान् ३३ शकानांपह्लवानांचधर्मं निरसदच्युतः ॥ क्षत्रियाणांकुरुश्रेष्ठपारदानांसधर्मवित् ३४ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणित्रिशंकुचरितकथनंनाम त्रयोदशोऽध्यायः १३ ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ कथंससगरोजातोगरेणैवसहाच्युतः ॥ किमर्थंचशकादीनांक्षत्रियाणांम हौजसाम् १ धर्मंकुलोचितंक्रुद्धोराजानिरसदच्युतः ॥ एतन्मेसर्वमाचक्ष्वविस्तरेणतपोधन २ वैशंपायनउवाच॥ बाहोर्व्यसनिनस्तात हृतंराज्यमभूत्किल ॥ हैहयैस्तालजंघैश्चशकैःसार्द्धंविशांपते ३ यवनाःपारदाश्चैवकांबोजाःपह्लवाःसखाः ॥ एतेह्यपिगणाःपंचहैहयार्थेप राक्रमन् ४ हृतराज्यस्तदाराजासवैबाहुर्वनंययौ ॥ पत्न्याचानुगतोदुःखीवनेप्राणानवासृजत् ५ पत्नीतुयादवीतस्यसगर्भापृष्ठतोऽन्वगात् सपत्न्याचगरस्तस्यैदत्तःपूर्वमभूत्किल ६ सातुभर्तुश्चितांकृत्वावनेतामध्यरोहत ॥ और्वस्तांभार्गवस्तातकारुण्यात्समवारयत् ७ तस्या श्रमेचतंगर्भंगरेणैवसहाच्युतं ॥ व्यजायतमहाबाहुंसगरंनामपार्थिवम् ८ और्वस्तुजातकर्मादितस्यकृत्वामहात्मनः ॥ अध्याप्यवेदशा स्त्राणिततोऽस्त्रंप्रत्यपादयत् ९ आग्नेयंतुमहाघोरममरैरपिदुःसहं ॥ सतेनास्त्रबलेनाजौबलेनचसमन्वितः १० उत्पत्तिश्चरितंप्रोक्तंसगरस्यचतुर्द

शे ॥ सागरत्वंसमुद्रस्यतत्पुत्रोद्यमसंभवं ॥ १ ॥ कथंगरेणसहसन्कथंअच्युतोनमृतइत्यर्थः ॥ १ ॥ २ ॥ व्यसनिनःमृगयापरस्त्रीद्यूतपरस्य ॥ ३ ॥ पंचशकादयः हैहयाइतितालजं घाइति चैकोराशिःतदर्थेहैहयार्थम् तद्राज्यसाधनार्थंपराक्रमन्पराक्रमंकृतवंतः ४ राजासगरपिता ॥ ५ ॥ अन्वगात्वनमितिशेषः ६ ७ ८ अस्त्रंअस्त्रग्रामंप्रत्यपादयत्ददौ ॥ ९ ॥ १० ॥

पशूनिवप्राणिनइव ॥ ११ ॥ १२ ॥ १३ ॥ समयेनशरणागतोरक्षणीयइतिशिष्टमर्यादया ॥ १४ ॥ धर्मंजघाननक्षत्रधर्मात्च्यावितवान्यतोवेषान्यत्वंवेषांतरंतेषांचकार॥१५॥
तदेवाहअर्द्धशकानामिति ॥ १६ ॥ १७ ॥ १८ ॥ १९॥ खसादीन्विजित्यइमांवसुंधरांचविजित्यवाजिमेधायदीक्षितोभूत्वाअस्यांभुविअश्वंचप्रेरयामासेतिद्वयोःसंबंधः ॥ २०
२४ ॥ २१ ॥ पूर्वदक्षिणेअग्निकोणेअपहृतइंद्रेणेतिशेषः ॥ २२ ॥ तेखनंतःपुत्राःहरिंआसेदुरितिद्वयोःसंबंधःआसेदुरित्यभिमुखंप्राप्यविषादंप्राप्ताइत्यर्थः ॥ २३ ॥ आदिपुरुषंप्र अ० १४

हैहयान्निजघानाशुक्रुद्धोरुद्रःपशूनिव ॥ आजहारचलोकेपुकीर्तिंकीर्तिमतांवरः ११ ततःशकान्सयवनान्कांबोजान्पारदांस्तदा ॥ पह्ल
वांश्चैवनिःशेषान्कर्तुंव्यवसितस्तदा १२ तेवध्यमानावीरेणसगरेणमहात्मना ॥ वसिष्ठंशरणंगत्वाप्रणिपेतुर्मनीषिणम् १३ वसिष्ठस्त्व
थतान्दृष्ट्वासमयेनमहाद्युतिः ॥ सगरंवारयामासतेषांदत्वाभयंतदा १४ सगरःस्वांप्रतिज्ञांचगुरोर्वाक्यंनिशम्यच ॥ धर्मंजघानतेषां
वैवेषान्यत्वंचकारह १५ अर्द्धंशकानांशिरसोमुंडंकृत्वाव्यसर्जयत् ॥ यवनानांशिरःसर्वंकांबोजानांतथैवच १६ पारदामुक्तकेशाश्चपह्ल
वाःश्मश्रुधारिणः ॥ निःस्वाध्यायवषट्काराःकृतास्तेनमहात्मना १७ शकायवनकांबोजाःपारदाश्चविशांपते ॥ कोलिसर्पाःसमहिषादा
र्वाश्चोलाःसकेरलाः १८ सर्वेतेक्षत्रियास्तातधर्मस्तेषांनिराकृतः ॥ वसिष्ठवचनाद्राजन्सगरेणमहात्मना १९ खसांस्तुषारांश्चोली
श्चमद्रान्किष्किंधकांस्तथा ॥ कौंतलांश्चतथावंगान्साल्वान्कौंकणकांस्तथा २० सधर्मविजयीराजाविजित्येमांवसुंधराम् ॥ अश्वंवै
प्रेरयामासवाजिमेधायदीक्षितः २१ तस्यचारयतःसोश्वःसमुद्रेपूर्वदक्षिणे ॥ वेलासमीपेऽपहृतोभूमिंचैवप्रवेशितः २२ सतंदेशंतदा
पुत्रैःखानयामासपार्थिवः ॥ आसेदुस्तेततस्तत्रखन्यमानेमहार्णवे २३ तमादिपुरुषंदेवंहरिंकृष्णंप्रजापतिम् ॥ विष्णुंकपिलरूपेणस्व
पंतंपुरुषोत्तमम् २४ तस्यचक्षुःसमुत्थेनतेजसाप्रतिबुध्यतः ॥ दग्धास्तेवैमहाराजचत्वारस्त्ववशेषिताः २५ बर्हकेतुःसुकेतुश्चतथाध
र्मरथोनृपः ॥ शूरःपंचजनश्चैवतस्यवंशकरोनृपः २६ प्रादाच्चतस्मैभगवान्हरिर्नारायणोवरान् ॥ अक्षयंवंशमिक्ष्वाकोःकीर्तिंचाप्य
निवर्तनीम् २७ पुत्रंसमुद्रंचविभुःस्वर्गवासंतथाऽक्षयम् ॥ पुत्राणांचाक्षयाँल्लोकान्तस्ययेचक्षुषाहताः २८ समुद्रश्चार्घमादायववंदेतंम
हीपतिम् ॥ सागरत्वंचलेभेसकर्मणातेनतस्यवै २९ २४

कृतिप्रवर्तकंहरिंअविद्याकार्यहरंकृष्णंसदानंदरूपप्रजायाःपतिंस्वपंतंसमाध्यवस्थितंपुरुषोत्तमंअंतर्यामिणम् ॥ २४ ॥ तस्यप्रतिबुध्यतःयोगनिद्रांत्यजतःचक्षुःसमुत्थेनतेजसाअग्नि
ना ॥ २५ ॥ २६ ॥ तस्मैसागराय ॥ २७ ॥ २८ ॥ ससमुद्रः तस्यसगरस्य ॥ २९ ॥

॥ ३० ॥ इतिश्रीमहाभारतेहरिवंशेटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ अथपंचदशेवंशोह्यसमंजसउच्यते ॥ पंचजनापराख्यस्यसूर्यवंशसमान्वितः ॥ १ ॥
सगरस्येति विक्रांताःपराक्रमवंतः ॥ १ ॥ २ ॥ कनीयसोपत्नीईलिनीसंज्ञा ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ तुंबींअलाबुम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अलाबुमध्यादलाबुपू
रकाद्बीर्यादलाबुवोजानोवतत्रषष्टिसहस्राणिगर्भाणाम् ॥ ११ ॥ नारायणंनारायणाख्यंतेजःकपिलक्रोधाग्निं असमंजसएवपंचजनः ॥ १२ ॥ दिलीपएवखट्वांगः ॥ १३ ॥

तंचाश्वमेधिकंसोश्वंसमुद्रादुपलब्धवान् ॥ आजहाराश्वमेधानांशतंससुमहायशाः ॥ पुत्राणांचसहस्राणिषष्टिस्तस्येतिनःश्रुतम् ३०
इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिसगरोत्पत्तिर्नामचतुर्दशोऽध्यायः १४ ॥ छ ॥ जनमेजयउवाच ॥ सगरस्यात्मजावीराः
कथंजातामहात्मनः ॥ विक्रांताःषष्टिसाहस्राविधिनाकेनवाद्विज १ ॥ वैशंपायनउवाच ॥ द्वेभार्येसगरस्यास्तांतपसादग्धकिल्बिषे ॥
ज्येष्ठाविदर्भदुहिताकेशिनीनामविश्रुता २ कनीयसीतुयातस्यपत्नीपरमधर्मिणी ॥ अरिष्टनेमिदुहितारूपेणाप्रतिमाभुवि ३ और्वस्ता
भ्यांवरंप्रादात्तन्निबोधजनाधिप ॥ षष्टिंपुत्रसहस्राणिगृह्णात्वेकातपस्विनी ४ एकंवंशधरंत्वेकायथेष्टंवरयत्विति ॥ तत्रैकाजगृहेपुत्राँ
लुब्धाशूरान्बहूंस्तथा ५ एकंवंशधरंत्वेकातथेत्याहचतांमुनिः ॥ केशिन्यसूतसगरादसमंजसमात्मजम् ६ राजापंचजनोनामबभूवसु
महाबलः ॥ इतरासुषुवेतुंबींबीजपूर्णामितिश्रुतिः ७ तत्रषष्टिसहस्राणिगर्भास्तेतिलसम्मिताः ॥ संबभूवुर्यथाकालंववृधुश्चयथाक्रमम्
८ घृतपूर्णेषुकुंभेषुतान्गर्भान्निदधेपिता ॥ धात्रीश्चैकैकशःप्रादात्तावतीरेवपोषणे ९ ततोदशसुमासेषुसमुत्तस्थुर्यथासुखम् ॥ कुमारा
स्तेयथाकालंसगरप्रीतिवर्धनाः १० षष्टिःपुत्रसहस्राणितस्यैवमभवन्नृप ॥ गर्भादलाबुमध्याद्वैजातानिपृथिवीपते ११ तेषांनारायणं
तेजःप्रविष्टानांमहात्मनाम् ॥ एकःपंचजनोनामपुत्रोराजाबभूवह १२ सुतःपंचजनस्यासीदंशुमान्नामवीर्यवान् ॥ दिलीपस्तनयस्तस्य
खट्वांगइतिविश्रुतः १३ येनस्वर्गादिहागत्यमुहूर्तंप्राप्यजीवितम् ॥ त्रयोऽनुसंधितालोकाबुद्ध्यासत्येनचानघ १४ दिलीपस्यतुदाया
दोमहाराजोभगीरथः ॥ यःसगंगांसरिच्छ्रेष्ठामवातारयतप्रभुः १५ कीर्तिमान्समहाभागःशक्रतुल्यपराक्रमः ॥ समुद्रमानयच्चैनांदुहि
तृत्वेनकल्पयत् ॥ तस्माद्भागीरथीगंगाकथ्यतेवंशचिंतकैः १६

अनुसंधिताःध्यानबलेनतत्वतोज्ञाताःबुद्ध्यासूक्ष्मयासत्येनब्रह्मभावेनमुहूर्तमात्रेणचित्तैकाग्र्यंसंपाद्यसर्वंब्रह्मेतिज्ञातवानित्यर्थः ॥ १४ ॥ अवतारयत्स्वर्गात्भूमिमानीतवान् ॥
॥ १५ ॥ भागीरथीभगीरथस्यापत्यमिति ॥ १६ ॥

॥ १७ ॥ १८ ॥ ऋतानिपर्णानिअक्षहृदयज्ञानविपर्याविभीतकस्थनलाग्रेप्रदर्शितानियेनसऋतपर्णःनतुऋतुपर्णइतितन्नामाग्रे तत्पुत्रस्यापिआर्तिपर्णिरित्यपत्यंप्रत्ययेनप्रदर्शनात् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ हेपार्थिवर्षभ ॥ २३ ॥ रामस्यप्रपितामहोदिलीपःखड्वांगाख्यदिलीपादन्यः ॥ २४ ॥ दीर्घबाहूरघुरेव ॥२५॥२६॥२७॥निषधात्म



भगीरथसुतोराजाश्रुतइत्यभिविश्रुतः ॥ नाभागस्तुश्रुतस्यासीत्पुत्रःपरमधार्मिकः १७ अंबरीषस्तुनाभागिःसिंधुद्वीपपिताऽभवत् ॥ अयुताजित्तुदायादःसिंधुद्वीपस्यवीर्यवान् १८ अयुताजित्सुतस्त्वासीदृतपर्णोमहायशाः ॥ दिव्याक्षहृदयज्ञोवैराजानलसखोबली १९ ऋतपर्णसुतस्त्वासीदार्त्तपर्णिर्महीपतिः ॥ सुदासस्तस्यतनयोराजात्विंद्रसखोऽभवत् २० सुदासस्यसुतस्त्वासीत्सौदासोनामपार्थिवः ॥ ख्यातःकल्माषपादोवैनाम्नामित्रसहस्तथा २१ कल्माषपादस्यसुतःसर्वकर्मेतिविश्रुतः ॥ अनरण्यस्तुपुत्रोभूद्विश्रुतःसर्वकर्मणः २२ अनरण्यसुतोनिघ्नोनिघ्नपुत्रौबभूवतुः ॥ अनमित्रोरघुश्चैवपार्थिवर्षभसत्तमौ २३ अनमित्रस्यधर्मात्माविद्वान्दुलिदुहोऽभवत् ॥ दिलीपस्तनयस्तस्यरामस्यप्रपितामहः २४ दीर्घबाहुर्दिलीपस्यरघुर्नाम्नाभवत्सुतः ॥ अयोध्यायामहाराजोरघुश्चासीन्महाबलः २५ अजस्तुरघुतोजज्ञेअजाद्दशरथोऽभवत् ॥ रामोदशरथाज्जज्ञेधर्मात्मासुमहायशाः २६ रामस्यतनयोजज्ञेकुशइत्यभिविश्रुतः ॥ अतिथिस्तुकुशाज्जज्ञेनिषधस्तस्यचात्मजः २७ निषधस्यनलःपुत्रोनभःपुत्रोनलस्यतु ॥ नभस्यपुंडरीकस्तुक्षेमधन्वाततःस्मृतः २८ क्षेमधन्वसुतस्त्वासीद्देवानीकःप्रतापवान् ॥ आसीदहीनगुर्नामदेवानीकसुतःप्रभुः २९ अहीनगोसुदायादःसुधन्वानामपार्थिवः ॥ सुधन्वनःसुतश्चैवततोजज्ञेऽनलोनृपः ३० उक्थोनामसधर्मात्माऽनलपुत्रोबभूवह ॥ वज्रनाभःसुतस्तस्यउक्थस्यचमहात्मनः ३१ शंखस्तस्यसुतोविद्वान्ध्युषिताश्वइतिश्रुतः ॥ पुष्पस्तस्यसुतोविद्वान्अर्थसिद्धिस्तुतत्सुतः ३२ सुदर्शनःसुतस्तस्यअग्निवर्णःसुदर्शनात् ॥ अग्निवर्णस्यशीघ्रस्तुशीघ्रस्यतुमरुःसुतः ३३ मरुस्तुयोगमास्थायकलापद्वीपमास्थितः ॥ तस्यासीद्विश्रुतवतःपुत्रोराजाबृहद्बलः ३४ नलौद्वावेवविख्यातौपुराणेभरतर्षभ ॥ वीरसेनात्मजश्चैवयश्चेक्ष्वाकुकुलोद्वहः ३५ इक्ष्वाकुवंशप्रभवाःप्राधान्येनेहकीर्तिताः ॥ एतेविवस्वतोवंशेराजानोभूरितेजसः ३६ पठन्सम्यगिमांसृष्टिमादित्यस्यविवस्वतः ॥ श्राद्धदेवस्यदेवस्यप्रजानांपुष्टिदस्यच ३७

जोनलोवीरसेनसुतान्नलादन्यःनलौद्वावितिवक्ष्यमाणत्वात् ॥ २८ ॥ २९ ॥ अतएवसुधन्वनःसुतइत्यर्थः अनलइतिच्छेदःतृतीयस्यनलस्याभावात् ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

एतिप्राप्नोतिविरजाःनिवृत्तरागः ॥ ३८ ॥ इतिहरिवंशेटीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ इतोग्रेपींद्रकल्पेवैनवाध्यायाःप्रकीर्तिताः ॥ तत्रादौषोडशेध्याये तत्रोपोद्घातउच्यते ॥ १ ॥ एवंवंशानुकीर्तनंश्रुत्वा तत्रप्रागुक्तंयमस्य मनुर्वैवस्वतःपूर्वंश्राद्धदेवःप्रजापतिर्यमश्चेति श्राद्धदेवत्वंवैवस्वतंपितॄणांचयमंराज्येऽभ्यषेचयदितिपितृराज्य त्वंचोक्तम् तत्रकिंतत्श्राद्धंकेचतेपितरइतिपृच्छति कथमित्यादिनाविवस्वतःसुतस्येतिशेषः यमस्यकथंश्राद्धदेवत्वमित्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ पितॄविद्यावंशमा

प्रजावानेतिसायुज्यमादित्यस्यविवस्वतः ॥ विपाप्माविरजाश्चैवआयुष्मांश्चभवत्युत ३८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंश पर्वणिआदित्यस्यवंशाऽनुकीर्तनंनामपंचदशोऽध्यायः १५ ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ कथंवैश्राद्धदेवत्वंआदित्यस्यविवस्व तः ॥ श्रोतुमिच्छामिविप्राग्र्यश्राद्धस्यचपरंविधिम् १ पितृणामादिसर्गंचकएतेपितरःस्मृताः ॥ एवंचश्रुतमस्माभिःकथ्यमानंद्विजाति भिः २ स्वर्गस्थाःपितरोयेचदेवानामपिदेवताः ॥ इतिवेदविदःप्राहुरेतदिच्छामिवेदितुम् ३ येचतेषांगणाःप्रोक्तायच्चतेषांबलंपरम् ॥ यथाचकृतमस्माभिःश्राद्धंप्रीणातिवैपितॄन् ४ प्रीताश्चपितरोयेस्मश्रेयसायोजयंतिहि ॥ एवंवेदितुमिच्छामिपितृणांसर्गमुत्तमम् ५ ॥ वैशंपायनउवाच ॥ हंततेकथयिष्यामिपितृणांसर्गमुत्तमम् ॥ यथाचकृतमस्माभिःश्राद्धंप्रीणातिवैपितॄन् ॥ प्रीताश्चपितरोयेस्मश्रेय सायोजयंतिहि ६ मार्कंडेयेनकथितंभीष्मायपरिपृच्छते ॥ अपृच्छद्धर्मराजोहिशरतल्पगतंपुरा ॥ एवमेवपुराप्रश्नंयन्मांत्वंपरिपृच्छसि ७ तत्तेनुपूर्व्यावक्ष्यामिभीष्मेणोदाहृतंयथा ॥ गीतंसनत्कुमारेणमार्कंडेयायपृच्छते ८ युधिष्ठिरउवाच ॥ पुष्टिकामेनधर्मज्ञकथंपुष्टिरवाप्य ते ॥ एतद्वैश्रोतुमिच्छामिकिंकुर्वाणोनशोचति ९ ॥ भीष्मउवाच ॥ श्राद्धैःप्रीणातिहिपितॄन्सर्वकामफलैस्तुयः ॥ तत्परःप्रयतःश्राद्धी प्रेत्यचेहचमोदते १० पितरोधर्मकामस्यप्रजाकामस्यचप्रजाम् ॥ पुष्टिकामस्यपुष्टिंचप्रयच्छंतियुधिष्ठिर ११ ॥ युधिष्ठिरउवाच ॥ व र्तंतेपितरःस्वर्गेकेषांचिन्नरकेपुनः ॥ प्राणिनांनियतंवापिकर्मजंफलमुच्यते १२ श्राद्धानिचैवकुर्वंतिफलकामाःसदानराः ॥ अभिसंधाय पितरंपितुश्चपितरंतथा १३ पितुःपितामहंचैवत्रिषुपिंडेषुनित्यशः ॥ तानिश्राद्धानिदत्तानिकथंगच्छंतिवैपितॄन् १४

ह हंतेत्यादिना ॥ ६ ॥ सनत्कुमारान्मार्कंडेयोमार्कंडेयात्भीष्मोभीष्माद्धर्मराजइतिमहद्भिःप्रवर्तितत्वात्श्रेष्ठतरेयंविद्येतिभावः ॥ ७ ॥ ८ ॥ ९ ॥ तत्परःपितृप्रीतिपरःश्राद्धी श्राद्धकर्ता ॥ १० ॥ धर्मकामस्यधर्ममितिशेषः ॥ ११ ॥ श्राद्धैः पितॄन्प्रीणातीत्येतदाक्षिपातिवर्ततइतित्रिभिः ॥ १२ ॥ १३ ॥ १४ ॥

पितरोधर्मादीन्मयच्छंतीत्येतदाक्षिपति कथंचेति अन्येनरकादिस्थेभ्यः कान्मातुषान्देवताभूतान्वावयंपितॄन्यजामइतिप्रश्नः ॥ १५ ॥ १६ ॥ १७ ॥ प्रत्यक्षमतिक्रम्यापि शास्त्रोक्तमेवश्राद्धकर्मकर्तव्यमित्याख्यायिकामुखेनप्रश्नोत्तरमवतारयति अत्रेति ॥ १८ ॥ १९ ॥ २० ॥ कल्पेबौधायनादिसूत्रे ॥ २१ ॥ २२ ॥ २३ ॥ व्यवस्थानंनि

कथंचशक्तास्तेदातुंनरकस्थाःफलंपुनः ॥ केवातेपितरान्येस्मकान्यजामोवयंपुनः १५ देवाअपिपितॄन्स्वर्गेयजंतीतिचनःश्रुतं ॥ एत
दिच्छाम्यहंश्रोतुंविस्तरेणमहाद्युते १६ सभवान्कथयत्वेतांकथाममितबुद्धिमान् ॥ यथादत्तंपितॄणांवैतारणायेहकल्पते १७ भीष्मउ
वाच ॥ ॥ अत्रतेकीर्तयिष्यामियथाश्रुतमरिंदम ॥ येचतेपितरोऽन्येस्मयान्यजामोवयंपुनः ॥ पित्राममपुरागीतंलोकांतरगतेनवै १८
श्राद्धकालेममपितुर्मयापिंडःसमुद्यतः ॥ तंपिताममहस्तेनभित्वाभूमिमयाचत १९ हस्ताभरणपूर्णेनकेयूराभरणेनच ॥ रक्तांगुलितले
नाथयथादृष्टःपुरामया २० नैषकल्पेविधिर्दृष्टइतिसंचिंत्यचाप्यहम् ॥ कुशेष्वेवततःपिंडंदत्तवानविचारयन् २१ ततःपितामेसुप्रीतो
वाचामधुरयातदा ॥ उवाचभरतश्रेष्ठप्रीयमाणोमयानघ २२ त्वयादायादवानस्मिकृतार्थोमुत्रचेहच ॥ सत्पुत्रेणत्वयापुत्रधर्मज्ञेनवि
पश्चिता २३ मयातुतवजिज्ञासाप्रयुक्तैषादृढव्रत ॥ व्यवस्थानंतुधर्मेषुकर्तुंलोकस्यचानघ २४ यथाचतुर्थंधर्मस्यरक्षितालभतेफलम्
पापस्यहितथामूढःफलंप्राप्नोत्यरक्षिता २५ प्रमाणंयद्धिकुरुतेधर्माचारेषुपार्थिवः ॥ प्रजास्तदनुवर्त्तंतेप्रमाणाचरितंसदा २६ त्वयाचभ
रतश्रेष्ठवेदधर्माश्चशाश्वताः ॥ कृताःप्रमाणंप्रीतिश्चममनिर्वर्तितातुला २७ तस्मात्तवाहंसुप्रीतःप्रीत्याचवरमुत्तमम् ॥ ददामितं
प्रतीच्छत्वंत्रिषुलोकेषुदुर्लभम् २८ नतेप्रभवितामृत्युर्यावज्जीवितुमिच्छसि ॥ त्वत्तोऽभ्यनुज्ञांसंप्राप्यमृत्युःप्रभवितातव २९ किंवातेप्रा
र्थितंभूयोददामिवरमुत्तमम् ॥ तद्ब्रूहिभरतश्रेष्ठयत्तेमनसिवर्त्तते ३० इत्युक्तवंतंतमहमभिवाद्यकृतांजलिः ॥ अब्रुवंकृतकृत्योहंप्रसन्नेत्वयि
सत्तम ३१ यदित्वनुग्रहंभूयस्त्वत्तोर्हामिमहाद्युते ॥ प्रश्नमिच्छामिवैकिंचिद्व्याहर्तुंभवतास्वयम् ३२ समामुवाचधर्मात्माब्रूहिभीष्मय
दिच्छसि॥ छेत्तास्मिसंशयंसर्वंयन्मांपृच्छसिभारत ३३ अपृच्छंतमहंताततत्रांतर्हितमेवच ॥ गतंसुकृतिनांलोकंकौतूहलसमन्वितः ३४

ष्ठाम् ॥ २४ ॥ चतुर्थंअंशंतथाचतुर्थमेवांशम् ॥ २५ ॥ प्रमाणाचरितंधर्मेप्रमाणभूतस्यराज्ञआचरितं ॥ २६ ॥ २७ ॥ प्रतीच्छप्रतिगृह्राण ॥ २८ ॥ २९ ॥ ३० ॥ ३१ व्याहर्तंउक्तं ॥ ३२ ॥ ३३॥ ३४ ॥

श्रूयंतइतिकर्मणापितृलोकोविद्ययादेवलोकइतिश्रुतेःब्रह्मलोकादर्वाचीनाः लोकाःपितृलोकाइत्युच्यंतेदेवलोकपदेनब्रह्मलोकः एवंतदुभयप्रापकौमार्गौचपितृयानदेवयानौ तत्र
स्वर्लोकस्थानांदेवानांतदूर्ध्वलोकत्रयगताः पितरोदेवतात्वेनमान्याःइतिगम्यते देवाःपितरःपितरोदेवाइतिदेवानांपितॄणांचाभेदोपिश्रूयतेअन्येजनकादयोमृतास्तेभ्योनिकृष्टाःपितरः
इत्युच्यंतइतित्रेधासंशयेवयंकान्यजामहइतिप्रश्नः॥ ३५ ॥ तत्रपित्रादीनांदेवताभावंप्राप्यस्वर्गादूर्ध्वस्थानेस्थितान्दत्तंश्राद्धंप्रीणातु लोकांतरगतांस्तुतान्कथंप्रीणयेदितिपृच्छतिकथंमि
ति ॥ ३६ ॥ कानितियद्यधःस्थाःपितरःकथंतर्हितान्देवाद्यायजेरन् यद्युपरिस्थास्तर्हिकथमस्मदादयोऽल्पपुण्यास्तत्रगच्छेरन्ततःपक्षद्वयेपिश्राद्धदानंव्यर्थमित्याक्षेपाभिप्रायः

॥ भीष्मउवाच ॥ श्रूयंतेपितरोदेवादेवानामपिदेवताः ॥ देवाश्चपितरोन्येवाकान्यजामोवयंपुनः ३५ कथंचदत्तमस्माभिःश्राद्धंप्रीणा
त्यथोपितॄन् ॥ लोकांतरगतांस्तातकिन्नुश्राद्धस्यवाफलम् ३६ कान्यजंतिस्मलोकावैसदेवनरदानवाः ॥ सयक्षोरगगंधर्वाःसकिन्नरमहो
रगाः ३७ अत्रमेसंशयस्तीव्रःकौतूहलमतीवच ॥ तद्ब्रूहिममधर्मज्ञसर्वज्ञोह्यसिमेमतः ॥ एतच्छ्रुत्वावचस्तस्यभीष्मस्योवाचवैपिता ३८
॥ शंतनुरुवाच ॥ संक्षेपेणैवतेवक्ष्येयन्मांपृच्छसिभारत ॥ पितरश्चयथोद्भूताःफलंदत्तस्यचानघ ३९ पितॄणांकारणंश्राद्धेशृणुसर्वंसमा
हितः ॥ आदिदेवसुतास्तातपितरोदिविदेवताः ४० तान्यजंतिस्मवैलोकाःसदेवासुरमानुषाः ॥ सयक्षोरगगंधर्वाःसकिंनरमहोर
गाः ४१ आप्यायिताश्चतेश्राद्धैःपुनराप्याययंतिच ॥ जगत्सदेवगंधर्वमितिब्रह्मानुशासनम् ४२ तान्यजस्वमहाभागश्राद्धैरग्र्यैरतंद्रि
तः ॥ तेतेश्रेयोविधास्यंतिसर्वकामफलप्रदाः ४३ त्वयाचाराध्यमानास्तेनामगोत्रादिकीर्त्तनैः ॥ अस्मानाप्याययिष्यंतिस्वर्गस्थान
पिभारत ४४ मार्कंडेयस्तुतेशेषमेतत्सर्वंप्रवक्ष्यति ॥ एषवैपितृभक्तश्चविदितात्माचभारत ४५ उपस्थितश्चश्राद्धेद्यममैवानुग्रहायवै ॥
एनंपृच्छमहाभागमित्युक्त्वांतरधीयत ४६ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिश्राद्धकल्पप्रसंगोनामषोडशोऽध्यायः ॥
॥ १६ ॥ ॥ ६ ॥ ॥ भीष्मउवाच ॥ ॥ ततोहंतस्यवचनान्मार्कण्डेयंसमाहितः ॥ प्रश्नंतमेवान्वपृच्छंयन्मेपृष्टःपुरापिता १

॥ ३७ ॥ ३८ ॥ ३९ ॥ आदिदेवसुताः ब्रह्मणः पुत्राः ॥ ४० ॥ ४१ ॥ तेदेवादिभिस्तर्पिताःसंतःजगत्भूरादिलोकान्तत्रस्थांश्चदेवगंधर्वमनुष्यादीनाप्याययंतियोगबले
नतस्माद्यत्रकुत्रस्थितान्पित्रादीन्तएवंश्राद्धीयमन्नादिकंप्रापयंति इष्टंचयजमानायप्रयच्छंति मुक्तेषुतुपितृषुस्वयंतृप्ताःसंतोयजमानमेवत्रिवर्गेणतर्पयंतीत्यर्थः ॥ ४२ ॥ अग्र्यैः मुख्य
कल्पानुष्ठितैः अतंद्रितः अनलसः ॥ ४३ ॥ अस्मान्पित्रादीन् ॥ ४४ ॥ ४५ ॥ ४६ ॥ इतिहरिवंशटीकायांषोडशोऽध्यायः ॥ १६ ॥ उक्तंसप्तदशेऽध्यायेपितृत्वंयुक्तिसं
भवम् ॥ आदिदेवसुतानांचतत्पुत्राणांपरस्परम् ॥ १ ॥ ततोहंमेमया ॥ १ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७॥ ८ ॥ हेनारायण गुणात्मकंमायामयशरीरंतपोवीर्यात्मत्तपःसामर्थ्यात्समुत्पन्नंआविर्भूतमपित्वांअहंतत्वतःकथंविद्यां इतिअहंतंअपृच्छामि तियोजना स्वमतमाहदैवतंहीति ॥ ९ ॥ स्मयमानोगर्वितइव तेत्वयातपः सुचरितंनेतिमामाहेतिशेषः॥ १० ॥ क्षणेनेतिपूर्वंअंगुष्टमात्रोपिक्षणात्महापुरुषलक्षणोऽभूदित्यर्थः

समामुवाचधर्मात्मामार्कंडेयोमहातपाः ॥ भीष्मवक्ष्यामिकात्स्न्येर्नशृणुष्वप्रयतोनघ २ अहंपितृप्रसादाद्वैदीर्घायुष्ट्वमवाप्तवान् ॥ पितृभक्त्यैवलब्धंचप्राग्लोकेपरमंयशः ३ सोऽहंयुगस्यपर्यंतेबहुवर्षसहस्त्रिके ॥ अधिरुह्यगिरिंमेरुंतपोतप्यंसुदुश्चरम् ४ ततःकदाचित्पश्यामिदिवंप्रज्वाल्यतेजसा ॥ विमानंमहदायांतमुत्तरेणगिरेस्तदा ५ तस्मिन्विमानेपर्यंकेज्वलितादित्यसन्निभम् ॥ अपश्यंतत्रचैवाहंशयानंदीप्ततेजसम् ६ अंगुष्ठमात्रंपुरुषमग्नावग्निमिवाहितम् ॥ सोहंतस्मैनमस्कृत्यप्रणम्यशिरसाविभुम् ७ सन्निविष्टंविमानस्थंपाद्यार्घाभ्यामपूजयम्॥ अपृच्छंचैवदुर्धर्षंविद्यामत्वांकथंविभो ८ तपोवीर्यात्समुत्पन्नंनारायणगुणात्मकम्॥ दैवतंह्यसिदेवानामितिमेवर्त्ततेमतिः ९ समामुवाचधर्मात्मास्मयमानइवानघ ॥ नतेतपःसुचरितंयेनमांनावबुध्यसे १० क्षणेनैवप्रमाणंसबिभ्रदन्यदनुत्तमम् ॥ रूपेणनमयाकश्चिद्दृष्टपूर्वःपुमान्कचित् ११॥सनत्कुमारउवाच ॥ ॥ विद्धिमांब्रह्मणःपुत्रंमानसंपूर्वजंविभोः ॥ तपोवीर्यसमुत्पन्नंनाराणगुणात्मकम् १२ सनत्कुमारइतियःश्रुतोदेवेषुवैपुरा ॥ सोऽस्मिभार्गवभद्रंतेकंकामंकरवाणिते १३ येत्वन्येब्रह्मणःपुत्रायवीयांसस्तुतेमम ॥ भ्रातरःसप्तदुर्धर्षास्तेषांवंशाःप्रतिष्ठिताः १४ क्रतुर्वसिष्ठःपुलहःपुलस्त्योत्रिस्तथांगिराः ॥ मरीचिस्तुतथाधीमान्देवगंधर्वसेविताः ॥ त्रीँल्लोकान्धारयंतीमान्देवगंधर्वपूजिताः १५ वयंतुयतिधर्माणःसंयोज्यात्मानमात्मनि ॥ प्रजाधर्मंचकामंचव्यपहायमहामुने १६ यथोत्पन्नस्तथैवाहंकुमारइतिविद्धिमाम्॥ तस्मात्सनत्कुमारेतिनामैतन्मेप्रतिष्ठितं १७ मद्भक्त्यातेतपश्चीर्णंममदर्शनकांक्षया ॥ एषदृष्टोस्मिभवताकंकामंकरवाणिते १८ इत्युक्तवंतंतमहंप्रत्यवोचंसनातनम् ॥ अनुज्ञातोभगवताप्रीयमाणेनभारत १९ ततोहमेनमर्थंवैतमपृच्छंसनातनं ॥ पृष्टःपितृणांसर्गंचफलंश्राद्धस्यचानघ २०



॥ ११ ॥ नारायणस्यगुणः शुद्धंसत्त्वंतदात्मकम् ॥ १२ ॥ हेभार्गवभृगुवंशज ॥ १३ ॥ यवीयांसःकनिष्ठाः ॥ १४ ॥ १५ ॥ वयंत्वितिबहुवचनंसनकादीनंतर्भाव्य ॥ ॥ १६ ॥सनत्निरंतरंकुमारइवरागद्वेषादिशून्यइतिसनत्कुमारपदस्यनिर्वचनमाह यथेति ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

वहुवार्षिकेकथांतेचिरारब्धायाःकथायाअंतेमामुवाच रमेअहंत्वयातुष्यामिप्रश्नेनसंतुष्टोस्मि ॥ २१ ॥ देवानिति तेस्वपितरंउत्सृज्य फलार्थिनइंद्रियप्रीणनाख्यदृष्टफलार्थिनः
॥ २२ ॥ ततोलोकोपितदनुसारोअमुह्यत ॥ २३ ॥ २४ ॥ व्यभिचारःपूज्यपूजातिक्रमः आत्मपूजाचव.युष्माभिः यथैतैरहमवज्ञातएवंएतत्पुत्राअप्येतानशिष्यत्वेनावजानंत्वि
त्याशयेनाह पुत्रानात ॥ २५ ॥ आर्त्तवत्नोचत्वापादनात्पीडिताइवप्रयतात्मानःनिगृहीतचित्ताः ध्यानेनालोच्यप्रायश्चित्तानिशशंसुरित्यर्थः ॥ २६ ॥ तानिचवाङ्मनःकर्मजा
निस्तोत्रेणभक्तिश्रद्धापुरस्कृतेनध्यानेननमस्कारादिक्रिययाचजातानीत्यर्थः ॥ २७ ॥ प्रायइति भोपुत्रकाः यूयंलब्धसंज्ञाःप्राप्तज्ञानाः भवतइतिशेषः कुतःलब्धसंज्ञाः यतः प्रा

चिच्छेदसंशयंभीष्मसतुदेवेश्वरोमम ॥ समामुवाचधर्मात्माकथांतेबहुवार्षिके ॥ रमेत्वयाहंविप्रर्षेशृणुसर्वंयथातथम् २१ देवानसृजतब्र
ह्मामांयक्ष्यंतीतिभार्गव ॥ तमुत्सृज्यतथात्मानंअयजंस्तेफलार्थिनः २२ तेशप्ताब्रह्मणामूढानष्टसंज्ञादिवौकसः ॥ नस्मकिंचिद्विजानंति
ततोलोकोप्यमुह्यत २३ तेभूयःप्रणताःशप्ताःप्रायाचंतपितामहम् ॥ अनुग्रहायलोकानांततस्तानब्रवीदिदम् २४प्रायश्चित्तंचरध्वंवैव्यभि
चारोहिवःकृतः ॥ पुत्रांश्चपरिपृच्छध्वंततोज्ञानमवाप्स्यथ २५ प्रायश्चित्तक्रियार्थंतेपुत्रान्पप्रच्छुरार्त्तवत् ॥ तभ्यस्तेप्रयतात्मानःशशंसु
स्तनयास्तदा २६ प्रायश्चित्तानिधर्मज्ञावाङ्मनःकर्मजानिवै ॥ शंसंतिकुशलानित्यंचक्षुर्भ्यामपिनित्यशः २७ प्रायश्चित्तार्थतत्त्वज्ञाल
ब्धसंज्ञादिवौकसः ॥ गम्यतांपुत्रकाश्चेतिपुत्रैरुक्ताश्चतेतदा २८ अभिशप्तास्तुतेदेवाःपुत्रवाक्येननिंदिताः ॥ पितामहमुपागच्छन्सं
शयच्छेदनायवै २९ ततस्तानब्रवीद्देवोयूयंवैब्रह्मवादिनः ॥ तस्माद्यदुक्तंयुष्माकंतत्तथानतदन्यथा ३० यूयंशरीरकर्त्तारस्तेषांदेवाभवि
ष्यथ ॥ तेतुज्ञानप्रदातारःपितरोवोनसंशयः ३१ अन्योन्यंपितरोयूयंतेचैवेतिनसंशयः ॥ देवाश्चपितरश्चैवतद्बुध्यध्वंदिवौकसः ३२
ततस्तेपुनरागम्यपुत्रानूचुर्दिवौकसः ॥ ब्रह्मणाच्छिन्नसंदेहाःप्रीतिमंतःपरस्परम् ३३ यूयंवैपितरोस्माकंयैर्वयंप्रतिबोधिताः ॥ धर्मज्ञाः
कश्चवःकामःकोवरोवःप्रदीयताम् ३४

यश्चित्तस्यअर्थतत्वंप्रयोजनयाथात्म्यंतदभिज्ञाः तच्चयेभ्योजन्मविद्याचलभ्यतेतेवाङ्मनःकर्मभिर्यष्टव्याइति ॥ २८ गम्यतामित्युक्तास्तेपितामहमुपागच्छन्नितिसंबंधः अभिशप्ताः
पुत्रकाइतिवदद्भिः पुत्रैःपराभूताः संशयस्तुकथमस्मत्पुत्राःसंतोऽस्मान्पुत्राइतिसंबोधयंतीतिएतद्युक्तमयुक्तंवेत्येवंरूपस्तस्यछेदनाय ॥ २९ ॥ ब्रह्मवादिनःयस्तानिविजानात्सपि
तुःपि[illegible]सदिति मंत्रार्थज्ञाःभवंतःअतोयत्तैरुक्तंतत्तथैवनतत्रसंशयःकार्यः यःपुमान्तानिश्रुतिगुह्यानिविजानात्विजानीयात्सपितुःपितासदित्यतेइतिमंत्रपदानामर्थः ॥ ३० ॥
यूयमितिश्लोकत्रयेणदेवाःपितरःपितरोदेवाः इतिमंत्रपादार्थमुपबृंहयति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ श्राद्धैरिति पितरोलौकिकाः युष्माभिर्दिव्यैः पितृभिराप्याय्यमानाःस्वयंचआप्यायिताःसंतः स्वाधिदेवताः सोमंवर्द्धयंति तर्पयंतिछांदोग्येतद्यज्ञक्तंप्रथममाग च्छेत्तद्धोमीयमिति प्राणाग्निहोत्रेआध्यात्मिकदेवतातृप्त्याआधिदैविकदेवतातृप्तेर्दर्शनात् ॥ ३७ ॥ ३८ ॥ ३९ ॥ भावयिष्यंतिवर्द्धयिष्यंति ॥ ४० ॥ ४१ ॥ ४२ ॥ इति हरिवंशेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ सप्तानांपितृमुख्यानांनामस्थानविभेदतः ॥ वर्णनंक्रियतेध्यायेऽष्टादशेसंशयापहं ॥ १ ॥ एवंपितॄणामुत्पत्तिमुक्त्वाते

यदुक्तंचैवयुष्माभिस्तत्तथानतदन्यथा ॥ उक्ताश्चयस्माद्युष्माभिःपुत्रकाइतिवैवयम् ॥ तस्माद्भवंत पितरोभविष्यंतिनसंशयः ३५ यानि ष्ट्वातुपितॄन्श्राद्धैःक्रियाःकाश्चित्करिष्यति ॥ राक्षसादानवानागाःफलंप्राप्स्यंतितस्यतत् ३६ श्राद्धैराप्यायिताश्चैवपितरःसोममव्यय म् ॥ आप्यायमानायुष्माभिर्वर्द्धयिष्यंतिनित्यदा ३७ श्राद्धैराप्यायितःसोमोलोकानाप्याययिष्यति ॥ समुद्रपर्वतवनंजंगमाजंगमैर्वृतं ३८ श्राद्धानिपुष्टिकामाश्चयेकरिष्यंतिमानवाः ॥ तेभ्यःपुष्टिंप्रजाश्चैवदास्यंतिपितरःसदा ३९ श्राद्धेयेचप्रदास्यंतित्रीन्पिंडान्नामगो त्रतः ॥ सर्वत्रवर्तमानांस्तान्पितरःसपितामहान् ॥ भावयिष्यंतिसततंश्राद्धदानेनतर्पिताः ४० एवमाज्ञापितंपूर्वंब्रह्मणापरमेष्ठिना ॥ इति तद्वचनंसत्यंभवत्वद्यदिवौकसः ॥ पुत्राश्चपितरश्चैववयंसर्वेपरस्परम् ४१ ॥ सनत्कुमारउवाच ॥ तएतेपितरोदेवादेवाश्चपितरस्तथा ॥ अ न्योन्यंपितरोह्येतेदेवाश्चपितरश्चह ४२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिसप्तदशोऽध्यायः १७ ॥ ५ ॥ मार्कंडेयउवाच इत्युक्तोहंभगवतादेवदेवेनभास्वता ॥ सनत्कुमारेणपुनःपृष्टवान्देवमव्ययम् १ संदेहममरश्रेष्ठंभगवंतमरिंदमम् ॥ निबोधतन्मेगांगेय निखिलंसर्वमादितः २ कियंतोवैपितृगणाःकस्मिँल्लोकेप्रतिष्ठिताः ॥ वर्त्तंतेदेवप्रवरादेवानांसोमवर्द्धनाः ३ ॥ सनत्कुमारउवाच ॥ स प्तैतेयजतांश्रेष्ठस्वर्गेपितृगणाःस्मृताः ॥ चत्वारोमूर्त्तिमंतश्चत्रयस्तेषाममूर्तयः ४ तेषांलोकंविसर्गंचकीर्त्तयिष्यामितच्छृणु ॥ प्रभावंच महत्त्वंचविस्तरेणतपोधन ५ धर्ममूर्त्तिधरास्तेषांत्रयोयेपरमागणाः ॥ तेषांनामानिलोकांश्चकथयिष्यामितच्छृणु ६

षांगणभेदानाह इत्युक्तइत्यध्यायेनदेवंतमेवसनत्कुमारम् ॥ १ ॥ २ ॥ सोमवर्द्धनाः श्राद्धद्वारा ॥ ३ ॥ चत्वारोगणाः सुकालाः आंगिरसः सुस्वधाः सोमपाश्चेत्येतेमूर्तिमंतः कर्मजादिव्यविग्रहवंतः त्रयःवैराजाः अग्निष्वात्ताः बर्हिषदश्चेति एतेअमूर्ताः कामरूपाः आकाशादपिमहांतःपरमाणुदरेपिप्रविशंतीतितादृशसामर्थ्यवंतः ॥ ४ ॥ ५ ॥ अभ्यार्हि तत्वात्प्रथमंत्रीन्गणानाह धर्मेति ॥ ६ ॥

यत्रयेषुलोकेषुलोकाःविषयाः सनातनाःनित्याविर्भूताः यत्रातीतमनागतंव्यवहितंविप्रकृष्टंचसर्वंवर्तमानंसन्निहितमेवेत्यर्थः भास्वराश्चिन्मात्रशरीराअभौतिकाः विराजस्यप्रजापते
र्मानसाः पुत्राः मनोमात्रशरीराः ॥ ७॥८॥ एतइति येयोगभ्रष्टाःनिर्गुणंब्रह्मअप्राप्य सगुणमात्रशरणाअपिपरवैराग्याभावात्सनातनान्प्रजापतिलोकान्प्राप्यापिप्रजापतिनासह
कल्पांतेमुक्तिमलब्ध्वापुनःकल्पांतरेसनकादिरूपेणब्रह्मवादिरूपेणब्रह्मवादिनोभूत्वाप्रजापतितएवजायंते ॥ ९ ॥ तदनंतरंमुच्यंतइत्याह तेत्विति ॥ १० ॥ ११ ॥ सोमपा
नांसोमंपाययंतिवर्द्धयंतितेसोमपास्तेषांश्राद्धानिददत्तत्सालोक्यंप्राप्यतद्वदेवमुक्तिंप्राप्नोतीत्यर्थः ॥ १२ ॥ एवंस्त्रियोपिअधिकारेसतिश्राद्धंददत्यः पितृकन्यावदुत्तरोत्तरंउत्तमं

लोकाःसनातनानामयत्रतिष्ठंतिभास्वराः ॥ अमूर्त्तयःपितृगणास्तेवैपुत्राःप्रजापतेः ७ विराजस्यद्विजश्रेष्ठवैराजाइतिविश्रुताः ॥ यजं
तितान्देवगणाविधिदृष्टेनकर्मणा ८ एतेवैयोगविभ्रष्टालोकान्प्राप्यसनातनान् ॥ पुनर्युगसहस्रांतेजायंतेब्रह्मवादिनः ९ तेतुप्राप्यस्मृ
तिंभूयःसांख्ययोगमनुत्तमम् ॥ यांतियोगगतिंसिद्धाःपुनरावृत्तिदुर्लभाम् १० एतेस्युःपितरस्तातयोगिनांयोगवर्द्धनाः ॥ आप्याययं
तियेपूर्वंसोमंयोगबलेनच ११ तस्माच्छ्राद्धानिदेयानियोगिनांतुविशेषतः ॥ एषवैप्रथमःसर्गःसोमपानांमहात्मनाम् १२ एतेषांमा
नसीकन्यामेनानाममहागिरेः ॥ पत्नीहिमवतःश्रेष्ठायस्यामैनाकउच्यते १३ मैनाकस्यसुतःश्रीमान्क्रौंचोनाममहागिरिः ॥ पर्वतप्र
वरःपुत्रोनानारत्नसमन्वितः १४ तिस्रःकन्यास्तुमेनायांजनयामासशैलराट् ॥ अपर्णामेकपर्णांचतृतीयामेकपाटलाम् १५ तपश्चरं
त्यःसुमहद्दुश्चरंदेवदानवैः ॥ लोकान्संतापयामासुस्तास्तिस्रःस्थाणुजंगमान् १६ आहारमेकपर्णेनएकपर्णासमाचरत् ॥ पाटलापु
ष्पमेकंचआदधावेकपाटला १७ एकातत्रनिराहारातांमाताप्रत्यषेधयत् ॥ उमाइतिनिषधंतीमातृस्नेहेनदुःखिता १८ सातथोक्तातया
मात्रादेवीदुश्चरचारिणी ॥ उमेत्येवाभवत्ख्यातात्रिषुलोकेषुसुंदरी १९ तथैवनाम्नातेनेहविश्रुतायोगधर्मिणी ॥ एतत्तुत्रिकुमारीकंज
गत्स्थास्यतिभार्गव २० तपःशरीरास्ताःसर्वास्तिस्रोयोगबलान्विताः ॥ सर्वाश्चब्रह्मवादिन्यःसर्वाश्चैवोर्ध्वरेतसः २१ उमातासांवरि
ष्ठाचज्येष्ठाचवरवर्णिनी ॥ महायोगबलोपेतामहादेवमुपस्थिता २२

स्थानंप्राप्यक्रमेणमुच्यंतइत्याशयेनसर्वेषांपितृगणानांप्रत्येकंकन्यासंततिमाह एतेषामिति ॥१३ ॥ १४ ॥ १५ ॥ १६ ॥ पाटलायाः पुष्पंएकमेवादधौस्वीकृतवती ॥ १७॥
उइतिसंबुद्ध्यर्थे ॥ १८ ॥ १९ ॥ तिस्रः कुमार्योयस्मिन्तत्त्रिकुमारीकम् ॥ २० ॥ यथासनत्कुमारादयउर्ध्वरेतसएवंएताअपीत्यर्थः ॥ २१ ॥ पुंसामिवस्त्रीणामूर्ध्वरेतसा
मपिशाश्वतोलोकोनास्तीतितासांपतिवरणेनदर्शयति उमेत्यादिना ॥ २२ ॥

॥ २३ ॥ २४ ॥ द्वितीयमग्निष्वात्ताख्यंगणमाह लोकाइति सोमपदाः सोमयाजिप्राप्याःमरीचेःप्रजापतिपुत्रस्यलोकाः ॥ २५ ॥ अग्निषुअग्निसाध्येषुकर्मसुआत्ताः गृहीता पिच्याादिष्विष्टिषु ॥ २६ ॥ २७ अमूर्तानपिपितृन्दिव्यदृष्ट्यादादर्श दृष्ट्वापिएतेममपितरइतिनज्ञातवती ॥ २८ ॥ व्रीडितातेषांविशेषतःस्वरूपाज्ञानात् ॥ २९ ॥ ३० ॥ व्यभिचारेणस्वपित्रातिक्रमेण ॥ ३१ ॥ ३२ ॥ सुसूक्ष्मान्त्रसरेणुप्रमाणानामपिविमानानामेकदेशेस्थितत्वात् अतएवअपरिव्यक्तानग्नीन्निर्मथ्यान् अग्निषुआहवनोयेषुआहि

/ असितस्यैकपर्णातुदेवलस्यमहात्मनः ॥ पत्नीदत्तामहाब्रह्मन्योगाचार्यायधीमते २३ जैगीषव्यायतुतथाविद्धितामेकपाटलाम् ॥ एतेचापिमहाभागेयोगाचार्यावुपस्थिते २४ लोकाःसोमपदानाममरीचेर्यत्रवैसुताः ॥ पितरोयत्रवर्ततदेवास्तान्भावयंत्युत २५ अग्निष्वात्ताइतिख्याताःसर्वएवामितौजसः॥ एतेषांमानसीकन्याअच्छोदानामनिम्नगा २६ अच्छोदंनामविख्यातंसरोयस्याःसमुत्थितम्॥ तयानदृष्टपूर्वास्तेपितरस्तुकदाचन २७ अप्यमूर्त्तानथपितृन्साददर्शशुचिस्मिता ॥ संभूतामनसातेषांपितृन्स्वान्नाभिजानती २८ व्रीडितातेनदुःखेनबभूववरवर्णिनी ॥ सादृष्ट्वापितरंवव्रेवसुंनामांतरिक्षगम् २९ अमावसुरितिख्यातमायोःपुत्रंयशस्विनम् ॥ अद्रिकाप्सरसायुक्तंविमानेधिष्ठितंदिवि ३० सातेनव्यभिचारेणमनसःकामरूपिणी ॥ पितरंप्रार्थयित्वान्यंयोगभ्रष्टापपातह ३१ त्रीण्यपश्यद्विमानानिपतमानादिवश्च्युता ॥ त्रसरेणुप्रमाणानिसापश्यत्तेषुतान्पितॄन् ३२ सुसूक्ष्मानपरिव्यक्तानग्नीनाग्निष्विवाहितान् ॥ त्रायध्वमित्युवाचार्त्तापतंतीतानवाक्शिराः ३३ तैरुक्तासातुमाभैषीरितिव्योम्निव्यवस्थिता ॥ ततःप्रसादयामासतान्पितॄन्दीनयागिरा ३४ ऊचुस्तेपितरःकन्यांभ्रष्टैश्वर्यांव्यतिक्रमात् ॥ भ्रष्टैश्वर्यास्वदोषेणपतसित्वंशुचिस्मिते ३५ यैःक्रियंतेहिकर्माणिशरीरैर्दिविदैवतैः ॥ तैरेवतत्कर्मफलंप्राप्नुवंतीहदेवताः ३६ सद्यःफलंतिकर्माणिदेवत्वेप्रेत्यमानुषे॥ तस्मात्त्वंतपसःपुत्रिप्रेत्येदंप्राप्स्यसेफलं ३७ इत्युक्तापितृभिःसातुपितॄन्प्रासादयत्स्वकान्॥ध्यात्वाप्रसादंतेचक्रुस्तस्याःसर्वेनुकंपया ३८ अवश्यंभाविनंज्ञात्वातेर्थमूचुस्ततस्तुतां ॥ अस्यराज्ञोवसोःकन्यात्वमपत्यंभविष्यसि ३९ उत्पन्नस्यपृथिव्यांतुमानुषेषुमहात्मनः ॥ कन्याचभूत्वालोकान्स्वान्पुनःप्राप्स्यसिदुर्लभान् ४० पराशरस्यदायादंत्वंपुत्रंजनयिष्यसि ॥ सवेदमेकंब्रह्मर्षिश्चतुर्द्धाविभजिष्यति ४१

तान्चातुर्मास्येषुसोमेआतिथ्येऽष्टौच ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ सद्यःसंकल्पमात्रात्कर्माणियोगजधर्मःदेवत्वेतैजसदेहप्राप्तौसत्याम् मानुषेतुकर्मानंतरंप्रेत्यमृत्वाकर्माणि फलंति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

महाभिषस्यप्राग्जन्मनि तस्यैवशंतनुरूपेणावतीर्णस्य ॥ ४२ ॥ इयंकथाआदिपर्वणिअनुसंधेया ॥ ४३ ॥ ४४ ॥ ४५ ॥ तृतीयंगणमाह वैभ्राजाइति विभ्राजःसूर्यस्येमेवैभ्राजाःवर्हिषदइतिकेवलंइष्टियायजूकप्राप्याः ॥ ४६ ॥ ४७ ॥ ४८ ॥ पीवर्याएवविशेषणानियोगाचेत्यादीनियोगास्त्रयंयोगिनोयोगिनःपत्नीयानोमाताचेति ॥ ४९ ॥ ५० ॥

महाभिषस्यपुत्रौद्वौशंतनोःकीर्तिवर्द्धनौ ॥ विचित्रवीर्यंधर्मज्ञंतथाचित्रांगदंशुभम् ४२ एतानुत्पाद्यपुत्रांस्त्वंपुनर्लोकानवाप्स्यसि ॥ व्यतिक्रमात्पितृणांचजन्मप्राप्स्यसिकुत्सितम् ४३ अस्यैवराज्ञःकन्यात्वमद्रिकायांभविष्यसि ॥ अष्टाविंशेभवित्रीत्वंद्वापरेमत्स्ययोनिजा ४४ एवमुक्तातुदाशेयीजातासत्यवतीतदा ॥ मत्स्ययोनौसमुत्पन्नाराज्ञस्तस्यवसोःसुता ४५ वैभ्राजानामतेलोकादिविसंतिसुदर्शनाः ॥ यत्रबर्हिषदोनामपितरोदिविविश्रुताः ४६ तान्वैदेवगणाःसर्वेयक्षगंधर्वराक्षसाः ॥ नागाःसर्पाःसुपर्णाश्चभावयंत्यमितौजसः ४७ एतेपुत्रामहात्मानःपुलस्त्यस्यप्रजापतेः ॥ महात्मनोमहाभागास्तेजोयुक्तास्तपस्विनः ४८ एतेषांमानसीकन्यापीवरीनामविश्रुता ॥ योगाचयोगिपत्नीचयोगिमातातथैवच ४९ भवित्रीद्वापरंप्राप्ययुगंधर्मभृतांवरा ॥ पराशरकुलोद्भूतःशुकोनाममहातपाः ५० भविष्यतियुगेतस्मिन्महायोगीद्विजर्षभः ॥ व्यासादरण्यांसंभूतोविधूमोग्निरिवज्वलन् ५१ सतस्यांपितृकन्यायांपीवर्यांजनयिष्यति ॥ कन्यांपुत्रांश्चचतुरोयोगाचार्यान्महाबलान् ५२ कृष्णंगौरंप्रभुंशंभुंकृत्वींकन्यांतथैवच ॥ ब्रह्मदत्तस्यजननींमहिषींत्वणुहस्य च ५३ एतानुत्पाद्यधर्मात्मायोगाचार्यान्महाव्रतान् ॥ श्रुत्वास्वजनकाद्धर्मान्व्यासादमितबुद्धिमान् ५४ महायोगीततोगंतापुनरावर्तिनींगतिम् ॥ यत्तत्पदमनुद्विग्नमव्ययंब्रह्मशाश्वतम् ५५ अमूर्तिमंतःपितरोधर्ममूर्तिधरामुने ॥ कथायत्रेयमुत्पन्नावृष्ण्यंधककुलान्वया ५६ सुकालानामपितरोवसिष्ठस्यप्रजापतेः ॥ निरतादिविलोकेषुज्योतिर्भासिषुभासुराः ॥ सर्वकामसमृद्धेषुद्विजास्तान्भावयंत्युत ५७ तेषांवैमानसीकन्यागौर्नाम्नादिविविश्रुता ॥ तवैववंशेयादत्ताशुकस्यमहिषीप्रिया ॥ एकशृंगेतिविख्यातासाध्यानांकीर्तिवर्द्धिनी ५८ मरीचिगर्भास्ताँल्लोकान्समाश्रित्यव्यवस्थिताः ॥ येत्वथांगिरसःपुत्राःसाध्यैःसंवर्द्धिताःपुरा ५९ तान्क्षत्रियगणांस्तातभावयंतिफलार्थिनः ॥ तेषांतुमानसीकन्यायशोदानामविश्रुता ६०

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ अमूर्तिमंतइत्यादिना ॥ ५६ ॥ देवपूज्यांस्त्रीन्गणान्व्याख्याय मनुष्यपूज्येषुमूर्तेषुचतुर्षुगणेषुप्रथममाह सुकालाइति द्विजाःब्राह्मणाःभावयंतितर्पयंति ॥ ५७ ॥ तवैववंशेइतिमार्कंडेयस्यभीष्मंप्रतिवचनंशुकस्येयंअपराभार्या ॥ ५८ ॥ द्वितीयमाह मरीचिगर्भान्सूर्यरश्मिप्रकाशयान् ॥ ५९ ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ शांडिल्यस्यशांडिल्यगोत्रोत्पन्नस्य ॥ ६३ ॥ तृतीयंगणमाह सुस्वधाइति कर्दमस्यापितरःपुलहात्समुत्पन्नाः ॥ ६४ ॥ दिविआकाशे ॥ ६५ ॥ ६६ ॥ कवेर्दुहितरिस्वधायांहिरण्यगर्भस्याग्नेःसुताः ॥ ६७ ॥ ६८ ॥ भावयतिपुनाति ॥ ६९ ॥ तेषांपितॄणांअभ्युपगमात्पूज्यत्वेनांगीकारात् ॥ ७० ॥ अत्रैवहेतुमाह पितृणामि



ति सर्वेषांसप्तानामपिगणानांआदिसर्गेणप्रथममुत्पन्नत्वेनेत्यर्थः तस्मात्एवंयमंतेश्राद्धदेवंवदंति अयंभावः यमःपितृणामधिपतिरितिश्रुतेःस्वधर्मेणयमपितृत्वरूपेणहेतुनासर्वश्राद्ध देवताधिपतित्वादयमेवश्राद्धदेवइति एनमितिवुद्धौसन्निहितस्यान्वादेशेनानिर्देशः यतोयंपितृणामादिसर्गस्तस्मादेनंयमंश्राद्धदेवमितिवदंतिवेदाउदाहृताइति ॥ ७१ ॥ स्वधांपुरो धायस्वधाशब्दंपूर्वंकृत्वास्वधापितृभ्यइत्येवंमंत्रेणेत्यर्थः ॥ ७२ ॥ सोमस्येति अग्नौसोमस्यअग्नेर्वैवस्वतस्ययमस्यआप्यायनंकृत्वा सोमायपितृमतेस्वधानमोऽग्नयेकव्यवाहनाय

पत्नीसाविश्वमहतःस्नुषावैवृद्धशर्मणः ॥ राजर्षेर्जननीचापिदिलीपस्यमहात्मनः ६१ तस्ययज्ञेपुरागीतागाथाःप्रीतैर्महर्षिभिः ॥ तदा देवयुगेतातवाजिमेधेमहामखे ६२ अग्नेर्जन्मतथाश्रुत्वाशांडिल्यस्यमहात्मनः ॥ दिलीपंयजमानंयेपश्यंतिसुसमाहिताः ॥ सत्यवंतंम हात्मानंतेपिस्वर्गजितोनराः ६३ सुस्वधानामपितरःकर्दमस्यप्रजापतेः ॥ समुत्पन्नास्तुपुलहान्महात्मानोद्विजर्षभाः ६४ लोकेषुदिवि वर्ततेकामगेषुविहंगमाः ॥ तांश्चवैश्यगणांस्तातभावयंतिफलार्थिनः ६५ तेषांवैमानसीकन्याविरजानामविश्रुता ॥ ययातेर्जननीब्रह्म न्महिषीनहुषस्यच ६६ त्रयएतेगणाःप्रोक्ताश्चतुर्थंतुनिबोधमे ॥ उत्पन्नायेस्वधायांतेसोमपावैकवेःसुताः ॥ हिरण्यगर्भस्यसुताःशूद्रा स्तान्भावयंत्युत ६७ मानसानामतेलोकायत्रतिष्ठंतितेदिवि ॥ तेषांवैमानसीकन्यानर्मदासरितांवरा ६८ याभावयतिभूतानिदक्षि णापथगामिनी ॥ पुरुकुत्सस्ययापत्नीत्रसदस्योर्जनन्यपि ६९ तेषामथाभ्युपगमान्मनुस्तातयुगेयुगे ॥ प्रवर्तयतिश्राद्धानिनष्टेधर्मेप्रजा पतिः ७० पितृणामादिसर्गेणसर्वेषांद्विजसत्तम ॥ तस्मादेनंस्वधर्मेणश्राद्धदेवंवदंतिवै ७१ सर्वेषांराजतंपात्रमथवारजतान्वितम् ॥ दत्तंस्वधांपुरोधायश्राद्धंप्रीणातिवैपितॄन् ७२ सोमस्याप्यायनंकृत्वाअग्नेर्वैवस्वतस्यच ॥ उदगायनमप्यग्नावग्न्यभावेऽप्सुवापुनः ७३

स्वधानमोयमायांगिरसेस्वधानमइतिस्वधांपुरोधायतिस्रआहुतीर्हुत्वेत्यर्थः हुत्वापितॄन्प्रीणातीत्यग्रिमेणान्वयः वैवस्वतस्यचेतिचकारःतृतीयाहुतेर्विकल्पार्थःअतएवाश्वलायना नांसानास्त्येव अपिशब्दोवाऽर्थेउदगायनमप्यत्रकर्तव्यंस्वधामंत्रेणहोमेदक्षिणापवर्गाआहुतीर्दद्यात्स्वाहामंत्रेणहोमेतुउदगपवर्गेअप्याहुतीभवतः यदाहाश्वलायनः सोमायपितृ मतेस्वधानमोऽग्नयेकव्यवाहनायस्वधानमइतिस्वाहाकारेणाग्निंपूर्वमितिउदगायनपदादेवात्रस्वाहांतपक्षोपिसूचितःदैर्घ्यंआर्षं आकारप्रश्लेषजंवाअग्न्यभावेऽप्सुइतिच्छेदः एतच्च तीर्थेएवज्ञेयम्वापुनःपुनरत्रपक्षांतरमस्तीत्यर्थः अग्निमुखावैदेवाःपाणिमुखाःपितरइतिब्राह्मणात्ब्राह्मणपाणावपिहोतव्यमितिज्ञेयम् ॥ ७३ ॥ ३०

॥ ७४ ॥ ७५॥ देवतानामपेक्षयापितरःपूर्वंआप्यायनेनप्रीतिकराइत्यर्थःशीघ्रेति देवाश्चिरप्रसादाइतिदुराराध्याइतिभावः ॥ ७६॥ भार्गवेतिमार्कंडेयंसंबोधयति सनत्कुमारः ॥
॥ ७७ सविज्ञानंआनुभविकज्ञानोपेतम् ॥ ७८ ॥ एतांश्राद्धफलरूपांनिशामयपश्यमांसचक्षुषानाहिदृश्यतइतिसंबंधः ॥ ७९ ॥ एवमुक्त्वाचक्षुर्दत्त्वाजगामेतिद्वयोःसंबंधः ॥
॥ ८० ॥ ८१ ॥ निशामितंचक्षुर्दानात्प्राक्तन्मुखेनश्रुतंतत्तन्निबोधबुध्यस्व ॥ ८२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहारिवंश०टी०अष्टादशोऽध्यायः ॥ १८ ॥
दिव्यंज्ञानंसमासाद्यमार्कंडेयोनुभूतवान् ॥ यत्तदेकोनविंशेत्रवर्ण्यतेतद्दशासता ॥ १ ॥ अत्रइत्युक्त्वाभगवान्देवइत्युपसंहारात्सनत्कुमारवाक्यमेवमार्कंडेयउवाचआसन्नित्य।

पितॄन्प्रीणातियोभक्त्यापितरःप्रीणयंतितम् ॥ यच्छंतिपितरःपुष्टिंप्रजाश्चविपुलास्तथा ७४ स्वर्गमारोग्यमेवाथयदन्यदपिचेप्सितम् ॥ देवकार्यादपिमुनेपितृकार्यंविशिष्यते ७५ देवतानांहिपितरःपूर्वमाप्यायनंस्मृतम् ॥ शीघ्रप्रसादाह्यक्रोधालोकस्याप्यायनंपरम् ७६ ॥ स्थिरप्रसादाश्चसदातान्नमस्यस्वभार्गव ॥ पितृभक्तोसिविप्रर्षेमद्भक्तश्चविशेषतः ७७ श्रेयस्तेद्यविधास्यामिप्रत्यक्षंकुरुतत्स्वयम् ॥ दिव्यंचक्षुःसविज्ञानंप्रदिशामिचतेऽनघ ७८ गतिमेतामप्रमत्तोमार्कंडेयनिशामय ॥ नहियोगगतिर्दिव्यापितृणांचपरागतिः ७९ त्व द्विधेनापिसिद्धेनदृश्यतेमांसचक्षुषा ॥ सएवमुक्त्वादेवेशोमामुपस्थितमग्रतः ८० चक्षुर्दत्त्वासविज्ञानंदेवानामपिदुर्लभम् ॥ जगा मगतिमिष्टांवैद्वितीयोग्निरिवज्वलन् ८१ तन्निबोधकुरुश्रेष्ठयन्मयासीन्निशामितम् ॥ प्रसादात्तस्यदेवस्यदुर्ज्ञेयंभुविमानुषैः ८२ इति श्रीमहाभारतेखिलेषुहरिवंशेह०पर्वणिअष्टादशोऽध्यायः ॥ १८ ॥ ७ ॥ ॥ मार्कंडेयउवाच ॥ ॥ आसन्पूर्वयुगेतातभरद्वाजात्मजाद्वि जाः ॥ योगधर्ममनुप्राप्यभ्रष्टादुश्चरितेनवै १ अपभ्रंशमनुप्राप्तायोगधर्मोपचारिणः ॥ महतःसरसःपारेमानसस्यविसंज्ञिताः २ त मेवार्थमनुध्यातोनष्टमप्स्विवमोहिताः ॥ अप्राप्ययोगंतेसर्वेसंयुक्ताःकालधर्मणा ३ ततस्तेयोगविभ्रष्टादेवेषुसुचिरोषिताः ॥ जाताः कौशिकदायादाःकुरुक्षेत्रेनरर्षभाः ४ हिंसयाविहरिष्यंतोधर्मंपितृकृतेनवै ॥ ततस्तेपुनराजातिंभ्रष्टाःप्राप्स्यंतिकुत्सिताम् ५ तेषांपि तृप्रसादेनपूर्वजातिकृतेनवै ॥ स्मृतिरुत्पत्स्यतेप्राप्यतांतांजातिंजुगुप्सिताम् ६

दिदुश्चरितेनयोगविरोधिनाकर्मणा ॥ १ ॥ सरसःपारेअपभ्रंशंअनुप्राप्ताःपतिताः ॥ २ ॥ अनुध्यातः अनुध्यायंतः योगंयोगसिद्धिम् कालधर्मणामृत्युना ॥ ३ ॥ ततइतियो गभ्रष्टाःदेवलोकमेवगच्छंतिनत्वन्यांगतिमितिभावः ॥ ४ ॥ हिंसयेतिपितृकृतेपित्रर्थंधर्मंउद्दिश्यहिंसयाविहरिष्यंतइतिश्राद्धव्यपदेशेनब्राह्मणाअपिहिंसावृत्त्याजीवंतइत्यर्थः ततएवपापांतेकुत्सितांआजातिंजन्मप्राप्स्यंति ॥ ५ ॥ तेषामिति पित्राराधनप्रभावात्तेनीचजातयोपिजातिस्मराअभूवन्नित्यर्थः ॥ ६ ॥

जातिस्मरत्वादेवधर्मपराअपिजाताः ब्राह्मण्यंचजन्मांतरेलब्धवंतइत्याह ततइति ॥७॥८॥ तेतवमार्कंडेयस्य॥९॥योगोयोगसिद्धिः व्यसनैर्मृगयादिभिः कटुतांक्रूरत्वंइताःप्राप्ताः गुरुद्रोहिणश्चैनंयोगंप्राप्यापिनाशयंतीतिसंबंधः॥१०॥येअयाच्यानिदारादीनिनयाचंतेतेयोगंप्राप्नुवंतीतिपंचमस्थेनान्वयः एवंसर्वत्रयोज्यं॥११॥नष्टानुगवेषिणः नष्टद्रव्यादिसाधनार्थचोरान्वेषणपराः ॥ १२ ॥ १३ ॥ अनार्यसंकथाग्राम्यगोष्ठी गोष्ठीषुआत्ममीमांसासु ॥ १४॥ १५ ॥ एवंविधाउक्तप्रकाराः ॥ १६ ॥ १७ ॥ १८ ॥ कालस्यपरि

तेधर्मचारिणोनित्यंभविष्यंतिसमाहिताः ॥ ब्राह्मण्यंप्रतिलप्स्यंतिततोभूयःस्वकर्मणा ७ ततश्चयोगंप्राप्स्यंतिपूर्वजातिकृतंपुनः ॥ भूयः सिद्धिमनुप्राप्ताःस्थानंप्राप्स्यंतिशाश्वतम् ८ एवंधर्मेचतेबुद्धिर्भविष्यतिपुनःपुनः ॥ योगधर्मेचनितरांप्राप्स्यसेबुद्धिमुत्तमाम् ९ योगोहिदुर्लभोनित्यमल्पप्रज्ञैःकदाचन ॥ लब्ध्वापिनाशयंत्येनंव्यसनैःकटुतामिताः ॥ अधर्मेष्वेववर्ततेप्रार्दयंतेगुरूनपि १० याचंतेनत्वयाच्यानिरक्षंतिशरणागतान् ॥ नावजानंतिकृपणान्माद्यंतेनधनोष्मणा ११ युक्ताहारविहाराश्चयुक्तचेष्टाःस्वकर्मसु ॥ ध्यानाध्ययनयुक्ताश्चननष्टानुगवेषिणः १२ नोपभोगरतानित्यंनमांसमधुभक्षणाः ॥ नचकामपरानित्यंनविप्राऽसेविनस्तथा १३ नाऽनार्यसंकथासक्तानालस्योपहतास्तथा ॥ नात्यंतमानसंसक्तागोष्ठीष्वनिरतास्तथा १४ प्राप्नुवंतिनरायोगंयोगोवैदुर्लभोभुवि ॥ प्रशांताश्चजितक्रोधामानाहंकारवर्जिताः १५ कल्याणभाजनंयेतुतेभवंतियतव्रताः ॥ एवंविधास्तुतेतातब्राह्मणाह्यभवंस्तदा १६ स्मरंतिह्यात्मनोदोषंप्रमादकृतमेवतु ॥ ध्यानाध्ययनयुक्ताश्चशांतेवर्त्मनिसंस्थिताः १७ योगधर्माद्धिधर्मज्ञनधर्मोऽस्तिविशेषवान् ॥ वरिष्ठः सर्वधर्माणांतमेवाचरभार्गव १८ कालस्यपरिणामेनलघ्वाहारोजितेंद्रियः ॥ तत्परःप्रयतःश्राद्धीयोगधर्ममवाप्स्यसि १९ इत्युक्त्वाभगवान्देवस्तत्रैवांतरधीयत ॥ अष्टादशैववर्षाणित्वेकाहमिवमेभवत् २० उपासतस्तंदेवेशंवर्षाण्यष्टादशैवमे ॥ प्रसादात्तस्यदेवस्यनग्लानिरभवत्तदा २१ नक्षुत्पिपासेकालंवाजानामिस्मतदानघ ॥ पश्चाच्छिष्यसकाशात्तुकालःसंविदितोमया २२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिपितृकल्पेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

णामेनकालक्रमेणश्राद्धीश्रद्धावान् ॥ १९ ॥ इत्युक्त्वेतिमार्कंडेयवाक्यम् ॥ २० ॥ उपासतस्तंदेवेशमितिपादःपूर्वेणसंबध्यते अष्टादशवर्षाणिमेग्लानिर्नाभवदित्युत्तरेणान्वयः ॥ २१ ॥ २२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिटीकायांएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

विंशेत्रवर्ण्यतेब्रह्मदत्तउग्रायुधस्तथा ॥ पूजनीयकथाशुक्रप्रोक्तानीतिरनुत्तमा ॥ १ ॥ तस्मिन्निति ॥ १ ॥ तान्पूर्वंभरद्वाजदायादान्सतःद्वितीयेजन्मानिकुरुक्षेत्रेकौशिकात्मजा
नूअपश्यम् आपगेयहेभीष्मविभुःसनत्कुमारः ॥ २ ॥ तेषांकुशिकात्मजानांयःसप्तमोद्विजःपितृवर्तीनामसएवसप्तमेजन्मनिब्रह्मदत्तोऽभवत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ तेषां
भारद्वाजानाम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ प्रतीपस्येतिद्वयोःसंबंधः ॥ ११ ॥ १२ ॥ सखाआसेतिपदच्छेदःआसीदित्यर्थःशिक्षांवेदांगंक्रमःसंहितायाः पदानांचसहपा

मार्कंडेयउवाच ॥ तस्मिन्नंतर्हितेतदेववचनात्तस्यवैप्रभोः ॥ चक्षुर्दिव्यंसविज्ञानंप्रादुरासीत्तदामम १ ततोहंतानपश्यंवैब्राह्मणान्कौशि
कात्मजान् ॥ आपगेयकुरुक्षेत्रेयानुवाचविभुर्मम २ ब्रह्मदत्तोभवद्राजायस्तेषांसप्तमोद्विजः ॥ पितृवर्तीतिविख्यातोनाम्नाशीलेनकर्म
णा ३ शुकस्यकन्याकृत्वीतंजनयामासपार्थिवम् ॥ अणुहात्पार्थिवश्रेष्ठात्कांपिल्येनगरोत्तमे ४ ॥ भीष्मउवाच ॥ यथोवाचमहाभागो
मार्कंडेयोमहातपाः ॥ तस्यवंशमहंराजन्कीर्तयिष्यामितच्छृणु ५ ॥ युधिष्ठिरउवाच ॥ अणुहःकस्यवैपुत्रःकस्मिन्कालेबभूवह ॥ रा
जाधर्मभृतांश्रेष्ठोयस्यपुत्रोमहायशाः ६ ब्रह्मदत्तोनरपतिःकिंवीर्यःसबभूवह ॥ कथंचसप्तमस्तेषांसबभूवनराधिपः ७ नह्यल्पवी
र्यायशुकोभगवाँल्लोकपूजितः ॥ कन्यांप्रादाद्धयोगात्माकृत्वींकीर्तिमतींप्रभुः ८ एतदिच्छाम्यहंश्रोतुंविस्तरेणमहाद्युते ॥ ब्रह्मदत्तस्य
चरितंतद्भवान्वक्तुमर्हति ९ यथाचवर्तमानास्तेसंसारेचद्विजातयः ॥ मार्कंडेयेनकथितास्तद्भवान्प्रब्रवीतुमे १० ॥ ॥ भीष्मउवाच ॥
प्रतीपस्यतुराजर्षेस्तुल्यकालोनराधिपः ॥ पितामहस्यमेराजन्बभूवेतिमयाश्रुतम् ११ ब्रह्मदत्तोमहाभागोयोगीराजर्षिसत्तमः ॥
ऋतज्ञःसर्वभूतानांसर्वभूतहितेरतः १२ सखासगालवोयस्ययोगाचार्योमहायशाः ॥ शिक्षामुत्पाद्यतपसाक्रमोयेनप्रवर्तितः ॥ कंडरी
कश्चयोगात्मातस्यैवसचिवोमहान् १३ जात्यंतरेषुसर्वेषुसखायःसर्वएवते ॥ सप्तजातिषुसप्तैवबभूवुरमितौजसः ॥ यथोवाचमहा
भागोमार्कंडेयोमहातपाः १४ तस्यवंशमहंराजन्कीर्तयिष्यामितच्छृणु ॥ ब्रह्मदत्तस्यपौराणांपौरवस्यमहात्मनः १५ बृहत्क्षत्रस्यदा
यादःसुहोत्रोनामधार्मिकः ॥ सुहोत्रस्यापिदायादोहस्तीनामबभूवह १६ तेनेदंनिर्मितंपूर्वंहस्तिनापुरमुत्तमम् ॥ हस्तिनश्चापिदा
यादास्त्रयःपरमधार्मिकाः १७

ठः ॥ अन्नाद्यकामोनिर्भुजंब्रूयात्स्वर्गकामःप्रतृणमुभयकामउभयमंतरेणेतिश्रुतिप्रसिद्धएवपूर्वैरज्ञानादप्रवर्तितःसन्गालवेनप्रवर्तितइत्यर्थः तस्यब्रह्मदत्तस्य ॥ १३ ॥ सप्तजा
तिषुसप्तसुजन्मसुतेसप्तपरस्परंसहायाबभूवुरितिसंबंधः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

३२ अजमीढोद्विमीढश्चपुरुमीढस्तथैवच ॥ अजमीढस्यधूमिन्यांजज्ञेबृहदिषुर्नृप ॥ बृहद्धनुर्बृहदिषोःपुत्रस्तस्यमहायशाः १८ बृहद्धर्मेतिवि अ०२०
ख्यातोराजापरमधार्मिकः ॥ सत्यजित्तनयस्तस्यविश्वजित्तस्यचात्मजः १९ पुत्रोविश्वजितश्चापिसेनजित्पृथिवीपतिः ॥ पुत्राःसे
नजितश्चासन्चत्वारोलोकविश्रुताः २० रुचिरःश्वेतकेतुश्चमहिम्नारस्तथैवच ॥ वत्सश्चावंतकोराजायस्यैतेपरिवत्सकाः २१ रुचिर
स्यतुदायादःपृथुसेनोमहायशाः ॥ पृथुसेनस्यपारस्तुपारान्नीपस्तुजज्ञिवान् २२ नीपस्यैकशतंतातपुत्रानाममितौजसाम् ॥ महार
थानांराजेंद्रशूराणांबाहुशालिनाम् ॥ नीपाइतिसमाख्याताराजानःसर्वएवते २३ तेषांवंशकरोराजानीपानांकीर्तिवर्द्धनः ॥ कांपिल्येसम
रोनामसचेष्टसमरोभवत् २४ समरस्यपरःपारःसदश्वइतितेत्रयः ॥ पुत्राःपरमधर्मज्ञाःपरपुत्रःपृथुर्बभौ २५ पृथोस्तुसुकृतोनामसुकृ
तेनेहकर्मणा ॥ जज्ञेसर्वगुणोपेतोविभ्राजस्तस्यचात्मजः २६ विभ्राजस्यतुपुत्रोभूदणुहोनामपार्थिवः ॥ बभौशुकस्यजामाताकृत्वी
भर्तामहायशाः २७ पुत्रोऽणुहस्यराजर्षिर्ब्रह्मदत्तोभवत्प्रभुः ॥ योगात्मातस्यतनयोविष्वक्सेनःपरंतपः २८ विभ्राजःपुनरायातःस्वकृते
नेहकर्मणा ॥ ब्रह्मदत्तस्यपुत्रोन्यःसर्वसेनइतिश्रुतः २९ चक्षुषीतस्यनिर्भिन्नेपक्षिण्यापूजनीयया ॥ सुचिरोषितयाराजन्ब्रह्मदत्तस्य
वेश्मनि ३० अथास्यपुत्रस्त्वपरोब्रह्मदत्तस्यजज्ञिवान् ॥ विष्वक्सेनइतिख्यातोमहाबलपराक्रमः ३१ विष्वक्सेनस्यपुत्रोभूद्दंडसेनो
महीपतिः ॥ भल्लाटोस्यकुमारोभूद्राधेयेनहतःपुरा ३२ दंडसेनात्मजःशूरोमहात्माकुलवर्द्धनः ॥ भल्लाटपुत्रोदुर्बुद्धिरभवच्चयुधिष्ठिर ३३
सतेषामभवद्राजानीपानामंतकृन्नृप ॥ उग्रायुधनयस्यार्थेसर्वेनीपाविनाशिताः ३४ उग्रायुधोमदोत्सिक्तोमयाविनिहतोयुधि ॥ दर्पा
न्वितोदर्परुचिःसततंचानयेरतः ३५ युधिष्ठिरउवाच ॥ ॥ उग्रायुद्धःकस्यसुतःकस्मिन्वंशेथजज्ञिवान् ॥ किमर्थंचैवभवतानिहतस्तद्ब्रवी
हिमे ३६ ॥ भीष्मउवाच ॥ ॥ अजमीढस्यदायादोविद्वान्राजायवीनरः ॥ धृतिमांस्तस्यपुत्रस्तुतस्यसत्यधृतिःसुतः ३७ जज्ञेस
त्यधृतेःपुत्रोदृढनेमिःप्रतापवान् ॥ दृढनेमिसुतश्चापिसुधर्मानामपार्थिवः ३८ ३२

तस्यब्रह्मदत्तस्यतनयेविष्वक्सेनोनामसचयोगातयामेगेनधृतशरीरः ॥ २८ ॥ एतदेवव्याचष्टे विभ्राजइति विभ्राजोब्रह्मदत्तस्यपितामहः स्वकृतेनवक्ष्यमाणेनकर्मणाविष्वक्से
नरूपेणपुनरिमंलोकंब्रह्मदत्तःपुत्रोभूत्वाआयातइत्यर्थः ॥ २९ ॥ पूजनीययाविचित्रचटकया ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

॥ ३९ ॥ महानितिनाम ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ कार्तिः कृतस्यपुत्रः येनपंचालाधिपतिर्हतइतिसंबंधः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५०

आसीत्सुधर्मणःपुत्रःसार्वभौमःप्रजेश्वरः ॥ सार्वभौमइतिख्यातःपृथिव्यामेकराड्विभुः ३९ तस्यान्ववायेमहतिमहान्पौरवनंदनः ॥ महतश्चापिपुत्रस्तुराजारुक्मरथःस्मृतः ४० पुत्रोरुक्मरथस्यापिसुपार्श्वोनामपार्थिवः ॥ सुपार्श्वतनयश्चापिसुमतिर्नामधार्मिकः ४१ सुमतेरपिधर्मात्मासन्नतिर्नामवीर्यवान् ॥ तस्यवैसन्नतेःपुत्रःकृतोनाममहाबलः ४२ शिष्योहिरण्यनाभस्यकौशलस्यमहात्मनः ॥ चतुर्विंशतिधातेनसप्रोच्याःसामसंहिताः ४३ स्मृतास्तेप्राच्यसामानःकार्त्तयोनामसामगाः ॥ कार्तिरुग्रायुधःसोथवीरःपौरवनंदनः ४४ बभूवयेनविक्रम्यपृषतस्यपितामहः ॥ नीपोनाममहातेजाःपंचालाधिपतिर्हतः ४५ उग्रायुधस्यदायादःक्षेम्योनाममहायशाः ॥ क्षेम्यात्सुवीरोनृपतिःसुवीरात्तुनृपंजयः ४६ नृपंजयाद्बहुरथइत्येतेपौरवाःस्मृताः ॥ सचाप्युग्रायुधस्तातदुर्बुद्धिरभवत्तदा ४७ प्रवृद्धचक्रोबलवान्नीपांतकरणोमहान् ॥ सदर्पपूर्णोहत्वाजौनीपानन्यांश्चपार्थिवान् ४८ पितर्युपरतेमह्यंश्रावयामासकिल्बिषम् ॥ माममात्यैःपरिवृतंशयानंधरणीतले ४९ उग्रायुधस्यराजेंद्रदूतोभ्येत्यवचोब्रवीत् ॥ अद्यत्वंजननींभीष्मगंधकालींयशस्विनीम् ॥ स्त्रीरत्नंममभार्यार्थेप्रयच्छकुरुपुंगव ५० एवंराज्यंचतेस्फीतंधनानिचनसंशयः ॥ प्रदास्यामियथाकाममहंवैरत्नभाग्भुवि ५१ ममप्रज्वलितंचक्रंनिशम्येदंसुदुर्जयम् ॥ शत्रवोविद्रवंत्याजौदर्शनादेवभारत ५२ राष्ट्रस्येच्छसिचेत्स्वस्तिप्राणानांवाकुलस्यवा ॥ शासनेममतिष्ठस्वनहितेशांतिरन्यथा ५३ अधःप्रस्तारशयनेशयानस्तेनचोदितः ॥ दूतांतर्हितमेतद्वैवाक्यमग्निशिखोपमं ५४ ततोहंतस्यदुर्बुद्धेर्विज्ञायमतमच्युत ॥ आज्ञापयंवैसंग्रामेसेनाध्यक्षांश्चसर्वशः ५५ विचित्रवीर्यंबालंचमदुपाश्रयमेवच ॥ दृष्ट्वाक्रोधपरीतात्मायुद्धायैवमनोदधे ५६ निगृहीतस्तदाहंतैःसचिवैर्मंत्रकोविदैः ॥ ऋत्विग्भिर्वेदकल्पैश्चसुहृद्भिश्चार्थदर्शिभिः ५७ स्निग्धैश्चशास्त्रविद्भिश्चसंयुगस्यनिवर्तने ॥ कारणंश्रावितश्चास्मियुक्तरूपंतदाऽनघ ५८ मंत्रिणऊचुः ॥ प्रवृत्तचक्रःपापोसौत्वंचाशौचगतःप्रभो ॥ नचैषःप्रथमःकल्पोयुद्धंनामकदाचन ५९

॥ ५१ ॥ ५२ ॥ ५३ ॥ प्रस्तारः कुशास्तरणं ॥ ५४ ॥ ५५ ॥ बालंदृष्ट्वाबालोयंयुद्धायोग्यइतिज्ञात्वाहमेवयुद्धायमनोदधेधृतवान् ॥ ५६ ॥ ५७ ॥ ५८ ॥ प्रवृत्तेति उच्छृंखलप्रवृत्तेःशास्त्रानियंत्रितस्यचयुद्धंप्रथमोमुख्यःकल्पोनभवतीत्यर्थः ॥ ५९ ॥

१ प्रोक्तास्त इतिपाठः ।

॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ संक्रमः उपायांतरेणशमः ॥ ६५ ॥ अनुनीयमानः प्रसाद्यमानः ॥ ६६ तस्यउग्रायुधस्य ॥ ६७ ॥ अहंतस्यचक्रंआज्ञानिवृत्तंभग्नमितिजाने तंस्वकर्मणाहतंजाने ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ कांपिल्येदक्षिणपांचालेनीपेश्वरेपृषतस्यपितामहेउग्रायुधेनहतेउग्रायुधेचभीष्मेणहतेसतीतिविवेकः ॥

तेवयंसामपूर्वंवैदानंभेदंतथैवच ॥ प्रयोक्ष्यामस्ततःशुद्धोदैवतान्यभिवाद्यच ६० कृतस्वस्त्ययनोविप्रैर्हुत्वाग्नीनार्च्यचद्विजान् ॥
ब्राह्मणैरभ्यनुज्ञातःप्रयास्यसिजयायवै ६१ अस्त्राणिनप्रयोज्यानिनप्रवेश्यश्चसंगरः ॥ आशौचेवर्तमानेतुवृद्धानामितिशासनम् ६२
सामदानादिभिःपूर्वमपिभेदेनवाततः॥ तंहनिष्यसिविक्रम्यशंबरंमघवानिव ६३ प्राज्ञानांवचनंकालेवृद्धानांचविशेषतः ॥ श्रोतव्यमिति
तच्छ्रुत्वानिवृत्तेस्मिन्नराधिप ६४ ततस्तैःसंक्रमःसर्वःप्रयुक्तःशास्त्रकोविदैः ॥ तस्मिन्कालेकुरुश्रेष्ठकर्मचारब्धमुत्तमम् ६५ ससामादि
भिरेवादावुपायैःप्राज्ञचिंतितैः ॥ अनुनीयमानोदुर्बुद्धिरनुनेतुंनशक्यते ६६ प्रवृत्तंतस्यतच्चक्रमधर्मनिरतस्यवै ॥ परदाराभिलाषेणस
द्यस्तातनिवर्तितम् ६७ नत्वहंतस्यजानेतन्निवृत्तंचक्रमुत्तमम् ॥ हतंस्वकर्मणातंतुपूर्वंसद्भिश्चनिंदितम् ६८ कृतशौचःशरीचापीरथीनि
ष्क्रम्यवैपुरात् ॥ कृतस्वस्त्ययनोविप्रैःप्रायोधयमहंरिपुम् ६९ ततःसंसर्गमागम्यबलेनास्त्रबलेनच ॥ त्र्यहमुन्मत्तवद्युद्धंदेवासुरमिवाभ
वत् ७० समयास्त्रप्रतापेननिर्दग्धोरणमूर्धनि॥ पपाताभिमुखःशूरस्त्यक्त्वाप्राणानरिंदम ७१ एतस्मिन्नंतरेतातकांपिल्येपृषतोऽभ्यया
त्॥ हतेनीपेश्वरेचैवहतेचोग्रायुधेनृपे ७२ आहिछत्रंस्वकंराज्यंपित्र्यंप्रापमहाद्युतिः॥ द्रुपदस्यपिताराजन्ममैवानुमतेतदा ७३ ततोर्जुनेन
तरसानिर्जित्यद्रुपदंरणे ॥ आहिछत्रंसकांपिल्यंद्रोणायाथापवर्जितम् ७४ प्रतिगृह्यततोद्रोणउभयंजयतांवरः ॥ कांपिल्यंद्रुपदायै
वप्रायच्छद्विदितंतव ७५ एषतेद्रुपदस्यादौब्रह्मदत्तस्यचैवह ॥ वंशःकात्स्न्र्येनवैप्रोक्तोनीपस्योग्रायुधस्यच ७६ ॥ युधिष्ठिरउवाच ॥
किमर्थंब्रह्मदत्तस्यपूजनीयाशकुंतिका ॥ अंधंचकारगांगेयज्येष्ठंपुत्रंपुराविभो ७७ चिरोषितागृहेचापिकिमर्थंचैवयस्यसा ॥ चकारवि
प्रियमिदंतस्यराज्ञोमहात्मनः ७८ पूजनीयाचकारासौकिंसख्यंतेनचैवह ॥ एतन्मेसंशयंछिंधिसर्वमुक्त्वायथातथम् ७९ ॥ भीष्मउ
वाच ॥ शृणुसर्वंमहाराजयथावृत्तमभूत्पुरा ॥ ब्रह्मदत्तस्यभवनेतन्निबोधयुधिष्ठिर ८०

॥ ७२ ॥ आहिछत्रंआहिछत्रानगरीसंबंधिनमुत्तरपांचालम् ॥ ७३ ॥ अपवर्जितंदत्तम् ॥ ७४ ॥ उभयंदक्षिणोत्तरपांचालद्वयं ॥ ७५ ॥ ७६ ॥ ७७ ॥ सायस्यराज्ञोगृहेचिरोषिता तस्यविप्रियंकिमर्थंचकारेत्यन्वयः ॥ ७८ ॥ असौपूजनीयाकिमर्थंतेनसख्यंचकार ॥ ७९ ॥ ८० ॥

शितिपक्षाशुक्लपक्षा शोणाशिराःलोहितमस्तका शितिपृष्ठाकृष्णोपारिभागा शितीधवलमेचकेइतिकोशकाराः ॥ ८१ ॥ कुलायंनीडम् ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

काचिच्छकुंतिकाराजन्ब्रह्मदत्तस्यवैसखी ॥ शितिपक्षाशोणाशिराःशितिपृष्ठाशितोदरी ८१ सखीसाब्रह्मदत्तस्यसुदृढंबद्धसौहृदा ॥ तस्याःकुलायमभवद्गेहेतस्यनरोत्तम ८२ सासदाहनिनिर्गत्यतस्यराज्ञोगृहोत्तमात् ॥ चचारांभोधितीरेषुपल्वलेषुसरस्सुच ८३ नदीपर्वतकुंजेषुवनेषूपवनेषुच ॥ प्रफुल्लेषुतडागेषुकह्लारेषुसुगंधिषु ८४ कुमुदोत्पलकिंजल्कसुरभीकृतवायुषु ॥ हंससारसघुष्टेषुकारंडवरुतेषुच ८५ चरित्वातेषुसाराजान्निशिकांपिल्यमागमत् ॥ नृपतेर्भवनंप्राप्यब्रह्मदत्तस्यधीमतः ८६ राज्ञातेनसदाराजन्कथायोगंचकारसा ॥ आश्चर्याणिचदृष्टानियानिवृत्तानिकानिचित् ८७ चरित्वाविविधान्देशान्कथयामाससानिशि ॥ कदाचित्तस्यनृपतेर्ब्रह्मदत्तस्यकौरव ८८ पुत्रोऽभूद्राजशार्दूलसर्वसेनेतिविश्रुतः ॥ पूजनीयाथसातस्मिन्प्रासूतांडमथापिच ८९ तस्मिन्नीडेपुराह्येकंतत्किलप्रास्फुटत्तदा ॥ स्फुटितोमांसपिंडस्तुबाहुपादास्यसंयुतः ९० बभ्रुवक्त्रश्चक्षुहीनोबभूवपृथिवीपते ॥ चक्षुष्मानप्यभूत्पश्चादीषत्पक्षोत्थितश्चह ॥ ९१ अथसापूजनीयावैराजपुत्रस्वपुत्रयोः ॥ तुल्यस्नेहात्प्रीतिमतीदिवसेदिवसेऽभवत् ९२ आजहारसदासायंचंच्वामृतफलद्वयम् ॥ अमृतास्वादसदृशंसर्वसेनतनूजयोः ९३ सबालोब्रह्मदत्तस्यपूजनीयासुतश्चह ॥ तेफलेभक्षयित्वाचपृथुकौप्रीतमानसौ ९४ अभूतांनित्यमेवेहखादेतांतौचतेफले ॥ तस्यांगतायामथचपूजन्यांवैसदाहनि ९५ शिशुनाचटकेनाथधात्रीतंतुशिशुंनृप ॥ तेनप्रक्रीडयामासब्रह्मदत्तात्मजंसदा ९६ नीडात्तमाकृष्यतदापूजनीयाकृताततः ॥ क्रीडताराजपुत्रेणकदाचिच्चटकःसतु ९७ निगृहीतःकंधरायांशिशुनादृढमुष्टिना ॥ दुर्भगमुष्टिनाराजन्नसून्सद्यस्त्वजीजहत् ९८ तंतुपंचत्वमापन्नंव्यात्तास्यंबालघातितम् ॥ कथंचिन्मोचितंदृष्ट्वानृपातिदुःखितोऽभवत् ९९ धात्रींतस्यजगर्हेतांतदाश्रुपरमोनृपः ॥ तस्थौशोकान्वितोराजन्शोचंस्तंचटकंतदा १०० पूजनीयापितत्कालेगृहीत्वातुफलद्वयम् ॥ ब्रह्मदत्तस्यभवनमाजगामवनेचरी १०१ अथापश्यत्तमागम्यगृहेतास्मिन्नराधिप ॥ पंचभूतपरित्यक्तंशोच्यंतंस्वतनूद्भवम् १०२ मुमोहदृष्ट्वातंपुत्रंपुनःसंज्ञामथालभत् ॥ लब्धसंज्ञाचसाराजन्विललापतपस्विनी १०३

॥ ८६ ॥ ८७ ॥ ८८ ॥ सर्वसेनः इतिच्छेदः तस्मिन्कालेगृहेच ॥ ८९ ॥ तत्अंडम्स्फुटितःव्यक्तीभूतः ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ तेनशिशुना नीडादाकृष्यधात्रीतंप्रक्रीडयामास ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥

वाशंतींकूजंतीं ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ पातव्योरक्षणीयः ॥ १११ ॥ १२ ॥ मत्तःप्रमत्तउन्मत्तःश्रांतःक्रुद्धोबुभुक्षितः ॥

॥ पूजनीयोवाच ॥ नतुत्वमागतांपुत्रवाशंतींपरिसर्पसि ॥ कुर्वंश्चाटुसहस्राणिअव्यक्तकलयागिरा १०४ व्यादितास्यःक्षुधार्त्तश्चपीते
३४ नास्येनपुत्रक ॥ शोणेनतालुनापुत्रकथमद्यनसर्पसि १०५ पक्षाभ्यांत्वांपरिष्वज्यननुवाशामिचाप्यहम् ॥ चीचीकूचीतिवाशंतंत्वाम अ०२०
द्यनशृणोमिकिम् ६ मनोरथोयस्तुममपश्येयंपुत्रकंकदा ॥ व्यात्तास्यंवारियाचंतंस्फुरत्पक्षंममाग्रतः ७ समेमनोरथोभग्नस्त्वयिपंच
त्वमागते ॥ विलप्यैवंबहुविधंराजानमथसाब्रवीत् ८ ननुमूर्द्धाभिषिक्तस्त्वंधर्मंवेत्सिसनातनम् ॥ अथकस्मान्ममसुतंधात्र्याघातितवा
नसि ९ तवपुत्रेणचाकृष्यक्षत्रियाधमशंसमे ॥ नचनूनंश्रुतातेऽभूदियमांगिरसीश्रुतिः १० शरणागतःक्षुधार्त्तश्चशत्रुभिश्चा
प्युपद्रुतः ॥ चिरोषितश्चस्वगृहेपातव्यःसर्वदाभवेत् ११ अपालयन्नरोयातिकुंभीपाकमसंशयम् ॥ कथमस्यहविर्देवागृह्णंतिपितरःस्व
धाम् १२ एवमुक्तामहाराजदशधर्मंगतासती ॥ शोकार्त्तातस्यबालस्यचक्षुषीनिर्बिभेदसा १३ कराभ्यांराजपुत्रस्यततस्तच्चक्षुरस्फुटत् ॥
कृत्वाचांधंनृपसुतमुत्पपाततत्तोंबरम् १४ अथराजासुतंदृष्ट्वापूजनीयामुवाचह ॥ विशोकाभवकल्याणिकृतंतेभीरुशोभनम् १५ ग
तशोकानिवर्त्तस्वअजर्यंसख्यमस्तुते ॥ पुरेववसभद्रंतनिवर्त्तस्वरमस्वच १६ पुत्रपीडोद्भवश्चापिनकोपःपरमस्त्वयि ॥ ममास्तिसाखि
भद्रंतेकर्त्तव्यंचकृतंत्वया १७ ॥ पूजनीयोवाच ॥ आत्मौपम्येनजानामिपुत्रस्नेहंतवाप्यहम् ॥ नचाहंवस्तुमिच्छामितवपुत्रमचक्षुषम् ॥
कृत्वावैराजशार्दूलत्वद्गृहेकृतकिल्बिषा १८ गाथाश्चाप्युशनोगीताइमाःशृणुमयेरिताः ॥ कुमित्रंचकुदेशंचकुराजानंकुसौहृदम् ॥ कु
पुत्रंचकुभार्यांचदूरतःपरिवर्जयेत् १९ कुमित्रेसौहृदंनास्तिकुभार्यायांकुतोरतिः ॥ कुतःपिंडःकुपुत्रेवैनास्तिसत्यंकुराजनि १२० कुसौ
हृदेक्वांवश्वासःकुदेशेनतुजीव्यते ॥ कुराजनिभयंनित्यंकुपुत्रेसर्वतोऽसुखम् २१ अपकारिणिविस्रंभंयःकरोतिनराधमः ॥ अनाथोदुर्ब
लोयद्वन्नचिरंसतुजीवति २२ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ॥ विश्वासाद्भयमुत्पन्नंमूलान्यपिनिकृंतति २३ राजसेविषुवि
श्वासंगर्भसंकरितेषुच ॥ यःकरोतिनरोमूढोनचिरंसतुजीवति २४

त्वरमाणश्चभीतश्चलुब्धःकामीचतेदशेति एतेषांदशानांधर्मोनिर्विवेकित्वंगताप्राप्तादशधर्मंगता ॥ १३ ॥ १४ ॥ तेत्वया ॥ १५ ॥ अजर्यंअविनाशि ॥ १६ ॥ १७ ॥ ३४
अचक्षुषंकृत्वावस्तुंनइच्छामि ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ विस्रंभंविश्वासम् ॥ २२ ॥ २३ ॥ गर्भसंकरितेषुसंकीर्णजातिषु ॥ २४ ॥

अपोति प्रावारः पिपीलः मुंगळाइतिमहाराष्ट्राः   सहिपूर्वमपक्षएवपक्षोत्पत्तौउत्पत्याधःपतन्पक्षिभिर्मार्यतइतिप्रसिद्धम्   अन्येतुप्रावारःपाश्चात्येषुपामरइतिप्रसिद्धः साकिलकु डचवृक्षादिगह्वरेप्राप्यउत्पद्यतेसचपक्षोत्थानेसहसाउच्चैरुत्पत्यभूमौपातितःपक्षिभिःखाद्यतेतद्वदितिव्याचख्युः ॥ २५ ॥ २६ ॥ आर्द्रःस्निग्धः ॥ २७ ॥ हरिरिंद्रःफेननेवज्रग

अप्युन्नतिंप्राप्यनृपात्प्रावारःकीटकोयथा ॥ सविनश्यत्यसंदेहमाहैवमुशनानृप २५ अपिमार्दवभावेनगात्रंसंलीयबुद्धिमान् ॥ अरिंना शयतेनित्यंयथावह्निर्महाद्रुमम् २६ मृदुरार्द्रःकृशोभूत्वाशनैःसंलीयतेरिपुः ॥ वल्मीकइववृक्षस्यपश्चान्मूलानिकृंतति २७ अद्रोहसम यंकृत्वामुनीनामग्रतोहरिः ॥ जघाननमुचिंपश्चादपांफेनेनपार्थिव २८ सुप्तंमत्तंप्रमत्तंवाघातयंतिरिपुंनराः ॥ विषेणवह्निनावापिशस्त्रे णाप्यथमायया २९ नचशेषंप्रकुर्वंतिपुनर्वैरभयान्नराः ॥ घातयंतिसमूलंहिश्रुत्वेमामुपमांनृप ३० शत्रुशेषमृणाच्छेषंशेषमग्नेश्चभूमि प ॥ पुनर्वर्धेतसंभूयतस्माच्छेषंनशेषयेत् ३१ हसतेजल्पतेवैरीएकपात्रेभुनक्तिच ॥ एकासनंचारोहतिस्मरतेतच्चकिल्बिषम् ३२ कृत्वा संबंधकंचापिविश्वसेच्छत्रुणानहि ॥ पुलोमानंजघानाजौजामातासन्शतक्रतुः ३३ निधायमनसावैरंप्रियंवक्तीहयोनरः ॥ उपसर्पेन्नतं प्राज्ञःकुरंगइवलुब्धकम् ३४ नचासन्नेनिवस्तव्यंसवैरेवर्धितेरिपौ ॥ पातयेत्तंसमूलंहिनदीरयइवद्रुमम् ३५ अमित्रादुन्नतिंप्राप्यनोन्न तोस्मीतिविश्वसेत् ॥ तस्मात्प्राप्योन्नतिंनश्येत्प्रावारइवकीटकः ३६ इत्येताह्युशनोगीतागाथाधार्याविपश्चिता ॥ कुर्वताचात्मरक्षांवैनरे णपृथिवीपते ३७ मयासकिल्बिषंतुभ्यंप्रयुक्तमतिदारुणम् ॥ पुत्रमंधंप्रकुर्वंत्यातस्मान्नोविश्वसेत्वयि ३८ एवमुक्त्वाप्रदुद्रावतदाकाशे पतंगिनी ॥ इत्येतत्तेमयाख्यातंपुराभूतमिदंनृप ३९ ब्रह्मदत्तस्यराजेंद्रयद्वृत्तंपूजनीयया ॥ श्राद्धंचपृच्छसेयन्मांयुधिष्ठिरमहामते ४० अतस्तेवर्तयिष्येहमितिहासंपुरातनम् ॥ गीतंसनत्कुमारेणमार्कंडेयायपृच्छते ४१ श्राद्धस्यफलमुद्दिश्यनियतंसुकृतस्यच ॥ तन्निबो धमहाराजसप्तजातिषुभारत ४२ सगालवस्यचरितंकंडरीकस्यचैवहि ॥ ब्रह्मदत्ततृतीयानांयोगिनांब्रह्मचारिणाम् ४३ ॥ इतिश्री महाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिचटकाख्यानंनामविंशोऽध्यायः ॥ २० ॥ ॥ ७ ॥ ॥

भेंण ॥ २८ ॥ मत्तंमद्यादिना प्रमत्तंअनवहितम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ धार्याहृदीतिशेषः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ इतिश्रीमहाभारतेहरिवंशेहरिवंशपर्वणिटीकायांचटकाख्यानंनामविंशोऽध्यायः ॥ २० ॥ ॥ ७ ॥ ॥

एकविंशेतथाध्यायेहिंस्रोपीष्ट्वापितॄंस्ततः ॥ शुभाच्छुभतरांयोनिंप्राप्नोतीतिनिरूप्यते ॥ १ ॥ श्राद्धेप्रासंगिकंपरिसमाप्यप्रकृतंश्राद्धमाहात्म्यमेवानुसंधत्ते श्राद्धेइति प्रतिष्ठितःश्रुतधनकुलपुत्रपश्वादिवाहुल्येनमहत्त्वंप्राप्तः योगप्राप्त्योमोक्षःब्रह्मात्म्यैक्यंवा ॥ १ ॥ यत्फलंप्राप्तमितिसंबंधःसप्तजातिषुसप्तजन्मसु भारद्वाजकौशिकव्याधमृगचक्रवाकहंसश्रोत्रियदायादत्वेषु भरद्वाजपुत्रत्वेप्रमादादित्वात्तदारभ्यगणना ततःश्राद्धात्निर्वर्त्ततेसंपद्यतेवुद्धिःज्ञानम् ॥ २ ॥ पीडयागोहिंसया ॥३ ॥ ४ ॥ तथानामानुरूपैःकर्मभिः कविः परलोकभयदर्शी खसृमःखेवियतिसर्त्तुंशीलमस्येतिपरलोकार्थी ॥ ५ ॥ कौशिकस्यविश्वामित्रस्यसुताः येपूर्वंविश्वामित्रेणशप्ताःअंतान्वयाःप्रजाभक्षोष्टेतितएतेपंचाशत् तेषांम

मार्कंडेयउवाच ॥ ॥ श्राद्धेप्रतिष्ठितोलोकःश्राद्धेयोगःप्रवर्त्तते ॥ हंततेवर्त्तयिष्यामिश्राद्धस्यफलमुत्तमम् १ ब्रह्मदत्तेनयत्प्राप्तंसप्तज्ञातिषुभारत ॥ ततएवहिधर्मस्यबुद्धिर्निर्वर्ततेशनैः २ पीडयाप्यथधर्मस्यकृतेश्राद्धेपुरानघ ॥ यत्प्राप्तंब्राह्मणैःपूर्वंतन्निबोधमहामते ३ ततोहंतातधर्मिष्ठान्कुरुक्षेत्रेपितृव्रतान् ॥ सनत्कुमारनिर्दिष्टानपश्यंसप्तवैद्विजान् ४ दिव्येनचक्षुषातेनयानुवाचपुराविभुः ॥ वाग्दुष्टःक्रोधनोहिंस्रःपिशुनःकविरेवच ॥ खसृमःपितृवर्तीचनामभिःकर्मभिस्तथा ५ कौशिकस्यसुतास्तातशिष्यागार्ग्यस्यभारत ॥ पितर्युपरतेसर्वेव्रतवंतस्तदाभवन् ६ विनियोगाद्गुरास्तस्यगांदोग्ध्रींसमकालयन् ॥ समानवत्सांकपिलांसर्वेन्यायागतांतदा ७ तेषांपथिक्षुधार्तानांबाल्यान्मोहाच्चभारत ॥ क्रूराबुद्धिःसमभवत्तांगांवैहिंसितुंतदा ८ तान्कविःखसृमश्चैवयाचेतेनेतिवैतदा ॥ नचाशक्यंततेताभ्यांतदावारयितुंद्विजाः ९ पितृवर्तीतुयस्तेषांनित्यंश्राद्धाह्निकोद्विजः ॥ ससर्वानब्रवीद्भ्रातॄन्कोपाद्धर्मेसमाहितः १० यद्यवश्यंप्रहंतव्यापितॄनुद्दिश्यसाध्विमाम् ॥ प्रकुर्वीमहिगांसम्यक्सर्वएवसमाहिताः ११ एवमेषापिगौर्धर्मंप्राप्स्यतेनात्रसंशयः ॥ पितॄनभ्यर्च्यधर्मेणनाधर्मोस्मान्भविष्यति १२ तथेत्युक्त्वाचतेसर्वेप्रोक्षयित्वाचगांततः ॥ पितृभ्यःकल्पयित्वैनामुपायुंजंतभारत १३ उपयुज्यचगांसर्वेगुरोस्तस्यन्यवेदयन् ॥ शार्दूलेनहताधेनुर्वत्सोयंगृह्यतामिति १४ आर्जवात्सतुतंवत्संप्रतिजग्राहवैद्विजः ॥ मिथ्योपचर्य्यतेतंतुगुरुमन्यायतोद्विजाः ॥ कालेनसमयुज्यंतसर्वएवायुषःक्षये १५ तेवैक्रूरतयाहिंस्राअनार्यत्वाद्गुरौतथा ॥ उग्राहिंसाविहाराश्चसप्ताजायंतसोदराः १६

ध्येवाग्दुष्टादयःसप्तयेषांसंततिरंध्रःपुंड्राइत्यादिश्रुतिप्रसिद्धाः ॥ ६ ॥ उपरतेशापंदत्वाउदासीनेसतिव्रतवंतोगार्ग्यस्यगृहेब्रह्मचर्यार्थंवासंकृतवंतः समकालयन्वनमनयन् समानवत्सांकपिलवत्साम् न्यायागतामितिविशेषणात् चोरद्रव्यापहारेऽल्पोदोषइतिगम्यते ॥ ७ ॥ ८ ॥ ९ ॥ श्राद्धाह्निकःनित्यश्राद्धकृत् ॥ १० ॥ प्रकुर्वीमहिहिंसयासाधयेमहि कहिंसाधर्मित्यस्यरूपम् ॥ ११ ॥ १२ ॥ उपायुंजंतअभक्षयन् ॥ १३ ॥ १४ ॥ उपचर्यवंचयित्वाकालेनमृत्युना ॥ १५ ॥ १६ ॥

लुब्धकस्यात्मजाअसृज्यंतेतिसंबंधः ॥ १७ ॥ स्मृतिःपूर्वजातिस्मरणम् प्रत्यवमर्शःस्वकृतकर्मानुसंधानम् ॥१८ ॥ १९ ॥ २० ॥ २१ ॥ हिंसायांमृगयायामपिधर्मोबाल
गर्भिणीमैथुनासक्तादिवर्जनंतत्ररतैः ॥ २२ ॥ अवासृजन् अनशनादिनाऽत्यजन् ॥ २३॥ तेनमातापितृपूजनेनत्रासान्हिंसाधर्मरतत्वेनभयानिचोत्पाद्यजातिस्मरत्वंसंविग्नत्वं
चकर्मद्वयफलमित्यर्थः ॥ २४ ॥ उन्मुखइतियःपूर्ववाग्दुष्टःसनित्यंपरानिंदनोन्मुखत्वादूर्ध्वमुखएवजातः क्लेशेनआहारंगृह्णातीत्यर्थः क्रोधनस्तुनित्यंपरोद्वेजकत्वात्स्वयमपि
नित्यसंत्रस्तोभूत् एवंपिशुनः स्तब्धकर्णोबाधिरोभूत् हिंस्रोविलोचनोंधोभूत् कविःपंडितोभूत् खसृमोघस्मरःयथेष्टाहारोभूत् पितृवर्तीतुश्राद्धकर्तृत्वात्नादीनादसुखभोक्ताभूत्त

लुब्धकस्यात्मजास्तातबलवंतोमनस्विनः ॥ पितृनभ्यर्च्यधर्मेणप्रोक्षयित्वाचगांतदा १७ स्मृतिःप्रत्यवमर्शश्चतेषांजात्यंतरेभवत् ॥
जाताव्याधादशार्णेषुसप्तधर्मविचक्षणाः १८ स्वकर्मनिरताःसर्वेलोभानृतविवर्जिताः ॥ तावन्मात्रंप्रकुर्वंतियावताप्राणधारणम् १९
शेषंध्यानपराःकालमनुध्यायंतिकर्मतत् ॥ नामधेयानिचाप्येषामिमान्यासन्नराधिप २० निर्वैरोनिर्वृतिःशांतोनिर्मन्युःकृतिरेवच ॥
वैघसोमातृवर्तीचव्याधाःपरमधार्मिकाः २१ तैरेवमुषितैस्तातहिंसाधर्मरतैःसदा ॥ माताचपूजितावृद्धापिताचपरितोषितः २२ यदा
मातापिताचैवसंयुक्तौकालधर्मणा ॥ तदाधनूंषितेत्यक्त्वावनेप्राणानवासृजन् २३ शुभेनकर्मणातेनजाताजातिस्मरामृगाः ॥ त्रासानु
त्पाद्यसंविग्नारम्यकालंजरेगिरौ २४ उन्मुखोनित्यवित्रस्तःस्तब्धकर्णोविलोचनः ॥ पंडितोघस्मरोनादीनामतस्तेऽभवन्मृगाः २५ त
मेवार्थमनुध्यांतोजातिस्मरणसंभवम् ॥ आसन्वनचराःक्षांतानिर्द्वंद्वानिष्परिग्रहाः २६ तेसर्वेशुभकर्माणःसधर्माणोवनेचराः ॥ योग
धर्ममनुप्राप्ताविहरंतिस्मतत्रह २७ जहुःप्राणान्मरुंसाध्यलब्धाहारास्तपस्विनः ॥ तेषांमरुंसाधयतांपदस्थानानिभारत ॥ तथैवाद्या
पिदृश्यंतगिरौकालंजरेनृप २८ कर्मणातेनतेतातशुभेनाशुभवर्जिताः ॥ शुभाच्छुभतरांयोनिंचक्रवाकत्वमागताः २९ शुभेदेशेशरद्वीपेसप्तै
वासन्जलौकसः ॥ त्यक्त्वासहचरीधर्मंमुनयोब्रह्मचारिणः ३० निःस्पृहोनिर्ममःक्षांतोनिर्द्वंद्वोनिष्परिग्रहः ॥ निर्वृतिर्निभृतश्चैवशकु
नानामतःस्मृताः ३१ तेतत्रपक्षिणःसर्वेशकुनाधर्मचारिणः ॥ निराहाराजहुःप्राणांस्तपोयुक्ताःसरित्तटे ३२

द्धिमृगाणांअत्यंतंप्रियंइत्यन्वर्थनामनातेषांज्ञेया ॥ २५ ॥ अनुध्यांतःअनुध्यायंतः ॥ २६ ॥ सधर्माणःसमानाःअहिंसादयोधर्मायेषांते ॥ २७ ॥ मरुर्निर्जलोदेशःतंसाध्यसाधयि
त्वाजलत्यागव्रतेनेत्यर्थः गिरिशृंगान्निपत्येत्यन्ये मरुर्नागिरिधन्वनोरितिमेदिनी पदस्थानानिपदचिह्नानिसार्द्धः ॥ २८ ॥ २९ ॥ शरद्वीपेजलद्वीपे शरस्तेजनकेबाणेदध्यग्रेना
शरंजलेइतिमेदिनी सहचरीधर्मंमैथुनं ॥ ३० ॥ ३१ ॥ ३२ ॥

॥ ३३॥ ३४ ॥ ३५ ॥ पंचमइति चतुर्थस्यनाम ॥ ३६ ॥ पंचमोवाग्दुष्टादिषुपंचसंख्यापूरणः कविनामासप्तमेजन्मनिभाविनिपांचिकोनामराजामात्योऽभूत् षष्ठःखसृमःस
कंडरीकनामाभावी सप्तमःपितृवर्तीसब्रह्मदत्तोभावी ॥ ३७ ॥ निर्वृत्त्यानिष्पत्त्या प्रतिभानातूपूर्वजन्मकर्मस्फुरणात् ॥ ३८ ॥ ब्रह्म वेदः श्रुतंपाठतोर्थतश्चाधिगतम् ॥ ३९

॥ ४० ॥ ४१ ॥ ४२ ॥ स्वतंत्राख्यःसप्तमोहंसः ॥ ४३॥ निष्फलेननिःसुखेन ॥४४॥ इतिश्रीमहाभातेहरिवंशेटीकायांएकविंशोऽध्यायः ॥२१॥ द्वाविंशेपूर्वजैःशप्ताअंड 

अथतेसोदराजाताहंसामानसचारिणः ॥ जातिस्मराःसुसंयुक्ताःसप्तैवब्रह्मचारिणः ३३ विप्रयोनौयतोमोहान्मिथ्योपचरितोगुरुः ॥
तिर्यग्योनौततोजाताःसंसारेपरिबभ्रमुः ३४ यतश्चपितृवाक्यार्थःकृतःस्वार्थेऽव्यवस्थितैः ॥ ततोज्ञानंचजातिंचतेहिप्रापुर्गुणोत्तराम् ३५
सुमनाःशुचिवाक्शुद्धःपंचमश्छिद्रदर्शनः ॥ सुनेत्रश्चस्वतंत्रश्चशकुनानामतःस्मृताः ३६ पंचमःपांचिकस्तत्रसप्तजातिष्वजायत ॥
षष्ठस्तुकंडरीकोभूद्ब्रह्मदत्तस्तुसप्तमः ३७ तेषांतुतपसातेनसप्तजातिकृतेनवै ॥ योगस्यचापिनिर्वृत्त्याप्रतिभानाच्चशोभनात् ३८ पू
र्वजातिषुयद्ब्रह्मश्रुतंगुरुकुलेषुवै ॥ तथैवावस्थिताबुद्धिःसंसारेष्वपिवर्त्तताम् ३९ तेब्रह्मचारिणःसर्वेविहंगाब्रह्मवादिनः ॥ योगधर्म
मनुध्यांतोविहरंतिस्मतत्रह ४० तेषांतत्रविहंगानांचरतांसहचारिणाम् ॥ नीपानामीश्वरोराजाविभ्राजःपौरवान्वयः ४१ विभ्रा
जमानोवपुषाप्रभावेनसमन्वितः ॥ श्रीमानंतःपुरवृतोवनंतत्प्रविवेशह ४२ स्वतंत्रश्चविहंगोसौस्पृहयामासतंनृपम् ॥ दृष्ट्वायां
तंश्रियोपेतंभवेयमहमीदृशः ४३ यद्यस्तिसुकृतंकिंचित्तपोवानियमोपिवा ॥ खिन्नोऽस्मिह्युपवासेनतपसानिष्फलेनच ४४ इति
श्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिएकविंशोध्यायः ॥ २१ ॥ मार्कंडेयउवाच ॥ ॥ ततस्तंचक्रवाकौद्वावूचतुःसहचारिणौ ॥
आवांतेसचिवौस्यावस्तवप्रियहितैषिणौ १ तथेत्युक्त्वाचतस्यासीत्तदायोगात्मिकामतिः ॥ एवंतेसमयंचक्रुःशुचिवाक्तमुवाचह २
यस्मात्कामप्रधानस्त्वंयोगधर्ममपास्यवै ॥ एवंवरंप्रार्थयसेतस्माद्वाक्यंनिबोधमे ३ राजात्वंभवितातातकांपिल्येनात्रसंशयः ॥ भ
विष्यतःसखायौचद्वाविमौसचिवौतव ४ शप्त्वाचाऽनभिभाष्यांस्तांश्चत्वारश्चक्रुरंडजाः ॥ तांस्त्रीनभीप्सतोराज्यंव्यभिचारप्रधर्षिता
न् ५ शप्ताःखगास्त्रयस्तेतुयोगभ्रष्टाविचेतसः ॥ तानयाचंतचतुरस्त्रयस्तेसहचारिणः ६ 
जैरंडजास्त्रयः ॥ पुनस्तेषुप्रसादश्चप्रसन्नैःकृतईर्यते ॥ १ ॥ ततस्तम् ॥ १ ॥ शुचिवाक्द्वितीयोहंसः ॥ २ ॥ वाक्यंशापरूपम् ॥ ३ ॥ शापमेवाह राजेति ॥ ४ ॥
तेचत्वारस्तांस्त्रीन्शप्त्वाऽनभिभाष्यान्भाषणानर्हान्चक्रुः शापेहेतुः व्यभिचारप्रधर्षितानिति व्यभिचारोयोगधर्मभ्रंशः ॥ ५ ॥ चतुरः चतुःसंख्याकान् ॥ ६ ॥

सर्वेषांवचनात्वचनंप्राप्यवचोऽब्रवीत्आडभावः संधिर्वाऽर्षः ॥ ७॥८॥ अस्यअनेनकृतेनउपदेशेनेतिशेषः ॥ ९ ॥ उपदेशमेवाह गामिति प्रोक्षयित्वाप्रोक्षणादिभिःसंस्कारैःसंस्कृत्य धर्मेणपितृयज्ञविधिना अस्माकंअस्माभिस्तांपितृभ्यउपकल्प्यज्ञानयोगःप्राप्तइतिशेषः तस्यविशेषणंयोगसाधनइति ॥ १० ॥ इमंवक्ष्यमाणम् सप्तव्याधादशार्णेष्वितिश्लोकद्वयरूपम् पुरुषांतरितंपुरुषांतरव्यवधानेनउच्चारितंश्रुत्वा ॥११॥ इतिश्रीहारिवंशेटीकायांद्वाविंशोध्यायः॥२२॥ त्रयोविंशेचतुर्भिर्यत्प्रोक्तंतच्चतथाभवत् ॥ कांपिल्येप्रोच्यतेजन्मतेषांकु

तेषांप्रसादंतेचक्रुरथैतान्सुमनाऽब्रवीत् ॥ सर्वेषामेववचनात्प्रसादानुगतंवचः ७ अंतवान्भविताशापोयुष्माकंनात्रसंशयः ॥ इतश्च्युता श्चमानुष्यंप्राप्ययोगमवाप्स्यथ ८ सर्वसत्वरुतज्ञश्चस्वतंत्रोयंभविष्यति ॥ पितृप्रसादोह्यस्माभिरस्यप्राप्तःकृतेनवै ९ गांप्रोक्षयित्वा धर्मेणपितृभ्यउपकल्प्यताम् ॥ अस्माकंज्ञानसंयोगःसर्वेषांयोगसाधनः १० इमंचवाक्यसंदर्भंश्लोकमेकमुदाहृतम् ॥ पुरुषांतरितंश्रुत्वाततोयोगमवाप्स्यथ ॥ ११ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिपितृवाक्येद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ मार्कंडेयउवाच ॥ तेयोगधर्मनिरताःसप्तमानसचारिणः ॥ ॥ पद्मगर्भोरविंदाक्षःक्षीरगर्भःसुलोचनः १ उरुबिंदुःसुबिंदुश्चहैमगर्भस्तुसप्तमः ॥ वाय्वंबुभक्षाःसततंशरीराण्युपशोषयन् २ राजाविभ्राजमानस्तुवपुषातद्वनंतदा ॥ चचारांतःपुरवृतोनंदनंमघवानिव ३ सतानपश्यत्खचरान्योगधर्मात्मकान्नृप ॥ निर्वेदाच्चतमेवार्थमनुध्यायन्पुरंययौ ४ अणुहोनामतस्यासीत्पुत्रःपरमधार्मिकः ॥ अणुधर्मरतिर्नित्यमणुंसोध्यगमत्पदम् ५ प्रदात्कन्यांशुकस्तस्मैकृत्वींपूजितलक्षणाम् ॥ सत्यशीलगुणोपेतांयोगधर्मरतांसदा ६ साह्युद्दिष्टापुराभीष्मपितृकन्यामनीषिणी ॥ सनत्कुमारेणतदासन्निधौममशोभना ७ सत्यधर्मभृतांश्रेष्ठादुर्विज्ञेयाकृतात्मभिः ॥ योगाचयोगपत्नीचयोगमातातथैवच ८ यथातेकथितंपूर्वंपितृकल्पेषुवैमया ॥ विभ्राजस्त्वणुहंराज्येस्थापयित्वानरेश्वरः ९ आमंत्र्यपौरान्प्रीतात्माब्राह्मणान्स्वस्तिवाच्यच ॥ प्रायात्सरस्तपश्चर्तुंयत्रतेसहचारिणः १० सवैतत्रनिराहारोवायुभक्षोमहातपाः ॥ त्यक्त्वाकामांस्तपस्तेपेसरसस्तस्यपार्श्वतः ११ तस्यसंकल्पआसीच्चतेषामेकतरस्यवै ॥ पुत्रत्वंप्राप्ययोगेनयुज्येयमितिभारत १२

वलतुष्टये ॥ १ ॥ तेयोगइति तेहंसाःउपशोषयन् शोषितवंतइत्युत्तरेणान्वयः ॥ १ ॥ अडभावआर्षः ॥ २ ॥ वपुषैवचचार नतुयानेन ॥ ३ ॥ अपश्यत्एकाग्र्यादिनाबाह्यलक्षणेनयोगधर्मात्मकान्ज्ञातवान् निर्वेदात् पक्षिष्वपियोगोस्तिमानुषेपिमयिनास्तीतिधिङ्मामित्यात्मन्यौदासिन्यात् ॥ ४ ॥ अणून्सूक्ष्मान् अर्थान्हंतिप्राप्नोतीत्यणुहपदंनिर्वक्ति अणुधर्मेति ॥ ५ ॥ ६ ॥ पितृणांबर्हिषदांकन्यापीवरीनाम्नी ॥ ७ ॥ योगास्वयंयोगवती ॥ ८ ॥ ९ ॥ यत्रतेहंसाः ॥ १० ॥ ११ ॥ तस्येतियोगिनःपुत्रोयोगवानेवभविष्यतीतिभावः ॥ १२

॥ १३ ॥ तत्रसरोमानसाख्यम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ स्वतंत्रःसप्तमोहंसःयःप्राक्पितृवर्तीयुक्तः ॥ १८॥ वाभ्रव्यवत्सौराजामात्यौतयोःश्रोत्रिययोःकुले॥१९॥ पांचिकःसर्वजातिषुपंचमःकविः सेपांचालोऽभूत् अपरःषष्ठःखसृमःसकंडरीकोऽभूत् ॥ २० ॥ बह्वृचःऋग्वेदी अध्वर्युः यजुर्वेदी ॥ २१ ॥ सर्वसत्वरुतज्ञः सर्वप्राणिभाषाभिज्ञः ॥ २२ ॥ पूर्वजातौकृतंश्राद्धंतेनहेतुनाकोविदाआसन् ॥ २३ ॥ २४ ॥ २५ ॥ लेभेब्रह्मदत्तइतिशेषः ॥ २६ ॥ २७ ॥ शेषाइति आढ्यकुलेजन्मब्रह्मकोपजम्

कृत्वाभिसंधितपसामहतासमन्वितः ॥ महातपाःसविभ्राजोविरराजांशुमानिव १३ ततोविभ्राजितंतेनवैभ्राजंनामतद्वनम् ॥ सरस्तत्रचकुरुश्रेष्ठवैभ्राजमितिसंज्ञितम् १४ यत्रतेशकुनाराजन्चत्वारोयोगधर्मिणः ॥ योगभ्रष्टास्त्रयश्चैवदेहन्यासकृतोऽभवन् १५ कांपिल्येनगरेतेतुब्रह्मदत्तपुरोगमाः ॥ जाताःसप्तमहात्मानःसर्वेविगतकल्मषाः १६ज्ञानध्यानतपःपूजावेदवेदांगपारगाः ॥ स्मृतिमंतोत्रचत्वारस्त्रयस्तुपारिमोहिताः १७स्वतंत्रस्त्वणुहाज्जज्ञेब्रह्मदत्तोमहायशाः ॥ यथाह्यासीत्पक्षिभावेसंकल्पःपूर्वचिंतितः ॥ ज्ञानध्यानतपःपूतोवेदवेदांगपारगः १८ छिद्रदर्शीसुनेत्रश्चतथाबाभ्रव्यवत्सयोः ॥ जातौश्रोत्रियदायादौवेदवेदांगपारगौ १९ सहायौब्रह्मदत्तस्यपूर्वजातिसहोषितौ ॥ पांचालःपांचिकश्चैवकंडरीकस्तथापरः २० पांचालोबह्वृचस्त्वासीदाचार्यत्वंचकारह ॥ द्विवेदःकंडरीकस्तुछंदोगोऽध्वर्युरेवच २१ सर्वसत्वरुतज्ञस्तुराजासीदणुहात्मजः ॥ पांचालकंडरीकाभ्यांतस्यसख्यमभूत्तदा २२ तेग्राम्यधर्माभिरताःकामस्यवशवर्तिनः ॥ पूर्वजातिकृतेनासन्धर्मकामार्थकोविदाः २३ अणुहस्तुनृपश्रेष्ठोब्रह्मदत्तमकल्मषम् ॥ राज्येभिषिच्ययोगात्मापरांगतिमवाप्तवान् २४ ब्रह्मदत्तस्यभार्यातुदेवलस्यात्मजाभवत् ॥ असितस्यहिदुर्धर्षासन्नतिर्नामनामतः २५ तामेकभावसंपन्नांलेभेकन्यामनुत्तमाम् ॥ सन्नतिंसन्नतिमतिंदेवलाद्योगधर्मिणीम् २६ पंचमःपांचिकस्तत्रसप्तजातिषुभारत ॥ षष्ठस्तुकंडरीकोभूद्ब्रह्मदत्तस्तुसप्तमः २७ शेषाविहंगमायेवैकांपिल्येसहचारिणः ॥ तेजाताःश्रोत्रियकुलेसुदरिद्रेसहोदराः २८ धृतिमान्सुमनाविद्वान्तत्वदर्शीचनामतः ॥ वेदाध्ययनसंपन्नाश्चत्वारश्छिद्रदर्शिनः २९ तेषांसंवित्तथोत्पन्नापूर्वजातिकृतातदा ॥ तेयोगनिरताःसिद्धाःप्रस्थिताःसर्वएवहि ३० आमंत्र्यपितरंतातपितातानब्रवीत्तदा ॥ अधर्मएषयुष्माकंयन्मांत्यक्त्वागमिष्यथ ३१

दरिद्रकुलेजन्मतुपुण्यप्राप्यमितिभावः ॥ २८ ॥ छिद्रदर्शिनःछिद्रंमहापथंप्रातिगंतुमवकाशस्तद्दर्शिनः स्वसहचारिणांवाभोगासक्तिरूपंदूषणंपश्यंतः छिद्रंदूषणरंध्रयोरितिमेदिनी ॥ २९ ॥ संवित्प्रस्थातुमैकमत्यम् ॥ ३० ॥ ३१ ॥

पुत्रार्थान्वंशसंतानगयाश्राद्धादीन् ॥ ३२ ॥ वर्तयिष्यसिजीविष्यसि अस्माभिरुद्धृतस्यतवसंतानाद्यपेक्षानास्तीतिभावः ॥ ३३ ॥ इमंसप्तव्याधाइत्यादिवक्ष्यमाणंश्लोकद्वय म् ॥ ३४ ॥ ३५ ॥ परांनिर्वृतिंमोक्षम् ॥ ३६ ॥ इतिहरिवंशेटीकायांत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ चतुर्विंशेथविभ्राजःप्राक्जन्मवासनावशात् ॥ ब्रह्म दत्तसुतोजातोविष्वक्सेनइतीर्यते ॥ १ ॥ ब्रह्मेति यस्तेषांहंसानामन्यतमस्यपुत्रोभूत्वायोगेनयुज्येयमित्यकामयतसवैभ्राजोनामराजातेषांसप्तमस्यब्रह्मदत्तस्यतनयोऽजायतेत्यन्व

दारिद्र्यमनपाकृत्यपुत्रार्थांश्चैवपुष्कलान् ॥ शुश्रूषामप्रयुज्यैवकथंवैगंतुमर्हथ ३२ तेतमूचुर्द्विजाःसर्वेपितरंपुनरेवच ॥ करिष्यामोवि धानंतेयेनत्वंवर्तयिष्यसि ३३ इमंश्लोकंमहार्थंत्वंराजानंसहमंत्रिणम् ॥ श्रावयेथाःसमागम्यब्रह्मदत्तमकल्मषम् ३४ प्रीतात्मादा स्यतिसतेग्रामान्भोगांश्चपुष्कलान् ॥ यथेप्सितांश्चसर्वार्थान्गच्छताततयथेप्सितम् ३५ एतावदुक्त्वातेसर्वेपूजयित्वाचतंगुरुम् ॥ यो गधर्ममनुप्राप्यपरांनिर्वृतिमाययुः ३६ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणित्रयोविंशोऽध्यायः २३ ॥ मार्कंडेयउवाच ॥ ब्रह्मदत्तस्यतनयःसवैभ्राजस्त्वजायत ॥ योगात्मातपसायुक्तोविष्वक्सेनइतिश्रुतः १ कदाचिद्ब्रह्मदत्तस्तुभार्ययासहितोवने ॥ विजहारप्र हृष्टात्मायथाशच्याशचीपतिः २ ततःपिपीलिकरुतंसशुश्रावनराधिपः ॥ कामिनींकामिनस्तस्ययाचतःक्रोशतोभृशम् ३ श्रुत्वातुयाच्य मानांतांक्रुद्धांसूक्ष्मांपिपीलिकाम् ॥ ब्रह्मदत्तोमहाहासमकस्मादेवचाहसत् ४ ततःसासंनतिर्दीनाव्रीडितेवाभवत्तदा ॥ निराहाराबहु तिथंबभूववरवर्णिनी ५ प्रसाद्यमानाभर्त्रासातमुवाचशुचिस्मिता ॥ त्वयाचहसिताराजन्नाहंजीवितुमुत्सहे ६ सतत्कारणमाचख्यौन चसाश्रद्दधातितत् ॥ उवाचचैनंकुपितानैषभावोस्तिमानुषे ७ कोवैपिपीलिकरुतंमानुषोवेत्तुमर्हति ॥ ऋतेदेवप्रसादाद्वापूर्वजातिकृतेन वा ८ तपोबलेनवाराजन्विद्ययावानराधिप ॥ यद्येषवैप्रभावस्तेसर्वसत्वरुतज्ञता ९ यथाहमेतज्जानीयांतथाप्रत्याययस्वमाम् ॥ प्रा णान्वापिपरित्यक्ष्येराजन्सत्येनतेशपे १० ततस्यावचनंश्रुत्वामहिष्याःपरुषाक्षरम् ॥ सराजापरमापन्नोदेवश्रेष्ठमगात्ततः ११ शरण्यं सर्वभूतेशंभक्त्यानारायणंहरिम् ॥ समाहितोनिराहारःषड्रात्रेणमहायशाः १२ ददर्शदर्शनेराजादेवंनारायणंप्रभुम् ॥ उवाचचैनंभ गवान्सर्वभूतानुकंपकः १३ ब्रह्मदत्तप्रभातेत्वंकल्याणंसमवाप्स्यसि ॥ इत्युक्त्वाभगवान्देवस्तत्रैवांतरधीयत १४

यः ॥ १ ॥ एतदेवव्याकरोति कदाचिदित्यादिना ॥ २ ॥ पिपीलिकस्यरुतंशब्दम् ॥ ३ ॥ ४ ॥ व्रीडितेवनतुव्रीडितास्वयंयोगाचार्यसुतात्वात् बहुतिथंबहुकालमितिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ विद्ययायोगबलेन ॥ ९ ॥ मांप्रत्याययस्वममप्रतीतिमुत्पादय ॥ १० ॥ परंअत्यंतंआपन्नःआपद्ग्रस्तोऽभूत् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

॥ १५ ॥ अंतरमवसरम् ॥१६॥ सरःस्नातः सरसिस्नातः ॥ १७ ॥ बाभ्रव्यःपांचालः ॥१८॥ इदमंतरमित्येवअयमवसरइतिमत्वा ॥ १९ ॥ २० ॥ तेइतितेषांमध्येऽभिजाताः कुलीनाश्चत्वारोवयमितिशेषः यूयंत्रयइतिशेषः अवसीदथयोगाद्भ्रष्टतयाविशीर्णाःस्थ ॥ २१ ॥ २२ ॥ स्रस्तरश्मिप्रतोदौतावित्यत्रसमुदायिधर्मेणसमुदायोविशेष्यते तर्कंपिबंतावित्यत्रपिबदपिबदसमुदायेपिबंतावितिवत् छत्रिणोगच्छंतीत्यत्रछत्र्यछत्रिसमुदायेवालिंगसमावायाच्छत्रिणइतिविशेषणंतद्वत् एवंपतितव्यजनावित्यपि ॥ २३ ॥ प्रत्यागच्छत्

चतुर्णांतुपितायोसौब्राह्मणानांमहात्मनाम् ॥ श्लोकंसोधीत्यपुत्रेभ्यःकृतकृत्यइवाभवत् १५ सराजानमथान्विच्छन्सहमंत्रिणमच्युतम् नददर्शांतरंकिंचित्श्लोकंश्रावयितुंतदा १६ अथराजासरःस्नातोलब्ध्वानारायणाद्वरम् ॥ प्रविवेशपुरींप्रीतोरथमारुह्यकांचनम् १७ तस्यरश्मीन्प्रत्यगृह्णात्कंडरीकोद्विजर्षभः ॥ चामरंव्यजनंचापिबाभ्रव्यःसमवाक्षिपत् १८ इदमंतरमित्येवततःसब्राह्मणस्तदा ॥ श्रावयामासराजानंश्लोकंतंसचिवौचतौ १९ सप्तव्याधादशार्णेषुमृगाःकालंजरेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःसरसिमानसे २० तेभिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ २१ तच्छ्रुत्वामोहमगमद्ब्रह्मदत्तोनराधिपः ॥ सचिवश्चास्यपांचाल्यःकंडरीकश्चभारत २२ स्रस्तरश्मिप्रतोदौतौपतितव्यंजनावुभौ ॥ दृष्ट्वाबभूवुरस्वस्थाःपौराश्चसुहृदस्तथा २३ मुहूर्तमेवराजाससहताभ्यांरथेस्थितः ॥ प्रतिलभ्यततःसंज्ञांप्रत्यागच्छदरिंदमः २४ ततस्तेतत्सरःस्मृत्वायोगंतमुपलभ्यच ॥ ब्राह्मणंविपुलैरर्थैर्भोगैश्चसमयोजयन् २५ अभिषिच्यस्वराज्येतुविष्वक्सेनमरिंदमम् ॥ जगामब्रह्मदत्तोथसदारोवनमेवह २६ अथैनंसन्नतिर्धीरादेवलस्यसुतातदा ॥ उवाचपरमप्रीतायोगाद्वनगतंनृपम् २७ जानंत्यातेमहाराजपिपीलिकरुतज्ञताम् ॥ चोदितःक्रोधमुद्दिश्यसक्तःकामेषुवैमया २८ इतोवयंगमिष्यामोगतिमिष्टामनुत्तमाम् ॥ तवचांतर्हितोयोगस्ततःसंस्मारितोमया २९ सराजापरमप्रीतःपत्न्याःश्रुत्वावचस्तदा ॥ प्राप्ययोगंबलादेवगतिंप्रापसुदुर्लभाम् ३० कंडरीकोपिधर्मात्मासांख्ययोगमनुत्तमम् ॥ प्राप्ययोगगतिःसिद्धोविशुद्धस्तेनकर्मणा ३१

पुरमितिशेषः ॥ २४ ॥ तंयोगंपूर्वजन्मनिअभ्यस्तम् ॥२५॥२६॥ अथैनमिति यागुरोर्दोग्ध्रीकौशिकदायादैःपित्रर्थंप्रयुक्तासैवभार्यारूपेणराजानमेत्ययोगंस्मारितवतीप्रत्युपकारायेति केचित्पौराणिकींकथामाचक्षते योगाद्धेतोः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ सांख्यंप्राप्ययोगमतिः योगनिष्ठः पाठांतरे सांख्यंयोगगतिंचप्राप्येत्यन्वयः ॥ ३१ ॥

क्रमंवैदिकप्रसिद्धंप्रणीयविरच्यशिक्षांवर्णानांस्थानकरणप्रयत्नपूर्वकमुच्चारणसंप्रदायम् ॥ ३२ ॥ एतत्श्राद्धमाहात्म्यम् ॥ ३३ ॥ तेषांवाग्दुष्टादीनाम् ॥ ३४ ॥ परिवर्तीति
सर्वभावेनतिष्ठति ॥ ३५ ॥ तेनैवहृदियोगावस्थानेन ॥ ३६ ॥ एवमितिश्राद्धस्यफलंपितृणांतृप्तिः साचसोमाप्यायनद्वाराभवति तदेतद्देवानामन्नंतंदेवाभक्षयंतीतिसोमस्यदे
वान्नत्वश्रवणात्देवभावंगताःपितरः साक्षादेवसोमंपिबंतीत्यर्थः ॥ ३७ ॥ येतुभूमौसंतितेपिसोमद्वारैवतृप्यंतीत्याह सोमोहीति भूमिस्थान्पितॄन्दिव्यौषध्यादिद्वारासोमस्तर्प
यतीत्यर्थः एतेन अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठतइतिस्मृतेः ब्राह्मणाग्नौस्मार्ताग्नौश्रौताग्नौवापितॄनुद्दिश्ययद्धुतंतदादित्यंगच्छति आदित्यस्यसुषुम्नाख्येनरश्मिनासोमस्याप्या
यनंभवति ततःपितृणांतृप्तिरितिसर्वेषांपूर्वत्वादादित्यएवश्राद्धदेवोमुख्यइत्युत्तरंपूर्वंकृतस्यकथंवैश्राद्धंदेवत्वमादित्यस्यविवस्वतइतिप्रश्नस्यानिगूढामितिदिक् ॥ ३८ ॥ इतिहरिवं

क्रमंप्रणीयपांचाल्यःशिक्षांचोत्पाद्यकेवलाम् ॥ योगाचार्यगतिंप्रापयशश्चाग्र्यंमहातपाः ३२ एवमेतत्पुरावृत्तंममप्रत्यक्षमच्युत ॥
तद्धारयस्वगांगेयश्रेयसायोक्ष्यसेततः ३३ येचान्येधारयिष्यंतितेषांचरितमुत्तमम् ॥ तिर्यग्योनिषुतेजातुनगमिष्यंतिकर्हिचित् ३४
श्रुत्वाचेदमुपाख्यानंमहार्थंमहतांगतिम् ॥ योगधर्मोहृदिसदापरिवर्त्ततिभारत ३५ सतेनैवानुबंधेनकदाचिल्लभतेशमम् ॥ ततोयोग
गतिंयातिशुद्धांतांभुविदुर्लभाम् ३६ ॥ वैशंपायनउवाच ॥ एवमेतत्पुरागीतंमार्कंडेयेनधीमता ॥ श्राद्धस्यफलमुद्दिश्यसोमस्याप्या
यनायवै ३७ सोमोहिभगवान्देवोलोकस्याप्यायनंपरम् ॥ वृष्णिवंशप्रसंगेनतस्यवंशंनिबोधमे ३८ ॥ इतिश्रीमहाभारतेखिलेषुह
रिवंशेह०पर्वणिपितृकल्पसमाप्तिर्नामचतुर्विंशोऽध्यायः २४ ॥ वैशंपायनउवाच ॥ पितासोमस्यवैराजन्जज्ञेऽत्रिर्भगवानृषिः ॥ ब्रह्म
णोमानसात्पूर्वंप्रजासर्गंविधित्सतः १ तत्रात्रिःसर्वभूतानांतस्थौस्वतनयैर्युतः ॥ कर्मणामनसावाचाशुभान्येवचचारसः २ अहिंस्रः
सर्वभूतेषुधर्मात्मासंशितव्रतः ॥ काष्ठकुड्यशिलाभूतऊर्ध्वबाहुर्महाद्युतिः ३ अनुत्तरंनामतपोयेनतप्तंमहत्पुरा ॥ त्रीणिवर्षसहस्राणिदि
व्यानीतिहिनःश्रुतम् ४ तत्रोर्ध्वरेतसस्तस्यस्थितस्यानिमिषस्यह ॥ सोमत्वंतनुरापेदेमहासत्त्वस्यभारत ५

शेटीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ पंचविंशेतथाध्यायेसोमस्यात्रेःसमुद्भवः ॥ तस्यापत्यसमुत्पत्तिस्तस्माद्वंशश्चकीर्त्यते ॥ १ ॥ पिता मानसात् संकल्पात्
विधित्सतः विधातुमिच्छतः ॥ १ ॥ तत्रप्रजासर्गेतस्थौनिष्ठावानभूत् अतएवसोऽत्रिः भूतानांशुभान्येवस्वतनयैःसह कर्मादिनाआचचार ॥ २ ॥ काष्ठादिवन्निश्चेष्टः ॥ ३ ॥
अनुत्तरंनाममौनाख्यंसर्वेंद्रियनिग्रहरूपम् ॥ ४ ॥ अनिमिषस्यनिमेषरहितस्येत्यनेनसूर्यादिबाह्यज्योतीरश्मिषुधारणातस्याःबलसाम्यत्वंसोमत्वंशुक्लभास्वररूपत्वंकीटभृंगन्याये
नध्येयसारूप्यंप्राप्तइत्यर्थः महासत्त्वस्येत्यनेनतापकस्यरजसोऽभावात्शांतप्रकाशतेजोरूपत्वंदर्शितंतन्वाः ॥ ५ ॥

भावितात्मनः शुद्धशांतप्रकाशशुक्लभास्वररूपेणतेजसारांजितशरीरस्य नेत्राभ्यांनेत्रतःसोमत्वंउक्तरूपंतेजःऊर्ध्वमाचक्रमे तत्रप्रकारमाह वारीतिवारिजलंभूत्वासुस्रावेति ॥ ६ ॥
देव्योदिग्देवताःनचसमशक्नुवन्धारयितुम् ॥ ७ ॥ ताभ्यःसकाशात्सर्वभावनः औषध्यादिद्वारेणसर्वेषामाप्यायनकरः ॥ ८ ॥ ताभिःताभ्यःसहैवयुगपदेव ॥ ९ ॥ पतितं
लतारूपेणस्थितं आलोक्य ॥ १० ॥ रथस्वरूपमाह सहीति वेदमयःवेदैर्दारुभिरिवनिर्मितः धर्मोवियदादिः तत्स्वरूपोधर्मात्मा सत्यंब्रह्मसंगृह्यतेज्ञानेनआत्मसा
त्क्रियतइतिसत्यसंग्रहःवाजिस्थानीयामंत्राः ॥ ११ ॥ परमात्मानिविष्णुरूपे अतएवयागेसोमंरथेनानीयतस्यआतिथ्यार्थंवैष्णवीमिष्टिंनिर्वपंतियाज्ञिकाः ॥ १२ ॥ ऋग्भिरित्यनेनैवत

ऊर्ध्वमाचक्रमेतस्यसोमत्वंभावितात्मनः ॥ नेत्राभ्यांवारिसुस्रावदशधाद्योतयद्दिशः ६ तंगर्भंविधिनाहृष्टादशदेव्योदधुस्तदा ॥ समे
त्यधारयायामासुर्नचतास्समशक्नुवन् ७ सताभ्यःसहसैवाथदिग्भ्योगर्भःप्रभान्वितः ॥ पपातभासयँल्लोकान्शीतांशुःसर्वभावनः ८
यदानधारणेशक्तास्तस्यगर्भस्यतादिशः ॥ ततस्ताभिःसहैवाशुनिपपातवसुंधराम् ९ पतितंसोममालोक्यब्रह्मालोकपितामहः ॥ रथ
मारोपयामासलोकानांहितकाम्यया १० सहिवेदमयस्तातधर्मात्मासत्यसंग्रहः ॥ युक्तोवाजिसहस्रेणसितेनेतिहिनःश्रुतम् ११ त
स्मिन्निपतितेदेवाःपुत्रेऽत्रेःपरमात्मनि ॥ तुष्टुवुर्ब्रह्मणःपुत्रामानसाःसप्तयेश्रुताः १२ तथैवांगिरसस्तत्रभृगुरेवात्मजैःसह ॥ ऋग्भिर्य
जुर्भिर्बहुलैरथर्वांगिरसैरपि १३ तस्यसंस्तूयमानस्यतेजःसोमस्यभास्वतः ॥ आप्यायमानंलोकांस्त्रीन्भासयामाससर्वशः १४
सतेनरथमुख्येनसागरांतांवसुंधराम् ॥ त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणम् १५ तस्ययत्च्यावितंतेजःपृथिवीमन्वपद्यत ॥
औषध्यस्ताःसमुद्भूतास्तेजसाप्रज्वलंत्युत १६ ताभिर्धार्यास्त्रयोलोकाःप्रजाश्चैवचतुर्विधाः ॥ पोष्टाहिभगवान्सोमोजगतोजगतीपते १७
सलब्धतेजाभगवान्संस्तवैस्तैश्चकर्मभिः ॥ तपस्तेपेमहाभागपद्मानांदशतीर्दश १८ हिरण्यवर्णायादेव्योधारयंत्यात्मनाजगत् ॥
निधिस्तासामभूद्देवःप्रख्यातःस्वेनकर्मणा १९

दारूढानिसामान्यपिलक्ष्यंते बहुलैर्बहुभिः ॥ १३ ॥ आप्यायमानं अंशुरंशुष्टेदेवसोमाप्यायतामितिमंत्रेणऋत्विग्भिः पुष्टीक्रियामाणंतेजोंदिविमंडलरूपेणस्थित्वासर्वाँल्लोकानवभा
सयति ॥ १४ ॥ सःब्रह्मातेनसोमवतारथमुख्येन ॥ १५ ॥ तस्यसोमस्यच्यावितंरथवेगेनक्षारितं ॥ १६ ॥ त्रयोदेवपितृभूतलोकाः चत्वारोनरपशुपाक्षिसरीसृपाः भूरादयोजरायुजा
दयश्चेत्यन्ये ॥ १७ ॥ यथादशवारमावृत्तानवनवतिरेवंदशगुणिताःदशदशतिःतेनदशतिशब्दःषष्टिसप्ततिवत्शतवाची तेन सहस्रंपद्मानांवत्सराणामित्यर्थः ॥ १८ ॥ हिरण्यव
र्णाःरजतवत्शुक्लः हिरण्यंस्वर्णरूप्ययोरितिविश्वः तासामपांनिधिराश्रयः अतएवमणिद्वाराचंद्रोजलंक्षरतिसूर्यइवाग्निम् तेनयथार्कोभासांनिधिरेवंचंद्रोऽपांनिधिः ॥ १९ ॥

॥ २० ॥ राजराज्येनसाम्राज्यविधानेन ॥२१॥ इंदोःभार्याइतिशेषः॥ २२ ॥ सोमवतांपितॄणांवरः पतिः सोमःसुधांशुकर्पूरकुबेरपितृदैवतेइतिविश्वः सहस्रशतंलक्षंगावोदक्षिणा यस्मिन् ॥ २३ ॥ हिरण्यगर्भःअंगिराःतस्यारण्यकेसूत्रावतारत्वावगमात् हिरण्यगर्भत्वं ब्रह्मावसिष्ठश्चतुर्मुखोवा ॥२४ ॥ सदस्यःउपद्रष्टासप्तदशऋत्विक्सदइयंसप्तदशंकौषीत किनःसमामनंतिसकर्मणामुपद्रष्टाभवतीतिगृह्यात् ॥ २५॥ सदस्येभ्यःसभ्येभ्यः ॥२६॥ सिनिःसिनीवाली खंडपर्वणियापूर्वामावास्यासासिनीवालीया उत्तरासाकुहूः तस्या हचर्यात्तद्युतिपुष्टीअपिपूर्वोत्तरपौर्णमास्यौ सिषेविरेनित्यमितिशेषःअश्विन्यादयस्तुपर्यायेणैवसेवंतइतिभावः ॥ २७ ॥ प्राप्य ताभिःसहेतिशेषः अन्यथातत्कीर्तनवैयर्थ्यापत्तिः अतएवस्वमूर्त्यासहदशधादशभिःप्रकारैर्दिशोदशभासयन्नित्युक्तम् ॥ २८ ॥ विबभ्रामऐश्वर्यमदेनविनयात्चलिता अनयेनअनीत्या आहताताडिता ॥ २९ ॥ अनयमेवा

ततस्तस्मैददौराज्यंब्रह्माब्रह्मविदांवरः ॥ बीजौषधीनांविप्राणामपांचजनमेजय २० सोभिषिक्तोमहाराजराजराज्येनराजराट् ॥ लोकांस्त्रीन्भासयामासस्व भासाभास्वतांवरः २१ सप्तविंशतिमिंदोस्तुदाक्षायिण्योमहाव्रताः ॥ ददौप्राचेतसोदक्षोनक्षत्राणीतियाविदुः २२ सतत्प्राप्यमहद्राज्यंसोमःसोमवतां वरः ॥ समाजह्रेराजसूयंसहस्रशतदक्षिणम् २३ होतास्यभगवानत्रिरध्वर्युर्भगवान्भृगुः ॥ हिरण्यगर्भश्चोद्गाताब्रह्माब्रह्मत्वमेयिवान् २४ सदस्यस्तत्रभ गवान्हरिर्नारायणःस्वयम् ॥ सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः २५ दक्षिणामददात्सोमस्त्रीँल्लोकानितिनःश्रुतम् ॥ तेभ्योब्रम्हर्षिमुख्येभ्यःसदस्येभ्य श्चभारत २६ तंसिनिश्चकुहूश्चैवद्युतिःपुष्टिःप्रभावसुः ॥ कीर्त्तिर्धृतिश्चलक्ष्मीश्चनवदेव्यःसिषेविरे २७ प्राप्यावभृथमव्यग्रःसर्वदेवर्षिपूजितः ॥ विरराजाधिरा जेंद्रोदशधाभासयन्दिशः २८ तस्यतत्प्राप्यदुष्प्राप्यमैश्वर्यंमुनिसत्कृतम् ॥ विबभ्राममतिस्ताताविनयादनयाहता २९ बृहस्पतेःसवैभार्यांतारांनामयश स्विनीम् ॥ जहारतरसासर्वानवमत्यांगिरःसुतान् ३० सयाच्यमानोदेवैश्चतथादेवर्षिभिःसह ॥ नैवव्यसर्जयत्तारांतस्माआंगिरसेतदा ॥ ससंरब्धस्तत स्तस्मिन्देवाचार्योबृहस्पतिः ३१ उशनास्तस्यजग्राहपार्ष्णिमांगिरसस्तदा ॥ सहिशिष्योमहातेजाःपितुःपूर्वोबृहस्पतेः ३२ तेनस्नेहेनभगवान्रुद्रस्तस्य बृहस्पतेः ॥ पार्ष्णिग्राहोभवद्देवःप्रगृह्याजगवंधनुः ३३ तेनब्रम्हशिरोनामपरमास्त्रंमहात्मना ॥ उद्दिश्यदैत्यानुत्सृष्टंयेनैषांनाशितंयशः ३४

ह बृहस्पतेरिति ॥ ३० ॥ व्यसर्जयत्दत्तवान् तस्मिन्सोमेबृहस्पतिःसंरब्धोयुद्धायोद्युक्तोऽभूत् सार्द्धश्लोकः ॥ ३१ ॥ उशनेति तस्याकार्यकारित्वादसुरत्वंप्राप्तस्यसोमस्यदैत्य गुरुत्वादुशनाः शुक्रःपार्ष्णिजग्राह तदाह तस्मिन्नेवकालेआंगिरसोंगिरसःशिष्योरुद्रःबृहस्पतेःपार्ष्णिग्राहोभूदितिद्वयोःसंबंधः तत्रहेतुःसहीति सरुद्रोबृहस्पतेःपितुःअंगिरसःशिष्यः ॥ ३२ ॥ तेनगुरुपुत्रस्नेहेनेति आजगवंअजस्यगोश्चशृंगाभ्यांनिर्मिमत् अजस्यरुद्रस्यगौःवृषभःनंदीतेनशिवसारूप्यंप्राप्ययोगात्कामरूपत्वंचप्राप्यत्यत्पूर्वंस्वशरीरमुत्सृष्टंतस्यशृं गाज्जातंआजगवमितिवा ॥ ३३ ॥ तेनरुद्रेणएषांदैत्यानां ॥ ३४ ॥

तारकामयंतारानिमित्तत्वात्प्रधानं ॥ ३५॥ शिष्टाधर्मपराःदेवाःबृहस्पतिपक्षीयाः तुषः दोषकंचुकंसंजातंयेषांतेगुरुदारहर्तुःसोमस्यपक्षपातिनस्तुषितादेवाः ॥ ३६ ॥ ददौप्रत्यर्पयत्
॥ ३७ ॥ अंतःप्रसवांगर्भवतीम् ॥ ३८ ॥ अयोनौअस्थाने तदेवाह इषोकेति दस्युहंतमंअतिशयेनदस्यूनांहंतारम् ॥ ३९ ॥ आक्षिपत्स्वतेजसातिरश्चकार ॥ ४० ॥ ४१ ॥
पप्रच्छ मातरंविनाब्रह्मापिगर्भस्यधातारंनवेदेतिभावः ॥ ४२ ॥ ४३ ॥ धातागर्भस्याधायकः ततएवप्रजायाःपतिःरेतःसिंचःपुत्रोनक्षत्रपतेरितिभावः तथाचश्रुतिः जनयितुः

तत्रतद्युद्धमभवत्प्रख्याततंतारकामयम् ॥ देवानांदानवानांचलोकक्षयकरंमहत् ३५ तत्राशिष्टास्तुयेदेवास्तुषिताश्चैवभारत ॥ ब्रह्माणंशरणंजग्मुरादिदेवंस
नातनं ३६ ततोनिवार्योशनसंरुद्रंज्येष्ठंचशंकरम् ॥ ददावंगिरसेतारांस्वयमेवपितामहः ३७ तामंतःप्रसवांदृष्ट्वातारांप्राहबृहस्पतिः ॥ मदीयायांनतेयो
नौगर्भोधार्यःकथंचन ३८ अयोनावुत्सृजत्तंसाकुमारंदस्युहंतमम् ॥ इषीकास्तंबमासाद्यज्वलंतमिवपावकम् ३९ जातमात्रःसभगवान्देवानामक्षिपद्व
पुः ॥ ततःसंशयमापन्नाइमामकथयन्सुराः ४० सत्यंब्रूहिसुतःकस्यसोमस्याथबृहस्पतेः ॥ पृच्छ्यमानायदादेवैर्नाहसासाध्वसाधुवा ४१ तदातांशप्तुमा
रब्धःकुमारोदस्युहंतमः ॥ तंनिवार्यततोब्रह्मातारांपप्रच्छसंशयम् ४२ तदत्रतथ्यंतद्ब्रूहितारेकस्यसुतस्त्वयम् ॥ साप्रांजलिरुवाचेदंब्रह्माणंवरदंप्रभुम्
४३ सोमस्येतिमहात्मानंकुमारंदस्युहंतमम् ॥ ततस्तंमूर्ध्न्युपाघ्रायसोमोधाताप्रजापतिः ४४ बुधइत्यकरोन्नामतस्यपुत्रस्यधीमतः ॥ प्रतिकूलंचगगने
समभ्युत्तिष्ठतेबुधः ४५ उत्पादयामासततःपुत्रंवैराजपुत्रिका ॥ तस्यापत्यंमहाराजोबभूवैलःपुरूरवाः ४६ उर्वश्यांजज्ञिरेयस्यपुत्राःसप्तमहात्मनः ॥ प्रस
ह्यधर्षितस्तत्रसोमोवैराजयक्ष्मणा ४७ ततोयक्ष्माभिभूतस्तुसोमःप्रक्षीणमंडलः ॥ जगामशरणार्थायपितरंसोऽत्रमेवतु ४८ तस्यतत्तापशमनंचका
रात्रिर्महातपाः ॥ सराजयक्ष्मणामुक्तःश्रियाजज्वालसर्वतः ४९ एवंसोमस्यवैजन्मकीर्तितंकीर्तिवर्धनम् ॥ वंशमस्यमहाराजकीर्त्यमानंचमेशृणु ५०
धन्यमारोग्यमायुष्यंपुण्यंसंकल्पसाधनम् ॥ सोमस्यजन्मश्रुत्वेवपापेभ्योविप्रमुच्यते ॥ ५१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिपंच
विंशोऽध्यायः २५ ॥ ॥ वैशंपायनउवाच ॥ ॥ बुधस्यतुमहाराजविद्वान्पुत्रःपुरूरवाः ॥ तेजस्वीदानशीलश्चयज्वाविपुलदक्षिणः १ ब्रह्मवादीपरा
क्रांतःशत्रुभिर्युधिदुर्जयः ॥ अहर्ताचाग्निहोत्रस्ययज्ञानांचमहीपतिः २

पुत्रोभवतिसांपरायेमोघंवेत्ताकुरुतेतंतुमेतमिति ॥ ४४ ॥ सूर्योदयेऽर्कसांनिध्यात्प्रायेणास्तंगतएवभवतियदातूदेतितदाउत्पातंजनयतीत्याह प्रतीति ॥ ४५ ॥ ततःबुधात्वै
राजोमनुस्तस्यपुत्रिकाइला ॥ ४६ ॥ यस्यपुरूरवसः तत्रऔद्धत्येनिमित्तेसति ॥ ४७ ॥ प्रक्षीणमंडलःअल्पपरिधिः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ इतिहरिवंशेटीकायां
पंचविंशोऽध्यायः ॥ २५ ॥ षड्विंशेवर्ण्यतेवंशःपुरूरवसएवच ॥ उर्वश्यामथसंप्राप्तेस्त्रेताग्नेर्भुविदुर्लभा ॥ १ ॥ बुधस्येति ॥ १ ॥ शत्रुभिर्दुर्जयइतिसंबंधः ॥ २ ॥

काम्यः कामनीयः ॥ ३ ॥ मानंदेवभोग्याहंकथंमानुषंगच्छेयमितिगर्वम् ॥ ४ ॥ तयेति दशादिसंख्याष्टकंक्रमात्उत्तरस्थेनचैत्ररथादिस्थानाष्टकेनान्वेति ॥ ५ ॥ विशालायां वदर्या ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ दिविस्वर्गेजाताः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ घृतमात्राघृतस्यलेशः एकंकालंसकृदित्यर्थः घृतस्यस्तोकंसकृदह्नश्चाश्नामी

सत्यवादीपुण्यमतिःकाम्यःसंवृतमैथुनः ॥ अतीवत्रिषुलोकेषुयशसाऽप्रतिमःसदा २ तंब्रह्मवादिनंक्षांतंधर्मज्ञंसत्यवादिनम् ॥ उर्वशीवरयामासहित्वामानं यशस्विनी ४ तयासहावसद्राजावर्षाणिदशपंचच ॥ पंचषट्सप्तचाष्टौचदशचाष्टौचभारत ५ वनेचैत्ररथेरम्येतथामंदाकिनीतटे ॥ अलकायांविशालायां नंदनेचवनोत्तमे ६ उत्तरान्सकुरून्प्राप्यमनोरथफलद्रुमान् ॥ गंधमादनपादेषुमेरुपृष्ठेतथोत्तरे ७ एतेषुवनमुख्येषुसुरैराचरितेषुच ॥ उर्वश्यासहितोराजारेमेपरमयामुदा ८ देशेपुण्यतमेचैवमहर्षिभिरभिष्टुते ॥ राज्यंचकारयामासप्रयागेपृथिवीपतिः ९ तस्यपुत्राबभूवुस्तेसप्तदेवसुतोपमाः ॥ दिविजातामहात्मानआयुर्धीमानमावसुः १० विश्वायुश्चैवधर्मात्माश्रुतायुश्चतथापरः ॥ दृढायुश्चवनायुश्चशतायुश्चोर्वशीसुताः ११ ॥ ॥ जनमेजयउवाच ॥ ॥ गांधर्वीचोर्वशीदेवीराजानंमानुषंकथम् ॥ देवानुत्सृज्यसंप्राप्तातन्नोब्रूहिबहुश्रुत १२ ॥ वैशंपायनउवाच ॥ ब्रह्मशापाभिभूतासामानुषंसमपद्यत ॥ ऐलंतुसावरारोहासमयात्समुपस्थिता १३ आत्मनःशापमोक्षार्थंसमयंसाचकारह ॥ अनग्नदर्शनंचैवसकामायांचमैथुनम् १४ द्वौमेषौशयनाभ्याशेसदाबद्धौचतिष्ठतः ॥ घृतमात्रातथाहारःकालमेकंतुपार्थिव १५ यद्येषसमयोराजन्यावत्कालंचतेदृढः ॥ तावत्कालंतुवत्स्यामित्वत्तःसमयएषनः १६ तस्यास्तंसमयंसर्वंसराजासमपालयत् ॥ एवंसावसतेतत्रपुरूरवसिभामिनी १७ वर्षाण्येकोनषष्टिस्तुतत्सक्ताशापमोहिता ॥ उर्वश्यांमानुषस्थायांगंधर्वाश्चिंतयान्विताः १८ ॥ गंधर्वाऊचुः ॥ चिंतयध्वंमहाभागायथासातुवरांगना ॥ समागच्छेत्पुनर्देवानुर्वशीस्वर्गभूषणम् १९ ततोविश्वावसुर्नामतत्राहवदतांवरः ॥ मयातुसमयस्ताभ्यांक्रियमाणःश्रुतःपुरा २० व्युत्क्रांतसमयंसावैराजानंत्यक्ष्यतेयथा ॥ तदहंवेद्म्यशेषेणयथाभेत्स्यत्यसौनृपः २१ ससहायोगमिष्यामियुष्माकंकार्यसिद्धये ॥ एवमुक्त्वागतस्तत्रप्रतिष्ठानंमहायशाः २२ निशायामथचागम्यमेषमेकंजहारसः ॥ मातृवद्वर्ततेसातुमेषयोश्चारुहासिनी ॥ २३ गंधर्वागमनंश्रुत्वाशापांतंचयशस्विनी ॥ राजानमब्रवीत्तत्रपुत्रोमेऽह्रियतेतिसा २४

तिलिंगात् ॥ १५ ॥ त्वत्तःत्वयि ॥ १६ ॥ १७ ॥ एकोनषष्टिपूर्वोक्तदशादिसंख्यानांसंकलनात् ॥ १८ ॥ १९ ॥ २० ॥ भेत्स्यतिसमयम् ॥ २१ ॥ २२ ॥ २३ ॥ अह्रियतहृतः एवमुक्तइतिसंबंधः ॥ २४ ॥

॥ २५ ॥ २६ ॥ जायया प्रधावितः ॥ २७ ॥ पदंगतिचिह्नम् ॥ २८ ॥ २९ ॥ उरणौमेषौ गृह्यगृहीत्वा ॥ ३० ॥ ३१ ॥ हैमवत्यांहैमानिसौवर्णानिपद्मादीनितद्व त्याम् हैमवतीसंज्ञायामितिवा ॥ ३२ ॥ ३३ ॥ ३४ ॥ समाविग्नाः पुनरुर्वशीगमनशंकया हयेजायेमनसातिष्ठघोरेइतिसक्तादिमर्थतःपठति जायेइति हयेइत्यस्यव्याख्या

एवमुक्तोविनिश्चित्यनग्नोनैवोदतिष्ठत ॥ नग्नंमांद्रक्ष्यतेदेवीसमयोवितथोभवेत् २५ ततोभूयस्तुगंधर्वाद्वितीयंमेषमाददुः ॥ द्वितीयेतुहृतेमेषेऐलंदेव्यब्रवी दिदम् २६ पुत्रोमेपहृतोराजन्ननाथायाइवप्रभो ॥ एवमुक्तस्तथोत्थायनग्नोराजाप्रधावितः २७ मेषयोःपदमन्विच्छन्गंधर्वैर्विद्युदप्यथ ॥ उत्पादितासुम हतीययातद्भवनंमहत् २८ प्रकाशितंवैसहसाततोनग्नमवेक्षत ॥ नग्नंदृष्ट्वातिरोभूतासाप्सराकामरूपिणी २९ उत्सृष्टावुरणौदृष्ट्वाराजागृह्यागतोगृहे ॥ अ पश्यन्नुर्वशींतत्रविललापसुदुःखितः ३० चचारपृथिवींसर्वांमार्गमाणइतस्ततः ॥ अथापश्यत्सतांराजाकुरुक्षेत्रेमहाबलः ३१ प्लक्षतीर्थेपुष्करिण्यांहैमव त्यांसमाप्लुताम् ॥ क्रीडंतीमप्सरोभिश्चपंचभिःसहशोभनाम् ३२ तांक्रीडंतींततोदृष्ट्वाविललापसुदुःखितः ॥ साचापितत्रतंदृष्ट्वाराजानमविदूरतः ३३ उ र्वशीताःसखीःप्राहसएषपुरुषोत्तमः ॥ यस्मिन्नहमवात्संवैदर्शयामासतंनृपम् ३४ समाविग्नास्तुताःसर्वाःपुनरेवनराधिप ॥ जायेहतिष्ठमनसाघोरेवचसि तिष्ठह ३५ एवमादीनिसूक्तानिपरस्परमभाषत ॥ उर्वशीचाब्रवीदैलंसगर्भाहंत्वयाप्रभो ३६ संवत्सरात्कुमारास्तेभविष्यंतिनसंशयः ॥ निशामेकांच नृपतेनिवत्स्यसिमयासह ३७ हृतोजगामराजाथस्वपुरंतुमहायशाः ॥ गतेसंवत्सरेभूयउर्वशीपुनरागमत् ३८ उषितश्चतयासार्द्धंएकरात्रंमहायशाः ॥ उर्वश्यथाब्रवीदैलंगंधर्वावरदास्तव ३९ तान्वृणीष्वमहाराजब्रूहिचैनांस्त्वमेवहि ॥ वृणीष्वसमतांराजन्गंधर्वाणांमहात्मनाम् ४० तथेत्युक्त्वावरंवव्रे गंधर्वाश्चतथास्त्विति ॥ पूरयित्वाग्निनास्थालींगंधर्वाश्चतमब्रुवन् ४१ अनेनेष्ट्वाचलोकान्नःप्राप्स्यसित्वंनराधिप ॥ तानादायकुमारांस्तुनगरायोपचक्रमे॥ ४२ निक्षिप्याग्निमरण्येतुसपुत्रस्तुगृहंययौ ॥ सत्रेताग्नितुनापश्यदश्वत्थंतत्रदृष्टवान् ४३ शमीजातंतुतंदृष्ट्वाअश्वत्थंविस्मितस्तदा ॥ गंधर्वेभ्यस्तदाशं सदग्निनाशंततस्तुसः ४४

नंवचसीति हयेतिष्ठतिसंबंधात्जायेइत्यस्याःसंबुद्धेः पादादिस्थत्वादाद्युदात्तत्वम् ॥ ३५ ॥ सगर्भाहामित्युपगमनानर्हत्वमुक्तम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ समतां सारूप्यंसालोक्यंवा ॥ ४० ॥ ४१ ॥ ४२ ॥ निक्षिप्येत्यनेनपुत्रान्अग्निंचसहपुरंनप्रवेशयेदितिदर्शितम् सः त्रेताग्निंग्रामाद्बहिःप्राङ्निहितम् तत्रगत्वास्वस्थानेनापश्यत् अपितुअश्वत्थंदृष्टवान् तत्राग्निस्थानेअभ्येत्याग्निमित्यपिपठंति ॥ ४३ ॥ तंअश्वत्थंशमीजातंशमीगर्भोत्पन्नंनाशंअदर्शनम् नाशतस्तुसः ॥ ४४ ॥

अरणीमंथनेनाग्न्युत्पादनार्थंकाष्ठद्वयंततोऽश्वत्थात्तद्ग्राह्यमितिसमादिशत् ॥ ४५ ॥ तेषांगंधर्वाणाम् ॥ ४६ ॥ त्रेताग्नित्वविशिष्टचम् गुणआर्षःपृषोदरादित्वाद्वाविकारः अग्नित्रयंअकल्पयदित्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥ इतिहरिवंशेटीकायांपड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ उच्यतेमावसोर्वंशःसप्तविंशेप्रधानतः ॥ द्वितीयस्यैलपुत्रस्यसूच्यादिन्यायतःक्रमात् ॥ १ ॥ ऐलेति ॥ १ ॥ अथनग्नजिदितिद्वितीयः पुत्रः ॥ २ ॥ विदुषःपुत्रःसुहोत्रः ॥ ३ ॥ महत्सत्रम् अन्नदानंयत्रतंमखंसर्वमेधसंज्ञम् ॥ ४ ॥ पतिलो

श्रुत्वातमर्थमखिलमरणींतुसमादिशत् ॥ अश्वत्थादरणींकृत्वामथित्वाग्निंयथाविधि ॥ मथित्वाग्निंत्रिधाकृत्वाअयजत्सनराधिपः ४५ इष्ट्वायज्ञैर्बहुविधैर्गतस्तेषांसलोकताम् ४६ गंधर्वेभ्योवरंलब्ध्वात्रेताग्निंसमकारयत् ॥ एकोग्निःपूर्वमेवासीदैलस्त्रेतामकारयत् ४७ एवंप्रभावोराजासीदैलस्तुनरसत्तम ॥ देशेपुण्यतमेचैवमहर्षिभिरभिष्टुते ४८ राज्यंसकारयामासप्रयागेपृथिवीपतिः ॥ उत्तरेजाह्नवीतीरेप्रतिष्ठानेमहायशाः ४९ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिऐलोत्पत्तिर्नामषड्विंशोऽध्यायः २६ ॥ वैशंपायनउवाच ॥ ऐलपुत्राबभूवुस्तेसर्वेदेवसुतोपमाः ॥ दिविजातामहात्मानआयुर्धीमानमावसुः १ विश्वायुश्चैवधर्मात्माश्रुतायुश्चतथापरः ॥ दृढायुश्चवनायुश्चशतायुश्चोर्वशीसुताः ॥ अमावसोश्चदायादोभीमोराजाथनग्नजित् २ श्रीमान्भीमस्यदायादोराजासीत्कांचनप्रभः ॥ विद्वांस्तुकांचनस्यापिसुहोत्रोभून्महाबलः ३ सौहोत्रिरभवज्जह्नुःकेशिन्यागर्भसंभवः ॥ आजह्रेयोमहत्सत्रंसर्वमेधमहामखम् ४ पतिलोभेनयंगंगापतित्वेभिससारह ॥ नेच्छतःप्लावयामासतस्यगंगाचतत्सदः ॥ सतयाप्लावितंदृष्ट्वायज्ञवाटंसमंततः ५ सौहोत्रिरब्रवीद्गंगांक्रुद्धोभरतसत्तम ६ एषतेविफलंयत्नंपिबन्नंभःकरोम्यहम् ॥ अस्यगंगेवलेपस्यसद्यःफलमवाप्नुहि ७ राजर्षिणाततःपीतांगंगांदृष्ट्वामहर्षयः ॥ उपनिन्युर्महाभागांदुहितृत्वेनजाह्नवीं ८ युवनाश्वस्यपुत्रींतुकावेरींजह्नुरावहत् ॥ युवनाश्वस्यशापेनगंगार्धेनविनिर्ममे ॥ कावेरींसरितांश्रेष्ठांजह्नोर्भार्यामनिंदिताम् ९ जह्नुस्तुदयितंपुत्रंसुनहंनामधार्मिकं ॥ कावेर्यांजनयामासअजकस्तस्यचात्मजः १० अजकस्यतुदायादोबलाकाश्वोमहीपतिः ॥ बभूवमृगयाशीलःकुशस्तस्यात्मजोऽभवत् ११ कुशपुत्राबभूवुर्हिचत्वारोदेववर्चसः ॥ कुशिकःकुशनाभश्चकुशांबोमूर्त्तिमांस्तथा १२ पह्लवैःसहसंवृद्धोराजावनचरैस्तदा ॥ कुशिकस्तुतपस्तेपेपुत्रमिंद्रसमप्रभम् ॥ लभेयमितितंशक्रस्त्रासादभ्येत्यजज्ञिवान् १३

भेनपतिगुणलोभेन ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ जह्नोर्भार्यात्वमिच्छंत्यागंगायाः दुहितृत्वप्राप्तेर्वैध्यसंकल्पत्वंजातमित्याशंक्याह युवनाश्वस्येतिकेनचिन्निमित्तेनयुवनाश्वोगंगांमानुषीभवेतिशशाप साचतथैवदुहितृत्वंप्राप्यात्मसंकल्पमपिसत्यंचकारेतिसार्धस्यार्थः गंगास्वार्धेनकावेरीनिर्ममेपाठांतरेगंगायाअर्धेननिर्मितांकावेरींजह्नोर्भार्याविद्यादितिशेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ राजाकुशिकः इंद्रसमंपुत्रंलभेयमितितपस्तेपेइत्यन्वयःशक्रश्चमत्समोन्योभविष्यतीतित्रासादभ्येत्यतस्यपुत्रोजज्ञिवान्जातः ॥ १३

एतदेवस्पष्टयति पूर्णेइति ॥ १४ ॥ स्वंअंशंतस्यशरीरेरेतोरूपेणअवासयत्स्थापितवान्ततः भार्यायांतवपुत्रत्वेनकल्पयामासेत्यर्थः ॥ १५ ॥ पौरुकुत्सीपुरुकुत्सस्यपुत्रीभार्याकुशिकस्याभवत् ॥ १६ ॥ १७ ॥ गाधेस्तथैवचेतिप्रीतःसन्पुत्रार्थंचरुंकल्पयामासेत्यर्थः ॥ १८ ॥ उपयोज्यः भक्षणीयः अयमयमितिचरुद्वयस्यपृथक्प्रदर्शनम् ॥ १९ ॥तस्यांतवमातरि ॥ २० ॥ २१ ॥ २२ ॥२३ ॥ २४ ॥ व्यत्यस्यविपर्यासंकृत्वाअज्ञानात्ऋषिणातुल्यःस्वपुत्रोभूयादितिमोहात् आत्मसंस्थंचकारस्वयंभुक्तवती ॥ २५ ॥ २६ ॥

पूर्णेवर्षसहस्रेवैतंतुशक्रोह्यपश्यत ॥ अत्युग्रतपसंदृष्ट्वासहस्राक्षःपुरंदरः १४ समर्थःपुत्रजननेस्वमेवांशमवासयत् ॥ पुत्रत्वेकल्पयामाससदेवेंद्रःसुरोत्तमः १५ सगाधिरभवद्राजामघवान्कौशिकःस्वयं ॥ पौरुकुत्स्यभवद्भार्यागाधिस्तस्यामजायत १६ गाधेःकन्यामहाभागानाम्नासत्यवतीशुभा ॥ तांगाधिर्भृगुपुत्रायऋचीकायददौप्रभुः १७ तस्याःप्रीतोभवद्भर्ताभार्गवोभृगुनंदनः ॥ पुत्रार्थंकारयामासचरुंगाधेस्तथैवच १८ उवाचाहूयतांभर्ताऋचीकोभार्गवस्तदा ॥ उपयोज्यश्चरुरयंत्वयामात्रात्वयंतव १९ तस्यांजनिष्यतेपुत्रोदीप्तिमान्क्षत्रियर्षभः ॥ अजेयःक्षत्रियैर्लोकेक्षत्रियर्षभसूदनः २० तवापिपुत्रंकल्याणिधृतिमंतंतपोनिधिम् ॥ शमात्मकंद्विजश्रेष्ठंचरुरेषविधास्यति २१ एवमुक्त्वातुतांभार्यामृचीकोभृगुनंदनः ॥ तपस्यभिरतोनित्यमरण्यंप्रविवेशह २२ गाधिःसदारस्तुतदाऋचीकावासमभ्यगात् ॥ तीर्थयात्राप्रसंगेनसुतांद्रष्टुंजनेश्वरः २३ चरुद्वयंगृहीत्वातदृषेःसत्यवतीतदा ॥ चरुमादाययत्नेनसातुमात्रेन्यवेदयत् २४ माताव्यत्यस्यदैवेनदुहित्रेस्वंचरुंददौ ॥ तस्याश्चरुमथाज्ञानादात्मसंस्थंचकारह २५ अथसत्यवतीगर्भंक्षत्रियांतकरंतदा ॥ धारयामासदीप्तेनवपुषाघोरदर्शनम् २६ तामृचीकस्ततोदृष्ट्वायोगेनाभ्यनुसृत्यच ॥ तामब्रवीद्द्विजश्रेष्ठःस्वांभार्यांबरवर्णिनीम् २७ मात्रासिवंचिताभद्रेचरुव्यत्यासहेतुना ॥ जनिष्यतिहिपुत्रस्तेक्रूरकर्मातिदारुणः २८ भ्राताजनिष्यतेचापिब्रह्मभूतस्तपोधनः ॥ विश्वंहिब्रह्मतपसामयातस्मिन्समर्पितम् २९ एवमुक्तामहाभागाभर्त्रासत्यवतीतदा ॥ प्रसादयामासपतिंपुत्रोमेनेदृशोभवेत् ॥ ब्रम्हणापसदस्तत्रइत्युक्तोमुनिरब्रवीत् ३० नैषसंकल्पितःकामोमयाभद्रेतथास्त्विति ॥ उग्रकर्माभवेत्पुत्रःपितुर्मातुश्चकारणात् ॥ पुनःसत्यवतीवाक्यमेवमुक्त्वाब्रवीदिदं ३१ इच्छँल्लोकानपिमुनेसृजेथाःकिंपुनःसुतम् ॥ शमात्मकमृजुंत्वंमेपुत्रंदातुमिहार्हसि ३२ काममेवंविधःपौत्रोममस्यात्तवचप्रभो ॥ यद्यन्यथानशक्यंवैकर्तुमेतद्द्विजोत्तम ३३

योगेनध्यानेनअभ्यनुसृत्यज्ञात्वा ॥ २७ ॥ २८ ॥ विश्वंब्रह्मकृत्स्नोवेदः ॥ २९ ॥ मेमम ईदृशस्त्वत्तोब्राह्मणापसदोब्राह्मणाधमोमाभवेदितिसंबंधः ॥ ३० ॥ नैषइतिपितुर्मातुर्वादोषात्पुत्रउग्रकर्माभवेत् इहतुतवेवप्रमादाच्चरुव्यत्यासोजातः नतुममायंसंकल्पः तथाक्रूरप्रकारः पुत्रोभवेदित्यर्थः ॥ ३१ ॥ शमात्मकंसुतंसृजेथाइतिकिंपुनरितिसंबंधः ॥ ३२ ॥ काममिति आत्मावैपुत्रनामासीतिश्रुतेः पुत्रस्यभर्त्रभिन्नत्वात्तद्भार्याश्वसपत्नीतुल्यत्वेनतस्याएवएवंविधःपुत्रोस्तु यदिएतदन्यथाकर्तुंनशक्यंचेत्तस्यामपितादृशःपुत्रोमाभूदितिभावः ॥ ३३ ॥

तवेवममपौत्रेविशेपोनास्ति तस्यापिपरंपरयाममात्मकत्वादितिभावः ॥ ३४ ॥ ३५ ॥ भृगोःभार्गवस्यऋचीकस्ययजनात्देवताराधनात्वैष्णवः पालनकर्माप्यंशः शमात्मको जमदग्निरजायत ॥ ३६ ॥ ३७ ॥ ३८ ॥ आर्चीकोजमदग्निः जामदग्न्यंरामंसुदारुणंरुद्रांशत्वात् ॥ ३९ ॥४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ भृगोःऋचीकस्यप्रसादेन ॥ ४४ ॥ ॥ ४५ ॥ देवश्रवाःकातिःहिरण्याक्षश्चशालावत्यांरेणुमत्प्रभृतयोदेवलांताःरेणुसंज्ञायाम् ॥ ४६ ॥ अष्टकादयस्त्रयोदृषद्वत्याम् ॥ ४७ ॥ गोत्राणिपौत्रादयः ॥ ४८ ॥ पाणिनादयोद्वादश ॥ ४९ ॥ ५० ॥ देवलाःदेवलपुत्राः रेणवःरेणोःपौत्राइत्यर्थः याज्ञवल्क्यादयःषट्शालावतीपौत्राःहिरण्याक्षपुत्राः ॥ ५१ ॥ सांकृत्याःगालवाश्चरेणोःपौत्राःबादरायणिनश्चेत्यत्रबादरायणिर्नरश्चेतिपाठांतरम् ॥ ५२ ॥ एतेसांकृत्यादयःऋष्यंतरेप्रवरभेदेविवाहोयेषांतेऋष्यंतराविवाह्याः पौरवस्यराज्ञःब्रह्मर्षेःवसिष्ठादिकस्य ताभ्यांसहकौशिकस्यसंबंधोस्तीत्यर्थः ॥ ५३ ॥

ततःप्रसादमकरोत्सतस्यास्तपसोबलात् ॥ भद्रेनास्तिविशेषोमेपौत्रेचवरवर्णिनि ॥ त्वयायथोक्तंवचनंतथाभद्रेभविष्यति ३४ ततःसत्यवतीपुत्रंजनयामासभार्गवम् ॥ तपस्यभिरतंदांतंजमदग्निंशमात्मकम् ३५ भृगोश्चरुविपर्यासेरौद्रवैष्णवयोःपुरा ॥ यजनाद्वैष्णवेऽथांशेजमदग्निरजायत ३६ साहिसत्यवतीपुण्यासत्यधर्मपरायणा ॥ कौशिकीतिसमाख्याताप्रवृत्तेयंमहानदी ३७ इक्ष्वाकुवंशप्रभवोरेणुर्नामनराधिपः ॥ तस्यकन्यामहाभागाकामलीनामरेणुका ३८ रेणुकायांतुकामल्यांतपोविद्यासमन्वितः ॥ आर्चीकोजनयामासजामदग्न्यंसुदारुणम् ३९ सर्वविद्यानुगंश्रेष्ठंधनुर्वेदस्यपारगम् ॥ रामंक्षत्रियहंतारंप्रदीप्तमिवपावकम् ४० और्वस्यैवमृचीकस्यसत्यवत्यांमहायशाः ॥ जमदग्निस्तपोवीर्याज्जज्ञेब्रह्मविदांवरः ४१ मध्यमश्चशुनःशेपःशुनःपुच्छःकनिष्ठकः ॥ विश्वामित्रंतुदायादंगाधिःकुशिकनंदनः ४२ जनयामासपुत्रंतुतपोविद्याशमात्मकम् ॥ प्राप्यब्रह्मर्षिसमतांयोयंसप्तर्षितांगतः ४३ विश्वामित्रस्तुधर्मात्मानाम्नाविश्वरथःस्मृतः ॥ जज्ञेभृगुप्रसादेनकौशिकाद्वंशवर्धनः ४४ विश्वामित्रस्यतुसुतादेवरातादयःस्मृताः ॥ प्रख्याताविषुलोकेषुतेषांनामानिमेशृणु ४५ देवश्रवाःकतिश्चैवयस्मात्कात्यायनाःस्मृताः ॥ शालावत्यांहिरण्याक्षोरेणोर्जज्ञेथरेणुमान् ४६ सांकृतिर्गालवश्चैवमुद्गलश्चेतिविश्रुताः ॥ मधुच्छंदोजयश्चैवदेवलश्चतथाष्टकः ४७ कच्छपोहारितश्चैवविश्वामित्रस्यवैसुताः ॥ तेषांख्यातानिगोत्राणिकौशिकानांमहात्मनाम् ४८ पाणिनोबभ्रवश्चैवध्यानजप्यास्तथैवच ॥ पार्थिवादेवराताश्चशालंकायनबाष्कलाः ४९ लोहितायामदूताश्चतथाकारीषवःस्मृताः ॥ सौश्रुताःकौशिकाराजन्तथान्येसैंधवायनाः ५०/देवलारेणवश्चैवयाज्ञवल्क्यावमर्षणाः ॥ औदुंबराह्यभिष्णातास्तारकायनचुंचुलाः ५१ शालावत्याहिरण्याक्षाःसांकृत्यागालवास्तथा ॥ बादरायणिनश्चान्येविश्वामित्रस्यधीमतः ५२ ऋष्यंतराविवाह्याश्चकौशिकाबहवःस्मृताः ॥ पौरवस्यमहाराजब्रह्मर्षेःकौशिकस्यच ॥ संबंधोप्यस्यवंशेस्मिन्ब्रह्मक्षत्रस्यविश्रुतः ५३

भार्गवइति पूर्वंजमदग्नेःकनिष्ठोभ्राताशुनःशेफइतिउक्तत्वात् श्रुतौतुआंगिरसोजन्मनास्याजीगर्तःश्रुत.कविरितितस्यांगिरसत्वंदृष्टं तत्कल्पांतराभिप्रायेणज्ञेयं ॥५४ ॥ हरिदश्व स्यहरिश्चंद्रस्य ॥ ५५ ॥ देवावाइमंमह्यमरासतेतिसहदेवरातोवैश्वामित्रआसेतिश्रुत्यर्थंगृह्णातिदेवैरिति ॥ ५६ ॥ ५७ ॥ ५८ ॥ इतिहरिवंशेटीकायांसप्तविंशोऽध्यायः ॥ २७ ॥

विश्वामित्रात्मजानांतुशुनःशेफोग्रजःस्मृतः ॥ भार्गवःकौशिकत्वंहिप्राप्तःसमुनिसत्तमः ५४ विश्वामित्रस्यपुत्रस्तुशुनःशेफोभवत्किल ॥ हरिदश्वस्ययज्ञे तुपशुत्वेविनियोजितः ५५ देवैर्दत्तःशुनःशेफोविश्वामित्रायवैपुनः ॥ देवैर्दत्तःसवैयस्माद्देवरातस्ततोऽभवत् ५६ देवरातादयःसप्तविश्वामित्रस्यवैसुताः ॥ दृषद्वतीसुतश्चापिविश्वामित्रात्तथाष्टकः ५७ अष्टकस्यसुतोलौहिःप्रोक्तोजह्नुगणोमया ॥ अतऊर्ध्वंप्रवक्ष्यामिवंशमायोर्महात्मनः ५८ इतिश्रीमहाभारते खिलेषुहरिवंशेहरिवंशपर्वणिआमावसुवंशकीर्त्तनंनामसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ आयोःपुत्रास्तथापंचसर्वेवीरामहार थाः ॥ स्वर्भानुतनयायांचप्रभायांजज्ञिरेनृप १ नहुषःप्रथमंजज्ञेवृद्धशर्मातत:परम् ॥ रंभोरजिरनेनाश्चत्रिषुलोकेषुविश्रुताः २ रजिःपुत्रशतानीहजनयामा सपंचवै ॥ राजेयमितिविख्यातंक्षत्रमिंद्रभयावहम् ३ यत्रदेवासुरेयुद्धेसमुत्पन्नेसुदारुणे ॥ देवाश्चैवासुराश्चैवपितामहमथाऽब्रुवन् ४ आवयोर्भगवन्युद्धेकोवि जेताभविष्यति ॥ ब्रूहिनःसर्वभूतेशश्रोतुमिच्छामितेवचः ५ ब्रह्मोवाच ॥ येषामर्थायसंग्रामेरजिरात्तायुधःप्रभुः ॥ योत्स्यतेतेजयिष्यंतित्रीँल्लोकान्नात्रसंशयः ६ यतोरजिर्धृतिस्तत्रश्रीश्चतत्रयतोधृतिः ॥ यतोधृतिश्चश्रीश्चैवधर्मस्तत्रजयस्तथा ७ तेदेवदानवाःप्रीतादेवेनोक्तारजेर्जये॥अभ्ययुर्जयमिच्छंतोवृण्वानाभरत र्षभम् ८ सहिस्वर्भानुदौहित्रःप्रभायांसमपद्यत ॥ राजापरमतेजस्वीसोमवंशप्रवर्द्धनः ९ तेहृष्टमनसःसर्वेरजिंदेवाश्चदानवाः ॥ ऊचुरस्माज्जयायत्वंगृहाण वरकार्मुकम् १० अथोवाचरजिस्तत्रतयोर्वैदेवदैत्ययोः ॥ स्वार्थज्ञःस्वार्थमुद्दिश्ययशःस्वंचप्रकाशयन् ११ रजिरुवाच ॥ यदिदैत्यगणान्सर्वान्जित्वाश क्रपुरोगमाः ॥ इंद्रोभवामिधर्मेणततोयोत्स्यामिसंयुगे १२ देवाःप्रथमतोभूयप्रत्यूचुर्हृष्टमानसाः ॥ एवंयथेष्टंनृपतेकामःसंपद्यतांतव १३ श्रुत्वासुरगणा नांतुवाक्यंराजारजिस्तदा ॥ पप्रच्छासुरमुख्यांस्तुयथादेवानपृच्छत १४ दानवादर्पपूर्णास्तुस्वार्थमेवानुगम्यह ॥ प्रत्यूचुस्तंनृपवरंसाभिमानमिदंव चः १५ अस्माकमिंद्रःप्रह्रादोयस्यार्थेविजयामहे ॥ अस्मिंस्तुसमयेराजन्तिष्ठेथाराजसत्तम १६ सतथेतिब्रुवन्नेवदेवैरप्यभिचोदितः ॥ भविष्यसींद्रोजि त्वैवंदेवैरुक्तस्तुपार्थिवः ॥ जघानदानवान्सर्वान्येवध्यावज्रपाणिनः १७

॥ अष्टाविंशेऽन्वयअथोउच्यतेरजिविक्रमः ॥ महेंद्रस्यच्युतिःस्वर्गात्प्रतिष्ठावुद्धिजाततः ॥ १ ॥ आयोःस्वर्भानोः राहोः ॥ १ ॥ २ ॥ ३ ॥ यत्रकालेसमुत्पन्नेउपस्थिते ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ देवेनब्रह्मणारजेःरजिंप्राप्यजयनिच्छंतःसंतःजयेजयनिमित्तंभरतर्षभंरजिंअभ्ययुः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ भोशक्रपुरोगमाःभोदेवाःपाठांतरेसुगमं ॥ १२ ॥ १३ ॥ १४ ॥ १५ समयेदेवराज्यप्राप्तिरूपेतिष्ठेथाः त्वंदेवानामेवइंद्रोभवनत्वस्माकंत्वदपेक्षास्तीतिभावः ॥ १६ ॥ वज्रपाणिनःवज्रपाणेः १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ दिवंब्रह्मलोकंप्राप्तेसतिआचारात्पितुर्द्रव्यंसर्वैर्भ्रातृभिर्विभज्यग्राह्यमितिव्यवहारात् ॥ २२ ॥ २३ ॥ महांश्चासावबलश्चेतिअतिदुर्बलइ त्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ हेशक्र यदित्वयाहंपूर्वमेवएवंचोदितःस्याम्तर्हि त्वत्प्रियार्थममअकर्तव्यंकर्तुमयोग्यंकुशास्त्रप्रणयनंकर्तव्यंनाभाविष्यत् ॥ २७ ॥ २८॥ २९

सविप्रनष्टांदेवानांपरमश्रीःश्रियंवशी ॥ निहत्यदानवान्सर्वानाजहाररजिःप्रभुः १८ ततोरजिंमहावीर्यंदेवैःसहशतक्रतुः ॥ रजेःपुत्रोहमित्युक्त्वापुनरेवा ब्रवीद्वचः १९ इंद्रोसितातदेवानांसर्वेषांनात्रसंशयः ॥ यस्याहमिंद्रःपुत्रस्तेख्यातिंयास्यामिकर्मभिः २० सतुशक्रवचःश्रुत्वावंचितस्तेनमायया ॥ तथे त्येवाब्रवीद्राजाप्रीयमाणःशतक्रतुम् २१ तस्मिंस्तुदेवसदृशेदिवंप्राप्तेमहीपतौ ॥ दायाद्यमिंद्रादाजह्रुराचारात्तनयारजेः २२ पंचपुत्रशतान्यस्यतद्वैस्थानंश तक्रतोः ॥ समाक्रमंतबहुधास्वर्गलोकंत्रिविष्टपम् २३ ततोबहुतिथेकालेसमतीतेमहाबलः ॥ हृतराज्योब्रवीच्छक्रोहृतभागोबृहस्पतिम् २४ इंद्रउवाच॥ बदरीफलमात्रंवैपुरोडाशंविधत्स्वमे ॥ ब्रह्मर्षेयेनतिष्ठेयंतेजसाप्यायितःसदा २५ ब्रह्मन्कृशोहंविमनाहृतराज्योहृताशनः ॥ हतौजादुर्बलोमूढोराजि पुत्रैःकृतःप्रभो २६ बृहस्पतिरुवाच ॥ ॥ यद्येवंचोदितःशक्रत्वयास्यांपूर्वमेवहि ॥ नाभविष्यत्त्वत्प्रियार्थमकर्तव्यंममानघ २७ प्रयतिष्यामिदेवेंद्रत्व त्प्रियार्थंनसंशयः ॥ यथाभागंचराज्यंचनचिरात्प्रतिलप्स्यसे २८ तथाततकरिष्यामिमाभूत्तेविक्लवंमनः ॥ ततःकर्मचकारास्यतेजसोवर्द्धनंतदा २९ ते षांचबुद्धिसंमोहमकरोद्द्विजसत्तमः ॥ नास्तिवादार्थशास्त्रंहिधर्मविद्वेषणंपरम् ३० परमंतर्कशास्त्राणामसतांतन्मनोनुगम् ॥ नहिधर्मप्रधानानांरोचतेतत्क थांतरे ३१ तेतद्बृहस्पतिकृतंशास्त्रंश्रुत्वाल्पचेतसः ॥ पूर्वोक्तधर्मशास्त्राणामभवन्द्वेषिणःसदा ३२ प्रवक्तुर्न्यायरहितंतन्मतंबहुमेनिरे ॥ तेनाधर्मेणतेपा पाःसर्वएवक्षयंगताः ३३ त्रैलोक्यराज्यंशक्रस्तुप्राप्यदुष्प्रापमेवच ॥ बृहस्पतिप्रसादाद्धिपरांनिर्वृतिमभ्ययात् ३४ तेयदातुसुसंमूढारागोन्मत्ताविधर्मि णः ॥ ब्रह्मद्विषश्चसंवृत्ताहतवीर्यपराक्रमाः ३५ ततोलेभेसुरैश्वर्यमिंद्रःस्थानंतथोत्तमम् ॥ हत्वारजिसुतान्सर्वान्कामक्रोधपरायणान् ३६ यइदंच्यावनं स्थानात्प्रतिष्ठांचशतक्रतोः ॥ शृणुयाद्धारयेद्वापिनसदौरात्म्यमाप्नुयात् ३७ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिआयुर्वंशकीर्तनंनामअष्टा विंशोऽध्यायः २८ वैशंपायनउवाच ॥ रंभोनपत्यस्तत्रासीद्वंशंवक्ष्याम्यनेनसः ॥ अनेनसःसुतोराजाप्रतिक्षत्रोमहायशाः १ प्रतिक्षत्रसुतश्चापिसृंजयोना मविश्रुतः ॥ सृंजयस्यजयःपुत्रोविजयस्तस्यचात्मजः २

नास्तिधर्मईश्वरइतिवादोयत्रतन्नास्तिवादम् तच्चतदर्थशास्त्रंचतत्तूनास्तिवादार्थशास्त्रम् ॥ ३० ॥ कथांतरे वार्ताप्रसंगेपि ॥ ३१ ॥ ३२ ॥ प्रवक्तुःउपदेष्टुः ॥ ३३ ॥ निर्वृतिसुख म् ॥ ३४ ॥ ३५॥ ३६ ॥ ३७॥ इतिहरिवंशेटीकायांअष्टाविंशोऽध्यायः ॥ विंशेनवाधिकेध्यायेप्रोक्तआनेनसोन्वयः ॥ तद्भ्रातुःक्षत्रवृद्धस्यवृद्धशर्मेतियोभवत् ॥ १ ॥ रंभः १ २

॥ ३ ॥ ४ ॥ क्षत्रवृद्धस्य वृद्धशर्मापरपर्यायस्य ॥ ५ ॥ ६ ॥७ ॥ गृत्समदसंततौशुनकादयोब्राह्मणाःअन्येक्षत्रियादयश्चशूद्रांताःपुत्राजाताः शलःमध्यमःसुनहोत्रपुत्रःतस्या
त्मजःशलात्मजः ॥ ८ ॥ काशःशुनहोत्रस्यप्रथमःपुत्रःतस्यअपत्यानिकाशयः तेषुदीर्घतपाःप्रथमइातशेषःततोधन्वाख्यात् धन्वंतरिर्जातः ॥ ९ ॥ पुनरिति समुद्रात्उत्पत्तिमपेक्ष्य
द्वितीयवारंजाज्ञिवान्जातः ॥ १० ॥ ११ ॥ १२ ॥ कलशात्समुद्रात् अभ्यसन्विष्णुंजपन्ध्यायन्वा ॥ १३ ॥ अप्सुजातत्वादब्जस्त्वमितिहोवाचविष्णुरितिशेषः ॥ १४ ॥ १५

विजयस्यकृतिःपुत्रस्तस्यहर्यश्वतःसुतः ॥ हर्यश्वतसुतोराजासहदेवःप्रतापवान् ३सहदेवस्यधर्मात्मानदीनइतिविश्रुतः ॥ नदीनस्यजयत्सेनोजयत्सेनस्यसंकृ
तिः ४ संकृतेरपिधर्मात्माक्षत्रधर्मामहायशाः ॥ अनेनसःसमाख्याताःक्षत्रवृद्धस्यमेशृणु ५ क्षत्रवृद्धात्मजस्तत्रसुनहोत्रोमहायशाः ॥ सुनहोत्रस्यदायादा
स्त्रयःपरमधार्मिकाः ६ काशःशलश्चद्वावेतौतथागृत्समदःप्रभुः ॥ पुत्रोगृत्समदस्यापिशुनकोयस्यशौनकाः ७ ब्राम्हणाःक्षत्रियाश्चैववैश्याःशूद्रास्तथैवच ॥
शलात्मजश्चार्ष्टिषेणस्तनूजस्तस्यकाशकः ८ काशस्यकाशयोराजन्पुत्रोदीर्घतपास्तथा ॥ धन्वस्तुदीर्घतपसोविद्वान्धन्वंतरिस्ततः ९ तपसोंतेसुमहतोजा
तोवृद्धस्यधीमतः ॥ पुनर्धन्वंतरिर्देवोमानुषेष्विहजाज्ञिवान् १० ॥ जनमेजयउवाच ॥ कथंधन्वंतरिर्देवोमानुषेष्विहजज्ञिवान् ॥ एतद्वेदितुमिच्छामित
न्मेब्रूहियथातथम् ११ ॥ वैशंपायनउवाच ॥ धन्वंतरेःसंभवोयंश्रूयतांभरतर्षभ ॥ जातःसहिसमुद्रात्तुमथ्यमानेपुरामृते १२ उत्पन्नःकलशात्पूर्वंसर्व
तश्चश्रियावृतः ॥ अभ्यसन्सिद्धिकार्येहिविष्णुंदृष्ट्वाहितास्थिवान् १३ अब्जस्त्वमितिहोवाचतस्मादब्जस्तुसःस्मृतः ॥ अब्जःप्रोवाचविष्णुंवैतवपुत्रोस्मि
वैप्रभो १४ विधत्स्वभागंस्थानंचममलोकेसुरेश्वर ॥ एवमुक्तःसदृष्ट्वावैतथ्यंप्रोवाचतंप्रभुः १५ कृतोयज्ञविभागोहियाज्ञियैर्हिसुरैःपुरा ॥ देवेषुविनियुक्तं
हिविद्धिहोत्रंमहर्षिभिः १६ नशक्यमुपहोमावैतुभ्यंकर्तुंकदाचन ॥ अर्वाक्भूतोसिदेवानांपुत्रत्वंतुनहीश्वरः १७ द्वितीयायांतुसंभूत्यांलोकेख्यातिंगमि
ष्यसि ॥ अणिमादिश्चतेसिद्धिर्गर्भस्थस्यभविष्यति १८ तेनैवत्वंशरीरेणदेवत्वंप्राप्स्यसेप्रभो ॥ चरुमंत्रैर्व्रतैर्जाप्यैर्यक्ष्यंतित्वांद्विजातयः १९

होत्रंहौम्यम् विनियुक्तंविद्धिजानीहि ॥ १६ ॥ उपहोमाःनारिष्टादयःक्षुद्रास्तुभ्यंमहतेदातुमयोग्याइतिभावः मुख्यहोममेवमदर्थंकल्पयेत्याशंकायामाह अर्वागिति हेपुत्रत्वंतुइदा
नींतनोसि अतस्त्वदर्थेऽन्यदवैदिकंप्रधानंकल्पयितुमशक्यमित्यर्थः ॥ १७ ॥ संभूत्यांजन्मनि ॥ १८ ॥ तेनैवद्वितीयेनैव अयंभावःसोपानारोहक्रमेणाऽधिकारिकेऽग्नौऊर्ध्वपद
मारूढेसत्यन्योभूमौकृतकर्मातत्स्थानमारोहति यथोक्तंमन्वंतराध्यायेऽत्रैव कृत्वाकर्मदिवंयांतिब्रह्मलोकंसनातनम् ॥ ततोन्येतपसायुक्ताःस्थानमापूरयंत्युतेति ॥ १९ ॥

अष्टधेति चिकित्सांगानांभेदादायुर्वेदस्याप्यष्टधात्वंचअंगानिवैद्यकेउक्तानि कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषान् ॥ अष्टावंगानितस्याहुश्चिकित्सायेषुसंश्रितेति ॥ कायचिकित्साबालचिकित्सेत्यादि ग्रहोभूतप्रेतादिःऊर्ध्वांगंशिरोनेत्रादि शल्यंशस्त्रघातादिदंष्ट्रास्थावरजंगमात्मकंविषं तेषांचिकित्साजरारसायनादिनाजरायाःदूरीकरणं वृषःवाजीकरणतंत्रम्अवश्यंभावित्वंपूर्वकल्पसदृशत्वादुत्तरकल्पस्य ॥ तच्चप्रजापतिरेववेद ॥ २० ॥२१॥ धिन्वन्प्रीणयन् देवादीनितिशेषः ॥२२ ॥ अब्जंधन्वंतरिंदेवंआराधितवान् ॥ २३ ॥

अष्टधात्वंपुनश्चैवमायुर्वेदंविधास्यसि ॥ अवश्यंभावीह्यर्थोयंप्राग्दृष्टस्त्वब्जयोनिना २० द्वितीयंद्वापरंप्राप्यभवितात्वंनसंशयः ॥ इमंतस्मैवरंदत्वाविष्णुरंतर्दधेपुनः २१ द्वितीयेद्वापरेप्राप्तेसौनहोत्रिःसकाशिराट् ॥ पुत्रकामस्तपस्तेपेधिन्वन्दीर्घतपास्तदा २२ प्रपद्येदेवतांतांतुयामेपुत्रंप्रदास्यति ॥ अब्जंदेवंसुतार्थायतदाराधितवान्नृपः २३ ततस्तुष्टःसभगवानब्जःप्रोवाचतंनृपम् ॥ यदीच्छसिवरंब्रूहितत्तेदास्यामिसुव्रत २४ ॥ नृपउवाच ॥ भगवन्यदितुष्टस्त्वंपुत्रोमेख्यातिमान्भव ॥ तथेतिसमनुज्ञायतत्रैवांतरधीयत २५ तस्यगेहेसमुत्पन्नोदेवोधन्वंतरिस्तदा ॥ काशिराजोमहाराजसर्वरोगप्रणाशनः ॥ २६ आयुर्वेदंभरद्वाजात्प्राप्येहभिषजांक्रियाम् ॥ तमष्टधापुनर्व्यस्यशिष्येभ्यःप्रत्यपादयत् २७ धन्वंतरेस्तुतनयःकेतुमानितिविश्रुतः ॥ अथकेतुमतःपुत्रोवीरोभीमरथःस्मृतः २८ सुतोभीमरथस्यापिदिवोदासःप्रजेश्वरः ॥ दिवोदासस्तुधर्मात्मावाराणस्यधिपोभवत् २९ एतस्मिन्नेवकालेतुपुरींवाराणसींनृप ॥ शून्यांनिवासयामासक्षेमकोनामराक्षसः ३० शप्ताहिसामतिमतानिकुंभेनमहात्मना ॥ शून्यावर्षसहस्रंवैभवित्रीनात्रसंशयः ३१ तस्यांतुशप्तमात्रायांदिवोदासःप्रजेश्वरः ॥ विषयांतेपुरींरम्यांगोमत्यांसन्यवेशयत् ३२ भद्रश्रेण्यस्यपूर्वंतुपुरीवाराणसीत्यभूत् ॥ भद्रश्रेण्यस्यपुत्राणांशतमुत्तमधन्विनाम् ३३ हत्वानिवेशयामासदिवोदासोनरर्षभः ॥ भद्रश्रेण्यस्यतद्राज्यंहृतंतेनबलीयसा ३४ ॥ जनमेजयउवाच ॥ वाराणसींनिकुंभस्तुकिमर्थंशप्तवान्प्रभुः ॥ निकुंभकश्चधर्मात्मासिद्धिक्षेत्रंशशापयः ३५ ॥ वैशंपायनउवाच ॥ दिवोदासस्तुराजर्षिर्नगरींप्राप्यपार्थिवः ॥ वसतिस्ममहातेजाःस्फीतायांतुनराधिपः ३६ एतस्मिन्नेवकालेतुकृतदारोमहेश्वरः ॥ देव्याःसप्रियकामस्तुन्यवसच्छ्वशुरांतिके ३७

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ एतस्मिन्दिवोदासराज्यस्यकालेशून्यांसतीं पश्चाद्राक्षसोरुद्रानुचरः निवासयामास ॥ ३० ॥ शून्यत्वेहेतुमाह शप्ताहीतिनिकुंभेनरुद्रगणेन ॥ ३१ ॥ विषयांतेगोमत्यांस्वदेशसीम्निगोमतीतीरे ॥ ३२ ॥ भद्रश्रेण्यस्ययदुवंशमहिष्मत्पुत्रस्य ॥ ३३ ॥ ३४ ॥ सिद्धिक्षेत्रंमोक्षक्षेत्रम् ॥ ३५ ॥ ॥ ३६ ॥ श्वशुरस्यहिमालयस्यांतिकेयदाऽवसत्तदैवदिवोदासोवाराणसींप्राप्तवानित्यर्थः ॥ ३७ ॥

॥ ३८ ॥ मेनापार्वत्याजननीजुगुप्सतेनिंदति ॥ ३९ ॥ निंदामेवाह सपार्षदइति ॥ ४० ॥ अवरदा अवराश्नीचान् शिवनिंदकान्दक्षादीन्द्यतिखंडयतीतितथापूर्वंशिवनिंदकःपितामेहतःइदानींताहशींमातरंमाहिंसेयमित्यभिप्रायेणशिवपार्श्वमुपागमत् ॥ ४१ ॥ ४२ ॥ वासार्थंवाराणसीमितिसंबंधः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ नि

देवाज्ञयापार्षदायेत्वधिरूपास्तपोधनाः ॥ पूर्वोक्तैरुपदेशैश्चतोषयंतिस्मपार्वतीम् ३८ हृष्यतेवैमहादेवीमेनानैवप्रहृष्यति ॥ जुगुप्सत्यसकृत्तांवैदेवींदेवं तथैवसा ३९ सपार्षदस्त्वनाचारस्तवभर्तामहेश्वरः ॥ दरिद्रःसर्वदेवासौशीलंतस्यनवर्त्तते ४० मात्रातथोक्तावरदास्त्रीस्वभावाच्चचुक्रुधे ॥ स्मितंकृत्वाचव रदाभवपार्श्वमथागमत् ४१ विवर्णवदनादेवीमहादेवमभाषत ॥ नेहवत्स्याम्यहंदेवनयमांस्वंनिकेतनम् ४२ तथाकर्तुंमहादेवःसर्वलोकानवैक्षत ॥ वा सार्थंरोचयामासपृथिव्यांकुरुनंदन ४३ वाराणसीमहातेजाःसिद्धिक्षेत्रंमहेश्वरः ॥ दिवोदासेनतांज्ञात्वानिविष्टांनगरींभवः ४४ पार्श्वेतिष्ठंतमाहूयनिकुंभ मिदमब्रवीत् ॥ गणेश्वरपुरींगत्वाशून्यांवाराणसींकुरु ४५ मृदुनैवाभ्युपायेनह्यतिवीर्यःसपार्थिवः ॥ ततोगत्वानिकुंभस्तुपुरींवाराणसींतदा ४६ स्वप्नेनि दर्शयामासकंडुकंनामनापितम् ॥ श्रेयस्तेहंकरिष्यामिस्थानंमेरचयानघ ४७ मद्रूपांप्रतिमांकृत्वानगर्यंतेतथैवच ॥ ततःस्वप्नेयथोद्दिष्टंसर्वंकारितवान्नृप४८ पुरीद्वारेतुविज्ञाप्यराजानंचयथाविधि ॥ पूजांतुमहतींतस्यनित्यमेवप्रयोजयत् ४९ गंधैश्चधूपमाल्यैश्चप्रोक्षणीयैस्तथैवच ॥ अन्नपानप्रयोगैश्चअ त्यद्भुतमिवाभवत् ५० एवंसंपूज्यतेतत्रनित्यमेवगणेश्वरः ॥ ततोवरसहस्रंतुनागराणांप्रयच्छति ॥ पुत्रान्हिरण्यमायुश्चसर्वान्कामांस्तथैवच ५१ राज्ञस्तु महिषीश्रेष्ठासुयशानामविश्रुता ॥ पुत्रार्थमागतादेवीसाध्वीराज्ञाप्रचोदिता ५२ पूजांतुविपुलांकृत्वादेवीपुत्रमयाचत ॥ पुनःपुनरथागत्यबहुशःपुत्रका रणात् ५३ नप्रयच्छतिपुत्रंहिनिकुंभःकारणेनहि ॥ राजातुयदिनःकुप्येत्कार्यंसिद्धिस्ततोभवेत् ५४ अथदीर्घेणकालेनक्रोधोराजानमाविशत् ॥ भूतए षमहान्द्वारिनागराणांप्रयच्छति ५५ प्रीतोवरान्वैशतशोममकिंनप्रयच्छति ॥ मामकैःपूज्यतेनित्यंनगर्यांमेसदैवहि ५६ विज्ञापितोमयात्यर्थंदेव्यामेपुत्रकार णात् ॥ नददातिचपुत्रंमेकृतघ्नःकेनहेतुना ५७ ततोनार्हतिसत्कारंमत्सकाशाद्विशेषतः ॥ तस्मात्तुनाशयिष्यामिस्थानमस्यदुरात्मनः ५८ एवंसतुविनि श्चित्यदुरात्माराजकिल्बिषी ॥ स्थानंगणपतेस्तस्यनाशयामासदुर्मतिः ५९ भग्नमायतनंदृष्ट्वाराजानमशपत्प्रभुः ॥ यस्मादनपराधस्यत्वयास्थानंविना शितम् ॥ पुर्थकस्मादियंशून्यातवनूनंभविष्यति ६०

दर्शयामास प्रत्ययंउत्पादितवान् ॥ ४७ ॥ ४८ ॥ राजानंविज्ञाप्ययथोद्दिष्टंनप्रतिमादिकंनगर्यंतेनगराद्बहिर्निकटेकारितवानितियोजना ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ राजाचासौकिल्बिषीतिसमासः ॥ ५९ ॥ प्रभुःनिकुंभः ॥ ६० ॥

शून्याभूदितिशेषःद्वितीयांतपाठेशप्त्वेत्यस्यशापेनकृत्वेत्यर्थः इष्ट्वास्वर्गंगतइत्यत्रेवधात्वर्थस्यकरणत्वेनैवान्वयः ॥ ६१ ॥ पदंस्थानं मोक्षलक्ष्मीविलासाख्यंप्रासादं ॥ ६२ ॥ देवः स्वरूपानुरूपेतत्ररमतेदेवीतुमायास्वरूपा स्वोच्छेदेहतौतत्रक्षेत्रेनरमतइतिभावः गृहविस्मयात् गृहेऽविमुक्तेयोविस्मयः आश्चर्यम् अनधिकारिणामपिमुक्तिप्रदानम् तस्मात्हेतो र्नरमतेअत्रपुर्यामितिसंबंधः सार्द्धः ॥ ६३ ॥ अहंनित्यमुक्तईश्वरोवेश्मगृहंशरीराख्यंननिवत्स्यामिनिवासयितुंनेच्छामि हियस्मात्मेममगृहंअविमुक्तम् यत्कालत्रयेऽपिनविमुक्तं अहेयानुपादेयात्मस्वरूपत्वात् तदेवप्रत्यक्चैतन्यंममगृहम् स्वेमहिम्निप्रतिष्ठितोहंदेहप्रतिष्ठोनभविष्यामीत्यर्थः तत्रत्वदिष्टेसंसारप्रदेशेगृहंत्वत्पितृगृहमितिकथापक्षेअन्यथात्वमे वदेहंप्राप्नुहिअहंत्वसंगएवास्मीत्यर्थःएतेनकाशीत्यागएवसंसारस्वीकारः तदत्यागएवमोक्षाख्यास्वरूपस्थितिरितिदर्शितम् ॥ ६४ ॥ त्रीणिश्रवणमननध्यानानि अंबकानि नेत्राणिविज्ञापकानियस्यसत्र्यंबकः तथाचश्रुतिरात्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइत्यात्मदर्शनसाधनत्वेनश्रवणादित्रयम् विधत्ते अतएवत्रिपुरांतकः त्रया णांस्थूलसूक्ष्मकारणानांपुराणशरीराणांअंतकोविनाशकः प्रविलापनकर्त्ता अविद्यास्वरूपाप्येषापुरतत्वंनजानातीतिहसन् यस्मान्महादेवेनअविमुक्तंहिमेगृहमित्युक्तं तस्मात्तदवि

ततस्तेनतुशापेनशून्यावाराणसीतदा ॥ शप्त्वापुरींनिकुंभस्तुमहादेवमथागमत् ६१ अकस्माच्चपुरीसातुविद्रुतासर्वतोदिशम् ॥ तस्यांपुर्यांततोदेवोनिर्ममेपद मात्मनः ६२ रमतेतत्रवैदेवोरममाणोगिरेःसुताम् ॥ नरतितत्रवैदेवीलभतेगृहविस्मयात् ॥ वसाम्यत्रनपुर्यांतुदेवीदेवमथाब्रवीत् ॥ ६३ ॥ देवउवाच ॥ नाहंवेश्मनिवत्स्यामिअविमुक्तंहिमेगृहम् ॥ नाहंतत्रगमिष्यामिगच्छदेविगृहंप्रति ६४ हसन्नुवाचभगवान्त्र्यंबकस्त्रिपुरांतकः ॥ तस्मात्तदविमुक्तंहिप्रो क्तंदेवेनवैस्वयम् ६५ एवंवाराणसीशप्ताअविमुक्तंचकीर्तितम् ६६ यस्मिन्वसतिवैदेवःसर्वदेवनमस्कृतः ॥ युगेषुत्रिषुधर्मात्मासहदेव्यामहेश्वरः ६७ अं तर्धानंकलौयातितत्पुरंहिमहात्मनः ॥ अंतर्हितेपुरेतस्मिन्पुरीसावसतेपुनः ॥ एवंवाराणसीशप्तानिवेशंपुनरागता ६८

मुक्तसंज्ञंवाराणसीक्षेत्रं ॥ ६५ ॥ अत्राप्रकृतस्याविमुक्तस्यकीर्तनंउपरिधारणन्यायेनचवाराणस्यामुख्यमविमुक्तत्वंदर्शयति तथाहिजाबालाः सोविमुक्तेप्रतिष्ठितइत्यावि मुक्तप्रतिष्ठत्वमात्मनउपक्षिप्य कुत्रतदविमुक्तमित्याकांक्षायांवरणायांनास्यांचमध्येप्रतिष्ठितइत्याधिभौतिकमविमुक्तंउक्त्वाकतमच्चास्यस्थानंभ्रुवोर्घ्राणस्यचयःसंधिरितिप्रश्नपूर्वकंश रीरेतत्स्थानं भ्रूघ्राणसंधिरित्यामनंति विस्तरस्त्वस्मत्कृतायामविमुक्तनिरुक्तौद्रष्टव्यः ॥ ६६ ॥ ६७ ॥ अंतर्द्धानमितिसार्धः पुरमस्यास्तीतिपुरीमहादेवःअंतर्हि तायामपिपुर्याम् स्वयमंतर्हितःसन्वसति देवताप्रतिमाद्युच्छेदेपिदेवतासान्निध्यंननिवर्त्ततइत्यर्थः पुनःकृतयुगारंभेपुरीनगरीवसतइतिव्याख्यानेपिअंतर्धानमात्रंपुर्याउक्तंनतू च्छेदः एवंपुरपतेरपिद्रष्टव्यम् किंच यावत्कलेःसंध्यांशोस्तितावदत्रद्वापरधर्माणांकियतामप्यनुवृत्तेःषट्त्रिंशत्सहस्रवत्सरपर्यंतंकलावपिपुरीनांतर्हिताभवतितन्निवृत्तौकेवलस्य कलेःप्रवृत्तौसत्यामेवचभवति अन्यथासंप्रत्युपलंभोनयुज्यतेतितिदिक् ॥ ६८ ॥

भद्रश्रेण्यस्यपुत्रशतंहत्वातेषुचरमोदुर्दमोबालत्वादुपेक्षितःबालइतिसंधिरार्षः घृणयादयया ॥ ६९ ॥ दायाद्यंपुत्रत्वंकृतवान्स्वीकृतवान्आजह्रेआहृतंदुर्दमेनेत्युत्तरेणान्वयः ७० ॥ ७१ ॥ तेनबालेनैवप्रहृतंअपहृतं तस्यदुर्दमस्यराज्यामितिशेषः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ लोपामुद्रा अगस्त्यभार्या शापस्यनिकुंभदत्तस्य ॥ ७६ ॥ रम्यामिति स हस्त्रवर्षपर्यंतंराक्षसाधिष्ठितत्वादरम्यैवपुराआसीदितिगम्यते सन्नतेरलर्कपुत्रस्य ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ वत्सस्यअलर्कपितुःपुत्रांतरमाह वत्सभूमिरिति भार्ग

भद्रश्रेण्यस्यपुत्रोवैदुर्दमोनामविश्रुतः ॥ दिवोदासेनबालेतिघृणयासविवर्जितः ६९ हैहयस्यतुदायाद्यंकृतवान्वैमहीपतिः ॥ आजह्रेपितृदायाद्यंदिवोदासहृतंबलात् ७० भद्रश्रेण्यस्यपुत्रेणदुर्दमेनमहात्मना ॥ वैरस्यांतंमहाराजक्षत्रियेणविधित्सता ७१ दिवोदासाद्दृषद्वत्यांवीरोजज्ञेप्रतर्दनः ॥ तेनपुत्रेण बालेनप्रहृतंतस्यवैपुनः ७२ प्रतर्दनस्यपुत्रौद्वौवत्सभार्गौबभूवतुः ॥ वत्सपुत्रोह्यलर्कस्तुसन्नतिस्तस्यचात्मजः ७३ अलर्कःकाशिराजस्तुब्रह्मण्यःसत्यसंगरः ॥ अलर्कंप्रतिराजर्षिंलोकैर्गीतःपुरातनैः ७४ षष्टिवर्षसहस्राणिषष्टिंवर्षशतानिच ॥ युवारूपेणसंपन्नआसीत्काशिकुलोद्वहः ७५ लोपामुद्राप्रसादेन परमायुरवापसः ॥ तस्यासीत्सुमहद्राज्यंरूपयौवनशालिनः ॥ शापस्यांतेमहाबाहुर्हत्वाक्षेमकराक्षसम् ७६ रम्यांनिवेशयामासपुरींवाराणसींपुनः ॥ सन्नतेरपिदायादःसुनीथोनामधार्मिकः ७७ सुनीथस्यतुदायादःक्षेम्योनाममहायशाः ॥ क्षेम्यस्यकेतुमान्पुत्रःसुकेतुस्तस्यचात्मजः ७८ सुकेतोस्तनयश्चापिधर्मकेतुरितिस्मृतः ॥ धर्मकेतोस्तुदायादःसत्यकेतुर्महारथः ७९ सत्यकेतुसुतश्चापिविभुर्नामप्रजेश्वरः ॥ आनर्तस्तुविभोःपुत्रःसुकुमारस्तुतत्सुतः ८० सुकुमारस्यपुत्रस्तुधृष्टकेतुःसुधार्मिकः ॥ धृष्टकेतोस्तुदायादोवेणुहोत्रःप्रजेश्वरः ८१ वेणुहोत्रसुतश्चापिभर्गोनामप्रजेश्वरः ॥ वत्सस्यवत्सभूमिस्तुभृगुभूमिस्तु भार्गवात् ८२ एतेत्वंगिरसःपुत्राजातावंशेथभार्गवे ॥ ब्राह्मणाःक्षत्रियावैश्यास्तयोःपुत्राःसहस्रशः ॥ इत्येतेकाशयःप्रोक्तानहुषस्यनिबोधमे ८३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिएकोनत्रिंशोऽध्यायः २९ ॥ छ ॥ वैशंपायनउवाच ॥ उत्पन्नाःपितृकन्यायांविरजायांमहौजसः ॥ नहुषस्यतुदायादाःषडिंद्रोपमतेजसः १ यतिर्ययातिःसंयातिरायतिःपांचिकोभवः ॥ सुयातिःषष्ठस्तेषांवैययातिःपार्थिवोऽभवत् ॥ यतिर्ज्येष्ठस्तुतेषांवैययातिस्तु ततःपरम् २ ककुत्स्थकन्यांगांनामलेभेपरमधार्मिकः ॥ यतिस्तुमोक्षमास्थायब्रह्मभूतोऽभवन्मुनिः ३

वात्वत्सभ्रातुः ॥ ८२ ॥ अंगिरसःगालवस्यांगिरसत्वात् भार्गवेविश्वामित्रस्यभार्गवत्वात् तयोः वत्सभूमिभृगुभूम्योः काशयःकाशवंश्याः ॥ ८३ ॥ ॥ इतिहरिवंशेटीकायांएकोनत्रिंशोऽध्यायः ॥ २९ ॥ छ ॥ त्रिंशेयवर्ण्यतेध्यायेययातेरन्वयंतथा ॥ चरितंचविरक्तिश्चगाथावैराग्यगर्भिणो ॥ १ ॥ उत्पन्नाःपितरः सुस्वधासंज्ञाःवैश्यपूज्यास्तेषांकन्यायाविरजाख्यायाम् ॥ १ ॥ २ ॥ मोक्षंमोक्षमार्गम् ॥ ३ ॥

ययातेर्भार्यांतरमाह देवयानीमिति ॥ ४ ॥ ५ ॥ असंगंसर्वत्रास्खलितगतिम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ शापेकारणमाह गार्ग्यस्यहीति वाक्शूरंनिष्ठुरभाषिणमितिहिंसने हेतुरुक्तः ॥ १० ॥ लोहगंधिःबाह्यसदृशः लोहोऽस्त्रीशस्त्रेकेलोहोजोंककेइतिमेदिनी जोंककः पतितः ज्ञातिबाह्यइतियावत् जुगित्यागेरयरूपम् ॥ ११ ॥ संविदम् स्वास्थ्यज्ञा

तेषांययातिःपंचानांविजित्यवसुधामिमाम् ॥ देवयानीमुशनसःसुतांभार्यामवापसः ॥ शर्मिष्ठामासुरींचैवतनयांवृषपर्वणः ४ यदुंचतुर्वसुंचैवदेवयानीव्य जायत ॥ द्रुह्युंचानुंचपूरुंचशर्मिष्ठावार्षपर्वणी ५ तस्मैशक्रोददौप्रीतोरथंपरमभास्वरम् ॥ असंगंकांचनंदिव्यंदिव्यैःपरमवाजिभिः ६ युक्तंमनोजवैःशुभ्रैर्ये नभार्यामुवाहसः ॥ सतेनरथमुख्येनषड्रात्रेणाजयन्महीम् ॥ ययातिर्युधिदुर्द्धर्षस्तथादेवान्सवासवान् ७ सरथःपौरवाणांतुसर्वेषामभवत्तदा ॥ याव त्तुवसुनाम्नोवैकौरवाज्जनमेजयः ८ कुरोःपुत्रस्यराजेंद्रराज्ञःपारीक्षितस्यह ॥ जगामसरथोनाशंशापाद्गार्ग्यस्यधीमतः ९ गार्ग्यस्यहिसुतंबालंसराजाज नमेजयः ॥ वाक्शूरंहिंसयामासब्रह्महत्यामवापसः १० सलोहगंधीराजर्षिःपरिधावन्नितस्ततः ॥ पौरजानपदैस्त्यक्तोनलेभेशर्मकर्हिचित् ११ ततःसदुः खसंतप्तोनालभत्संविदंक्वचित् ॥ इंद्रोतःशौनकंराजाशरणंप्रत्यपद्यत १२ याजयामासचेंद्रोताःशौनकोजनमेजयम् ॥ अश्वमेधेनराजानंपावनार्थंद्विजोत्त मः १३ सलोहगंधोव्यनशत्तस्यावभृथमेत्यह ॥ सचदिव्योरथोराजन्वसोश्चेदिपतेस्तदा ॥ दत्तःशक्रेणतुष्टेनलेभेतस्माद्बृहद्रथः १४ बृहद्रथात्क्रमेणैवगतो बार्हद्रथंनृपम् ॥ ततोहत्वाजरासंधंभीमस्तंरथमुत्तमम् १५ प्रददौवासुदेवायप्रीत्याकौरवनंदनः ॥ सप्तद्वीपांययातिस्तुजित्वापृथ्वींससागराम् १६ व्यभ जत्पंचधाराजन्पुत्राणांनाहुषस्तदा ॥ दिशिदक्षिणपूर्वस्यांतुर्वसुंमतिमान्नृपः १७ प्रतीच्यामुत्तरस्यांचद्रुह्युंचानुंचनाहुषः ॥ दिशिपूर्वोत्तरस्यांवैयदुंज्ये ष्ठंन्वयोजयत् १८ मध्येपूरुंचराजानमभ्यषिंचतनाहुषः ॥ तैरियंपृथिवीसर्वासप्तद्वीपासपत्तना १९ यथाप्रदेशमद्यापिधर्मेणप्रतिपाल्यते ॥ प्रजास्तेषां पुरस्तात्तुवक्ष्यामिनृपसत्तम २० धनुर्न्यस्यपृषत्कांश्चपंचभिःपुरुषर्षभैः ॥ जरावानभवद्राजाभारमावेश्यबंधुषु ॥ निःक्षिप्तशस्त्रःपृथिवींनिरीक्ष्यपृथिवी पतिः २१ प्रीतिमानभवद्राजाययातिरपराजितः ॥ एवंविभज्यपृथिवींययातिर्यदुमब्रवीत् २२ जरांमेप्रतिगृह्णीष्वपुत्रकृत्यांतरेणवै ॥ तरुणस्तवरूपेण चरेयंपृथिवीमिमाम् ॥ जरांत्वयिसमाधायतंयदुःप्रत्युवाचह २३

नोपायम् इंद्रोतशब्दोऽदंतः सांतश्च ॥ १२ ॥ १३ ॥ तस्मात्वसोः ॥ १४ ॥ १५ ॥ १६ ॥ दक्षिणपूर्वस्याम् आग्नेयकोणे ॥ १७ ॥ पूर्वोत्तरस्याम् ऐशान्याम् ॥ १८ ॥ मध्येकुरुपांचालेषु ॥ १९ ॥ २० ॥ पंचभिःपुत्रैःकृतकृत्यः सन् धनुर्न्यस्तवान्ततश्चजरावानभूदित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

अनिर्दिष्टा इदंमेदेहीतिविशेषतोऽनुक्तामयाचप्रतिश्रुतात्वदिष्टंदास्यामीति तांअज्ञातांअनपाकृत्य ऋणवत्अपरिहृत्य ज्ञाताचेत्स्यात्तर्हितांनिधाय तवजरांगृहीतुंममावकाशः स्यादितिभावः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ कइति पितृवचनमुल्लंघ्यातिथ्यर्थसाधनंधर्मायेतिभावः देशिकः गुरुः विद्याप्रदः ॥ २८ ॥ २९ ॥ ३० ॥ पूर्वम् आ

अनिर्दिष्टामयाभिक्षाब्राह्मणस्यप्रतिश्रुता ॥ अनपाकृत्यतांराजन्नगृहीष्यामितेजराम् २४ जरायांबहवोदोषाःपानभोजनकारिताः ॥ तस्माज्जरांनतेराजन्गृहीतुमहमुत्सहे २५ संतितेबहवःपुत्रामत्तःप्रियतरानृप ॥ प्रतिगृहीतुंधर्मज्ञपुत्रमन्यंवृणीष्ववै २६ सएवमुक्तोयदुनाराजाकोपसमन्वितः ॥ उवाचवदतांश्रेष्ठोययातिर्गर्हयन्सुतम् २७ कआश्रयस्तवान्योस्तिकोवाधर्मोविधीयते ॥ मामनादृत्यदुर्बुद्धेयदहंतवदेशिकः २८ एवमुक्त्वायदुंतातशशापैनंसमन्युमान् ॥ अराज्यातेप्रजामूढभवित्रीतिनराधम २९ सतुर्वसुंचद्रुह्युंचाप्यनुंचभरतर्षभ ॥ एवमेवाब्रवीद्राजाप्रत्याख्यातश्चतैरपि ३० शशापतानतिक्रुद्धोययातिरपराजितः ॥ यथातेकथितंपूर्वंमयाराजर्षिसत्तम ३१ एवंशप्त्वासुतान्सर्वान्चतुरःपूरुपूर्वजान् ॥ तदेववचनंराजापूरुमप्याहभारत ३२ तरुणस्तवरूपेणचरेयंपृथिवीमिमाम् ॥ जरांत्वयिसमाधायत्वंपूरोयदिमन्यसे ३३ सजरांप्रतिजग्राहपितुःपूरुःप्रतापवान् ॥ ययातिरपिरूपेणपूरोःपर्यचरन्महीम् ३४ समार्गमाणःकामानामंतंभरतसत्तम ॥ विश्वाच्यासहितोरेमेवनेचैत्ररथेप्रभुः ३५ यदावितृष्णःकामानांभोगेषुसनराधिपः ॥ तदापूरोःसकाशाद्वैस्वांजरांप्रत्यपद्यत ३६ तत्रगाथामहाराजशृणुगीताययातिना ॥ याभिःप्रत्याहरेत्कामान्सर्वतोंगानिकूर्मवत् ३७ नजातुकामःकामानामुपभोगेनशाम्यति ॥ हविषाकृष्णवर्त्मेवभूयएवाभिवर्धते ३८ यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः ॥ नालमेकस्यतत्सर्वमितिपश्यन्नमुह्यति ३९ यदाभावंनकुरुतेसर्वभूतेष्वपापकम् ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा ४० यदान्येभ्योनबिभ्येतयदाचास्मान्नबिभ्यति ॥ यदानेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा ४१ यादुस्त्यजादुर्मतिभिर्यानजीर्यतिजीर्यतः ॥ योसौप्राणांतिकोरोगस्तांतृष्णांत्यजतःसुखम् ४२ जीर्यंतिजीर्यतःकेशादंताजीर्यंतिजीर्यतः ॥ जीविताशाधनाशाचजीर्यतोपिनजीर्यति ४३ यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखम् ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलाम् ४४ एवमुक्त्वासराजर्षिःसदारःप्राविशद्वनम् ॥ कालेनमहतावापिचचारविपुलंतपः ४५ भृगुतुंगेतपस्तप्त्वातपसोंतेमहातपाः ॥ अनश्नन्देहमुत्सृज्यसदारःस्वर्गमाप्तवान् ॥ ४६ तस्यवंशेमहाराजपंचराजर्षिसत्तमाः ॥ यैर्व्याप्तापृथिवीसर्वासूर्यस्येवगभस्तिभिः ४७

दिपर्वणि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अंतम् तृष्णावसानम् विश्वाचीअप्सराः इंद्रशापात्ककुत्स्थकन्यागोनाम्नीजाता साययातिनाऊढेतिज्ञेयम् ॥ ३५ ॥ अवितृष्णइतिच्छेदः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ पंचयदुप्रभृतयः ॥ ४७ ॥

॥ ४८ ॥ ४९ ॥ ॥ इतिहरिवंशेटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ ॥ एकत्रिंशेपुरोर्वंशेरौद्राश्वस्यसमुद्भवः तत्पुत्रस्याथकक्षेयोर्वंशस्तावन्निरूप्यते ॥ १ ॥ २ ॥ उत्त मंउत्कृष्टंपौरुषंयस्मिन् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ धनेयुश्चेत्यत्रवनेनेत्यिइत्यपिपाठः ॥ १० ॥ स्त्रीरत्नकूटाःस्त्रीरत्नान्युर्वश्यादीनि कुटोनिहोनानियाभ्य

यदोस्तुशृणुराजर्षेवंशंराजर्षिसत्कृतम् ॥ यत्रनारायणोजज्ञेहरिर्वृष्णिकुलोद्वहः ४८ धन्यःप्रजावानायुष्मान्कीर्तिमांश्चभवेन्नरः ॥ ययातेश्चरितंपुण्यंपठं च्छृण्वन्नराधिप ४९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिययातिचरितेत्रिंशोऽध्यायः ३० ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ ॥ पूरो र्वंशमहंब्रम्हन्श्रोतुमिच्छामितत्त्वतः ॥ द्रुह्योश्चानोर्यदोश्चैवतुर्वसोश्चपृथक्पृथक् १ वृष्णिवंशप्रसंगेनस्वंवंशंपूर्वमेवतु ॥ विस्तरेणानुपूर्व्याचतद्भवान्वक्तु मर्हति २ वैशंपायनउवाच ॥ ॥ शृणुपूरोर्महाराजवंशमुत्तमपौरुषम् ॥ विस्तरेणानुपूर्व्याचयत्रजातोसिपार्थिव ३ हंततेकीर्तयिष्यामिपूरोर्वंशमनु त्तमम् ॥ द्रुह्योश्चानोर्यदोश्चैवतुर्वसोश्चनराधिप ४ पूरोःपुत्रोमहावीर्योराजासीज्जनमेजयः ॥ प्रचिन्वांस्तुसुतस्तस्ययःप्राचीमजयद्दिशम् ५ प्रचिन्वतःप्रवी रोभून्मनस्युस्तस्यचात्मजः ॥ राजाचाभयदोनाममनस्योरभवत्सुतः ६ तथैवाभयदस्यासीत्सुधन्वातुमहीपतिः ॥ सुधन्वनोबहुगवःशम्यातिस्तस्यचा त्मजः ७ शम्यातेस्तुरहस्यातीरौद्राश्वस्तस्यचात्मजः ॥ रौद्राश्वस्यघृताच्यांवैदशाप्सरसिसूनवः ८ ऋचेयुःप्रथमस्तेषांकृकणेयुस्तथैवच ॥ कक्षेयुःस्थंडि लेयुश्चसन्नतेयुस्तथैवच ९ दशार्णेयुर्जलेयुश्चस्थलेयुश्चमहायशाः ॥ धनेयुश्चवनेयुश्चपुत्रिकाश्चदशास्त्रियः १० रुद्राशूद्राचभद्राचमलदामलहातथा ॥ ख लदाचैवराजेंद्रनलदासुरसापिच ॥ तथागोचपलातुस्त्रीरत्नकूटाचतादश ११ ऋषिर्जातोत्रिवंशेतुतासांभर्ताप्रभाकरः ॥ रुद्रायांजनयामाससुतंसोमंयश स्विनम् १२ स्वर्भानुनाहतेसूर्येपतमानेदिवोमहीम् ॥ तमोभिभूतेलोकेचप्रभायेनप्रकल्पिता १३ स्वस्तितेस्त्वितिचोक्तोवैपतमानोदिवाकरः ॥ वचना त्तस्यविप्रर्षेर्नपपातदिवोमहीम् १४ अत्रिश्रेष्ठानिगोत्राणियश्चकारमहातपाः ॥ यज्ञेष्वत्रेर्धनंचैवसुरैर्यस्यप्रवर्तितम् १५ सतासुजनयामासपुत्रिकासुसनाम कान् ॥ दशपुत्रान्महात्मासतपस्युग्रेरतान्सदा १६ तेतुगोत्रकराराजन्ऋषयोवेदपारगाः ॥ स्वस्त्यात्रेयाइतिख्याताःकिंत्वत्रिधनवर्जिताः १७ कक्षेयोस्त नयाश्चासन्त्रयएवमहारथाः ॥ सभानरश्चाक्षुषश्चपरमंयुस्तथैवच १८

स्ताः ॥ ११ ॥ १२ ॥ येनअत्रिणा ॥ १३ ॥ १४ ॥ अत्रिश्रेष्ठानीति धर्मशास्त्रेआत्रेयीवधेब्रह्महत्याव्रतस्योक्तत्वात् यज्ञेचआत्रेयायब्राह्मणायस्वातंत्र्येणदाक्षिणाविधानात् अत्रिरेवसर्वेषुगोत्रप्रवर्त्तकेषुश्रेष्ठः ॥ १५ ॥ पुत्रिकासुतुभ्यंकन्यांप्रदास्यामिदेवाग्निगुरुसंनिधौ ॥ अस्यांयोजायतेपुत्रःसमेपुत्रोभवेदितिपुत्रिकाकरणविधिनाप्राप्तासु ॥ १६ ॥ अतएवाहकिंत्वत्रिधनवर्जिताइति ॥ १७ ॥ कक्षेयोःरौद्राश्वसुतस्यतृतीयस्य ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ महामनसोज्येष्ठपुत्रस्योशीनरस्यसंततिमुक्त्वाकनिष्ठपुत्रस्यतितिक्षोर्वंशमाह ति
तिक्षोस्तुप्रजाःशृण्विति ॥ ३० ॥ ३१ ॥ यःपूर्वंबलिर्दानवेंद्रआसीत् सएवसुतपसः पुत्रोबलिनामाभूत् ॥ ३२ ॥ ३३ ॥ बालेयंबलेरपत्यम् ॥ ३४ ॥ ३५ ॥ ३६ ॥

सभानरस्यपुत्रस्तुविद्वान्कालानलोनृपः ॥ कालानलस्यधर्मज्ञःसृंजयोनामवैसुतः १९ सृंजयस्याभवत्पुत्रोवीरोराजापुरंजयः ॥ जनमेजयोमहाराजपुरंजय
सुतोभवत् २० जनमेजयस्यराजर्षेर्महाशालोभवत्सुतः ॥ वेदेषुसपरिज्ञातःप्रतिष्ठितयशाभुवि २१ महामनानामसुतोमहाशालस्यधार्मिकः ॥ जज्ञेवी
रःसुरगणैःपूजितःसुमहायशाः २२ महामनास्तुपुत्रौद्वौजनयामासभारत ॥ उशीनरंचधर्मज्ञंतितिक्षंचमहाबलम् २३ उशीनरस्यपत्न्यस्तुपंचराजर्षि
वंशजाः ॥ नृगाकृमीनवादर्वापंचमीचदृषद्वती २४ उशीनरस्यपुत्रास्तुपंचतासुकुलोद्वहाः ॥ तपसावैसुमहताजातावृद्धस्यभारत २५ नृगायास्तुनृगः
पुत्रःकृम्यांकृमिरजायत ॥ नवायास्तुनवःपुत्रोदर्वायाःसुव्रतोभवत् २६ दृषद्वत्यास्तुसंजज्ञेशिबिरौशीनरोनृपः ॥ शिबेस्तुशिवयस्तातयोधेयास्तुनृग
स्यह २७ नवस्यनवराष्ट्रंतुकृमेस्तुकृमिलापुरी ॥ सुव्रतस्यतथांबष्ठाशिबिपुत्रान्निबोधमे २८ शिबेश्चपुत्राश्चत्वारोवीरास्त्रैलोक्यविश्रुताः ॥ वृषदर्भःसुवी
रश्चमद्रकःकैकयस्तथा २९ तेषांजनपदाःस्फीताःकैकयामद्रकास्तथा ॥ वृषदर्भास्सुवीराश्चतितिक्षोस्तुप्रजाःशृणु ३० तैतिक्षवोभवद्राजापूर्वस्यांदिशि
भारत ॥ उषद्रथोमहाबाहुस्तस्यफेनःसुतोऽभवत् ३१ फेनात्तुसुतपाजज्ञेसुतःसुतपसोबलिः ॥ जातोमानुषयोनौतुसराजाकांचनेषुधिः ३२ महायोगी
सतुबलिर्बभूवनृपतिःपुरा ॥ पुत्रानुत्पादयामासपंचवंशकरान्भुवि ३३ अंगःप्रथमतोजज्ञेवंगःसुह्मस्तथैवच ॥ पुंड्रःकलिंगश्चतथाबालेयंक्षत्रमुच्यते ३४
बालेयाब्राह्मणाश्चैवतस्यवंशकराभुवि ॥ बलेस्तुब्रह्मणादत्तावराःप्रीतेनभारत ३५ महायोगित्वमायुश्चकल्पस्यपरिमाणतः ॥ संग्रामेवाप्यजेयत्वंधर्मेचै
वप्रधानता ३६ त्रैलोक्यदर्शनंचैवप्राधान्यंप्रसवेतथा ॥ बलेचाप्रतिमत्वंवैधर्मतत्त्वार्थदर्शनम् ३७ चतुरोनियतान्वर्णांस्त्वंचस्थापयिताभुवि ॥ इत्यु
क्तोविभुनाराजाबलिःशांतिंपरांययौ ३८ तस्यतेतनयाःसर्वेक्षेत्रजामुनिपुंगवाः ॥ संभूतादीर्घतपसोसुदेष्णायांमहौजसः ३९ बलिस्तानभिषिच्येहपंचपुत्रा
नकल्मषान् ॥ कृतार्थःसोपियोगात्मायोगमाश्रित्यसप्रभुः ४० अधृष्यःसर्वभूतानांकालापेक्षीचरन्नपि ॥ कालेनमहताराजन्स्वंचस्थानमुपागमत् ४१
तेषांजनपदाःपंचअंगावंगाःससुह्मकाः ॥ कलिंगाःपुंड्रकाश्चैवप्रजास्त्वंगस्यमेशृणु ४२ अंगपुत्रोमहानासीद्राजेंद्रोदधिवाहनः ॥ दधिवाहनपुत्रस्तुराजादि
विरथोऽभवत् ४३ पुत्रोदिविरथस्यासच्छिक्रतुल्यपराक्रमः ॥ विद्वान्धर्मरथोनामतस्यचित्ररथःसुतः ४४ प्रसवे अभ्यनुज्ञायांवाशि
ष्ट्वाख्यांसिद्धिमित्यर्थः॥ ३७ ॥ परांशांतिम् ज्ञानजंमोक्षम् ॥ ३८ ॥ क्षेत्रजाःबलेरूर्ध्वरेतस्त्वात् ॥ ३९ ॥ ४० ॥ स्वंस्थानम् सुतलम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

शक्रेणसहेति शक्रवद्देवत्वंप्राप्तइत्युक्तम् ॥ ४५ ॥ लोमपादापरनामा दशरथोयमन्यः ॥ ४६ ॥ ऋष्यशृंगस्य शांताभर्तुःप्रसादेन ॥ ४७ ॥ ४८ ॥ पूर्णभद्रोमुनिःतस्यप्रसादेन ॥ ४९ ॥ वैभांडकिर्विभांडकपुत्रऋष्यशृंगः तस्यार्थेइंद्रवारणंऐरावतंवारणम् वारिजलेरणति चरतीतिवारणम् समुद्रोद्भवमित्यर्थः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥ ब्रह्मक्षत्रोत्तरः ब्राह्मणेभ्यःशांत्यादिना क्षत्रियेभ्यःशौर्यादिना उत्तरः श्रेष्ठः ॥ ५६ ॥ ५७ ॥ सत्यकर्मणःपुत्रः सूतःब्राह्मण्यांक्षत्रियाज्जातत्वात् एतेनै

तेनचित्ररथेनाथतदाविष्णुपदेगिरौ ॥ यजतासहशक्रेणसोमःपीतोमहात्मना ४५ अथचित्ररथस्यापिपुत्रोदशरथोऽभवत् ॥ लोमपादइतिख्यातोयस्य शांतासुताभवत् ४६ तस्यदाशरथिर्वीरश्चतुरंगोमहायशाः ॥ ऋष्यशृंगप्रसादेनजज्ञेकुलविवर्द्धनः ४७ चतुरंगस्यपुत्रस्तुपृथुलाक्षइतिस्मृतः ॥ पृथुलाक्षसुतोराजाचंपोनाममहायशाः ४८ चंपस्यतुपुरीचंपायामालिन्यभवत्पुरा ॥ पूर्णभद्रप्रसादेनहर्यंगोऽस्यसुतोऽभवत् ४९ ततोवैभांडकिस्तस्यवारणंशक्रवारणम् ॥ अवतारयामाससमहींमंत्रैर्वाहनमुत्तमम् ५० हर्यंगस्यतुदायादोराजाभद्ररथःस्मृतः ॥ पुत्रोभद्ररथस्यासीद्बृहत्कर्माप्रजेश्वरः ५१ बृहद्दर्भःसुतस्तस्यतस्माज्जज्ञेबृहन्मनाः ॥ बृहन्मनास्तुराजेंद्रजनयामासवैसुतम् ५२ नाम्नाजयद्रथंनामयस्माद्दृढरथोनृपः ॥ आसीद्दृढरथस्यापिविश्वजिज्जनमेजय ॥ ५३ दायादस्तस्यकर्णस्तुविकर्णस्तस्यचात्मजः ॥ तस्यपुत्रशतंत्वासीदंगानांकुलवर्द्धनम् ॥ बृहद्दर्भसुतोयस्तुराजानाम्नाबृहन्मनाः ५४ तस्यपत्नीद्वयंचासीच्चैद्यस्यैतेसुतेशुभे ॥ यशोदेवीचसत्याचताभ्यांवंशस्तुभिद्यते ५५ जयद्रथस्तुराजेंद्रयशोदेव्यांव्यजायत ॥ ब्रह्मक्षत्रोत्तरःसत्यांविजयोनामविश्रुतः ॥ ५६ विजयस्यधृतिःपुत्रस्तस्यपुत्रोधृतव्रतः ॥ धृतव्रतस्यपुत्रस्तुसत्यकर्मामहायशाः ५७ सत्यकर्मसुतश्चापिसूतस्त्वधिरथस्तुवै ॥ यःकर्णंप्रतिजग्राहततःकर्णस्तुसूतजः ५८ एतद्वःकथितंसर्वंकर्णंप्रतिमहाबलम् ॥ कर्णस्यवृषसेनस्तुवृषस्तस्यात्मजःस्मृतः ५९ एतेंगवंशजाःसर्वेराजानःकीर्तितामया ॥ सत्यव्रतामहात्मानःप्रजावंतोमहारथाः ६० ऋचेयोस्तुमहाराजरौद्राश्वतनयस्यह ॥ शृणुवंशमनुप्रोक्तंयत्रजातोसिपार्थिव ६१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिकुक्षेयुवंशानुकीर्त्तनंनामएकत्रिंशोऽध्यायः ॥ ३१ ॥ वैशंपायनउवाच ॥ अनाधृष्यस्तुराजर्षिर्ऋचेयुश्चैकराट्स्मृतः ॥ ऋचेयोर्ज्वलनानामभार्यावैतक्षकात्मजा १ तस्यांसदेव्यांराजर्षिर्मतिनारोमहीपतिः ॥ मतिनारसुताश्चासन्त्रयःपरमधार्मिकाः २

वतस्यब्राह्मणीपरिग्रहःसूच्यते ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिटीकायांकुक्षेयुवंशानुकीर्त्तनंनामएकत्रिंशोऽध्यायः ॥ ३१ ॥
द्वात्रिंशेवर्ण्यतेवंशऋचेयोर्विविधागतिः ॥ त्रयाणांयदुमुख्यानामजमीढस्यचत्रिधा ॥ १ ॥ अनाधृष्यःअजय्यः ऋचेयुरेव ॥ १ ॥ समतिनारोजातइतिशेषः ॥ २ ॥

तंसुर्नामतःआद्योज्येष्ठःतंसुरोघइत्यपिपाठः ॥ ३ ॥ ४ ॥ काण्वायनाःकण्वस्यगोत्रापत्यानि ॥ ५ ॥ हेभूप यस्यकस्यकन्याईलिनीआसीत् सःईलिनोनामराजाब्रह्मवादिनि ब्राह्मणसमुदाये अधिअधिकःआसीत् तंसुश्चतांईलिनींस्त्रींस्त्रियंभार्याअभ्यगच्छतअधिगतवान् तस्मात्कण्वोभ्यजायत इलानाम्नीतुयस्यासीत्कन्येतिपाठस्तुप्रामादिकः तंसुना स्वानुजप्रपौत्रस्यदुहितापरिणीतेत्येवमर्थकत्वादयुक्तश्च ॥ ६ ॥ धर्मनेत्रःधर्मस्यप्रवर्त्तकः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ दुष्यंतंप्रतिराजानमितिसार्धश्लोकद्वयंस्पष्टार्थम् ॥ ११ ॥

तंसुराद्योप्रतिरथःसुबाहुश्चैवधार्मिकः ॥ गौरीकन्याचविख्यातामांधातृजननीशुभा ३ सर्वेवेदविदस्तत्रब्रह्मण्याःसत्यवादिनः ॥ सर्वेकृतास्त्राबलिनःसर्वे युद्धविशारदाः ४ पुत्रःप्रतिरथस्यासीत्कण्वःसमभवन्नृपः ॥ मेधातिथिःसुतस्तस्ययस्मात्काण्वायनाद्विजाः ५ ईलिनीभूपयस्यासीत्कन्यावैजनमेजय ॥ ब्रह्मवादिन्यधिस्त्रीचतंसुस्तामभ्यगच्छत ६ तंसोःसुरोधोराजर्षिर्धर्मनेत्रोमहायशाः ॥ ब्रह्मवादीपराक्रांतस्तस्यभार्योपदानवी ७ उपदानवीसुतांल्लेभेच तुरस्त्वैलिकात्मजान् ॥ दुष्यंतमथसुष्मंतंप्रवीरमनघंतथा ८ दुष्यंतस्यतुदायादोभरतोनामवीर्यवान् ॥ ससर्वदमनोनामनागायुतबलोमहान् ९ चक्रव र्तीसुतोजज्ञेदुष्यंतस्यमहात्मनः ॥ शकुंतलायांभरतोयस्यनाम्नास्थभारताः १० दुष्यंतंप्रतिराजानंवागुवाचाशरीरिणी ॥ माताभस्त्रापितुःपुत्रोयेनजातः सएवसः ११ भरस्वपुत्रंदुष्यंतमावमंस्थाःशकुंतलाम् ॥ रेतोधाःपुत्रउन्नयतिनरदेवयमक्षयात् १२ त्वंचास्यधातागर्भस्यसत्यमाहशकुंतला ॥ भरतस्य विनष्टेषुतनयेषुमहीपतेः १३ मातॄणांतातकोपेनमयातेकथितंपुरा ॥ बृहस्पतेरांगिरसःपुत्रोराजन्महामुनिः ॥ संक्रामितोभरद्वाजोमरुद्भिःक्रतुभिर्विभुः ॥ १४ अत्रैवोदाहरंतीमंभरद्वाजस्यधीमतः ॥ धर्मसंक्रमणंचापिमरुद्भिर्भरतायवै १५ अयोजयद्भरद्वाजोमरुद्भिःक्रतुभिर्हितम् ॥ पूर्वंतुवितथेतस्य कृतेवैपुत्रजन्मनि १६ ततोथवितथोनामभरद्वाजसुतोऽभवत् ॥ ततोथवितथेजातेभरतस्तुदिवंययौ १७ वितथंचाभिषिच्याथभरद्वाजोवनंययौ ॥ सराजावितथःपुत्रान्जनयामासपंचवै १८ सुहोत्रंचसुहोतारंगयंगर्गंतथैवच ॥ कपिलंचमहात्मानंसुहोत्रस्यसुतद्वयम् १९ काशिकश्चमहासत्वस्तथागृत्स मतिर्नृपः ॥ तथागृत्समतेःपुत्राब्राह्मणाःक्षत्रियाविशः २० काशिकस्यतुकाशयोपुत्रोदीर्घतपास्तथा ॥ बभूवदीर्घतपसोविद्वान्धन्वंतरिःसुतः २१

॥ १२ ॥ १३ ॥ पुराआदिपर्वणिआंगिरसः आंगिरसेवापत्यंभरद्वाजः क्रतुभिः क्रतुदेवताभिर्मरुद्भिःसंक्रामितः भरतपुत्रत्वंप्रापितः ॥ १४ ॥ १५ ॥ धर्मसंक्रमणंव्याचष्टे अयोजयदितिवितथेमातृभिःपुत्रद्योतनात् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ काशिकश्चेति पूर्वौकाशिकगृत्समदौ आयुसंज्ञात्वृद्धशर्मसुहोत्रक्रमेणचतुर्थौइमौतुतस्मादेवनहुष ययातिपूर्वादिक्रमेण एकविंशस्यसुहोत्रस्यपुत्रौ अतोतिविप्रकर्षात्ततोन्यौ अतएवईषन्नामभेदोपिगृत्समदोगृत्समतिरित्यादिर्दृश्यते ॥ २० ॥ २१ ॥

॥ २२ ॥ दिवोदासपदंव्युत्पादयति दिवोदासइतीति दिवःसप्तस्वर्गान् दस्यतिउपक्षिणोति आत्मैश्वर्यबलेनेतिदिवोदासः कर्मण्यण्विभक्तेरलुक्आर्षः ॥ २३ ॥ समानान्वयेयथासमाननामानोभवंति एवंसमानकर्माणोपिभवंतीतिज्ञापयन् पूर्वंदिवोदासवत् अनेनापिवाराणसीराज्यादिकंकृतम् पूर्वंनिकुंभादिवन्निकुंभांतरेणतद्वंश्येनवाराणसी शप्ता तद्वत्पूर्वक्षेमकवंश्येनक्षेमकांतरेणनिवेशितेत्यादि एकस्मिन्नपिकल्पेऽसकृत्समाननामकर्मणांपुंसांजन्मनविरुध्यतइत्यभिप्रेत्याह एतस्मिन्नित्यादि ॥ २४ ॥ २५ ॥ २६ ॥ भद्रश्रेण्यस्येति पूर्वोदिवोदासआयोर्वृद्धशर्मादिक्रमेणदशमः भद्रश्रेण्यश्चनहुषादिक्रमेणयदुवंशजएकादशः यदोस्त्वष्टमः तयोःसमानकालजत्वाद्विरोधोयुक्तः यस्तुआयोः नहुषा

धन्वंतरेस्तुतनयःकेतुमानितिविश्रुतः ॥ अथकेतुमतःपुत्रोवीरोभीमरथोनृपः २२ सुतोभीमरथस्यासीद्दिवोदासःप्रजेश्वरः ॥ दिवोदासइतिख्यातःसर्वरक्षोविनाशनः २३ एतस्मिन्नेवकालेतुपुरींवाराणसींनृप ॥ शून्यांनिवेशयामासक्षेमकोनामराक्षसः ॥ शप्ताहिसामतिमतानिकुंभेनमहात्मना २४ शून्यावर्षसहस्रंवैभवित्रीतिनराधिपः ॥ तस्यांतुशप्तमात्रायांदिवोदासःप्रजेश्वरः ॥ विषयांतेपुरींरम्यांगोमत्यांसन्यवेशयत् २५ भद्रश्रेण्यस्यपूर्वंतुपुरीवाराणसीभवत् ॥ यदुवंशप्रसूतस्यतपस्यभिरतस्यच २६ भद्रश्रेण्यस्यपुत्राणांशतमुत्तमधन्विनाम् ॥ हत्वानिवेशयामासदिवोदासःप्रजेश्वरः २७ दिवोदासस्यपुत्रस्तुवीरोराजाप्रतर्दनः ॥ प्रतर्दनस्यपुत्रौद्वौवत्सोभार्गस्तथैव २८ अलर्कोराजपुत्रस्तुराजासन्नतिमान्भुवि ॥ हैहयस्यतुदायाद्यंहृतवान्वैमहीपतिः २९ आजह्रेपितृदायाद्यंदिवोदासहृतंबलात् ॥ भद्रश्रेण्यस्यपुत्रेणदुर्दमेनमहात्मना ॥ दिवोदासेनबालेतिघृणयापरिवर्जितः ३० अष्टारथोनामनृपःसुतोभीमरथस्यवै ॥ तेनपुत्रेषुबालेषुप्रहृतंतस्यभारत ३१ वैरस्यांतंमहाराजक्षत्रियेणविधित्सता ॥ अलर्कःकाशिराजस्तुब्रम्हण्यःसत्यसंगरः ३२ षष्टिवर्षसहस्राणिषष्टिवर्षशतानिच ॥ तस्यासीत्सुमहद्राज्यंरूपयौवनशालिनः ३३ युवारूपेणसंपन्नआसीत्काशिकुलोद्वहः ॥ लोपामुद्राप्रसादेनपरमायुरवापसः ३४ वयसोंतेमहाबाहुर्हत्वाक्षेमकराक्षसम् ॥ शून्यांनिवेशयामासपुरींवाराणसींनृप ३५ अलर्कस्यतुदायादःसुनीथोनामपार्थिवः ॥ सुनीथस्यतुदायादःक्षेम्योनाममहायशाः ३६ क्षेम्यस्यकेतुमान्पुत्रोवर्षकेतुस्ततोभवत् ॥ वर्षकेतोस्तुदायादोविभुर्नामप्रजेश्वरः ३७

दिक्रमेणपुरुवंश्योऽष्टाविंशोदिवोदासः तस्यततोऽष्टमेनभद्रश्रेण्येनसहात्यंतंकालविप्रकर्षाद्विरोधोनसंभवतीति अयंएतत्समानकालीनोन्यइवभद्रश्रेण्योज्ञेयइतिभावः ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥ अष्टारथः प्रतर्दनः भीमरथस्येतिदिवोदासस्यविशेषणम् तस्यदुर्दमस्यबालेषुअसमर्थेषुपुत्रेषु ॥ ३१ ॥ अलर्कःप्रतर्दनस्यपौत्रःपुरींनिवेशयामासेतितृतीयेनान्वयः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

आनर्त्तस्तुविभोःपुत्रःसुकुमारस्ततोभवत् ॥ पुत्रस्तुसुकुमारस्यसत्य केतुर्महारथः ३८ ततोभवन्महातेजाराजापरमधार्मिकः ॥ वत्सस्यवत्सभूमिस्तुभा
र्गभूमिस्तुभार्गवात् ३९ एतेत्वंगिरसःपुत्राजातावंशेथभार्गवे ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चभरतर्षभ ४० सुहोत्रस्यबृहत्पुत्रोबृहतस्तनयास्त्रयः ॥
अजमीढोद्विमीढश्चपुरुमीढश्चवीर्यवान् ४१ अजमीढस्यपत्न्यस्तुतिस्रोवैयशसान्विताः ॥ नीलिनीकेशिनीचैवधूमिनीचवरांगना ४२ अजमीढस्यके
शिन्यांजज्ञेजह्नुःप्रतापवान् ॥ आजह्रेयोमहासत्रंसर्वमेधंमहामखम् ४३ पतिलोभेनयंगंगाविनीताभिससारह ॥ नेच्छतःप्लावयामासतस्यगंगाथतत्सदः
४४ सतयाप्लावितंदृष्ट्वायज्ञवाटंपरंतप ॥ जह्नुरप्यब्रवीद्गंगांक्रुद्धोभरतसत्तम ४५ एषतेत्रिषुलोकेषुसंक्षिप्यापःपिबाम्यहम् ॥ अस्यगंगेऽवलेपस्यसद्यः
फलमवाप्नुहि ४६ ततःपीतांमहात्मानोगंगांदृष्ट्वामहर्षयः ॥ उपनिन्युर्महाभागादुहितृत्वायजाह्नवीम् ४७ युवनाश्वस्यपुत्रींतुकावेरींजह्नुरावहत् ॥ गं
गाशापेनदेहार्द्धंयस्याःपश्चान्नदीकृतम् ४८ जह्नोस्तुदयितःपुत्रस्त्वजकोनामवीर्यवान् ॥ अजकस्यतुदायादोबलाकाश्वोमहीपतिः ४९ बभूवमृगयाशी
लःकुशिकस्तस्यचात्मजः ॥ पह्लवैःसहसंरुद्धोराजावनचरैस्तदा ५० कुशिकस्तुतपस्तेपेपुत्रमिंद्रसमंप्रभुः ॥ लभेयमितितंशक्रस्त्रासादभ्येत्यजज्ञिवान् ५१
सगाधिरभवद्राजामघवान्कौशिकःस्वयम् ॥ विश्वामित्रस्तुगाधेयोराजाविश्वरथस्तदा ५२ विश्वकृद्विश्वजिच्चैवतथासत्यवतीनृप ॥ ऋचीकाज्जमदग्नि
स्तुसत्यवत्यामजायत ५३ विश्वामित्रस्यतुसुतादेवरातादयःस्मृताः ॥ प्रख्यातास्त्रिषुलोकेषुतेषांनामानिमेशृणु ५४ देवश्रवाःकतिश्चैवयस्मात्कात्या
यनाःस्मृताः ॥ शालावत्याहिरण्याक्षोरेणोर्जज्ञेथरेणुमान् ५५ सांकृत्योगालवोराजन्मौद्गल्यश्चेतिविश्रुताः ॥ तेषांख्यातानिगोत्राणिकौशिकानांमहा
त्मनां ५६ पाणिनोबभ्रवश्चैवध्यानजप्यास्तथैवच ॥ पार्थिवादेवराताश्चशालंकायनसौश्रवाः ५७ लौहित्यायामदूताश्चतथाकारीषयःस्मृताः ॥ विश्रु
ताःकौशिकाराजन्तथान्येसैंधवायनाः ५८ ऋष्यंतरविवाह्याश्चकौशिकाबहवःस्मृताः ॥ पौरवस्यमहाराजब्रह्मर्षेःकौशिकस्यह ५९ संबंधोप्यस्यवंशेस्मि
न्ब्रह्मक्षत्रस्यविश्रुतः ॥ विश्वामित्रात्मजानांतुशुनःशेपोग्रजःस्मृतः ६० भार्गवःकौशिकत्वंहिप्राप्तःसमुनिसत्तमः ॥ देवरातादयश्चान्येविश्वामित्रस्यवैसु
ताः ६१ दृषद्वतीसुतश्चापिविश्वामित्रादथाष्टकः ॥ अष्टकस्यसुतोलौहिःप्रोक्तोजह्नुगणोमया ६२

अजमीढस्यबृहतः पुत्रस्यपत्न्यंतरेप्रसवांतरमाह अजमीढइति ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तेषांपंचानांदेशानांरक्षणेअलंसमर्थाएतेइतिश्रुतत्वात्पंचालाइतिनाम ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ अयंदिवोदासोब्राह्मणः ॥ ७० ॥ शरद्वतोगौतमस्य ॥ ७१ ॥ सत्यधृतेःशरद्वतःपौत्रस्य पूर्वंशरद्वतःसकाशात्कृपस्यजन्मउक्तम् अतोयंसत्यधृतिः पिता महस्वसमाननामेतिगम्यते अत्रेयंकथा शरद्वतः तपोविघ्नार्थआगतांजालपदीमप्सरसंदृष्ट्वा शरद्वांश्वकमे साचतद्वाङ्क्षितरात्प्रद्रुता ततस्तामनुधावतोमहर्षेरेतश्चस्कंदततोमिथुनंजा

अजमीढोऽपरोवंशःश्रूयतांपुरुषर्षभ ॥ अजमीढस्यनीलिन्यांसुशांतिरुदपद्यत ६३ पुरुजातिःसुशांतेस्तुबाह्याश्वःपुरुजातितः ॥ बाह्याश्वतनयाःपंचबभू वुरमरोपमाः ६४ मुद्गलःसृंजयश्चैवराजाबृहदिषुःस्मृतः ॥ यवीनरश्वविक्रांतःकृमिलाश्वश्चपंचमः ६५ पंचैतेरक्षणायालंदेशानामितिविश्रुताः ॥ पंचानां विद्धिपंचालान्स्फीतैर्जनपदैर्वृतान् ६६ अलंसंरक्षणेतेषांपंचालाइतिविश्रुताः ॥ मुद्गलस्यतुदायादोमौद्गल्यःसुमहायशाः ६७ सर्वएतेमहात्मानःक्षत्रोपे ताद्विजातयः ॥ एतेह्यंगिरसःपक्षंसंश्रिताःकण्वमौद्गलाः ६८ मौद्गलस्यसुतोज्येष्ठोब्रह्मर्षिःसुमहायशाः ॥ इंद्रसेनोयतोगर्भंवध्र्यश्वंप्रत्यपद्यत ६९ वध्र्य श्वान्मिथुनंजज्ञेमेनकायामितिश्रुतिः ॥ दिवोदासश्चराजर्षिरहल्याचयशस्विनी ७० शरद्वतस्यदायादमहल्यासमसूयत ॥ शतानंदमृषिश्रेष्ठंतस्यापिसुम हायशाः ७१ पुत्रःसत्यधृतिर्नामधनुर्वेदस्यपारगः ॥ तस्यसत्यधृतेरेतोदृष्ट्वाप्सरसमग्रतः ७२ अवस्कन्नंशरस्तंबेमिथुनंसमपद्यत ॥ कृपयातच्चजग्राहशं तनुर्मृगयांगतः ७३ कृपःस्मृतःसवैतस्माद्गौतमीचकृपीतथा ॥ एतेशारद्वताःप्रोक्ताएतेतेगौतमाःस्मृताः ७४ अतऊर्ध्वंप्रवक्ष्यामिदिवोदासस्यसंततिम् ॥ दिवोदासस्यदायादोब्रह्मर्षिर्मित्रयुर्नृपः ७५ मैत्रायणस्ततःसोमोमैत्रेयास्तुततःस्मृताः ॥ एतेहिसंश्रिताःपक्षंक्षत्रोपेतास्तुभार्गवाः ७६ आसीत्पंचजनःपुत्रः सृंजयस्यमहात्मनः ॥ सुतःपंचजनस्यापिसोमदत्तोमहीपतिः ७७ सोमदत्तस्यदायादःसहदेवोमहायशाः ॥ सहदेवसुतश्चापिसोमकोनामपार्थिवः ७८ अजमीढात्पुनर्जातःक्षीणवंशेतुसोमकः ॥ सोमकस्यसुतोजंतुर्यस्यपुत्रशतंबभौ ७९ तेषांयवीयान्पृषतोद्रुपदस्यपिताप्रभुः ॥ धृष्टद्युम्नस्तुद्रुपदाद्धृष्टकेतुश्चत त्सुतः ८० अजमीढाःस्मृताह्येतेमहात्मानस्तुसोमकाः ॥ पुत्राणामजमीढस्यसोमकत्वंमहात्मनः ८१ महिषीत्वजमीढस्यधूमिनीपुत्रगृद्धिनी ॥ तृतीया तवपूर्वेषांजननीपृथिवीपते ८२ सातुपुत्रार्थिनीदेवीव्रतचर्यासमान्विता ॥ ततोवर्षायुतंतप्त्वातपःपरमदुश्चरम् ८३

तमिति ॥ ७२ ॥ ७३ ॥ ७४ ॥ दिवोदासस्यक्षत्रियस्य ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ अजमीढात्सहदेवात्तस्ययज्ञेपशुभूतस्थानेपुत्रशतंबभौ शतंपुत्रानुद्दिश्यतेनैवप शुनायागस्यकृतत्वात् ॥ ७९ ॥ यवीयान्कनीयान् ॥ ८० ॥ ८१ ॥ तृतीयाअजमीढस्यभार्या ॥ ८२ ॥ ८३ ॥

॥ ८४ ॥ प्रयागादतिक्रम्य प्रयागंत्यक्त्वाकुरुक्षेत्रंस्वस्थानंचकार ॥ ८५ ॥ ८६ ॥ ८७ ॥ अरिमेजयःशत्रुकंपनःएजतेःस्वशूपूर्वपदस्यमुमागमश्च ॥ ८८ ॥ ८९ ॥ कृतयज्ञाचैद्या चेदिजा वसुंजनयामासेतिसार्द्धश्लोकोवाक्यम् चैद्यश्चेदिदेश्यःसचासौउपरिचरश्चेतिसमासः षट्पुत्रान्मानुषीभावेएकांकन्यांमत्सीभूत्वाजनयामासेत्यर्द्धस्यार्थः ॥ ९० ॥ ॥ ९१ ॥ कुशस्तृतीयः ॥ ९२ ॥ मारुतःचतुर्थःयदुःपंचमःमत्स्यःमत्सीसकाशात्कालीसत्यवतीषष्ठी सत्तमःसप्तमःपुत्रःपाठांतरंत्वनादरणीयम् ॥ ९३ ॥ ९४ ॥ ९५ ॥

हुत्वाग्निंविधिवत्सातुपवित्रमितभोजना ॥ अग्निहोत्रकुशेष्वेवसुष्वापजनमेजय ॥ धूमिन्यासतयादेव्यात्वजमीढःसमेयिवान् ८४ ऋक्षंसंजनयामासधूमवर्णंसुदर्शनम् ॥ ऋक्षात्संवरणोजज्ञेकुरुःसंवरणात्तथा ॥ यःप्रयागादतिक्रम्यकुरुक्षेत्रंचकारह ८५ तद्वैतत्समहाभागोवर्षाणिसबहून्यथ ॥ तप्यमानेतदाशक्रोयत्रास्यवरदोबभौ ८६ पुण्यंचरमणीयंचपुण्यकृद्भिर्निषेवितम् ॥ तस्यान्ववायःसुमहान्तस्यनाम्नास्थकौरवाः ८७ कुरोश्चपुत्राश्चत्वारःसुधन्वासुधनुस्तथा ॥ परिक्षिच्चमहाबाहुःप्रवरश्चारिमेजयः ८८ सुधन्वनस्तुदायादःसुहोत्रोमतिमांस्ततः ॥ च्यवनस्तस्यपुत्रस्तुराजाधर्मार्थकोविदः ८९ च्यवनात्कृतयज्ञस्तुइष्ट्वायज्ञैःसधर्मवित् ॥ विश्रुतंजनयामासपुत्रमिंद्रसमंनृपः ९० चैद्योपरिचरंवीरंवसुंनामांतरिक्षगम् ॥ चैद्योपरिचराज्जज्ञेगिरिकासप्तमानवान् ९१ महारथोमगधराड्विश्रुतोयोबृहद्रथः ॥ प्रत्यग्रहःकुशश्चैवयमाहुर्मणिवाहनम् ९२ मारुतश्चयदुश्चैवमत्स्यःकालीचसत्तमः ॥ बृहद्रथस्यदायादःकुशाग्रोनामविश्रुतः ९३ कुशाग्रस्यात्मजोविद्वान्वृषभोनामवीर्यवान् ९४ वृषभस्यतुदायादःपुष्पवान्नामधार्मिकः ॥ दायादस्तस्यविक्रांतोराजासत्यहितःस्मृतः ९५ तस्यपुत्रःसधर्मात्मानाम्नाऊर्जस्तुजज्ञिवान् ॥ ऊर्जस्यसंभवःपुत्रोयस्यजज्ञेसवीर्यवान् ९६ शकलेद्वेसवैजातोजरयासंधितःसतु ॥ जरयासंधितोयस्माज्जरासंधस्ततःस्मृतः ९७ सर्वक्षत्रस्यजेतासौजरासंधोमहाबलः ॥ जरासंधस्यपुत्रोवैसहदेवःप्रतापवान् ९८ सहदेवात्मजःश्रीमानुदायुःसमहायशाः ॥ उदायुर्जनयामासपुत्रंपरमधार्मिकम् ९९ श्रुतधर्मेतिनामानंमगधान्योवसद्विभुः ॥ परिक्षितस्तुदायादोधार्मिकोजनमेजयः १०० जनमेजयस्यदायादास्त्रयएवमहारथाः ॥ श्रुतसेनोग्रसेनौचभीमसेनश्चनामतः १ एतेसर्वेमहाभागाविक्रांताबलशालिनः ॥ जनमेजयस्यपुत्रौतुसुरथोमतिमांस्तथा २ सुरथस्यतुविक्रांतःपुत्रोजज्ञेविदूरथः ॥ विदूरथस्यदायादऋक्षएवमहारथः ३

यस्ययस्मात्संभवाख्यात्सः जरासंधःबृहद्रथाज्जरासंधइतिप्रागुक्तम् इदानींतस्मात्षष्ठोयमित्युक्तम् तत्राद्वितीयोबृहद्रथःसंभवाख्यइतिवाकल्पभेदात्क्रमभेदइतिवासमाधेयम् ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ परिक्षितः कुरोर्द्वितीयपुत्रस्य ॥ १०० ॥ जनमेजयस्यपुत्रौ मणिमत्यांजातौ पूर्वेभ्योन्यौ ॥ १ ॥ २ ॥ द्वितीयःपूर्वोक्ताद्दाक्षात्कुरुपितामहादन्यः ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ सप्तबाह्यम् सप्तविधप्राप्तिबाह्यम् साच ज्ञानेधर्मेबलेकामेविज्ञानोपायसंग्रहे ॥ मदर्थेभूभुजांनित्यंप्राप्तिःसप्तविधामतेतिज्ञानेशास्त्रांये विज्ञानेयुक्तिकौशलादौ मदर्थेशारीरभोगेचंदनतांबूलादौ शेषंस्पष्टं अन्येतुसप्तकगणाभ्यांबाह्यशून्यमित्याहुःसप्तकगणौचसप्तरत्नानिसप्तमहारत्नानि तथाहि गजवाजिरथास्त्रेषुनिधिमालांबरद्रुमाः शक्तिःसासिर्मणिच्छत्रविमानानिचतुर्दशेति अस्त्राणिचइषवश्चेतिपृथक् निधिर्निधानं मालास्रक्द्रुमाःदिव्याश्चंपकादयः सासिःसखड्गःविमानंअट्टालः ॥ ७ ॥ ८ ॥ ९ ॥

द्वितीयःसबभौराजानाम्नातेनैवसंज्ञितः ॥ द्वावृक्षौतववंशेस्मिन्द्वावेवतुपरिक्षितौ ४ भीमसेनास्त्रयोराजन्द्वावेवजनमेजयौ ॥ ऋक्षस्यतुद्वितीयस्यभीमसेनोऽभवत्सुतः ५ प्रतीपोभीमसेनस्यप्रतीपस्यतुशंतनुः ॥ देवापिर्बाह्लिकश्चैवत्रयएवमहारथाः ६ शंतनोःप्रसवस्त्वेषयत्रजातोसिपार्थिव ॥ बाह्लिकस्यतुराज्यंवैसप्तबाह्यंनरेश्वर ७ बाह्लिकस्यसुतश्चैवसोमदत्तोमहायशाः ॥ जज्ञिरेसोमदत्तात्तुभूरिर्भूरिश्रवाःशलः ८, उपाध्यायस्तुदेवानांदेवापिरभवन्मुनिः ॥ च्यवनस्यकृतःपुत्रइष्टश्चासीन्महात्मनः ९ शंतनुस्त्वभवद्राजाकौरवाणांधुरंधरः ॥ शंतनोःसंप्रवक्ष्यामियत्रजातोसिपार्थिव १10 गांगंदेवव्रतंनामपुत्रंसोजनयत्प्रभुः ॥ सतुभीष्मइतिख्यातःपांडवानांपितामहः ११ कालीविचित्रवीर्यंतुजनयामासभारत ॥ शंतनोर्दयितंपुत्रंधर्मात्मानमकल्मषम् १२ कृष्णद्वैपायनश्चैवक्षेत्रेवैचित्रवीर्यके ॥ धृतराष्ट्रंचपांडुंचविदुरंचाप्यजीजनत् १३ धृतराष्ट्रश्चगांधार्यांपुत्रानुत्पादयच्छतम् ॥ तेषांदुर्योधनःश्रेष्ठःसर्वेषामेवसप्रभुः १४ पांडोर्धनंजयःपुत्रःसौभद्रस्तस्यचात्मजः ॥ अभिमन्योःपरीक्षित्तुपितातवजनेश्वर १५ एषतेपौरवोवंशोयत्रजातोसिपार्थिव ॥ तुर्वसोस्तुप्रवक्ष्यामिद्रुह्योश्चानोर्यदोस्तथा १६ सुतस्तुतुर्वसोर्वह्निर्वह्नेर्गोभानुरात्मजः ॥ गोभानोस्तुसुतोराजात्रैसानुरपराजितः १७ करंधमस्तुत्रैसानोर्मरुत्तस्तस्यचात्मजः ॥ अन्यस्त्वावीक्षितोराजामरुत्तःकथितस्तव १८ अनपत्योभवद्राजायज्वाविपुलदक्षिणः ॥ दुहितासम्मतानामतस्यासीत्पृथिवीपतेः १९ दक्षिणार्थंस्मवैदत्तासंवर्त्तायमहात्मने ॥ दुष्यंतंपौरवंचापिलेभेपुत्रमकल्मषम् २० एवंययातेःशापेनजरासंक्रमणेतदा ॥ पौरवंतुर्वसोर्वंशःप्रविवेशनृपोत्तम २१ दुष्यंतस्यतुदायादःकरुत्थामःप्रजेश्वरः ॥ करुत्थामात्तथाक्रीडश्चत्वारस्तस्यचात्मजाः २२ पांड्यश्चकेरलश्चैवकोलश्चोलश्चपार्थिवः ॥ तेषांजनपदाःस्फीताःपांड्याश्चोलाःसकेरलाः २३ द्रुह्योश्चतनयोराजन्बभ्रुःसेतुश्चपार्थिवः ॥ अंगारसेतुस्तत्पुत्रोमरुतांपतिरुच्यते २४ यौवनाश्वेनसमरेकृच्छ्रेणनिहतोबली ॥ युद्धंसुमहदस्यासीन्मासान्परिचतुर्दश २५

१० ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अनपत्यःपुत्रापत्यरहितः ॥ १९ ॥ संवर्त्तायऋत्विजेदत्तासतीसंवर्त्तेनचदुष्यंतपित्रेसुधोरायदत्तासतीतस्मात्दुष्यंतंपुत्रंलेभे ॥ २० ॥ अतएवतुर्वसोर्वंशः पौरववंशंप्राविशेश असंक्रमणेनेतिच्छेदः ॥ २१ ॥ दुष्यंतस्यशकुंतलायांभरतः अन्यस्यांभार्यायां करुत्थामश्चासीदित्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

अंगारस्यतुदायादोगांधारोनामभारत ॥ ख्यायतेतस्यनाम्नावैगांधारविषयोमहान् २६ गांधारदेशजाश्चैवतुरगावाजिनांवराः ॥ अनोस्तुपुत्रोधर्मोभूतद्घृ
तस्तस्यात्मजोभवत् २७ घृतात्तुदुदुहोजज्ञेप्रचेतास्तस्यचात्मजः ॥ प्रचेतसःसुचेतास्तुकीर्तिताह्यानघोमया २८ यदोर्वंशंप्रवक्ष्यामिज्येष्ठस्योत्तमतेजसः ॥
विस्तरेणानुपूर्व्याच्चगदतोमेनिशामय १२९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिपुरुवंशानुकीर्तनेद्वात्रिंशोऽध्यायः ३२ ॥ छ ॥
वैशंपायनउवाच ॥ बभूवुस्तुयदोःपुत्राःपंचदेवसुतोपमाः ॥ सहस्रदःपयोदश्चक्रोष्टानीलोंजिकस्तथा १ सहस्रदस्यदायादास्त्रयःपरमधार्मिकाः ॥ हैहयश्च
हयश्चैवराजन्वेणुहयस्तथा २ हैहयस्याभवत्पुत्रोधर्मनेत्रइतिस्मृतः ॥ धर्मनेत्रस्यकार्तस्तुसाहंजस्तस्यचात्मजः ३ साहंजनीनामपुरीयेनराज्ञानिवेशि
ता ॥ साहंजस्यतुदायादोमहिष्मान्नामपार्थिवः ४ माहिष्मतीनामपुरीयेनराज्ञानिवेशिता ॥ आसीन्माहिष्मतःपुत्रोभद्रश्रेण्यःप्रतापवान् ५ वाराणस्य
धिपोराजाकथितःपूर्वमेवतु ॥ भद्रश्रेण्यस्यपुत्रस्तुदुर्दमोनामविश्रुतः ६ दुर्दमस्यसुतोधीमान्कनकोनामवीर्यवान् ॥ कनकस्यतुदायादाश्चत्वारोलोक
विश्रुताः ७ कृतवीर्यःकृतौजाश्चकृतवर्मातथैवच ॥ कृताग्निस्तुचतुर्थोभूत्कृतवीर्यात्तथार्जुनः ८ यस्तुबाहुसहस्रेणसप्तद्वीपेश्वरोऽभवत् ॥ जिगायपृथिवीमे
कोरथेनादित्यवर्चसा ९ सहिवर्षायुतंतप्त्वातपःपरमदुश्चरम् ॥ दत्तमाराधयामासकार्तवीर्योत्रिसंभवम् १० तस्मैदत्तोवरान्प्रादाच्चतुरोभूरितेजसः ॥ पूर्वं
बाहुसहस्रंतुप्रार्थितंसुमहद्वरम् ११ अधर्मेवर्तमानस्यसद्भिस्तत्रनिवारणम् ॥ उग्रेणपृथिवींजित्वास्वधर्मेणानुरंजनम् १२ संग्रामान्सुबहून्कृत्वाहत्वाचा
रीन्सहस्रशः ॥ संग्रामेवर्तमानस्यवधंचाप्यधिकाद्रणे १३ तस्यबाहुसहस्रंतुयुध्यतःकिलभारत ॥ योगाद्योगेश्वरस्यैवप्रादुर्भवतिमायया १४ तेनेयंपृथि
वीसर्वासप्तद्वीपासपत्तना ॥ ससमुद्रासनगराउग्रेणविधिनाजिता १५ तेनसप्तसुद्वीपेषुसप्तयज्ञशतानिवै ॥ प्राप्तानिविधिनाराज्ञाश्रूयंतेजनमेजय १६ सर्वे
यज्ञामहाबाहोस्तस्यासन्भूरिदक्षिणाः ॥ सर्वेकांचनयूपाश्चसर्वेकांचनवेदयः १७ सर्वैर्देवैर्महाराजविमानस्थैरलंकृताः ॥ गंधर्वैरप्सरोभिश्चनित्यमेवोपशो
भिताः १८ यस्ययज्ञेजगौगाथांगंधर्वोनारदस्तथा ॥ वरीदासात्मजोविद्वान्महिम्नातस्यविस्मितः १९

सुतस्यच .॥ १ ॥ बभूवुरिति ९२
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अत्रिसंभवंदत्तंदत्तात्रेयमित्यर्थः ॥ १० ॥ पूर्वमित्यनेनएकोवरः ॥ ११ ॥ अधर्मेइतिद्वौवरौ ॥ १२ ॥ संग्रामानितिचतुर्थोवरः ॥
॥ १३ ॥ योगात्योगबलात् माययासंकल्पमात्रेण ॥ १४ ॥ उग्रेणविधिनायुद्धेन ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ गंधर्वउपबर्हणाख्योवरीदासस्यगंधर्वपतेःपुत्रः ॥ १९ ॥

॥ २० ॥ योगीकायव्यूहेन युगपत्सप्तस्वपिद्वीपेषुदृश्यते ॥ २१ ॥ २२ ॥ २३ ॥ यज्ञपालोयजमानःएकेनशरीरेणयागंकरोतिअपरेणपालनमित्यर्थः ॥ २४ ॥ २५॥ कार्त्तवीर्यस्यमाहात्म्यमाह सहीत्यादिना ॥ २६ ॥ प्रतिस्रोतःविपरीतप्रवाहम् ॥ २७ ॥ शंकितापरेणभुकेतिशंकावती अभ्येतिसमुद्रमितिशेषः ॥ २८ ॥ २९ ॥ ३० ॥

नारदउवाच ॥ ननूनंकार्त्तवीर्यस्यगतिंयास्यंतिपार्थिवाः ॥ यज्ञैर्दानैस्तपोभिर्वाविक्रमेणश्रुतेनच २० सहिसप्तसुद्वीपेषुखड्गी चर्मीशरासनी ॥ रथीद्वीपाननुचरन्योगीसंदृश्यतेनृभिः २१ अनष्टद्रव्यताचैवनशोकोनचविभ्रमः ॥ प्रभावेनमहाराज्ञःप्रजाधर्मेणरक्षतः २२ पंचाशीतिसहस्राणिवर्षाणांवैनराधिपः ॥ ससर्वरत्नभाक्सम्राट्चक्रवर्तीबभूवह २३ सएवयज्ञपालोभूत्क्षेत्रपालःसएवच ॥ सएववृष्ट्यापर्जन्योयोगित्वादर्जुनोऽभवत् २४ सवैबाहुसहस्रेणज्याघातकठिनत्वचा ॥ भातिरश्मिसहस्रेणशरदीवदिवाकरः २५ सहिनागान्मनुष्येषुमाहिष्मत्यांमहाद्युतिः ॥ कर्कोटकसुतान्जित्वापुर्यांतस्यांन्यवेशयत् २६ सवैवेगंसमुद्रस्यप्रावृट्कालेंबुजेक्षणः ॥ क्रीडन्निवभुजोद्भिन्नंप्रतिस्रोतश्चकारह २७ लुंठिताक्रीडितातेनफेनस्रग्दाममालिनी ॥ चलदूर्मिसहस्रेणशंकिताभ्येतिनर्मदा २८ तस्यबाहुसहस्रेणक्षुभ्यमाणेमहोदधौ ॥ भयान्निलीनानिश्चेष्टाःपातालस्थामहासुराः २९ चूर्णीकृतमहावीचिचलन्मीनमहातिमिम् ॥ मारुताविद्धफेनौघमावर्त्तक्षोभदुःसहम् ३० प्रावर्त्तयत्तदाराजासहस्रेणचबाहुना ॥ देवासुरसमाक्षिप्तःक्षीरोदमिवमंदरः ३१ मंदरक्षोभचकिताअमृतोद्भवशंकिताः ॥ सहसोत्पतिताभीताभीमंदृष्ट्वानृपोत्तमम् ३२ नतानिश्चलमूर्द्धानोबभूवुस्तेमहोरगाः ॥ मायाह्नेकदलीखंडेकंपितास्तस्यवायुना ३३ सवैबध्वाधनुर्ज्याभिरुत्सिक्तंपंचभिःशरैः ॥ लंकेशंमोहयित्वातुसबलंरावणंबलात् ॥ निर्जित्यैवसमानीयमाहिष्मत्यांबबंधतम् ३४ श्रुत्वातुबद्धंपौलस्त्यंरावणंत्वर्जुनेनतु ॥ ततोगत्वापुलस्त्यस्तमर्जुनंददृशेस्वयम् ॥ मुमोचरक्षःपौलस्त्यंपुलस्त्येनानुयाचितः ३५ यस्यबाहुसहस्रस्यबभूवज्यातलस्वनः ॥ युगांतेत्वंबुदस्येवस्फुटतोह्यशनेरिव ३६ अहोबतमृधेवीर्यंभार्गवस्ययदच्छिनत् ॥ राज्ञोबाहुसहस्रंतुहैमंतालवनंयथा ३७ तृषितेनकदाचित्सभिक्षिताश्चित्रभानुना ॥ सभिक्षामददाद्वीरःसप्तद्वीपान्विभावसोः ३८ पुराणिग्रामघोषांश्चविषयांश्चैवसर्वशः ॥ जज्वालतस्यसर्वाणिचित्रभानुर्दिधक्षया ३९ सतस्यपुरुषेंद्रस्यप्रभावेनमहात्मनः ॥ ददाहकार्त्तवीर्यस्यशैलांश्चैववनानिच ४० सशून्यमाश्रमंरम्यंवरुणस्यात्मजस्यवै ॥ ददाहवनवद्भीतश्चित्रभानुःसहैहयः ॥ ४१ यंलेभेवरुणःपुत्रंपुराभास्वंतमुत्तमम् ॥ वसिष्ठंनामसमुनिःख्यातआपवइत्युत ४२

बाहुनाबाहुभिःप्रावर्त्तयत्शरीरश्रमणेनावर्त्तितवान् क्षीरोदंमंदरइव ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ पौलस्त्यम् पुलस्त्यापत्यंरक्षःराक्षसम् ॥ ३५ ॥ ३६ ॥ राज्ञःकार्त्तवीर्यस्य ॥ ३७ ॥ विभावसोर्वह्नेः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

यत्रनिमित्तभूतेआपवोवसिष्ठः ॥ ४३ ॥ तेत्वयादुष्करंकर्मजयादिकंकृतंतत् अन्योहनिष्यतिनाशयिष्यति तवपराजयोभविष्यतीत्यर्थः ॥ ४४ ॥ ४५ ॥ अनष्टद्रव्यताप्रजाना मितिशेषः ॥ ४६ ॥ स्वयमेववृतःदत्तात्रेयात् ॥ ४७ ॥ ४८ ॥ धृष्टोक्तःधृष्टनामाआवंत्यइतिजयध्वजस्यविशेषणम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ यदोःप्रथमपुत्रस्य सहस्रदस्यवंशमुक्त्वाद्वितीयस्यपयोदस्यसंततिमाहवृषेति अत्रवयोदएववर्षणाद्धेतोर्वृषशब्देनोच्यतेपूर्णकर्मिणःपुण्यकर्मिणः ॥ ५३ ॥ ५४ ॥ ५५ ॥ शूराइतिश्लोकःपुस्तकां

यत्रापवस्तुतंक्रोधाच्छप्तवानर्जुनंविभुः ॥ यस्मान्नवर्जितमिदंवनंतेममहैहय ४३ तस्मात्तेदुष्करंकर्मकृतमन्योहनिष्यति ॥ रामोनाममहाबाहुर्जामदग्न्यःप्र तापवान् ४४ छित्त्वाबाहुसहस्रंतेप्रमथ्यतरसाबली ॥ तपस्वीब्राह्मणश्चत्वांवधिष्यतिसभार्गवः ४५ ॥ वैशंपायनउवाच ॥ अनष्टद्रव्यतायस्यबभूवामि त्रकर्शन ॥ प्रभावेननरेंद्रस्यप्रजाधर्मेणरक्षतः ४६ रामात्ततोस्यमृत्युर्वैतस्यशापान्मुनेर्नृप ॥ वरश्चैषहिकौरव्यस्वयमेववृतःपुरा ४७ तस्यपुत्रशतस्यासन् पंचशेषामहात्मनः ॥ कृतास्त्राबलिनःशूराधर्मात्मानोयशस्विनः ४८ शूरसेनश्चशूरश्चधृष्टोक्तःकृष्णएवच ॥ जयध्वजश्चनाम्नासीदावंत्योनृपतिर्महान् ॥ ४९ कार्त्तवीर्यस्यतनयावीर्यवंतोमहारथाः ॥ जयध्वजस्यपुत्रस्तुतालजंघोमहाबलः ५० तस्यपुत्राःशतंख्यातास्तालजंघाइतिश्रुताः ॥ तेषांकुलेमहारा जहैहयानांमहात्मनाम् ५१ वीतिहोत्राःसुजाताश्चभोजाश्चावंतयःस्मृताः ॥ तौंडिकेराइतिख्यातास्तालजंघास्तथैवच ५२ भरताश्चसुताजाताबहुत्वा न्नानुकीर्त्तिताः ॥ वृषप्रभृतयोराजन्यादवाःपूर्णकर्मिणः ५३ वृषोवंशधरस्तत्रतस्यपुत्रोभवन्मधुः ॥ मधोःपुत्रशतंत्वासीद्वृषणस्तस्यवंशभाक् ५४ वृष णात्वृष्णयःसर्वेमधोस्तुमाधवाःस्मृताः ॥ यादवायदुनाचाग्रेनिरुच्यंतेचहैहयाः ५५ शूराश्चशूरवीराश्चशूरसेनास्तथानघ ॥ शूरसेनइतिख्यातस्तस्यदेशो महात्मनः ५६ नतस्यवित्तनाशोस्तिनष्टंप्रतिलभेच्चसः ॥ कार्त्तवीर्यस्ययोजन्मकीर्तयेदिहनित्यशः ५७ एतेययातिपुत्राणांपंचवंशाविशांपते ॥ कीर्तिता लोकवीराणांयेलोकान्धारयंतिवै ॥ भूतानीवमहाराजपंचस्थावरजंगमान् ५८ श्रुत्वापंचविसर्गंतुराजाधर्मार्थकोविदः ॥ वशीभवतिपंचानामात्मजानांत थेश्वरः ५९ लभेत्पंचवरांश्चैवदुर्लभानिहलौकिकान् ॥ आयुःकीर्तिंतथापुत्रानैश्वर्यंभूमिमेवच ॥ धारणाच्छ्रवणाच्चैवपंचवर्गस्यभारत ६० क्रोष्टोस्तुशृ णुराजेंद्रवंशमुत्तमपौरुषम् ॥ यदोर्वंशधरस्याथयज्वनःपुण्यकर्मणः ६१ क्रोष्टुर्हिवंशंश्रुत्वेमंसर्वपापैःप्रमुच्यते ॥ यस्यान्ववायजोविष्णुर्हरिर्वृष्णिकुलोद्वहः ६२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशपर्वणित्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ध ॥ ॥ ध ॥ ॥ ध ॥

तरेपुनास्ति ॥ ५६ ॥ ५७ ॥ भूतानिपृथिव्यादीनियथालोकानिधारयंतितद्वत् ॥ ५८ ॥ पंचानांविसर्गंविविधंसर्गम् वशीनियंता आत्मजानांहतानांइंद्रियाणाम् ॥ ॥ ५९ ॥ ६० ॥ क्रोष्टोःयदोःपुत्रस्य ॥ ६१ ॥ इमंवक्ष्यमाणं अजोजतइतिशेषः ॥ ६२ ॥ इतिहरिवंशेटीकायांत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ॥ ध ॥

चतुस्त्रिंशेयदोःसूनोःक्रोष्टुर्वंशोनुवर्ण्यते ॥ अवतीर्णोहरिर्यत्रकृष्णःकारणमानुषः ॥ १ ॥ गांधारीति ॥ १ ॥ २ ॥ माद्र्याःपुत्रस्ययुधाजितः ॥ ३ ॥ ४ ॥ विषयेदेशे ॥ ५ ॥
परिवर्तेआगमनमात्रेहरिवाहन.इंद्रः ॥ ६ ॥ गांदिनीनामनिर्वाक्किगांतुददाविति ॥ ७ ॥ ८ ॥ ९ ॥ जाययिष्यामि जन्मगृहीष्यामि ॥ १० ११ ॥ उपासंगादयोऽक्रूरभ्रात

वैशंपायनउवाच ॥ ॥ गांधारीचैवमाद्रीचक्रोष्टोर्भार्येबभूवतुः ॥ गांधारीजनयामासअनमित्रंमहाबलम् १ माद्रीयुधाजितंपुत्रंततोन्यंदेवमीढुषम् ॥ तेषांवंशस्त्रिधाभूतोवृष्णीनांकुलवर्धनः २ माद्र्याःपुत्रस्यजज्ञातेसुतौवृष्ण्यंधकावुभौ ॥ जज्ञातेतनयौवृष्णेःश्वफल्कश्चित्रकस्तथा ३ श्वफल्कस्तुमहाराजधर्मात्मायत्रवर्तते ॥ नास्तिव्याधिभयंतत्रनावर्षभयमप्युत ४ कदाचित्काशिराजस्यविभोर्भरतसत्तम ॥ त्रीणिवर्षाणिविषयेनावर्षत्पाकशासनः ५ सतत्रवासयामासश्वफल्कंपरमार्चितम् ॥ श्वफल्कपरिवर्तेचववर्षहरिवाहनः ६ श्वफल्कःकाशिराजस्यसुतांभार्यामविंदत ॥ गांदिनींनामसागांतुददौविप्रेभ्युनित्यशः ७ सामातुरुदरस्थातुबहून्वर्षगणान्किल ॥ निवसंतीनवैजज्ञेगर्भस्थांतांपिताब्रवीत् ८ जायस्वशीघ्रंभद्रंतेकिमर्थमिहतिष्ठसि ॥ प्रोवाचचैनंगर्भस्थाकन्यागांचदिनेदिने ९ यदिदद्यांततोद्याहंजाययिष्यामितांपिता ॥ तथेत्युवाचतंचास्याःपिताकाममपूरयत् १० दातायज्वाचधीरश्चश्रुतवानतिथिप्रियः ॥ अक्रूरःसुषुवेतस्माच्छ्वफल्काद्भूरिदक्षिणः ११ उपासंगस्तथामद्गुर्मृदुरश्चारिमेजयः ॥ अविक्षिपस्तथोपेक्षःशत्रुघ्नोथारिमर्दनः १२ धर्मधृग्यतिधर्माचगृध्रमोजांतकस्तथा ॥ आवाहप्रतिवाहौचसुंदरीचवरांगना १३ अक्रूरेणोग्रसेनायांसुगात्र्यांकुरुनंदन ॥ प्रसेनश्चोपदेवश्चजज्ञातेदेववर्चसौ १४ चित्रकस्याभवन्पुत्राःपृथुर्विपृथुरेवच ॥ अश्वग्रीवोश्वबाहुश्चसुपार्श्वकगवेषणौ १५ अरिष्टनेमिरश्वश्चसुधर्माधर्मभृत्तथा ॥ सुबाहुर्बहुबाहुश्चश्रविष्ठाश्रवणेस्त्रियौ १६ अश्मक्यांजनयामासशूरंवैदेवमीढुषः ॥ महिष्यांजज्ञिरेशूराद्भोज्यायांपुरुषादश १७ वसुदेवोमहाबाहुःपूर्वमानकदुंदुभिः ॥ जज्ञेयस्यप्रसूतस्यदुंदुभ्यःप्राणदन्दिवि १८ आनकानांचसंह्रादःसुमहानभवद्दिवि ॥ पपातपुष्पवर्षंचशूरस्यभवनेमहत् १९ मनुष्यलोकेकृत्स्नेपिरूपेनास्तिसमोभुवि ॥ यस्यासीत्पुरुषाग्र्यस्यकांतिश्चंद्रमसोयथा २० देवभाग[illegible]जज्ञेतथादेवश्रवाःपुनः ॥ अनाधृष्टिःकनवकोवत्सवानथगृंजिमः २१ श्यामःशमीकोगंडूषःपंचचास्यवरांगनाः ॥ पृथुकीर्तिःपृथाचैवश्रुतदेवाश्रुतश्रवा २२

रः ॥ १२ ॥ १३ ॥ १४ चित्रकस्याक्रूरभ्रातुः ॥ १५ ॥ १६ ॥ देवमीढुषः क्रोष्टुस्तृतीयःपुत्रःशूरंदंत्यादिरयमित्यन्येशूरसेनात्कार्तवीर्यपुत्राद्दशान्ये ॥ १७ ॥ प्रागदन्स्वयमेवशब्दंचक्रुः तत्रभगवदवतारस्यभावित्वात् ॥ १८ ॥ आनकानांपटहानाम् १९ ॥ २० वसुदेवादयोगंडूषांताःदशशूरस्यपुत्राः पंचदुहितरश्चेत्याहदेवभागइत्यादिना ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ चैद्यस्यदमघोषस्य ॥ २५॥ २६ ॥ पृथाकुंतिःकुंतींकुंतिभोजः ॥ २७ ॥ २८ ॥ अनमित्रात् क्रोष्टुःप्रथमपुत्रात् वृष्णिनंदनात्सर्वयादवाह्लादकात् ॥
॥ २९ ॥ ३० ॥ देवभागस्यवसुदेवभ्रातुःदेववत्श्रवःकीर्त्तिर्यस्यतंदेवश्रवसं ॥ ३१ ॥ देवश्रवाः वसुदेवतृतीयोभ्राता शत्रुघ्नंपुत्रंव्यजायत ॥ ३२ सएवकेनापिनिमित्तेनबा
लएवपरित्यक्तोनिषादैःसंवर्धितइतिनैषादिर्जातइत्याहदेवश्रवाइति ॥ ३३ ॥ वत्सावान्गुंडूषश्चवसुदेवानुजौ ॥ ३४॥ विष्वक्सेनः श्रीकृष्णः सुतान्चारुदेष्णादीन्चतुःसं

राजाधिदेवीचतथापंचैतावीरमातरः ॥ पृथादुहितरंवव्रेकुंतिस्तांकुरुनंदन २३ शूरःपूज्यायवृद्धायकुंतिभोजायतांददौ ॥ तस्मात्कुंतीतिविख्याताकुंति
भोजात्मजापृथा २४ अंत्यस्यश्रुतदेवायांजगृहुःसुषुवेसुतः ॥ श्रुतश्रवायांचैद्यस्यशिशुपालोमहाबलः २५ हिरण्यकशिपुर्योसौदैत्यराजोऽभवत्पुरा ॥
पृथुकीर्त्यांतुतनयःसंजज्ञेवृद्धशर्मणः २६ करूषाधिपतिर्वीरोदंतवक्त्रोमहाबलः ॥ पृथादुहितरंचक्रेकुंतिस्तांपांडुरावहत् २७ यस्यांसधर्मविद्राजाधर्माज्ज
ज्ञेयुधिष्ठिरः ॥ भीमसेनस्तथावाताद्इंद्राच्चैवधनंजयः २८ लोकेप्रतिरथोवीरःशक्रतुल्यपराक्रमः ॥ अनमित्राच्छिनिर्जज्ञेकनिष्ठाद्वृष्णिनंदनात् २९ शै
नेयःसत्यकस्तस्माद्युयुधानश्चसात्यकिः ॥ असंगोयुयुधानस्यभूमिस्तस्याभवत्सुतः ३० भूमेर्युगंधरःपुत्रइतिवंशःसमाप्यते ॥ उद्धवोदेवभागस्यमहाभा
गःसुतोऽभवत् ॥ पंडितानांपरंप्राहुर्देवश्रवसमुद्भवम् ३१ अश्मक्यांप्राप्तवान्पुत्रमनाधृष्टिर्यशस्विनम् ॥ निवृत्तशत्रुंशत्रुघ्नंदेवश्रवाव्यजायत ३२ देव
श्रवाःप्रजातस्तुनैषादिर्यःप्रतिश्रुतः ॥ एकलव्योमहाराजनिषादैःपरिवर्द्धितः ३३ वत्सावतेत्वपुत्रायवसुदेवःप्रतापवान् ॥ अद्भिर्ददौसुतंवीरंशौरिःकौशिक
मौरसम् ३४ गंडूषायत्वपुत्रायविष्वक्सेनोददौसुतान् ॥ चारुदेष्णंसुचारुंचपंचालंकृतलक्षणम् ३५ असंग्रामेणयोवीरोनावर्त्ततकदाचन॥ रौक्मिणेयोम
हाबाहुःकनीयान्पुरुषर्षभ ३६ वायसानांसहस्राणियंयांतंपृष्ठतोन्वयुः ॥ चारुमांसानिभोक्ष्यामश्चारुदेष्णहतानितु ३७ तंद्रिजस्तंद्रिपालश्चसुतौकनवकस्य
तु ॥ वीरश्चाश्वहनश्चैववीरौतावावगूंजिमौ ३८ श्यामपुत्रःशमीकस्तुशमीकोराज्यमावहत् ॥ जुगुप्समानोभोजत्वाद्राजसूयमवापसः ३९ अजातशत्रुःश
त्रूणांजज्ञेतस्यविनाशनः ॥ वसुदेवसुतान्वीरान्कीर्त्तयिष्यामितान्शृणु ४०

ख्यान्॥३५॥चारुदेष्णपदंनिर्वक्तिअसंग्रामेणेतिद्वाभ्याम् ॥ ३६ ॥ चारून्मिष्टान् भक्ष्यान् दिशतिअतिसृजतीतिचारुदेष्णइत्यर्थः ॥ ३७ ॥ कनवकस्यवसुदेवभ्रातुः आवगूं
जिमो अवगूंजिमस्यवसुदेवभ्रातुः ॥ ३८॥ श्यामस्यवसुदेवभ्रातुः॥ पुत्रइवपुत्रोऽनुजएवपुत्रीभूतः शमीकोभूदितिशेषः सुमित्रइतिपाठेपुत्रस्यैवाविशेषणम् शोभनमित्रत्वम् भो
जत्वात् एकदेशराजानोभोजाः तद्भावात् जुगुप्समानः आत्मानंनिंदन्राजसूयंसाम्राज्यहेतुंअवाप तत्रयोग्यतांप्रदर्शयन्तस्यसुमित्रत्वंव्याचष्टे अजातशत्रुरित्यर्द्धेनयुधिष्ठिर
सहायःशमीकोराज्ञांराजाभवदितिसार्द्धार्थः ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिटीकायांवृष्णिवंशकीर्त्तनंनामचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ पंचत्रिंशेहरेःप्रोक्तःप्रादुर्भावःपरात्मनः ॥ गार्ग्यशापातुरोधेन यवनाद्भयतद्वधौ ॥ १ ॥ याइति ॥ १ ॥ सुनामांताःपंचपौरव्यः ॥ २ ॥ देवक्यंताःसप्तदेवकस्यदुहितरः परिचारिकेभोगपत्न्यौ नतुदास्यौ याःपत्न्यइत्युपक्रमात् ॥ ३ ॥ ४ ॥ ५ ॥ चित्रांतानिनवापत्यानिसंख्यायरोहिणीतनयादशेत्युक्तिरयुक्तेत्याशंक्याह चित्रासुभद्रेतिपुनर्विख्यातेति चित्रापुनर्जज्ञे साचद्वितीयेजन्मनिसुभद्रेतिविख्यातेत्यर्थः अत्रपौराणिकीकथाचित्रानामकाचिदप्सरामुनिशापाद्रोहिण्यांगर्भवासंलेभे सापुनर्जातमात्राम्रियमाणामयायादवेषुजायमानस्यभगवतोलीलानद्रष्टाधिङ्मामित्यनुतापंचक्रेततश्चतया वासनयापुनस्तत्रैवजन्मधृतवतीति तयासहदशसंख्यापूर्त्तिर्ज्ञेया ॥ ६ ॥ शौरिः श्रीकृष्णः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ त्रिगर्त्तराजस्यदेवकन्यावृकदेवीतिपूर्वेणान्वयः त

वृष्णेस्त्रिविधमेतत्तुबहुशाखंमहौजसम् ॥ धारयन्विपुलंवंशंनानर्थैरिहयुज्यते ४१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिवृष्णिवंशकीर्तनंनामचतुस्त्रिंशोऽध्यायः ३४ ॥ ७४ ॥ वैशंपायनउवाच ॥ ॥ याःपत्न्योवसुदेवस्यचतुर्दशवरांगनाः ॥ पौरवीरोहिणीनामइंदिराचतथावरा १ वैशाखीचतथाभद्रासुनाम्नीचैवपंचमी ॥ सहदेवाशांतिदेवाश्रीदेवादेवरक्षिता २ वृकदेव्युपदेवीचदेवकीचैवसप्तमी ॥ सुतनुर्वडवाचैवद्वेएतेपरिचारिके ३ पौरवीरोहिणीनामबाह्लिकस्यात्मजाभवत् ॥ ज्येष्ठापत्नीमहाराजदयिताऽऽनकदुंदुभेः ४ लेभेज्येष्ठंसुतंरामंसारणंशठमेवच ॥ दुर्दमंदमनंश्वभ्रंपिंडारकमुशीनरम् ५ चित्रांनामकुमारींचरोहिणीतनयादश ॥ चित्रासुभद्रेतिपुनर्विख्याताकुरुनंदन ६ वसुदेवाच्चदेवक्यांजज्ञेशौरिर्महायशाः ॥ रामाच्चनिशठोजज्ञेरेवत्यांदयितःसुतः ७ सुभद्रायांरथीपार्थादभिमन्युरजायत ॥ अक्रूरात्काशिकन्यायांसत्यकेतुरजायत ८ वसुदेवस्यभार्यासुमहाभागासुसप्तसु ॥ ये पुत्राजज्ञिरेशूरानामतस्तान्निबोधमे ९ भोजश्चविजयश्चैवशांतिदेवासुतावुभौ ॥ वृकदेवःसुनामायांगदश्चास्तांसुतावुभौ १० उपासंगवरंलेभेतनयंदेवरक्षिता ॥ अगावहंमहात्मानंवृकदेवीव्यजायत ११ कन्यात्रिगर्त्तराजस्यभर्तावैशैशिरायणः ॥ जिज्ञासांपौरुषेचक्रेनचस्कंदेथपौरुषम् १२ कृष्णायससमप्रख्योवर्षेद्वादशमेतथा ॥ मिथ्याभिशप्तोगार्ग्यस्तुमन्युनाभिसमीरितः १३

स्यैवत्रिगर्त्तराजस्यभर्त्तापुरोहितः शैशिरायणोगार्ग्यः तदीयःशालोयादवपक्षीयः पुरोहितः कश्चित्तस्यपौरुषमस्तिनवेतिजिज्ञासांपरिक्षांचक्रे हस्तेनलिंगमभिमृष्टवान् अथअनंतरंगार्ग्यस्यपौरुषंरेतोनचस्कंद दृढव्रतत्वात् तस्यानुत्थानात्उत्थानेहिकिंचिदपिरेतःस्कंदेदेव ततोगार्ग्योनपुंसकइतिशालेनोक्तइत्यर्थः यथोक्तंविष्णुपुराणे गार्ग्यंगोष्ठ्यांद्विजंशालःषंढइत्युक्तवान्यदा ॥ यदूनांसन्निधौसर्वेजहसुर्यादवास्तदेति ॥ १२ ॥ कृष्णायससमःकोपेनात्यंतंकृष्णभास्वरवर्णः कोपेनचास्यावदनंमषीवर्णमभूत्तदेति अन्यत्रदर्शनात्पुतेमिथ्याभिशप्तः मिथ्यैवनपुंसकोऽयमितिअभिशापंप्रापितःप्रख्योऽतिविख्यातः द्वादशमेद्वादशेवर्षेशांतकोपःसमन्युनादैन्येनाभिशापजेनपरिप्लुतःसन्नभिशापनिवृत्त्यर्थंपरंप्रख्य

यमुत्पादयिष्यन् गोपकन्यामुपादायमैथुनायोपचक्रमइतिसार्धः ॥ १३ ॥ कासौगोपकन्या कुतश्चास्यतत्संयोगइत्याहसार्द्धेन गोपालीति अन्येतुकृष्णायसमयःप्रख्यइतिपाठित्वा कृष्णायसंलोहचूर्णअभक्षत् अयःप्रख्योलोहवर्णइतिव्याख्यायतत्रवैष्णवीयांसंमतिमाहुः सुतमिच्छंस्तपस्तेपेयदुचक्रभयावहम् ॥आराधयन्महादेवंसोयश्चूर्णमभक्षयत् ददौवरंतु संतुष्टोवर्षेतुद्वादशेशिवः संयोजयामासचतंयवनेशोह्यनात्मजः तद्योषित्संगमाच्चास्यपुत्रोभूदलिसप्रभः तंकालयवनंनामेति तच्छब्दार्थोगार्ग्यःसंयोजयामासस्वभार्ययेतिशेषःतत्र मातृभेदःकल्पभेदाभिप्रायेणव्याख्येयःशेषंस्पष्टम् ॥ १४ ॥ १५ ॥ वृषभस्यबलीवर्दस्येवपूर्वार्द्धकायोनाभेरुपरिदेशोयेषांते वृषपूर्वार्द्धकायाः ॥१६ ॥ राज्ञोंतःपुरेववृधेइत्यनेन

गोपकन्यामुपादायमैथुनायोपचक्रमे ॥ गोपालीत्वप्सरास्तस्यगोपस्त्रीवेषधारिणी १४ धारयामासगार्ग्यस्यगर्भंदुर्धरमच्युतम् ॥ मानुष्यागार्ग्यभार्यायां नियोगाच्छूलपाणिनः १५ सकालयवनोनामजज्ञेराजामहाबलः ॥ वृषपूर्वार्धकायास्तमवहन्वाजिनोरणे १६ अपुत्रस्यसराज्ञस्तुववृधेंतःपुरेशिशुः ॥ यवनस्यमहाराजसकालयवनोऽभवत् १७ सयुद्धकामोनृपतिःपर्यपृच्छद्द्विजोत्तमान् ॥ वृष्ण्यंधककुलंतस्यनारदोकथयद्विभुः १८ अक्षौहिण्यातुसैन्यस्य मथुरामभ्ययात्तदा ॥ दूतंसंप्रेषयामासवृष्ण्यंधकनिवेशनम् १९ ततोवृष्ण्यंधकाःकृष्णंपुरस्कृत्यमहामतिम् ॥ समेतामंत्रयामासुर्यवनस्यभयात्तदा २० कृत्वाचानिश्चयंसर्वेपलायनपरायणाः ॥ विहायमथुरांरम्यांमानयंतःपिनाकिनम् २१ कुशस्थलींद्वारवतींनिवेशयितुमीप्सवः ॥ इतिकृष्णस्यजन्मेदंयः शुचिर्नियतेंद्रियः ॥ पर्वसुश्रावयेद्विद्वाननृणःससुखीभवेत् २२ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिश्रीकृष्णजन्मानुकीर्तनंनामपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥छ॥ ॥वैशंपायनउवाच ॥ ॥क्रोष्टोरेवाभवत्पुत्रोवृजिनीवान्महायशाः ॥ वृजिनीवत्सुतश्चापिस्वाहिःस्वाहाकृतांवरः १ स्वाहिपुत्रोभवद्राजारुषद्गुर्वदतांवरः ॥ महाक्रतुभिरीजेयोविविधैर्भूरिदक्षिणैः २ सुतप्रसूतिमन्विच्छन्रुषद्गुःसोग्र्यमात्मजम् ॥ जज्ञेचित्ररथस्तस्यपुत्रःकर्मभिरन्वितः ३ आसींच्चैत्ररथिर्वीरोयज्वाविपुलदक्षिणः ॥ शशबिंदुःपरंवृत्तंराजर्षीणामनुष्ठितः ४ पृथुश्रवाःपृथुयशाराजासीच्छशबिंदुजः ॥ शंसंतिचपुराणज्ञाः पार्थश्रवसमुत्तरम् ५ अनंतरंसुयज्ञस्तुसुयज्ञतनयोऽभवत् ॥ उशतोयज्ञमखिलंस्वधर्ममुशतांवरः ६

गोपाल्याप्सरसासद्यःशकुंतलावत्परित्यक्तइतिगम्यते ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ईप्सवोजाताइतिशेषः ॥ २२ ॥ इतिश्रीहरिवंशेटीकायांपंचत्रिंशोऽध्यायः ॥३५॥ षट्त्रिंशेवर्ण्यतेवंशःक्रोष्टोर्यदुसुतस्यच ॥ यत्रजातामहालक्ष्मीरुक्मिणीशक्तिरीश्वरी ॥ १ ॥ क्रोष्टोरेवेति यथाकृष्णःक्रोष्टुर्वंशेजातएवंसत्यभामादयोपितत्रैवजाताइतिवक्तुमेवकारः क्षत्रियाणांसमानान्वयेपिसापिंड्यनिवृत्त्यूर्ध्वंपुरोहितगोत्रेणअन्योन्यंगोत्रभेदाद्विवाहाभवंतीतियुज्यतएवेतिभावः ॥ १ ॥ २ ॥ सुतप्रसूतिंपुत्रप्रजासमृद्धमात्मजंइच्छन् अभूत् तस्यइच्छतःकर्मभिःपुत्रेष्ट्यादिभिः ॥ ३ ॥अनुष्ठितःआश्रितः ४ पार्थश्रवम् पृथुश्रवसपुत्रम् ॥ ५ ॥ उशतोनामतःस्वधर्मंयज्ञम् उशतांकामयमानानांवरःश्रेष्ठः ॥ ६ ॥

॥ ७ ॥ मरुत्तःधर्मंचचारतत्रहेतुः प्रेत्यभागिति मरणानंतरंस्वफलप्रदानेनसेवक्रे अप्रेत्यापितद्भाङ्सेवनकृत्य गोऽतश्चचारततश्चसुतंलेभेइत्यन्वयः ॥ ८ ॥ सुतंइच्छन्सुतप्र
सूतिंनामसुलेभेइत्यनुषज्यते ॥ ९ ॥ १० ॥ ११ ॥ विदेहेभ्यःविदेहान्त्रातुम् तदधिपतयेराज्ञेददावित्यर्थः ॥ १२ ॥ संश्रितः आश्रितः ज्येष्ठानुसारीजातः ॥ १३ ॥ वार्धक्यात्

शिनेयुरभवत्सूनुरुशतःशत्रुतापनः ॥ मरुत्तस्तस्यतनयोराजर्षिरभवन्नृप ७ मरुत्तोऽलभतज्येष्ठंसुतंकंबलबर्हिषम् ॥ चचारविपुलंधर्मममर्षात्प्रेत्यभागपि
८ सुतप्रसूतिमिच्छन्वैसुतंकंबलबर्हिषः ॥ बभूवरुक्मकवचःशतप्रसवतःसुतः ९ निहत्यरुक्मकवचःशतंकवचिनांरणे ॥ धन्विनांनिशितैर्बाणैरवापश्रि
यमुत्तमाम् १० जज्ञेथरुक्मकवचात्पराजित्परवीरहा ॥ जज्ञिरेपंचपुत्रास्तुमहावीर्याःपराजितः ११ रुक्मेषुःपृथुरुक्मश्चज्यामघःपालितोहरिः ॥ पालि
तंचहरिंचैवविदेहेभ्यःपितादद‍ौ १२ रुक्मेषुरभवद्राजापृथुरुक्मस्यसंश्रितः ॥ ताभ्यांप्रव्राजितोराज्याज्ज्यामघोवसदाश्रमे १३ प्रशांतःसवनस्थस्तुब्राह्म
णैश्चावबोधितः ॥ जिगायरथमास्थायदेशमन्यंध्वजीरथी १४ नर्मदाकूलमेकाकीनगरींमृत्तिकावतीं ॥ ऋक्षवंतंगिरिंजित्वाशुक्तिमत्यामुवासस १५ ज्या
मघस्याभवद्भार्याशैब्याबलवतीसती ॥ अपुत्रोपिचराजासनान्यांभार्यामविंदत १६ तस्यासीद्विजयोयुद्धेतत्रकन्यामवापसः ॥ भार्यामुवाचसंत्रस्तःस्नुषेतिस
नरेश्वरः १७ एतच्छ्रुत्वाब्रवीद्देवीकस्यचेयंस्नुषेतिवै ॥ अब्रवीत्तदुपश्रुत्यज्यामघोराजसत्तमः १८ यस्तेजनिष्यतेपुत्रस्तस्यभार्योपदानवी ॥ उग्रेणतपसा
तस्याःकन्यायाःसव्यजायत ॥ पुत्रंविदर्भंसुभगाशैब्यापरिणतासती १९ राजपुत्र्यांतुविद्वांसौस्नुषायांक्रथकौशिकौ ॥ पश्चाद्विदर्भोऽजनयच्छूरौरण
विशारदौ २० लोमपादंतृतीयंतुपुत्रंपरमधार्मिकम् ॥ लोमपादात्मजोबभ्रुराहृतिस्तस्यचात्मजः २१ आहृतेःकौशिकश्चैवविद्वान्परमधार्मिकः ॥
चेदिःपुत्रःकौशिकस्यतस्माच्चैद्यानृपाःस्मृताः २२ भीमोविदर्भस्यसुतःकुंतिस्तस्यात्मजोऽभवत् ॥ कुंतेर्धृष्टसुतोजज्ञेरणधृष्टःप्रतापवान् ॥ धृष्टस्यजज्ञिरेशू
रास्त्रयःपरमधार्मिकाः २३ आवंतश्चदशार्हश्चबलीविषहरश्चयः ॥ दशार्हस्यसुतोव्योमाव्योम्नोजीमूतउच्यते २४ जीमूतपुत्रोबृहतिस्तस्यभीमरथःसुतः ॥
अथभीमरथस्यासीत्पुत्रोनवरथस्तथा २५ तस्यचासीद्दशरथःशकुनिस्तस्यचात्मजः ॥ तस्मात्करंभःकारंभिर्देवरातोभवन्नृपः २६ देवक्षत्रोभवत्तस्यदै
वक्षत्रिर्महायशाः ॥ दवगर्भसमोजज्ञेदेवक्षत्रस्यनंदनः २७ मधूनांवंशकृद्राजामधुर्मधुरवागपि ॥ मधोर्जज्ञेथवैदर्भ्यांपुत्रोमरुवसास्तथा २८ आसीन्मरुव
सःपुत्रःपुरुद्वान्पुरुषोत्तमः ॥ मधुर्जज्ञेथवैदर्भ्यांभद्रवत्यांकुरूद्वहः २९

प्रशांतस्त्यक्तराज्यलिप्सःअवबोधितः
तपआदिनाउद्दीपितःजिगायजितवान् ॥ १४ ॥ १५ ॥ बलवतीप्रगल्भा ॥ १६ ॥ १७ ॥ १८ ॥ तस्याःउपदानवीसंज्ञायाः उग्रेणतपसा परिणतावृद्धापिशैब्यापुत्रं
व्यजायतजनितवती ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ पुरुद्वान्नामतःतस्यवैदर्भीभद्रवतीभार्यातस्यांमधुर्जातः ॥ २९ ॥

तस्यैवऐक्ष्वाकीसतीनामद्वितीयाभार्यातस्यांसत्वान्जातः ॥ ३० ॥ ३१ ॥ ॥ इतिहरिवंशेटीकायांषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ छ ॥ सप्तत्रिंशेन्वयस्योक्तश्चत्वारः सत्वतःसुताः ॥ शुचीकराहरीत्यत्रत्रयाणांवंशवर्णनं ॥ १ ॥ सत्वतात् भजमानदेवावृधौनामानौ ॥ १ ॥ २ ॥ संजय्यौसंजयपुत्र्यौ ॥ ३ ॥ ४ ॥५॥६॥आत्मानंचित्तम् संयुज्यसमाधायजलंस्पृशन् स्नानाचमनादेरुपलक्षणमेतत् ॥ ७ ॥ एकाएकाकिन्येवनिश्चयंअभिजगामचकारतस्यतदीयहितस्यचिंतया ॥ ८ ॥ हंतेति सस्नेहमालोचने

ऐक्ष्वाकीचाभवद्भार्यासत्वांस्तस्यामजायत ॥ सत्वान्सर्वगुणोपेतःसात्वतांकीर्तिवर्द्धनः ३० इमांविसृष्टिंविज्ञायज्यामघस्यमहात्मनः ॥ युज्यतेपरया कीर्त्याप्रजावांश्चभवेन्नरः ३१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुह०हरिवंशपर्वणिषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ वैशंपायनउवाच ॥ सत्वतात्सत्वसंप न्नान्कौशल्यासुषुवेसुतान् ॥ भजिनंभजमानंचदिव्यंदेवावृधंनृपं १ अंधकंचमहाबाहुंवृष्णिंचयदुनंदनम् ॥ तेषांविसर्गाश्चत्वारोविस्तरेणेहतांछृणु २ भजमानस्यसंजय्यौबाह्यकाथोपबाह्यका ॥ आस्तांभार्येतयोस्तस्माज्जज्ञिरेबहवःसुताः ३ क्रमिश्चक्रमणश्चैवधृष्टःशूरःपुरंजयः ॥ एतेबाह्यकसंजय्यां भजमानाद्विजज्ञिरे ४ अयुताजित्सहस्राजिच्छताजिच्चाथदाशकः ॥ उपबाह्यकसंजय्यांभजमानाद्विजज्ञिरे ५ यज्वादेवावृधोराजाचचारविपुलंतपः ॥ पुत्रःसर्वगुणोपेतोममस्यादितिनिश्चितः ६ संयुज्यात्मानमेवंतुपर्णाशायाजलंस्पृशन् ॥ सदोपस्पृशतस्तस्यचकारप्रियमापगा ७ चिंतयाभिपरी तासाजगामैकाभिनिश्चयम् ॥ कल्याणत्वान्नरपतेस्तस्यसानिम्नगोत्तमा ८ नाध्यगच्छततांनारींयस्यामेवंविधःसुतः ॥ जायेत्तस्मात्स्वयंहंतभवाम्यस्यस हव्रता ९ अथभूत्वाकुमारींसाबिभ्रतीपरमंवपुः ॥ वरयामासनृपतिंतामियेषचसप्रभुः १० तस्यामाधत्तगर्भंचतेजस्विनमुदारधीः ॥ अथसादशमेमा सिसुषुवेसरितांवरा ११ पुत्रंसर्वगुणोपेतंबभ्रुंदेवावृधान्नृपात् ॥ अत्रवंशेपुराणज्ञागायंतीतिपरिश्रुतम् १२ गुणान्देवावृधस्याथकीर्त्तयंतोमहात्मनः ॥ यथैवाग्रेसमंदूरात्पश्यामचतथांतिके १३ बभ्रुश्रेष्ठोमनुष्याणांदेवैर्देवावृधःसमः ॥ षष्टिश्चषट्चपुरुषाःसहस्राणिचसप्तच १४ एतेमृतत्वंसंप्रा प्ताबभ्रुर्देवावृधावपि ॥ यज्वादानपतिर्विद्वान्ब्रह्मण्यःसुदृढायुधः १५

सहव्रता धर्मपत्नी ॥ ९ ॥ इयेष इच्छितवान् ॥ १० ॥ ११ ॥ १२ ॥ अंतिकेदूराच्चयोगबलेनानेकधात्मानंकृत्वा संचरंततुल्यवत्पश्यामः ॥ १३ ॥ षट्षष्ठ्यधिकानि सप्तसहस्राणि पुरुषाः अमृतत्वंयुद्धेनमृत्युमासाद्यब्रह्मलोकंगताइत्यर्थः ॥ १४ ॥ यज्वा बभ्रुरेव ॥ १५ ॥

तस्यवभ्रोः अंधकात्सत्वतःपुत्रात् काश्यस्यदृढाश्वस्यदुहिता ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ श्वेतेनशुद्धेन किशोरप्रतिमः तरुणाश्ववदुत्साहवान् किशोरोऽत्रस्यशाव कइतिमेदिनी अशीतिचर्मणायुक्तः अशीत्यापुरुषैर्वाह्यंचर्मफलकंदारुमयंआसनविशेषः तेनयुक्तः तदारूढःचर्मकृतौचफलकेइतिमेदिनी अशीतिचर्मणेत्यस्यअभेद्यात्मत्वंचेत्यर्थः प्रांचःप्राहुः यद्वानास्तिशोतिःस्वप्नोयेषांतेअशीतयोदेवाः तएवचर्मवाणत्राणंतेनयुक्तः देवरक्षितइत्यर्थः ॥ २१ ॥ अतएवतस्यपरिवारःस्तूयते नापुत्रवानिति भोजमाहुकम् ॥ २२ ॥ रूप्यकांचनेत्यर्धःसोपासंगेत्यतः प्राग्द्रष्टव्यःरूप्यमय्यःकांचनमय्यश्चकक्षाः वरत्राः बंधनशृंखलावायेषांतादृशानांनागानांदशसहस्राणिपूर्वस्यांदिशि अनुमोदनंअभ्यनुज्ञां एतियाति गंतुंप्राप्नुवंतितथातस्यामेवदिशि रथानांदशसहस्राणिअनुमोदनंयांति उपासंगोयुगम् अनुकर्षणंरथाधःस्थितंकाष्ठम् वरूथंरथगुप्तिःतद्वतांरथानाम् ॥ २३ ॥ २४ ॥

कीर्तिमांश्चमहातेजाःसात्वतानांमहावरः ॥ तस्यान्ववायःसुमहान्भोजायेमार्त्तिकावताः १६ अंधकात्काश्यदुहिताचतुरोलभतात्मजान् ॥ कुकुरंभजमा नंचशमिंकंबलबर्हिषम् १७कुकुरस्यसुतोधृष्णुर्धृष्णोस्तुतनयस्तथा ॥ कपोतरोमातस्याथतैत्तिरिस्तनयोऽभवत् १८जज्ञेपुनर्वसुस्तस्मादभिजित्तुपुनर्वसोः ॥ तस्यवैपुत्रमिथुनंबभूवाभिजितःकिलः १९ आहुकश्चाहुकीचैवख्यातौख्यातिमतांवरौ ॥ इमांचोदाहरंत्यत्रगाथांप्रतितमाहुकम् २० श्वेतेनपरि वारेणकिशोरप्रतिमोमहान् ॥ अशीतिचर्मणायुक्तःसनृपःप्रथमंव्रजेत् २१ नापुत्रवान्नाशतदोनासहस्रशतायुषः ॥ नाशुद्धकर्मानायज्वायोभोजमभितो व्रजेत् २२ पूर्वस्यांदिशिनागानांभोजस्येत्यनुमोदनम् ॥ सोपासंगानुकर्षाणांध्वजिनांसवरूथिनाम् २३ रथानांमेघघोषाणांसहस्राणिदशैवतु ॥ रूप्य कांचनकक्षाणांसहस्राणिदशापिच २४ तावंत्येवसहस्राणिउत्तरस्यांतथादिशि ॥ आभूमिपालान्भोजान्स्वानुत्तिष्ठन्किंकिणीकिणः २५ आहुकींचाप्य वंतिभ्यःस्वसारंददुरंधकाः ॥ आहुकस्यतुकाश्यायांद्वौपुत्रौसंबभूवतुः २६ देवकश्चोग्रसेनश्चदेवपुत्रसमावुभौ ॥ देवकस्याभवन्पुत्राश्चत्वारस्त्रिदशोपमाः २७ देववानुपदेवश्चसुदेवोदेवरक्षितः ॥ कुमार्यःसप्तचाप्यासन्वसुदेवायतादद‌ौ २८

उत्तरस्यामपितावंत्येवरथानांनागानांचसहस्राणितथादिशियथापूर्वोत्तरयोस्तथावाशिष्टायामपिदिशिदक्षिणस्यांसपश्चिमायांअनुमोदनंतावत्येवसहस्राणिप्राप्नुवंतीत्यर्थः आभू मिपालान्सर्वान्सामंतान्अभिव्याप्यवशीकृत्यभोजाः स्वज्ञातयस्तं आहुकंउपतिष्ठन् उपातिष्ठन्सेवितवंतःकिंकिणीकिणःक्षुद्रघंटिकावंतोरथादयः किंकिणीशब्दादीकक्तद्धितः किंकिणीकिणइतिदंत्यस्यमूर्द्धन्यत्वमार्षम् भोजान्स्वानुत्तमकिंकिणीकिणइतिपाठेसर्वान्भूमिपालान्व्याप्यस्वान्उत्तमंसुवर्णतन्मयाकिंकिणीयुक्ताः रथादयउत्तमकिंकिणीकाः तद्युक्ताउत्तमाकिंकिणीकिणः तादृशानकरोदितिशेषः ॥ २५ ॥ आहुकींआहुकसंबंधिनींस्वसारंआहुकीसंज्ञांअवंतिभ्यः राज्ञीत्वेनददुः ॥ २६ ॥ २७ ॥ कुमार्यःपुत्र्यः २८ ॥

वृकदेवीयुक्ताउपदेवीवृकदेव्युपदेवी ॥ २९ ॥ कंसःपूर्वजःप्रथमःन्यग्रोधादयोष्टौसुभूमिपइतिशंकोर्विशेषणम् गौडपाठेसुभूषणइतिवातस्यैवविशेषणम् अन्येतुसुभूमिपइतिकं सस्यैवनामेत्याहुस्तेषांतस्यपूर्वजोक्तिर्विरुध्यते परेपुनःकंकश्चैवसुभूमिपइतिशंकुपदेलोपमेवकुर्वंति तत्रपाठतत्त्वंव्यासएववेद ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ इतिश्रीमहा भारतेखिलेषुहरिवंशेहरिवंशपर्वणिटीकायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ अष्टत्रिंशेन्वयःप्रोक्तोभजमानस्यतत्रच ॥ स्यमंतकस्यचमणेःप्रत्यानयनमद्भुतम् ॥ १ ॥ भजमानस्य



देवकीशांतिदेवाचसुदेवादेवरक्षिता ॥ वृकदेव्युपदेवीचसुनाम्नीचैवसप्तमी २९ नवोग्रसेनस्यसुतास्तेषांकंसस्तुपूर्वजः ॥ न्यग्रोधश्चसुनामाचकंकःशंकुःसु भूमिपः ३० राष्ट्रपालोथसुतनुरनाधृष्टिश्चपुष्टिमान् ॥ तेषांस्वसारःपंचासन्कंसाकंसवतीतथा ३१ सुतनूराष्ट्रपालीचकंकाचैववरांगना ॥ उग्रसेनःसहा पत्योव्याख्यातःकुकुरोद्भवः ३२ कुकुराणामिमंवंशंधारयन्नमितौजसाम् ॥ आत्मनोविपुलंवंशंप्रजावानाप्नुयान्नरः ३३ ॥ इतिश्रीमहाभारतेखिलेषुहरि वंशेहरिवंशपर्वणिसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ छ ॥ वैशंपायनउवाच ॥ भजमानस्यपुत्रोथरथमुख्योविदूरथः ॥ राजाधिदेवःशूरस्तुविदूरथसुतोऽभवत् १ राजाधिदेवस्यसुताजज्ञिरेवीर्यवत्तराः ॥ दत्ताऽतिदत्तबलिनौशोणाश्वःश्वेतवाहनः २ शमीचदंडशर्माचदंडशत्रुश्चशत्रुजित् ॥ श्रवणाचश्रविष्ठाचस्व सारौसंबभूवतुः ३ शमीपुत्रःप्रतिक्षत्रःप्रतिक्षत्रस्यचात्मजः ॥ स्वयंभोजःस्वयंभोजाद्धृदीकःसंबभूवह ४ तस्यपुत्राबभूवुर्हिसर्वेभीमपराक्रमाः ॥ कृतव र्माग्रजस्तेषांशतधन्वाथमध्यमः ५ देवर्षेर्वचनात्तस्यभिषग्वैतरणश्चयः ॥ सुदांतश्चविदांतश्चकामदाकामदंतिका६ देववांश्चाभवत्पुत्रोविद्वान्कंबलबर्हिषः ॥ असमौजास्तथावीरोनासमौजाश्चतावुभौ ७ अजातपुत्रायसुतान्प्रददावसमौजसे ॥ सुदंष्ट्रंचारुरूपंचकृष्णमित्यंधकास्त्रयः ८ एतेचान्येचबहवोअंधकाः कथितास्तव ॥ अंधकानामिमंवंशंधारयेद्यस्तुनित्यशः ९ आत्मनोविपुलंवंशंलभतेनात्रसंशयः ॥ गांधारीचैवमाद्रीचक्रोष्टुभार्येबभूवतुः १० गांधा रीजनयामासअनमित्रंमहाबलम् ॥ माद्रीयुधाजितंपुत्रंततोवैदेवमीढुषम् ११ अनमित्रममित्राणांजेतारमपराजितम् ॥ अनमित्रसुतोनिघ्नोनिघ्नतोद्वौब भूवतुः १२ प्रसेनश्चाथसत्राजिच्छत्रुसेनाजितावुभौ ॥ प्रसेनोद्वारवत्यांतुनिवसंत्यांमहामणिम् १३

रथमुख्यःरथवतांमुख्योऽतिरथइतियावत् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ देवर्षेः च्यवनस्यवचनात्तस्यशतधन्वनः भिषक्प्रभृतयश्चत्वारः पुत्राः कामदाकामदंतिका चेतिद्वेपुत्र्यौ ॥ ६ ॥ कंबलबर्हिषः मरुत्तपुत्रस्य देववान्तस्यत्रयः ॥ ७ ॥ अंधकाः अंधकस्यपुत्राः तान्अंधकएव असमौजसेददावितिगम्यते ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ निघ्नतः निघ्नात् ॥ १२ ॥ शत्रुजिच्चसेनाजिच्चशत्रुसेनाजितौ निवसंत्यांकृतनिवासायाम् ॥ १३ ॥

उपलब्धवान्परंपरयालब्धवान्समुद्रात्समुद्रंप्राप्यतत्तीरेइत्यर्थः कस्माल्लब्धवानित्याकांक्षायामाह तस्येति तस्यप्रसेनसंबंधिनोभ्रातुःसत्राजित्संज्ञस्य ॥ १४ ॥ निशापायेप्रातः कालेउपस्प्रष्टुंस्नानादिकंकर्त्तुं ॥ १५ ॥ १६ ॥ १७॥ यथादिविमंडलिनंत्वांपश्यामि तथैवसन्निहितमपिमंडलमात्रंपश्यामि नत्वाकृतिविशेषं अतस्तवसख्येन उपागतस्यस मीपागतस्यापिइतरजनापेक्षयामेमयात्वत्तोविशेषतः कोनुग्रहःप्राप्तोनकोपियतः इतरवदहमपित्वांमंडलवंतमेवपश्यामीत्यर्थः ॥ १८ ॥ १९ ॥ विग्रहवंतंसुस्पष्टावयवम्

दिव्यंस्यमंतकंनामसमुद्रादुपलब्धवान् ॥ तस्यसत्राजितःसूर्यःसखाप्राणसमोभवत् १४ सकदाचिन्निशापायेरथेनरथिनांवरः ॥ अब्धिकूलमुपस्प्रष्टुमु पस्थातुंययौरविम् १५ तस्योपतिष्ठतःसूर्येविवस्वानग्रतःस्थितः ॥ अस्पष्टमूर्तिर्भगवान्तेजोमंडलवान्प्रभुः १६ अथराजाविवस्वंतमुवाचास्थितमग्रतः ॥ यथैवंव्योम्निपश्यामिसदात्वांज्योतिषांपते १७ तेजोमंडलिनंदेवंतथैवपुरतःस्थितम् ॥ कोविशेषोस्तिमेत्वत्तःसख्येनोपागतस्यवै १८ एतच्छ्रुत्वातुभगवा न्मणिरत्नंस्यमंतकम् ॥ स्वकंठादवमुच्यैवएकांतेन्यस्तवान्विभुः १९ ततोविग्रहवंतंतंददर्शनृपतिस्तदा ॥ प्रीतिमानथतंदृष्ट्वामुहूर्त्तंकृतवान्कथाम् २० त मपिप्रस्थितंभूयोविवस्वंतंससत्रजित् ॥ लोकानुद्भासयस्येतान्येनत्वंसततंप्रभो ॥ तदेतन्मणिरत्नंमेभगवन्दातुमर्हसि २१ ततःस्यमंतकमणिंदत्तवान्त स्यभास्करः ॥ सतमाबध्यनगरींप्रविवेशमहीपतिः २२ तंजनाःपर्यधावंतसूर्योयंगच्छतीतिह ॥ पुरींविस्मापयित्वाचराजात्वंतःपुरंययौ २३ तत्प्रसेन जितंदिव्यंमणिरत्नंस्यमंतकम् ॥ ददौभ्रात्रेनरपतिःप्रेम्णासत्राजिदुत्तमम् २४ समणिःस्यंदतेरुक्मंवृष्ण्यंधकनिवेशने ॥ कालवर्षीचपर्जन्योनचव्याधिभ यंत्वभूत् २५ लिप्सांचक्रेप्रसेनात्तुमणिरत्नेस्यमंतके ॥ गोविंदोनचतल्लेभेशक्तोपिनजहारसः २६ कदाचिन्मृगयांयातःप्रसेनस्तेनभूषितः ॥ स्यमंतककृ तेसिंहाद्वधंप्रापवनेचरात् २७ अथसिंहंप्रधावंतमृक्षराजोमहाबलः ॥ निहत्यमणिरत्नंतदादायबिलमाविशत् २८ ततोवृष्ण्यंधकाःकृष्णंप्रसेनवधकार णात् ॥ प्रार्थनांतांमणेर्बुध्वासर्वएवशशंकिरे २९ सशंक्यमानोधर्मात्मानकारीतस्यकर्मणः ॥ आहरिष्येमणिमितिप्रतिज्ञायवनंययौ ३० यत्रप्रसेनोमृग यामाचरत्तत्रचाप्यथ ॥ प्रसेनस्यपदंगृह्यपुरुषैराप्तकारिभिः ३१ ऋक्षवंतंगिरिवरंविंध्यंचगिरिमुत्तमम् ॥ अन्वेषयन्परिश्रांतःसददर्शमहामनाः ३२

नृपतिःराजा मंडलाधिपतित्वात् नतुक्षत्रियमात्रः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ स्यंदतेप्रस्रवति रुक्मंसुवर्णम् ॥ २५ ॥ २६ ॥ सिंहोदेवताविष्टः नतुपशु मात्रःतेनतादृङ्मणिधारिणोधर्षणायोगात् ॥ २७ ॥ ऋक्षराजोजांबवान् ॥ २८ ॥ शशंकिरे कृष्णेनैवप्रसेनंहत्वामणिर्गृहीतइतिशंकांचक्रुः ॥ २९ ॥ नकारीअकर्ता ॥ ३० ॥ आप्तकारिभिःअंतरंगैःकिंकरैः ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ वातपतेर्विशेषणंवीरइति ॥ ४६ ॥ भार्याःकृष्णायतादृदावि



५८ साश्वंहतंप्रसेनंवैनाविंदच्चैच्छितंमणिम् ॥ अथसिंहःप्रसेनस्यशरीरस्याविदूरतः ३३ ऋक्षेणनिहतोदृष्टःपादैर्ऋक्षश्वसूचितः ॥ पादैरन्वेषयामासगुहामृक्षस्य माधवः ३४ महत्यृक्षबिलेवाणींशुश्रावप्रमदेरिताम् ॥ धात्र्याकुमारमादायसुतंजांबवतोनृप ॥ क्रीडापयंत्यामणिनामारोदीरित्यथेरिताम् ३५ ॥ धात्र्यु वाच ॥ ॥ सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः ॥ सुकुमारकमारोदीस्तवह्येषस्यमंतकः ३६ सुव्यक्तीकृतशब्दस्तुतूर्णींबिलमथाविशत् ॥ प्रविश्य चापिभगवान्तमृक्षबिलमंजसा ३७ स्थापयित्वाबिलद्वारियदून्लांगलिनासह ॥ शार्ङ्गधन्वाबिलस्थंतुजांबवंतंददर्शह ३८ युयुधेवासुदेवस्तुबिले जांबवतासह ॥ बाहुभ्यामेवगोविंदोदिवसानेकविंशतिं ३९ प्रविष्टेतुबिलंकृष्णेबलदेवपुरःसराः ॥ पुरींद्वारवतीमेत्यहतंकृष्णंन्यवेदयन् ४० वासुदेवस्तु निर्जित्यजांबवंतंमहाबलम् ॥ भेजेजांबवतींकन्यांऋक्षराजस्यसंमताम् ॥ मणिंस्यमंतकंचैवजग्राहात्मविशुद्धये ४१ अनुनीयर्क्षराजानंनिर्ययौचतदाबिला त् ॥ द्वारकामगमत्कृष्णःश्रियापरमयायुतः ४२ एवंसमणिमाहृत्यविशोध्यात्मानमच्युतः ॥ ददौसत्राजितेतंवैसर्वसात्वतसंसदि ४३ एवंमिथ्याभिशप्तेन कृष्णेनामित्रघातिना ॥ आत्माविशोधितःपापाद्विनिर्जित्यस्यमंतकम् ४४ सत्राजितोदशत्वासन्भार्यास्तासांशतसुताः ॥ ख्यातिमंतस्त्रयस्तेषांभंगका रस्तुपूर्वजः ४५ वीरोवातपतिश्चैवउपस्वावांश्वतेत्रयः ॥ कुमारश्चापितिस्रोवैदिक्षुख्यातानराधिप ४६ सत्यभामोत्तमास्त्रीणांव्रतिनीचदृढव्रता ॥ तथाप्रस्वा पिनीचैवभार्यांकृष्णायतांददौ ४७ सभाक्षोभंगकारिस्तुनारेयश्चनरोत्तमौ ॥ जज्ञातेगुणसंपन्नौविश्रुतौरूपसंपदा ४८ माद्रीपुत्रस्यजज्ञेथपृश्निःपुत्रोयुधा जितः ॥ जज्ञातेतनयौपृश्नेःश्वफल्कश्चित्रकस्तथा ४९ श्वफल्कःकाशिराजस्यसुतांभार्यामविंदत ॥ गांदिनींनामतस्याश्वसदागाःप्रददौपिता ५० तस्यांजज्ञे महाबाहुःश्रुतवानितिविश्रुतः ॥ अक्रूरोथमहाभागोयज्वाविपुलदक्षिणः ५१ उपासंगस्तथामंगुर्मृदरश्वारिमेजयः ॥ गिरिक्षिपस्तथोपेक्षःशत्रुहाचारिमर्द नः ५२ धर्मभृद्यतिधर्माचगृध्रमोजांधकस्तथा ॥ सुबाहुःप्रतिबाहुश्वसुंदरीचवरांगना ५३ विश्रुतासांबमहिषीकन्याचास्यवसुंधरा ॥ रूपयौवनसं पन्नासर्वसत्वमनोहरा ५४ अक्रूरेणोग्रसेन्यांतुसुतौद्वौकुरुनंदन ॥ सुदेवश्चोपदेवश्चजज्ञातेदेववर्चसौ ५५ चित्रकस्याभवन्पुत्राःपृथुर्विपृथुरेवच ॥ अश्वग्रीवो श्वबाहुश्वसुपार्श्वकगवेषणौ ५६ अरिष्टनेमेरश्वश्वसुधर्माधर्मभृत्तथा ॥ सुबाहुर्बहुबाहुश्चश्रविष्ठाश्रवणेस्त्रियौ ५७



तिपाठे तिस्रोपिदत्ताः अन्यथातांउत्तमत्वेन ख्यातांसत्यभामामेवेतिव्याख्येयम् ॥ ४७॥ ४८ ॥ क्रोष्टोःकनिष्ठास्त्रीमाद्रीतत्पुत्रस्ययुधाजितोवंशमाह माद्रीति ॥४ ९ ॥५० ॥ ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

मिथ्याभिंशस्तिंमिथ्याभिशापम् वेदजानाति ॥ ५८ ॥ ॥ इतिहरिवंशेटीकायांअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ ७ ॥ त्रिंशेनवाधिकेध्यायेसत्राजिद्वधउच्यते ॥ यदु वंशोक्तिसंपूर्तिर्मणेरानयनंतथा ॥ १ ॥ यत्तत्बभ्रुरक्रूरस्तद्रत्नंशतधन्वनाहारयामासेत्यन्वयः ॥ १ ॥ अंतरंतादर्थ्यम्यदर्थंसमणिस्तंस्वर्णप्रसवादिरूपमर्थमन्विच्छन्नित्यर्थः अं तरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्येइतिमेदिनी ॥ २ ॥ ३ ॥ समयंशपथम् ॥ ४ ॥ कृष्णेनश्वशुरवधक्रुद्धेन अभ्युपयत्स्यामःअनुयास्यामःप्रवलीकर्तुमितिशेषः अत्रोपप

इमांमिथ्याऽभिशस्तिंयःकृष्णस्यसमुदाहृताम् ॥ वेदमिथ्याभिशापास्तंनस्पृशंतिकदाचन ५८ इतिश्रीमहाभारतेखिलेषुहरिवंशपर्वणिअष्टत्रिंशोऽध्या यः ३८ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ यत्तत्सत्राजितेकृष्णोमणिरत्नंस्यमंतकम् ॥ अदात्तद्धारयामासबभ्रुर्वैशतधन्वना १ यदाहिप्रार्थयामाससत्य भामामनिंदिताम् ॥ अक्रूरोंतरमन्विच्छन्मणिंचैवस्यमंतकम् २ सत्राजितंततोहत्वाशतधन्वामहाबलः ॥ रात्रौतंमणिमादायततोक्रूरायदत्तवान् ३ अक्रूर स्तुततोरत्नमादायभरतर्षभ ॥ समयंकारयांचक्रेनावेद्योहंत्वयेत्युत ४ वयमभ्युपयत्स्यामःकृष्णेनत्वामभिद्रुतम् ॥ ममाद्यद्वारकासर्वावशेतिष्ठत्यसंशय म् ५ हतेपितरिदुःखार्त्तासत्यभामायशस्विनी ॥ प्रययौरथमारुह्यनगरंवारणावतम् ६ सत्यभामातुतद्वृत्तंभोजस्यशतधन्वनः ॥ भर्तुर्निवेद्यदुःखार्त्तापा र्श्वस्थाश्रूण्यवर्तयत् ७ पांडवानांतुदग्धानांहरिःकृत्वोदकक्रियाम् ॥ कुल्यार्थेचापिपांडूनांन्ययोजयतसात्यकिम् ८ ततस्त्वरितमागत्यद्वारकांमधुसूदनः ॥ पूर्वजंहलिनंश्रीमानिदंवचनमब्रवीत् ९ हतःप्रसेनःसिंहेनसत्राजिच्छतधन्वना ॥ स्यमंतकःसमद्गामीतस्यप्रभुरहंविभो १० तदारोहरथंशीघ्रंभोजंहत्वाम हाबलम् ॥ स्यमंतकोमहाबाहोह्यस्माकंसभविष्यति ११ ततःप्रववृतंयुद्धंतुमुलंभोजकृष्णयोः ॥ शतधन्वाततोक्रूरमवैक्षत्सर्वतोदिशम् १२ संरब्धौता वुभौदृष्ट्वातत्रभोजजनार्दनौ ॥ शक्तोपिशाठ्याद्धार्दिक्यमक्रूरोनाभ्यपद्यत १३ अपयानेततोबुद्धिंभोजश्चक्रेभयार्दितः ॥ योजनानांशतंसाग्रंहययाप्रत्यपद्य त १४ विख्याताहृदयानामशतयोजनगामिनी ॥ भोजस्यवडवाराजन्ययाकृष्णमयोधयत् १५ क्षीणांजवेनचहयामध्वनःशतयोजने ॥ दृष्ट्वारथस्यतांवृ द्धिंशतधन्वानमार्दयत् १६ ततस्तस्याहयायास्तुश्रमात्खेदाच्चभारत ॥ खमुत्पेतुरथप्राणाःकृष्णोराममथाब्रवीत् १७ तिष्ठस्वेहमहाबाहोदृष्टदोषाहयाम या ॥ पद्भ्यांगत्वाहरिष्यामिमणिरत्नंस्यमंतकं १८ पद्भ्यामेवततोगत्वाशतधन्वानमच्युतः ॥ मिथिलामभितोराजन्जघानपरमास्त्रवित् १९

त्तिमाहममेति ॥ ५ ॥ वारणावताह्वयंहस्तिनापुरम् ॥ ६ ॥ ७ ॥ कुल्यार्थेअस्थ्नांसंस्कारार्थे कुल्यंस्यात्कीकसेइतिमेदिनी ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ भोजःशतधन्वा ॥ १२ ॥ शाठ्यात्अशक्तिप्रकाशनात् हार्दिक्यंहृदीकपुत्रंशतधन्वानंनाभ्यपद्यतसाहाय्यार्थंनगतवान् ॥ १३ ॥ हययाअश्वया ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ दृष्टदो षाः क्षीणगतयोनिश्चेष्टावा ॥ १८ ॥ १९ ॥

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ दीक्षामयंकवचदीक्षितस्ययुद्धनिषेधादितरैर्वैराप्रसक्तेस्तेनैवस्वशरीररक्षापिकृतेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥
॥ ३१ ॥ ३२ ॥ कच्छेसजलेतीरप्रदेशे ॥ ३३ ॥ ३४ ॥ योगेनबहुधनदानादिसंबंधेनालिंगेन ॥ ३५ ॥ अनार्यकंशाठ्यम् ॥ ३६ ॥ यत्यतोहेतोः रोषोभूत् सचसं

स्यमंतकंचनापश्यद्धत्वाभोजंमहाबलम् ॥ निवृत्तंचाब्रवीत्कृष्णंरत्नंदेहीतिलांगली २० नास्तीतिकृष्णश्चोवाचततोरामोरुषान्वितः ॥ धिक्शब्दमसकृत्कृ
त्वाप्रत्युवाचजनार्दनम् २१ भ्रातृत्वान्मर्षयाम्येषस्वस्तितेस्तुव्रजाम्यहम् ॥ कृत्यंनमेद्वारकयानत्वयानचवृष्णिभिः २२ प्रविवेशततोरामोमिथिलामरि
मर्दनः ॥ सर्वकामैरुपचितैर्मैथिलेनाभिपूजितः २३ एतस्मिन्नेवकालेतुबभ्रुर्मतिमतांवरः ॥ नानारूपान्क्रतून्सर्वानाजहारनिरर्गलान् २४ दीक्षामयं
सकवचंरक्षार्थंप्रविवेशह ॥ स्यमंतककृतेप्राज्ञोगांदीपुत्रोमहायशाः २५ अथरत्नानिचाग्र्यानिद्रव्याणिविविधानिच ॥ षष्टिंवर्षाणिधर्मात्मायज्ञेषुविनि
योजयत् २६ अक्रूरयज्ञाइतितेख्यातास्तस्यमहात्मनः ॥ बह्वन्नदक्षिणाःसर्वेसर्वकामप्रदायिनः २७ अथदुर्योधनोराजागत्वातुमिथिलांप्रभुः ॥ गदाशि
क्षांततोदिव्यांबलभद्रादवाप्तवान् २८ प्रसाद्यतुततोरामोवृष्ण्यंधकमहारथैः ॥ आनीतोद्वारकामेवकृष्णेनचमहात्मना २९ अक्रूरस्त्वंधकैःसार्द्धमथा
याद्भरतर्षभ ॥ हत्वासत्राजितंयुद्धेसहबंधुंमहाबलं ३० ज्ञातिभेदभयात्कृष्णस्तमुपेक्षितवानथ ॥ अपयातेतथाक्रूरेनावर्षत्पाकशासनः ३१ अनावृष्ट्या
यदाराज्यमभवद्बहुधाकृशं ॥ ततःप्रसादयामासुरक्रूरंकुकुरांधकाः ३२ पुनर्द्वारवतींप्राप्तेतस्मिन्दानपतौततः ॥ प्रववर्षसहस्राक्षःकच्छेजलनिधेस्तदा ३३
कन्यांचवासुदेवायस्वसारंशीलसंमताम् ॥ अक्रूरःप्रददौधीमान्प्रीत्यर्थंकुरुनंदनः ३४ अथविज्ञाययोगेनकृष्णोबभ्रुगतंमणिम् ॥ सभामध्यगतंप्राहतम
क्रूरंजनार्दनः ३५ यत्तद्रत्नंमणिवरंतवहस्तगतंविभो ॥ तत्प्रयच्छस्वमानार्हमयिमानार्यकंकृथाः ३६ षष्टिवर्षेगतेकालेयद्रोषोभून्ममानघ ॥ ससंरूढोऽस
कृत्प्राप्तस्ततःकालात्ययोमहान् ३७ ततःकृष्णस्यवचनात्सर्वसात्वतसंसदि ॥ प्रददौतंमणिंबभ्रुरक्लेशेनमहामतिः ३८ ततस्तमार्जवप्राप्तंबभ्रोर्हस्तादरिं
दमः ॥ ददौहृष्टमनाःकृष्णस्तंमणिंबभ्रवेपुनः ३९ सकृष्णहस्तात्संप्राप्तंमणिरत्नंस्यमंतकम् ॥ आबध्यगांदिनीपुत्रोविरराजांशुमानिव ४० यस्त्वेवंशृ
णुयान्नित्यंशुचिर्भूत्वासमाहितः ॥ सुखानांसकलानांचफलभागिहजायते ४१ आब्रह्मभुवनाच्चापियशःख्यातिर्नसंशयः ॥ भविष्यतिनृपश्रेष्ठसत्यमेतद्ब्र
वीमिते ४२ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

रूढः ततश्चकालात्ययप्राप्तश्चिरकालीनोरोषः यदर्थंजातःतद्रत्नंप्रयच्छेतिपूर्वेणान्वयः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ यस्त्वितिद्वौश्लोकौक्वाचिन्नपठचेते ॥ ४१ ॥ ४२ ॥
इतिश्रीहरिवंशेटीकायांएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ छ ॥

चत्वारिंशत्तमेध्यायेभगवद्विषयोमहान् ॥ जनमेजयस्यभूपस्यप्रश्नभारःप्रतन्यते ॥ १॥ स्यमंतकाख्यानप्रसंगेनसमर्थोपिभगवान्लोकस्थितिंनविभेदकारुणिकत्वाच्चाक्रूरादीनाम
पराधान्क्षांतवानितिश्रुत्वा भगवन्माहात्म्यश्रवणेजातादरोजनमेजयउवाच प्रादुर्भावानिति प्रादुर्भावान्कथयतांमुखाद्वाराहेपिवराहस्यायंवाराहस्ताद्दशोपि प्रादुर्भावोस्तीतिनोऽ
स्माभिःश्रुतम् वरंचतदहश्श्चेतिव्युत्पत्त्यावराहशब्दः श्रेष्ठयज्ञवाची ॥ १ ॥ तस्यचरितंसर्वकार्यजनकत्वंविधिं अपूर्वस्वरूपाविष्करणम् बिस्तरंअनुष्ठानेतिकर्तव्यताम् कर्मतेनसं
तर्पणीयंदेवतादिकम् गुणःद्रव्यदेशकालादिः संतानःप्रयोगविधिहेतुंअधिकारम् मनीषितंत्यागात्मकंस्वरूपसंपादनम् एतत्सर्वंअहंनजानेतस्माद्वदेत्यर्थः ॥ २ ॥ अधियज्ञमेवंव
राहस्वरूपादिकंदृष्ट्वाऽधिदेवंतत्पृच्छति किमात्मकः आत्मास्वरूपंमूर्तिर्बाह्यविग्रहः देवतातदधिष्ठाताईश्वरः आचारस्तस्यकर्तव्योर्थःप्रभावःसामर्थ्यं ॥३॥ चरितंईरितंश्रुतंच परंतु

जनमेजयउवाच ॥ प्रादुर्भावान्पुराणेषुविष्णोरमिततेजसः ॥ सतांकथयतामेववाराहइतिनःश्रुतम् १ नजानेतस्यचरितंनविधिंनैवविस्तरम् ॥ नक
र्मगुणसंतानंनहेतुंनमनीषितम् २ किमात्मकोवराहःसकामूर्तिःकाचदेवता ॥ किमाचारःप्रभावोवाकिंवातेनपुराकृतम् ३ यज्ञार्थंसमवेतानांमिषतां
चद्विजन्मनाम् ॥ महावराहचरितंकृष्णद्वैपायनेरितम् ४ यथानारायणोब्रह्मन्वाराहंरूपमास्थितः ॥ दंष्ट्रयागांसमुद्रस्थामुज्जहारारिसूदनः ५ विस्तरेणैव
कर्माणिसर्वाणिरिपुघातिनः॥ श्रोतुमिच्छाम्यशेषेणहरेःकृष्णस्यधीमतः ६ कर्मणामानुपूर्व्याच्चप्रादुर्भावाश्चयेविभोः ॥ याचास्यप्रकृतिर्ब्रह्मंस्तांमेव्याख्या
तुमर्हसि ७ कथंचभगवान्विष्णुःसुरशत्रुनिषूदनः ॥ वसुदेवकुलेधीमान्वासुदेवत्वमागतः ८ अमरैरावृतंपुण्यंपुण्यकृद्भिर्निषेवितम् ॥ देवलोकंसमुत्सृ
ज्यमर्त्यलोकमिहागतः ९ देवमानुषयोर्नेतायोभुवःप्रभवोविभुः ॥ किमर्थंदिव्यमात्मानंमानुष्येसंन्ययोजयत् १० यश्चक्रंवर्तयत्येकोमानुषाणामनामय
म् ॥ मानुष्येसकथंबुद्धिंचक्रेचक्रभृतांवरः ११ गोपायनंयःकुरुतेजगतःसार्वलौकिकम् ॥ सकथंगांगतोदेवोविष्णुर्गोपत्वमागतः १२ महाभूतानिभूतात्मा
योदधारचकारच ॥ श्रीगर्भःसकथंगर्भेस्त्रियाभूचरयाधृतः १३ येनलोकान्क्रमैर्जित्वात्रिभिस्त्रींस्त्रिदशेप्सया ॥ स्थापिताजगतोमार्गास्त्रिवर्गप्रभवास्त्रयः १४

तत्तत्वंनज्ञातमित्यर्थः ॥ ४ ॥ यथाउज्जहारतथाश्रुतमितिपूर्वेणसंबंधः ॥ ५ ॥ सर्वाणिवराहादीनिनानावतारकृतानि ॥ ६ ॥ अस्यप्रादुर्भावतरंगस्य याप्रकृतिःसमुद्रस्थानीया
॥ ७ ॥ कथमिति कर्मबंधहीनोपिकथमुत्तमस्थानादवरंस्थानंप्राप्तइत्यर्थः ॥ ८ ॥ ९ ॥ लीलार्थंअवतारोनस्वप्रयोजनार्थमित्यपिन यतोलीलायामपिजन्मतापरिहारादेः किय
तोपिप्रयोजनस्यसत्वात् परमानंदरूपस्यतुतदभावादित्याक्षिपति किमर्थमिति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ क्रमैःपादविक्षेपैः त्रिदशेप्सयादेवानामिष्टसिद्ध्यर्थंत्रयोमार्गाः
धर्मेणस्वर्गःअर्थेनायंलोकःकामेनायोलोकःतेषांमार्गास्त्रिभिः प्राप्यंते ॥ १४ ॥

जगत्पंचभूतात्मकंसकारणंपीत्वासंहृत्य तोयमयंनिर्विशेषंचिन्मात्ररूपंतत्रैवसलिलएकोद्रष्टेतिसलिलपदप्रयोगात्ताहशंकृत्वा लोकंएकार्णवंचक्रे सर्वंचिन्मात्रमितिभावनया
तन्मात्रअवशेषयतीतिभावः तत्रसाधनंदृश्यादृश्येनवर्त्मनेति दृश्यंअदृश्यंचिदंशेनजडांशेनचिदचित्ग्रंथिरूपेणजीवरूपेणैवमार्गेण अयंभावः योऽहंकारमाश्रित्यसर्वंसृजति ते
नैवसम्यगाश्रितेनसंहरन्तमपिमार्गाख्यसरणिरूपंसंहरतीति ॥ १५ ॥ विषाणाग्रेणदंताग्रेण विषाणंदंतशृंगयोरित्यमरः ॥ १६ ॥ असुरगणानितिछेदः सुराणांसुरेभ्यः १७
द्विधानरसिंहरूपेण ॥ १८ ॥ १९ ॥ सहस्रेत्यनंतवाचि यंअनिरुद्धाख्यंसर्वावतारविग्रुषांमूलभूतम् महार्णवस्थानीयम् ॥ २० ॥ नाभ्यानाभिदेशेन उपलक्षिताअरणिः

योंतकालेजगत्पीत्वाकृत्वातोयमयंवपुः ॥ लोकमेकार्णवंचक्रेदृश्यादृश्येनवर्त्मना १५ यःपुराणेपुराणात्मावाराहंरूपमास्थितः ॥ विषाणाग्रेणवसुधामुज्जहा
रारिसूदनः १६ यःपुरापुरुहूतार्थेत्रैलोक्यमिदमव्ययः ॥ ददौजित्वासुरगणान्सुराणांसुरसत्तमः १७ येनसैंहंवपुःकृत्वाद्विधाकृत्वाचतत्पुनः ॥ पूर्वंदैत्योम
हावीर्योहिरण्यकशिपुर्हतः १८ यःपुराह्यनलोभूत्वाऔर्वःसंवर्तकोविभुः ॥ पातालस्थोर्णवगतंपपौतोयमयंहविः १९ सहस्रशिरसंब्रह्मन्सहस्रारंसहस्र
दम् ॥ सहस्रचरणंदेवंयमाहुर्वैयुगेयुगे २० नाभ्यारण्यांसमुत्पन्नंयस्यपैतामहंगृहम् ॥ एकार्णवजलस्थस्यनष्टेस्थावरजंगमे २१ येनतेनिहतादैत्याःसं
ग्रामेतारकामये ॥ सर्वदेवमयंकृत्वासर्वायुधधरंवपुः २२ गरुडस्थेनचोत्सिक्तःकालनेमिर्निपातितः ॥ निर्जितश्चमयोदैत्यस्तारकश्चमहासुरः २३ उत्तरां
तेसमुद्रस्यक्षीरोदस्यामृतोदधेः ॥ यःशेतेशाश्वतंयोगमास्थायतिमिरंमहत् २४ सुरारणिर्गर्भमधत्तदिव्यंतपःप्रकर्षाददितिःपुराणम् ॥ शक्रंचयोदै
त्यगणावरुद्धंगर्भावसानेनिभृतंचकार २५ पदानियोलोकमयानिकृत्वाचकारदैत्यान्सलिलेशयांस्तान् ॥ कृत्वाचदेवांस्त्रिदिवस्यदेवांश्चक्रेसुरेशंत्रिदशा
धिपत्ये २६ पात्राणिदक्षिणादीक्षाचमसोलूखलानिच ॥ गार्हपत्येनविधिनाअन्वाहार्येणकर्मणा २७ अग्निमाहवनीयंचवेदींचैवकुशंस्रुवम् ॥ प्रोक्षणीयंध्रु
वांचैवआवभृथ्यंतथैवच २८ सुधात्रीणिचयश्चक्रेहव्यकव्यप्रदान्द्विजान् ॥ हव्यादांश्चसुरान्यज्ञेकव्यादांस्तुपितॄनपि २९ भागार्थेमंत्रविधिनायश्चक्रेयज्ञ
कर्मणि ॥ यूपान्समित्स्रुचंसोमंपवित्रान्परिधीनपि ३० यज्ञियानिचद्रव्याणियज्ञांश्चसचयानलान् ॥ सदस्यान्यजमानांश्चमेध्यादींश्चक्रतूत्तमान् ३१

मंथनदंडतुल्यंनालंतस्यांनाभ्यारण्यांपैतामहंगृहंपद्मम् ॥ २१ ॥ २२ ॥ उत्सिक्तःदृप्तः ॥ २३ ॥ तिमिरंयोगमायां ॥ २४ ॥ सुरारणिःदेवमाता अदितिर्नाम गर्भंवामन
रूपं निभृतंपूर्णकामं ॥ २५ ॥ सलिलेशयान्पातालस्थत्वेनसमुद्रजलपिहितत्वात् त्रिदिवस्यदेवान्स्वर्गेक्रीडापरान् ॥ २६ ॥ पात्रादीनि यज्ञोपकरणानि ॥ २७ ॥
आवभृथ्यंयज्ञांतस्नानायहितं तुषनिष्कासससोमलिप्तादिकं ॥ २८ ॥ सुधात्रीणिसुधाप्रभृतीनित्रीणिऊर्ध्वमध्याधोगतिसंज्ञानि ॥ २९ ॥ ३० ॥ सचयानलान्इष्टकाचय
नाद्युक्तानि अग्निस्थापनार्थस्थानानि ॥ ३१ ॥

पारमेष्ठ्येनपरमेष्ठिनाप्रवर्तितेन ॥ ३२ ॥ ३३ ॥ त्रिविधंश्रुतिस्मृतिशिष्टाचाररूपेणत्रिःप्रकारंप्रमाणम् त्रिषुनित्यनैमित्तिककाम्येषुकर्मसु प्रमेयेषु क्षेत्राणिस्थावरजंगमानिशरीराणिउपचयोवृद्धिः लक्षणंद्विपात्त्वचतुष्पात्त्वादि॥ ३४॥ त्रयोवर्णाइतिशूद्रस्ययज्ञानर्हत्वान्नविवक्षा लोकाभूरादयः त्रैविद्यंऋग्यजुःसामात्मकम् पावकाःगार्हपत्यादयः त्रैकाल्यंभूतभविष्यद्वर्तमानाख्यम् त्रीणिसात्विकराजसतामसानि त्रयोपायाःत्रिविधःस्वार्थभ्रंशः अर्थानुष्ठानपाठव्यसनरूपः पुत्रैषणावित्तैषणालोकैषणारूपोवा त्रयोगुणाः सत्त्वादयःत्रयोवर्णाइत्यादीनांस्रष्टाइत्युत्तरस्थेनान्वयः॥ ३५॥ संख्यातस्त्रयोपिवैतुपुल्येनप्रत्येकमनंताः यतोनंतकर्मसंकल्पाख्यंतेनसृष्टाः येनसृष्टाःसकीदृशइत्यतआह सर्वेति ॥३६॥ योनृणांगतागताभ्यांमृत्युजन्मभ्यांसर्वत्रब्रह्मांडेनेता यश्चजीवरूपःसन्इंद्रियपूर्वेणयोगेनइंद्रियजन्येनविषयसंबंधेनरमतेसईश्वरः ॥ ३७॥ चातुर्होत्रस्यचत्वारोऋत्विजःहोतारोयत्रयज्ञेतस्य ॥ ३८ ॥ आन्विक्षिकीत्रयीवार्तादंडनीतिरितिचतसृणांविद्यानांसमाहारश्चातुर्विद्यंतस्य दिशःअंतरेगर्भेयस्यसदिगंतरः नभोभूतःआकाशत्वम।पन्नःविभावसुः अग्निः यद्वा विशेषे

विबभाजपुरासर्वंपारमेष्ठ्येनकर्मणा ॥ यागानुरूपान्यःकृत्वालोकाननुपराक्रमत् ३२ क्षणालवाश्चकाष्ठाश्चकलास्त्रैकाल्यमेवच ॥ मुहूर्तास्तिथयोमासाःपक्षाःसंवत्सरास्तथा ३३ ऋतवःकालयोगाश्चप्रमाणंत्रिविधंत्रिषु ॥ आयुःक्षेत्राण्युपचयोलक्षणंरूपसौष्ठवम् ३४ त्रयोवर्णास्त्रयोलोकास्त्रैविद्यंपावकास्त्रयः त्रैकाल्यंत्रीणिकर्माणित्रयोऽपायास्त्रयोगुणाः ३५ त्रयोलोकाःपुरासृष्टायेनानंत्येनकर्मणा ॥ सर्वभूतगणस्रष्टासर्वभूतगुणात्मकः ३६ नृणामिंद्रियपूर्वेणयोगेनरमतेचयः ॥ गतागताभ्यांयोनेतासर्वत्रजगदीश्वरः ३७ योगतिर्धर्मयुक्तानामगतिःपापकर्मणाम् ॥ चातुर्वर्ण्यस्यप्रभवश्चातुर्होत्रस्यरक्षिता ३८ चातुर्विद्यस्ययोवेत्ताचातुराश्रम्यसंश्रयः ॥ दिगंतरोनभोभूतोवायुरापोविभावसुः ३९ चंद्रसूर्यमयंज्योतिर्योगीशःक्षणदांतकः ॥ यत्परंश्रयतेज्योतिर्यत्परंश्रयतेतपः ४० यंपरंप्राहुरपरंयःपरःपरमात्मवान् ॥ नारायणपरावेदानारायणपराःक्रियाः ४१ नारायणपरोधर्मोनारायणपरागतिः ॥ नारायणपरंसत्यंनारायणपरंतपः ४२ नारायणपरोमोक्षोनारायणपरायणम् ॥ आदित्यादिस्तुयोदिव्योयश्चदैत्यांतकोविभुः ४३ युगांतेष्वंतकोयश्चयश्चलोकांतकांतकः ॥ सेतुर्योलोकसेतूनांमेध्योयोमेध्यकर्मणाम् ४४ वेद्योयोवेदविदुषांप्रभुर्यःप्रभवात्मनाम् ॥ सोमभूतस्तुसौम्यानामग्निभूतोग्निवर्चसाम् ४५

णभातीतिविभाः ज्योतिः वसुःवसुमतीपृथ्वी ॥ ३९॥ चंद्रसूर्यमयंचंद्रसूर्यप्रधानंमनोज्योतिः चक्षुर्ज्योतिश्च योगीशोनिर्विकल्पकःमनसोंतकः क्षणदारात्रिरेवअंतकोनाशकोयस्य तत्चक्षुर्ज्योतिःपरंअंतकशून्यंश्रूयते नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइतिवेदेदृश्यते तपः तपसोध्यानस्यप्राप्यं मनसैवेदमाप्तव्यमितिश्रुतेः ॥ ४० ॥ यंपरंसूत्रात्मानंअपरंविराजंचयंप्राहुः परःपरस्तादपि परंसूत्रादपिपरम् सच आत्मवान् आत्मेवात्मामायाख्यंशरीरंतद्वान् मायिनंतुमहेश्वरमितिश्रुतेः ॥ ४१ ॥ ४२ ॥ दिव्योदिविचरः॥४३॥ लोकांतकांतकः मृत्योरपिमृत्युः सेतूनांमर्यादाविधारकाणांमन्वादीनामपिसेतुःनियंतॄणामपिनियंतेत्यर्थः मेध्यकर्मणांपवित्राणामपिमेध्यः पावनानांगंगादीनामपिपावनानांपावनः ॥४४॥ प्रभावात्मनांऐश्वर्यस्वभावानांमरीच्यादीनांप्रभुरीश्वरःसोमवत्प्रियदर्शनः तद्रूप.सोमभूतः ॥ ४५ ॥

॥ ४६॥ वायुरेवप्राणः स्थितिहेतुर्यस्यसवायुप्राणः ॥ ४७ ॥ अग्नेःप्राणःसन्नग्निद्वाराकिंकरोति तदाह रसादिति रसात् अग्निपृथक्कृतादन्नसारात् पाकतारतम्येनशोणितादिक्रमेणरेतो द्वारागर्भःसंभवतीतिसचरसमूलेनहेतुभूतेनकर्मणाग्निव्यापारेणेतिद्वयोरर्थः ॥ ४८ ॥ ४९ ॥ तत्रगर्भेऽपांविकारः प्रथमोभागःरेतोरूपः श्वेतत्वात् सौम्यश्चसः गर्भोष्मसंभवः गर्भस्यजठराग्निजन्मायोऽग्निवत् लोहितः सआग्नेयोद्वितीयोभागः ॥ ५० ॥ एतदेवाह शुक्रमिति रसात्मकौउक्तक्रमेणरसस्यैवविकारौ हियस्मात् एषांरसादीनांवीर्यसारः शशिपावकौशुक्रशोणिते ॥ ५१ ॥ अग्नीषोमात्मकत्वंजगतःसाधयति कफेतित्रिभिःशुक्राश्रयस्यसोमदैवत्यस्यकफस्यस्थानंहृदयं तदेवप्रजापतिदैवत्यस्यमनसोपिस्थानं शोणिताश्रयस्याग्निदैवतस्यपित्तस्यस्थानंनाभिमंडलम् तदेवाग्निदैवत्यायावाचोपिस्थानम् स्थानस्थानिनोःअधिष्ठेयाधिष्ठात्रोर्देहदेहिनोरिवव्यवहारतोभेदाभावात् सर्वंनामरूपात्मकंजग

मनुष्याणांमनोभूतस्तपोभूतस्तपस्विनाम् ॥ विनयोनयवृत्तीनांतेजस्तेजस्विनामपि ॥ सर्गाणांसर्गकारश्चलोकहेतुरनुत्तमः ४६ विग्रहोविग्रहार्हाणांगतिर्गतिमतामपि ॥ आकाशप्रभवोवायुर्वायुप्राणोहुताशनः ४७ देवाहुताशनप्राणाःप्राणोग्नेर्मधुसूदनः ॥ रसाद्धिशोणितंजातंशोणितान्मांसमुच्यते ४८ मांसात्तुमेदसोजन्ममेदसोस्थीनिचैवहि ॥ अस्थ्नोमज्जासभमवन्मज्जातःशुक्रमेवच ४९ शुक्राद्गर्भःसमभवद्रसमूलेनकर्मणा ॥ तत्रापांप्रथमोभागःससौम्योराशिरुच्यते ॥ गर्भोष्मसंभवोग्निर्योद्वितीयोराशिरुच्यते ५० शुक्रंसोमात्मकंविद्यादार्तवंविद्धिपावकम् ॥ भागौरसात्मकौह्येषांवीर्यंचशशिपावकौ ५१ कफवर्गेभवेच्छुक्रंपित्तवर्गेचशोणितम् ॥ कफस्यहृदयंस्थानंनाभ्यांपित्तंप्रतिष्ठितम् ५२ देहस्यमध्येहृदयंस्थानंतन्मनसःस्मृतम् ॥ नाभिकोष्ठांतरंयत्तुतत्रदेवोहुताशनः ५३ मनःप्रजापतिर्ज्ञेयःकफःसोमोविभाव्यते ॥ पित्तमग्निःस्मृतंह्येतदग्नीषोमात्मकंजगत् ५४ एवंप्रवर्तितेगर्भेवर्द्धितेऽर्बुदसन्निभे ॥ वायुःप्रवेशंसंचक्रेसंगतःपरमात्मना ५५ ततोंगानिविसृजतिबिभर्त्तिपरिवर्द्धयन् ॥ सपंचधाशरीरस्थोभिद्यतेवर्द्धतेपुनः ५६ प्राणोऽपानःसमानश्चउदानोव्यानएवच ॥ प्राणःसप्रथमंस्थानंवर्द्धयन्परिवर्त्तते ५७

दग्नीषोमात्मकमित्यर्थः ॥ ५२ ॥ दीव्यतिव्यवहरतीतिदेवोवागभिमानी ॥ ५३ ॥ ५४ ॥ अंबुदसन्निभेयथाधूमज्योतिःसलिलपवनैर्मेघोवर्द्धते एवंगर्भोऽपिअन्नाग्निपानीयप्राणैर्वर्द्धतेऽतोऽचेतनइत्यर्थः वायुःप्राणवायुसहचरत्वाद्वायुर्जीवः ईश्वरेणसहितःप्रविशति तेनैवसहउत्क्रामतिच ॥ ५५ ॥ ततोदेहप्रवेशानंतरम् अंगानिशिरआदीनिविसृजति निर्मोति बिभर्ति पुष्टानिचकरोति सःप्राणोपाधिर्जीवः प्राणस्यपंचधाभावात्स्वयमपिपंचधाभिद्यते सप्राणन्नेवप्राणोनामभवतीतिश्रुतेः ॥ ५६ ॥ प्रथमंस्थानहृदयंवर्धयन् पिंडमितिशेषः ॥ ५७ ॥

पश्चिमंकायंजंघादिपादांतं ऊर्ध्वंउरोदेशात् संधिरापः व्यायच्छतेव्यायामंवलसाध्यंकर्मकरोतियेनसव्यानः सर्वदेहसंधिव्यापी समानस्तुनाभिदेशस्थः संनिवर्त्तयेत् अशितपीतादि कंसमीकुर्यात् यथास्थानंप्रापयेदित्यर्थः तत् एवंप्राणकर्मविभागानंतरंतस्यजीवस्यभूतावाप्तिः पृथिव्यादिसाक्षात्कारोजायते साचइंद्रियगोचरात्इंद्रियाणांयोविषयोरूपादिस्तद्वा रातदाश्रयेगृह्यतइत्यर्थः ॥ ५८ ॥ अत्रहेतुमाह पृथिवीति यतः पृथिव्यादीनि इंद्रियाणि इंद्रियरूपेणपरिणम्यशरीरेस्वेस्वेस्थानेनेत्रगोलकादौविष्टानिप्रविष्टानि अतस्ता निस्वंस्वंयोगंप्रचक्रिरे पार्थिवंप्राणंपृथिवीमेवगंधविशिष्टांगृह्णाति आप्यंरसनंअपांगुणंरसमेवगृह्णाति तैजसंचक्षुस्तेजोगुणंरूपम् वायव्यंस्पर्शनेंद्रियंतद्गुणंस्पर्शनम् नाभसंश्रोत्रंत द्गुणंशब्दंचगृह्णातीत्यर्थः ॥ ५९ ॥ देहंउपचितंकठिनांशम् पार्थिवंपृथ्वीविकारम् प्राणोवायुविकारः छिद्राण्याकाशस्त्रावः द्रवभागःसर्वंजलम् ॥६०॥ चक्षुःज्योतिः रूपप्र

अपानःपश्चिमंकायमुदानोर्ध्वंशरीरिणः ॥ व्यानोव्यायच्छतेयेनसमानःसन्निवर्त्तयेत् ॥ भूतावाप्तिस्ततस्तस्यजायतेंद्रियगोचरात् ५८ पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् ॥ तस्येंद्रियाणिविष्टानिस्वंस्वंयोगंप्रचक्रिरे ५९ पार्थिवंदेहमाहुस्तंप्राणात्मानंचमारुतम् ॥ छिद्राण्याकाशयोनीनिजलात्स्रावःप्रवर्त्तते ६० ज्योतिश्चक्षुश्चतेजात्मातेषांयंतामनःस्मृतः ॥ ग्रामाश्चविषाश्चैवयस्यवीर्यात्प्रवर्तिताः ६१ इत्येवंपुरुषःसर्वान्सृजँल्लोकान्सनातनान् ॥ कथंलोकेनैधनेस्मिन्नरत्वंविष्णुरागतः ६२ एषमेसंशयोब्रह्मन्नेवंमेविस्मयोमहान् ॥ कथंगतिर्गतिमतामापन्नोमानुषींतनुम् ६३ श्रुतोमेस्वस्यवंशस्यपूर्वेषांचैवसंभवः ॥ श्रोतुमिच्छामिविष्णोस्तुवृष्णीनांचयथाक्रमम् ६४ आश्चर्यंपरमंविष्णुर्देवैर्दैत्यैश्चकथ्यते ॥ विष्णोरुत्पत्तिमाश्चर्यंममाचक्ष्वमहामुने ६५ एतदाश्चर्यमाख्यानंकथयस्वसुखावहम् ॥ प्रख्यातबलवीर्यस्यविष्णोरमिततेजसः ॥ कर्मचाश्चर्यभूतस्यविष्णोस्तत्त्वमिहोच्यताम् ६६ इतिश्रीमहाभारतेखिलेषु हरिवंशेहरिवंशपर्वणिचत्वारिंशोऽध्यायः ४० ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ प्रश्नभारोमहांस्तातत्वयोक्तःशार्ङ्गधन्वनि ॥ यथाशक्त्यातुवक्ष्यामि श्रूयतांवैष्णवंयशः १ विष्णोःप्रभावश्रवणेदिष्ट्यातेमतिरुत्थिता ॥ हंतविष्णोःप्रवृत्तिंचशृणुदिव्यांमयेरिताम् २

काशकंजाठरादिवा तेषांपृथिव्यादीनांपंचानांतेजात्मातेजसोंऽशोमनः सर्वेषामिंद्रियाणांयंतानियामकः यस्यमनसोवीर्यात्सामर्थ्यात्ग्रामाः रूपाद्याश्रयाःपृथिव्यादयः विषयागं धादयः यद्वा ग्रामनगरादयःदेशाः पूर्वपश्चिमादयोनिर्मिताः यद्वा इदंमनस्येवपरमंप्रतिष्ठितं यदिदंकिंचेतिश्रुतेः ॥ ६१ ॥ सनातनान्अनादिसिद्धान् नैधनेनिधनप्रधाने नरत्वं मानुषत्वम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ इतिश्रीहरिवंशेटीकायांचत्वारिंशोऽध्यायः ॥ ४० ॥ चत्वारिंशत्तमेसैकेश्रवणात्पातकापहे ॥ परात्मनोविचित्रार्थाः प्रादुर्भावाउदीरिताः ॥ १ ॥ प्रश्नेतिभारत्वात्दुर्वोढव्यमपियथाशक्तिवक्ष्यामि ॥ १ ॥ प्रवृत्तिंलीलाचेष्टितम् ॥ २ ॥

सहस्राक्षमितियंविप्राआहुरितिदशमस्थेनान्वयः सहस्रशब्दोनंतवाचीअव्ययंअविनाशिनम् ॥ ३ ॥ अव्ययंअपरिणामिनम् ॥ ४ ॥ एवंद्वाभ्यांसूक्ष्मंअमूर्तरूपमुक्त्वास्थूलंमू र्तरूपमाह सवनमिति सवनंकालंहवनंकर्म हव्यंहूयमानंद्रव्यम् होतारंयजमानम् पात्राणिउक्तेभ्योन्यानिकपालादीनि पवित्राणिकुशमयदेशादीनि दीक्षांसंस्कारम् चरुंस्थालो म् ॥ ५ ॥ प्रोक्षणंप्रोक्षणीपात्रम् दक्षिणाअन्वाहार्यादिः अयनंहविर्भिःप्रचरणम् अध्वर्युंप्रसिद्धम् सामगंउद्गातारम् सदनंपत्नीशालाम् ॥ ६ ॥ होतारंऋत्विजम् चयनंइष्ट कामयंस्थंडिलम् ॥७॥ ह्रस्वानिएकहायनीशकटादीनिसोमक्रयाद्यर्थानि अतिप्रमाणानिअनडुत्स्तंभशालादीनि अर्थफलंस्वर्गादि ॥ ८ ॥ भागवहंगायत्र्यादिच्छंदः छंदां

सहस्राक्षंसहस्रास्यंसहस्रभुजमव्ययम् ॥ सहस्रशिरसंदेवंसहस्रकरमव्ययम् ३ सहस्रजिह्वंभास्वंतंसहस्रमुकुटंप्रभुम् ॥ सहस्रदंसहस्रादिंसहस्रभुजमव्ययम् ४ सवनंहवनंचैवहव्यंहोतारमेवच ॥ पात्राणिचपवित्राणिवेदींदीक्षांचरुंस्रुवं ५ स्रुक्सोमंशूर्पमुसलंप्रोक्षणंदक्षिणायनम् ॥ अध्वर्युंसामगंविप्रंसदस्यंसद नंसदः ६ यूपंसमित्कुशंदर्वीचमसोलूखलानिच ॥ प्राग्वंशंयज्ञभूमिंचहोतारंचयनंचयत् ७ ह्रस्वान्यतिप्रमाणानिचराणिस्थावराणिच ॥ प्रायश्चित्तानि चार्थंचस्थंडिलानिकुशांस्तथा ८ मंत्रंयज्ञवहंवह्निंभागंभागवहंचयत् ॥ अग्रेभुजंसोमभुजंघृतार्चिषमुदायुधम् ९ आहुर्वेदविदोविप्रायंयज्ञंशाश्वतंविभुम् तस्यविष्णोःसुरेशस्यश्रीवत्सांकस्यधीमतः १० प्रादुर्भावसहस्राणिअतीतानिनसंशयः ॥ भूयश्चैवभविष्यंतीत्येवमाहप्रजापतिः ११ यत्पृच्छसि महाराजपुण्यांदिव्यांकथांशुभाम् ॥ यदर्थंभगवान्विष्णुःसुरेशोरिपुसूदनः ॥ देवलोकंसमुत्सृज्यवसुदेवकुलेभवत् १२ तत्तेहंसंप्रवक्ष्यामिशृणुसर्वमशेषतः वासुदेवस्यमाहात्म्यंचरितंचमहाद्युतेः १३ हितार्थंसुरमर्त्यानांलोकानांप्रभवायच ॥ बहुशःसर्वभूतात्माप्रादुर्भवतिकार्यतः १४ प्रादुर्भावांश्चवक्ष्या मिपुण्यान्दिव्यगुणैर्युतान् ॥ छांदसीभिरुदाराभिःश्रुतिभिःसमलंकृतान् १५ शुचिःप्रयतवाक्भूत्वानिबोधजनमेजय ॥ इदंपुराणंपरमंपुण्यंवेदैश्चसंमित म् १६ हंततेकथयिष्यामिविष्णोर्दिव्यांकथांशृणु ॥ यदायदाहिधर्मस्यग्लानिर्भवतिभारत ॥ धर्मसंस्थापनार्थायतदासंभवतिप्रभुः १७ तस्यह्येकामहा राजमूर्तिर्भवतिसत्तमा ॥ नित्यंदिविष्ठायाराजंस्तपश्चरतिदुश्चरं १८

सिवैदेवेभ्योहव्यमूढ्वाश्रांतानीतिलिंगदर्शनात् अग्रेभुजंप्रापणीयंउदायुधंउदयनीयं ॥ ९ ॥ यंसर्वयज्ञांगमयंयज्ञंआहुः शाश्वतंनित्यैकरूपम् वेदाख्यप्रमाणरूपम् विभुंकतुफ लदातारंईश्वरम् धीमतः धीप्रवर्तकस्य ॥ १० ॥ प्रजापतिःसर्ववेददर्शीब्रह्मा ॥ ११ ॥ १२ ॥ १३ ॥ हितार्थंश्रेयोर्थं प्रभवायऐश्वर्याय ॥ १४ ॥ १५ ॥ १६ ॥ संभ वतिशरीरंधत्ते एतेनप्रवृत्तिप्रधानारजोमूर्तिरुक्ता ॥ १७ ॥ सात्विकोमाह तस्यहोति ॥ १८ ॥

तामसीमाह द्वितीयेति निद्रायोगंयोगमयीं निद्रां संहारस्यसर्गः संहारक्रियातदर्थम्कीदृशांनिद्रायोगम् किमध्यात्मविचिंतकं कुत्सिताः अध्यात्मविचिंतकाः सविकल्पसमाधिमंतो यस्मात्तम् ॥१९॥ प्रादुर्भावमेवाह पूर्णेइति तदंगेलीनानांदेवानामाविर्भावएवतस्यप्रादुर्भावइत्यर्थः देवदेवः महादेवः जगत्पतिर्विष्णुः ॥२०॥ २१ ॥ २२ ॥ सनदिति सनत्कुमारादिरूपोनारायणःपुराणिशरीराणिब्रह्मादिस्तंबपर्यंतानांप्राणिनांचक्रे ॥ २३ ॥ मध्यस्थौदानवाविति द्वयोःसंबंधः ॥२४॥अमितंवरंकैवल्यम्॥२५॥पुष्करेनाभिकमलेयत्र यस्मात् ॥२६॥यत्रपुराणेवेदः मंत्रब्राह्मणराशिःश्रुतिसमाहितः प्रत्यक्षेणैवनिहितोदृश्यतेप्रत्यक्षश्रुतिमूलकोयमर्थइत्यर्थः॥२७॥यस्यरूपंविश्वदिमामविंदन्नुहांप्रविष्टःशरीरस्यमध्ये

द्वितीयाचास्यशयनेनिद्रायोगमुपाययौ ॥ प्रजासंहारसर्गार्थंकिमध्यात्मविचिंतकम् १९/सुम्त्रायुगसहस्रंसप्रादुर्भवतिकार्यतः ॥ पूर्णेयुगसहस्रेतुदेवदेवोजगत्पतिः २० पितामहोलोकपालाश्चंद्रादित्यौहुताशनः ।। ब्रह्माचकपिलश्चैवपरमेष्ठीतथैवच २१ देवाःसप्तर्षयश्चैवत्र्यंबकश्चमहायशाः ॥ वायुःसमुद्राशैलाश्चतस्यदेहंसमाश्रिताः २२ सनत्कुमारश्चमहानुभावोमनुर्महात्माभगवान्प्रजाकरः ॥ पुराणदेवोथपुराणिचक्रेप्रदीप्तवैश्वानरतुल्यतेजाः २३ येनचार्णवमध्यस्थौनष्टेस्थावरजंगमे ॥ नष्टेदेवासुरगणेप्रनष्टोरगराक्षसे २४ योद्धुकामौसुदुर्धर्षौदानवौमधुकैटभौ ॥ हतौप्रभवतातेनतयोर्दत्वामितंवरम् २५ पुराकमलनाभस्यस्वपतःसागरांभसि ॥ पुष्करेयत्रसंभूतादेवाःसर्षिगणाःपुरा २६ एषपौष्करकोनामप्रादुर्भावोमहात्मनः ॥ पुराणेकथ्यतेयत्रवेदःश्रुतिसमाहितः २७ वाराहस्तुश्रुतिमुखःप्रादुर्भावोमहात्मनः ॥ यत्रविष्णुःसुरश्रेष्ठोवाराहंरूपमास्थितः ॥ महींसागरपर्यंतांसशैलवनकाननाम् २८ वेदपादोयूपदंष्ट्रःक्रतुदंतश्चितीमुखः ॥ अग्निजिह्वोदर्भरोमाब्रह्मशीर्षोमहातपाः २९ अहोरात्रेक्षणोदिव्योवेदांगश्रुतिभूषणः ॥ आज्यनासःस्रुवातुंडःसामघोषस्वनोमहान् ३० धर्मसत्यमयःश्रीमान्क्रमविक्रमसत्कृतः ॥ प्रायश्चित्तनखोधीरःपशुजानुर्महाभुजः ३१ उद्गात्रांत्रोहोमलिंगःफलबीजमहौषधिः ॥ वाय्वंतरात्मामंत्रस्फिक्विकृतःसोमशोणितः ६२ वेदीस्कंधोहविर्गंधोहव्यकव्यातिवेगवान् ॥ प्राग्वंशकायोद्युतिमान्नानादीक्षाभिराचितः ३३ दक्षिणाहृदयोयोगीमहासत्रमयोमहान् ॥ उपाकर्मोष्ठरुचकःप्रवर्ग्यावर्त्तभूषणः ३४

इतिवाराहप्रादुर्भावस्यतावत्प्रत्यक्षश्रुतिमूलकत्वमाह वाराहस्तुश्रुतिमुखइति ॥ २८ ॥ वेदाः चतुःसंख्यासाम्यात्पादायस्य आदिवराहोपासकैर्यज्ञांगानिवाराहांगेषुचिंतनीयानीत्येवमर्थोयंग्रंथः ॥ २९ ॥ ३० ॥ ३१ ॥ फलबीजमहौषधिः फलेवृषणौबीजंतदंतर्गतंरेतःतद्रूपाओषधयोयस्य प्रसवहेतुत्वसामान्यात् ओषधयएवास्यरेतइत्यर्थः विकृतोऽभिषुतःसोमःसोमरसइत्यर्थःसएवशोणितंयत्र समासैकदेशस्यापिसोमस्यविशेषणंविकृतइति ॥ ३२ ॥ ३३ ॥ उपाकर्मस्वाध्यायस्वीकारःसएवौष्ठस्यरुचकोभूषणंयस्य प्रवर्ग्योधर्मसंतपनार्थोमहावीरः तस्यावर्तः आवृत्तिःसैवभूषणंयस्य ॥ ३४ ॥

मंदरोदग्रवर्चसम् स्वर्गश्रेष्ठइंद्रःतद्वद्वर्चोदीप्तिर्यस्यइंद्रतुल्यमित्यर्थः मंदरोमंथशैलेस्यात्स्वर्गमंदारयोरपीतिमेदिनी ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ सोच्छ्रयन्सःउच्छ्रयन्नितिच्छेदः पादपूरणार्थःसुलोपः ॥ ६० ॥ मयेनपरिष्वक्तः ॥ ६१ ॥ ६२ ॥ इतिहरिवंशेटीकायांषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सप्ताधिकेतुचत्वारिंशकेध्यायेनिरूप्यते कालनेमिसमुद्योगस्त्रिलोकीशासनक्षमः ॥ दानवान्पिप्रीषुः आप्यायितुमिच्छुः प्रोत्तर्पणेऽस्यरूपम् तपांतेग्रीष्मांते ॥ १ ॥ २ ॥ तेपूर्वंभयसंत्रस्ताअपिपश्चादभीताः

तिर्यगायतरक्ताक्षंमंदरोदग्रवर्चसम् ॥ दिधक्षंतमिवायांतंसर्वान्देवगणान्मृधे ५४ तर्जयंतंसुरगणान्छादयंतंदिशोदश ॥ संवर्तकालेक्षुधितंदृप्तंमृत्युमिवोत्थितम् ५५ सुतलेनोच्छ्रितवताविपुलांगुलिपर्वणा ॥ माल्याभरणपूर्णेनकिंचिच्चलितवर्मणा ५६ उच्छ्रितेनाग्रहस्तेनदक्षिणेनवपुष्मता ॥ दानवान्देवनिहतानुत्तिष्ठध्वमितिब्रुवन् ५७ तंकालनेमिंसमरेद्विषतांकालसन्निभम् ॥ वीक्षंतिस्मसुराःसर्वेभयविक्लवमानसाः ५८ तंस्मवीक्षंतिभूतानिक्रमंतंकालनेमिनम् ॥ त्रिविक्रमंविक्रमंतंनारायणमिवापरम् ५९ सोच्छ्रयन्प्रथमंपादंमारुताघूर्णितांबरः ॥ प्राक्रामदसुरोयुद्धेत्रासयन्सर्वदेवताः ६० समयेनासुरेंद्रेणपरिष्वक्तःक्रमन्रणे ॥ कालनेमिर्बभौदैत्यःसविष्णुरिवमंदरः ६१ अथविव्यथिरेदेवाःसर्वेशक्रपुरोगमाः ॥ दृष्ट्वाकालमिवायांतंकालनेमिंभयावहम् ६२ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ छ ॥ वैशंपायनउवाच ॥ दानवांश्चापिपिप्रीषुःकालनेमिर्महासुरः ॥ व्यवर्धतमहातेजास्तपांतेजलदोयथा १ त्रैलोक्यांतर्गतंतंतुदृष्ट्वातेदानवेश्वराः ॥ उत्तस्थुरपरिश्रांताःप्राप्येवामृतमुत्तमम् २ तेभीताभयसंत्रस्तामयतारपुरोगमाः ॥ तारकामयसंग्रामेसततंजयकांक्षिणः ॥ रेजुरायोधनगतादानवायुद्धकांक्षिणः ३ अस्त्रमभ्यस्यतांतेषांव्यूहंचपरिधावताम् ॥ प्रेक्षतांचाभवत्प्रीतिर्दानवंकालनेमिनम् ४ येतुतत्रमयस्यासन्मुख्यायुद्धपुरःसराः ॥ तेपिसर्वेभयंत्यक्त्वाहृष्टायोद्धुमुपस्थिताः ५ मयस्तारोवराहश्चहयग्रीवश्चवीर्यवान् ॥ विप्रचित्तिसुतःश्वेतःखरलंबावुभावपि ६ अरिष्टोबलिपुत्रस्तुकिशोरोष्ट्रौतथैवच ॥ स्वर्भानुश्चामरप्रख्योवक्रयोधीमहासुरः ७ एतेऽस्त्रविदुषःसर्वेसर्वेतपसिसुव्रताः ॥ दानवाःकृतिनोजग्मुःकालनेमिनमुत्तमम् ८ तेगदाभिश्चगुर्वीभिश्चक्रैश्चसपरश्वधैः ॥ अश्मभिश्चाद्रिसदृशैर्गंडशैलैश्चदंशितैः ९ पट्टिशैर्भिंदिपालैश्चपरिघैश्चोत्तमायुधैः ॥ घातनीभिश्चगुर्वीभिःशतघ्नीभिस्तथैवच १० कालकल्पैश्चमुसलैःक्षेपणीयैश्चमुद्गरैः ॥ युगैर्यंत्रैश्चनिर्मुक्तैरर्गलैश्चाग्रताडितैः ११ दोर्भिश्चायतपीनांसैःपाशैःप्रासैश्चमूर्च्छितैः ॥ सर्पैर्लेलिह्यमानैश्चविसर्पद्भिश्चसायकैः १२

वीतभयसंत्रासाइतिपाठेभाविनीआत्मोच्छेदशंकासंत्रासः सैवतात्कालिकितारकामयसंग्रामेतारानिमित्तप्रवृत्तेयुद्धे ॥ ३ ॥ अभ्यस्यतांपुनःपुनः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अस्त्रविदुषः अस्त्रविद्वांसः ॥ ८ ॥ गदादिभिरुपलक्षिताःसंतोयोद्धुंजग्मुरित्यनुषंजनीयम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ दीप्तशस्त्राण्येवप्रवराः विद्युतोयस्याम् प्रचरेतियुक्तःपाठः निर्मीलितान्यस्तंगतानिनक्षत्राणिदेवतारूपाणियस्याम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ दर्पस्यक्षमापराक्रममयम् विनयस्यचक्षमापराक्रममयमितियोजना दृप्तेषुदैत्येषुदेवानांक्षमापूर्वकः पराक्रमस्तद्ध्वंसतः विनीतेषुदेवेषुदैत्यानांपराक्रमपूर्विका क्षमादेवैर्द्रैश्वर्यसहनांता ॥ २१ ॥ भीमाः निर्भयाः ॥ २२ ॥ २३ ॥ २४ ॥ दैत्यानांस्वनान्निर्दधुः अंतर्हितांश्चक्रुः दैत्यमंतर्दधुःस्वनमितिपाठेदैत्यानामिमंदैत्यमित्य

वज्रैःप्रहरणीयैश्चदीप्यमानैश्चतोमरैः ॥ विकोशैश्चासिभिस्तीक्ष्णैःशूलैश्चशितनिर्मलैः १३ तेवैसंदीप्तमनसःप्रगृहीतोत्तमायुधाः ॥ कालनेमिंपुरस्कृत्यतस्थुः संग्राममूर्धनि १४ सादीप्तशस्त्रप्रवरादैत्यानांशुशुभेचमूः ॥ द्यौर्निमीलितनक्षत्रासघनेवांबुदागमे १५ देवतानामपिचमूरुरुचेशक्रपालिता ॥ दीप्ताशीतोष्णतेजोभ्यांचंद्रभास्करवर्चसा १६ वायुवेगवतीसौम्यातारागणपताकिनी ॥ तोयदाविद्धवसनाग्रहनक्षत्रहासिनी १७ यमेंद्रधनदैर्गुप्तावरुणेनच धीमता ॥ संप्रदीप्ताग्निपवनानारायणपरायणा १८ सासमुद्रौघसदृशीदिव्यादेवमहाचमूः ॥ रराजास्त्रवतीभीमायक्षगंधर्वशालिनी १९ तयोश्चम्वोस्तदा तत्रबभूवससमागमः ॥ द्यावापृथिव्योःसंयोगोयथास्याद्युगपर्यये २० तद्युद्धमभवद्घोरंदेवदानवसंकुलम् ॥ क्षमापराक्रममयंदर्पस्यविनयस्यच २१ निश्च क्रमुर्बलाभ्यांतुताभ्यांभीमाःसुरासुराः ॥ पूर्वापराभ्यांसंरब्धाःसागराभ्यामिवांबुदाः २२ ताभ्यांबलाभ्यांसंहृष्टाश्चेरुस्तेदेवदानवाः ॥ वनाभ्यांपार्वती याभ्यांपुष्पिताभ्यांयथागजाः २३ समाजग्मुस्ततोभेरीःशंखान्दध्मुश्चनैकशः ॥ सशब्दोद्यांभुवंचैवदिशश्चसमपूरयत् २४ ज्याघाततलनिर्घोषोधनुषां कूजितानिच ॥ दुंदुभीनांनिनदतांदैत्यानांनिर्दधुःस्वनान् २५ तेन्योन्यमभिसंपेतुःपातयंतःपरस्परम् ॥ बभंजुर्बाहुभिर्बाहून्द्वंद्वमन्येयुयुत्सवः २६ देवतास्त्वशनीर्घोराःपरिघांश्चोत्तमायसान् ॥ ससर्जुराजौनिस्त्रिंशान्गदागुर्वीश्चदानवाः २७ गदानिपातैर्भग्नांगाबाणैश्चशकलीकृताः ॥ परिपेतुर्भृशंकेचि न्युब्जाःकेचित्ससर्जिरे २८ ततोरथैःसतुरगैर्विमानैश्चाशुगामिभिः ॥ समीयुस्तेतुसंरब्धारोषादन्योन्यमाहवे २९ संवर्तमानाःसमरेविवर्ततस्तथापरे ॥ र थारथैर्निरुध्यंतेपदाताश्चपदातिभिः ३० तेषांरथानांतुमुलःसशब्दःशब्दवाहिनाम् ॥ बभूवाथप्रसक्तानांनभसीवपयोमुचा ३१ बभंजिरेरथान्केचित्केचि त्संमृदितारथैः ॥ संबाधमेकेसंप्राप्यनशेकुश्चलितुंरथाः ३२ अन्योन्यस्याभिसमरेदोर्भ्यामुत्क्षिप्यदर्पिताः ॥ संह्रादमानाभरणाजघ्नुस्तत्रासिचर्मिणः ३३

र्थः ॥ २५ ॥ २६ ॥ ससर्जुःप्रत्युक्तवंतः ॥ २७ ॥ न्युब्जाउपरिपृष्ठाः ससर्जिरेसृष्टाःकृताइतियावत् ॥ २८ ॥ २९ ॥ संवर्तमानाःसंमुखंगच्छंतः विवर्तमानाःपरावर्तंतः ॥ ३० ॥ ३१ ॥ ३२ ॥ अन्योन्यस्यदेहंदोर्भ्यांउत्क्षिप्यनिवार्यजग्मुः ॥ ३३ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ कालनेमिःहिरण्यकशिपोःपुत्रःपितरंमेजघानैकइतिवाक्यशेषात् अंबुदोवृत्तिरूपत्वात् पूर्यमाणोविवर्द्धते ॥ ३७ ॥ गात्रेविनिष्पेषुः गात्रसंगमत्रा तूचूर्णीभूताइत्यर्थः ॥ ३८ ॥ अस्यमेघेनसाम्यमापादयति क्रोधादिति निष्पिनष्टीतिनिष्पेषःपेषणकर्ताअग्निरूपोनिष्पेषोऽशनिःतन्मिश्रःपवनोयासुताःअर्चिषः ॥ ३९ ॥ ४० ॥ ४१ ॥ ग्रस्तशिखेनमेरुणादैत्यस्यउद्धूतवसनेनमेरुस्थरत्नभासांचसाम्यम् ॥ ४२ ॥ ४३ ॥ शस्त्राःविशसनकर्तारः निस्त्रिंशाःखड्गाःपेषुतैः वाहुभिः वलिभिःइतिवापाठः

अस्त्रैरन्येविनिर्भिन्नारक्तंवेमुर्हतायुधि ॥ क्षरज्जलानांसदृशाजलदानांसमागमे ३४ तदस्त्रशस्त्रग्रथितंक्षिप्तोत्क्षिप्तगदाविलम् ॥ देवदानवसंक्षुब्धंसंकुलंयुद्ध माबभौ ३५ तद्दानवमहामेघंदेवायुधतडित्प्रभम् ॥ अन्योन्यबाणवर्षंतद्युद्धंदुर्दिनमाबभौ ३६ एतस्मिन्नंतरेक्रुद्धःकालनेमिर्महासुरः ॥ व्यवर्द्धतसमुद्रौ घैःपूर्यमाणइवांबुदः ३७ तस्यविद्युच्चलापीडाःप्रदीप्ताशनिवर्षिणः ॥ गात्रेनगशिरप्रख्याविनिष्पेषुर्बलाहकाः ३८ क्रोधान्निःश्वसतस्तस्यभ्रूभेदस्वेदवर्षि णः ॥ साग्निनिष्पेषपवनामुखान्निश्चेरुरर्चिषः ३९ तिर्यगूर्द्ध्वंचगगनेववृधुस्तस्यबाहवः ॥ पंचास्यःकृष्णवपुषोलेलिहानाइवोरगाः ४० सोस्त्रजालैर्बहुवि धैर्धनुर्भिःपरिघैरपि ॥ दिव्यैराकाशमाववेपर्वतैरुच्छ्रितैरिव ४१ सोनिलोद्धूतवसनस्तस्थौसंग्राममूर्द्धनि ॥ संध्यातपग्रस्तशिखःसार्चिर्मेरुरिवापरः ४२ ऊरुवेगप्रतिक्षिप्तैःशैलशृंगाग्रपादपैः ॥ अपातयद्देवगणान्वज्रेणेवमहागिरीन् ४३ बाहुभिःशस्त्रनिस्त्रिंशैश्छिन्नभिन्नशिरोरसः ॥ नशेकुश्चलितुंदेवाः कालनेमिहतायुधि ४४ मुष्टिभिर्निहताःकेचित्केचिच्चविदलीकृताः ॥ यक्षगंधर्वपतयःपेतुःसहमहोरगैः ४५ तेनवित्रासितादेवाःसमरेकालनेमिना ॥ न शेकुर्यत्नवंतोपिप्रतिकर्तुंविचेतसः ४६ तेनशक्रःसहस्राक्षःस्तंभितःशरबंधनैः ॥ ऐरावतगतःसंख्येचलितुंनशशाकह ४७ निर्जलांभोदसदृशानिर्जलार्ण वसप्रभः ॥ निर्व्यापारःकृतस्तेनविपाशोवरुणोमृधे ४८ रणेवैश्रवणस्तेनपरिघैःकालरूपिभिः ॥ व्यलपल्लोकपालेशस्त्याजितोधनदक्रियाम् ४९ यमः सर्वहरस्तेनदंडप्रहरणोरणे ॥ याम्यामवस्थांसमरेनीतःस्वांदिशमाविशत् ५० सलोकपालानुत्साद्यकृत्वातेषांचकर्मतत् ॥ दिक्षुसर्वासुदेहंस्वंचतुर्द्धाविद धेतदा ५१ सनक्षत्रपथंगत्वादिव्यंस्वर्भानुदर्शितम् ॥ जहारलक्ष्मींसोमस्यतंचास्यविषयंमहत् ५२ चालयामासशीतांशुंस्वर्गद्वाराच्चभास्करम् ॥ सा यनंचास्यविषयंजहारदिनकर्मच ५३ सोग्निंदेवमुखेदृष्ट्वाचकारात्ममुखेस्वयम् ॥ वायुंचतरसाजित्वाचकारात्मवशानुगम् ५४

॥ ४४ ॥ ४५ ॥ ४६ ॥ स्तंभितः वद्धः ॥ ४७ ॥ ४८ ॥ क्रियांयुद्धादिरूपाम् ॥ ४९ ॥ याम्यांइतरेषांयमेनसंपादनोयांअचेतनतामितियावत् ॥ ५० ॥ तेषांतत्कर्मदि शांपालनंकृत्वाकुर्वन् चतुर्द्धादेहंविदधेअन्येभ्योपिदृश्यंतइतिकृत्त्वःकर्त्तरिवनिप्तुगागमश्च ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४

॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ इतिहरिवंशेटीकायांसप्तचत्वारिंशोऽध्यायः ४७ ॥ ॥ छ ॥ ॥ कालनेमिवधःप्रोक्तश्चत्वारिंशेष्टसंयुते ॥ इंद्रादीनांनिज
स्थानस्थापनंविष्णुनाकृतम् ॥ १ ॥ पंचेति विपरीतेनअसात्विकेनकर्मणानअभ्यवर्ततनोपतस्थुः ॥ १ ॥ तेषांवेदादीनाम् ॥ २ ॥ ३ ॥ स्वारूढंशिखिनं चूडामंतम् ॥ ४ ॥
॥ ५ ॥ दानवर्षिणामित्यार्षोदैर्घ्याभावः दानैःवर्षणशीलानामितिवा ॥ ६ ॥ अशाम्यःशमयितुमशक्यः ॥ ७ ॥ विर्घृणोनिर्दयःअस्त्रोअस्त्रवान् बालवन्निर्लज्जश्च सीमंतस्य

ससमुद्रात्समानीयसर्वाश्चसरितोबलात् ॥ चकारात्मवशेवीर्यादेहभूताश्चसिंधवः ५५ अपःस्ववशगाःकृत्वादिविजायाश्चभूमिजाः ॥ स्थापयामासजगतीं सुगुप्तांधरणीधरैः ५६ सस्वयंभूरिवाभातिमहाभूतपतिर्महान् ॥ सर्वलोकमयोदैत्यःसर्वलोकभयावहः ५७ सलोकपालैकवपुश्चंद्रसूर्यग्रहात्मवान् ॥ पावकानिलसंघातोरराजयुधिदानवः ५८ पारमेष्ठ्येस्थितःस्थानेलोकानांप्रभवात्यये ॥ तुष्टुवुस्तंदैत्यगणादेवाइवपितामहम् ५९ इतिश्रीमहाभारतेखिलेषु हरिवंशेहरिवंशपर्वणिआश्चर्यतारकामयेसप्तचत्वारिंशोऽध्यायः ४७ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ पंचतंनाभ्यवर्त्ततविपरीतेनकर्मणा ॥ वेदोधर्मःक्षमा सत्यंश्रीश्चनारायणाश्रया १ सतेषामनुपस्थानात्सक्रोधोदानवेश्वरः ॥ वैष्णवंपदमन्विच्छन्ययौनारायणांतिकम् २ सददर्शसुपर्णस्थंशंखचक्रगदाधरम् ॥ दानवानांविनाशायभ्रामयंतंगदांशुभाम् ३ सजलांभोदसदृशंविद्युत्सदृशवाससम् ॥ स्वारूढंस्वर्णपत्राढ्यंशिखिनंकाश्यपंखगम् ४ दृष्ट्वादैत्यविनाशायरणेसुस्थमवस्थितम् ॥ दानवोविष्णुमक्षोभ्यंबभाषेक्षुब्धमानसः ५ अयंसरिपुरस्माकंपूर्वेषांदानवर्षिणाम् ॥ अर्णवावासिनश्चैवमधोर्वैकैटभस्यच ६ अयंसविग्रहोस्माकमशाम्यःकिलकथ्यते ॥ येननःसंयुगेष्वाद्याबहवोदानवाहताः ७ अयंसनिर्घृणोयुद्धेस्त्रीबालनिरपत्रपः ॥ येनदानवनारीणांसीमंतोद्धरणंकृतम् ८ अयंसविष्णुर्देवानांवैकुंठश्चदिवौकसाम् ॥ अनंतोभोगिनामप्सुस्वयंभूश्चस्वयंभुवः ९ अयंसनाथोदेवानामस्माकंविप्रियेस्थितः ॥ अस्यक्रोधेनमहताहिरण्यकशिपुर्हतः १० अस्यच्छायांसमासाद्यदेवामखमुखेस्थिताः ॥ आज्यंमहर्षिभिर्दत्तमश्नुवंतित्रिधाहुतम् ११ अयंसनिधनेहेतुःसर्वेषांदेवविद्विषाम् ॥ यस्यतेजःप्रविष्टानिकुलान्यस्माकमाहवे १२ अयंसकिलयुद्धेषुसुरार्थेत्यक्तजीवितः ॥ सवितुस्तेजसातुल्यंचक्रंक्षिपतिशत्रुषु १३

केशवेशस्यउद्धरणंमुंडनमित्यर्थः ॥ ८ ॥ देवानांअदितिपुत्राणांमध्येविष्णुर्वामनःदिवौकसांवसुरुद्रादीनांवैकुंठःकल्पांतेप्यकुंठितधामाअनंतःशेषःस्वयंभुवःब्रह्मणोपिस्वयंभूःधातु
र्धातेत्यर्थः ॥ ९ ॥ १० ॥ छायांपक्षेकोटिम् त्रिधाअंगप्रधानप्रायश्चित्तभेदेनत्रिप्रकारं नित्यनैमित्तिककाम्यभेदेनवा गार्हपत्याद्युपाधिभेदेनेतिप्रांचः ॥ ११ ॥ १२ ॥ १३ ॥

अतिक्रांतस्यकालस्यअतिक्रांतेकालेकृतस्यदैत्यवधस्यफलंआत्मवधम् ॥ १४ ॥ १५ ॥ १६ ॥ जात्यंतरंमत्स्यादिरूपम् ॥ १७ ॥ अनंतःआकाशवत्व्यापकोमूर्तिरहितोपि भूत्वाआविर्भूय पद्मनाभत्वेनरूपेणतन्नाम्नाचख्यातइत्यर्थः ॥ १८ ॥ १९ ॥ देवतानांअरणिरिवमातेत्यर्थः ॥ २० ॥ विनंक्ष्यतिअदर्शनंगमिष्यति तथाजन्मांतरेप्यनेनसह वैरंभविष्यत्येवेत्यर्थः ॥ २१ ॥ २२॥२३॥दैत्यस्त्वंअल्पदर्पबलोऽपि क्रोधादसद्वदन्स्थितःक्षमामतीत्यचभाषसे अतस्त्वमात्मनोदोषैरेवहतः ॥ २४ ॥ नतत्रेतियोषितःपुरस्तात्

अयंसकालोदैत्यानांकालभूतेमयिस्थिते ॥ अतिक्रांतस्यकालस्यफलंप्राप्स्यतिदुर्मतिः १४ दिष्ट्येदानींसमक्षंमेविष्णुरेषसमागतः ॥ अद्यमद्बाणनिष्पिष्टोमामे
वप्रणमिष्यति १५ यास्याम्यपचितिंदिष्ट्यापूर्वेषामथसंयुगे ॥ इमंनारायणंहत्वादानवानांभयावहम् १६ क्षिप्रमेवबधिष्यामिरणेनारायणाश्रितान् ॥ जा
त्यंतरगतोप्येषमृधेबाधतिदानवान् १७ एषोऽनंतःपुराभूत्वापद्मनाभइतिस्मृतः ॥ जघानैकार्णवेघोरेतावुभौमधुकैटभौ ॥ विनिवेश्यस्वकेऊरौनिहतौदा
नवेश्वरौ १८ द्विधाभूतंवपुःकृत्वासिंहार्द्धंनरसंस्थितम् ॥ पितरंमेजघानैकोहिरण्यकशिपुंपुरा १९ शुभंगर्भमधत्तेममदितिर्देवतारणिः ॥ यज्ञकालेबले
र्योवैकृत्वावामनरूपताम् ॥ त्रीँल्लोकानाजहारैकःक्रममाणस्त्रिभिःक्रमैः २० भूयस्त्विदानींसमरेसंप्राप्तेतारकामये ॥ मयासहसमागम्यसहदेवैर्विनंक्ष्यति
२१ सएवमुक्त्वाबहुधाक्षिपन्नारायणंरणे ॥ वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् २२ क्षिप्यमाणोसुरेंद्रेणनचुकोपगदाधरः ॥ क्षमाबलेनमहतासस्मि
तंवाक्यमब्रवीत् २३ अल्पदर्प्पबलोदैत्यःस्थितःक्रोधादसद्वदन् ॥ हतस्त्वमात्मनोदोषैःक्षमांयोतीत्यभाषसे २४ अधमस्त्वंममतोधिगेतत्तववाग्बलं ॥
नतत्रपुरुषाःसंतियत्रगर्ज्जंतियोषितः २५ अहंत्वांदैत्यपश्यामिपूर्वेषांमार्गगामिनाम् ॥ प्रजापतिकृतंसेतुंकोभित्त्वास्वस्तिमान्भवेत् २६ अद्यत्वांनाशयि
ष्यामिदेवव्यापारकारकम् ॥ स्वेषुस्वेषुचस्थानेषुस्थापयिष्यामिदेवताः २७ ॥ वैशंपायनउवाच ॥ एवंब्रुवतितद्वाक्यंमृधेश्रीवत्सधारिणि ॥ जहास
दानवःक्रोधात्हस्तांश्चक्रेचसायुधान् २८ सबाहुशतमुद्यम्यसर्वास्त्रग्रहणंरणे ॥ क्रोधाद्विगुणरक्ताक्षोविष्णुंवक्षस्यताडयत् २९ दानवाश्चापिसमरेमयतारपु
रोगमाः ॥ उद्यतायुधनिस्त्रिंशादृष्ट्वाविष्णुमथाद्रवन् ३० सताड्यमानोतिबलैर्दैत्यैःसर्वायुधोद्यतैः ॥ नचचालहरिर्युद्धेऽकंप्यमानइवाचलः ३१ संसक्तश्च
सुपर्णेनकालनेमीमहासुरः ॥ सर्वप्राणेनमहतींगदामुद्यम्यबाहुभिः ३२ मुमोचज्वलितांघोरांसंरब्धोगरुडोपरि ॥ कर्मणातेनदैत्यस्यविष्णुर्विस्मयमागतः ३३



गर्जनंनमरणावहंतत्रपुरुषांतराभावात् अत्ररणेतुतस्त्वात्त्वमृत्युरेवास्तीतिभावः ॥ २५ ॥ तदेवाह अहमितिसेतुंधर्ममर्यादांस्वस्तिमान्कुशली ॥ २६ ॥ व्यापारःस्वास्थ्यप्रच्युतिः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ सर्वप्राणेनसर्वबलेन ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ आत्मनोवपुःदेहांतरंगरुडरूपम् ॥ ३५ ॥ व्यवर्द्धतेति ॥३६ ॥ सइति ॥ ३७ ॥ ३८ ॥ अंबरैः वस्त्रैः ॥ ३९ ॥ ४० ॥ सुवर्णनेमिपर्यंतंसुवर्णमयोनेमेश्चक्रधारा याःपर्यंतःप्रांतदेशोयस्यतत् वज्रनाभदृढमध्यम् ॥ ४१ ॥ स्रकुदाममालाविततम् स्रग्रूपाणांदाम्नांमालापरंपरातद्वत् विततंअलातचक्रवदतिवेगात्प्रयोक्तुर्हस्तमारभ्यलक्ष्यप्रदेशपर्यंतंअविच्छिन्नधारंविभातीत्यर्थः कामरूपिणतिसकृत्प्रयुक्तमपिप्रयोक्तुमिच्छारियास्थूलसूक्ष्मऋजुतिर्यगादिरूपाणिदधानं पुंस्त्वंतुसर्वत्रतदधिष्ठातृरुद्राभिप्रायेण ॥ ४२ ॥

यदातस्यसुपर्णस्यपतितामूर्ध्निसागदा ॥ तदागमत्पदाभूमिंपक्षीव्यथितविग्रहः ३४ लोष्टैरिष्टैःशिलाभिश्चवज्रप्रहरणैस्ततः । जघ्नुस्तेसमरेविष्णुंगोपालंच महारणे ॥ भ्रमन्तंघूर्णमानंचस्तुतिंदेवाःप्रचक्रिरे । जयदेवमहाबाहोमधुकैटभनाशन ॥ हिरण्यकशिपोर्वक्षोनखलाङ्गलदारण । उत्तस्थौचरणाद्विष्णुरमरैःसंस्तुतःपुरा ॥ हतंविष्णुंसमाज्ञायशंखंदध्मौसदानवः । मृदंगाश्चत्रियातत्रवादयन्तोमहासुराः ॥ तालाश्चयाश्चनन्नृतुर्महोत्सवइवाबभौ ॥ सुपर्णंव्यथितंदृष्ट्वाक्षतंचवपुरात्मनः ॥ क्रोधात्संरक्तनयनोवैकुंठश्चक्रमाददे ३५ व्यवर्द्धतचवेगेनसुपर्णेनसमंप्रभुः ॥ भुजाश्चास्यव्यवर्धंतव्याप्नुवंतोदिशोदश ३६ सदिशःप्रदिशश्चैवखंचगांचैवपूरयन् ॥ ववृधेसपुनर्लोकान्क्रांतुकामइवौजसा ३७ तंजयायसुरेंद्राणांवर्द्धमानंनभस्तले ॥ ऋषयःसहगंधर्वैस्तुष्टुवुर्मधुसूदनम् ३८ सद्यांकिरीटेनलिखन्साभ्रमंबरमंबरैः ॥ पद्भ्यामाक्रम्यवसुधांदिशःप्रच्छाद्यबाहुभिः ३९ सूर्यस्यरश्मितुल्याभंसहस्रारमरिक्षयम् ॥ दीप्ताग्निसदृशंघोरंदर्शनीयंसुदर्शनम् ४० सुवर्णनेमिपर्यंतंवज्रनाभंभयावहम् ॥ मेदोमज्जास्थिरुधिरैर्दिग्धंदानवसंभवैः ४१ अद्वितीयंप्रहारेषुक्षुरपर्यंतमंडलम् ॥ स्रग्दाममालाविततंकामगंकामरूपिणम् ४२ स्वयंस्वयंभुवासृष्टंभयदंसर्वविद्विषाम् ॥ महर्षिरोषैराविष्टंनित्यमाहवदर्पितम् ४३ क्षेपणाद्यस्यमुह्यंतिलोकाःसस्थाणुजंगमाः ॥ क्रव्यादानिचभूतानितृप्तिंयांतिमहाहवे ४४ तमप्रतिमकर्माणंसमानंसूर्यवर्चसा ॥ चक्रमुद्यम्यसमरेक्रोधदीप्तोगदाधरः ४५ संमुष्णन्दानवंतेजःसमरेस्वेनतेजसा ॥ चिच्छेदबाहुंचक्रेणश्रीधरःकालनेमिनः ४६ तच्चवक्त्रशतंघोरंसाग्निचूर्णाट्टहासिनम् ॥ तस्यदैत्यस्यचक्रेणप्रममाथबलाद्धरिः ४७ सच्छिन्नबाहुर्विशिरानप्राकंपतदानवः ॥ कबंधोवास्थितःसंख्येविशाखइवपादपः ४८ तंवितत्यमहापक्षौवायोःकृत्वासमजवम् ॥ उरसापातयामासगरुडःकालनेमिनम् ४९ सतस्यदेहोविमुखोविशाखःखात्परिभ्रमन् ॥ निपपातदिवंत्यक्त्वाशोभयन्धरणीतलम् ५० तस्मिन्निपतितेदैत्येदेवाःसर्षिगणास्तदा ॥ साधुसाध्वितिवैकुंठंसमेताःप्रत्यपूजयन् ५१ अपरेयेतुदैत्यावैयुद्धेदुष्टपराक्रमाः ॥ तेसर्वेबाहुभिर्व्याप्तानशेकुश्चलितुंरणे ५२ कांश्चित्केशेषुजग्राहकांश्चित्कंठेभ्यपीडयत् ॥ पाटयत्कस्यचिद्वक्त्रंमध्येकांश्चिदथाग्रहीव् ५३

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ साग्निचूर्णानिआग्नेयौषधवलेनगोलकोत्क्षेपणयंत्राणि तेषामिवअट्टहासोमहाशब्दः तद्युक्तंसाग्निचूर्णाट्टहासिनंवक्त्रशतंपुंस्त्वमार्षं ॥ ४७ ॥ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ वाहुभिः दिशःप्रच्छाद्य वाहुभिरितिप्रागुक्तलक्षणैः हरेरेतिशेषः व्याप्ताः आक्रांताः ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ विमर्दैदैत्यानांविनाशेनिवृत्तेजातेसति ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ निर्यातयप्रयच्छ मृधेत्वयैवानिहतकंटकम्
॥ ६५ ॥ ६६ ॥ देहैर्देहेंद्रियादिभिः श्रवणविहितैर्मद्वाक्यश्रवणेसादरैःकरणैरिंद्रंपुरस्कृत्यमद्वाक्यंश्रूयतामित्यन्वयः ॥६७ ॥ अस्मिन्नः अस्माभिः ॥ ६८ ॥ वैरोचनिर्बलिः स्व

तेगदाचक्रनिर्दग्धागतसत्वागतासवः ॥ गगनात्भ्रष्टसर्वांगानिपेतुर्धरणीतले ५४ तेषुसर्वेषुदैत्येषुहतेषुपुरुषोत्तमः ॥ तस्थौशक्रप्रियंकृत्वाकृतकर्मागदा
धरः ५५ तस्मिन्नविमर्देनिर्वृत्तेसंग्रामेतारकामये ॥ तंदेशमाजगामाशुब्रह्मालोकपितामहः ५६ सर्वैर्ब्रह्मर्षिभिःसार्धंगंधर्वैःसाप्सरोगणैः ॥ देवदेवोहरिंदे
वंपूजयन्वाक्यमब्रवीत् ५७ ॥ ब्रह्मोवाच ॥ कृतंदेवमहत्कर्मसुराणांशल्यमुद्धृतम् ॥ वधेनानेनदैत्यानांवयंहिपरितोषिताः ५८ योयंहतस्त्वयाविष्णोका
लनेमीमहासुरः ॥ त्वमेकोस्यमृधेहंतानान्यःकश्चनविद्यते ५९ एषदेवान्परिभवँल्लोकांश्चसचराचरान् ॥ ऋषीणांकदनंकृत्वामामपिप्रतिगर्जति ६० त
दनेनतयोग्रेणपरितुष्टोस्मिकर्मणा ॥ यदयंकालतुल्याभःकालनेमीनिपातितः ६१ तदागच्छस्वभद्रंतेगच्छामदिवमुत्तमम् ॥ ब्रह्मर्षयस्त्वांतत्रस्थाप्रतीक्षं
तेसदोगताः ६२ अहंमहर्षयश्चैवतत्रत्वांवदतांवर ॥ विधिवच्चार्चयिष्यामोगीर्भिर्दिव्याभिरच्युत ६३ किंचाहंतवदास्यामिवरंवरभृतांवर ॥ सुरेष्वपिस
दैत्येषुवराणांवरदोभवान् ६४ निर्यातयैतत्त्रैलोक्यंस्फीतंनिहतकंटकम् ॥ अस्मिन्नेवमृधेविष्णोशक्रायसुमहात्मने ६५ एवमुक्तोभगवताब्रह्मणाहरिरव्ययः
देवान्शक्रमुखान्सर्वानुवाचशुभयागिरा ६६ ॥ ॥ विष्णुरुवाच ॥ ॥ श्रूयतांत्रिदशाःसर्वेयावंतोत्रसमागताः ॥ श्रवणावहितैर्देहैःपुरस्कृत्यपुरंदरम् ६७
अस्मिन्नःसमरेसर्वेकालनेमिमुखहताः ॥ दानवाविक्रमोपेताःशक्रादपिमहत्तराः ६८ तस्मिन्महतिसंक्रंदेद्वावेवतुविनिःसृतौ ॥ वैरोचनश्चदैत्येंद्रःस्वर्भा
नुश्चमहाग्रहः ६९ तदिष्टांभजतांशक्रोदिशंवरुणएवच ॥ याम्यांयमःपालयतामुत्तरांचधनाधिपः ७० ऋक्षैःसहयथायोगंकालेचरतुचंद्रमाः ॥ अब्दंऋ
तुमुखंसूर्योभजतामयनैःसह ७१ आज्यभागाःप्रवर्त्तंतांसदस्यैरभिपूजिताः ॥ हूयंतामग्नयोविप्रैर्वेददृष्टेनकर्मणा ७२ देवाश्चबलिहोमेनस्वाध्यायेन
महर्षयः ॥ श्राद्धेनपितरश्चैवतृप्तिंयांतुयथापुरा ७३ वायुश्चरतुमार्गस्थस्त्रिधादीप्यतुपावकः ॥ त्रयोवर्णाश्चलोकांस्त्रीन्वर्द्धयंत्वात्मजैर्गुणैः ७४ क्रत
वःसंप्रवर्त्तंतांदीक्षणीयैर्द्विजातिभिः ॥ दक्षिणाश्चोपवर्त्तंतांयथार्हंसर्वसत्रिणाम् ७५ गाश्चसूर्योरसान्सोमोवायुःप्राणांश्चप्राणिषु ॥ तर्पयंतःप्रवर्त्तंतांशिवैःसौ
म्यैश्चकर्मभिः ७६ यथावदनुपूर्व्येणमहेंद्रसलिलोद्भवाः ॥ त्रैलोक्यमातरःसर्वासागरंयांतुनिम्नगाः ७७

र्भानुःराहुः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ त्रिधागार्हपत्यदक्षिणाग्न्याहवनीयरूपेण आत्मजैःस्वाभाविकैर्गुणैर्धर्मैः शमोदमस्तपःशौचमित्यादिनागीतासूपदिष्टैः
॥ ७४ ॥ ७५ ॥ गाः चक्षूंषि ॥ ७६ ॥ ७७ ॥

॥ ७८ ॥ विश्रंभः विश्वासः वः युष्माभिः क्षुद्राः वंचकाः ॥ ७९ ॥ संस्थितिःमर्यादा ॥ ८० ॥ मोहंविपर्ययबुद्धिंययाधर्ममप्यधर्मइतित्यक्ष्यंति अधर्ममपिधर्मइतिमत्वानुष्ठास्यंति ॥ ८१ ॥ अभयमितिच्छेदः ।। ८२ ॥ ८३ ॥ ८४ ॥ इतिश्रीमहाभारतेहरिवंशेटीकायांअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ पंचाशेध्यायएकोनेब्रह्मलोकस्यवर्णनं ॥ तत्रापियजनं विष्णोर्मुनिभिःकृतमीर्यते ॥ १ ॥ ब्रह्मणासलिलंसलिलाश्रयंकमलंयोनिःउत्पत्तिस्थानंयस्यतेन ॥ १ ॥ नीतोब्रह्मलोकमित्यनुकृष्यते ॥ २ ॥ उपास्तउपास्ते ३ आसतः आद

दैत्येभ्यस्त्यज्यतांभीश्चशांतिंव्रजतदेवताः ॥ स्वस्तिवोस्तुगमिष्यामिब्रह्मलोकंसनातनम् ७८ स्वगृहेसर्वलोकेवासंग्रामेवाविशेषतः ॥ विश्रंभोहिनमंतव्योनित्यंक्षुद्राहिदानवाः ७९ छिद्रेषुप्रहरंत्येतेनचैषांसंस्थितिर्ध्रुवा ॥ सौम्यानामृजुभावानांभवतांचार्जवेमतिः ८० अहंतुदुष्टभावानांयुष्मासुसुदुरात्मनाम् ॥ असम्यग्वर्तमानानांमोहंदास्यामिदेवताः ८१ यदाचसुदुराधर्षेदानवेभ्योभयंभवेत् ॥ तदासमुपगम्याशुविधास्येवस्ततोऽभयम् ८२ वैशंपायनउवाच ॥ ॥ एवमुक्त्वासुरगणान्विष्णुःसत्यपराक्रमः ॥ जगामब्रह्मणासार्धंब्रम्हलोकंमहायशाः ८३ एतदाश्चर्यमभवत्संग्रामेतारकामये ॥ दानवानांचविष्णोश्चयन्मांत्वंपरिपृच्छसि ८४ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशे०पर्वणिकालनेमिवधोनामाष्टचत्वारिंशोऽध्यायः ४८॥ छ ॥ ॥ जनमेजय उवाच ॥ ब्रम्हणादेवदेवेनसार्द्धंसलिलयोनिना ॥ ब्रह्मलोकगतोब्रह्मन्वैकुंठःकिंचकारह १ किमर्थंचादिदेवेननीतःकमलयोनिना ॥ विष्णुर्दैत्यवधेवृत्तेदेवैश्चकृतसक्रियः २ ब्रह्मलोकेचकिंस्थानंकंवायोगमुपास्तसः ॥ कंवादधारनियमंसविभुर्भूतभावनः ३ कथंतस्यासतस्तत्रविश्वंजगदिदंमहत् ॥ श्रियमाप्नोतिविपुलांसुरासुरनरार्चितां ४ कथंस्वपितिघर्मांतेबुध्यतेचांबुदप्लवे ॥ कथंचब्रह्मलोकस्थोधुरंवहतिलौकिकीम् ५ चरितंतस्यविप्रेंद्रदिव्यंभगवतोदिवि ८ विस्तरेणयथातत्वंसर्वमिच्छामिवेदितुम् ६ ॥ वैशंपायनउवाच ॥ शृणुनारायणस्यादौविस्तरेणप्रवृत्तयः ॥ ब्रम्हलोकंयथारूढोब्रह्मणासहमोदते ७ कामंतस्यगतिःसूक्ष्मादेवैरपिदुरासदा ॥ यत्तुवक्ष्याम्यहंराजंस्तन्मेनिगदतःशृणु ८ एषलोकमयोदेवोलोकाश्चैतन्मयास्त्रयः ॥ एषदेवमयश्चैवदेवाश्चैतन्मयादिवि ९ तस्यपारंनपश्यंतिबहवःपारचिंतकाः ॥ एषपारंपरंचैवलोकानांवेदमाधवः १०

दानस्यपूजामितिशेषः असगतिदीप्त्यादानेष्वित्यस्यरूपंआसतइति ॥ ४ ॥ घर्मांतेआषाढयांअंबुदप्लवेमेघानांनाशेसतिकार्तिक्यामित्यर्थः ॥ ५ ॥ ६ ॥ प्रवृत्तयः प्रवृत्तीः कर्माणीतियावत् ॥ ७ ॥ मेमत्सकाशात्तत्विष्णोश्चरित्रम् ॥ ८ ॥ एषइति यथातंतुभिःपटःकल्पितः एवंलोकैःहरेःशरीरंकल्प्यते यथाचपटःकेवलंपृथ्वीमयः एवंलोकाः विष्णुमयाः एवंदेवेष्वपियोज्यम् ॥ ९ ॥ तस्येति लोकानांपरंअतएवतेभ्यः परंचआत्मानंवेद ॥ १० ॥

देवानांइंद्रियाणांअंधकारआवरणंयस्मिन्विषयेवेदानामितिपाठेवाइंद्रियाणांगिरांचाविषयस्येत्यर्थः ॥ ११ ॥ आर्षेणमंत्रप्रतिपाद्येन ॥ १२ ॥ प्राक्सवनेप्रातःसवने ॥ १३ ॥
॥ १४॥ ऋषीणांऋषीन् ॥१५॥१६॥ इज्यंतंईज्यमानंआत्मानं विग्रहांतरंदधानम् ॥१७॥ १८ ॥ यत्सामर्थ्यादिकंविद्धीतितंप्रत्यक्षमपिपरोक्षत्वेनजानंतःकथयंति॥ १९॥
विदुषःसकाशात्वेद भवानितिशेषः ॥ २० ॥ भूतेषुदेहेंद्रियादिषुमथ्यमानेषुध्यानबलेनप्रविलाप्यमानेषुसत्सुअंतर्दृष्टचाजनार्दनादेवायंलोकोभवतीतिगम्यते ईक्षामात्रनिर्वृत
त्वाल्लोकस्य अत्रक्रमेण अव्याकृतईक्षणजगतांक्रमात्क्षीरदाधिसर्पिषिदृष्टांताः ॥ २१ ॥ इंद्रियभूतैः चेतनाव्याप्तैःपरमात्मास्वयमेवगोचरोपिविधीयते आज्ञातोज्ञाप्यते तथादे

अस्यदेवांधकारस्यमार्गितव्यस्यदैवतैः ॥ शृणुवैयत्तदावृत्तंब्रम्हलोकेपुरातनम् ११ सगत्वाब्रह्मणोलोकंदृष्ट्वापैतामहंपदम् ॥ ववंदेतानृषीन्सर्वान्विष्णुरा
र्षेणकर्मणा १२ सोग्निप्राक्सवेनदृष्ट्वाहूयमानंमहार्षिभिः ॥ अवंदतमहातेजाःकृत्वापौर्वाह्णिकींक्रियाम् १३ सददर्शमखेष्वाज्यैरीज्यमानंमहर्षिभिः ॥ आ
गंयज्ञियमश्वानंस्वदेहमपरंस्थितम् १४ अभिवाद्याभिवाद्यानामृषीणांब्रह्मवर्चसाम् ॥ परिचक्रामसोचिंत्योब्रह्मलोकंसनातनम् १५ सददर्शोच्छ्रितान्यूपां
श्चषालाग्रविभूषितान् ॥ मखेषुचब्रह्मर्षिभिःशतशःकृतलक्षणान् १६ आज्यधूमंसमाघ्रायशृण्वन्वेदान्द्विजेरितान् ॥ यज्ञैरिज्यंतमात्मानंपश्यंस्तत्रचचार
ह १७ ऊचुस्तमृषयोदेवाःसदस्याःसदसिस्थिताः ॥ अर्घोद्यतभुजाःसर्वेपवित्रांतरपाणयः १८ देवेषुवर्त्ततेयद्वैतद्धिसर्वंजनार्दनात् ॥ यत्प्रवृत्तंचदेवेभ्यस्त
द्धिद्धिमधुसूदनात् १९ अग्नीषोममयंलोकंयंविदुर्विदुषोजनाः ॥ तंसोममग्निंलोकंचवेदविष्णुंसनातनम् २० क्षीराद्यथादधिभवेद्दध्नःसर्पिर्भवेद्य
था ॥ मथ्यमानेषुभूतेषुतथालोकोजनार्दनात् २१ यथेंद्रियैश्चभूतैश्चपरमात्माभिधीयते ॥ तथादेवैश्चवेदैश्चलोकैश्चविहितोहरिः २२ यथाभूतेंद्रियावाप्ति
र्विहिताभुविदेहिनाम् ॥ तथाप्राणेश्वरावाप्तिर्देवानांदिविवैष्णवी २३ सत्रिणांसत्रफलदःपवित्रंपरमात्मवान् ॥ लोकतंत्रधरोह्येषमंत्रैर्मंत्रइवोच्यते २४
ऋषयऊचुः ॥ स्वागतंतेसुरश्रेष्ठपद्मनाभमहाद्युते ॥ इदंयज्ञियमातिथ्यंमंत्रतःप्रतिगृह्यताम् २५ त्वमस्ययज्ञपूतस्यपात्रंपाद्यस्यपावनः ॥ अति
थिस्त्वंहिमंत्रोक्तःसंदृष्टःसंततंमतः २६

वादिभिरनुग्रहादिकर्तृभिर्विष्णुरित्यर्थः चित्तमात्मनइवनियंतृत्वंविष्णोरेवेतिभावः अभिधीयतेविदितइतिपाठेपिसएवार्थः ॥ २२ ॥ यथेति जीवानांभूतेंद्रियसंबंधोभुविभूते
भ्योयथादृष्टएवंदेवानांप्राणोबलंईश्वरः ऐश्वर्यंतदुभयेनसंबंधोविष्णुतोभवतीत्यर्थः ॥ २३ ॥ आत्मवान्स्वतंत्रः मंत्रैर्मंत्रइवोच्यतेइतियथावाचोमाधुर्यंवाचैववर्णनीयंएवंविष्णोः
स्वरूपंविष्णुनैवार्चनीयमित्यर्थः ॥ २४ ॥ २५ ॥ मतःज्ञातः ॥ २६ ॥

त्वयीति अंतरात्मनिअन्यत्रव्यापृतेकृतोपियज्ञोनिष्फलइतिभावः॥ २७॥ २८ ॥ ब्रह्मैवलोकः तत्रस्थःसमाधिस्थइत्यर्थः समाहितइवपितामहोमुमुदइत्यर्थः ब्रह्मलोकसहितः पितामहोब्रह्मलोकपितामहः ब्रह्मलोकस्थाअपिविष्णुंभजंतिनतुकृतकृत्यत्वाभिमानादुदासतइति अध्यायतात्पर्यम्॥२९॥ इतिहरिवंशेटोकायांएकोनपंचाशोऽध्यायः॥४९॥ अथपंचाशकेध्यायेविष्णोःस्वापप्रवोधने ॥ उपासनायवर्ण्यंतेमध्येचपरिवर्तनं ॥ १ ॥ ऋषिभिःपौराणंपुराणेषुविदितम् ब्रह्मलोकेएवबैकुंठकैलासयोरंतर्भावइतिभावः ॥ १ ॥ ॥ २ ॥ ३ ॥ अंबुपतिप्रख्यंसमुद्रतुल्यम्॥ ४ ॥ संवर्तकांबुदाभिमानिभिर्दैवतैरुपेतम् नक्षत्रस्थानंज्योतिश्चक्रंतेनसंकुलम् तिमिरौघेनपरिक्षितंव्याप्तम् सर्वंतत्रसुषुप्तावविवसूक्ष्मरूपेणविद्यमानमपिअविद्ययाआवृतम् अतएवसुरासुरैरप्रधृष्यं अगम्यम् यथावटबीजोदरेकृत्स्नोवटोस्ति अथचतत्रनदृश्यतेएवंतत्रहरिमंदिरेकृत्स्नंब्रह्मांडंसदपिनदृश्यते॥५॥

त्वयियोक्ष्युंगतेविष्णोनप्रावर्त्ततनःक्रियाः॥ अवैष्णवस्ययज्ञस्यनहिकर्मविधीयते २७ सदक्षिणस्ययज्ञस्यत्वत्प्रसूतिःफलंभवेत् ॥ अद्यात्मानमिहास्माभिरिज्यमानंनिरीक्ष्यसे २८ एवमस्त्वितितान्सर्वान्भगवान्प्रत्यपूजयत्॥ मुमुदेब्रह्मलोकस्थोब्रह्मालोकपितामहः २९ इतिश्रीमहाभारतेखिलेषुहरिवंशेह० पर्वणिलोकवर्णनंनामएकोनपंचाशत्तमोऽध्यायः॥ ४९ ॥ ५ ॥ ॥ वैशंपायनउवाच ॥ ॥ ऋषिभिःपूजितस्तैस्तुविवेशहरिरीश्वरः॥ पौराणंब्रह्मसदनंदिव्यंनारायणाश्रमम् १ सतद्विवेशत्दृष्टात्मातानामंत्र्यसदोगतान् ॥ प्रणम्यचादिदेवायब्रह्मणेपद्मयोनये २ स्वेननाम्नापरिज्ञातंसतंनारायणाश्रमम्॥ प्रविशन्नेवभगवान्आयुधानिव्यसर्जयत् ३ सतत्रांबुपतिप्रख्यंददर्शालयमात्मनः॥ स्वधिष्ठितंदेवगणैःशाश्वतैश्चमहर्षिभिः ४ संवर्तकांबुदोपेतंनक्षत्रस्थानसंकुलम् ॥ तिमिरौघपरिक्षिप्तमप्रधृष्यंसुरासुरैः ५ नतत्रविषयोवायोर्नेंदोर्नचविवस्वतः॥ वपुषःपद्मनाभस्यसदेशस्तेजसावृतः ६ सतत्रप्रविशन्नेवजटाभारंसमुद्वहन् ॥ सहस्रशीर्षोभूत्वातुशयनायोपचक्रमे ७ लोकानामंतकालज्ञाकालीनयनशालिनी ॥ उपतस्थेमहात्मानंनिद्रातंकालरूपिणी ८ सशिष्येशयनेदिव्येसमुद्रांभोदशीतले ॥ हरिरेकार्णवोक्तेनव्रतेनव्रतिनांवरः ९

तर्हितत्स्वेकिंमानमतआह नतत्रेति अनात्मज्योतिषातन्नप्रकाशतेऽपितुआत्मज्योतिषैवेत्यर्थः यथाहिनिद्रावस्थायांसर्वंसूक्ष्मरूपेणसदपिनभाति कदाचित्तुस्वप्नेआत्मज्योतिषा भात्यपिअतएवस्वप्नावस्थामधिकृत्योक्तं आत्मनैवायंज्योतिषास्तेप्रलयांतेविपर्येतीतिएवंअधिदैवमपिज्ञेयमितिभावः ॥ ६ ॥ पूर्वंसहस्रशीर्षाभूत्वातद्विश्वरूपत्वलक्षणंसहस्रशिरस्त्वंत्यक्त्वापिजटाभारस्थानीयंलोककर्मवासनाजालंउद्वहन्शयनंकृतवान् अतएतदनुसारिस्वस्मासुसुषुप्तावपिकार्यलिंगेनवासनास्तीतिगम्यते ॥ ७ ॥ कालीकृष्णवर्णासूक्ष्मस्याप्यावरणकर्त्री ॥ ८ ॥ शिष्येशयनंकृतवान्शयनेसमावौ क्षीरसमुद्रोनिर्विकल्पः अंभोदः सविकल्पः तदुभयरूपतयानिस्तापेएकार्णवोक्तेनव्रतेननिर्विकल्पसमाध्यर्थमुक्तेनव्रतेनसंयमेन ॥ ९ ॥

जगतोभवायेति अहिंसाप्रतिष्ठायांतत्संनिधौवैरत्यागइत्येकैकस्ययोगांगस्यनिर्वैरत्वादिकंफलंपरत्रस्मर्यते पूर्णस्यतुयोगस्यजगतोभवार्थत्वमुपपन्नमितिभावः देवाऋषयश्चाध्या त्मंइंद्रियाणिप्राणाश्चउपासांचक्रिरे केवलंसमीपेस्थिताःनतुस्वकार्यंभोगंनिवर्तयंतीत्यर्थः ॥ १० ॥ मातुर्नाभिदेशादुद्भूतंनालंतत्पुष्पेणसंयुज्यतेपुष्पंचरेतःसंसर्गाद्गर्भोभवति स चगर्भोमातृमुक्तान्नरसेननालद्वारापुष्टोभवति ततःपक्वफलन्यायेनवृंताद्गर्भश्च्युतोभवति एवंविष्णोःसकाशादुद्भूतोब्रह्मा वैष्णव्यामाययापुष्टःसन्विष्णुतःच्युतोभूत्वात्मानंततोन्यं मन्यतइति तदेतत्कथारूपकेणवर्णयति तस्येतिनाभिमध्यात्समुत्थितनालद्वारेणाविर्भूतंआद्यंतस्यआद्यंतवतः ब्रह्मणोवेधसःअसनंआश्रयःपद्मंपद्मकोशाकारंब्रह्मांडम् ॥ ११ ॥ ब्रह्मणःइदानींतनस्यसूत्रं प्राग्भवीयोवासनातंतुः सएवउद्यतकरस्थानीयोयस्यसःस्वपन्नेवस्वास्थ्यादप्रच्युतएवसन्लोकानांकालकृतंपर्ययंऊर्ध्वाधरीभावं आवर्तयतिअयस्कांत न्यायेनसत्तामात्रादकुर्वतएवसकाशात्लोकस्वाभाव्यादेवसृष्ट्यादयोजायंतइतिभावः ॥ १२ ॥ तस्यब्रह्मणःएवंयथानारायणाद्ब्रह्माऽभवदेवंब्रह्मणःसकाशाशादन्येप्यभूवन्नि त्यर्थः ॥ १३ ॥ मेध्याःयज्ञार्हाः ब्राह्मणाअपिकर्मभेदात्ब्रह्मणाचतुर्द्धाब्रह्मक्षत्रविट्शूद्ररूपेणविभागंप्रापिताः स्वांगतिंपरमप्राप्यंईश्वरंकृतांतोक्तेनकृतसिद्धांतेनवेदेनउक्तंयत्क

तंशयानंमहात्मानंभवायजगतःप्रभुम् ॥ उपासांचक्रिरेविष्णुंदेवाःसर्षिगणास्तथा १० तस्यसुप्तस्यशुशुभेनाभिमध्यात्समुत्थितम् ॥ आद्यंतस्यासनं पद्मंब्रह्मणःसूर्यवर्चसम् ॥ सहस्रपत्रंवर्णाढ्यंसुकुमारंविभूषितम् ११ ब्रह्मसूत्रोद्यतकरःस्वपन्नेवमहामुनिः ॥ आवर्त्तयतिलोकानांसर्वेषांकालपर्ययम् १२ विवृत्तात्तस्यवदनान्निःश्वासपवनेरिताः ॥ प्रजानांपंक्तयोह्युच्चैर्निष्पतंत्युत्पतंतिच १३ तेसृष्टाःप्राणिनोमेध्याविभक्ताब्रह्मणास्वयम् ॥ चतुर्द्धास्वांगतिंज ग्मुःकृतांतोक्तेनकर्मणा १४ नतंवेदस्वयंब्रह्मानापिब्रह्मर्षयोव्ययाः ॥ विष्णोर्निद्रामयंयोगंप्रविष्टंतमसावृतम् १५ तेतुब्रह्मर्षयःसर्वेपितामहपुरोगमाः ॥ नविदुस्तंक्वचित्सुप्तंक्वचिदासीनमासने १६ जागर्त्तिकोत्रकःशेतेकश्चशक्तश्चनेंगते ॥ कोभोगवान्कोद्युतिमान्कृष्णात्कृष्णतरश्चकः १७

भतेनससर्वोपिवर्णःस्वधर्मनिष्ठोमुच्यतइत्यर्थः ॥ १४ ॥ नतमिति विष्णोर्निद्रामयंअविद्याशबलमपिरूपंदुर्ज्ञेयंकिमुतशुद्धमितिभावः योगंप्रविष्टंस्वरूपेएवसमाहितम् ॥ १५॥ क्वचिद्देशेकालेवासुप्तंत्यक्तव्यवहारम् ॥ आसीनंउपात्तव्यवहारंवानविदुः सृष्टिप्राविण्यात्योगस्यविचारस्यचाभावादितिभावः ॥ १६ ॥ केचिद्विचारयंतीत्याह जागर्त्तीति अत्रदेहेकोजागर्तिइंद्रियैर्विषयानुपलभते सभूतयोगाज्जातोमंदशक्तितुल्यश्चेतनोनान्यइतिलोकायतमाशंक्याहकःशेतेइतिसुप्तावपिभूतयोगस्यसत्वाद्विषयोपलब्धापत्तेर्भूतेभ्योन्य आत्मेत्यर्थःसुप्तावानुपात्रकरणत्वेनाविषयाननुभवन् मनएवतर्ह्यात्मास्त्वित्याशंक्याह कश्चशक्तश्चनेंगतइति विनापिकरणानुग्रहं स्वप्नेमनसोविषयावभासतत्वंदृष्टं तच्चवाह्यौष्ण्य वत्दुस्त्यजंअतस्ततोप्यन्यआत्मेत्यर्थः शक्तःसनेंगतेस्वशक्यंकार्यंनकरोतीत्येतन्नयुज्यतइतिपदार्थः मनसः करणांतरवत्स्वप्रवृत्तिनिवृत्त्योः स्वातंत्र्याभावात्तन्नियाम काबुद्धिरेवआत्मास्त्वित्याशंक्याह कोभोगवानिति बुद्धेश्चानित्यपरिणामत्वेनकालांतरीयायाः कालांतरेऽभावात् योहंबाल्येइदंफलमश्रौषंसएवयौवनेऽद्राक्षं सएवेदानीं

रसयामीतिबुद्धिभेदेपिआत्मैक्यप्रत्याभिज्ञानात्ततान्योभोक्तेत्यर्थः अस्तु तर्ह्यहंसुखीत्यनुभवादहंकारएवात्मेतिपक्ष नहंगौर इत्यनुभवाद्देहस्याप्यात्मतापत्तेरहंकारस्यापिसुषुप्तादावद र्शनाच्चाऽप्रदर्श्यशून्यमेवात्मास्त्वित्याशंक्याह कोद्युतिमानिति सुषुप्तावात्माभावेसुखमहमस्वाप्संनकिंचिदवेदिषमितिसुषुप्तिकालीनसुखाज्ञानयोरननुभूतयोःपरामर्शायोगात् त दनुभवश्चनतदात्माप्रकाशास्तित्वमंतरेणसंभवतीति अस्तिशून्यसाक्षीआत्मासद्रूपइतिभावः अस्तुतर्ह्ययंसाक्षीपुरुषांतरस्यपुरुषांतरेहंसुखीत्यादिव्यवहाराभावात्प्रतिशरीरंभिन्नःक्लेश कर्मविपाकाशयैरपरामृष्टात्पुरुषविशेषादीश्वराच्चविलक्षणोबंधमोक्षादिभागीत्याशंक्याह कृष्णात्कृष्णतरश्चकइति शब्दादिहीनत्वात्परमते प्रधानंअतिसूक्ष्मंव्यवहारतएव वस्तुत स्तुत्रिगुणात्मत्वेनसंहतात्तस्मादसंहतःपुरुषएवसूक्ष्मः नहिततोपिसूक्ष्मईश्वरइतिपातंजलाअप्यभ्युपगच्छंति श्रुतिश्चनान्योतोस्तिद्रष्टेतिद्रष्टृंतरंनिषेधतीतिनसाक्षिगोन्यःकश्चिदा त्मास्तीत्यर्थः बंधमोक्षादिव्यवस्थातुतर्कमतेश्रोत्रैक्येपिउपाधिभेदात्शब्दग्रहव्यवस्थावद्भविष्यति क्लेशादिसंबंधवस्तुवास्तवःकस्यापिनास्तीतिनात्मभेदोनात्मनोऽनीश्वरत्वंचास्ती

**विमृशंतिरमतंदेवादिव्याभिरुपपत्तिभिः ॥ नचैनंशेकुरन्वेष्टुंकर्मतोजन्मतोपिवा १८ गाथाभिस्तत्प्रदिष्टाभिर्येतस्यचरितंविदुः ॥ पुराणास्तंपुराणेषुऋष यःसंप्रचक्षते १९ श्रूयतेचास्यचरितंदेवेष्वपिपुरातनम् ॥ महापुराणात्प्रभृतिपरंतस्यनविद्यते २० यच्चास्यदेवदेवस्यचरितंस्वप्रभावजम् ॥ तेनेमाःश्रु तयोव्याप्तावैदिक्योलौकिकाश्चयाः २१ भवकालेभवत्येषलोकानांलोकभावनः ॥ दानवानामभावायजागर्त्तिमधुसूदनः २२ यत्रैनंवीक्षितुंदेवानशेकुःसु प्तमव्ययम् ॥ ततःस्वपितिघर्मांतेजागर्त्तिजलदक्षये २३ सहिवेदाश्चयज्ञाश्चयज्ञांगानिचसर्वशः ॥ यातुयज्ञगतिःप्रोक्तासएषपुरुषोत्तमः २४ तस्मिन्सु प्तेनवर्त्ततेमंत्रपूताःक्रतुक्रियाः ॥ शरत्प्रवृत्तयज्ञोयंजागर्त्तिमधुसूदनः २५ तदिदंवार्षिकंचक्रंकारयत्ययंबुदेश्वरः ॥ वैष्णवंकर्मकुर्वाणःसुप्तेविष्णौपुरंदरः २६ याह्येषागह्वरामायानिद्रेतिजगतिस्थिता ॥ साऽकस्माद्द्वेषिणीघोराकालरात्रिर्महीक्षिताम् २७**

तिसर्वमनवद्यं कृष्णात्कृशादित्यर्थः कृषेरौणादिकनप्रत्ययांतस्येदंरूपंकृष्णइति॥ १७॥दिव्याभिःश्रौतीभिःउपपत्तिभिर्युक्तिभिः॥ १८॥गाथाभिःयदक्षरंपंचविधंसमेतीत्यादिभिर्मंत्रैः तत्प्रदिष्टाभिःतेनपरमात्मनानिश्वासितरूपेणनिर्दिष्टाभिः तथाचश्रुतिः अस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदोयजुर्वेदइत्यादि ॥ १९ ॥ २० ॥ २१ ॥ भवतिआविर्भवति ॥ २२ ॥ आविर्भावकालेप्ययंआषाढीमारभ्यकार्तिकीपर्यंतंस्वपितीत्याह यत्रैनामिति ॥ २३ ॥ यज्ञगतिर्यज्ञप्राप्यलोकः ॥ २४ ॥ शरदिप्रवृत्तोयज्ञोशरदिवाजपेयेनयजेते त्यादिश्रुतेर्वाजपेयादिर्यस्येति यज्ञप्रवृत्तावेवायंप्रतिबुध्यते नत्वयज्ञस्येत्यर्थः ॥ २५ ॥ अतएववार्षिकंवर्षर्तौभवंइदंचक्रंयज्ञवर्जनरूपोजलधर्मः भाद्रपदीमारभ्यशरदिपितृयज्ञा दीनांप्रवृत्तिदर्शनात् ॥ २६ ॥ विष्णोःप्रवोधेयज्ञोनिमित्तमित्युक्तम् निद्रायांनिमित्तमाह याहीति गह्वरातमोमयीअकस्मात्निर्निमित्तम् महीक्षितांराज्ञांअन्योन्यंयुध्यतांयदाविनाश रतदाविष्णुःस्वपितिहिंसादिदोषोदयादित्यर्थः ॥ २७ ॥

इयमेवतामसीनिशारूपेणनिद्रारूपेणचसर्वान्मोहयतीत्याह तस्याइत्यादिना ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ सर्वहरस्यकालस्यैषासखी ॥ ३२ ॥ ३३ ॥ एवमिति हितं भुक्तस्यान्नादेःसम्यक्पाकःश्रमपरिहारश्चेत्यादिः तदर्थायसेवनीयायतइयंकृष्णवर्त्मनासूक्ष्ममार्गेणपरमेश्वरेणध्रियते मन्निद्रयामदुदरस्थोलोकः सर्वोपिविश्रम्यतामित्याशयवतेत्यर्थोतःपत्यापतिव्रतेवसुखार्थिनासेवया ॥ ३४ ॥ एवंमहानिद्राप्रसंगाद्वार्षिकींदैनंदिनींचईशस्यजीवस्यनिद्रांप्रपंच्यतामेवमहानिद्रामनुसंधत्ते सतयेत्यादिना ॥ ३५ ॥ ३६ ॥

तस्यास्तनुस्तमोद्वारानिशांदिवसनाशिनी ॥ जीवितार्द्धहराघोरासर्वप्राणभृतांभुवि २८ नैतयाकश्चिदाविष्टोजृंभमाणोमुहुर्मुहुः ॥ शक्तःप्रसहितुंवेगंमज्जन्निवमहार्णवे २९ अन्नजाभुविमर्त्यानांश्रमजावाकथंचन ॥ सैषाभवतिलोकस्यनिद्रासर्वस्यलौकिकी ३० स्वप्नांतेक्षीयतेह्येषाप्रायशोभुविदेहिनाम् ॥ मृत्युकालेचभूतानांप्राणान्नाशयतेभृशम् ३१ देवेष्वपिदधारैनांनान्योनारायणादृते ॥ सखीसर्वहरस्यैषामायाविष्णुशरीरजा ३२ सैषानारायणमुखेदृष्टाकमललोचना ॥ लोकानल्पेनकालेनग्रसतेलोकमोहिनी ३३ एवमेषाहितार्थायलोकानांकृष्णवर्त्मना ॥ ध्रियतेसेवनीयाहिपत्येवचपतिव्रता ३४ सतयानिद्रयाच्छन्नस्तस्मिन्नारायणाश्रमे ॥ स्वपितिस्मतदाविष्णुर्मोहयन्जगदव्ययम् ३५ तस्यवर्षसहस्राणिशयानस्यमहात्मनः ॥ जग्मुःकृतयुगंचैवत्रेताचैवयुगोत्तमम् ३६ सतुद्वापरपर्यंतेज्ञात्वालोकान्सुदुःखितान् ॥ प्राबुध्यतमहातेजाःस्तूयमानोमहर्षिभिः ३७ ॥ ऋषयऊचुः ॥ जहीहिनिद्रांसहजांभुक्तपूर्वामिवस्रजम् ॥ इमेतेब्रह्मणासार्द्धंदेवादर्शनकांक्षिणः ३८ इमेत्वांब्रह्मविद्वांसोब्रह्मसंस्तववादिनः ॥ वर्द्धयंतिहृषीकेशऋषयःसंशितव्रताः ३९ एतेषामात्मभूतानांभूतानामात्मभावनः ॥ शृणुविष्णोशुभावाचोभूव्योमाग्न्यनिलांभसाम् ४० इमेत्वांसप्तमुनयःसहितामुनिमंडलैः ॥ स्तुवंतिदेवदिव्याभिर्गेयाभिर्गीर्भिरंजसा ४१ उत्तिष्ठशतपत्राक्षपद्मनाभमहाद्युते ॥ कारणंकिंचिदुत्पन्नंदेवानांकार्यगौरवात् ४२ ॥ वैशंपायनउवाच ॥ ॥ ससंक्षिप्यजलंसर्वंतिमिरौघंविदारयन् ॥ उदतिष्ठद्धृषीकेशःश्रियापरमयाज्वलन् ४३ सददर्शसुरान्सर्वान्समेतान्सपितामहान् ॥ विवक्षतःप्रक्षुभितान्जगदर्थंसमागतान् ४४ तानुवाचहरिर्देवोनिद्राविश्रांतलोचनः ॥ तत्त्वदृष्टार्थयावाचाधर्महेत्वर्थयुक्तया ४५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कुतोवोविग्रहोदेवाःकुतोवोभयमागतम् ॥ कस्यवाकेनवाकार्यंकिंवामयिनवर्त्तते ४६ किंखल्वकुशलंलोकेवर्त्ततेदानवोत्थितम् ॥ नृणामायासजननंशीघ्रमिच्छामिवेदितुम् ४७

॥ ३७ ॥ ३८ ॥ ३९ ॥ भूव्योमेतिभूम्याद्यधिष्ठातॄणांदेवतानाम् ॥ ४० ॥ ४१ ॥ ४२ ॥ जलंअखंडानंदंसंक्षिप्यउपाध्यात्रंशेनअल्पीकृत्यतिमिरौघंशरीरभासाविदारयन् ॥ ४३ ॥ ४४ ॥ ४५ ॥ कस्यदेवस्य केनअर्थेन कार्यंप्रयोजनंकिंवासामर्थ्यम् ॥ ४६ ॥ ४७ ॥

॥ ४८ ॥ ॥ इतिहरिवंशेटीकायांपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ एकाधिकेथपंचाशेध्यायेविष्णोर्निरूप्यते ॥ भूभारहरणार्थायब्रह्मप्रार्थनमद्भुतम् ॥ १ ॥ तच्छ्रुत्वा ॥ १ ॥ कर्णोनौकापरिवर्तकरोमहान्दंडःतस्यधारःकर्णधारस्तद्वदितिलुप्तोपमा ॥ २ ॥ ३ ॥ ४ ॥ षष्ठंभागंषट्भागं ॥ ५ ॥ सुकरैर्यथोचितैःकरग्रहैःविशेषेणप्रयुक्तार्थाः बहुकरग्रहोहिराजाप्रजाउद्वासयन्नकोशवृद्धिकरोभवति एतेतुनतथासन्नित्यर्थः ॥ ६ ॥ अंजसासाकल्येन ॥ ७ ॥ नोद्वेजनीयाःअनुद्वेजकाःसंतः षड्गुणान्नीतिशास्त्रो

एषब्रह्मविदांमध्येविहायशयनोत्तमम् ॥ शिवायभवतामर्थेस्थितःकिंकरवाणिवः ४८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिविष्णोर्योगशयनोत्थाननामपंचाशत्तमोऽध्यायः ५० ॥ छ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वाविष्णुगदितंब्रह्मालोकपितामहः ॥ उवाचपरमंवाक्यंहितंसर्वदिवौकसाम् १ ॥ नास्तिकिंचिद्भयंविष्णोसुराणामसुरांतक ॥ येषांभवानभयदःकर्णधारोरणेरणे २ शक्रेजयतिदेवेशेत्वयिचासुरसूदने ॥ धर्मेप्रयतमानानांमानवानांकुतोभयम् ३ सत्येधर्मेचनिरतान्मानवान्विगतज्वरान् ॥ नाकालेधर्मिणोमृत्युःशक्नोतिप्रसमीक्षितुम् ४ मानवानांचपतयःपार्थिवाश्चपरस्परम् ॥ षड्भागमुपभुंजानानभयंकुर्वतेमिथः ५ तेप्रजानांशुभकराःकरदैरवगर्हिताः ॥ सकरैर्विप्रयुक्तार्थाःकोशमापूरयंत्युत ६ स्फीतान्जनपदान्सर्वान्पालयंतःक्षमापराः ॥ अतीक्ष्णदंडाश्चतुरोवर्णान्जुगुपुरंजसा ७ नोद्वेजनीयाभूतानांसचिवैःसाधुपूजिताः ॥ चतुरंगबलैर्गुप्ताःषड्गुणानुपभुंजते ८ धनुर्वेदपराःसर्वेसर्वेवेदेषुनिष्ठिताः ॥ जयंतेषयथाकालंयज्ञैर्विपुलदक्षिणैः ९ वेदानधीत्यदीक्षाभिर्महर्षीन्ब्रह्मचर्यया ॥ श्राद्धैश्चमेध्यैःशतशस्तर्पयंतिपितामहान् १० नैषामविदितंकिंचित्त्रिविधंभुविदृश्यते ॥ वैदिकंलौकिकंचैवधर्मशास्त्रोक्तमेवच ११ तेपरावरदृष्टार्थामहर्षिसमतेजसः ॥ भूयःकृतयुगंकर्तुमुत्सहंतेनराधिपाः १२ तेषामेवप्रभावेणशिवंवर्षतिवासवः ॥ यथार्थंचववुर्वाताविरजस्कादिशोदश १३ निरुत्पाताचवसुधासुप्रचाराश्चखेग्रहाः ॥ चंद्रमाश्चसनक्षत्रःसौम्यंचरतियोगतः १४ अनुलोमकरःसूर्यस्त्वयनेद्वेचचारह ॥ हव्यैश्चविविधैस्तृप्तःशुभगंधोहुताशनः १५ एवंसम्यक्प्रवृत्तेषुविवृद्धेषुमखादिषु ॥ तर्पयत्सुमहींकृत्स्नांनृणांकालभयंकुतः १६ तेषांज्वलितकीर्तीनामन्योन्यवशवर्तिनाम् ॥ राज्ञांबलैर्बलवतांपीड्यतेवसुधातलम् १७ सेयंभारपरिश्रांतापीड्यमानानराधिपैः ॥ पृथिवीसमनुप्राप्तानौरिवासन्नविप्लवा १८

कान् संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्यान् उपभुंजतेसेवंते ॥ ८ ॥ ९ ॥ वेदानधीत्यमहर्षीन्दीक्षाभिर्नियमग्रहणैः चर्ययायज्ञक्रिययाच ब्रह्माहिरण्यगर्भाख्यंसर्वदेवतामयंतर्पयंति ॥ १० ॥ एषांनृपाणाम् ॥ ११ ॥ परेअवरेचब्रह्माणिदृष्टार्थाजातप्रत्ययाः कृतयुगंपापलेशेनाप्यननुविद्धंकृत्स्नधर्मम् ॥ १२ ॥ यथार्थंयावत्प्रयोजनम् १३ ॥ १४ ॥ १५ ॥ तर्पयत्सुवृष्ट्यादिनेतिशेषः १६ १७ नराधिपैःरूपैःस्वशरीरैःयुगांतोवाह्निस्तत्सदृशैः पीड्यमानेत्यन्वयःआसन्नविप्लवाउपरिगतविनाशा ॥ १८ ॥

शैलोच्चलितबंधनायथासमुद्रेलोहमयैर्लांगलैर्निरुद्धासतमिहताापिवायुनानचाल्यते तद्वत्पृथिवीपर्वतैर्जलमध्येधृतास्ति इदानींशैलरूपाणिउच्चलितानिबंधनानियस्यास्तथाविधा भूत् अतएवजलस्यउत्पीडाउपर्यागमनेनयापीडातयाआकुला स्वेदंआर्द्रताम् ॥ १९ ॥ २० ॥ २१ ॥ निर्विवरानिरुच्छ्वासा ॥ २२ ॥ सेयंभूमिर्निरामयंकालंअग्रतःकृत्वा निश्चेष्टासतीममालयंप्राप्तेत्यन्वयः यत्रआमयोपिप्रजानांनारिवकुतोमृत्युस्तंकालंनिमित्तीकृत्य तत्कृतंबहुभारत्वंप्राप्यवहनासमर्थाश्रांतवाहसदृशीसतीत्यर्थः ॥ २३ ॥ न

युगांतसदृशैरूपैःशैलोच्चलितबंधना ॥ जलोत्पीडाकुलास्वेदंधारयंतीमुहुर्मुहुः १९ क्षत्रियाणांवपुर्भिश्चतेजसाचबलेनच ॥ नृणांचराष्ट्रैर्विस्तीर्णैःश्राम्यतीववसुंधरा २० पुरेपुरेनरपतिःकोटिसंख्यैर्बलैर्वृतः ॥ राष्ट्रेराष्ट्रेचबहवोग्रामाःशतसहस्रशः २१ भूमिपानांसहस्रैश्चतेषांचबलिनांबलैः ॥ ग्रामायुताद्यैराष्ट्रैश्चभूमिर्निर्विवराकृता २२ सेयंनिरामयंकृत्वानिश्चेष्टाकालमग्रतः ॥ प्राप्तामामालयंविष्णोभवांश्चास्याःपरागतिः २३ कर्मभूमिर्मनुष्याणांभूमिरेषाव्यथांगता ॥ यथानसीदेत्तत्कार्यंजगत्येषाहिशाश्वती २४ अस्याहिपीडनेदोषोमहान्स्यान्मधुसूदन ॥ क्रियालोपश्चलोकानांपीडितंचजगद्भवेत् २५ श्राम्यतेव्यक्तमेवेयंपार्थिवौघप्रपीडिता ॥ सहजांयाक्षमांत्यक्त्वाचलत्वमचलागता २६ तदस्याःश्रुतवंतःस्मतत्त्वापिभवताश्रुतम् ॥ भारावतरणार्थंहिमंत्रयामसहत्वया २७ सत्पथेहिस्थिताःसर्वेराजानोराष्ट्रवर्द्धनाः ॥ नराणांचत्रयोवर्णाब्राम्हणाननुयायिनः २८ सर्वेसत्यपरंवाक्यंवर्णाधर्मपरास्तथा॥ सर्वेवेदपराविप्राःसर्वेविप्रपरानराः २९ एवंजगतिवर्त्ततेमनुष्याधर्मकारणात् ॥ यथाधर्मवधोनस्यात्तथामंत्रःप्रवर्त्यताम् ३० सतांगतिरियंनान्यधर्मश्चास्याःसुसाधनम् ॥ राज्ञांचैववधःकार्योधरण्याभारनिर्णये ३१ तदागच्छमहाभागसहवैमंत्रकारणात् ॥ व्रजामोमेरुशिखरंपुरस्कृत्यवसुंधराम् ३२ (एतावदुक्त्वाराजेंद्रब्रह्मालोकपितामहः ॥ पृथिव्यासहविश्वात्माविरराममहाद्युतिः) ३३ इतिश्रीमहाभारतेखिलेषुहरिवंशेहरिवंशपर्वणिभारावतरणेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ६ ॥ वैशंपायनउवाच ॥ बाढमित्येवसहतैर्दुर्दिनांभोदनिःस्वनः ॥ प्रतस्थेदुर्दिनाकारःसदुर्दिनइवाचलः १ समुक्तामणिविद्योतंसचंद्रांभोदवर्चसम् ॥ सजटामंडलंकृत्स्नंसीबभ्रच्छ्रीधरोहरिः २

सीदेत्लोष्टवद्बहुभारेणनविशीर्येतजगतीजगदाधारभूता ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ भारनिर्णयेभारस्यपरिहरणेनिमित्ते ॥ ३१ ॥ ३२ ॥ ३३ ॥ इतिहरिवंशेटीकायांएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ६ ॥ ॥ वर्ण्यतेथद्विपंचाशेसमाजेसुरसंसदि ॥ धरण्याभारखिन्नायाविज्ञप्तिःकरुणोदया ॥ १ ॥ बाढं दुर्दिनहेतुःवाद्दुर्दिनोमेघस्तदाकारस्तद्वर्णः सदुर्दिनःगर्जन्मेवसाहितः कृत्स्नंउदरम् कृत्स्नंसर्वावुकुक्षिषुइतिमेदिनी जटामंडलसहितांबिभ्रत्पाठांतरस्पष्टोर्थः ॥ १ ॥ २ ॥

रोमांचाः रोम्णामुच्छ्रायाः तैःकृत्याउद्गताराजयोरेषाइवतद्वान्स्तनद्वयमुखपर्यंतं अंचितम् रश्मिद्वारास्वतोवापसर्पणंयस्यसः स्तनद्वयमुखांचितः ॥ ३ ॥ ४ ॥ पद्मयोनिर्गतानु
गोनुगामीयस्यतम् ॥५॥ रत्नपर्वतंमेरुम् कामरूपिणींयथासंकल्पितंतथारूपधारिणीम् ॥६॥ वज्रसंधानतोरणांरत्नखचितबहिर्द्वाराम्॥७॥ मनोनिर्माणचित्राढ्याम् स्वसंकल्पो
त्थविचित्ररचनावतीम् ॥ ८ ॥ ९ ॥ १० ॥ कुथासु कुथःस्त्रीपुंसयोर्वर्णकंबलेपुंसिबर्हिषीतिविश्वः ॥११॥ माशब्दंकुरुतेतिवदन्निति शेषः ॥१२॥१३॥१४॥१५॥१६॥१७॥

सचास्योरसिविस्तीर्णेरोमांचोद्गतराजिमान् ॥ श्रीवत्सोराजतेश्रीमांस्तनद्वयमुखांचितः ३ पीतेवसानोवसनेलोकानांगुरुरव्ययः ॥ हरिःसोभवदालक्ष्यः
ससंध्याभ्रइवाचलः ४ तंव्रजंतंसुपर्णेनपद्मयोनिगतानुगम् ॥ अनुजग्मुःसुराःसर्वेतद्गतासक्तचक्षुषः ५ नातिदीर्घेणकालेनसंप्राप्तारत्नपर्वतम् ॥
ददृशुर्देवतास्तत्रतांसभांकामरूपिणीम् ६ मेरोःशिखरविन्यस्तांसंयुक्तांसूर्यवर्चसा ॥ कांचनस्तंभरचितांवज्रसंधानतोरणाम् ७ मनोनिर्माणचित्राढ्यांवि
मानशतमालिनीम् ॥ रत्नजालांतरवतींकामगांरत्नभूषिताम् ८ क्लृप्तरत्नसमाकीर्णांसर्वर्त्तुकुसुमोत्कटाम् ॥ देवमायाधरांदिव्यांविहितांविश्वकर्मणा ९
तांहृष्टमनसःसर्वेयथास्थानंयथाविधि ॥ यथानिदेशंत्रिदशाविविशुस्तेसभांशुभाम् १० तेनिषेदुर्यथोक्तेषुविमानेष्वासनेषुच ॥ भद्रासनेषुपीठेषुकुथास्वास्त
रणेषुच ११ ततःप्रभंजनोवायुर्ब्रह्मणासाधुचोदितः ॥ माशब्दमितिसर्वत्रप्रचक्रामाथतांसभाम् १२ निःशब्दस्तिमितेतास्मिन्समाजेत्रिदिवौकसाम् ॥
बभाषेधरणीवाक्यंखेदात्करुणभाषिणी १३ ॥ धरण्युवाच ॥ त्वयाधार्यात्वहंदेवत्वयावैधार्यतेजगत् ॥ त्वंधारयसिभूतानिभुवनानिबिभर्षिच १४ यत्त्व
याधार्यतेकिंचित्तेजसाचबलेनच ॥ ततस्तवप्रसादेनमयायत्नाच्चधार्यते १५ त्वयाधृतंधारयामिनाधृतंधारयाम्यहम् ॥ नहितद्विद्यतेभूतंयत्त्वयानानु
धार्यते १६ त्वमेवकुरुषेदेवनारायणयुगेयुगे ॥ ममभारावतरणंजगतोहितकाम्यया १७ तवैवतेजसाक्रांतांरसातलतलंगताम् ॥ त्रायस्वमांसुरश्रेष्ठत्वमे
वशरणंगताम् १८ दानवैःपीड्यमानाहंराक्षसैश्चदुरात्मभिः ॥ त्वमेवशरणंनित्यमुपयास्येसनातनम् १९ तावन्मेस्तिभयंभूयोयावन्नत्वांककुद्मिनम् ॥
शरण्यंयामिमनसाशतशोह्युपलक्षये २० अहमादौपुराणस्यसंक्षिप्तापद्मयोनिना ॥ मांचवध्वाकृतौपूर्वंमृन्मयौद्वौमहासुरौ २१ कर्णस्रोतोद्भवौतौहिविष्णो
रस्यमहात्मनः ॥ महार्णवेप्रस्वपतःकाष्ठकुड्यसमौस्थितौ २२

तेजसादुष्टगजादिरूपेण ॥ १८ ॥ उपयस्येउपायामि ॥ १९ ॥ ककुद्मिनंधुरंधरंउपलक्षयेजानामि ॥ २० ॥ पुराणस्यपणस्यकार्षापणादिव्यवहारप्रवृत्तेःप्रागित्यर्थः संक्षि
प्तासम्यक्दृष्टा असुरौमधुकैटभौकृताविति पाठेपिहताविवत्येवार्थः ॥ २१ ॥ तयोरुत्पत्तिमाह कर्णेति स्रोतोद्भवौस्रवतीतिस्रोतः मलम् तदुद्भवौसंधिरार्षःविष्णुकर्णमलोद्भूता
वित्यन्यत्रदृष्टम् काष्ठकुड्यसमौअचेतनौ ॥ २२ ॥

वायुःप्राणरूपी ॥ २३ ॥ पर्यमृशत्पस्पर्श ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ नारायणःपितामहोययोस्तौ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वर्षाणांसंख्याय
स्मिन्युद्धेसहस्रैःसंख्याइतितत्वर्षसंख्यासहस्रशः ॥ ३३ ॥ अथअनंतरम् अतःयुद्ध्यतोस्तयोर्नारायणस्यचश्रमाभावात्युद्धायनिर्विण्णाविितिभावः ॥ ३४ ॥ ३५ ॥ वि



तौविवेशस्वयंवायुर्ब्रह्मणासाधुचोदितः ॥ दिवंप्रच्छादयंतौतुवव्रधातेमहासुरौ २३ वायुःप्राणौतुतौगृह्यब्रह्मापर्यमृशच्छनैः ॥ एकंमृदुतरंमेनेकठिनंवेद
चापरम् २४ नामनीतुतयोश्चक्रेसविभुःसलिलोद्भवः ॥ मृदुस्त्वयंमधुर्नामकठिनःकैटभोऽभवत् २५ तौदैत्यौकृतनामानौचेरतुर्बलदर्पितौ ॥ सर्वमेकार्ण
वंलोकंयोद्धुकामौसुदुर्जयौ २६ तावागतौसमालोक्यब्रह्मालोकपितामहः ॥ एकार्णवांबुनिचयेतत्रैवांतरधीयत २७ सपद्मेपद्मनाभस्यनाभिमध्यात्समु
त्थिते ॥ रोचयामासवसतिंगुह्यांब्रह्माचतुर्मुखः २८ तावुभौजलगर्भस्थौनारायणपितामहौ ॥ बहून्वर्षगणानप्सुशयानौनचकंपतुः २९ अथदीर्घस्यका
लस्यतावुभौमधुकैटभौ ॥ आजग्मतुस्तमुद्देशंयत्रब्रह्माव्यवस्थितः ३० दृष्ट्वातावसुरौघोरौमहाकायौदुरासदौ ॥ ब्रह्मणाताडितोविष्णुःपद्मनालेनवैत
दा ॥ उत्पपाताथशयनात्पद्मनाभोमहाद्युतिः ३१ तद्युद्धमभवद्घोरंतयोस्तस्यचवैतदा ॥ एकार्णवेतदालोकेत्रैलोक्येजलतांगते ३२ तदाभूत्तुमुलंयुद्धंवर्षसं
ख्यासहस्रशः ॥ नचतावसुरौयुद्धेतदाश्रममवापतुः ३३ अथातोदीर्घकालस्यतौदैत्यौयुद्धदुर्मदौ ॥ ऊचतुःप्रीतमनसौदेवंनारायणंहरिम् ३४ प्रीतौस्व
स्तवयुद्धेनश्लाघ्यस्त्वंमृत्युरावयोः ॥ आवांजहिनयत्रोर्वीसलिलेनपरिप्लुता ३५ हतौचतवपुत्रत्वंप्राप्नुयावःसुरोत्तम ॥ योह्यावांयुधिनिर्जेतातस्यावांविहि
तौसुतौ ३६ सतुगृह्यमृधेदोर्भ्यांदैत्यौतावभ्यपीडयत् ॥ जग्मतुर्निधनंचापितावुभौमधुकैटभौ ३७ तौहतौचाप्लुतौतोयेवपुर्भ्यामेकतांगतौ ॥ मेदोमुमुच
तुर्दैत्यौमथ्यमानौजलोर्मिभिः ३८ मेदसातज्जलंव्याप्तंताभ्यामंतर्दधेनघः ॥ नारायणश्चभगवानसृजत्सपुनःप्रजाः ३९ दैत्ययोर्मेदसाच्छन्नामेदिनीतिततः
स्मृता ॥ प्रभावात्पद्मनाभस्यशाश्वतीजगतीकृता ४० वाराहेणपुराभूत्वामार्कंडेयस्यपश्यतः ॥ विषाणेनाहमेकेनतोयमध्यात्समुद्धृता ४१ कृताहंक्रमता
भूयस्तदायुष्माकमग्रतः ॥ बलेःसकाशाद्दैत्यस्यविष्णुनाप्रभविष्णुना ४२ सांप्रतंखिद्यमानाहमेनमेवगदाधरम् ॥ अनाथाजगतोनाथंशरण्यंशरणंगता॥
४३ अग्निःसुवर्णस्यगुरुर्गवांसूर्योगुरुःस्मृतः ॥ नक्षत्राणांगुरुःसोमोममनारायणोगुरुः ४४ यदहंधारयाम्येकाजगत्स्थावरजंगमम् ॥ मयाधृतंधारयतेसर्व
मेतद्गदाधरः ४५ जामदग्न्येनरामेणभारावतरणेप्सया ॥ रोषात्त्रिःसप्तकृत्वोहंक्षत्रियैर्विप्रयोजिता ४६

हितौसुतौब्रह्मणेतिशेषः ॥ ३६ ॥ सतुगृह्येति ॥ ३७ ॥ ३८ ॥ ३९ ॥ कुत्रप्रजाअसृजदित्यपेक्षायामाह दैत्ययोरिति ॥ ४० ॥ विषाणेनदंष्ट्राग्रेण ॥ ४१ ॥ ४२ ॥
॥ ४३ ॥ गुरुःकारणंगवांरश्मीनां ॥ ४४ ॥ एतत्सर्वंमयासहितम् ॥ ४५ ॥ ४६ ॥

सास्मिवेद्यांसमारोप्यतर्पितान्नृपशोणितैः ॥ भार्गवेणपितुःश्राद्धेकश्यपायनिवेदिता ४७ मांसमेदोस्थिदुर्गंधादिग्धाक्षत्रियशोणितैः ॥ रजस्वलेवयुवतिः कश्यपंसमुपस्थिता ४८ समांब्रह्मर्षिरप्याहकिमुर्वित्वमवाङ्मुखी ॥ वीरपत्नीव्रतमिदंधारयंतीविषीदसि ४९ साहंविज्ञापितवतीकश्यपंलोकभावनम् ॥ पतयोमेहताब्रह्मन्भार्गवेणमहात्मना ५० साहंविहीनाविक्रांतैःक्षत्रियैःशस्त्रवृत्तिभिः ॥ विधवाशून्यनगरानधारयितुमुत्सहे ५१ तन्मह्यंदीयतांभर्ताभग वंस्त्वत्समोनृपः ॥ रक्षेत्सग्रामनगरांयोमांसागरमालिनीम् ५२ सश्रुत्वाभगवान्वाक्यंबाढमित्यब्रवीत्प्रभुः ॥ ततोमांमानवेंद्रायमनवेसप्रदत्तवान् ५३ सामनुप्रभवंदिव्यंप्राप्येक्ष्वाकुकुलंनृपम् ॥ विपुलेनास्मिकालेनपार्थिवात्पार्थिवंगता ५४ एवंदत्तास्मिमनवेमानवेंद्रायधीमते ॥ भुक्काराजसहस्रैश्चमहर्षि कुलसंमितैः ५५ बहवःक्षत्रियाःशूरामांजित्वादिवमाश्रिताः ॥ तेचकालवशंप्राप्यमय्येवप्रलयंगताः ५६ मत्कृतेविग्रहालोकेवृत्तावर्ततएवच ॥ क्षत्रिया णांबलवतांसंग्रामेष्वनिवर्तिनाम् ५७ एतद्युष्मत्प्रवृत्तेनदैवेनपरिपाल्यते ॥ जगद्धितार्थंकुरुतराज्ञांहेतुंरणंक्षये ५८ यद्यस्तिमयिकारुण्यंभारशैथिल्यकार णात् ॥ एकश्चक्रधरःश्रीमानभयंमेप्रयच्छतु ५९ यमहंभारसंतप्तासंप्राप्ताशरणार्थिनी ॥ भारोयद्यवरोप्तव्योविष्णुरेषब्रवीतुमाम् ६० ॥ इतिश्रीमहाभा रतेखिलेषुहरिवंशपर्वणिद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ तेश्रुत्वापृथिवीवाक्यंसर्वएवदिवौकसः ॥ तदर्थ कृत्यंसंचिंत्यपितामहमथाब्रुवन् १ भगवन्ह्रियतामस्याधरण्याभारसंततिः ॥ शरीरकर्तालोकानांत्वंहिलोकस्यचेश्वरः २ यत्कर्तव्यंमहेंद्रेणयमेनवरुणेनच ॥ यद्वाकार्यंधनेशेनस्वयंनारायणेनवा ३ यद्वाचंद्रमसाकार्यंभास्करेणानिलेनवा ॥ आदित्यैर्वसुभिर्वापिरुद्रैर्वालोकभावनैः ४ अश्विभ्यांदेववैद्याभ्यांसाध्यै र्वात्रिदशालयैः ॥ बृहस्पत्युशनोभ्यांवाकालेनकलिनापिवा ५ महेश्वरेणवाब्रह्मन्विशाखेनगुहेनवा ॥ यक्षराक्षसगंधर्वैश्चारणैर्वामहोरगैः ६ पतगैःपर्व तैश्चापिसागरैर्वामहोर्मिभिः ॥ गंगामुखाभिर्दिव्याभिःसरिद्भिर्वासुरेश्वर ७ क्षिप्रमाज्ञापयविभोकथमंशःप्रयुज्यताम् ॥ यदितेपार्थिवंकार्यंकार्यंपार्थिवंवि ग्रहे ८ कथमंशावतरणंकुर्मःसर्वेपितामह ॥ अंतरिक्षगतायेचपृथिव्यांपार्थिवाश्चये ९

॥ १० ॥ ११॥ १२ ॥ अवरोहत अवतारंकुरुत भावयंतःपालयंतः ॥ १३ ॥ पार्थिवेपृथिवीस्थेवंशेपृथिव्यांयत्मयाकृतंतच्छ्रूयतां कोदृशेनइमंसंभ्रमं भूमेर्भयंविजानतेतिसं
बंधः ॥ १४॥ तनूजेनपुत्रेणसहकथाभिःकथाप्रसंगनिमित्तम् आसेउपविष्टोऽभूवमितिद्वयोरन्वयः॥ १५॥ इतिवृत्तैरितिहासैः गुणैर्गुणवाद्भिः ॥ १६ ॥ समुद्रःमूर्तिमान्॥१७॥



सदस्यानांचविप्राणांपार्थिवानांकुलेषुच ॥ अयोनिजाश्चैवतनूःसृजामोजगतीतले १० सुराणामेककार्याणांश्रुत्वैतन्निश्चितंमतम् ॥ देवैःपरिवृतःप्राहवा
क्यंलोकपितामहः ११ रोचतेमेसुरश्रेष्ठायुष्माकमपिनिश्चयः ॥ सृजध्वंस्वशरीरांशांस्तेजसात्मसमान्भुवि १२ सर्वएवसुरश्रेष्ठास्तेजोभिरवरोहत ॥ भा
वयंतोभुवंदेवींलब्ध्वात्रिभुवनश्रियम् १३ पार्थिवेभारतेवंशेपूर्वमेवविजानता ॥ पृथिव्यांसंभ्रमामिमंश्रूयतांयन्मयाकृतम् १४ समुद्रेहंपुरापूर्वेवेलामासा
द्यपश्चिमाम् ॥ आसेसार्द्धंतनूजेनकश्यपेनमहात्मना १५ कथाभिःपूर्ववृत्ताभिर्लोकवेदानुगामिभिः ॥ इतिवृत्तैश्चबहुभिःपुराणप्रभवैर्गुणैः १६ कुर्वतस्तु
कथास्तास्तास्समुद्रःसहगंगया ॥ समीपमाजगामाशुयुक्तस्तोयदमारुतैः १७ सवीचिविषमांकुर्वन्गतिंवेगतरंगिणीम् ॥ यादोगणविचित्रेणसंच्छन्न
स्तोयवाससा १८ शंखमुक्तामलतनुःप्रवालद्रुमभूषणः ॥ युक्तश्चंद्रमसापूर्णसाभ्रगंभीरनिःस्वनः १९ समांपरिभवन्नेवस्वांवेलांसमतिक्रमन् ॥ क्लेदयामा
सचपलैर्लावणैरंबुविस्रवैः २० तंचदेशंव्यवसितःसमुद्रोद्भिर्विमर्द्दितुम् ॥ उक्तःसंरब्धयावाचाशांतोसीतिमयातदा २१ शांतोसीत्युक्तमात्रस्तुतनुत्वंसाग
रोगतः ॥ संहतोर्मितरंगौघःस्थितोराजश्रियाज्वलन् २२ भूयश्चैवमयाशप्तःसमुद्रःसहगंगया ॥ सकारणांमतिंकृत्वायुष्माकंहितकाम्यया २३ यस्मात्त्वं
राजतुल्येनवपुषासमुपस्थितः ॥ गच्छार्णवमहीपालोराजैवत्वंभविष्यसि २४ तत्रापिसहजांलीलांधारयन्स्वेनतेजसा ॥ भविष्यसिनृणांभर्ताभारता
नांकुलोद्वहः २५ शांतोसीतिमयोक्तस्त्वंयच्चासितनुतांगतः ॥ सुतनुर्यशसालोकेशंतनुस्त्वंभविष्यसि २६ इयमप्यायतापांगीगंगासर्वांगशोभना ॥ रूपि
णीचसरिच्छ्रेष्ठातत्रत्वामुपयास्यति २७ एवमुक्तस्तुमांक्षुब्धःसोभिवीक्ष्यार्णवोऽब्रवीत् ॥ मांप्रभोदेवदेवानांकिमर्थंशप्तवानसि २८ अहंतवविधेयात्मात्व
त्कृतस्त्वत्परायणः ॥ अशपोऽसदृशैर्वाक्यैरात्मजंमांकिमात्मना २९ भगवंस्त्वत्प्रसादेनवेगात्पर्वणिवार्द्धितः ॥ यद्यहंचलितोब्रह्मन्कोत्रदोषोममात्मनः ३०
क्षिप्ताभिःपवनैरद्भिःस्पृष्टोयद्यसिपर्वणि ॥ अत्रमेकिंनुभगवन्विद्यतेशापकारणम् ३१

स्थावररूपेण विषमांगतिंकुर्वन् तोयवाससातोयवत्श्वेतेनवाससायादोगणाकारंविशिष्टंचित्तंयस्मिन्तेन ॥ १८ ॥ चंद्रमसास्थावरस्वरूपस्यविषमगतिनिमित्तेन ॥१९ ॥ २०
शांतोसीत्यशांतेपिविरुद्धलक्षणयाउपहासः ॥ २१ ॥ २२ ॥ सकारणांभारावतारणनिमित्तवतीम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ देवदेवानांरुद्रादीनाम् २८
विधेयात्माआज्ञाकारी अशपः शापंदत्तवानसि ॥ २९ ॥ ३० ॥ ३१ ॥

॥ ३२ ॥ ३३ ॥ प्रमाणंशरणागतोपेक्षायांदोषप्रतिपादकंवेदं ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ तेज सात्यक्त्वेतिसंबंधः योगबलेनविभज्येत्यर्थः आधत्स्वगर्भेड्ति शेषः ॥ ३८ ॥ तत्रवंशे ॥ ३९ ॥ ४० ॥ संक्लेदंसंक्लेदनापराधप्राप्तिंमानुषयोनिजंदुःखंविस्मरिष्यसि तत्रत्यसुखास्वादनेन ॥ ४१ ॥ प्रजापत्येनवैवाहिकेन ॥ ४२ ॥ ४३ ॥

उद्भूतैश्चमहावातैःप्रवृद्धैश्चबलाहकैः ॥ पर्वणाचेंदुयुक्तेनात्रिभिःक्षुब्धोस्मिकारणैः ३२ एवंयद्यपराद्धोहंकारणैस्त्वत्प्रकल्पितैः ॥ क्षंतुमर्हसिमेब्रह्मन्शापोयंविनिवर्त्यताम् ३३ एवंमयिनिरालंबेशापाच्छिथिलतांगते ॥ कारुण्यंकुरुदेवेशप्रमाणंयद्यवेक्ष्यसे ३४ अस्यास्तुदेवगंगायागांगतायास्तदाज्ञया ॥ ममदोषाददोषायाःप्रसादंकर्तुमर्हसि ३५ तमहंश्लक्ष्णयावाचामहार्णवमथाब्रुवम् ॥ अकारणज्ञंदेवानांत्रस्तंशापानलेनतम् ३६ शांतिंव्रजनभेतव्यंप्रसन्नोस्मिमहोदधे ॥ शापेस्मिन्सरितांनाथभविष्यंशृणुकारणम् ३७ त्वंगच्छभारतेवंशेस्वंदेहंस्वेनतेजसा ॥ आधत्स्वसरितांनाथत्यक्त्वेमांसागरींतनुम् ३८ महोदधेमहीपालस्तत्रराजश्रियावृतः ॥ पालयंश्चतुरोवर्णान्रंस्यसेसलिलेश्वर ३९ इयंचतेसरिच्छ्रेष्ठाबिभ्रतीरूपमुत्तमम् ॥ तत्कालंरमणीयांगीगंगापरिचरिष्यति ४० अनयासहजाह्नव्यामोदमानोममाज्ञया ॥ इमंसलिलसंक्लेदंविस्मरिष्यसिसागर ४१ त्वरताचैवकर्तव्यंत्वयेदंममशासनम् ॥ प्राजापत्येनविधिनागंगयासहसागर ४२ वसवःप्रच्युताःस्वर्गात्प्रविष्टाश्चरसातलम् ॥ तेषामुत्पादनार्थायत्वंमयाविनियोजितः ४३ अष्टौतान्जाह्नवीगर्भानपत्यार्थंदधात्वियम् ॥ विभावसोस्तुल्यगुणान्सुराणांप्रीतिवर्द्धनान् ४४ उत्पाद्यत्वंवसून्शीघ्रंकृत्वाकुरुकुलंमहत् ॥ प्रवेष्टासितनुंत्यक्त्वापुनःसागरसागरीम् ४५ एवमेतन्मयापूर्वंहितार्थंवःसुरोत्तमाः ॥ भविष्यंपश्यताभारंपृथिव्याःपार्थिवात्मकम् ४६ तदेषशंतनोर्वंशःपृथिव्यांरोपितोमया ॥ वसवोयेचगंगायामुत्पन्नास्त्रिदिवौकसः ४७ अद्यापिभुविगांगेयस्तत्रैववसुरष्टमः ॥ सप्तैमेवसवःप्राप्ताःसएकःपरिलंबते ४८ द्वितीयायांससृष्टायांद्वितीयाशंतनोस्तनुः ॥ विचित्रवीर्योद्युतिमानासीद्राजाप्रतापवान् ४९ वैचित्र्यवीर्योद्वावेवपार्थिवौभुविसांप्रतम् ॥ धृतराष्ट्रश्चपांडुश्चविख्यातौपुरुषर्षभौ ५० तत्रपांडोःश्रियाजुष्टेद्वेभार्येसंबभूवतुः ॥ शुभेकुंतीचमाद्रीचदेवयोषोपमेतुते ५१ धृतराष्ट्रस्यराज्ञस्तुभार्यैकातुल्यचारिणी ॥ गांधारीभुविविख्याताभर्त्तुर्नित्यंव्रतेस्थिता ५२ तत्रवंशाविभज्यंतांविपक्षाःपक्षएवच ॥ पुत्राणांहितयोराज्ञोर्भवितावि‍ग्रहोमहान् ५३ तेषांविमर्देदायाद्येनृपाणांभविताक्षयः ॥ युगांतप्रतिमंचैवभविष्यतिमहद्भयम् ५४

विभावसोरग्नेः तुल्यगुणान्तद्वल्लोकप्रीतिकरान् ॥ ४४ ॥ तनुंमनुष्यशरीरम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ परिलंबतेभुवंश्रयते ॥ ४८ ॥ सृष्टायांसंगतायांभार्यायांसत्यवतीसंज्ञायाम् द्वितीयाभीष्मापेक्षयातनुः पुत्रः चित्रांगदस्यपूर्वमेवमृतत्वादगणना ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ५३ ॥ ५४ ॥

अथास्मिन्सप्तमेध्यायेयमलार्जुनयोर्भिदा ॥ मध्यंगतेनकृष्णेनध्वस्तावेवोतिवर्ण्यते १ कालेरिंगिणौजानुभ्यांरंहणशीलौ १ अन्योन्यगतौपरस्परस्मिन्नंतर्भूतौएकमूर्तिधरौ एकशरीराविव ॥ २ ॥ एकरूपौ अभिन्नौसंतौनिर्माणनिर्मुक्तौजन्महीनौ ॥ ३ ॥ एकस्यकार्यस्यअंतरंरहस्यंगतौप्राप्तौएककार्यनिष्ठावित्यर्थः ॥ ४ ॥ देवानांवृत्तांतःसिद्धांतःपापिष्ठाहंतव्याःयज्ञदानादिकंचप्रवर्त्तनीयमित्येवंरूपस्तदर्थमानुषभूतौदेववृत्तांतमानुषौ ॥ ५ ॥ व्यतिषक्ताभिर्मिश्राभिः ग्रस्तौपूर्णमास्यांचंद्रोदयेसूर्यस्यास्तमयः तदुदयेइंदोरितित

वैशंपायनउवाच ॥ कालेगच्छतितौसौम्यौदारकौकृतनामकौ ॥ कृष्णसंकर्षणौचोभौरिंगिणौसमपद्यताम् १ तावन्योन्यगतौबालौबाल्यादेवैकतांगतौ ॥ एकमूर्तिधरौकांतौबालंचद्रार्कवर्चसौ २ एकनिर्माणनिर्मुक्तावेकशय्यासनाशनौ ॥ एकवेषधरावेकंपुष्यमाणौशिशुव्रतम् ३ एककार्यांतरगतावेकदेहौद्विधाकृतौ ॥ एकचर्यौमहावीर्यावेकस्यशिशुतांगतौ ४ एकप्रमाणौलोकानांदेववृत्तांतमानुषौ ॥ कृत्स्नस्यजगतोगोपौसंवृत्तौगोपदारकौ ५ अन्योन्यव्यतिषक्ताभिःक्रीडाभिरभिशोभितौ ॥ अन्योन्यकिरणग्रस्तौचंद्रसूर्याविवांबरे ६ विसर्पंतौतुसर्वत्रसर्पभोगभुजावुभौ ॥ रेजतुःपांसुदिग्धांगौदृप्तौकलभकाविव ७ क्वचिद्भस्मप्रदीप्तांगौकरीषप्रोक्षितौक्वचित् ॥ तौतत्रपर्यधावेतांकुमाराविवपावकी ८ क्वचिज्जानुभिरुद्घृष्टैःसर्पमाणौविरेजतुः ॥ क्रीडंतौवत्सशालासुशकृद्दिग्धांगमूर्द्धजौ ९ शुशुभातेश्रियाजुष्टावानंदजननौपितुः ॥ जनंचविप्रकुर्वाणौविहसंतौक्वचित्क्वचित् १० तौतत्रकौतुहलिनौमूर्द्धजव्याकुलेक्षणौ ॥ रेजतुश्चंद्रवदनौदारकौसुकुमारकौ ११ अतिप्रसक्तौतौदृष्ट्वासर्वव्रजविचारिणौ ॥ नाशकत्तौवारयितुंनंदगोपःसुदुर्दमौ १२ ततोयशोदासंक्रुद्धाकृष्णंकमललोचनम् ॥ आनाय्यशकटीमूलेभर्त्सयंतीपुनःपुनः १३ दाम्नाचैवोदरेबध्वाप्रत्यबंधदुलूखले ॥ यदिशक्तोसिगच्छेतितमुक्त्वाकर्मसाकरोत् १४ व्यग्रायांतुयशोदायांनिर्जगामततोंगणात् ॥ शिशुलीलांततःकुर्वन्कृष्णोविस्मापयन्व्रजम् १५ सोंगणान्निस्सृतःकृष्णःकर्षमाणउलूखलम् ॥ यमलाभ्यांप्रवृद्धाभ्यामर्जुनाभ्यांचरन्वने ॥ मध्यान्निश्चक्रामतयोःकर्षमाणउलूखलम् १६

योरन्योन्यकिरणग्रस्तत्वम् ॥ ६ ॥ सर्पभोगभुजौसर्पदेहतुल्यबाहू कलभसदृशौकलभकाविव स्वार्थेवाकः ॥ ७ ॥ पावकीअग्निपुत्रौद्वौकार्त्तिकेयाविवेत्यभूतोपमा ॥ ८ ॥ ॥ ९ ॥ विप्रकुर्वाणौनवनीतचौर्यादिना उपकारंकुर्वाणौ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

तत्तस्येति अर्जुनाभ्यांअर्जुनौऊद्धर्तुमित्यर्थः अत्रेदमाम्नायते ॥ यत्रमंथांविबध्नतेरश्मीन्यमितवाइव । उलूखलसुतानामवेद्विंद्रजल्गुलः तानोअद्यवनस्पतीऋष्वावृष्वेभिःसोतृभिः इंद्रायमधुमत्सुतमिति यत्रउलूखलेमंथांमंथानमिवमंथानंलोकक्लेशकरंमांविबध्नतेविशेषेणबध्नंतिमातरः रश्मीनादायरश्मिभिरित्यर्थः यमितवाइव विनिगृहीतुमिव नतुवस्तुतोनिगृहीतुं मातृत्वेनमयिस्निग्धत्वात् तेनउलूखलेनसुतानांपीडितानांकर्मणिषष्ठी उलूखलपीडितान्अस्मान् हेइंद्रमोचनसमर्थअवरक्षपादादित्वादाद्युदात्तमाख्यातम् इदु एवमेव त्वंजल्गुलोसिएनम् मुंचामीति जल्पितुम् मांचगोपितुंत्रातुंलातुंआदातुंस्वाधीनंकर्तुंचसमर्थोऽसियतअतोऽत्रमामित्यर्थः एवंयदासर्वान्प्रार्थयन्नापिनमोचनंलभतेतदावनस्पत्योरंत

तत्तस्यकर्षतोबद्धंतिर्यग्गतमुलूखलम् ॥ लग्नंताभ्यांसमूलाभ्यामर्जुनाभ्यांचकर्षच १७ तावर्जुनौकृष्यमाणौतेनबालेनरंहसा ॥ समूलविटपौभग्नौसतुमध्येजहासवै १८ निदर्शनार्थंगोपानांदिव्यंस्वबलमास्थितः ॥ तद्दामतस्यबालस्यप्रभावादभवद्दृढम् १९ यमुनातीरमार्गस्थागोप्यस्तंददृशुश्शिशुम् ॥ क्रंदंत्योविस्मयंत्यश्चयशोदांययुरंगनाः २० तास्तुसंभ्रांतवदनायशोदामूचुरंगनाः ॥ एह्यागच्छयशोदेत्वंसंभ्रमात्किंविलंबसे २१ यौतावर्जुनवृक्षौतुव्रजेसत्योपयाचनौ ॥ पुत्रस्योपरितावेतौपतितौतेमहीरुहौ २२ दृढेनदाम्नातत्रैवबद्धोवत्सइवोदरे ॥ जहासवृक्षयोर्मध्येतवपुत्रःसबालकः २३ उत्तिष्ठगच्छदुर्मेधेमूढेपंडितमानिनि ॥ पुत्रमानयजीवंतंमुक्तंमृत्युमुखादिव २४ साभीतासहसोत्थायहाहाकारंप्रकुर्वती ॥ तंदेशमगमद्यत्रपातितौतावुभौद्रुमौ २५ साददर्शतयोर्मध्येद्रुमयोरात्मजंशिशुम् ॥ दाम्नानिबद्धमुदरेकर्षमाणमुलूखलम् २६ सागोपीगोपवृद्धश्चसमुवाचव्रजस्तदा ॥ पर्यागच्छंततेद्रष्टुंगोपेषुमहदद्भुतम् २७ जजल्पुस्तेयथाकामंगोपावनविचारिणः ॥ केनेमौपातितौवृक्षौघोषस्यायतनोपमौ २८ विनावातंविनावर्षंविद्युत्प्रपतनंविना ॥ विनाहस्तिकृतंदोषंकेनेमौपातितौद्रुमौ २९ अहोबतनशोभेतांविमूलावर्जुनाविमौ ॥ भूमौनिपतितौवृक्षौवितोयौजलदाविव ॥ यदीमौघोषरचितौघोषकल्याणकारिणौ ३०

रागत्वाबंधनदामत्रोटितुंयावद्बलंकरोति तावद्वनस्पतीएवउन्मूलितौदृष्ट्वावदति तानइतित्रातौनोऽस्माकंव्रजवासिनांवनस्पतिभूतौअतिप्रसिद्धौयमलौअर्जुनजातीयौभो वनस्पती अद्यइंद्रायइंद्रंप्रतिगंतुंसुतंतदुन्मूलनेनआत्मानंपीडयंतंतदेवमधुमत्अमृतयुक्तम् अतिसम्यगित्यर्थः यतः ऋष्वौगतिमंतौयुवांस्थावरत्वान्मुक्तौस्थइत्यर्थःऋष्वेभिर्गंतिमद्भिर्जंगमैः जनैःसोतृभिरस्मद्बंधनकरैरुपलक्षितौ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सत्योपयाचनौ प्रार्थितप्रदत्वेनदेवताभूतौ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

विपुलाभ्यामर्जुनाभ्याम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ एतदिति एबमादीत्यर्थः अत्रतृणाबर्त्तवधोपिपुराणांतरादुपसंहर्त्तव्यः तदुपबृंहिकाश्रुतिस्तु साकंयक्ष्मप्रयतचापेणाकि किदीविना साकंवातस्यध्राज्यासाकंनश्यनिहाकयेति ॥ खेचरत्वेनयक्षंपूज्यमिवात्मानंमनुते मिमीतेतोलयतिवायक्ष्मः हेयक्ष्मराक्षस तद्वत्पीडकेतिवा चाषेणतद्वर्णेनहरिणातवहंत्रा साकंप्रयत भूमावितिशेषः किकिदीविनाज्ञःसन्दीव्यतीकिकिदीविः किधातोर्बाहुलकात्किप्रत्यये लिङ्भावेचकिकिर्विद्वान्तेनवा तस्यवायोर्ध्राज्यागत्यायया धूलिवात्यारूपया एनंउपरिनीतवानसि तयासाकंनश्यनाशंप्राप्नुहि निहाकयागत्याचसाकंवा साहित्यंपतनएवनतुनाशे अतस्तेनसहपातितःसन्स्वयमेकएवनाशंप्राप्नुहीत्यर्थः एवंदेवैरुक्तेतृणावर्तः पपातममारेत्यर्थः ॥ ३७ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांसप्तमोऽध्यायः ७ ॥ ७ ॥ अस्मिन्नथाष्टमेध्यायेवनांतरमियासतः ॥ तनूरुहसमुत्पन्नाद्वकाःकृष्णस्यवर्ण्यते १

नंदगोपप्रसन्नौतेद्रुमावेवंगतावपि ॥ यच्चतेदारकोमुक्तोविपुलाभ्यामपिक्षितौ ३१ औत्पातिकमिदंघोषोतृतीयंवर्त्ततेत्विह ॥ पूतनाया विनाशश्चद्रुमयोश्शकटस्यच ३२ अस्मिन्स्थानेचवासोयंघोषस्यास्यनयुज्यते ॥ उत्पाताह्यत्रदृश्यंतेकथयंतोनशोभनम् ३३ नंदगोपस्तुसहसामुक्त्वाकृष्णमुलूखलात् ॥ निवेश्यचांकेसुचिरंमृतंपुनरिवागतम् ३४ नातृप्यत्प्रेक्ष्यमाणोवैकृष्णंकमललोचनम् ॥ ततोयशोदांगर्हन्वैनंदगोपोविवेशह ॥ सचगोपजनस्सर्वोव्रजमेवजगामह ३५ सचतेनैवनाम्नातुकृष्णोवैदामबंधनात् ॥ गोष्ठेदामोद रइतिगोपीभिःपरिगीयते ३६ एतदाश्चर्यभूतंहिबालस्यासीद्विचेष्टितम् ॥ कृष्णस्यभरतश्रेष्ठघोषेनिवसतस्तदा ३७ ॥ इतिश्रीमहा भारतेखिलेषुहरिवंशेविष्णुपर्वणिशिशुचर्यायांयमलार्जुनभंगेसप्तमोध्यायः ॥ ७ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ ॥ एवंतौबाल्यमु त्तीर्णौकृष्णसंकर्षणावुभौ ॥ तस्मिन्नेवव्रजस्थानेसप्तवर्षौबभूवतुः १ नीलपीतांबरधरौपीतश्वेतानुलेपनौ ॥ बभूवतुर्वत्सपालौकाकपक्ष धरावुभौ २ पणवाद्यंश्रुतिसुखंवादयंतौवराननौ ॥ शुशुभातेवनगतौत्रिशीर्षाविवपन्नगौ ३

एवंतावित्यध्यायः सुदेवोअद्यप्रपतेदनावृत्परावतंपरमांगंतवाउ अधाशयीतनिर्ऋतेरुपस्थेधैनंवृकारभसासोअद्युरित्यस्यमंत्रस्योपबृंहणार्थः मंत्रार्थः पुरूरवसंप्रत्युर्वशीवदति सुदेवः शोभनस्वामिकोव्रजः आद्यक्षरलोपेनवासुदेवोवा अद्यप्रपतेत् अथैवउपद्रवसमकालंगच्छेत् अनावृत्नास्तिआवृत्निरोधकोयस्यताद्दशोपिपरावतंपरमात्दूराद्दूरतरं गंतवै गंतु उनिश्चितंप्रपतेदित्यन्वयः अधपक्षांतरे यदिसुदेवोनप्रपतेत्तर्हिनिर्ऋतेरुपस्थेशयीतअधअथवाएनंव्रजंवासुदेवपरिजनंरभसासोरभसाः वेगवंतः वृकाःअद्युःभक्षयेयुः तस्माद्वासु देवोवातत्परिगृहीतोव्रजोवाद्वकेभ्योविभेति अतस्त्वाद्दशोनापिइंद्रियवृकेभ्यःसुतरांभेतव्यमितिभावः इतःस्पष्टार्थंमूलम् ॥ १॥ २ ॥ पणवोहितुंबीफलोपेतोवाद्यविशेषः आद्य पदात्ताद्दशंरुद्रवीणादिकंपणवाद्यमतएवत्रिशीर्षाविवेतिदृष्टांतःसंगच्छते पर्णवाद्यमित्यपपाठः ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ चंचूर्यंतौअत्यंतंसंचरंतौ किशोराविवअश्वपोताविव ॥ ७ ॥ ८ ॥ अवगीतंनाशितम् भुक्तभोगंकाननम् ॥ ९ ॥ काननानिउद्यानानि वनानिअरण्यानि आकाशनिकाशानिपत्रादिनाशून्यानि ॥ १० ॥ परितोवृत्तचक्राकारःपरिधिःअर्गलाश्रयेषुतेषुपरिवृत्तार्गलेषु ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ निर्व्यंजनंशाकरूपादिहीनम्

मयूरांगदकर्णौतुपल्लवापीडधारिणौ ॥ वनमालाकुलोरस्कौद्रुमपोताविवोद्गतौ ४ अरविंदकृतापीडौरज्जुयज्ञोपवीतिनौ ॥ सशिक्यतुंबकरकौगोपवेणुप्रवादकौ ५ क्वचिद्धसंतावन्योन्यंक्रीडमानौक्वचित्क्वचित् ॥ पर्णशय्यासुसंसुप्तौक्वचिन्निद्रांतरेक्षणौ ६ एवंवत्सान्पालयंतौशोभयंतौमहावनम् ॥ चंचूर्यंतौरमंतौस्मकिशोराविवचंचलौ ७ अथदामोदरःश्रीमान्त्संकर्षणमुवाचह ॥ आर्यनास्मिन्वनेशक्यंगोपालैस्सहक्रीडितुम् ८ अवगीतमिदंसर्वमावाभ्यांभुक्तकाननम् ॥ प्रक्षीणतृणकाष्ठंचगोपैर्मथितपादपम् ९ घनीभूतानियान्यासन्काननानिवनानिच ॥ तान्याकाशनिकाशानिदृश्यंतेद्ययथासुखम् १० गोवाटेष्वपियेवृक्षाःपरिवृत्तार्गलेषुच ॥ सर्वेगोष्ठाग्निषुगताःक्षयमक्षयवर्चसः ११ संनिकृष्टानियान्यासन्काष्ठानिचतृणानिच ॥ तानिदूरावकृष्टासुमार्गितव्यानिभूमिषु १२ अरण्यमिदमल्पोदमल्पकक्षंनिराश्रयम् ॥ अन्वेषितव्यंविश्रामंदारुणंविरलद्रुमम् १३ अकर्मण्येषुवृक्षेषुस्थितविप्रस्थितद्विजम् ॥ संवासस्यास्यमहतोजनेनोत्सादितद्रुमम् १४ निरानंदंनिरास्वादंनिष्प्रयोजनमारुतम् ॥ निर्विहंगमिदंशून्यंनिर्व्यंजनमिवाशनम् १५ विक्रीयमाणैःकाष्ठैश्चशाकैश्चवनसंभवैः ॥ उच्छन्नसंचयतृणैर्घोषोयंनगरायते १६ शैलानांभूषणंघोषोघोषाणांभूषणंवनम् ॥ वनानांभूषणंगावस्ताश्चास्माकंपरागतिः १७ तस्मादन्यद्वनंयामःप्रत्यग्रयवसेंधनम् ॥ इच्छंत्यनुपभुक्तानिगावोभोक्तुंतृणानिच १८ तस्माद्वनंनवतृणंगच्छंतुधनिनोव्रजाः ॥ नद्वारबंधावरणानग्रहक्षेत्रिणस्तथा ॥ प्रशस्तावैव्रजालोकेयथावैचक्रचारिणः १९ शकृन्मूत्रेषुतेष्वेवजातक्षाररसायनम् ॥ नतृणंभुंजतेगावोनापितत्पयसेहितम् २० स्थलीप्रायासुरथ्यासुनवासुवनराजिषु ॥ चरावस्सहितौगोभिःक्षिप्रंसंवाह्यतांव्रजः २१ श्रूयतेहिवनंरम्यंपर्याप्तंतृणसंस्तरम् ॥ नाम्नावृंदावनंनामस्वादुवृक्षफलोदकम् २२ अझिल्लिकंटकवनंसर्वैर्वनगुणैर्युतम् ॥ कदंबपादपप्रायंयमुनातीरसंश्रितम् २३

॥ १५ ॥ १६ ॥ १७ ॥ कर्त्तव्यमाह तस्मादिति ॥ १८ ॥ ननुपितृपर्यागताभूमिर्निर्धनापिसुखावहेत्युक्तेःकथंपूर्वस्थानं त्याज्यमित्याह नद्वारेति चक्रेणसमुदायेनचरंतितेचक्रचारिणो हंससारसादयःअनिकेताइत्यर्थः ॥ १९ ॥ शकृन्मूत्रेषुतेष्वेवतृणेषुपतितेषुसत्सु ॥ २० ॥ स्थलीप्रायासुसमभूमितुल्यासुनिस्तृणास्वित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

स्निग्धवनंशीतानिलंचेतिसंबंधः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ चरतोमृगादीनितिशेषः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ पंचबद्धाःपंचादिसंख्ययासंहताः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ अगताः असंचाराः ॥३७ ॥ तदेवाह एवमिति ॥ ३८ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ एतस्मिन्नवमे



१० स्निग्धशीतानिलवनंसर्वर्त्तुनिलयंशुभम् ॥ गोपीनांसुखसंचारंचारुचित्रवनांतरम् २४ तत्रगोवर्द्धनोनामनातिदूरेगिरिर्महान् ॥ भ्राज
तेदीर्घशिखरोनंदनस्येवमंदरः २५ मध्येचास्यमहाशाखोन्यग्रोधोयोजनोच्छ्रितः ॥ भांडीरोनामशुशुभेनीलमेघइवांबरे २६
मध्येनचास्यकालिंदीसीमंतमिवकुर्वती ॥ प्रयातानंदनस्येवनलिनीसरितांवरा २७ तत्रगोवर्द्धनंचैवभांडीरंचवनस्पतिम् ॥ कालिंदीं
चनदींरम्यांद्रक्ष्यावश्चरतस्सुखम् २८ तत्रायंकल्पतांघोषस्त्यज्यतांनिर्गुणंवनम् ॥ संत्रासयावोभद्रंतेकिंचिदुत्पाद्यकारणम् २९
एवंकथयतस्तस्यवासुदेवस्यधीमतः ॥ प्रादुर्बभूवुश्शतशोरक्तमांसवसाशनाः ३० घोराश्चिंतयतस्तस्यस्वतनूरुहजास्तदा ॥
विनिष्पेतुर्भयकरास्सर्वशश्शतशोवृकाः ३१ निष्पतंतिस्मबहवोव्रजस्योत्सादनायवै ॥ वृकान्निष्पतितान्दृष्ट्वागोषुवत्सेष्वथोनृषु ३२
गोपीषुचयथाकामंव्रजेत्रासोभवन्महान् ॥ तेवृकाःपंचबद्धाश्चदशबद्धास्तथापरे ३३ त्रिंशद्विंशतिबद्धाश्चशतबद्धास्तथापरे ॥ निश्चेरु
स्तस्यगात्रेभ्यःश्रीवत्सकृतलक्षणाः ३४ कृष्णस्यकृष्णवदनागोपानांभयवर्धनाः ॥ भक्षयद्भिश्चतैर्वत्सान्त्रासयद्भिश्चगोव्रजान् ॥
३५ निशिबालान्हरद्भिश्चवृकैरुत्साद्यतेव्रजः ॥ नवनेशक्यतेगंतुंनगाश्चपरिरक्षितुम् ३६ नवनात्किंचिदाहर्त्तुंनचवातारितुंनदीम् ॥
त्रस्ताह्युद्विग्नमनसोगतास्तस्मिन्वनेवसन् ३७ एवंवृकैरुदीर्णैस्तुव्याघ्रतुल्यपराक्रमैः ॥ व्रजोनिष्पंदचेष्टस्सएकस्थानचरःकृतः ३८
इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशिशुचर्यायांवृकदर्शनोनामाष्टमोऽध्यायः ८ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ एवंवृकांश्च
तान्दृष्ट्वावर्धमानान्दुरासदान् ॥ सश्रीपुमान्सघोषोवैसमस्तोमंत्रयत्तदा १ स्थानेनेहननःकार्यंव्रजामोन्यन्महद्वनम् ॥ यच्छिवंचसु
खोष्यंचगवांचैवसुखावहम् २ अद्यैवकिंचिरेणस्मव्रजामस्सहगोधनैः ॥ यावद्वृकैर्वधंघोरेननस्सर्वोव्रजोव्रजेत् ३ एषांधूम्रारुणांगा
नांदंष्ट्रिणांनखकर्षिणाम् ॥ वृकाणांकृष्णवक्त्राणांबिभीमोनिशिगर्जताम् ४ ममपुत्रोममभ्राताममवत्सोथगौर्मम ॥ वृकैर्व्यापादिता १०
ह्येवंक्रंदंतिस्मगृहेगृहे ॥ ५ ॥

ध्यायेरामकृष्णेच्छयापुनः ॥ वृंदावनप्रवेशश्चव्रजस्याद्भुतईर्यते ॥ १ ॥ एवंवृकान् ॥ १ ॥ सुखोष्यंसुखावासम् ॥ २ ॥ ३ ॥ एषांएभ्यःसकाशात् ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अवघुष्यतघोषोजातः भांडंशकटेष्वितिशेषः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ पोतैःनौकाभिः ॥ १८ ॥ ईरणं
उषरं शून्यमित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ नियोगपाशैःमंथनभांडस्थूणायामंथनदंडेनसंयोजनार्थैःपाशैःमांजरेतिमहाराष्ट्रप्रसिद्धैःशिक्यै

तासांरुदितशब्देनगवांहंभारवेणच ॥ व्रजस्योत्थापनंचक्रुर्घोषवृद्धास्समागताः ६ तेषांमतमथाज्ञायगंतुंवृंदावनंप्रति ॥ व्रजस्य
विनिवेशायगवांचैवहितायच ७ वृंदावननिवासायतानूज्ञात्वाकृतनिश्चयान् ॥ नंदगोपोबृहद्वाक्यंबृहस्पतिरिवाददे ८ अद्यैवनि
श्चयप्राप्तिर्यदिगंतव्यमेवनः ॥ शीघ्रमाज्ञाप्यतांघोषःसज्जीभवतमाचिरम् ९ ततोवघुष्यततदाघोषेतत्प्राकृतैर्जनैः ॥ शीघ्रंगावः
प्रकल्प्यंतांभांडंसमभिरोप्यताम् १० वत्सयूथानिकाल्यंतांयुज्यंतांशकटानिच ॥ वृंदावनमितस्स्थानान्निवेशायचगम्यताम् ११ त
च्छ्रुत्वानंदगोपस्यवचनंसाधुभाषितम् ॥ उदतिष्ठद्व्रजस्सर्वश्शीघ्रंगमनलालसः १२ प्रयाह्युत्तिष्ठगच्छामःकिंशेषेसाधुयोजय ॥ उ
त्तिष्ठतिव्रजेतस्मिन्गोपकोलाहलोह्यभूत् १३ उत्तिष्ठमानश्शुशुभेशकटीशकटस्तुसः ॥ व्यग्रगोपीसगोपालोघोषस्सागरघोषवान् १४
गोपीनांगर्गरीभिश्चमूर्ध्निचोत्तंभितैर्घटैः ॥ निष्पपातव्रजात्पंक्तिस्तारापंक्तिरिवांबरात् १५ नीलपीतारुणैस्तासांवस्त्रैरग्रस्तनोच्छ्रितैः ॥
शक्रचापायतेपंक्तिर्गोपीनांमार्गगामिनी १६ दामनीदामभारैश्चकैश्चित्कायावलंबिभिः ॥ गोपामार्गगताभांतिसावरोहाइवद्रु
माः १७ सव्रजोव्रजताभातिशकटौघेनभास्वता ॥ पोतैःपवननिक्षिप्तैर्निष्पतद्भिरिवार्णवः १८ क्षणेनतद्व्रजस्थानमीरणंसमपद्यत ॥
द्रव्यावयवनिर्धूतंकीर्णंवायसमंडलैः १९ ततःक्रमेणघोषस्सप्राप्तोवृंदावनंवनम् ॥ निवेशंविपुलंचक्रेगवांचैवहितायच २० शकटा
वर्त्तपर्यंतंचंद्रार्द्धाकारसंस्थितम् ॥ मध्येयोजनविस्तीर्णंतावद्द्विगुणमायतम् २१ कंटकीभिःप्रवृद्धाभिस्तथाकंटकितद्रुमैः ॥ निखा
तोच्छ्रितशाखाग्रैरभिगुप्तंसमंततः २२ मंथैरारोप्यमाणैश्चमंथबंधानुकर्षणैः ॥ अद्भिःप्रक्षाल्यमानाभिर्गर्गरीभिरितस्ततः २३ कीलै
रारोप्यमाणैश्चदामनीपाशपाशितैः ॥ स्तंभनीभिर्धृताभिश्चशकटैःपरिवर्त्तितैः २४ नियोगपाशैरासक्तैर्गर्गरीस्तंभमूर्द्धसु ॥ छादनार्थं
प्रकीर्णैश्चकटकैस्तृणसंकटैः २५ शाखाविटंकैर्वृक्षाणांक्रियमाणैरितस्ततः ॥ शोध्यमानैर्गवांस्थानैस्स्थाप्यमानैरुलूखलैः २६ प्राङ्मु
खैस्सिच्यमानैश्चसंदीप्यद्भिश्चपावकैः ॥ सवत्सचर्मास्तरणैःपर्यंकैश्चावरोपितैः २७

र्वा कटकैर्घटाधारकतृणैःसहिताभिःतृणसंकटैःतृणमयीभिराच्छादनीभिः ॥ २५ ॥ शाखासुविटंकाःपक्ष्युपवेशनस्थानानितैःक्रियमाणैः ॥ २६ ॥ २७ ॥

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ घर्मेग्रीष्मे तत्रापिपश्चिमे आषाढे ॥ ३३ ॥३४॥ अध्यासंतअध्यासितवंतः ॥ ३५ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांनवमो
ध्यायः ॥ ९ ॥ एतस्मिन्दशमेध्यायेप्रावृड्वर्णनमुच्यते ॥ श्रीनिवासनिवासेनघोषोत्कर्षस्तथादिवः ॥ १ ॥ तावितिं ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ कांतानांक

तोयमुत्तारयंतीभिःप्रेक्षंतीभिश्चतद्वनम् ॥ शाखाश्चाकर्षमाणाभिर्गोपीभिश्चसमंततः २८ युवभिस्स्थविरैश्चैवगोपैर्व्यग्रकरैर्भृ
शम् ॥ विशसद्भिःकुठारैश्चकाष्ठान्यपितरूनपि २९ तद्व्रजस्थानमधिकंशुशुभेकाननावृतम् ॥ रम्यंवननिवेशंवैस्वादुमूलफलोदकम् ॥
३० तास्तुकामदुघागावस्सर्वपक्षिरुतंवनम् ॥ वृंदावनमनुप्राप्तानंदनोपमकाननम् ३१ पूर्वमेवतुकृष्णेनगवांवैहितकारिणा ॥
शिवेनमनसादृष्टंतद्वनंवनचारिणा ३२ पश्चिमेतुततोरूक्षेघर्ममासेनिरामये ॥ वर्षतीवामृतंदेवेतृणंतत्रव्यवर्द्धत ३३ नतत्रवत्सास्सी
दंतिनगावोनेतरेजनाः ॥ यत्रतिष्ठतिलोकानांभवायमधुसूदनः ३४ ताश्चगावस्सघोषस्तुसचसंकर्षणोयुवा ॥ कृष्णेनविहितंवासं
तमध्यासंतनिर्वृताः ३५ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिवृंदावनप्रवेशोनामनवमोध्यायः ॥ ९ ॥ ॥ ९ ॥
॥ वैशंपायनउवाच ॥ तौतुवृंदावनंप्राप्तौवसुदेवसुतावुभौ ॥ चेरतुर्वत्सयूथानिचारयंतौसुरूपिणौ १ पूर्णस्तुघर्मसमयस्तयोस्तत्रवनेसु
खम् ॥ क्रीडतोस्सहगोपालैर्यमुनांचावगाहतोः २ ततःप्रावृडनुप्राप्तामनसःकामदीपिनी ॥ प्रववर्षुर्महामेघाश्शक्रचापांकितोदराः ३
बभूवादर्शनस्सूर्योभूमिश्चादर्शनातृणैः ॥ पततामेघवातेननवतोयानुकर्षिणा ४ संमार्ज्जिततलाभूमिर्यौवनस्थेवलक्ष्यते ॥ नाशितंजल
दैरुष्णंतोषितावसुधाजलैः ५ नववर्षावसिक्तानिशक्रगोपकुलानिच ॥ नष्टदावाग्निधूमानिवनानिप्रचकाशिरे ६ नृत्यव्यापारकालश्चमयू
राणांकलापिनाम् ॥ मदरक्ताःप्रवृत्ताश्चकेकाःपटुरवास्तथा ७ नवप्रावृषिकांतानांषट्पदाहारदायिनाम् ॥ यौवनस्थकदंबानांनवाभ्रै
र्भ्राजतेवपुः ८ हासितंकुटजैर्वृक्षैःकदंबैर्वासितंवनम् ॥ (नाशितंजलदैरुष्णंतोषितावसुधाजलैः) ॥ संतप्ताभास्करकरैरभितप्तादवाग्नि
भिः ९ जलैर्बलाहकोत्सृष्टैरुच्छ्वसंतीवपर्वताः ॥ महावातसमुद्भूतंमहामेघगणार्पितम् ॥ महीमहाराजपुरैस्तुल्यमापद्यतेनभः १० क्वचि
त्कदंबहासाढ्यंशिलींध्राभरणंक्वचित् ॥ संप्रदीप्तमिवाभातिफुल्लनीपद्रुमंवनम् ११

दंबानामितिसामानाधिकरण्यम् ८ हासितंविकाशितम् ॥ ९ ॥ उच्छ्वसंतीवबाष्पमुद्गिरंतीत्यर्थः महीपुरैस्तुल्यंवपुरापद्यतेतत्रदृष्टांतेमहावाताःपताकाःमहामेघामहाप्रासादाः ॥
॥ १० ॥ शिलींध्राःछत्राकाः ॥ ११ ॥

क्षुभितमानसःकामातुरोभूत् ॥ १२ ॥ दृप्तसारंगनादेनमत्तभ्रमरध्वनिना दर्दुराभेकाः अवकीर्णाऽव्याप्ता॥ १३ ॥ १४ ॥ संततोयआसारोधारासंपातस्तेननिर्यत्नाःजडीकृताः
नगाग्राणि वृक्षशाखाग्राणि ॥ १५ ॥ तोयेनगंभीराणिनिविडानिलंबानिविस्तृतानिच तेषूदरेषु ॥ १६ ॥ महीरुहैर्मार्गचिह्नभूतैरन्वेष्योजलच्छन्नोमार्गोयस्याःसा ॥ १७ ॥

ऐंद्रेणपयसासिक्तंमारुतेनचविस्तृतम् ॥ पार्थिवंगंधमाघ्रायलोकःक्षुभितमानसः १२ दृप्तसारंगनादेनदर्दुरव्याहतेनच॥ नवैश्चशिखि
विक्रुष्टैरवकीर्णावसुंधरा १३ भ्रमत्तूर्णमहावर्त्तावर्षप्राप्तमहारयाः ॥ हरंत्यस्तीरजान्वृक्षान्विस्तारंयांतिनिम्नगाः १४ संतता
सारनिर्यत्नाःक्लिन्नयत्नोत्तरच्छदाः ॥ नत्यजंतिनगाग्राणिश्रांताइवपतत्रिणः १५ तोयगंभीरलंबेषुस्त्रवत्सुचनदत्सुच ॥ उदरेषुनवा
भ्राणांमज्जतीवदिवाकरः १६ महीरुहैरुत्पतितैःसलिलोत्पीडसंकुला ॥ अन्विष्यमार्गावसुधाभातिशाड्वलमालिनी १७ वज्रेणेवावरु
ग्णानांनगानांनगशालिनाम् ॥ स्रोतोभिःपरिकृत्तानिपतंतिशिखराण्यधः १८ पततामेघवर्षेणयथानिम्नानुसारिणा ॥ पल्वलोत्कीर्ण
मुक्तेनपूर्यंतेवनराजयः १९ हस्तोच्छ्रितमुखावन्यामेघनादानुसारिणः ॥ भ्रांतातिवृष्ट्यामातंगागांगताइवतोयदाः २० प्रावृट्प्रवृत्तिंसं
दृश्यदृष्ट्वाचांबुधरान्घनान् ॥ रौहिणेयोमिथःकालेकृष्णंवचनमब्रवीत् २१ पश्यकृष्णघनान्कृष्णान्बलाकोज्ज्वलभूषणान् ॥ गगनेत
वगात्रस्यवर्णचोरान्समुच्छ्रितान् २२ तवनिद्राकरःकालस्तवगात्रोपमंनभः ॥ त्वमिवाज्ञातवसतिंचंद्रोवसतिवार्षिकीम् २३ एतन्नी
लांबुदश्यामंनीलोत्पलदलप्रभम् ॥ संप्राप्तेदुर्दिनेकालेदुर्दिनंभातिवैनभः २४ पश्यकृष्णजलोदग्रैःकृष्णैरुद्ग्रथितैर्घनैः॥ गोवर्द्धनोयथार
म्योभातिगोवर्द्धनोगिरिः २५ पतितेनांभसाह्येतेसमंतान्मददर्पिताः ॥ भ्राजंतेकृष्णसारंगाःकाननेषुमुदान्विताः २६ एतान्यंबुप्रहृष्टा
निहरितानिमृदूनिच ॥ तृणानिशतपत्राक्षपत्रैर्गूहंतिमेदिनीम् २७ क्षरज्जलानांशैलानांवनानांजलदागमे ॥ ससस्यानांचसीमानांन
लक्ष्मीर्व्यतिरिच्यते २८ शीघ्रवातसमुद्धूताःप्रोषितौत्सुक्यकारिणः ॥ दामोदरोद्दामरवाःप्रागल्भ्यंयांतितोयदाः २९

१८ ॥ पल्वलेभ्यउत्कीर्णंउत्सिक्तंयत्तोयंतेनवर्षेण ॥ १९ ॥ हस्तःशुंडातयासहउच्छ्रितंमुखंयेषांतेहस्तोच्छ्रितमुखाः ॥ २० ॥ २१ ॥२२॥ चंद्रोनभोवसतिंवसतिआस्ते वार्षिकींवर्षा
भवाम्॥ २३ ॥ दुर्दिनेमेघच्छन्नेऽह्निकालेप्रावृट्काले दुर्दिनंमेघैराच्छन्नं ॥ २४ ॥ गोवर्द्धनोनामतःगोवर्द्धनोगवांवर्द्धयिता ॥ २५ ॥ कृष्णसारंगाभ्रमराः॥ २६॥ गूहंत्याच्छाद
यंति ॥ २७ ॥ सीमानांकृष्टभूमीनांत्रयाणामपिलक्ष्मीर्नव्यतिरिच्यतेनाधिकाभवत्यपितुसमानैवेत्यर्थः ॥ २८ ॥ प्रोषितानांप्रवासिनांऔत्सुक्यंगृहगमनेतत्कारिणः ॥ २९ ॥

हर्यश्वचापेनइंद्रधनुषारचितंमिश्रितंमध्यमंपदमंतरिक्षम् ॥ ३० ॥ नभसिश्रावणे नभश्चक्षुःसूर्यः ॥ ३१ ॥ संसर्गःसंबंधः समुद्रौघानिभैश्चुब्धैरित्यर्थः ॥ ३२ ॥ नीपाःकदंबाना मवांतरजातयः पृथिव्यांसृष्टैरितिशेषः कोलाहलाःकलकलाः ॥ ३३ ॥ ३४ ॥ यैर्विद्युत्कवचैर्मेघैर्वर्मिणंवर्मवत्पुंस्त्वमार्षम् ॥ ३५ ॥ घनैर्निविडैर्मेघैः ॥ ३६ ॥ गजाजलग जास्तेषामनीकैः ॥ ३७ ॥ उद्भूतंउद्भूननम् कंपिनःकंपहेतवः सपृषतःसाबिंदवः उद्दामाःमहांतः सपृषतोद्दामाइतिसंधिरार्षः ॥ ३८ ॥ सुप्तोअदृश्यःचंद्रोयासु ॥ ३९ ॥ चेतन

हरेहर्यश्वचापेनत्रिवर्णेनत्रिविक्रम ॥ विबाणज्येनरचितंतवेदंमध्यमंपदम् ३०नभस्येषनभश्चक्षुर्नभात्येवचरन्नभः ॥ मेघैश्शातातपकरो विरश्मिरिवरश्मिवान् ३१ द्यावापृथिव्योस्संसर्गस्सततंविततैःकृतः॥ अव्यवच्छिन्नधारौघैस्समुद्रौघसमैर्घनैः ३२नीपार्जुनकदंबानांपृथिव्यांचातिवृष्टिभिः ॥ गंधैःकोलाहलावांतिवातामदनदीपनाः ३३ संप्रवृत्तमहावर्षंलंबमानमहांबुदम् ॥ भात्यगाधमपर्यंतंससागरमिवांबरम् ३४ धारानिर्मलनाराचंविद्युत्कवचवर्मिणम् ॥ शक्रचापायुधधरंयुद्धसज्जमिवांबरम् ३५ शैलानांचवनानांचद्रुमाणांचवराननम् ॥ प्रतिच्छन्नानिभासंतेशिखराणिघनैर्घनैः ३६ गजानीकैरिवाकीर्णंसलिलोद्गारिभिर्घनैः ॥ वर्णसारूप्यतांयातिगगनंसागरस्यच ३७ समुद्रोद्धूतजनितालोलाश्शाड्वलकंपिनः ॥ शीतास्सपृषतोद्दामाःकर्कशावांतिमारुताः ३८ निशासुसुप्तचंद्रासुमुक्ततोयासुतोयदैः ॥ मग्नसूर्यस्यनभसोनविभांतिदिशोदश ३९ चेतनंपुष्करंकोशैःक्षुधाध्मातैःसमंततः ॥ नघृणीनांनरम्याणांविवेकंयांतिकृष्टयः ४० घर्मदोषपरित्यक्तंमेघतोयविभूषितम् ॥ पश्यवृंदावनंकृष्णवनंचैत्ररथंयथा ४१ एवंप्रावृड्गुणान्सर्वान्श्रीमान्कृष्णस्यपूर्वजः ॥ कथयन्नेवबलवान्व्रजमेवजगामह ४२ अन्योन्यंरममाणौतुकृष्णसंकर्षणावुभौ ॥ तत्कालज्ञातिभिस्सार्द्धंचेरतुस्तद्वनं महत् ४३ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिप्रावृड्वर्णनंनामदशमोध्यायः १० ॥ छ ॥ वैशंपायनउवाच ॥ कदाचित्तुतदा कृष्णोविनासंकर्षणेनवै ॥ चचारतद्वनंरम्यंकामरूपीवराननः १

मिति क्षुधाध्मातैर्वायुनापूरितैः कोशैश्चर्मकोशसदृशैर्मेघैरुपलक्षितंपुष्करमंबरंचेतनमिवभातीतिलुप्तोपमा सर्वतश्चलद्भिर्मेघैर्नभोपिचलतीवेत्यर्थः एवमपिकृष्टयःप्रजाः रम्याणां रात्रीणाम् घृणीनांदिवसानांच विवेकंअन्योन्यतःपृथक्त्वंनयांतीतिन अपितुयांत्येवेतियोजना मेघोत्थांधकारावृतानिदिनानिरात्रिकल्पान्यभूवन्नित्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ तत्कालज्ञातिभिःनतुयादववज्जन्मज्ञातिभिः ॥ ४३ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांदशमोध्यायः ॥ १० ॥ छ ॥ अस्मिन्नेकादशेध्यायेवनक्रीडानिरूप्यते कालियक्ष्वेडदग्धीययमुनादर्शनंहरेः ॥ १ ॥ कदाचिदिति ॥ १ ॥

श्रीवत्सेनउरसाधृतेनेतिशेषः तृतीयांतानांपंचमस्थेनरराजेत्यनेनान्वयः ॥ २ ॥ हस्तेनपंकजोद्भिन्नंविकसत्कमलंतत्तुल्यतेजसा क्रांतंविक्रांतंगमनंयस्यताद्दशेनगामिनागमन स्वभावेनपादेन ॥ ३ ॥ ४ ॥ दिवौकसैःदेवैः ॥ ५ ॥ बाल्येपौगंडंदशमावधीत्युक्तेः पौगंडे ॥ ६ ॥ ७ ॥ नीपाःकदंबपुष्पाणिकंदलानवांकुराःतैः शोभमानानीपकंदल मालिनी ॥ ८ ॥ नभस्योभाद्रपदः ॥ ९ ॥ अमलंदिव्यंपत्रंदलंयस्यतेनबर्हिपत्रेणमयूरपिच्छेनशुशुभेइत्यनुषंगः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ प्रतिव्यूहैःप्रतिध्वनिभिः

काकपक्षधरश्श्रीमान्श्यामःपद्मदलेक्षणः ॥ श्रीवत्सेनोरसायुक्तश्शशांकइवलक्ष्मणा २ सांगदेनाग्रहस्तेनपंकजोद्भिन्नवर्चसा ॥ सुकुमाराभितास्रेणक्रांतविक्रांतगामिना ३ पीतेप्रीतिकरेनृणांपद्मकिंजल्कसप्रभे ॥ सूक्ष्मेवसानोवसनेससंध्यइवतोयदः ॥ ४ ॥ वत्सव्यापारयुक्ताभ्यांव्यग्राभ्यांदंडरज्जुभिः ॥ भुजाभ्यांसाधुवृत्ताभ्यांपूजिताभ्यांदिवौकसैः ५ सदृशंपुंडरीकस्यगंधेनकमलस्यच ॥ रराजचास्यतद्बाल्येरुचिरोष्ठपुटंमुखम् ६ शिखाभिस्तस्यमुक्ताभीरराजमुखपंकजम् ॥ वृतंषट्पदपंक्तीभिर्यथास्यात्पद्ममंडलम् ७ तस्यार्जुनकदंबाढ्यानीपकंदलमालिनी ॥ रराजमालाशिरसिनक्षत्राणांयथादिवि ८ सतयामालयावीरश्शुशुभेकंठसक्तया ॥ मेघमालांबुदश्यामोनभस्यइवमूर्त्तिमान् ९ एकेनामलपत्रेणकंठसूत्रावलंबिना ॥ रराजबर्हिपत्रेणमंदमारुतकंपिना ॥ १० ॥ क्वचिद्गायन्क्वचित्क्रीडंश्चंचूर्यंश्चक्वचित्क्वचित् ॥ पर्णवाद्यंश्रुतिसुखंवादयंश्चक्वचिद्वने ११ गोपवेणुंसुमधुरंकामात्तमपिवादयन् ॥ प्रल्हादनार्थंचगवांक्वचिद्वनगतोयुवा १२ गोकुलेंबुधरश्यामश्चचारद्युतिमान्प्रभुः ॥ रेमेचतत्ररम्यासुचित्रासुवनराजिषु १३ मयूररवघुष्टासुमदनोद्दीपनीषुच ॥ मेघनादप्रतिव्यूहैर्नादितासुसमंततः १४ शाद्वलच्छन्नमार्गासुशिलींध्राभरणासुच ॥ कंदलामलपत्रासुस्रवंतीषुनवंजलम् १५ केसराणांनवैर्गंधैर्मदनिःश्वसितोपमैः ॥ अभीक्ष्णंनिश्श्वसंतीषुकामिनीष्विवनित्यशः १६ सेव्यमानोनवैर्वातैर्द्रुमसंघातनिस्सृतैः ॥ तासुकृष्णोमुदंलेभेसौम्यासुवनराजिषु १७ सकदाचिद्वनेतस्मिन्गोभिस्सहपरिभ्रमन् ॥ ददर्शविपुलोदग्रंशाखिनंशाखिनांवरम् १८ स्थितंधरण्यांमेघाभंनिबिडंदलसंचयैः ॥ गगनार्धोच्छ्रिताकारंपर्वताभोगधारिणम् १९ नीलचित्रांगवर्णैश्चसेवितंबहुभिःखगैः ॥ फलैःप्रवालैश्चघनैस्सेंद्रचापघनोपमम् २०

॥ १४ ॥ कंदलानिनवांकुरितानिअमलानिचपत्राणियासु कंदलंतुकपोलेस्यादुपरागेनवांकुरेइतिविश्वः ॥ १५ ॥ कामिनीष्विवेतिस्रवंतीनामुपमा ॥ १६ ॥ १७ ॥ शाखिनंवटम् ॥ १८ ॥ १९ ॥ चित्रांगवर्णैर्मयूरैः ॥ २० ॥

॥ २१ ॥ निरावषवर्षवारणम् अनातपंआतपनिवारणम् ॥ २२ ॥ २३ ॥ २४ ॥ क्रीडनकैःक्रीडासाधनैः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तरंगाएवापांगाःकटाक्षास्तैःकु टिलंतीरम् ॥ २९ ॥ ३० ॥ मिथुनेचरैश्चक्रवाकादिभिः ॥ ३१ ॥ जलजैर्मीनाद्यैःजलजैर्गुणैःशीतलत्वनिर्मलत्वाद्यैःजलजैःपद्मैःजलजैःशैवालैः ॥ ३२ ॥ स्त्रीरूपेणवर्णयति प्रसृतेति

भवनाकारविटपंलतापुष्पसुमंडितम् ॥ विशालमूलावनतंपवनांभोदधारिणम् २१ आधिपत्यमिवान्येषांतस्यदेशस्यशाखिनाम् ॥ कुर्वाणंशुभकर्माणंनिरावर्षमनातपम् २२ न्यग्रोधंपर्वताग्राभंभांडीरंनामनामतः ॥ दृष्ट्वातत्रमतिंचक्रेनिवासायततःप्रभुः २३ सतत्र वयसातुल्यैर्वत्सपालैस्सहानघ ॥ रेमेवैवासरंकृष्णःपुरास्वर्गगतोयथा २४ तंक्रीडमानंगोपालाःकृष्णंभांडीरवासिनम् ॥ रमयंतिस्मबहवोवन्यैःक्रीडनकैस्तदा २५ अन्येस्मपरिगायंतिगोपामुदितमानसाः ॥ गोपालाःकृष्णमेवान्येगायंतिस्मरतिप्रियाः २६ तेषांसगायतामेववादयामासवीर्यवान् ॥ पर्णवाद्यांतरेवेणुंतुंबीवीणांचतत्रह २७ कदाचिच्चारयन्नेवगास्सगोवृषभेक्षणः ॥ जगामयमुनातीरंलतालंकृतपादपम् २८ तरंगापांगकुटिलांवारिस्पर्शमुखानिलाम् ॥ तांचपद्मोत्पलवतींददर्शयमुनांनदीम् २९ सुतीर्थांस्वादुसलिलांह्रदिनींवेगगामिनीम् ॥ तोयवातोद्धतैर्वेगैरवनामितपादपाम् ३० हंसकारंडवोद्धुष्टांसारसैश्चनिनादिताम् ॥ अनर्घैर्मिथुनैश्चैवसेवितांमिथुनेचरैः ३१ जलजैःप्राणिभिःकीर्णांजलजैर्भूषितांगुणैः ॥ जलजैःकुसुमैश्चित्रांजलजैर्हरितोदकाम् ३२ प्रसृतस्त्रोतचरणांपुलिनश्रोणिमंडलाम् ॥ आवर्त्तनाभिगंभीरांपद्मरोमानुरंजिताम् ३३ तटच्छेदादरांकांतांत्रितरंगवलीधराम् ॥ फेनप्रहृष्टवदनांप्रसन्नांहंसहासिनीम् ३४ रुचिरोत्पलरक्तोष्ठींनतभ्रूंजलजेक्षणाम् ॥ ह्रददीर्घललाटांतांकांतांशैवलमूर्द्धजाम् ३५ चक्रवाकस्तनतटींतीरपार्श्वायताननाम् ॥ दीर्घस्त्रोतायतभुजामाभोगश्रवणायताम् ३६ कारंडवाकुंडलिनींश्रीमत्पंकजलोचनाम् ॥ तटजाभरणोपेतांमीननिर्मलमेखलाम् ३७ वारिप्लवप्लवक्षौमांसारसारावनूपुराम् ॥ काशचामीकरंवासोवसानांहंसलक्षणाम् ३८

स्रोतःशब्देसकारलोपआर्षः ३३ तटच्छेदःप्रवाहस्यमध्येकार्श्यम् तिस्रःतरंगाएववलयः तासांधरां तरंगत्रिवलीधराम् ॥ ३४ ॥ ३५ ॥ आभोगश्रवणायतां आभोगस्तटस्योभयतः पूर्णतासैवश्रवणेआयतेयस्यास्ताम् ॥ ३६ ॥ ३७ ॥ वारिणिप्लवंतेविस्तारंयांतिशैवालाःकमलिनीदलानिवातेषांयःप्लवःविपुलतासैवक्षौमंअतसीसूत्रमयंवासोयस्यास्ताम् ॥ ३८

१ अन्योन्यमिथुनैश्चैवेतिपाठान्तरम् ।

निपानपंशूनांपानस्थलंतत्रेयश्वापदास्तएवापीडोभूषायस्यास्ताम्॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३॥ विषारणयः सर्पाः ॥ ४४ ॥ ४५॥ आकाशादपि आकाशमार्गेपि॥ ४६॥ ४७

भीमनक्रानुलिप्तांगींकूर्मलक्षणभूषिताम् ॥ निपानश्वापदापीडांनृभिःपीनपयोधराम् ३९ श्वापदोच्छिष्टसलिलामाश्रमस्थानसंकुलाम् तांसमुद्रस्यमहिषीमीक्षमाणस्समंततः ४० चचाररुचिरंकृष्णोयमुनामुपशोभयन् ॥ तांचरन्सनदीश्रेष्ठांददर्शह्रदमुत्तमम् ४१ दीर्घंयोजनविस्तारंदुस्तरंत्रिदशैरपि ॥ गंभीरमक्षोभ्यजलंनिष्कंपमिवसागरम् ४२ तोयजैश्श्वापदैस्त्यक्तंशून्यंतोयचरैःखगैः ॥ अगाधेनांभसापूर्णंमेघपूर्णमिवांबरम् ४३ दुःखोपसर्प्यंतीरेषुससर्पैर्विपुलैर्बिलैः॥ विषारणिभवस्याग्नेर्धूमेनपरिवेष्टितम् ४४ अभोग्यंतत्पशूनांहिअपेयंचजलार्थिनाम् ॥ उपभोगैःपरित्यक्तंसुरैस्त्रिषवणार्थिभिः ४५ आकाशादप्यसंचार्यंखगैराकाशगोचरैः॥ तृणेष्वपिपतत्स्वप्सुज्वलंतमिवतेजसा ४६ समंताद्योजनंसाग्रंदेवैरपिदुरासदम् ॥ विषानलेनघोरेणज्वालाप्रज्वलितद्रुमम् ४७ व्रजस्योत्तरतस्तस्यक्रोशमात्रेनिरामये ॥ तंदृष्ट्वाचिंतयामासकृष्णोवैविपुलंह्रदम् ४८ अगाधंद्योतमानंचकस्यायंमहतोह्रदः॥ अस्मिन्सकालियोनामकालांजनचयोपमः ४९ उरगाधिपतिस्साक्षाद्ह्रदेवसतिदारुणः ॥ उत्सृज्यसागरावासंयोमयाविदितःपुरा ५० भयात्पतगराजस्यसुपर्णस्योरगाशिनः ॥ तेनेयंदूषितासर्वायमुनासागरंगमा ५१ भयात्तस्योरगपतेर्नायंदेशोनिषेव्यते ॥ तदिदंदारुणाकारमरण्यंरूढशाड्वलम् ५२ सावरोहद्रुमंघोरंकीर्णंनानालताद्रुमैः ॥ रक्षितंसर्प्पराजस्यसचिवैराप्तकारिभिः ५३ वनंनिर्विषयाकारंविषान्नमिवदुस्स्पृशम् ॥ तैराप्तकारिभिर्न्नित्यंसर्वतःपरिरक्षितम् ५४ शैवालनलिनैश्चापिवृक्षैःक्षुद्रलताकुलैः॥ कर्त्तव्यमार्गौभ्राजेतेह्रदस्यास्यतटावुभौ ५५ तदस्यसर्पराजस्यकर्त्तव्योनिग्रहोमया ॥ यथेयंसरिदंभोदाभवेच्छिवजलाशया ५६ व्रजोपभोग्याचयथानागेचदमितेमया ॥ सर्वत्रसुखसंचारासर्वतीर्थसुखाश्रया ५७ एतदर्थंचवासोयंव्रजेऽस्मिन्गोपजन्मच ॥ अमीषामुत्पथस्थानांनिग्रहार्थंदुरात्मनाम् ५८ एनंकदंबमारुह्यतदेवशिशुलीलया ॥ विनिपत्यह्रदेघोरेदमयिष्यामिकालियम् ५९

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ निर्विषयाकारम् आकाशवन्निरालंबनम् ॥५४॥ कर्तव्यौनतुस्वतःसिद्धौ मार्गौययोस्तौ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

१ षड्भिस्त्रिषवणार्थिभिरितिपाठान्तरम् ।

॥ ६० ॥ इतिश्रीमत्पद०नीलकंठकृतौभारतभावप्रदीपेहरिवंशार्थप्रकाशेविष्णुपर्वणिटीकायामेकादशोऽध्यायः ॥ ११॥ अमुष्मिन्द्वादशेध्यायेकालियस्यफणोपरि॥नृत्यंचक्रे हरिश्चेतियमुनानिर्विषोच्यते ॥ १ ॥ सोपसृत्येत्यध्यायस्य योऽहन्नहिमन्वपस्ततर्देत्यपादहस्तोअपृतन्यदिंद्रमितिचोपदिष्टं कालियदमनंउपबृंहयति तत्रमंत्रावयवयोरर्थस्तु योऽहिःसर्पोपःयमुनाजलानि ततर्दविषसंपर्केणनाशितवान् तमिंद्रोअहन्हिंसितवान् ॥पीडनमात्रमत्रहंत्यर्थः सचअहिःअपात्पादहीनः अहस्तःश्वसन् इंद्रंअपृतन्यत् अयो

(एवंकृतेबाहुवीर्यंलोकेख्यातिंगमिष्यति)६०इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिबालचरितेयमुनावर्णनंनामैकादशोऽध्यायः ॥
११॥वैशंपायनउवाच ॥ सोपसृत्यनदीतीरंबद्धापरिकरंदृढम् ॥ आरोहच्चपलःकृष्णःकदंबशिखरंमुदा १ कृष्णःकदंबशिखराल्लंबमानो
घनाकृतिः ॥ ह्रदमध्येकरोच्छब्दंनिपतन्नंबुजेक्षणः २ कृष्णेनतत्रपतताक्षुभितोयमुनाह्रदः ॥संप्रासिच्यतवेगेनभिद्यमानइवांबुदः ३
तेनशब्देनसंक्षुब्धंसर्पस्यभवनंमहत् ॥ उदतिष्ठज्जलात्सर्पोरोषपर्याकुलेक्षणः ४ सचोरगपतिःक्रुद्धोमेघराशिसमप्रभः ॥ ततोरक्तांतन
यनःकालियस्समदृश्यत ५ पंचास्यःपावकोच्छ्वासश्चलज्जिह्वोनलाननः ॥ पृथुभिःपंचभिर्घोरैःशिरोभिःपरिवारितः ६ पूरयित्वाह्रदं
सर्वंभोगेनानलवर्चसा॥स्फुरन्निवचरोषेणज्वलन्निवचतेजसा ७ क्रोधेनज्वलतस्तस्यजलंशृतमिवाभवत्॥ प्रतिस्रोताश्चभीतेवजगामय
मुनानदी ८ तस्यक्रोधाग्निपूर्णेभ्योवक्त्रेभ्योभूच्चमारुतः ॥ दृष्ट्वाकृष्णंह्रदगतंक्रीडंतंशिशुलीलया ९ सधूमाःपन्नगेंद्रस्यमुखान्निश्चेरुर
र्चिषः॥ सृजतातेनरोषाग्निंसमीपेतीरजाद्रुमाः १० क्षणेनभस्मसान्नीतायुगांतप्रतिमेनवै ॥ तस्यपुत्राश्चदाराश्चभृत्याश्चान्येमहोरगाः॥
११ वमंतःपावकंघोरंवक्त्रेभ्योविषसंभवम् ॥ सधूमंपन्नगेंद्रास्तेनिपेतुरमितौजसः १२ प्रवेशितश्चतैस्सर्पैस्सकृष्णोभोगबंधनम् ॥
निर्यत्तचरणाकारस्तस्थौगिरिरिवाचलः १३ अदशन्दशनैस्तीक्ष्णैर्विषोत्पीडजलाविलैः ॥ तेकृष्णंसर्पपतयोनममारचवीर्यवान् १४
एतस्मिन्नंतरेभीतागोपालास्सर्वएवते ॥ क्रंदमानाव्रजंजग्मुर्बाष्पगद्गदयागिरा ॥ १५ ॥ ॥ गोपाऊचुः ॥ ॥ एषमोहंगतःकृष्णो
मग्नोवैकालियेह्रदे ॥ भक्ष्यतेसर्पराजेनतदागच्छतमाचिरम् १६

धयदिति एतेनास्यसर्परूपत्वमुक्तमतोऽहिर्वृत्राख्योयत्राप्संबंधस्तत्रायमेवंवोद्धव्यः ॥ १ ॥ लंबमानः अधःपतन् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ पंचास्यःपंचवदनः ॥ ६ ॥ भो
गेनदेहेन ॥ ७ ॥ शृतंकथितं प्रतिस्रोताःविपरीतप्रवाहा ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तेऽदशन्नितिपूर्वेणसंबंधः ॥ १४ ॥ १५ ॥ १६ ॥ 

१ इदमर्धमधिकमितिभाति । २ युवेतिपाठान्तरम् ।

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ सर्पभोगेनसर्पभोगबंधेन स्पंदितंकिंचिच्चालितंधैर्यादितिशेषः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

नंदगोपायवैक्षिप्रंसबलायनिवेद्यताम् ॥ एषतेकृष्यतेकृष्णःसर्पेणेतिमहाह्रदे १७ नंदगोपस्तुतच्छुत्वावज्रपातोपमंवचः ॥ आर्त्तःस्ख
लितविक्रांतस्तंजगामह्रदोत्तमम् १८ सबालयुवतीवृद्धस्सचसंकर्षणोयुवा ॥ आक्रीडंपन्नगेंद्रस्यजलस्थंसमुपागमत् १९ नंदगोप
मुखागोपास्तेसर्वेसाश्रुलोचनाः ॥ हाहाकारंप्रकुर्वंतस्तस्थुस्तीरेह्रदस्यवै २० व्रीडिताविस्मिताश्चैवशोकार्त्ताश्चपुनःपुनः ॥ केचित्तु
पुत्रहाहेतिहाधिगित्यपरेपुनः २१ अपरेहाहतास्स्मेतिरुरुदुर्भृशदुःखिताः ॥ स्त्रियश्चैवयशोदांतांहाहतासीतिचुक्रुशुः २२ यापश्य
सिप्रियंपुत्रंसर्पराजवशंगतम् ॥ स्पंदितंसर्पभोगेनकृष्यमाणंयथामृतम् २३ अश्मसारमयंनूनंहृदयंतेविलक्ष्यते ॥ पुत्रंकथमिमंदृष्ट्वाय
शोदेनावदीर्यसे २४ दुःखितंबतपश्यामोनंदगोपंह्रदांतिके ॥ न्यस्यपुत्रमुखेदृष्टिंनिश्चेतनमवस्थितम् २५ यशोदामनुगच्छंत्यस्स
र्पावासमिदंह्रदम् ॥ प्रविशामोनयास्यामोविनादामोदरंव्रजम् २६ दिवसःकोविनासूर्यंविनाचंद्रेणकानिशा ॥ विनावृषेणकागावो
विनाकृष्णेनकोव्रजः २७ विनाकृष्णंनयास्यामोविवत्साइवधेनवः ॥ तासांविलपितंश्रुत्वातेषांचव्रजवासिनाम् ॥ विलापंनंदगोपस्य
यशोदारुदितंतथा २८ एकभावशरीरज्ञएकदेहोद्विधाकृतः ॥ संकर्षणस्तुसंक्रुद्धोबभाषेकृष्णमव्ययम् २९ कृष्णकृष्णमहाबाहोगोपा
नांनंदिवर्द्धन ॥ दम्यतामेषवैक्षिप्रंसर्पराजोविषायुधः ३० इमेनोबांधवास्तातत्वांमत्वामानुषंविभो ॥ परिदेवंतिकरुणंसर्वेमानुषबुद्धयः ॥
३१ तच्छ्रुत्वारौहिणेयस्यवाक्यंसंज्ञासमीरितम् ॥ विक्रम्यास्फोटयद्बाहूभित्त्वातन्नागबंधनम् ३२ तस्यपद्भ्यामथाक्रम्यभोगराशिंज
लोत्थितम् ॥ शिरस्तुकृष्णोजग्राहस्वहस्तेनावनाम्यच ३३ तस्यारुरोहसहसामध्यमंतन्महच्छिरः ॥ सोस्यमूर्ध्निस्थितःकृष्णोननर्त्तरुचि
रांगदः ३४ मृद्यमानस्सकृष्णेनशांतमूर्द्धाभुजंगमः ॥ आस्यैस्सरुधिरोद्गारैःकातरोवाक्यमब्रवीत् ३५ अविज्ञानान्मयाकृष्णरोषो
यंसंप्रदर्शितः ॥ दमितोहंहतविषोवशगस्तेवरानन ३६ तदाज्ञापयकिंकुर्यांसदासापत्यबांधवः ॥ कस्यवावशतांयामिजीवितंमेप्रदी
यताम् ३७ पंचमूर्द्धानतंदृष्ट्वासर्पसर्पारिकेतनः ॥ अक्रुद्धएवभगवान्प्रत्युवाचोरगेश्वरम् ३८

॥ ३० ॥ ॥ परिदेवंतिशोचंति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

---

१ त्वरितविक्रान्त इतिपाठान्तरम् ।

॥ ३९ ॥ ४० ॥ स्थानेअवस्थितौ ॥ ४१ ॥ नन्वन्यत्रगरुडोमांहनिष्यतिअत्रतुमुनिशापान्नायातीतिचेत्तत्राह मत्पदानीति ॥ ४२ ॥ ४३॥ धिष्ठितंतीरेऽवस्थितं ॥ ४४ ॥
॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ इतिश्रीपद० नीलकंटकृतौभारतभा० हरिवंशेविष्णुपर्वणिटीकायांद्वादशोऽध्यायः ॥ १२ ॥ अथत्रयोदशेध्यायेधेनुकस्योच्यतेवधः ॥



तवास्मिन्यमुनातोयेनैवस्थानंददाम्यहम् ॥ गच्छार्णवजलंसर्पसभार्यस्सहबांधवः ३९ यश्चेहभूयोदृश्येतस्थानेवायदिवाजले ॥ तव भृत्यस्तनूजोवाक्षिप्रंवध्यस्समेभवेत् ४० शिवंचास्यजलस्यास्तुत्वंचगच्छमहार्णवम् ॥ स्थानेत्विहभवेद्दोषस्तवांतकरणोमहान् ॥ ४१ मत्पदानिचतेसर्पदृष्ट्वामूर्धसुसागरे ॥ गरुडःपन्नगरिपुस्त्वयिनप्रहरिष्यति ४२ गृह्यमूर्ध्नातुचरणौकृष्णस्योरगपुंगवः ॥ पश्यता मेवगोपानांजगामादर्शनंह्रदात् ४३ निर्जितेतुगतेसर्पेकृष्णमुत्तीर्यधिष्ठितम् ॥ विस्मितास्तुष्टुवुर्गोपाश्चक्रुश्चैवप्रदक्षिणम् ४४ ऊचु स्सर्वेचसंप्रीतानंदगोपंवनेचराः ॥ धन्योस्यनुगृहीतोसियस्यतेपुत्रईदृशः ४५ अद्यप्रभृतिगोपानांगवांगोष्ठस्यचानघ ॥ आपत्सुशर णंकृष्णःप्रभुश्चायतलोचनः ४६ जाताशिवजलासर्वायमुनामुनिसेविता ॥ तीरेचास्यास्सुखंगावोविचरिष्यंतिनस्सदा ४७ व्यक्त मेववयंगोपावनेयत्कृष्णमीदृशम् ॥ महद्भूतंनजानीमच्छन्नमग्निमिवव्रजे ४८ एवंतेविस्मितास्सर्वेस्तुवंतःकृष्णमव्ययम् ॥ जग्मुर्गो पगणाघोषंदेवाश्चैत्ररथंयथा ४९ ॥ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेविष्णुपर्वणिद्वादशोऽध्यायः ॥ १२ ॥ वैशंपायनउवाच ॥ दमितेसर्पराजेतुकृष्णेनयमुनाह्रदे ॥ तमेवचेरतुर्देशंसहितौरामकेशवौ १ आजग्मतुस्तौसहितौगोधनैस्सहगामिनौ ॥ गिरिंगोवर्द्धनं रम्यंवसुदेवसुतावुभौ २ गोवर्द्धनस्योत्तरतोयमुनातीरमाश्रितम् ॥ ददृशातेचतौवीरौरम्यंतालवनंमहत् ३ तौतालपर्णप्रततेरम्ये तालवनेरतौ ॥ चेरतुःपरमप्रीतौवृषपोताविवोद्धतौ ४ सतुदेशस्सदास्निग्धोलोष्ठपाषाणवर्जितः ॥ दर्भप्रायस्थलीभूतःसुमहान्कृष्ण मृत्तिकः ५ तालैस्तैर्विपुलस्कंधैरुच्छ्रितैश्श्यामपर्वभिः ॥ फलाग्रशाखिभिर्भातिनागहस्तैरिवोच्छ्रितैः ६ तत्रदामोदरोवाक्यमुवा चवदतांवरः ॥ अहोतालफलैःपक्वैर्वासितेयंवनस्थली ७ स्वादून्यार्यसुगंधीनिश्यामानिरसवंतिच ॥ पक्वतालानिसहितौपातयावोल घुक्रमौ ८ यद्येषामीदृशोगंधोमाधुर्यघ्राणतर्पणः ॥ रसेनामृतकल्पेनभवितव्यंचमेमतिः ९ १९

बलदेवेनतच्चक्रेक्षेमंतालवनंयथा ॥ १ ॥ दमितेइत्यध्यायेसमिंद्रगर्दभंसमृणेत्यमुंमंत्रमुपबृंहयति हेइंद्रगर्दभंसमृणमारयेतिमंत्रपादार्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ सदेशो भातीत्युत्तरस्थेनान्वयः ॥ ५ ॥ ६ ॥ ७ ॥ लघुक्रमौशीघ्रक्रियौ ॥ ८ ॥ ९ ॥

॥ १० ॥ निर्माणभूतंसारभूतम् निर्माणंनिर्मितौसारेइतिमेदिनी अथापि इरिणंतूषरेशून्येइतिमेदिनी ॥ ११ ॥ १२ ॥ १३ ॥ तालस्वनंआरफोटनध्वनिम् ॥ १४ ॥ दर्पा विद्धसटाननःमदेनाविद्धाभ्रामिताःसटाःकेसरायस्मिन्तथाभूतंआननंयस्य ॥ १५ ॥ आविद्धंऊर्ध्वीकृतंपुच्छंयेन ॥ १६ ॥ १७ ॥ १८ ॥ ताभ्यांतयोरेवपदयोर्जग्राह आ

दामोदरवचःश्रुत्वारौहिणेयोहसन्निव ॥ पातयन्पक्वतालानिचालयामासतांस्तरून् १० तत्तुतालवनंनॄणामसेव्यंदुरतिक्रमम् ॥ निर्माणभूतमिरिणंपुरुपादालयोपमम् ११ दारुणोधेनुकोनामदैत्योगर्दभरूपधृक् ॥ खरयूथेनमहतावृतस्समनुसेवते १२ सतुतालवनंघोरंगर्दभःपरिरक्षति ॥ नृपक्षिश्वापदगणांस्त्रासयानस्सुदुर्मतिः १३ तालशब्दंसतंश्रुत्वासंघुष्टंफलपातनात् ॥ नामर्षयत्ससंक्रुद्धस्तालस्वनमिवद्विपः १४ शब्दानुकारीसंक्रुद्धोदर्पाविद्धसटाननः ॥ स्तब्धाक्षोहेषितपटुःखुरैर्निर्दारयन्महीम् १५ आविद्धपुच्छोहृषितोव्यात्ताननइवांतकः ॥ अपतन्नेवदद्दशेरौहिणेयमुपस्थितम् १६ तालानांतमधोदृष्ट्वासध्वजाकारमव्ययम् ॥ रौहिणेयंखरोदुष्टस्सोदशद्दशनायुधः १७ पद्भ्यामुभाभ्यांचपुनःपश्चिमाभ्यांपराङ्मुखः ॥ जघानोरसिदैत्येंद्रोरौहिणेयंनिरायुधम् १८ ताभ्यामेवसजग्राहपद्भ्यांतंदैत्यगर्दभम् ॥ आवर्जितमुखस्कंधंप्रेरयंस्तालमूर्धनि १९ संभग्नोरुकटिग्रीवोभग्नपृष्ठोदुराकृतिः ॥ खरस्तालफलैस्सार्द्धंपपातधरणीतले २० तंगतासुंगतश्रीकंपतितंवीक्ष्यगर्दभम् ॥ ज्ञातींस्तथापरांस्तस्यतृणराजनिसोक्षिपत् २१ साभूगर्दभदेहैश्चतालैःपक्वैश्चपातितैः ॥ बभासेछन्नजलदाद्यौरिवाव्यक्तशारदी २२ तस्मिन्गर्दभदैत्येतुसानुगेविनिपातिते ॥ रम्यंतालवनंतद्धिभूयोरम्यतरंबभौ २३ विप्रमुक्तभयंशुभ्रंविविक्ताकारदर्शनम् ॥ चरंतिस्मसुखंगावस्तत्तालवनमुत्तमम् २४ ततःप्रविष्टास्तेसर्वेगोपावनविचारिणः ॥ वीतशोकभयायासाश्चञ्चूर्यन्तेसमन्ततः २५ ततःसुखंप्रकीर्णासुगोषुनागेंद्रविक्रमौ ॥ द्रुमपर्णासनेकृत्वातौयथार्हंनिषीदतुः २६ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिधेनुकवधोनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ अथतौजातहर्षौतुवसुदेवसुतावुभौ ॥ तत्तालवनमुत्सृज्यभूयोभांडीरमागतौ १ चारयंतौविवृद्धानिगोधनानिशुभानिच ॥ स्फीतसस्यप्ररूढानिवीक्ष्यमाणौवनानिच २ क्ष्वेडयंतौप्रगायंतौप्रचिन्वंतौचपादपान् ॥ नामभिर्व्याहरंतौचसवत्सागाःपरंतपौ ३

वर्जितंभ्रामितंमुखस्कंधंयस्य ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ अस्मिन्चतुर्दशेऽध्याये प्रलंववधईर्यते ॥ तेनैवबलभद्रेणकृष्णादेशेनतिष्ठता ॥ १ ॥ १ ॥ २ ॥ क्ष्वेडयंतौबाहूआरफोटयंतौ व्याहरंतौआकारयंतौ ॥ ३ ॥

नियोगपाशैःअन्नाशिक्यैः ॥ ४ ॥ अन्योन्यसदृशाबरौअन्योन्यदीप्तिसंवलनेनसदृशांबराविव ॥ ५ ॥ कुसुमानांकुसुमैः कर्णपूरौकुर्वाणौ ॥ ६ ॥ ७ ॥ दीक्षांरीतिं ॥ ८ ॥ ॥ ९ ॥ स्पंदोलिकाभिर्दोलावलंबैः क्षेपणीयैर्वाटिकाद्यैः ॥ १० ॥ ११ ॥ विष्टंभोदिवोधरुणःपृथिव्याविश्वाउताक्षितयोहस्तेअस्य असत्तउत्सोगृणतेनियुत्वान्मध्वोअंशुःपवत इंद्रियायेत्येतंमंत्रमुपबृंहयति तयोरमयतोरेवमित्यादिना मंत्रार्थस्तु हेसोम तेतवमध्वोब्रह्मस्वरूपिणःअंशुरिवांशुःअंशःपृथिव्याधरुणःभूमेर्धर्तारामरूपधारीशेषःतेत्वयाअसत्अंतर्यामिणाप्रबाधितःसन्दीप्यमानअतएवउत्सःत्वदाज्ञाकरणेउत्कंठितः नियुत्वान्जगतःप्राणवायुरूपीसूत्रात्मासन्गृणतेआत्मनःस्वरूपंत्वद्वाक्यादवगतंभावयति अहंपरमेश्वर।

नियोगपाशैरासक्तैरस्कंधाभ्यांशुभलक्षणौ ॥ वनमालाकुलोरस्कौबालशृंगाविवर्षभौ ४ सुवर्णांजनचूर्णाभावन्योन्यसदृशांबरौ ॥ महेंद्रायुधसंसक्तौशुक्लकृष्णाविवांबुदौ ५ कुशाग्रकुसुमानांचकर्णपूरौमनोरमौ ॥ वनमार्गेषुकुर्वाणावन्यवेषधरावुभौ ६ गोवर्द्धनस्यानुचरौवनेसानुचरौतुतौ ॥ चेरतुर्लोकसिद्धाभिःक्रीडाभिरपराजितौ ७ तावेवंमानुषींदीक्षांवहंतौसुरपूजितौ ॥ तज्जातिगुणयुक्ताभिःक्रीडाभिश्चेरतुर्वनम् ८ तौतुभांडीरमाश्रित्यबालक्रीडानुवर्तिनौ ॥ प्राप्तौपरमशाखाढ्यंन्यग्रोधंशाखिनांवरम् ९ तत्रस्पंदोलिकाभिश्चयुद्धमार्गविशारदौ ॥ अश्मभिःक्षेपणीयैश्चतौव्यायाममकुर्वताम् १० युद्धमार्गैश्चविविधैर्गोपालैःसहितावुभौ ॥ मुदितौसिंहविक्रांतौयथाकामंविचेरतुः ११ तयोरमयतोरेवंतल्लिप्सुरसुरोत्तमः ॥ प्रलंबोऽभ्यागमत्तत्रछिद्रान्वेषीतयोस्तदा १२ गोपालवेषमास्थायवन्यपुष्पविभूषितः ॥ लोभयानस्तौवीरौहास्यैःक्रीडनकैस्तथा १३ सोऽवगाहतनिश्शंकस्तेषांमध्यममानुषः ॥ मानुषंवपुरास्थायप्रलंबोदानवोत्तमः १४ प्रक्रीडिताश्चतेसर्वेसहतेनामरारिणा ॥ गोपालवपुषंगोपामन्यमानास्स्वबांधवम् १५ सतुच्छिद्रांतरप्रेप्सुःप्रलंबोगोपतांगतः ॥ दृष्टिंप्रणिदधेकृष्णेरौहिणेयेचदारुणाम् १६

दनन्योस्मिदेवकार्यार्थमवतीर्णोस्मीत्यालोचयंतीत्यर्थःततोहेतोःदिवःद्युलोकमंडपस्यविष्टंभः स्तंभाइवभवंतितेविष्टंभः किंत्वंतस्येदंद्वितीयाबहुवचनं अत्युच्छ्रितान्प्रलंबादीन् बहुत्वंविभक्त्यर्थेइंद्रियायतद्वधेनस्ववीर्यंप्रदर्शयितुंपवतेगच्छंति किमस्यायुधंतदाह विश्वाइति सर्वाःक्षितयःनाशसाधनान्यायुधानिअस्यहस्ते एवंसंति अतोमुष्टिमात्रेणतंजघानेत्यर्थः विष्णोःसर्वदेवतामयत्वादत्रसोमरूपेणैवास्यस्तुतिर्बोद्धव्याएवमन्यत्रापिश्लोकार्थःस्पष्टः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

१ युद्धमार्गैश्च दंशितौ इति पाठान्तरम् ।

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ देहावेशात्प्रमाद्यतीतिन्यायेनसूत्रांशोपिरामोमुमोहेत्याह

अविषह्यंततोमत्वाकृष्णमद्भुतविक्रमम् ॥ रौहिणेयवधेयत्नमकरोद्दानवोत्तमः १७ हरिणाक्रीडनंनामबालक्रीडनकंततः ॥ प्रक्रीडिता स्तुतेसर्वेद्वौद्वौयुगपदुत्पतन् १८ कृष्णश्श्रीदामसहितःपुप्लुवेगोपसूनुना ॥ संकर्षणस्तुप्रुतवान्प्रलंबेनसहानघ १९ गोपालास्त्वप रेद्वंद्वंगोपालैरपरैस्सह ॥ प्रद्रुतालंघयंतोवैतेन्योन्यंलघुविक्रमाः २० श्रीदाममजयत्कृष्णःप्रलंबंरोहिणीसुतः ॥ गोपालैःकृष्णपक्षीयै र्गोपालास्त्वपरेजिताः २१ तेवाहयंतस्त्वन्योन्यंसंहर्षात्सहसाद्रुताः ॥ भांडीरस्कंधमुद्दिश्यमर्यादांपुनरागमन् २२ संकर्षणंतुस्कंधेन शीघ्रमुत्क्षिप्यदानवः ॥ द्रुतंजगामविमुखस्सचंद्रइवतोयदः २३ सभारमसहंस्तस्यरौहिणेयस्यधीमतः ॥ ववृधेसुमहाकायश्शक्रा क्रांतइवांबुदः २४ सभांडीरवटप्रख्यंदग्धांजनगिरिप्रभम् ॥ स्वंवपुर्दर्शयामासप्रलंबोदानवोत्तमः २५ पंचस्तबकलम्बेनमुकुटेना र्कवर्चसा ॥ दीप्यमानाननोदैत्यःसूर्याक्रांतइवांबुदः २६ महाननोमहाग्रीवस्सुमहानंतकोपमः ॥ रौद्रश्शकटचक्राक्षोनमयंश्चरणैर्महीम् २७ स्रग्दामलंबाभरणःप्रलंबांबरभूषणः ॥ वीरःप्रलंबःप्रययौलंबतोयइवांबुदः २८ सजहाराथवेगेनरौहिणेयंमहासुरः ॥ सागरोपप्लव गतंकृत्स्नंलोकमिवांतकः २९ क्रियमाणःप्रलंबेनसतुसंकर्षणोबभौ ॥ ऊह्यमानइवाकाशेकालमेघेनचंद्रमाः ३० ससंदिग्धमिवा त्मानंमेनेसंकर्षणस्तदा ॥ दैत्यस्कंधगतश्श्रीमान्कृष्णंचेदमुवाचह ३१ क्रियेहंकृष्णदैत्येनपर्वतोदग्रवर्ष्मणा ॥ प्रदर्शयित्वामहतींमा यांमानुषरूपिणीम् ३२ कथमस्यमयाकार्यंशासनंदुष्टचेतसः ॥ प्रलंबस्यप्रवृद्धस्यदर्पाद्विगुणवर्चसः ३३ तमाहसस्मितंकृष्णस्सा म्नाहर्षकलेनवै ॥ अभिज्ञोरौहिणेयस्यवृत्तस्यचबलस्यच ३४ अहोयंमानुषोभावोव्यक्तमेवानुपाल्यते ॥ यस्त्वंजगन्मयंदेवंगुह्याद्गु ह्यतरंगतः ३५ स्मरनारायणात्मानंलोकानांत्वंविपर्यये ॥ अवगच्छात्मनात्मानंसमुद्राणांसमागमे ३६ पुरातनानांदेवानांब्रह्मण स्सलिलस्यच ॥ आत्मवृत्तप्रभावाणांसंस्मराद्यंचवैवपुः ३७

ससंदिग्धमिति ॥ ३१ ॥ ३२ ॥ ३३ ॥ श्रीकृष्णस्त्वेनंपूर्वरूपस्मरणेनप्रबोधयतीत्याह तमाहेत्यादिना ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

---

१ स्तबकयुक्तेनेतिपाठान्तरम्.

अस्यैवसूत्रात्मत्वंविवृणोति शिरःखंइत्यादिना ॥ ३८ ॥ ३९ ॥ प्राणस्यप्राणमुतचक्षुषश्चक्षुरित्यादिश्रुतिप्रसिद्धंशुद्धंब्रह्मापित्वमेवासीत्याह यत्त्वयेति यत्त्वयानोक्तेत्यादिनास्यवे दकर्तृत्वमुक्तं ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ शेषरूपेणवर्णयति त्वय्येवेति ४४ ॥ ४५ यथेति अहं अंतर्यामी त्वंसूत्रात्मासर्वज्ञत्वादिकंद्वयोःसममेवेत्यर्थः ॥ ४६ ॥ ४७अत्यंतं



शिरःखंतेजलंमूर्त्तिःक्षमाभूर्दहनोमुखम् ॥ वायुर्लोकायुरुच्छ्वासोमनस्स्रष्टाह्यभूत्तव ३८ सहस्रास्यस्सहस्रांगस्सहस्रचरणेक्षणः ॥ सहस्रपद्मनाभस्त्वंसहस्रांशुधरोरिहा ३९ यत्त्वयादर्शितंलोकेतत्पश्यंतिदिवौकसः ॥ यत्त्वयानोक्तपूर्वंहिकस्तदन्वेष्टुमर्हति ४० यद्वे दितव्यंलोकेस्मिन्तत्त्वयासमुदाहृतम् ॥ विदितंयत्तवैकस्यदेवाअपिनतद्विदुः ४१ आत्मजंतेवपुर्व्योम्निनपश्यंत्यात्मसंभवम् ॥ यत्तुते कृत्रिमंरूपंतदर्चंतिदिवौकसः ४२ देवैर्नदृष्टश्चांतस्तेतेनानंतइतिस्मृतः ॥ त्वंहिसूक्ष्मोमहानेकस्सूक्ष्मैरपिदुरासदः ४३ त्वय्येवजगतः स्तंभेशाश्वतीजगतीस्थिता ॥ अचलाप्राणिनांयोनिर्धारयत्यखिलंजगत् ४४ चतुस्सागरभोगस्त्वंचातुर्वर्ण्यविभागवित् ॥ चतुर्युगे पुलोकानांचातुर्होत्रफलाशनः ४५ यथाहमपिलोकानांतथात्वंतच्चमेमतम् ॥ उभावेकशरीरौस्वोजगदर्थेद्विधाकृतौ ४६ अहंवाशाश्वतः कृष्णस्त्वंवाशेषःपुरातनः ॥ लोकानांशाश्वतोदेवस्त्वंहिशेषस्सनातनः ॥ आवयोर्देहमात्रेणद्विधेदंधार्यतेजगत् ४७ अहंयस्सभवाने वयस्त्वंसोहंसनातनः ॥ द्वावेवविहितौह्यावामेकदेहौमहाबलौ ४८ तदास्सेमूढवत्त्वंकिंप्राणेनजहिदानवम् ॥ मूर्ध्निदेवरिपुंदेववज्रक ल्पेनमुष्टिना ४९ ॥ वैशंपायनउवाच ॥ संस्मारितस्तुकृष्णेनरौहिणेयःपुरातनम् ॥ बलेनापूर्यततदात्रैलोक्यांतरचारिणा ५० ततःप्र लंबंदुर्वृत्तंसबद्धेनमहाभुजः ॥ मुष्टिनावज्रकल्पेनमूर्ध्निचैनंसमाहनत् ५१ तस्योत्तमांगंस्वेकायेविकपालंविवेशह ॥ जानुभ्यांचाहतश्शे तेगतासुर्दानवोत्तमः ५२ जगत्यांविप्रकीर्णस्यतस्यरूपंमभूत्तदा ॥ प्रलंबस्यांबरस्थस्यमेघस्येवविदीर्यतः ५३ तस्यभग्नोत्तमांग स्यदेहात्सुस्रावशोणितम् ॥ बहुगैरिकसंयुक्तंशैलशृंगादिवोदकम् ५४ तंनिहत्यप्रलंबंतुसंहृत्यबलमात्मनः ॥ पर्यष्वजतवैकृष्णंरौहि णेयःप्रतापवान् ५५

साम्यलक्षणमभेदमाह अहमिति ॥ ४८ ॥ ४९ ॥ संस्मारितइतिउक्तिमात्रेणबलदेववत्विशुद्धांतःकरणआत्मनोब्रह्मभावमवगच्छतीत्यर्थः ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५



१ सागरयोनिस्त्वमिति पाठे मुद्रितपूर्वे पुस्तके । २ तस्यदेहोबभौतदा इ० मु० पु० पाठः ।

॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांचतुर्दशोध्यायः ॥ १४ ॥ छ ॥ अथपंचदशेध्यायेगोपानिंद्रमखोत्सुकान् ॥ कृष्णः
पप्रच्छतद्धेतुंशुश्रावाथतदुत्तरं ॥ १ ॥ तयोःप्रवृत्तयोरित्यध्यायद्वयं आग्रावभिरहन्येभिरक्तुभिर्वरिष्ठंवज्रमाजिघर्तिमायिनि शतंवायस्यप्रचरन्स्वेदमेसंवर्त्तयंतोविचवर्त्तयन्नहे
तिमंत्रस्योपबृंहणार्थं मंत्रार्थमाह यस्यवज्रिणःस्वेदमेस्वगृहेवायुर्वेंद्रोवांतरिक्षस्थानइत्युक्तेरंतरिक्षेशतंवाततोधिकंवासंवर्त्तयंतःसंवर्त्तंप्रलयंकुर्वंतःसांवर्त्तकानाममेघाःप्रचरन्प्राचर
न्संचारंकृतवंतः सःमायिनिमायामनुष्येश्रीकृष्णेवरिष्ठंश्रेष्ठतमंवज्रंअशनिंतद्वर्तींमह।वृष्टिंआजिघर्तिक्षरति अक्तुभीरात्रिभिःसप्तभिरितिपुराणतःसप्तरात्रंवज्रधारेणपर्जन्येनववर्षे

तंतुकृष्णश्चगोपाश्चदिविस्थाश्चदिवौकसः ॥ तुष्टवुर्निहतेदैत्येजयाशीर्भिर्महाबलम् ५६ बलेनायंहतोदैत्योबालेनाक्लिष्टकर्मणा ॥ वि
वदंत्यशरीरिण्योवाचःसुरसमीरिताः ५७ बलदेवेतिनामास्यदेवैरुक्तंदिविस्थितैः ॥ बलंतुबलदेवस्यतदाभुविजनाविदुः ५८ कर्मजं
निहतेदैत्येदेवैरपिदुरासदे ५९ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशिशुचर्यायांप्रलंबवधोनामचतुर्दशोऽध्यायः १४ वैशंपा
यनउवाच ॥ तयोःप्रवृत्तयोरेवंकृष्णस्यचबलस्यच ॥ वनेविचरतोर्मासौव्यतियातौस्मवार्षिकौ १ व्रजमाजग्मतुस्तौतुव्रजेशुश्रुवतुस्त
दा ॥ प्राप्तंशक्रमहंवीरौगोपांश्चोत्सवलालसान् २ कौतूहलादिदंवाक्यंकृष्णःप्रोवाचतत्रतान् ॥ कोयंशक्रमहोनामयेनवोहर्षआगतः
३ तत्रवृद्धतमस्त्वेकोगोपोवाक्यमुवाचह ॥ श्रूयतांतातशक्रस्ययदर्थंध्वजइज्यते ४ देवानामीश्वरश्शक्रोमेघानांचारिसूदन ॥
तस्यचायंमखःकृष्णलोकनाथस्यशाश्वतः ५ तेनसंचोदितामेघास्तस्यचायुधभूषिताः ॥ तस्यैवाज्ञाकरास्सस्यंजनयंतिनवांबुभिः ॥
६ मेघस्यपयसोदातापुरुहूतःपुरंदरः ॥ संप्रहृष्टस्सभगवान्प्रीणयत्यखिलंजगत् ७ तेनसंपादितंसस्यंवयमन्येचमानवाः ॥ महो
त्सवंप्रयुंजानास्तर्पयामश्चदेवताः ८

त्यर्थःतत्रहेतुमाहआग्रावभिरहन्येभिरितिग्रावभिरितिसमुदायिभिः ग्रावसमुदायःशिलोच्चयोलक्ष्यतेयैःअहन्येभिःअहःक्रतुमर्हंतितेऽहन्यास्तैःपर्वतेक्रतुभाजिसतीत्यर्थःमायीपुनः
किंचकारेत्यतआहविचवर्त्तयन्नहेति च अनंतरंमायीअहाक्रतून्विवर्त्तयन्विपरीतंवर्तयन्नास्तेइतिशेषःइंद्रयागार्थमाहृतैःसंभारैर्गिरियागंप्रवर्त्तयतिमायिनिइंद्रोमहतींवृष्टिंचकारे
त्यर्थःतयोःप्रवृत्तयोःतयोः प्रवृत्तमानयोःव्यतियातौव्यतिक्रांतौ ॥ १ ॥ व्रजंगोपसमाजं शक्रमहंइंद्रोत्सवं ॥ २ ॥ ३ ॥ ४ ॥ शाश्वतःकुलपरंपरागतः ॥ ५ ॥ ६ ॥
मेघस्यमेघसंबंधिनः ॥ ७ ॥ सस्यंधान्यंवर्त्तयामोजीवामःउपयुंजानाःभक्षयंतःसंधिरार्षः ॥ ८ ॥

---

१ प्रलम्बे निहिते इति पाठान्तरम्

साम्रृतसजलं ॥ ९ ॥ सपुंगवाःसवृषाः ॥ १० ॥ ११ ॥ दुदोहेति गाःसूर्यरश्मीन् पयस्विनीरितिस्त्रीत्वंलोकात् अयमर्थः यथास्माकंजठराग्निःप्राणसहायोजलंशोषयातित
च्चास्माभिर्बलसाध्येकर्मणिक्रियमाणेरोमकूपद्वाराप्रस्वेदरूपेणवमति एवंवायुसहायःसूर्यःभूरूपादिगतंजलंशोषयाति तच्चेंद्रेणबलसाध्येनिरंतरभ्रमिरूपेकर्मणिप्रयुक्तःसन्कि
रणद्वाराचर्मकोशरूपेषुमेघेषुवमतिततस्तान्मेघानिंद्रोभिंदन्वृष्टिंप्रवर्त्तयतीति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६॥ १७ ॥ पयोजलं गोभिःरश्मिभिःपर्जन्यइंद्रः ॥१८॥

देवेवर्षतिलोकेस्मिंस्ततस्सस्यंप्रवर्धते ॥ पृथिव्यांतर्पितायांतुसाम्रृतंलक्ष्यतेजगत् ९ क्षीरवत्यस्त्विमागावोवत्सवत्यश्चनिर्वृताः ॥
तेनसंवर्द्धितास्तातत्तृणैःपुष्टाःसपुंगवाः १० नासस्यानातृणाभूमिर्नबुभुक्षार्दितोजनः ॥ दृश्यतेयत्रदृश्यंतेवृष्टिमंतोबलाहकाः॥
११ दुदोहसवितुर्गावैशक्रोदिव्याःपयस्विनीः ॥ ताःक्षरंतिनवंक्षीरंमेध्यंमेघौघधारितम् १२ वाय्वीरितंतुमेघेषुकरोतिनिनदंमह
त् ॥ जवेनावर्तितंचैवगर्जतीतिजनाविदुः १३ तस्यचैवोह्यमानस्यवायुयुक्तैर्बलाहकैः ॥ वज्राशनिसमाश्शब्दाश्श्रूयंतेनगभेदिनः
१४ तज्जलंवज्रनिष्पेषैर्विमुंचंतिनभोगताः ॥ बहुभिःकामगैर्मेघैश्शक्रोभृत्यैरिवेश्वरः १५ क्वचिद्दुर्दिनसंकाशैःक्वचिच्छिन्नाभ्रसंनिभैः ॥
क्वचिद्भिन्नांजनाकारैःक्वचिच्छीकरवर्षिभिः १६ मंडयंतीवदेवेंद्रोविश्वमेवंनभोघनैः ॥ क्वचिच्छीकरमुक्ताभंकुरुतेगगनंघनः १७ एवमे
तत्पयोदुग्धंगोभिस्सूर्यस्यवारिदः ॥ पर्जन्यस्सर्वभूतानांभवायभुविवर्षति १८ यस्मात्प्रावृडियंकृष्णशक्रस्यभुविभाविनी ॥ तस्मा
त्प्रावृषिराजानस्सर्वेशक्रंमुदायुताः ॥ महैस्सुरेशमर्चंतिवयमन्येचमानवाः १९ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेवि०शिशुचर्यायांगो
पवाक्यंनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ गोपवृद्धस्यवचनंश्रुत्वाशक्रपरिग्रहे ॥ प्रभावज्ञोपि
शक्रस्यवाक्यंदामोदरोब्रवीत् १ वयंवनचरागोपास्सदागोधनजीविनः ॥ गावोस्मद्दैवतंविद्धिगिरयश्चवनानिच २ कर्षुकाणांकृषिर्वृ
त्तिःपण्यंविपणिजीविनाम् ॥ गावोस्माकंपरावृत्तिरेतत्त्रैविद्यमुच्यते ३ विद्ययायोययायुक्तस्तस्यसादैवतंपरम् ॥ सैवपूज्यार्चनीयाचसै
वतस्योपकारिणी ॥ योन्यस्यफलमश्नानःकरोत्यन्यस्यसत्क्रियाम् ॥ ४ ॥

शक्रस्यविभाविनीपूजयित्रीपूजाकालइत्यर्थः महैःउत्सवैः ॥ १९ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांपंचदशोऽध्यायः ॥ १५ ॥ एतस्मिन्षोडशेध्यायेयुक्तिभिर्मखभेदनं॥
उपेंद्रेणमहेंद्रस्यशरदोवर्णनंतथा ॥ १ ॥ गोपवृद्धस्यवचनं श्रुत्वा शक्रपरिग्रहेइंद्रमहोत्सवस्वीकारे ॥ १ ॥ २ ॥ पण्यंविक्रेयंद्रव्यं विपणिजीविनांवणिजां त्रैविद्यंवार्त्तारूपा
याःविद्यायाःभेदत्रयं ॥ ३ ॥ विद्ययावार्त्तया ॥ ४ ॥

॥ ५ ॥ तनवस्तनूः ॥ ६ ॥ ७ ॥ एषांवनानांविकुर्वंतिविकारंजनयंति वनालयाःभिल्लाद्याःवनजीविनोगोपतक्षाद्याः ॥ ८ ॥ ९ ॥ कर्मस्वस्तिवाचनादिकं सुखस्थानेपादपा दिसन्निधौसमेदेशे ॥ १० ॥ वितत्य कुंडमंडपादिकंविस्तार्य क्रियतांएकत्रेतिशेषः ॥ ११ ॥ १२ ॥ प्रमुदिताप्रमुदितजनत्वात् ॥ १३ ॥ प्रियकैःकदंबभेदैः बाणासनैः झिंटीपुच्छैः निर्मयूररुतंवर्षापगमात् ॥ १४ ॥ बलाकेवबलाकाआकस्मिकपाताऽशनिः तद्रहिताविबलाकाः ॥ १५ ॥ १६ ॥ साभिषेकमिवपट्टाभिषिक्तनृपतितुल्यं॥ १७॥

द्वावनर्थौसलभतेप्रेत्यचेहचमानवः ॥ कृष्यंताप्रथितासीमासीमांतंश्रूयतेवनम् ५ वनांतागिरयस्सर्वेसाचास्माकंगतिर्ध्रुवा ॥ श्रूयंते गिरयश्चापिवनेस्मिन्कामरूपिणः ॥ प्रविश्यतास्तास्तनवोरमंतेस्वेषुसानुषु ६ भूत्वाकेसरिणस्सिंहाव्याघ्राश्चनखिनांवराः ॥ वना निस्वानिरक्षंतित्रासयंतोवनच्छिदः ७ यदाचैषांविकुर्वंतितेवनालयजीविनः ॥ घ्नंतितानेवदुर्वृत्तान्पौरुषादेनकर्मणा ८ मंत्रयज्ञपरा विप्रास्सीतायज्ञाश्चकर्षुकाः ॥ गिरियज्ञास्तथागोपाइज्योस्माभिर्गिरिर्वने ९ तन्मह्यंरोचतेगोपागिरियज्ञःप्रवर्त्तताम् ॥ कर्मकृत्वा सुखस्थानेपादपेष्वथवागिरौ १० तत्रहत्वापशून्मेध्यान्वितत्यायतनेशुभे ॥ सर्वघोषस्यसंदोहःक्रियतांकिंविचार्यते ११ तंशरत्कुसु मापीडाःपरिवार्यप्रदक्षिणम् ॥ गावोगिरिवरंसर्वास्ततोयांतुपुनर्व्रजम् १२ प्राप्ताकिलेयंहिगवांस्वादुतोयतृणागणैः ॥ शरत्प्रमुदि तारम्यागतमेघजलाशया १३ प्रियकैःपुष्पितैर्गौरंश्यामबाणासनैःक्वचित् ॥ कठोरतृणमाभातिनिर्मयूररुतंवनम् १४ विजलाविम लाव्योम्निविबलाकाविविद्युतः ॥ विवर्द्धतेजलधराविदंताइवकुंजराः १५ पटुनामेघनादेननवतोयानुकर्षिणा ॥ पर्णोत्करघनास्सर्वेप्रसादं यांतिपादपाः १६ सितवर्णांबुदोष्णीषंहंसचामरवीजितम् ॥ पूर्णचंद्रामलच्छन्नंसाभिषेकमिवांबरम् १७ हंसैःप्रहसितानीवसमु त्कृष्टानिसारसैः ॥ सर्वाणितनुतांयांतिजलानिजलदक्षये १८ चक्रवाकस्तनतटाःपुलिनश्रोणिमंडलाः ॥ हंसलक्षणहासिन्यःपतिं यांतिसमुद्रगाः १९ कुमदोत्फुल्लमुदकंताराभिश्चित्रमंबरम् ॥ सममभ्युत्स्मयंतीवशर्वरीष्वितरेतरम् २० मत्तक्रौंचावघुष्टेषुकल मापक्वपांडुषु ॥ निर्विष्टरमणीयेषुवनेषुरमतेमनः २१ पुष्करिण्यस्तडागानिवाप्यश्चविकचोत्पलाः ॥ केदारास्सरितश्चैवसरांसिच श्रियाऽज्वलन् २२ पंकजानिचताम्राणितथान्यानिसितान्यपि ॥ उत्पलानिचनीलानिभेजिरेवारिजांश्रियम् २३

॥ १८ ॥ १९ ॥ अभ्युत्स्मयंतिगर्वमाविष्कुर्वंति बहुत्वमार्षं ॥ २० ॥ कलमापक्वपांडुषुधान्यमंजरीपाकपिंगेषु निर्विष्टाःकृतविवाहास्तद्वद्रमणीयेषु क्रौंचपुरुषयोःधान्यवरागरांवनयोश्चसाम्यम् ॥ २१ ॥ २२ ॥ २३ ॥

सितापांगाःमयूराः निभृतःपूर्णः ॥ २४ ॥ ऋतुपर्यायोवर्षापगमस्तेनशिथिलैःवृत्तंसमाप्तंयन्नृत्यंतदासमुज्झितैः ॥ २५ ॥ विन्यासैःउपवेशनस्थलैः॥२६॥ जलजादाःमत्स्या
शिनः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ विशोषयन्रसानितिशेषः ॥ ३२ ॥ ३३ ॥ बंधुजीवैःरक्तपुष्पैःअभितःताम्रासुलोहितासु ॥ ३४ ॥ ३५ ॥ इषुसाह्वाःबाणास



मदंजहुःसितापांगामंदंववृधिरेनिलाः ॥ अभवद्व्यभ्रमाकाशमभूच्चनिभृतोर्णवः २४ ऋतुपर्यायशिथिलैर्वृत्तनृत्यसमुज्झितैः ॥ मयूरां
गरुहैर्भूमिर्बहुनेत्रेवलक्ष्यते २५ स्वपंकमलिनैस्तीरैःकाशपुष्पलताकुलैः ॥ हंससारसविन्यासैर्यमुनाभातिशोभना २६ कलमापा
करम्येपुकेदारेषुवनेषुच ॥ सस्यादाजलजादाश्चमत्ताविरुरुवुःखगाः २७ सिषिचुर्यानिजलदाजलेनजलदागमे ॥ तानिसस्यान्यबाला
निकठिनत्वंगतानिवै २८ त्यक्त्वामेघमयंवासश्शरद्गुणविदीपितः ॥ एषवैविमलेव्योम्निहृष्टोवसतिचंद्रमाः २९ क्षीरिण्योद्विगुणंगावः
प्रमत्ताद्विगुणंवृषाः ॥ वनानांद्विगुणालक्ष्मीस्सस्यैर्गुणवतीमही ३० ज्योतींषिघनमुक्तानिपद्मवंतिजलानिच ॥ मनांसिचम
नुष्याणांप्रसादमुपयांतिवै ३१ असृज्यत्सविताव्योम्निनिर्मुक्तोजलदैर्भृशम् ॥ शरत्प्रज्वलितंतेजस्तीक्ष्णरश्मिर्विशोषयन् ॥
३२ नीराजयित्वासैन्यानिप्रयांतिविजिगीषवः ॥ अन्योन्यराष्ट्राभिमुखाःपार्थिवाःपृथिवीक्षितः ३३ बंधुजीवाभिताम्रासुबद्धपंकवती
षुच ॥ मनस्तिष्ठतिकांतासुचित्रासुवनराजिषु ३४ वनेषुचविराजंतेपादपावनशोभिनः ॥ असनाःसप्तपर्णाश्चकोविदाराश्चपुष्पिताः ॥
३५ इषुसाह्वानिकुंभाश्चप्रियकास्स्वर्णकास्तथा ॥ सृमराःपेचुकाश्चैवकेतक्यश्चसमंततः ३६ व्रजेषुचविशेषेणगर्गरोद्गारहासिषु ॥
शरत्प्रकाशयोपेवगोष्ठेष्वटतिरूपिणी ३७ नूनंत्रिदशभूयिष्ठंमेघकालसुखोषितम् ॥ पतत्रिकेतनंदेवंबोधयंतिदिवौकसः ३८ शरद्येवं
सुसस्यायांप्राप्तायांप्रावृषःक्षये ॥ नीलचंद्रार्कवर्णैश्चरचितंबहुभिर्द्विजैः ३९ फलैःप्रवालैश्चघनमिंद्रचापघनोपमम् ॥ भवनाकारविट
पंलतापरममंडितम् ४० विशालमूलावनतंपवनाभोगमंडितम् ॥ अर्चयामोगिरिंदेवंगाश्चैवचाविशेषतः ४१ सावतंसैर्विषाणैश्चबर्हा
पीडैश्चदंशितैः ॥ घंटाभिश्चप्रलंबाभिःपुष्पैश्शारदिकैस्तथा ४२ शिवायगावःपूज्यंतांगिरियज्ञःप्रवर्त्यताम् ॥ पूज्यतांत्रिदशैश्शक्रोगि
रिरस्माभिरिज्यताम् ४३ कारयिष्यामिगोयज्ञंबलादपिनसंशयः ॥ यद्यस्तिमयिवःप्रीतिर्यदिवासुहृदोवयम् ४४ १९

नाः निकुंभाःदंतिविटपाः स्वर्णकाःस्वर्णपर्णाः पुष्पिताइतिपूर्वेणान्वयः सृमराम्मृगविशेषाः तेषांशरदिदर्शनात् पेचुकाःघूकाःइतिकेचित् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥
॥ ४० ॥ ४१ ॥ सावतंसैः समुकुटैः बर्हापीडैःमयूरपत्रभूषाभिस्तत्रैवशृंगेषुदंशितैर्बद्धैः ॥ ४२ ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायांषोडशोऽध्यायः ॥ १६ ॥ अथसप्तदशेध्यायेगोवर्धनमहोत्सवः ॥ वर्ण्यतेहरिणाक्तृप्तोदर्शनंतस्यचाद्भुतं ॥ १ ॥ अविशंकयाइंद्रात्भयंअशंकमानाइत्यर्थः ॥ १ ॥ २ ॥ अशंकायांवीजमाहुस्त्वमिति परायणंआश्रयः ॥ ३ ॥ यथास्वर्गंगतःस्वर्गस्थइव ॥ ४ ॥ एतच्छकटभंगादिकर्मदृष्ट्वेतिशेषः बोद्धव्यात्द्रष्टुंयोग्यात्तवाभिमानादहंकारादहंकारयिष्यामिगोयज्ञंबलादेतन्नसंशयइत्येवंरूपात् एकश्चकारःपादपूरणार्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तेत्वयातुल्यः शक्तिधरःका

गावोहिपूज्यास्सततंसर्वेषांनात्रसंशयः ॥ यदिसाम्नाभवेत्प्रीतिर्भवतांवैभवायच ॥ एतन्ममवचस्तथ्यंक्रियतामविचारितम् ४५ इति श्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिषोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ दामोदरवचश्श्रुत्वाहृष्टास्तेगोषु जीविनः ॥ तद्वागमृतमासाद्यप्रत्यूचुरविशंकया १ तवैषाबालमहतीगोपानांहितवर्द्धिनी ॥ प्रीणयत्येवनस्सर्वान्बुद्धिर्वृद्धिकरीगवाम् २ त्वंगतिस्त्वंरतिश्चैवत्वंवेत्तात्वंपरायणम् ॥ भयेष्वभयदस्त्वन्नस्त्वमेवसुहृदांसुहृत् ३ त्वत्कृतेकृष्णघोषोयंक्षेमीमुदितगोकुलः ॥ कृत्स्नो वसतिशांतारिर्यथास्वर्गंगतस्तथा ४ जन्मप्रभृतिकर्मैतद्दैवैरसुकरंभुवि ॥ बोद्धव्याच्चाभिमानाच्चविस्मितानिमनांसिनः ५ बलेनच पराध्येनयशसाविक्रमेणच ॥ उत्तमस्त्वंमनुष्येषुदेवेष्विवपुरंदरः ६ प्रतापेनचतीक्ष्णेनदीप्त्यापूर्णतयापिच ॥ उत्तमस्त्वंचमर्त्येषुदेवेष्विवदिवाकरः ७ कांत्यालक्ष्म्याप्रसादेनवदनेनस्मितेनच ॥ उत्तमस्त्वंचमर्त्येषुदेवेष्विवनिशाकरः ८ बलेनवपुषाचैवबाल्येन चरितेनच ॥ स्यात्तेशक्तिधरस्तुल्योनतुकश्चनमानुषः ९ यत्त्वयाभिहितंवाक्यंगिरियज्ञंप्रतिप्रभो ॥ कस्तल्लंघयितुंशक्तोवेलामिवमहोदधिः १० स्थितश्शक्रमहस्तातश्रीमान्गिरिमहस्त्वयम् ॥ त्वत्प्रणीतोद्यगोपानांगवांहेतोःप्रवर्त्यताम् ११ भोजनान्युपकल्प्यंतांपयसःपेशलानिच ॥ कुंभाश्चविनिवेश्यंतामुदपानेषुशोभनाः १२ पूर्यंतांपयसानद्योद्रोण्यश्चविपुलायताः ॥ भक्ष्यंभोज्यंचपेयंचतत्सर्वमुपनीयताम् १३ भाजनानिचमांसस्यन्यस्यतामोदनस्यच ॥ त्रिरात्रंचैवसंदोहस्सर्वघोषस्यगृह्यताम् १४ विशस्यतांचपशवोभोज्यायेमहिषादयः ॥ प्रवर्त्यतांचयज्ञोयंसर्वगोपसुसंकुलः १५ आनंदजननोघोषोमहान्मुदितगोकुलः ॥ तूर्यप्रणादघोषैश्चवृषभाणांचगर्जितैः १६ हंभारवैश्चवत्सानांगोपानांहर्षवर्द्धनः ॥ दध्नोह्रदोघृतावर्त्तःपयःकुल्यासमाकुलः १७

तिंकेयः ॥ ९ ॥ १० ॥ त्वत्प्रणीतस्त्वयाप्रवर्तितः ॥ ११ ॥ १२ ॥ नद्यःसुधामय्योदीर्घकुल्याः द्रोण्यस्तादृशानिकुंडानि ॥ १३ ॥ संदोहः पयआदिःगृह्यतांनतुविक्रेयः ॥ १४ ॥ १५ ॥ १६ ॥ दध्नोह्रदः घृतावर्त्तः साररूपेणघृतंयत्रोपर्यावर्त्ततेसतथा ॥ १७ ॥

प्रभूतश्चासौआढ्यश्च भूयान्संस्कारकद्रव्यसंयुक्तश्चयस्मिन्नित्यर्थः ॥ १८ ॥ १९ ॥ अधिशृतानिवह्निस्थानिचरुस्थाल्यादीनिपर्यंतानिसमीपेआसादितानियस्मिन् ॥ २० ॥ ॥ २१ ॥ २२ ॥ २३ ॥ प्रधानतःमुख्यास्तत्त्वज्ञाःजग्मुःशरणमितिशेषः ॥ २४ ॥ २५ ॥ तंगिरिशिखरस्थं ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ पर्याप्नुवंतुप्रदक्षिणं कुर्वंतु ॥ ३१ ॥ ३२ ॥ सापीडाःसशिरोभूषणाः ताश्चताःस्तबकांगदाःपुष्पगुच्छाकाराणिबाहुभूषणानियासांताः स्रजश्चआपीडाः शृंगारभूषणानितैश्चसहितानिस्रजापीडा

मांसराशिःप्रभूताढ्यःप्रकाशौदनपर्वतः ॥ संप्रावर्त्ततयज्ञोस्यगिरेर्गोभिस्समाकुलः १८ तुष्टगोपजनाकीर्णोगोपनारीमनोहरः॥ भक्ष्याणांराशयस्तत्रशतशश्चोपकल्पिताः॥ गंधमाल्यैश्चविविधैर्धूपैरुच्चावचैस्तथा १९ अथाधिशृतपर्यंतेसंप्राप्तेयज्ञसंविधौ ॥ यज्ञंगिरेस्तिथौ सौम्येचक्रुर्गोपाद्विजैस्सह २० यजनांतेतदन्नंतुतत्पयोदधिचोत्तमम् ॥ मांसंचमाययाकृष्णोगिरिर्भूत्वासमश्नुते २१ तर्पिताश्चापिविप्राग्र्यास्तुष्टास्संपूर्णमानसाः ॥ उत्तस्थुःप्रीतमनसस्स्वस्तिवाच्ययथासुखम् २२ भुक्त्वाचावभृथेकृष्णःपयःपीत्वाचकामतः ॥ संतृप्तोस्मीतिदिव्येनरूपेणप्रजहासवै २३ तंगोपाःपर्वताकारंदिव्यस्रगनुलेपनम् ॥ गिरिमूर्ध्निस्थितंदृष्ट्वाकृष्णंजग्मुःप्रधानतः २४ भगवानपितेनैवरूपेणाच्छादितःप्रभुः ॥ सहितैःप्रणतोगोपैर्ववंदात्मानमात्मना २५ तमूचुर्विस्मितागोपादेवंगिरिवरेस्थितम् ॥ भगवंस्त्वद्वशेयुक्तादासाःकिंकुर्मकिंकराः २६ सउवाचततोगोपान्गिरिप्रभवयागिरा ॥ अद्यप्रभृतिचेज्योहंगोषुयद्यस्तिवोदया २७ अहंवःप्रथमोदेवस्सर्वकामकरश्शुभः ॥ ममप्रभावाच्चगवामयुतान्येवभोक्ष्यथ २८ शिवश्चवोभविष्यामिमद्भक्तानांवनेवने ॥ रंस्येचसहयुष्माभिर्यथादिविगतस्तथा २९ येचेमेप्रथितागोपानंदगोपपुरोगमाः ॥ एषांप्रीतःप्रयच्छामिगोपानांविपुलंधनम् ३० पर्याप्नुवंतुक्षिप्रंमांगावोवत्ससमाकुलाः ॥ एवंममपराप्रीतिर्भविष्यतिनसंशयः ३१ ततोनीराजनार्थंहिवृंदशोगोकुलानितम् ॥ परिवव्रुर्गिरिवरंसवृषाणिसमंततः ३२ तागावःप्रद्रुताहृष्टास्सापीडस्तबकांगदाः ॥ सस्रजापीडशृंगाग्राःशतशोथसहस्रशः ३३ अनुजग्मुश्चगोपालाःकालयंतोधनानिच ॥ भक्तिच्छेदानुलिप्तांगारक्तपीतासितांबराः ३४ मयूरचित्रांगदिनोभुजैःप्रहरणावृतैः ॥ मयूरपत्रवृतानांकेशबंधैःसुयोजितैः ३५ बभ्राजुरधिकंगोपास्समवायेतदाद्भुते ॥ अन्येवृषानारुरुहुर्नृत्यंतिस्मपरेमुदा ३६

निशृंगाग्राणियासांताः ॥ ३३ ॥ कालयंतोनियमयंतःधनानिगोधनानि भक्तिच्छेदैर्विभागभेदैः अनुलिप्तांगाः नानावर्णैरनुलेपितानिपृथक्पृथगंगानियैस्तादृशाइत्यर्थः ॥३४ ॥ प्रहरणावृतैःसायुधैःमयूरपत्राणांवृंतानिमध्यशंकवःतेषाम् ॥ ३५ ॥ ३६ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायां सप्तदशोऽध्यायः ॥ १७ ॥ अस्मिन्नष्टादशेध्यायेआसारात्पीडितेव्रजे ॥ दध्रेकृष्णोगिरिंप्रौढयासप्ताहमि तिवर्ण्यते ॥ १ ॥ महेप्रतिहतेशक्रइत्यध्याये तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः दाधारदक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवाँअपोर्णुतेइत्येतंमंत्रमुपबृंह

गोपालास्त्वपरेगाश्चजगृहुर्वेगगामिनः ॥ तस्मिन्पर्यायनिर्वृत्तेगवांनीराजनोत्सवे ३७ अंतर्धानंजगामाशुतेनदेहेनसोऽचलः ॥ कृष्णो पिगोपसहितोविवेशव्रजमेवह ३८ गिरियज्ञप्रवृत्तेनतेनाश्चर्येणविस्मिताः ॥ गोपास्सबालवृद्धावैतुष्टुवुर्मधुसूदनम् ३९ ॥ इतिश्रीमहा भारतेखिलेपुहरिवंशेविष्णुपर्वणि गिरियज्ञप्रवर्त्तनंनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ ॥ महेप्रतिहतेशक्रस्सक्रोधस्त्रिदशेश्वरः ॥ सांवर्त्तकंनामगणंतोयदानामथाब्रवीत् १ भोबलाहकमातंगाःश्रूयतांममभाषितम् ॥ यदि वोमत्प्रियंकार्यंराजभक्तिपुरस्कृतम् २ एतेवृंदावनगतादामोदरपरायणाः ॥ नंदगोपादयोगोपाविद्विषंतिममोत्सवम् ३ आजीवोयः परस्तेषांगोपत्वंचयतस्स्मृतम् ॥ तागावस्सप्तरात्रेणपीड्यंतांवर्षमारुतैः ४ ऐरावतगतश्चाहंस्वयमेवांबुदारुणम्॥ स्त्रक्ष्यामिवृष्टिंवातं चवज्राशनिसमप्रभम् ५ भवद्भिश्चंडवर्षेणचरतामारुतेनच ॥ हतास्तास्सव्रजागावस्त्यक्ष्यंतिभुविजीवितम् ६ एवमाज्ञापयामास सर्वान्जलधरान्प्रभुः ॥ प्रत्याहतेवैकृष्णेनशासनेपाकशासनः ७ ततस्तेजलदाःकृष्णाघोरनादाभयावहाः ॥ आकाशंछादयामासु स्सर्वतःपर्वतोपमाः ८ विद्युत्संपातजननाश्शक्रचापविभूषिताः ॥ तिमिरावृतमाकाशंचक्रुस्तेजलदास्तदा ९ गजाइवान्यसंयुक्ताःके चिन्मकरवर्चसः ॥ नागाइवान्येगगनेचेरुर्जलदपुंगवाः १० तेन्योन्यंवपुषाबद्धानागयूथायुतोपमाः ॥ दुर्दिनंविपुलंचक्रुश्छादयंतोन भस्तलम् ११ नृहस्तनागहस्ताभ्यांवेणूनांचैवसर्वतः ॥ धाराभिस्तुल्यरूपाभिर्ववृपुस्तेबलाहकाः १२ समुद्रंमेनिरेतंहिखमारूढंनृच क्षुषः ॥ दुर्विगाह्यमपर्यंतमगाधंदुर्दिनंमहत् १३ नैवापतन्वैखगमादुद्रुवुर्मृगजातयः ॥ पर्वताभेपुमेघेपुखेनदत्सुसमंततः १४

यति मंत्रार्थस्तु अस्यविष्णोरस्तंपर्वतार्थंकृतंस्वंस्वेनसंपादितंक्रतुंयज्ञंवरुणोऽश्विनौचसचंतअन्वमोदंत मारुतस्तस्यवायोरपिवेधसःस्रष्टुः ततश्चस्वमखभंगेकृतेइंद्रेकुपितेसतिविष्णुः उत्तमंश्रेष्ठंदक्षंवृष्टिनिवारणक्षमंअहर्विदंक्रतोर्लब्धारंपर्वतंदाधारदधारधृतवान् यतःसखिवान्महान्व्रजाख्यसखिसमुदायवान्व्रजंअपोर्णुततेनाहर्विदाशैलेनआच्छादयतीति॥१॥ ॥२॥३॥४॥५॥६॥७॥८॥९॥१०॥ दुर्दिनंदुःस्थंदिनम् ॥११॥ नृहस्तनागहस्ताभ्यांतुल्यरूपाभिर्धाराभिरितिसंबंधः ॥१२॥ दुर्दिनंमेघच्छन्नमहः ॥१३॥ १४॥

नष्टसूर्येंदुःकल्पांतःतत्कालसदृशैः १५ ॥ खंकृष्णरात्रौइतिशेषः ॥ १६ ॥ तोयमयीसरसी ॥ १७ ॥ तोककलपरुताःअत्यल्पशब्दाः प्लवगाःप्रवाहेणगच्छंतितेतीररुहादयः संप्लवंप्रवाहं ॥ १८ ॥ १९ ॥ २० ॥ विशेषेणप्रहताःविप्रहताः ॥ २१ ॥ हृष्टरोमाश्वताआर्द्रतनवश्वताः ॥२२ ॥ शीकरवेजिताःअंबुकणैश्वलितास्तेभ्योभीतावा ॥ २३

 नष्टसूर्येंदुसदृशैर्मेघैर्नभसिदारुणैः ॥ अतिवृष्टेनलोकस्यविरूपमभवद्वपुः १९मेघौघनिष्प्रभाकारमदृश्यग्रहतारकम् ॥ चंद्रसूर्यांशुरहि 
तंखंबभूवातिनिष्प्रभम् १६ वारिणामेघमुक्तेनमुच्यमानेनचासकृत् ॥ आबभौसर्वतस्तत्रभूमिस्तोयमयीयथा १७ विनेदुर्बर्हिणस्तत्र
तोककलपरुताःखगाः ॥ विवृद्धिंनिम्नगायाताःप्लवगास्संप्लवंगताः १८ गर्जितेनचमेघानांपर्जन्यनिनदेनच ॥ तर्जितानीवकंपंतेतृणा
नितरुभिस्सह १९ प्राप्तोंतकालोलोकानांव्यक्तमेकार्णवामही ॥ इतिगोपगणावाक्यंव्याहरंतिभयार्दिताः २० तेनोत्पातांबुवर्षेणगावो
विप्रहताभृशम् ॥ हंभारवैःक्रंदमानानचेलुःस्तंभितोपमाः २१ निष्कंपसक्थिचरणानिष्प्रयत्नखुराननाः ॥ हृष्टरोमार्द्रतनवःक्षामकुक्षि
पयोधराः २२ काश्चित्प्राणान्जहुश्श्रांतानिपेतुःकाश्चिदातुराः ॥ काश्चित्ससवत्साःपतितागावश्शीकरवेजिताः २३ काश्चिदाक्र
म्यक्रोडेनवत्सास्तिष्ठंतिमातरः ॥ विमुखाःश्रांतसक्थ्यश्चनिराहाराकृशोदराः २४ पेतुरार्त्तावेपमानागावोवर्षपराजिताः ॥ वत्साश्चो
न्मुखकाबालादामोदरमुखाःस्थिताः ॥ त्राहीतिवदनैर्दीनैःकृष्णमूचुरिवार्दिताः २५ गवांतत्कदनंदृष्ट्वादुर्दिनागमजंमहत् ॥ गोपां
श्चासन्ननिधनान्कृष्णःकोपंसमादधे २६ सचिंतयित्वासंरब्धोदृष्टोयोगोमयेतिच ॥ आत्मानमात्मनावाक्यमिदमूचेप्रियंवदः २७
अद्याहमिममुत्पाटचसकाननवनंगिरिम् ॥ कल्पयेयंगवांस्थानंवर्षत्राणायदुर्द्धरम् २८ अयंधृतोमयाशैलःपृथ्वीगृहनिभोपमः ॥
त्रास्यतेसव्रजागावैमद्वश्यश्चभविष्यति २९ एवंसंचिंतयित्वातुकृष्णस्सत्यपराक्रमः ॥ बाह्वोर्बलंदर्शयिष्यन्समीपंतंमहीधरम् ३०
दोर्भ्यामुत्पाटयामासकृष्णोगिरिरिवाचलः ॥ सधृतस्संगतोमेघैर्गिरिस्सव्येनपाणिना ॥ गृहभावंगतस्तत्रगृहाकारेणवर्चसा ३१ भूमे
रुत्पाटचमानस्यतस्यशैलस्यसानुषु ॥ शिलाःप्रशिथिलाश्चेलुर्विनिष्पेतुश्चपादपाः ३२ शिखरैर्घूर्णमानैश्चसीदमानैश्चपादपैः ॥ विधूतै
श्चोच्छ्रितःशृंगैरगमःखगमोभवत् ३३चलत्प्रस्रवणैःपार्श्वैर्मेघौघैरेकतांगतैः ॥ विद्यमानाश्मनिचयश्चचालधरणीधरः ३४ ॥ 

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ इमंगोवर्धनसंज्ञं ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ अगमःपर्वतोअचलोपिखगमःखगइवाभूदित्यर्थः ॥ ३३ ॥ ३४ ॥

१ गिरिरिवापर इतिपाठान्तरम् ।

॥ ३५ ॥ सशैलोमेघैर्मिश्रीकृतःबर्हवान्मयूरः सइवभातीतियोजना ॥ ३६ ॥ आप्लुतः खउत्पतितःपक्षैर्मेघरूपैरित्यर्थः ॥ ३७ ॥ रीतीःगैरिकादिधातून्निर्वर्त्तयामासप्रावर्तयत् ॥ ३८ ॥ ३९ ॥ पुष्पंपुष्पजातिः ॥ ४० ॥ ४१ ॥ ४२ ॥ रेसुःशब्दंचक्रुः गर्गराःमंथनस्थाल्यः ॥४३ ॥ ४४ ॥ वृष्टस्यवर्षेणक्लिन्नस्य ॥ ४५ ॥ ४६ ॥ जल

नमेघानांप्रवृष्टानांनशैलस्याश्मवर्षिणः ॥ विविदुस्तेजनारूपंवायोस्तस्यचगर्जतः ३५ मेघैस्सशैलसंस्थानैर्नीलैःप्रस्रवणार्पितैः ॥ मिश्रीकृतइवाभातिगिरिरुद्दामबर्हवान् ३६ आप्लुतोयंगिरिःपक्षैरितिविद्याधरोरगाः ॥ गंधर्वाप्सरसश्चैववाचोमुंचंतिसर्वशः ३७ सहस्रतलविन्यस्तोमुक्तमूलःक्षितेस्तलात् ॥ रीतीर्निर्वर्तयामासकांचनांजनराजतीः ३८ कानिचिच्छिथिलानीवसंछिन्नार्द्धानिकानिचित् ॥ गिरेर्भग्नप्रवृष्टानितस्यशृंगाणिचाभवन् ३९ गिरिणाकंपमानेनकंपितानांतुशाखिनाम् ॥ पुष्पमुच्चावचंभूमौव्यशीर्यतसमंततः ४० निस्सृताःपृथुमूर्द्धानस्स्वस्तिकार्द्धविभूषिताः ॥ द्विजिह्वपतयःक्रुद्धाःखेचराःखेसमंततः ४१ आर्तिंजग्मुःखगगणावर्षेणचभयेनच ॥ उत्पत्योत्पत्यगगनात्पुनःपेतुरवाङ्मुखाः ४२ रेसुरारोपितास्सिंहास्सजलाइवतोयदाः ॥ गर्गराइवमथ्यंतोनेदुश्शार्दूलपुंगवाः ४३ विषमैश्चसमीभूतैस्समैश्चात्यंतदुर्गमैः ॥ व्यावृत्तदेहस्सगिरिरन्यएवोपलक्ष्यते ४४ अतिवृष्टस्यतैर्मेघैस्तस्यरूपंबभूवह ॥ स्तंभितस्येवरुद्रेणात्रिपुरस्यविहायसि ४५ बाहुदंडेनकृष्णस्यविधृतंसुमहत्तदा ॥ नीलाभ्रपटलच्छन्नंतद्गिरिच्छत्रमाबभौ ४६ स्वप्नायमानोजलदैर्निमीलितगुहामुखः ॥ बाहूपधानेकृष्णस्यप्रसुप्तइवखेगिरिः ४७ निर्विहंगरुतैर्वृक्षैर्निर्मयूररुतैर्वनैः ॥ निरालंबइवाभातिगिरिस्स्वशिखरैर्वृतः ४८ पर्यस्तैर्घूर्णमानैश्चप्रचलद्भिश्चसानुभिः ॥ सज्वराणीवशैलस्यवनानिशिखराणिच ४९ उत्तमांगगतास्तस्यमेघाःपवनबाहनाः ॥ त्वर्यमाणामहेंद्रेणतोयंमुमुचुरक्षयम् ५० सलंबमानःकृष्णस्यभुजाग्रेसघनोगिरिः ॥ चक्रारूढइवाभातिदेशोनृपतिपीडितः ५१ समेघनिचयस्तस्थौगिरिंतंपरिवार्यह ॥ पुरंपुरस्कृत्ययथास्फीतोजनपदोमहान् ५२ निवेश्यतंकरेशैलंतोलयित्वाचसस्मितम् ॥ प्रोवाचगोप्तागोपानांप्रजापतिरिवस्थितः ५३ एतद्देवैरसंभाव्यंदिव्येनविधिनामया ॥ कृतंगिरिगृहंगोपानिर्वातंशरणंगवाम् ५४

दैः प्रावरणभूतैःपक्षेताड्यप्रदैःश्रमैःगुहामुखानिकंदराद्वाराणि पक्षेहृदयगुहायामुखानिइंद्रियाणि ॥४७॥ वनैः वृतः शिखरैरितिसंबंधः ॥ ४८ ॥ ४९ ॥ ५० ॥ चक्रारूढः परचक्रवशात्रथशकटाद्यारुह्यपलायमानोयथालंबतेतद्वदित्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ दिव्येनविधिनाअलौकिकेनप्रभावेण ॥ ५४ ॥

॥ ५५ ॥ महतीपर्वतत्त्वुग्रादपिपुष्कलकुक्षिः ॥ ५६ ॥ ५७ ॥ ५८ ॥ प्रदरंगर्तमुखेगह्वरोदरंविशालगर्भम् ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥
स्थावरात्मवान् अकंपइत्यर्थः ॥ ६६ ॥ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांअष्टादशोऽध्यायः ॥ १८ ॥ छ ॥ एकोनविंशेथाध्यायेसुरभिव्रह्मचोदितः ॥ इंद्रोभिषिक्त

क्षिप्रंविशंतुयूथानिगवामिहहिशांतये ॥ निर्वातेपुचदेशेषुनिवसंतुयथासुखम् ॥ यथाश्रेष्ठंयथायूथंयथासारंयथासुखम् ५५ विभज्यता
मयंदेशःकृतंवर्षनिवारणम् ॥ शैलोत्पाटनभूरेषामहतीनिर्मितामया ५६ पंचक्रोशप्रमाणेनक्रोशैकंविस्तरोमहान् ॥ त्रैलोक्यमप्युत्स
हतेरक्षितुंकिंपुनर्व्रजम् ५७ ततःकिलकिलाशब्दोगवांहंभारवैस्सह ॥ गोपानांतुमुलोजज्ञेमेघनादश्चबाह्यतः ५८ प्राविशंततत्तोगावो
गोपैर्यूथप्रकल्पिताः ॥ तस्यशैलस्यविपुलंप्रदरंगह्वरोदरम् ५९ कृष्णोपिमूलेशैलस्यशैलस्तंभइवोच्छ्रितः ॥ दधारैकेनहस्तेनशैलं
प्रियमिवातिथिम् ६० ततोव्रजस्यभांडानियुक्तानिशकटानिच ॥ विविशुर्वर्षभीतानितद्गृहंगिरिनिर्मितम् ६१ अतिदैवंतुकृष्ण
स्यदृष्ट्वातत्कर्मवज्रभृत् ॥ मिथ्याप्रतिज्ञोजलदान्वारयामासवैविभुः ६२ सप्तरात्रेतुनिर्वृत्तेधरण्यांविगतोत्सवः ॥ जगामसंवृतोमेघै
र्वृत्रहास्वर्गमुत्तमम् ६३ निर्वृत्तेसप्तरात्रेतुनिष्प्रयत्नेशतक्रतौ ॥ गताभ्रेविमलेव्योम्निदिवसेदीप्तभास्करे ६४ गावस्तेनैवमार्गेणप
रिजग्मुर्यथागतम् ॥ स्वंचस्थानंततोघोषःप्रत्ययात्पुनरेवसः ६५ कृष्णोपितंगिरिश्रेष्ठंस्वस्थानेस्थावरात्मवान् ॥ प्रीतोनिवेशयामा
सशिवायवरदोविभुः ॥ ६६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिगोवर्द्धनोद्धरणंनामअष्टादशोऽध्यायः ॥ १८ ॥ छ ॥
॥ वैशंपायनउवाच ॥ धृतंगोवर्द्धनंदृष्ट्वापरित्रातंचगोकुलम् ॥ कृष्णस्यदर्शनंशक्रोरोचयामासविस्मितः १ सनिर्जलांबुदाकारंमत्तंमद
जलोक्षितम् ॥ आरुह्यैरावतंनागमाजगाममहीतलम् २ सददर्शोपविष्टंवैगोवर्द्धनशिलातले ॥ कृष्णमक्लिष्टकर्माणंपुरुहूतःपुरंदरः ३
तंवीक्ष्यबालंमहतातेजसादीप्तमव्ययम् ॥ गोपवेषधरंविष्णुंप्रीतिंलेभेपुरंदरः ४ तंसांबुजदलश्यामंकृष्णंश्रीवत्सलक्षणम् ॥ पर्याप्तन
यनश्शक्रस्सर्वैर्नेत्रैरुदैक्षत ५ दृष्ट्वाचैनंश्रियाजुष्टंमर्त्यलोकेमरोपमम् ॥ सूपविष्टंशिलापृष्ठेशक्रस्सव्रीडितोभवत् ६ तस्योपविष्टस्य
मुखंपक्षाभ्यांपक्षिपुंगवः ॥ अंतर्द्धानंगतश्छायांचकारोरगभोजनः ७ तंविविक्तेवनगतंलोकवृत्तांततत्परम् ॥ उपतस्थेगजंहित्वाकृष्णं
बलनिषूदनः ८ ससमीपगतस्तस्यदिव्यस्त्रगनुलेपनः ॥ रराजदेवराजोवैवज्रपूर्णकरःप्रभुः ९

वान्कृष्णंगवाभैंद्रेनिरूप्यते ॥ १ ॥ धृतमिति ॥ १॥ २ ॥ ३ ॥ ४ ॥ पर्याप्तनयनःसंप्राप्तनेत्रफलः ॥ ५ ॥ ६ ॥ ७ ॥ लोकवृत्तांततत्परंलोकव्यवहारतत्परं ॥ ८ ॥ ९ ॥

॥ १० ॥ पंचभिःस्तबकैर्महागुच्छैर्लंबतेइतितेनपंचस्तवकलंबेन ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ स्वायंभुवेनयोगेनहैरण्यगर्भ्याधारणयातस्यांहिक्रियमाणायांगुरुतरोपिलघु
र्भवतिकृष्णधृतगोवर्धनवत्‌विपुलतरोप्यल्पोभवत्यगस्त्यपीतसमुद्रवत् ॥१५॥ गवांकोपेनेतिशेषः ॥ १६॥ १७॥ रोषितःव्रजपक्षपातेनमयिक्रुद्धःसन्पूर्णत्वंस्वस्याच्छादयसीत्य
र्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ पुंगवःमहोक्षः ॥ २२ ॥ प्रकरणंप्रकर्षेणरचनंपाठांतरेप्रवहणंसृष्टिप्रवाहः ॥ २३ ॥ २४ ॥ स्थाणुभ्यःपर्वतेभ्यः ॥ २५ ॥ गोलोक

किरीटेनार्कतुल्येनविद्युदुद्योतकारिणा ॥ कुंडलाभ्यांसदिव्याभ्यांसततंशोभिताननः १० पंचस्तबकलंबेनहारेणोरसिभूषितः॥ सहस्र
पत्रकांतेनदेहभूषणकारिणा ॥ ईक्षमाणःसहस्रेणनेत्राणांकामरूपिणाम् ११ त्रिदशाज्ञापनार्थेनमेघनिर्घोषकारिणा ॥ अथदिव्येनम
धुरंव्याजहारस्वरेणतम् १२ कृष्णकृष्णमहाबाहोज्ञातीनांनंदिवर्द्धन ॥ अतिदिव्यंकृतंकर्मत्वयाप्रीतिमतागवाम् १३ मयोत्सृष्टेषुमे
घेषुयुगांतावर्तकारिषु ॥ यत्त्वयारक्षितागावस्तेनास्मिपरितोषितः १४ स्वायंभुवेनयोगेनयश्चायंपर्वतोत्तमः ॥ धृतोवेश्मवदाकाशेको
ह्येतेननविस्मयेत् १५ प्रतिषिद्धेममहेमयेयंरुषितेनवै ॥ अतिवृष्टिःकृताकृष्णगवांवैसप्तरात्रिकी १६ सात्वयाप्रतिषिद्धेयंमेघवृष्टिर्दु
रासदा ॥ देवैस्सदानवगणैर्दुर्निवार्यामयिस्थिते १७ अहोमेसुप्रियंकृष्णयत्त्वंमानुषदेहवान् ॥ समग्रंवैष्णवंतेजोविनिगूहसिरोषि
तः १८ साधितंदेवतानांहिमन्येहंकार्यमव्ययम् ॥ त्वयिमानुष्यमापन्नेयुक्तेचैवस्वतेजसा १९ सेत्स्यतेसर्वकार्यार्थोनकिंचित्परि
हास्यते ॥ देवानांयद्भवान्नेतासर्वकार्यपुरोगमः २० एकस्त्वमसिदेवानांलोकानांचसनातनः ॥ द्वितीयंनात्रपश्यामियस्तेपांचधुरंवहे
त् २१ यथाहिपुंगवःश्रेष्ठोह्यग्रेधुरिनियाज्यते ॥ एवंत्वमसिदेवानांमग्नानांद्विजवाहन २२ त्वच्छरीरगतंकृष्णजगत्प्रकरणंत्विदम् ॥
ब्रह्मणासाधुनिर्दिष्टंधातुभ्यइवकांचनम् २३ स्वयंस्वयंभूर्भगवान्बुद्ध्याथवयसापिवा ॥ नत्वानुगंतुंशक्नोतिपंगुर्द्रुतगतिंयथा २४
स्थाणुभ्योहिमवान्श्रेष्ठोह्रदानांवरुणालयः ॥ गरुत्मान्पक्षिणांश्रेष्ठोदेवानांचभवान्वरः २५ अपामधस्ताल्लोकोवैतस्योपरिमहीधराः॥
नगानामुपरिष्टाद्भूःपृथिव्युपरिमानुषाः २६ मनुष्यलोकादूर्ध्वंतुखगानांगतिरुच्यते ॥ आकाशस्योपरिरविर्द्वारंस्वर्गस्यभानुमान्
२७ देवलोकःपरस्तस्माद्विमानगमनोमहान् ॥ यत्राहंकृष्णदेवानामैंद्रेविनिहितःपदे २८

स्यश्रेष्ठत्वंवक्तुंपीठिकामाह अपामिति ॥ अपांलोकोधस्तात् तस्योपर्यप्सुप्लवंतोमहीधराः पर्वताः समुद्रेमग्नान्युपरिदंडानिलोहलांगलानिनात्रमिवमहींधारयंतःअतएवनगाना
मुपरिष्टाद्भूःस्मृताभुवश्चोपरिनगादृश्यंते ॥ २६ ॥ २७ ॥ २८ ॥

सोमगतिस्तावतीत्यर्थः कर्मफलंतावदेवेत्यर्थः ॥ २९ ॥ गोलोकस्तुगोपालोपासनागम्यस्ततोप्युपरीत्याह तस्येति ॥ ३० ॥ तत्रापिगोलोकेपि नविघ्नःकुतोलभेमेत्यर्थः ३१ ॥ ३२ ॥ ३३ ॥ गवामेवेत्यन्येषांतपआदिनापिदुष्प्रापइत्यर्थः ॥ ३४ ॥ सएवगोलोकस्त्वयासहभूमावागतःसन्सीदमानावस्थायांत्वयैवत्रातइत्यर्थः तथाचमंत्रवर्णः तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाअयासः अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरितातानिवांयुवयोःरामकृष्णयोर्वास्तूनिरम्यस्थानानिगमध्यैगंतुंउश्मसिउष्मः कामयामहे

स्वर्गादूर्ध्वंब्रह्मलोकोब्रह्मर्षिगणसेवितः ॥ तत्रसोमगतिश्चैवज्योतिषांचमहात्मनाम् २९ तस्योपरिगवांलोकस्साध्यास्तंपालयंति हि ॥ सहिसर्वगतःकृष्णमहाकाशगतोमहान् ३० उपर्युपरितत्रापिगतिस्तवतपोमयी ॥ यांनविद्मोवयंसर्वेपृच्छंतोपिपितामहम् ३१ लोकस्त्वधोदुष्कृतिनांनागलोकस्तुदारुणः ॥ पृथिवीकर्मशीलानांक्षेत्रंसर्वस्यकर्मणः ३२ खमस्थिराणांविषयोवायुनातुल्यवृत्तिनाम् ॥ गतिश्शमदमाढ्यानांस्वर्गस्सुकृतकर्मणाम् ३३ ब्राह्मेतपसियुक्तानांब्रह्मलोकःपरागतिः ॥ गवामेवतुगोलोकोदुरारोहाहिसागतिः ३४ स तुलोकस्त्वयाकृष्णसीदमानःकृतात्मना ॥ धृतोधृतिमतावीरनिघ्नतोपद्रवान्गवाम् ३५ तदहंसमनुप्राप्तोगवांवाक्येनचोदितः ॥ ब्रह्मणश्चमहाभागगौरवात्तवचागतः ३६ अहंभूतपतिःकृष्णदेवराजःपुरंदरः ॥ अदितेर्गर्भपर्यायेपूर्वजस्तेपुराकृतः ३७ स्वतेजस्तेजसा चैवयत्तेदर्शितवानहम् ॥ मेघरूपेणतत्सर्वंक्षंतुमर्हसिमेविभो ३८ एवंक्षांतमनाःकृष्णस्स्वेनसौम्येनतेजसा ॥ ब्रह्मणश्शृणुमेवाक्यंगवांचगजविक्रम ३९ आहत्वांभगवान्ब्रह्मागावश्चाकाशगादिवि ॥ कर्मभिस्तोषितादिव्यैस्तवसंरक्षणादिभिः ४० भवतारक्षितागावोगोलोकश्चमहानयम् ॥ यद्वयंपुंगवैस्सार्द्धंवर्द्धामःप्रसवैस्तथा ४१ कर्षुकान्पुंगवैर्वाह्यैर्मेध्येनहविषासुरान् ॥ श्रियंशकृत्प्रवृत्तेनतर्पयिष्यामकामगाः ४२ तदस्माकंगुरुस्त्वंहित्राणदश्चमहाबलः ॥ अद्यप्रभृतिनोराजात्वमिंद्रोवैभवप्रभो ४३ तस्मात्त्वंकांचनैःपूर्णैर्दिव्यस्यपयसोघटैः ॥ एभिरद्याभिषिंचस्वमयाहस्तावनामितैः ४४ अहंकिलेंद्रोदेवानांत्वंगवामिंद्रतांगतः ॥ गोविंदइतिलोकास्त्वांस्तोष्यंतिभुविशाश्वतम् ४५

नतुतत्रगंतुंप्रभवामः यत्रयेषुवास्तुपुभूरिशृंगाः महाशृङ्गवत्योगावः अयासः संचरंति अत्रभूलोकेअहनिश्चितंतत्गोलोकाख्यंपरमंपदंभूरिअत्यंतंमुख्यादपिविशिष्टं अवभाति अत्यंतंशोभते वृष्णः आनंदवर्षुकस्यउरुगायस्यमहाकीर्तेरित्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ मेमुखादितिशेषः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अभिषिंचस्व आत्मानमितिशेषः अभिषेकादिकंभगवानंगीचकारेत्याहमंत्रः ऋषभंमासमानानांसपत्नानांविषासहिं हंतारंशत्रूणांकृधिविराजंगोपतिंगवामिति विषासहिंसहनसमर्थम् ४४ ॥४५

ममेति इंद्रादुपरीतिविग्रहेहिरिलोपेनउपेंद्रेतिनामनिष्पन्नमित्यर्थः ॥ ४६ ॥ ४७ ॥ वर्षार्द्धेआश्विनशुक्लप्रतिपदिध्वजः व्रतसमाप्तिचिन्हम् ॥ ४८ ॥ ४९ ॥ आशांदक्षिणां दिशम् ॥ ५० ॥ खगेचातके प्लवेषुनदीतरणसाधनेषुविगतपूरासुनदीष्वित्यर्थः ॥ ५१ ॥ ५२ ॥ निर्यात्यविरोच्य ॥ ५३ ॥ शस्त्रसंकाशेकृष्णभास्वरे वानिर्मले ॥ ५४

ममोपरियथेंद्रस्त्वंस्थापितोगोभिरीश्वरः ॥ उपेंद्रइतिकृष्णत्वांगास्यंतिदिविदेवताः ४६ येचेमेवार्षिकामासाश्चत्वारोविहितामम ॥ एषामर्द्धंप्रयच्छामिशरत्कालंतुपश्चिमम् ४७ अद्यप्रभृतिमासौद्वौज्ञास्यंतिमममानवाः ॥ वर्षार्द्धेचध्वजोमह्यंततःपूजामवाप्स्यसि ॥ ममांबुप्रभवंदर्पंतदात्यक्ष्यंतिबर्हिणः ४८ अल्पवाचोगतमदायेचान्येमेघनादिनः ॥ शांतिंसर्वेगमिष्यंतिममकालविचारिणः ४९ त्रिशंकुगस्त्यचरितामाशांचप्रचरिष्यति ॥ सहस्त्ररश्मिरादित्यस्तापयन्स्वेनतेजसा ५० ततश्शरदियुक्तायांमौनकामेषुबर्हिषु ॥ याचमानेखगेतोयंविप्लुतेपुप्लवेषुच ५१ हंससारसपूर्णेषुनदीनांपुलिनेषुच ॥ मत्तक्रौंचप्रणादेषुप्रमत्तवृषभेषुच ५२ गोषुचैवप्रहृष्टासुक्षरंतीषुपयोबहु ॥ निवृत्तेषुचमेघेषुनिर्यात्यजगतोजलम् ५३ आकाशेशस्त्रसंकाशेहंसेषुचचरत्सुच ॥ जातपद्मेषुतोयेषुवापीषुचसरस्सुच ५४ तडागेषुचकांतेषुतोयेषुविमलेषुच ॥ कलमावनताग्रासुकृष्णकेदारपंक्तिषु ५५ मध्यस्थंसलिलारंभंकुर्वंतीषुनदीषुच ॥ सुसस्यायांचसीमायांमनोहर्यांमुनेरपि ५६ पृथिव्यांपृथुराष्ट्रायांरम्यायांवर्षसंक्षये ॥ श्रीमत्सुपंक्तिमार्गेषुफलवत्सुतृणेषुच ॥ इक्षुमत्सुचदेशेषुप्रवृत्तेषुमखेषुच ५७ ततःप्रवर्त्स्यंतेपुण्याशरत्सुप्तोत्थितेत्वयि ॥ लोकेस्मिन्कृष्णनिखिलेयथैवत्रिदिवेतथा ५८ नरास्त्वांचैवमांचैवध्वजाकारासुयष्टिषु ॥ महेद्रंचाप्युपेंद्रंचमहयंतिमहीतले ५९ येचावयोःस्थिरेवृत्तेमहेंद्रोपेंद्रसंज्ञिते ॥ मानवाःप्रणमिष्यंतितेषांनास्त्यनयागमः ६० ततश्शक्रस्तुतान्गृह्यघटान्दिव्यपयोधरान् ॥ अभिषेकेणगोविंदंयोजयामासयोगवित् ६१ दृष्ट्वातमभिषिक्तंतुगावस्तास्सहयूथपैः ॥ स्तनैःप्रस्त्रवयुक्तैश्चसिषिचुःकृष्णमव्ययम् ६२ मेघाश्चदिवियुक्ताभिस्सामृताभिस्समंततः ॥ सिषिचुस्तोयधाराभिरभिषिच्यतमव्ययम् ६३ वनस्पतीनांसर्वेषांसुस्त्रावेंदुनिभंपयः ॥ ववर्षुःपुष्पवर्षंचनेदुस्तूर्याणिचांबरे ६४ अस्तुवन्मुनयस्सर्वैवाग्भिर्मंत्रपरायणाः ॥ एकार्णवेविविक्तंचदधारवसुधावपुः ६५

कलमानांशालिकणिशानां अवनतानिअग्राणियासुतासु ॥ ५५ ॥ ५६ ॥ मखेषु आग्रयणवाजपेयादिषु ॥ ५७ ॥ ५८ ॥ महयंतिपूजयंति ॥ ५९ ॥ स्थिरेशाश्वतेवृत्तेमहाख्येआचारे ॥ ६० ॥ दिव्यंपयोमंदाकिनीजलंतस्यधरान् ॥ ६१ ॥ ताःगावःस्वर्गस्थाः ॥ ६२ ॥ ६३ ववर्षुःदेवाः नेदुःस्वयमेव ॥ ६४ ॥ एकार्णवाद्विविक्तंपृथग्भूतंक्षीरोदमध्येक्षीरोदतुल्यापार्थिव्यभवादित्यर्थः ६५

॥ ६६॥ ईतयोऽतिवृष्ट्याद्याः ॥ ६७ ॥ गात्ररुहैर्वृक्षादिभिः ॥ ६८ ॥ ६९ ॥७० ॥ नियोगःकृत्योपदेशः ॥ ७१ ॥ प्रसाध्यतांवध्यतां ॥ ७२ ॥ ममांशोर्जुनः ॥ ७३ ॥

प्रसादंसागराजग्मुर्ववुर्वाताजगद्धिताः॥ मार्गस्थोपिबभौभानुश्चंद्रोनक्षत्रसंयुतः६६ईतयःप्रशमंजग्मुर्निर्वैररचनानृपाः ॥ प्रवालपत्रशब
२४ लाःपुष्पवंतश्चपादपाः ६७ मदंप्रसुस्रुवुर्नागायातास्तोषंवनेमृगाः ॥ अलंकृतागात्ररुहैर्धातुभिर्भांतिपर्वताः ६८ देवलोकोपमोलोक अ०१९
स्तृप्तोमृतरसैरिव ॥ आसीत्कृष्णाभिषेकोहिदिव्यस्वर्गरसोक्षितः ६९ अभिषिक्तंतुतंगोभिश्शक्रोगोविंदमव्ययम् ॥ दिव्यमाल्यांबर
धरंदेवदेवोब्रवीदिदम् ७० एषतेप्रथमःकृष्णनियोगोगोषुयःकृतः ॥ श्रूयतामपरंकृष्णममागमनकारणम् ७१ क्षिप्रंप्रसाध्यतांकंसः
केशीचतुरगाधमः ॥ अरिष्टश्चमदाविष्टोराजराज्यंततःकुरु ७२ पितृष्वसरिजातस्तेममांशोहमिवस्थितः ॥ सतेरक्ष्यश्चमान्यश्चसख्ये
चविनियुज्यताम् ७३ त्वयाह्यनुगृहीतस्सतवद्वृत्तानुवर्तकः ॥ त्वद्वशेवर्त्तमानश्चप्राप्स्यतेविपुलंयशः ७४ भारतस्यचवंशस्यसवरिष्ठो
धनुर्धरः ॥ भविष्यत्यनुरूपश्चत्वद्दतेनचरंस्यते ७५ भारतंत्वयिचायत्तंतस्मिंश्चपुरुषोत्तमे ॥ उभाभ्यामपिसंयोगेयास्यंतिनिधनं
नृपाः ७६ प्रतिज्ञातंमयाकृष्णऋषिमध्येसुरेषुच ॥ ममापुत्रोर्जुनोनामसृष्टःकुंत्यांकुलोद्वहः ७७ सोऽस्त्राणांपारतत्त्वज्ञश्श्रेष्ठश्चा
पविकर्षणे ॥ तंप्रवेक्ष्यंतिवैसर्वेराजानश्शस्त्रयोधिनः ७८ अक्षौहिणीस्तुशूराणांराज्ञांसंग्राममशालिनाम् ॥ सएकःक्षत्रधर्मेणयोजयि
ष्यतिमृत्युना ७९ तस्यास्त्रचरितंमार्गंधनुषोलाघवेनच ॥ नानुयास्यंतिराजानोदेवावात्वांविनाप्रभो ८० सतेबंधुस्सहायश्चसंग्रामे
पुभविष्यति ॥ तस्ययोगोविधातव्यस्त्वयागोविंदमत्कृते ८१ द्रष्टव्यश्चयथाहंवैत्वयामान्यश्चनित्यशः ॥ ज्ञातात्वमेवलोकानामर्जुन
स्यचनित्यशः ८२ त्वयाचनित्यंसंरक्ष्यआहवेषुमहत्सुसः ॥ रक्षितस्यत्वयातस्यनमृत्युःप्रभविष्यति ८३ अर्जुनंविद्धिमांकृष्ण
मांचैवात्मानमात्मना ॥ आत्मातेहंयथाशश्वत्तथैवतवसोर्जुनः ८४ त्वयालोकानिमाञ्जित्वाबलेर्हस्तात्त्रिभिःक्रमैः ॥ देवतानांकृतो
राजापुराज्येष्ठक्रमादहम् ८५ त्वांचसत्यमयंज्ञात्वासत्येष्टंसत्यविक्रमम् ॥ सत्येनोपेत्यदेवावैयोजयंतिरिपुक्षये ८६ सोर्जुनो
नाममेपुत्रःपितुस्तेभगिनीसुतः ॥ इहसौहार्दमायातुभूत्वासहचरःपुरा ८७ तस्यतेयुध्यतःकृष्णस्वस्थानेपिगृहेपिवा ॥ वोढव्यापुंग २४
वेनेवधूस्सदारणमूर्द्धनि ८८

॥ ७४ ॥ ७५ ॥ भारतंभरतानांयुद्धम् ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ योगोध्यात्मविद्या विधातव्यःअज्ञातोज्ञापनीयः॥ ८१ ॥ ८२॥ ८३॥८४ ॥८५॥ ८६॥ ८७॥ ८८

॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ कानीनंकन्यायांभवम् ॥ ९७ ॥ ९८ ॥ ९९ ॥ निर्यातयिष्यामिप्रत्यर्पयिष्यामि ॥ १०० ॥ यंत्रितः
बद्धः ॥ १०१ ॥ १०२ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ अस्मिन्विंशेत्वध्यायेगोपैःकृष्णप्रशंसनं ॥ गोपीसंक्रीडनंवाथक

कंसेविनिहतेकृष्णत्वयाभ्राव्यर्थदर्शिना ॥ अभितस्तन्महद्युद्धंभविष्यतिमहीक्षिताम् ८९ तत्रतेषांनृवीराणामतिमानुषकर्मणाम् ॥ वि
जयस्यार्जुनोभोक्तायशसात्वंचयोक्ष्यसे ९० एतन्मेकृष्णकार्त्स्न्येनकर्तुमर्हसिभाषितम् ॥ यद्यहंतेसुराश्रेष्ठसत्यंचप्रियमच्युत ९१ श
क्रस्यवचनंश्रुत्वाकृष्णोगोविंदतांगतः ॥ प्रीतेनमनसायुक्तःप्रतिवाक्यंजगादह ९२ प्रीतोस्मिदर्शनादेवतवशक्रशचीपते ॥ यत्त्वया
भिहितंचेदंनकिंचित्परिहास्यते ९३ जानामिभवतोभावंजानाम्यर्जुनसंभवम् ॥ जानेपितृष्वसारंचपांडोर्दत्तांमहात्मनः ९४ युधिष्ठिरं
चजानामिकुमारंधर्मनिर्मितम् ॥ भीमसेनंचजानामिवायोःसंतानजंसुतम् ९५ अश्विभ्यांसाधुजानामिसृष्टंपुत्रद्वयंशुभम् ॥ नकुलंस
हदेवंचमाद्रीकुक्षिगतावुभौ ९६ कानीनंचापिजानामिसवितुःप्रथमंसुतम् ॥ पितृष्वसरिकर्णंवैप्रसूतंसूततांगतम् ९७ धार्तराष्ट्राश्चमे
सर्वेविदितायुद्धकांक्षिणः ॥ पांडोरुपरमंचैवशापाशनिनिपातजम् ९८ तद्गच्छत्रिदिवंशक्रसुखायत्रिदिवौकसाम् ॥ नार्जुनस्यरिपुःक
श्चिन्ममाग्रेप्रभविष्यति ९९ अर्जुनार्थेचतान्सर्वान्पांडवानक्षतान्युधि ॥ कुंत्यानिर्यातयिष्यामिनिवृत्तेभारतेमृधे १०० यच्चवक्ष्य
तिमांशक्रतनूजस्तवसोर्जुनः ॥ भृत्यवत्तत्करिष्यामितवस्नेहेनयंत्रितः १ सत्यसंधस्यतच्छ्रुत्वाप्रियंप्रीतस्यभाषितम् ॥ कृष्णस्यसा
क्षात्त्रिदिवंजगामत्रिदशेश्वरः ॥ २ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिगोविंदाभिषेकोनामएकोनविंशोऽध्यायः ॥ १९ ॥
॥ वैशंपायनउवाच ॥ गतेशक्रेततःकृष्णःपूज्यमानोव्रजालयैः ॥ गोवर्द्धनधरःश्रीमान्विवेशव्रजमेवह १ तस्यवृद्धाभिनंदंतिज्ञातयश्च
सहोषिताः ॥ धन्याःस्मोनुगृहीताःस्मस्त्वद्वृत्तेननयेनच २ गावोवर्षभयात्तीर्णावयंतीर्णामहाभयात् ॥ तवप्रसादाद्गोविंददेवतुल्यपराक्रम
३ अमानुषाणिकर्माणितवपश्यामगोपते ॥ धारणेनास्यशैलस्यविद्मस्त्वांकृष्णदैवतम् ४ कस्त्वंभवसिरुद्राणांमरुतांचमहाबलः ॥ वसूनां
वाकिमर्थंचवसुदेवःपितातव ५ बलंचबाल्येक्रीडाचजन्मचास्मासुगर्हितम् ॥ कृष्णदिव्याचतेचेष्टाशंकितानिमनांसिनः ६ किमर्थंगोप
वेषेणरमसेस्मासुगर्हितम् ॥ लोकपालोपमश्चैवगास्त्वंकिंपरिरक्षसि ७

तंरःत्रावुदीर्यते ॥ १ ॥ गतेव्रजालयैर्गोपैःसह ॥ १ ॥ वृद्धाअभीतिच्छेदःसंधिरार्षः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

॥ ८॥ ९ ॥॥१० ॥१ ॥ १२ ॥ १३ ॥ १४ ॥ यौवनंकांतिमत्त्वम् ॥ १५॥ ॥ १६॥ १७ ॥ संकाल्यस्ववशेकृत्वाकैशोरंवयोदशवर्षावधितस्यकंउपरिभागंएकादशमारभ्येत्यर्थः
प्रागुपनयनात् कामचाराद्यनुज्ञास्तीतिवाक्यंमानयन् ॥ १८॥ १९ ॥हरितालस्यआर्द्रपंकः ॥ २० ॥ तद्व्रजंतासांकदंबम् ॥ २१ ॥ २२ ॥ २३॥ २४ ॥ पंक्तीकृताःमंडलाका
रंपंक्तिरूपेणस्थिताः द्वंद्वशोद्वाभ्यांप्रदेशाभ्यांवर्ततेगोपःकृष्णोयासांताःद्वंद्वशोगोपास्ताश्चताः कन्यकाश्चेत्यर्थः मनोरमंमंडलमध्यस्थंचरमयंतीत्यर्थः यथोक्तं अंगनामं

देवोवादानवोवात्वंयक्षोगंधर्वएववा ॥ अस्माकंबांधवोजातोयोसिसोसिनमोस्तुते ८ केनचिद्यदिकार्येणवससीहयदृच्छया ॥ वयंतवा
नुगास्सर्वेभवंतंशरणंगताः ९ ॥ वैशंपायनउवाच ॥ गोपानांवचनंश्रुत्वाकृष्णःपद्मदलेक्षणः ॥ प्रत्युवाचस्मितंकृत्वाज्ञातीन्सर्वान्स
मागतान् १० मन्यंतेमांयथासर्वेभवंतोभीमविक्रमम् ॥ तथाहंनावमंतव्यस्स्वजातीयोस्मिबांधवः ११ यदित्ववश्यंश्रोतव्यंकालं
संप्रतिपाल्यताम् ॥ ततोभवंतःश्रोष्यंतिमांचद्रक्ष्यंतितत्त्वतः १२ यद्यहंभवतांश्लाघ्योबांधवोदेवसप्रभः ॥ परिज्ञानेनकिंकार्यंयद्येषोनु
ग्रहोमम १३ एवमुक्तास्तुतेगोपावसुदेवसुतेनवै ॥ बद्धमौनादिशस्सर्वेभेजिरेपिहिताननाः १४ कृष्णस्तुयौवनंदृष्ट्वानिशिचंद्रमसो
वनम् ॥ शारदींचनिशांरम्यांमनश्चक्रेरतिंप्रति १५ सकरीषांगरागासुव्रजरथ्यासुवीर्यवान् ॥ वृषाणांजातदर्पाणांयुद्धानिसमयो
जयत् १६ गोपालांश्चबलोदग्रान्योधयामासवीर्यवान् ॥ वनेसवीरोगाश्चैवजग्राहग्राहवद्विभुः १७ युवतीर्गोपकन्याश्चरात्रौसंकाल्य
कालवित् ॥ कैशोरकंमानयन्वैसहताभिर्मुमोदह १८ तास्तस्यवदनंकांतंकांतागोपस्त्रियोनिशि ॥ पिबंतिनयनाक्षेपैर्गांगतंशशि
नंयथा १९ हरितालार्द्रपीतेनसकौशेयेनवाससा ॥ वसानोभद्रवसनंकृष्णःकांततरोऽभवत् २० सबद्धांगदनिर्व्यूहश्चित्रयावनमा
लया ॥ शोभमानोहिगोविंदश्शोभयामासतद्व्रजम् २१ नामदामोदरेत्येवंगोपकन्यास्तदाब्रुवन् ॥ विचित्रंचरितंघोषेदृष्ट्वातत्त
स्यभास्वतः २२ तास्तंपयोधरोत्तुंगैरुरोभिस्समपीडयन् ॥ भ्रामिताक्षैश्चवदनैर्निरीक्षंतेवरांगनाः २३ तावार्यमाणापतिभि
र्भ्रातृभिर्मातृभिस्तथा ॥ कृष्णंगोपांगनारात्रौमृगयंतेरतिप्रियाः २४ तास्तुपंक्तीकृतास्सर्वारमयंतिमनोरमम् ॥ गायंत्यःकृष्ण
चरितंद्वंद्वशोगोपकन्यकाः २५

गनामंतरेमाधवोमाधवंमाधवंचांतरेचांगनाः ॥ इत्थमाकल्पितेमंडलेमध्यगःसंजगौवेणुनादेवकीनंदनइति ॥ श्रुतिश्च पद्यावस्तेपुरुरूपावपूंष्यूर्ध्वातस्थौत्र्यविंरेरिहाणा ऋतस्य
सद्मविचरामिविद्वान्महद्देवानामसुरत्वमेकमितिपद्यापत्तुंअभिसारिणीभिर्गोपीभिरभिसरितुंयोग्याकृष्णमूर्तिः पुरुरूपाबहुरूपावपूंषिबहूनिवस्तेपरिधत्तेबहुधात्वंगतेत्यर्थः ॥

२५

तथाप्यन्याऊर्ध्वागोपीसंपर्कंविनातस्थौस्थितामध्येइतिशेषःकीदृशीग्यर्बि त्रीन्देशान्पार्श्वद्वयंपुरस्ताच्च अवतिप्रकाशतइतिग्यविः त्रेधाभूतांदृष्टिंरेरिहाणागिलंती उक्तरूपेरासमंड लेहिएकैकस्यागोप्याउभयतः कृष्णद्वयंपुरस्तादेकः सर्वसाधारणांत्रिधाभूतामपिदृष्टिंप्रदेशत्रयस्थः कात्स्न्र्येनगिलतिततोन्यत्रनापैतीत्यर्थः सामूर्तिंऋतस्यधर्मस्यसद्मभूतातामनु चित्यविचरामित्वद्वियुक्तासतीविद्धीतिकृष्णलीलानुकारात्पुंस्त्वंआरोपयंतीकाप्यवदत् देवानांकृष्णादीनामन्येषांवाकृष्णेनवियोजयतां असुरत्वंनिर्दयत्वंमहत्एकंमुख्यंकस्या श्चिद्रासक्रीडायांतिरोहितेकृष्णेइदंवाक्यम् ॥ २५ ॥ २६ ॥२७ ॥ २८ ॥ भावःकृष्णेप्रेमातिशयःतस्यनिस्पंदेनबाहिराविष्करणेनमधुंव्रजमंडलंगताःप्राप्ताः ॥ २९ ॥ अनुव्र

कृष्णलीलानुकारिण्यःकृष्णप्रणिहितेक्षणाः ॥ कृष्णस्यगतिगामिन्यस्तरुण्यस्तावरांगनाः २६ वनेषुतालहस्ताग्रैःकूजयंत्यस्तथाप राः ॥ चेरुर्वैचरितंतस्यकृष्णस्यव्रजयोषितः २७तास्तस्यनृत्यंगीतंचविलासस्मितवीक्षितम् ॥ मुदिताश्चानुकुर्वंत्यःक्रीडंतिव्रजयोषितः २८भावनिस्पंदमधुरंगायंत्यस्तावरांगनाः ॥ व्रजंगताःसुखंचेरुर्दामोदरपरायणाः २९करीषपांसुदिग्धांग्यस्ताःकृष्णमनुवव्रिरे ॥ रमयं त्योयथानागंसंप्रमत्तंकरेणवः ३० तमन्याभावविकचैर्नेत्रैःप्रहसिताननाः ॥ पिबंत्यतृप्तवनिताःकृष्णकृष्णंमृगेक्षणाः ३१ मुखम स्याब्जसंकाशंतृषितागोपकन्यकाः ॥ रत्यंतरगतारात्रौपिबंतिरसलालसाः ३२ हाहेतिकुर्वतस्तस्यप्रहृष्टास्तावरांगनाः ॥ जगृहु र्निस्सृतांवाणींनाम्नादामोदरेरिताम् ३३ तासांग्रथितसीमंतारतिंनीत्वाकुलीकृताः ॥ चारुविस्रंसिरेकेशाःकुचाग्रेगोपयोषिताम् ३४ एवंसकृष्णोगोपीनांचक्रवालैरलंकृतः ॥ शारदीषुसचंद्रासुनिशासुमुमुदेसुखी ३५ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिहल्लीसकक्रीडनंनामविंशोऽध्यायः ॥ २० ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ प्रदोषार्द्धेकदाचित्तुकृष्णेरतिपरायणे ॥ त्रासयन्समदोगोष्ठम रिष्टःप्रत्यदृश्यत १ निर्वाणांगारमेघाभस्तीक्ष्णशृंगोर्कलोचनः ॥ क्षुरतीक्ष्णाग्रचरणःकालःकालइवापरः २ लेलिहानस्सनिष्पेषंजि ह्वयोष्ठौपुनःपुनः ॥ गर्वितावि‌द्धलांगूलःकठिनस्कंधबंधनः ३

व्रिरेपरितःवृतवत्यः ॥ ३० ॥ ॥ ३१ ॥ ३२ हाहेति हाराधेहाचंद्रमुखिइत्यादिशब्दैःस्वस्यविरहातुरत्वंकुर्वतः आविष्कुर्वतः ॥ ३३ ॥ ३४ ॥ चक्रवालैः मंडलैः हल्लीसकक्रीडनंएकस्यपुंसोबहुभिःस्त्रीभिः क्रीडनंसैवरासक्रीडा गोपीनांमंडलीनृत्यबंधेहल्लीसकंविदुरितिकोशात् तल्लक्षणंतु पृथुंसुवृत्तंमसृणंवितस्तिमात्रोन्नतंकौविनिखन्यशंकुं आक्रम्यपद्भ्यामितरेतरंतुहस्तैर्भ्रमोयंखलुरास गोष्ठी ॥ ३५ ॥ ॥ ॥इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांविंशोऽध्यायः ॥ २० ॥ ७ ॥ अथैकविंशेध्यायेअरिष्टंवृषरूपिणम् ॥ देवशत्रुंदुराधर्षंकृष्णोहनदितीर्यते १ प्रदोषार्द्ध इति १ निर्वाणांगारइंगालःमेघश्चतदुभयाभः कालःकृष्णवर्णःकालयितासंहर्तावेत्यर्थः ॥ २ ॥ गर्वितंदर्पःतेनआविद्धंभ्रामितंलांगूलंयेनसःकठिनंस्कंधबंधनंककुदस्य ॥ ३ ॥

ककुदेति ककुदाघातेनउदग्रंअग्रनिहितंकृतंनिर्माणंमहाप्रासादादिरचनंयेनसतथा ककुदाघातेनताडितेवृक्षप्रासादमूलेसर्वमपितद्भज्यतइत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ गृष्टीः सद्यःप्रसूताःगाःसंप्रचचारजगाम रतेःसेकायेत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ गावःगाःवैवस्वतवशेस्थितःआसन्नमृत्युः ॥ १२ ॥ १३ दृष्टंउत्फलितंलांगूलंलोचनेचयेनसः ॥ १४ ॥



ककुदोदग्रनिर्माणःप्रमाणाद्दुरतिक्रमः ॥ शकृन्मूत्रोपलिप्तांगोगवामुद्वेजनोभृशम् ४ महाकटिःस्थूलमुखोदृढजानुर्महोदरः ॥ विषाणावल्गितगतिर्लंबताकंठचर्मणा ५ गवारोहेषुचपलस्तरुघातांकिताननः ॥ युद्धसज्जविषाणाग्रोद्विषद्वृषभसूदनः ६ अरिष्टोनामहिगवामरिष्टोदरुणाकृतिः ॥ दैत्योवृषभरूपेणगोष्ठान्विपरिधावति ७ पातयानोगवांगर्भान्दृप्तोगच्छत्यनार्तवम् ॥ जृंभमाणश्च चपलोगृष्टीस्संप्रचचारह ८ शृंगप्रहरणोरौद्रःप्रहरन्गोपुदुर्मदः ॥ गोष्ठेपुनरतिंलेभेविनायुद्धेनगोवृषः ९ कस्यांचित्त्वथकालस्य सवृषःकेशवाग्रतः ॥ आजगामबलोदग्रोवैवस्वतवशेस्थितः १० सतत्रगास्तुप्रसभंबाधमानोमदोत्कटः ॥ चकारनिर्वृषंगोष्ठंनिर्वत्स शिशुपुंगवम् ११ एतस्मिन्नेवकालेतुगावःकृष्णसमीपगाः ॥ त्रासयामासदुष्टात्मावैवस्वतवशेस्थितः १२ सेंद्राशनिरिवांभोदो नर्दमानोमहासुरः ॥ तालशब्देनतंकृष्णस्सिंहनादैश्चमोहयन् १३ अभ्यधावतगोविंदोदैत्यंवृषभरूपिणम् ॥ सकृष्णंगोवृषोदृष्ट्वाहृष्टलांगूललोचनः १४ रोषितस्तालशब्देनयुद्धाकांक्षीननर्दह ॥ तमापतंतंदुर्वृत्तंदृष्ट्वावृषभरूपिणम् ॥ तस्मात्स्थानान्नव्यचलत्कृष्णोगिरिरिवाचलः १५ सकुक्षौवृषभोदृष्टिंप्रणिधायधृताननः ॥ कृष्णस्यनिधनाकांक्षीतूर्णमभ्युत्पपातह १६ तमापतंतंप्रमुखेप्रतिजग्राहदुर्धरम् ॥ कृष्णःकृष्णांजननिभोवृषंप्रतिवृषोपमः १७ ससंसक्तस्तुकृष्णोवैवृषेणेवमहावृषः ॥ मुमोचवक्त्रजंफेनंनस्तश्चाथसशब्दवत् १८ तावन्योन्यावरुद्धांगौयुद्धेकृष्णवृषावुभौ ॥ रेजतुर्मेघसमयेसंसक्ताविवतोयदौ १९ तस्यदर्पंबलंहत्वाकृत्वाशृंगांतरेपदम् ॥ आपीडयदरिष्टस्यकंठंक्लिन्नमिवांबरम् २० शृंगंचास्यपुनःसव्यमुत्पाटचयमदंडवत् ॥ तेनैवप्राहरद्वक्त्रेसममारभृशंहतः २१ सभिन्नशृंगोभग्नास्योभग्नस्कंधश्चदानवः ॥ पपातरुधिरोद्गारीसांबुधारइवांबुदः २२ गोविंदेनहतंदृष्ट्वादृप्तंवृषभदानवम् ॥ साधुसाध्वितिभूतानि तत्कर्मास्याभितुष्टुवुः २३ सचोपेंद्रोवृषंहत्वाकांतचंद्रेनिशामुखे ॥ अरविंदाभनयनःपुनरेवररासह २४

॥ १५ ॥ संप्रहर्तुकामइतिशेषः ॥ १६ ॥ प्रमुखेमुखाग्रेओष्ठयोरित्यर्थःवेगेनइतिवापाठः ॥ १७ ॥ नस्तःनासिकातः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

गोवृत्तयःगोपाः अयंचार्थोदाशतय्याम् प्रनेमस्मिन्ददृशेसोमोअंतर्गोपानेममाविरस्थाकृणोति सातिग्मशृंगंवृषभंयुयुत्सनद्रुहस्तस्थौबहुलेबद्धोअंतरितिमंत्रेणोपबृंहितः मंत्रार्थ स्तु अंतर्गोपाः अंतःस्थित्वागोपायन्नंतर्यामीनेमस्मिन्नर्द्धप्रपंचेस्थावरेसोमःसोमादिरूपःप्रददृशेप्रकर्षेणदृष्टःनेममर्द्धप्रपंचंअस्थाअस्थिरंजंगमंआविःकृणोतिप्रकटीकरोति साति ग्मशृंगंवृषभंयुयुत्सन्योद्धुमिच्छन्दृङ्मात्रेणभस्मीकर्तुंशक्तोपिलीलयातेनसहयुयुत्सन्द्रुहःद्रोहंकृतवान् तंहतवानित्यर्थःततश्चबहुलेव्रजेअंतः रासमंडलमध्येबद्धःभक्तजनेनप्रे

तेपिगोवृत्तयस्सर्वेकृष्णंकमललोचनम् ॥ उपासांचक्रिरेहृष्टास्सर्वेशक्रमिवामराः २५ ॥ इतिश्रीभारतेखिलेषुहरिवंशेविष्णुपर्वणिवृष भासुरवधोनामैकविंशोऽध्यायः ॥ २१ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ कृष्णंव्रजगतंश्रुत्वावर्धमानमिवानलम् ॥ उद्वेगमगमत्कंस श्शंकमानस्ततोभयम् १ पूतनायांहतायांचकालियेचपराजिते ॥ धेनुकेप्रलयंनीतेप्रलंबेचनिपातिते २ धृतेगोवर्धनेशैलेविफलेशक्रशा सने ॥ गोपुत्रातास्त्वचतथास्पृहणीयेनकर्मणा ३ ककुद्मिनिहतेरिष्टेगोपेषुमुदितेषुच ॥ दृश्यमानेविनाशेचसंनिकृष्टेमहाभये ४ कर्षणेवृक्ष योश्चैवशकटस्यतथैवच ॥ अचिंत्यंकर्मतच्छ्रुत्वावर्द्धमानेषुशत्रुषु ५ प्राप्तारिष्टमिवात्मानंमेनेसमथुरेश्वरः ॥ विसंज्ञेंद्रियभूतात्मागतासु प्रतिमोबभौ ६ ततोज्ञातीन्समानाय्यपितरंचोग्रशासनः ॥ निशिस्तिमितमूकायांमथुरायांजनाधिपः ७ वसुदेवंचदेवाभंकंकंचाहूययया दवम् ॥ सत्यकंदारुकंचैवकंकावरजमेवच ८ भोजंवैतरणंचैवविकद्रुंचमहाबलम् ॥ भयशंखंचधर्मज्ञंविपृथुंचपृथुश्रियम् ९ बभ्रुंदानप तिंचैवकृतवर्माणमेवच ॥ भूरितेजसमक्षोभ्यंभूरिश्रवसमेवच १० एतान्सयादवान्सर्वानाभाष्यशृणुतेतिच ॥ उग्रसेनसुतोराजाप्रो वाचमथुरेश्वरः ११ भवंतस्सर्वकार्यज्ञावेदेषुपरिनिष्ठिताः ॥ न्यायवृत्तांतकुशलास्त्रिवर्गस्यप्रवर्तकाः १२ कर्तव्यानांचकर्तारोलोकस्य विबुधोपमाः ॥ तस्थिवांसोमहावृत्तेनिष्कंपाइवपर्वताः १३ अदंभवृत्तयस्सर्वेसर्वेगुरुकुलोषिताः ॥ राजमंत्रधरास्सर्वेसर्वेधनुषिपार गाः १४ यशःप्रदीपालोकानांवेदार्थानांविवक्षवः ॥ आश्रमाणांनिसर्गज्ञावर्णानांक्रमपारगाः १५

मपाशेनबद्धःसन् तस्थौक्रीडितुमितिशेषः ॥ २५ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायामेकविंशोध्यायः ॥ २१ ॥ ७ ॥ द्वाविंशतितमेध्यायेकंसेनाहूययादवान् ॥ वसुदेवमधिक्षि प्यअक्रूरःप्रेषितोव्रजं ॥ १ ॥ कृष्णमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ प्राप्तारिष्टंप्राप्तमृत्युंअतएवविसंज्ञानिइंद्रियाणिभूतात्माजीवश्चयस्य ॥ ६ ॥ स्तिमितंनिद्रयामूका यामिवरात्रौनिःशब्देकालेइत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ बभ्रुरेवदानपतिस्तमक्रूरं ॥ १० ॥ आभाष्यप्रत्येकंसंबोध्य ॥ ११ ॥ १२ ॥ महावृत्तेमहत्याचारे ॥ १३ १४ ॥ निसर्गज्ञाःस्वाभावि ककर्मज्ञाः ॥ १५ ॥

सुनियतांशोभनानांविधीनां ॥१६॥ उदितोदितैःकथाप्रसंगेनउद्धृतैः ॥१७॥ अंगिरसांअग्नीनां ॥ १८ ॥ व्यावर्त्तमानंभ्रश्यत् ॥ १९ ॥ २० ॥ २१ ॥ शून्यस्यहृदयशून्यस्य चारांधस्यचारचक्षुर्वर्जितस्य राजानश्चारचक्षुषइत्युक्तेः ममकारणात्मदीयात्प्रभावात्नंदगोपस्यगृहेवसुदेवस्यसुतोगोपितः ॥ २२ ॥ पूर्यमाणः पर्वणिअंबुदःसमुद्रः ॥

प्रवक्तारस्सुनियतांनेतारोनयदर्शिनाम् ॥ भेत्तारःपरराष्ट्राणांत्रातारश्शरणार्थिनाम् १६ एवमक्षतचारित्रैश्श्रीमद्भिरुदितोदितैः ॥ द्यौरप्यनुगृहीतास्याद्भवद्भिःकिंपुनर्मही १७ ऋषीणामिववोवृत्तंप्रभावोमरुतामिव ॥ रुद्राणामिववःक्रोधोदीप्तिरंगिरसामिव १८ व्यावर्तमानंसुमहद्भवद्भिःख्यातकीर्तिभिः ॥ धृतंयदुकुलंवीरैर्भूतलंपर्वतैरिव १९ एवंभवत्सुयुक्तेषुममचित्तानुवर्तिषु ॥ वर्द्धमानोममानर्थोभवद्भिःकिमुपेक्षितः २० एषकृष्णइतिख्यातोनंदगोपसुतोव्रजे ॥ वर्द्धमानइवांभोधिर्मूलंनःपरिकृंतति २१ अनमात्यस्यशून्यस्यचारांधस्यममैवतु ॥ कारणान्नंदगोपस्यससुतोगोपितोगृहे २२ उपेक्षितइवव्याधिःपूर्यमाणइवांबुदः ॥ नदन्मेघइवोष्णांतेसदुरात्माविवर्द्धते २३ तस्यनाहंगतिंजानेनयोगंनपराक्रमम् ॥ नंदगोपस्यभवनेजातस्याद्भुतकर्मणः २४ किंतद्भूतंसमुद्भूतंदेवापत्यंनविद्महे ॥ अतिदेवैरमानुष्यैःकर्मभिस्सोनुमीयते २५ पूतनाशकुनीबाल्येशिशुनोत्तानशायिना ॥ स्तनपानेप्सुनापीताप्राणैस्सहदुरासदा २६ यमुनायाह्रदेनागःकालियोदमितस्तथा ॥ रसातलचरोनीतःक्षणेनादर्शनंह्रदात् २७ नंदगोपसुतोयोगंकृत्वासपुनरुत्थितः ॥ धेनुकस्तालशिखरात्पातितोजीवितंविना २८ प्रलंबंयंमृधेदेवानशेकुरतिवर्तितुम् ॥ बालेनमुष्टिनैकेनसहतःप्राकृतोयथा २९ वासवस्योत्सवंभंक्त्वावर्षंवासवरोषजम् ॥ निर्जित्यगोगृहार्थायधृतोगोवर्द्धनोगिरिः ३० हतस्त्वरिष्टोबलवान्निश्शृंगश्चकृतोव्रजे ॥ अबालोबाल्यमास्थायरमतेशिशुलीलया ३१ प्रबंधःकर्मणामेवंतस्यगोव्रजवासिनः ॥ सन्निकृष्टंभयंचैवकेशिनोममचध्रुवम् ३२ भूतपूर्वश्चमेमृत्युस्सततंपूर्वदैहिकः ॥ युद्धाकांक्षीचसयथातिष्ठतीहममाग्रतः ३३ क्वचगोपत्वमशुभंमानुष्यंमृत्युदुर्बलम् ॥ क्वचदेवप्रभावेनक्रीडितव्यंव्रजेमम ३४ अहोनीचेनवपुषाच्छादयित्वात्मनोवपुः ॥ कोप्येषरमतेदेवश्श्मशानस्थइवानलः ३५ श्रूयतेहिपुराविष्णुस्सुराणांकारणांतरे ॥ वामनेनतुरूपेणजहारपृथिवीमिमाम् ३६

॥२३॥ गर्तितलं योगंवशीकरणोपायम् ॥ २४ ॥ देवैरपीतिदेवेभ्योप्यधिकइतिसोनुमीयते ॥ २५ ॥ २६ ॥ २७ ॥ योगंनागपाशबंधंकृत्वाछित्त्वा ॥ २८ ॥ २९ ३० ॥ ३१ प्रबंधः घटनाप्रकारः ॥ ३२ ॥ ३३ ॥ मृत्युदुर्बलंमृत्युयोगेनदुर्बलम् ॥ ३४ ॥ ३५ ॥ ३६ ॥

३७ ॥ भवेनरुद्ररूपिणाविष्णुना तत्प्रसिद्धंब्रह्मणोवरदानादभेद्यमासीत्तदित्यर्थः ॥ ३८ ॥ चालितइतिगुरुपुत्रेणकचेनभार्गवःशुक्रः चालितमृतसंजीविनींविद्यांकस्मैचिद पि नदास्यामीत्येतस्मान्नियमात्भ्रंशितः कथमित्यतआह दार्दुरींमायांप्रविश्येति यथादर्दुरोमृत्वापुनःपुनरुत्तिष्ठति एवंकचोपिदानवेभ्योसकृन्मृत्युमासाद्यगुरूदरंप्रवेशितस्ततोगुरोः सकाशात्विद्यांप्राप्यतदुदरंभित्त्वापुनरुत्थितःमृतंचगुरुंपुनर्जीवितवान् ततस्तामेवदानवैःकृतांकचहत्यांनिमित्तीकृत्यदानवेषुदेवोनववर्षेत्यर्थःएवंदानवानांविनाशःरुद्रद्वारात्रिपु

कृत्वाकेसरिणोरूपंविष्णुनाप्रभविष्णुना ॥ हतोहिरण्यकशिपुर्दानवानांपितामहः ३७ अचिंत्यरूपमास्थायश्वेतशैलस्यमूर्द्धनि ॥ भवेनचाविताद्दैत्याःपुरातान्त्रिपुरंघ्नता ३८ चालितोगुरुपुत्रेणभार्गवोंगिरसेनवै ॥ प्रविश्यदार्दुरींमायामनावृष्टिंचकारह ३९ अनंतश्शाश्वतोदेवस्सहस्रशिरसोव्ययः ॥ वाराहंरूपमास्थायप्रोज्जहारार्णवान्महीम् ४० अमृतेनिर्मितेपूर्वंविष्णुःस्त्रीरूपमास्थितः ॥ सुराणामसुराणांचयुद्धंचक्रेसुदारुणम् ४१ अमृतार्थेपुराचापिदेवदैत्यसमागमे ॥ दधारमंदरंविष्णुरकूपारइतिश्रुतिः ४२ वपुर्वामनमास्थायनंदनीयंपुराबलेः ॥ त्रिभिःक्रमैस्तुत्रीँल्लोकान्जहारत्रिदिवालयम् ४३ चतुर्धातेजसोभागंकृत्वादाशरथेगृहे ॥ सएवरामसंज्ञोवैरावणंव्यनशत्तदा ४४ एवमेषनिकृत्यावैतत्तद्रूपमुपागतः ॥ साधयित्वात्मनःकार्यंसुराणामर्थसिद्धये ४५ तदेषनूनंविष्णुर्वाशक्रोवामरुतांपतिः ॥ मत्साधनेच्छयाप्राप्तोनारदोमांप्रयुक्तवान् ४६ अत्रमेशंकतेबुद्धिर्वसुदेवंप्रतिध्रुवा ॥ अस्यबुद्धिविशेषेणवयंकातरतांगताः ४७ अहंहिखट्वांगवनेनारदेनसमागतः ॥ द्वितीयंसहिमांविप्रःपुनरेवाब्रवीद्वचः ४८ यस्त्वयाहिकृतोयत्नःकंसगर्भकृतेमहान् ॥ वसुदेवेनतेरात्रौतत्कर्मविफलीकृतम् ४९ दारिकायात्वयारात्रौशिलायांकंसपातिता ॥ तांयशोदासुतांविद्धिकृष्णंचवसुदेवजम् ५० रात्रौव्यावर्तितावेतौगर्भौतववधायवै ॥ वसुदेवेनसंधायमित्ररूपेणशत्रुणा ५१ सातुकन्यायशोदायाविंध्येपर्वतसत्तमे ॥ हत्वाशुंभनिशुंभौद्वौदानवौनगचारिणौ ५२ कृताभिषेकावरदाभूतसंघनिषेविता ॥ अर्च्यतेदस्युभिर्घोरैर्महाबलिपशुप्रिया ५३ सुरापिशितपूर्णाभ्यांकुंभाभ्यामुपशोभिता ॥ मयूरांगदचित्रैश्चबर्हभारैर्विभूषिता ५४

रस्येवकचद्वाराप्यनेनैवकृतइतिभावः ॥ ३९ ॥ सहस्रशिरसइत्यदंतत्वमार्षम् ॥ ४० ॥ चक्रेकारितवान् ॥ ४१ ॥ अकूपारेसमुद्रेकच्छपोभूत्वेतिशेषः ॥ ४२ ॥ लोकान् आक्रममाणस्त्रिदिवालयंस्वर्गंजहार ॥ ४३ ॥ व्यनशत्विनाशितवान् ॥ ४४ ॥ निकृत्याछलेन ॥ ४५ ॥ मत्साधनेच्छयामद्वधेच्छया ॥ ४६ ॥ ४७ ॥ द्वितीयंद्वितीयवारं ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

॥ ५५ ॥ ५६ ॥ भृंगारुःकनकपात्रंगडुकम् ॥ ५७ ॥ ५८ ॥ ५९ ॥ महतांकर्मणांपूतनावधादीनांकारणंहेतुम् द्वितीयइतिरामापेक्षयासोपिवसुदेवाज्जातइतिवासुदेवोभव
त्येव ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ अनुबंधेनकार्यानुरोधेन दारुणांदारुणोदर्काम् ॥ ६५ ॥ ६६ ॥ बांधवकाम्ययामित्रेच्छयामित्रकामेनेत्यर्थः ॥ ६७ ॥ ह



हृष्टकुक्कुटसंनादंवनंवायसनादितम् ।। मृगसंघैश्चसंपूर्णमविरुद्धैश्चपक्षिभिः ५५ सिंहव्याघ्रवराहाणांनादेनप्रतिनादितम् ॥ वृक्षगं भीरनिबिडंकांतारैस्सर्वतोवृतम् ५६ दिव्यभृंगारुचमरैरादर्शैरुपशोभितम् ॥ देवतूर्यनिनादैश्चशतशःप्रतिनादितम् ५७ स्थानं तस्यानगेविंध्येनिर्मितंस्वेनतेजसा ॥ रिपूणांत्रासजननीनित्यंतत्रमनोरमे ५८ वसतेपरमप्रीतादेवतैरपिपूजिता ॥ यस्त्वयंनं दगोपस्यकृष्णइत्युच्यतेसुतः ५९ अत्रमेनारदःप्राहसुमहत्कर्मकारणम् ॥ द्वीतीयोवसुदेवाद्वैवासुदेवोभविष्यति ६० सहितेसहजो मृत्युर्बांधवश्चभविष्यति ॥ सएववासुदेवोवैवसुदेवसुतोबली ॥ बांधवोधर्मतोमह्यंहृदयेनांतकोरिपुः ६१ यथाहिवायसोमूर्ध्निपद्भ्यां यस्यावतिष्ठति ॥ नेत्रेतुदतितस्यैववक्त्रेणामिषगृद्धिना ६२ वसुदेवस्तथैवायंसपुत्रज्ञातिबांधवः ॥ छिनत्तिममभूलानिभुंक्तेचममपा र्श्वतः ६३ भ्रूणहत्यापिसंतार्यागोवधःस्त्रीवधोपिवा ॥ नकृतघ्नस्यलोकोस्तिबांधवस्यविशेषतः ६४ पतितानुगतंमार्गंनिषेवत्यचिरे णसः ॥ यःकृतघ्नोनुबंधेनप्रीतिंवहतिदारुणाम् ६५ नरकाध्युषितःपंथागंतव्यस्तेनदारुणः ॥ अपापेपापहृदयोयःपापमनु तिष्ठति ६६ अहंवास्वजनश्श्लाघ्यस्सवाश्लाघ्यतरस्सुतः ॥ नियमैर्गुणवृत्तेनत्वयाबांधवकाम्यया ६७ हस्तिनांकलहेघोरेव धमृच्छंतिवीरुधः ॥ युद्धव्युपरमेतेतुसहाश्नंतिमहावने ६८ बांधवानामपितथाभेदकालेसमुत्थिते ॥ बध्यतेयोंतरप्रेप्सुस्स्वजनोय दिवेतरः ६९ कालस्त्वंहिविनाशायमयापुष्टोविजानता ॥ वसुदेवकुलस्यास्ययद्विरोधयसेभृशम् ७० अमर्षीवैरशीलश्चसदा पापमतिश्शठः ॥ स्थानेयदुकुलंमूढशोचनीयंत्वयाकृतम् ७१ वसुदेववृथावृद्धयन्मयात्वंपुरस्कृतः ॥ श्वेतेनशिरसावृद्धोनैववर्षशती भवेत् ७२ यस्यबुद्धिःपरिणतासवैवृद्धतरोनृणाम् ॥ नतेनवृद्धोभवतियेनास्यपलितंशिरः ७३ त्वंचकर्कशशीलश्चबुद्ध्याचनबहु श्रुतः ॥ केवलंवयसावृद्धोयथाशरदतोयदः ७४



स्तिनामिति यथाहस्तिनांकलहेवीरुधोनश्यंति नतुहस्तिनः एवंममचकृष्णस्यचकलहेवसुदेवादयएवनंक्ष्यंति नत्वावामितिश्लोकद्वयस्यार्थः ॥ ६८ ॥ ६९ ॥ ७० ॥ शठोमिथ्या
विनीतश्चशठोगूढापराधकृदितिकोशात् त्वयाकुलंयत्शोचनीयंतत्स्थानेयुक्तमित्यर्थः ॥ ७१ ॥ हेवृद्धयत्यतोमयात्वंपुरस्कृतोऽतोहंवृथाव्यर्थजन्मास्मीत्यर्थः ॥ ७२ ॥ ७३ ॥ ७४ ॥

॥ ७५॥७६ ॥७७॥ मेमया ॥७८ ॥ जातश्चासौसंवृद्धश्चजातसंवृद्धः पितृष्वसुरितिपितृव्यसंबंधिन्याःस्वसुरिति ॥७९॥ चक्रवर्तिनां यस्यमूर्धनिदृश्येतविनाछत्रेणभूपतेः पद्मा
नुकारिणीछायातमाहुश्चक्रवर्तिनमित्युक्तलक्षणानां ॥ ८० ॥ ८१ ॥ जयोवास्त्विवतिशेषःउभयथाविलज्जयाअवगुंठिताआच्छादितमुखाःयदूनांपुरुषायास्यंति एकेनकपटिनास

किंचत्वंसाधुजानीषेवसुदेववृथामते ॥ हतेकंसेममसुतोमथुरांपालयिष्यति ७५ छिन्नाशस्त्वंवृथावृद्धोमिथ्यात्वेवंविचारितम् ॥ जिजी
विषुर्नसोप्यस्तियोवैतिष्ठेन्ममाग्रतः ७६ प्रहर्तुकामोविश्वस्तेयस्त्वंदुष्टेनचेतसा ॥ तत्तेप्रतिकरिष्येहंपुत्रयोस्तवपश्यतः ७७ नमे
वृद्धवधःकश्चिद्द्विजस्त्रीवधएवच ॥ कृतपूर्वःकरिष्येवाविशेषेणतुबांधवे ७८ इहत्वंजातसंवृद्धोममपित्राविवर्धितः ॥ पितृष्वसुश्चमेभर्त्ता
यदूनांप्रथमोगुरुः ७९ कुलेमहतिविख्यातःप्रथितेचक्रवर्तिनाम् ॥ गुर्वर्थंपूजितस्सद्भिर्महद्भिर्धर्मबुद्धिभिः ८० किंकरिष्यामहेसर्वे
सत्सुवक्तव्यतांगताः ॥ यदूनांप्रथमुख्यस्ययस्यतेवृत्तमीदृशम् ८१ मद्वधोवाजयोवाथवसुदेवस्यदुर्नयैः ॥ सत्युयास्यंतिपुरु
षायदूनामवगुंठिताः ८२ त्वयाहिमद्वधोपायंतर्कमाणेनवैमृधे ॥ अविश्वास्यंकृतंकर्मवाच्याश्चयदवःकृताः ८३ अशाम्यंवैरमु
त्पन्नंममकृष्णस्यचोभयोः ॥ शांतिमेकतरेशांतिंगतेयास्यंतियादवाः ८४ गच्छदानपतेक्षिप्रंताविहानयितुंव्रजात् ॥ नंदगोपंचगो
पांश्चकरदान्ममशासनात् ८५ वाच्यश्चनंदगोपोवैकरमादायवार्षिकम् ॥ शीघ्रमागच्छनगरंगोपैस्सहसमन्वितः ८६ कृष्णसं
कर्षणौचैववसुदेवसुतावुभौ ॥ द्रष्टुमिच्छतिवैकंसस्सभृत्यस्सपुरोहितः ८७ एतौयुद्धविदौरंगेकालनिर्माणयोधिनौ ॥ दृढौचक्र
तिनौचैवशृणोमिव्यायतोद्यमौ ८८ अस्माकमपिमल्लौद्वौसज्जौयुद्धकृतोत्सवौ ॥ ताभ्यांसहनियोत्स्येतेतौयुद्धकुशलावुभौ ८९ द्रष्ट
व्यौचमयावश्यंबालौतावमरोपमौ ॥ पितृष्वसुस्सुतौमुख्यौव्रजवासौवनेचरौ ९० वक्तव्यंचव्रजेतस्मिन्समीपेव्रजवासिनाम् ॥ राजा
धनुर्मखंनामकारयिष्यतिवैसुखी ९१ सन्निकृष्टेवनेतेतुनिवसंतुयथासुखम् ॥ जनस्यामंत्रितस्यार्थेयथास्यात्सर्वमव्ययम् ९२ पय
सस्सर्पिषश्चैवदध्नोदध्युत्तरस्यच ॥ यथाकामप्रदानायभोज्याधिश्रयणायच ९३

वैषुकपटित्वापवादप्रसंगादितिभावः ॥ ८२ ॥ तदेवह त्वयेति वाच्यानिंद्याः ॥ ८३ ॥ ८४ ॥ दानपतेहेअक्रूर ॥ ८५ ॥ वाच्यस्त्वयावक्तव्यः ॥ ८६ ॥ ८७ ॥ कालनिर्मा
णयोधिनौ समयानुसारियुद्धकुशलौ व्यायतोद्यमौदीर्घयत्नौ ॥ ८८ ॥ मल्लौचाणूरमुष्टिकौनियोत्स्येतेयुद्धंकरिष्यतः ॥ ८९ ॥ पितृष्वसुरितिपितृव्यसंबंधिन्याःस्वसुरितिज्ञेयं
कालभेदेनयथाश्रुतमेवास्तु ॥ ९० ॥ ९१ ॥ ९२ ॥ दध्युत्तरस्यदधिमंडस्यतक्रस्यवा भोज्याधिश्रयणायचभोज्यंपायसवदन्नंकर्तुंयत् अधिश्रयणंक्षीरस्यतस्मै ॥ ९३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ उपजप्तोभेदितः ॥ १८ ॥ सागराकारम् अतिगंभीरंआत्मानंमनः ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ तस्मिन्नेवमुहूर्तेमध्यरात्रे ॥१०३॥
॥ इतिश्रीह० द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशेस्मिन्नध्यायेउग्रसेनपितामहः ॥ कंकःकंसंविनिर्भर्त्स्यहितमाहेतिवर्ण्यते ॥ १ ॥ क्षिप्रमिति ॥ १ ॥ अंधकःकंकापर



अक्रूरगच्छशीघ्रंत्वंतावानयममाज्ञया ॥ संकर्षणंचकृष्णंचद्रष्टुंकौतूहलंहिमे १४ तयोरागमनेप्रीतिःपरमामत्कृताभवेत् ॥ दृष्ट्वातु
तौमहावीर्यौतद्विधास्यामियद्धितम् १५ शासनंयदिवाश्रुत्वाममतौपरिभाषितम् ॥ नागच्छेतांयथाकालंनिग्राह्यावपितौमम १६ सां
त्वमेवतुबालेषुप्रधानंप्रथमोनमः ॥ मधुरेणैवतौमंदौस्वयमेवानयाशुवै १७ अक्रूरकुरुमेप्रीतिमेतांपरमदुर्लभाम् ॥ यदिवानोपज
प्तोसिवसुदेवेनसुव्रत १८ तथाकर्तव्यमेतद्धियथातातगमिष्यतः ॥ एवमाक्षिप्यमाणोपिवसुदेवोवसूपमः ॥ सागराकारमात्मा
नंनिष्प्रकंपमधारयत् ९९ वाक्शल्यैस्ताड्यमानस्तुकंसेनादीर्घदर्शिना ॥ क्षमांमनसिसंधायनोत्तरंप्रत्यभाषत १०० येतुतं
ददृशुस्तत्राक्षिप्यमाणमनेकधा ॥ धिग्धिगित्यसकृत्तेवैशनैरूचुरवाङ्मुखाः १०१ अक्रूरस्तुमहातेजाजानन्दिव्येनचक्षुषा ॥ जलं
दृष्ट्वेवतृषितःप्रेषितःप्रीतिमानभूत् १०२ तस्मिन्नेवमुहूर्तेतुमथुरायास्सनिर्ययौ ॥ प्रीतिमान्पुंडरीकाक्षंद्रष्टुंदानपतिस्स्वयम् १०३
॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिअक्रूरप्रस्थानंनामद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ क्षिप्रंयदुवृ
षंदृष्ट्वासर्वेतेयदुपुंगवाः ॥ निपीड्यश्रवणान्हस्तैर्मेनिरेतंगतायुषम् १ अंधकोनुद्विग्नमनाधैर्यादविकृतंवचः ॥ प्रोवाचवदतांश्रेष्ठस्स
माजेकंसमोजसा २ अश्लाघ्योमेमतःपुत्रतवायंवाक्परिश्रमः ॥ अयुक्तोगर्हितस्सद्भिर्बांधवेषुविशेषतः ३ अयादवोयदिभवान्शृणु
तावद्यदुच्यते ॥ नहित्वांयादवंवीरबलात्कुर्वंतियादवाः ४ अश्लाघ्यावृष्णयःपुत्रयेषांत्वमनुशासिता ॥ इक्ष्वाकुवंशजोराजाविनिवृत्तःस्व
यंसकृत् ५ भोजोवायादवोवासिकंसोवासियथातथा ॥ सहजंतेशिरस्तातजटीमुंडोपिवाभव ६ उग्रसेनस्त्वयंशोच्योयोस्माकंकुलपां
सनः ॥ दुर्जातीयेनयेनत्वमीदृशोजनितःसुतः ७ नचात्मनोगुणांस्तातप्रवदंतिमनीषिणः ॥ परेणोक्तागुणागौण्यंयांतिवेदार्थसंमिताः ८

नामाउग्रसेनस्यपितामहइतिप्राञ्चः ॥ २ ॥ ३ ॥ ४ ॥ इक्ष्वाकुवंशजोअसमंजाः यथाप्रजापीडकःसकृद्विनिवृत्तोजातः सएवत्वंपुनर्जातइत्यर्थः ॥ ५ ॥ सहजंअवि
कृतंतेतवशिरःउत्तमांगंवृद्धकुंडलं जटीमुंडइतिलक्षणयामूर्द्धन्यानूबध्वोपच्छिधिवेत्यर्थः ॥ ६ ॥ ७ ॥ गौण्यंसाफल्यं ॥ ८ ॥ 

१ महतां पुत्र इति तु मुद्रितपूर्वपुस्तक एव पाठः ।

॥ ९ ॥ असाधुमद्भिःनिंदादियुक्तैः विवृतःस्पष्टीकृतः ॥ १० ॥ ११ ॥ अंतर्गतान् योगबलार्जितानपि ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ जात्यां हिउत्पत्तावेवत्वयाजातवैरेणचेतसाकृष्णः संकर्षणश्चधृतः ताभ्यांचत्वमपितथैवजातवैरेणचेतसाधृतइतित्वमेवबालघ्नः प्रथमोपराधीइत्यर्थः ॥ २१ ॥ उद्भूतानिअतिक्रांपितानि ॥ २२ ॥ २३ ॥ २४ ॥ एषइतिसर्वतोभद्रचक्रेकंसस्यजन्मनक्षत्रंमृगशिरः ततोदशमंचित्रातस्यैवनक्षत्रं तत्रघोरोग्रहःराहुःक्रूरोस्ति कुजश्चवक्रीभूयतत्रैवागतोस्ति ताभ्यांकर्म

पृथिव्यांयदुवंशोयंनिंदनीयोमहीक्षिताम् ॥ बालःकुलांतकृन्मूढोयेषांत्वमनुशासिता ९ असाधुमद्भिर्वाक्यैश्चत्वयासाध्वितिभाषितैः ॥ नचाप्यासादितंकार्यमात्माचविवृतःकृतः १० गुरोरनवलिप्तस्यमान्यस्यमहतामपि ॥ क्षेपणंकःशुभंमन्येद्विजस्येववधेकृते ११ मान्याश्चैवाभिगम्याश्चवृद्धास्ताततथाग्नयः ॥ क्रोधोहितेषांप्रदहल्लोकानंतर्गतानपि १२ बुधेनतातदांतेननित्यमभ्युच्छ्रितात्मना ॥ धर्मस्यगतिरन्वेष्यामत्स्यस्यगतिरप्स्विव १३ केवलंत्वंतुदर्पेणवृद्धानग्निसमानिह ॥ वाचातुदसिमर्मघ्न्याअमंत्रोक्तायथाहुतिः १४ वसुदेवंचपुत्रार्थेयदिमंपरिगर्हसि ॥ तत्रमिथ्याप्रलापंतेनिंदामिकृपणंवचः १५ दारुणेचपितापुत्रेनैवदारुणतांव्रजेत् ॥ पुत्रार्थेह्यापदःकष्टाःपितरःप्राप्नुवंतिहि १६ छादितोवसुदेवेनयदिपुत्रःशिशुस्तदा ॥ मन्यसेयद्यकर्तव्यंतत्पृच्छपितरंस्वकम् १७ गर्हतावसुदेवंचयदुवंशंचनिंदता ॥ त्वयायादवपुत्राणांवैरजंविषमर्जितम् १८ अकर्तव्यंयदिकृतंवसुदेवेनपुत्रजम् ॥ किमर्थमुग्रसेनेननशिशुस्त्वंनविनाशितः १९ पुन्नाम्नोनरकात्पुत्रोयस्मात्त्रातापितृंस्तदा ॥ तस्माद्भवंतिपुत्रेतिपुत्रंधर्मविदोजनाः २० जात्याहियादवःकृष्णस्सचसंकर्षणोयुवा ॥ त्वंचापिविधृतस्ताभ्यांजातवैरेणचेतसा २१ उद्भूतानीहसर्वेषांयदूनांहृदयानिवै ॥ वसुदेवेत्वयाक्षिप्तेवासुदेवेचकोपिते २२ कृष्णेचभवतोद्वेष्येवसुदेवविगर्हणात् ॥ शंसंतिचेमानिभयंनिमित्तान्यशुभानिते २३ सर्पाणांदर्शनंतीव्रंदुःस्वप्नानांनिशाक्षये ॥ पुर्याविध्वंसिनीकारणैरनुमीमहे २४ एषघोरोग्रहःस्वातिमुल्लिखन्खेगभस्तिभिः ॥ वक्रमंगारकश्चक्रेचित्रायांघोरदर्शनः २५ बुधेनपश्चिमासंध्याव्याप्ताघोरेणतेजसा ॥ वैश्वानरपथेशुक्रोह्यतिचारंचचारह २६

भंव्याप्यजन्मभंविद्धमितितवजीवनार्थोयत्नःसर्वोनिष्फलोभविष्यतिदेहश्चनंक्ष्यतीतिभावः ॥ २५ ॥ एवंपश्चिमायामुदितोबुधोपिराज्यभंगकृदित्याह बुधेनेति अतिचारंसूर्यमुल्लंघ्यगमनं यथाचबुधसूर्यशुक्राणांअत्यंतपृथग्दर्शनंमहतेनाशायभवतीतिभावः ॥ २६ ॥

केतुनापुच्छेनधूमकेतोरुत्पातविशेषस्यभरण्यादीनीति कंसस्यजन्मकर्मभेधूमकेतुनातृतीयेनउपग्रहेणापिविद्धेइत्यर्थः नानुयांतिनिशाकरमित्यनेनचित्रास्थेराहौचित्रातः उत्तराणि त्रयोदशनक्षत्राणि जीवपक्षेसतिपूर्वाणित्रयोदशनक्षत्राणि मृत्युपक्षेपतितानि अतस्तत्रत्यःचंद्रोपिनतैर्नक्षत्रैरुत्तमफलकरत्वेनानुगम्यतइत्यर्थः ॥ २७ ॥ परिघोरश्मिमंडलेतिर्यग्वृत्तिर्दंडः बाधतिबाधते ॥ २८ ॥ पर्येतिपरिक्रामति वाशतीशब्दंकुर्वाणा ॥ २९ ॥ अपर्वणिअकांडेअकस्मादितियावत् ॥ ३० ॥ ३१ ॥ देवताःदेवताप्रतिमाः ॥ ३२ ॥ ३३ ॥

३० केतुनाधूमकेतोस्तुनक्षत्राणित्रयोदश ॥ भरण्यादीनिभिन्नाभिनानुयांतिनिशाकरम् २७ प्राक्संध्यापरिघग्रस्ताभाभिर्बाधतिभास्करम् ॥ प्रतिलोमंचयांत्येवव्याहरंतोमृगद्विजाः २८ शिवाश्मशानान्निष्क्रम्यनिश्श्वासांगारवर्षिणी ॥ उभेसंध्येपुरींघोरापर्येतिबहुवाशती २९ उल्कानिर्घातनादेनपपातधरणीतले ॥ चलत्यपर्वणिमहीगिरीणांशिखराणिच ३० ग्रस्तःस्वर्भानुनासूर्योदिवानक्तमजायत ॥ धूमोत्पातैर्दिशोव्याप्ताःशुष्काशनिसमाहताः ३१ प्रस्रवंतिघनारक्तंसाशनिस्तनयित्नवः ॥ चलितादेवताःस्थानात्त्यजंतिविहगानगान् ३२ यानिराजविनाशायदैवज्ञाःकथयंतिह ॥ तानिसर्वाणिपश्यामोनिमित्तान्यशुभानिवै ३३ त्वंचापिस्वजनद्वेषीराजधर्मपराङ्मुखः ॥ अनिमित्तागतक्रोधस्सन्निकृष्टभयोह्यसि ३४ यस्त्वंदेवोपमंवृद्धंवसुदेवंवसूपमम् ॥ मोहात्क्षिपसिदुर्बुद्धेकुतस्तेशांतिरात्मनः ३५ त्वद्गतोयोहिनस्स्नेहस्तंत्यजामोद्यवैवयम् ॥ अहितंस्वस्यवंशस्यनत्वांक्षणमुपास्महे ३६ सहिदानपतिर्धन्योयोद्रक्ष्यातिवनेगतम् ॥ पुंडरीकविशालाक्षंकृष्णमक्लिष्टकारिणम् ३७ छिन्नमूलोह्ययंवंशोयदूनांत्वत्कृतेकृतः ॥ कृष्णोज्ञातीन्त्समानाय्यससंधानं करिष्यति ३८ क्षांतमेवतवानेनवसुदेवेनधीमता ॥ कालस्सम्यक्परिज्ञातोब्रूहित्वंयद्यदिच्छसि ३९ मह्यंतुरोचतेकंसवसुदेवसहायवान् ॥ गच्छकृष्णस्यनिलयंसंधिस्तेनचरोचताम्[१] ॥४०॥ इतिश्रीमहाभारतेहरिवंशेविष्णुपर्वणिअंधकवचनंनामत्रयोविंशोध्यायः ॥२३॥ ॥ वैशंपायनउवाच ॥ अंधकस्यवचश्श्रुत्वाकंसस्संरक्तलोचनः ॥ नकिंचिदब्रवीत्क्रोधाद्विवेशस्वंनिकेतनम् ॥ १ ॥

अ०२३

३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ त्वत्कृतेत्वदर्थैत्वयैवेत्यर्थः संधानंइतस्ततोविप्रकीर्णानांयादवानामानयनेनएकीकरणम् ॥ ३८ ॥ कालेनसम्यक्परिगतंनष्टंज्ञानंयस्यसः कालः सम्यक्परिज्ञातः ॥ ३९ ॥ ४० ॥ इतिश्रीमहाभारतेहरिवंशेविष्णुपर्वणिटीकायांत्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशेत्वथाध्यायेअक्रूरागमनात्पुरा केशिनोहयरूपस्यकृष्णाच्चवधउच्यते ॥ १ ॥ अंधकस्येति ॥ १ ॥ ३०

१ प्रीतिस्ते तेन रोचतामिति पाठान्तरम्

॥२॥ ३ ॥ ४ ॥ प्रागेवअक्रूरप्रेषणात्केशिनः निकटेइतिशेषः ॥ ५ ॥ ६ ॥ वाजिरूपोदैत्यः ॥ ७ ॥ निरवग्रहः उच्छृंखलः ॥ ८ ॥९ ॥ १० ॥ ११ ॥ ईरिणंशून्यम् ॥१२॥१३॥

तेचसर्वेयथावेश्मयादवाश्श्रुतविस्तराः ॥ जग्मुर्विगतसंकल्पाःकंसवैकृतशंसिनः २ अक्रूरोपियथाज्ञप्तःकृष्णदर्शनलालसः॥ जगामर थमुख्येनमनसातुल्यगामिना ३ कृष्णस्यापिनिमित्तानिशुभान्यंगगतानिवै ॥ पितृतुल्येनशंसंतिबांधवेनसमागमम् ४ प्रागेवचन रेंद्रेणमाथुरेणोग्रसेनिना ॥ केशिनःप्रेषितोदूतोवधायोपेंद्रकारणात् ५ सचदूतवचश्श्रुत्वाकेशीक्लेशकरोनृणाम् ॥ वृंदावनगतो गोपान्बाधतेस्मदुरासदः ६ मानुषंमांसमश्नानःक्रुद्धोदुष्टपराक्रमः ॥ दुर्दांतोवाजिदैत्योसावकरोत्कदनंमहत् ७ निघ्नन्गावैसगो पालागवांपिशितभोजनः ॥ दुर्मदःकामचारीचसकेशीनिरवग्रहः ८ तदरण्यंश्मशानाभंनृणांमांसास्थिभिर्वृतम् ॥ यत्रास्तेसहिदु ष्टात्माकेशीतुरगदानवः ९ खुरैर्दारयतेभूमिंवेगेनारुजतेद्रुमान् ॥ हेषितैःस्पर्द्धतेवायुंप्लुतैर्लंघयतेनभः १० अतिप्रवृद्धोमत्तश्चदुष्टो श्वोवनगोचरः ॥ आकंपितसटोरौद्रःकंसस्यचरितानुगः ११ ईरिणंतद्वनंसर्वंतेनासीत्पापकर्मणा ॥ कृतंतुरगदैत्येनसर्वान्गोपान्जिघां सता १२ तेनदुष्टप्रचारेणदूषितंतद्वनंमहत् ॥ ननृभिर्गोधनैर्वापिसेव्यतेवनवृत्तिभिः १३ निःसंपातःकृतःपंथास्तेनतद्विषयाश्रयः ॥ मदाच्चलितवृत्तेननृमांसान्यश्नताभृशम् १४ नृशब्दानुसरःक्रुद्धस्सकदाचिद्वनागमे ॥ जगामघोषसंवासंचोदितःकालधर्मणा १५ तं दृष्ट्वादुद्रुवुर्गोपाःस्त्रियश्चशिशुभिस्सह ॥ क्रंदमानाजगन्नाथंकृष्णंनाथमुपाश्रिताः १६ तासांरुदितशब्देनगोपानांक्रंदितेनच ॥ दत्त्वा भयंतुकृष्णोवैकेशिनंसोभिदुद्रुवे १७ केशीचाप्युन्नतग्रीवःप्रकाशदशनेक्षणः ॥ हेषमाणोजवोदग्रोगोविंदाभिमुखोययौ १८ तमापतं तंसंप्रेक्ष्यकेशिनंहयदानवम् ॥ प्रत्युज्जगामगोविंदस्तोयदश्शशिनंयथा १९ केशिनस्तुतमभ्याशेदृष्ट्वाकृष्णमवस्थितम् ॥ मनु ष्यबुद्धयोगोपाःकृष्णमूचुर्हितैषिणः २० कृष्णतातनखल्वेषसहसातेहयाधमः ॥ उपसर्प्योभवान्बालःपापश्चैषदुरासदः २१ एषकंस स्यसहजःप्राणस्तातबहिश्चरः ॥ उत्तमश्चहयेंद्राणांदानवोप्रतिमोयुधि २२ त्रासनस्सर्वभूतानांतुरगाणांमहाबलः ॥ अवध्यस्सर्व भूतानांप्रथमःपापकर्मणाम् २३ गोपानांतद्वचश्श्रुत्वावदतांमधुसूदनः ॥ केशिनासहयुद्धायमतिंचक्रेरिसूदनः २४ ततस्सव्यंदक्षिणं चमंडलंसपरिभ्रमन् ॥ पद्भ्यामुभाभ्यांसहयःक्रोधेनारुजतेद्रुमान् २५

निःसंपातः अगम्यः ॥ १४ ॥ नृशब्दानुसरः मनुष्यशब्दानुसारी कालधर्मणामृत्युना ॥ १५ ॥ १६ ॥ १७ ॥ जवोदग्रःउग्रः ॥१८॥ १९॥ २०॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥२५ ॥

वलयोललाटस्थाः क्रोधजंक्रोधात्प्रास्विन्नम् ॥ २६ ॥ रजसाखुरोद्धूतेनदृत्तंमिश्रंफेनं अयथेतिव्योम्नोविशेषणं असुषिरेगाढेनरजसाव्याप्तेइत्यर्थः नीहारंअवश्यायंएतेनायंमंत्र उपबृंहितः नताअर्वारेणुककाटोअश्नुतेनसंस्कृतत्रमुपयंतिताअभि उरुगायमभयंतस्यताअनुगावोमर्तस्यविचरंतियज्वनइति ताःगाअर्वाअश्वरूपीअसुरः रेणुककाटितिआति शयेनवर्षतितेनवाआवृणोतिविश्वमितिरेणुककाटः कटेवर्षावरणयोरित्यस्मात्यङ्लुकिघञ् नअश्नुतेनव्याप्नोति संस्कृतःसंस्कारोदाहच्छेदौषधपानादिस्तेनत्रायतइतिसंस्कृतत्रो

मुखेलंबसटेचास्यस्कंधेकेशघनावृते ॥ वलयोभ्रतरंगाभाःसुस्रुवुःक्रोधजंजलम् २६ सफेनंवक्त्रजंचैववववर्षरजसावृतम् ॥ हिमकालेऽयथा व्योम्निनीहारमिवचंद्रमाः २७ गोविंदमरविंदाक्षंहेषितोद्गारशीकरैः ॥ सफेनैर्वक्त्रनिर्गीर्णैःप्रोक्षयामासभारत २८ खुरोद्धूतावसिक्तेन मधुकक्षोदपांडुना ॥ रजसासहयःकृष्णंचकारारुणमूर्धजम् २९ प्लुतवल्गितपादस्तुतक्षमाणोधरांखुरैः[1] ॥ दंतान्निर्दशमानस्तुकेशीकृ ष्णमुपाद्रवत् ३० ससंसक्तस्तुकृष्णेनकेशीतुरगसत्तमः ॥ पूर्वाभ्यांचरणाभ्यांवैकृष्णंवक्षस्यताडयत् ३१ पुनःपुनस्सचबलीप्राहिणो त्पार्श्वतःखुरान् ॥ कृष्णस्यदानवोघोरंप्रहारममितौजसः ३२ वक्त्रेणचास्यघोरेणतीक्ष्णदंष्ट्रायुधेनवै ॥ अदशद्बाहुशिखरंकृष्णस्यरु षितोहयः ३३ सलंबकेसरसटःकृष्णेनसहसंगतः ॥ रराजकेशीमेघेनसंसक्तःखइवांशुमान् ३४ उरस्तस्योरसाहंतुमियेषबलवान्ह यः ॥ वेगेनवासुदेवस्यक्रोधाद्विगुणविक्रमः ३५ तस्योत्सिक्तस्यबलवान्कृष्णोप्यमितविक्रमः ॥ बाहुमाभोगिनंकृत्वामुखेक्रुद्धस्स मादधत् ३६ सतंबाहुमशक्तोवैखादितुंभेत्तुमेबच ॥ दशनैर्मूलनिर्मुक्तैस्सफेनंरुधिरंवमन् ३७ विपाटिताभ्यामोष्ठाभ्यांकटाभ्यांविद लीकृतः ॥ अक्षिणीविकृतेचक्रेविसृतेमुक्तबंधने ३८ निरस्तहनुराविष्टश्शोणिताक्तविलोचनः ॥ उत्कर्णोनष्टचेतास्तुसकेशीबद्धचेष्टत ३९ उत्पतन्नसकृत्पादैश्शकृन्मूत्रंसमुत्सृजन् ॥ खिन्नांगरोमाश्रांतस्तुनिर्यत्नचरणोभवत् ४० केशीवक्त्रविलग्नस्तुकृष्णबाहुरशोभत ॥ व्याभुग्नइवघर्मांतेचंद्रार्धकिरणैर्घनः ४१

वैघस्तंप्रत्यपितागावःनअभ्युपयंति निर्बाधितत्वात् यतस्ताः गावःमर्तस्ययज्वनः नंदादेःसंबंधिन्यः अभयंउरुगायंमहाकीर्तिअनुलक्षीकृत्यचरंतीतिमंत्रार्थः ॥२७ ॥ २८ ॥ खु रोद्धूतंचतदवसिक्तंव्याप्तंतेनमधुकक्षोदोमधुयाष्टिचूर्णतद्वत्पांडुनारजसा ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ आभोगिनं अतिवृद्धम् ॥ ३६ ॥ ३७ ॥ कटाभ्यांगंडाभ्यां ॥ ३८ ॥ उत्कर्णःऊर्ध्वकर्णः उत्क्षिप्तइतिवा ॥ ३९ ॥ ४० ॥ व्याभुग्नइववक्रेणमंडलेनवेष्टितार्द्धइत्यर्थः ॥ ४१ ॥

[1] प्लुतवलितपाद इति पाठान्तरम् ।

अवनतोमंदतेजाः ॥ ४२ ॥ ४३ ॥ स्वायतंआतिपुष्टं ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ पशोर्महिषरूपस्य ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

केशीचकृष्णसंसक्तश्शांतगात्रोऽव्यरोचत ॥ प्रभातावनतश्चंद्रश्श्रांतोमेरुमिवाश्रितः ४२ तस्यकृष्णभुजोद्धूताःकेशिनोदशनामुखात् ॥
पेतुश्शरदिनिस्तोयास्सिताभ्रावयवाइव ४३ सतुकेशीभृशंश्रांतःकृष्णेनाक्लिष्टकर्मणा ॥ स्वभुजंस्वायतंकृत्वापाटितोबलवत्तदा ४४
सपाटितोभुजेनाजौकृष्णेनविकृताननः ॥ केशीनदन्महानादंदानवोऽव्यथितस्तदा ४५ विघूर्णमानस्त्रस्तांगोमुखाद्रुधिरमुद्वमन् ॥
भृशंव्यंगीकृतवपुर्निकृत्तार्द्धइवाचलः ४६ व्यादितास्योमहारौद्रस्सोसुरःकृष्णबाहुना ॥ निपपातयथाकृत्तोनागोहिद्विदलीकृतः ४७
बाहुनाकृत्तदेहस्यकेशिनोरूपमाबभौ ॥ पशोरिवमहाघोरंनिहतस्यपिनाकिना ४८ द्विपादपृष्ठपुच्छार्द्धेश्रवणैकाक्षिनासिके ॥ केशि
नस्तद्विधाभूतेद्वेचार्द्धेरेजतुःक्षितौ ४९ केशिदंतक्षतस्यापिकृष्णस्यशुशुभेभुजः ॥ वृद्धस्सालइवारण्येगजेंद्रदशनांकितः ५० तंह
त्वाकेशिनंयुद्धेकल्पयित्वाचभागशः ॥ कृष्णःपद्मपलाशाक्षोहसंस्तत्रैवतस्थिवान् ५१ तंहतंकेशिनंदृष्ट्वागोपागोपस्त्रियस्तथा ॥ बभू
वुर्मुदितास्सर्वेहतविघ्नागतक्लमाः ५२ दामोदरंतुश्रीमंतंयथास्थानंयथावयः ॥ अभ्यनंदन्प्रियैर्वाक्यैःपूजयंतःपुनःपुनः ५३॥ गोपाऊ
चुः ॥ अहोतातकृतंकर्महतोयंलोककंटकः ॥ दैत्यःक्षितिचरःकृष्णहयरूपंसमास्थितः ५४ कृतंवृंदावनंक्षेमंसेव्यंनृमृगपक्षिणाम् ॥
घ्नतापापमिमंतातकेशिनंहयदानवम् ५५ हतानोबहवोगोपागावोवत्सेषुवत्सलाः ॥ नैकेचान्येजनपदाहतानेनदुरात्मना ५६ एषसं
वर्त्तकंकर्तुमुद्यतःखलुपापकृत् ॥ नृलोकंनिर्नरंकृत्वाचर्तुकामोयथासुखम् ५७ नैतस्यप्रमुखेस्थातुंकश्चिच्छक्तोजिजीविषुः ॥ अपिदे
वसमूहेषुकिंपुनःपृथिवीतले ५८ अथाहांतर्हितोविप्रोनारदःखगमोमुनिः ॥ प्रीतोस्मिविष्णोदेवेशकृष्णकृष्णेतिचाब्रवीत् ५९
॥ नारदउवाच ॥ ॥ यदिदंदुष्करंकर्मकृतंकेशिजिघांसया ॥ त्वय्येवकेवलंयुक्तंत्रिदिवेत्र्यंबकस्यवा ६० अहंयुद्धोत्सुकस्तातत्वद्गते
नांतरात्मना ॥ इदंनरहयंयुद्धंद्रष्टुंस्वर्गादिहागतः ६१ पूतनानिधनादीनिकर्माणितवदृष्टवान्॥ अहंत्वनेनगोविंदकर्मणापरितोषितः
६२ हयादस्मान्महेंद्रोपिबिभेतिबलसूदनः॥ कुर्वाणाच्चवपुर्घोरंकेशिनोदुष्टचेतसः ६३

॥ ५५ ॥ हताअनेनेतिच्छेदः संधिरार्षः ॥ ५६ ॥ संवर्त्तकंप्रलयं ॥ ५७ ॥ ५८ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

१ कदलीकृतः इति पाठान्तरम् । २ तद्गतेन इति पाठान्तरम् ।

॥ ६४ ॥ केशिनंवातिहिनस्तीतिकेशवः मत्वर्थीयलोपअ[illegible] ॥ ६५ ॥ कृत्यशेषंकंसवधादि ॥ ६६ ॥ ६७ ॥ अभ्याशोसमीपे ॥ ६८ ॥ ६९ ॥ आभितःसर्वतः ॥ ७०॥
॥ ७१ ॥ ७२ ॥ एषमेइतिसंदेशज्ञापकंवाक्यंश्रुतिभि[illegible]रुक्तमपिइतःप्रभृतिख्यातिमेष्यति श्रुतयश्च अहश्चकृष्णमहरर्जुनंचविवर्तेतेरजसीवेद्याभिः वैश्वानरोजायमानो



नराजावातिरज्ज्योतिषाग्निस्तमांसीत्याद्याः अहःयुद्धयज्ञः [illegible] गंअनुएकः विवर्ततेविशेषेणजायते तथाअर्जुनंअनुअहर्विवर्तते एकश्चकारोन्वाचये अपरःसमुच्चये तेनकृष्णार्जु
नाभ्यांविभज्यसमुच्चित्यवाक्रियमाणौद्वौयुद्धयज्ञौविवर्तेतेइत[illegible]ः उभेअप्यहनीरजसीरजोगुणकार्येवेद्याभिःलब्धुंयोग्याभिश्रीभिर्हेतुभूताभिः लक्ष्म्यर्थंयुद्धानिजायंतइत्यर्थः ताभ्यां

यत्त्वयापाटितोदेहोभुजेनायतपर्वणा ॥ ए[illegible]स्यमृत्युरंतायविहितोविश्वयोनिना ६४ यस्मात्त्वयाहतःकेशीतस्मान्मच्छासनंशृणु ॥
केशवोनामनाम्नात्वंख्यातोलोकेभविष्यसि ६५ स्वस्त्यस्तुभवतोलोकेसाधुयाम्यहमाशुगः ॥ कृत्यशेषंचतेकार्यंशक्तस्त्वमसिमाचि
रम् ६६ त्वयिकार्यांतरगतेनराइवदिवौक[illegible]ः ॥ विडंबयंतःक्रीडंतिलीलांत्वद्बलमाश्रिताः ६७ अभ्याशेवर्ततेकालोभारतस्याहवोदधेः ॥
हस्तप्राप्तानियुद्धानिराज्ञांत्रिदिवगामिनाम् ६८ पंथानश्शोधिताव्योम्निविमानारोहणोर्ध्वगाः ॥ अवकाशाविभज्यंतेशक्रलोकेमही
क्षिताम् ६९ उग्रसेनसुतेशांतेपदस्थेत्वयिकेशव ॥ अभितस्तन्महद्युद्धंभविष्यतिमहीक्षिताम् ७० त्वांचाप्रतिमकर्माणंसंश्रयिष्यं
तिपांडवाः ॥ भेदकालनरेंद्राणांपक्षग्राहोभविष्यसि ७१ त्वयिराजासनस्थेहिराजश्रियमनुत्तमाम् ॥ शुभांत्यक्ष्यंतिराजानस्त्वत्प्र
भावान्नसंशयः ७२ एषमेकृष्णसंदेशश्श्रुतिभिःख्यातिमेष्यति ॥ देवतानांदिविस्थानांजगतश्चजगत्पते ७३ दृष्टंमेभवतःकर्मदृष्ट
श्चासिमयाप्रभो ॥ कंसेभूयस्समेष्यामिसाधितेसाधुयाम्यहम् ७४ एवमुक्त्वातुसतदानारदःखंजगामह ॥ नारदस्यवचश्श्रुत्वा
देवसंगीतयोनिनः ७५ तथेतिससमाभाष्यपुनर्गोपान्त्समासदत् ॥ गोपाःकृष्णंसमासाद्यविविशुर्व्रजमेवह ७६ ॥ ॥ इतिश्रीम
हाभारतेखिलेषुहरिवंशेविष्णुपर्वणिकेशिवधेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

चसहायाभ्यांवैश्वानरोविश्वेषांनृणांइष्टफलप्रापकोधर्मःस्वयमदृष्टरूपोपिजायमानआविर्भवन्वाशब्दइवार्थे राजाजायमानःसन्तमांसिअधर्मरूपाणिअसुरांधकाराणिअवातिरत्
तिरस्कृतवान् केनअग्निर्ज्योतिषे अग्निनाज्योतिषेत्यर्थः खांडवदाहेअग्निनादत्तेचक्रगांडीवेतद्रूपेणज्योतिषेतिभावः ॥ ७३॥ साधितेहते ॥ ७४ ॥ संगीतस्ययोनिर्गंधर्वशास्त्रं
तद्वतःदिव्यसंगीतयोनिनः ॥ ७५ ॥ ७६ ॥ ॥ इतिश्रीह० वि० टी० चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

पंचविंशेत्वथाध्यायेकृष्णस्मरणविक्लव ॥ नानाभिलाषआयातःसायंव्रजमितीर्यते ॥ १ ॥ अथास्तमिति ॥ १ ॥ सत्सुयाज्ञिकेषुप्रादुष्कृताग्निषुसायमग्निहोमार्थप्रकटीकृताग्निषु ॥ २
घोषवासिषुघोषगतेषुसुप्तेषुअव्यक्तशब्देशुकबालकादिषुइतिशेषः ॥ ३ ॥ शक्रगोपाह्वयामोदेइंद्रगोपानामातपतप्तानामत्यंतंसुखकरे अभ्यासतस्करे स्वाधायानिवर्तके आसन्नांध
कारेवा ॥ ४ ॥ अधिश्रयणं अग्निहोत्रार्थस्यपयसोग्नौस्थापनं वन्यैःनीवाराद्यैःवैखानसैर्वानप्रस्थैः ॥ ५ ॥ ६ ॥ प्रकीर्णाविस्तृताःदामन्योदीर्घगोबंधनरज्जवोयैस्तेषु काल्यमानेबंध
नार्थेनियम्यमाने ॥ ७ ॥ करीषेषु शुष्कगोमयचूर्णेषु ॥ ८ ॥ ९ ॥ १० ॥ सौम्यैंदौश्वोभूतेमृगशिरसिचंद्रेउपस्थितेसति तद्धिकंसस्यजन्मनक्षत्रं राहुकुजधूमकेतुभिश्चित्रास्थैः
प्रागुक्तरीत्यासर्वतोभद्रचक्रेविद्धंसत् चंद्रयोगेमृत्युकरं तेनउदितेमृत्युयोगेसद्यः परेद्युःकालांतरेवामृत्युर्भवतीतिअभिप्रेत्य पुराणांतरेउक्तं रौद्रेतद्व्रजकंहत्वादित्येकंसोनिपातितइति

वैशंपायनउवाच ॥ अथास्तंगच्छतितदामंदरश्मौदिवाकरे ॥ संध्यारक्ततलेव्योम्निशशांकेपांडुमंडले १ नीडस्थेषुविहंगेषुसत्सुप्रादु
ष्कृताग्निषु ॥ ईषत्तमस्संवृतासुदिक्षुसर्वासुसर्वशः २ घोषवासिषुसुप्तेषुवाशंतीषुशिवासुच ॥ नक्तंचरेषुहृष्टेषुपिशिताशनकांक्षिषु ३
शक्रगोपाह्वयामोदेप्रदोषेभ्यासतस्करे ॥ संध्यामयीमिवगुहांसंप्रतिष्ठेदिवाकरे ४ अधिश्रयणवेलायांप्राप्तायांगृहमेधिनाम् ॥ वन्यैर्वै
खानसैर्मंत्रैर्हूयमानेहुताशने ५ उपावृत्तासुवैगोषुदुह्यमानासुचव्रजे ॥ असकृद्व्याहरंतीषुबद्धवत्सासुधेनुषु ६ प्रकीर्णदामनीकेषुगा
स्तथैवाह्वयत्सुच ॥ सनिनादेषुगोपेषुकाल्यमानेचगोधने ७ करीषेषुप्रक्लृप्तेषुदीप्यमानेषुसर्वशः ॥ काष्ठभारानतस्कंधैर्गोपैरभ्यागतै
स्तथा ८ किंचिदभ्युद्यतेसोमेमंदरश्मौविराजति ॥ ईषद्विगाहमानायांरजन्यांदिवसेगते ९ प्राप्तेदिनव्युपरमेप्रवृत्तेक्षणदामुखे ॥
भास्करेतेजसिगतेसौम्येतेजस्युपस्थिते १० अग्निहोत्राकुलेकालेसौम्यैंदौसमुपस्थिते ॥ अग्नीषोमात्मकेसंधौवर्तमानेजगन्मये ११
पश्चिमेनाग्निदीप्तेनपूर्वेणोत्पलवर्चसा ॥ दग्धाद्रिसदृशेव्योम्निकिंचित्तारागणाकुले १२ वयोभिर्वासमुशतांबंधुभिश्चसमागमम् ॥ शंस
द्भिस्स्यंदनेनाशुप्राप्तोदानपतिर्व्रजम् १३

संधिरत्रार्थःअग्नीषोमात्मकेरात्रौतयोरेवप्रकाशमानत्वात्संधौसंबंधेजगन्मयइतितयोरेवभोक्तृभोग्यात्मकत्वंदर्शितम् ॥ ११ ॥ पश्चिमेनपश्चिमतःअग्निवद्दीप्तेन पूर्वेणपूर्वतःउत्पल
वद्रक्तेनभागेन दग्धाद्रिसदृशेउभयतोदह्यमानाद्रितुल्ये सूर्यास्तस्यचंद्रोदयस्यचासन्नसमयत्वात् ॥ १२ ॥ वासंगृहं उशतांकामयमानानांपांथानांबंधुभिःसहसमागमंशंसद्भिर्वयो
भिःपक्षिभिःसहदानपतिरक्रूरोव्रजंप्राप्तः वेदेतु देवानादूतःपूरुधःप्रसूतोनागान्नोवोचतुसर्वतातेत्यादिः सदासुगःपितुमानस्तुपंथाइतिउद्रायोअश्यांसदनंपुरुक्षोरित्यक्रूरस्यमनो
रथोवर्णितःदेवानांकंसंहंतुकामानांकंसवागाद्यभिमानिनामग्न्यादीनामहंदूतोस्मिकृष्णंप्रतिगंतुंप्रस्थितोस्मिपुरुधःबहुप्रकारैःप्रसूतोनिसृष्टः कंसेननोस्मान्प्रतिअनागान्निष्पापा

नूसर्वतातासर्वस्यविस्तारकर्ताहरिःवोचतुवदतु अस्माभिःसहसंभाषणंकरोतु तथापंथाःअपिसदासुगःसुगम्यःपितुमान् अन्नवान् अस्तुमार्गेप्यंतरायोमाभूदित्यर्थः पुरुक्षोबहूनांक्षयं कर्तुं सदनंगृहंअश्यांव्याप्नुयां उद्रायोउत्कटसंपदः इतिमंत्रपदानामर्थः ॥ १३ ॥ सान्निध्यंस्थानम् ॥ १४ ॥ १५ ॥ १६॥ १७ ॥ प्रव्याहरतउक्तवान् उत्तानशायिनंकल्पांतेबालं वटपत्रशायिनं श्रियात्रैलोक्याक्रमणलक्ष्म्यावामनंबटुम् ॥ १८ ॥ अव्यक्तयौवनंवयःसंधिगतम् ॥ १९ ॥ २० ॥ रहस्यात्माऔपनिषदःपुरुषःअग्र्यस्यप्रथमपूजादेःभाजनंपात्रं

प्रविशन्नेवपप्रच्छसान्निध्यंकेशवस्यसः ॥ रौहिणेयस्यचाक्रूरोनंदगोपस्यचासकृत् १४ सनंदगोपस्यगृहंवासायविबुधोपमः ॥ अवतीर्यततोयानात्प्रविवेशमहाबलः १५ हर्षपूर्णेनवक्त्रेणसाश्रुनेत्रेणचैवहि ॥ प्रविशन्नेवचद्वारिददर्शादोहनेगवाम् १६ वत्समध्येस्थितंकृष्णंसवत्सामिवगोवृषम् ॥ सतंहर्षपरीतेनवचसागद्गदेनवै १७ एहिकेशवताततिप्रव्याहरतधर्मवित् ॥ उत्तानशायिनंदृष्ट्वापुनर्दृष्ट्वाश्रियावृतम् १८ अव्यक्तयौवनंकृष्णमक्रूरःप्रशशंसह ॥ अयंसपुंडरीकाक्षस्सिंहशार्दूलविक्रमः १९ संपूर्णजलमेघाभःपर्वतप्रवराकृतिः ॥ मृधेष्वधर्षणीयेनसश्रीवत्सेनवक्षसा ॥ द्विषन्निधनदक्षाभ्यांभुजाभ्यांसाधुभूषितः २० मूर्तिमान्सरहस्यात्माजगतोग्र्यस्यभाजनम् ॥ गोपवेषधरोविष्णुरुदग्राग्र्यतनूरुहः २१ किरीटलांछनेनापिशिरसाछत्रवर्चसा ॥ कुंडलोत्तमयोग्याभ्यांश्रवणाभ्यांविभूषितः २२ हारार्हेणचपीनेनसुविस्तीर्णेनवक्षसा ॥ द्वाभ्यांभुजाभ्यांवृत्ताभ्यांदीर्घाभ्यामुपशोभितः २३ स्त्रीसहस्रोपचर्येणवपुषामन्मथाधिना ॥ पीतेवसानोवसनेसोयंविष्णुस्सनातनः २४ धरण्याश्रयभूताभ्यांचरणाभ्यामरिंदमः ॥ त्रैलोक्याक्रांतिभूताभ्यांभुविपद्भ्यांव्यवस्थितः २५ रुचिराग्रकरश्चास्यचक्रांकितइवेक्षते ॥ द्वितीयउद्यतश्चापिगदासंयोगमिच्छति २६ अवतीर्णोभवायेहप्रथमंपदमात्मनः ॥ शोभतेद्यभुविश्रेष्ठस्त्रिदशानांधुरंधरः २७ अयंभविष्येकथितोभविष्यकुशलैर्नरैः ॥ गोपालोयादवंवंशंक्षीणंविस्तारयिष्यति २८ तेजसायादवाश्चास्यशतशोथसहस्रशः ॥ वंशमापूरयिष्यंतिह्योघाइवमहार्णवम् २९

उदग्राग्र्यतनूरुहउर्ध्वाग्राःश्रेष्ठाश्चकेशायस्य भक्तदर्शनमात्रेणरोमांचितगात्रइत्यर्थः ॥२१ ॥२२ ॥२३ ॥ मन्मथाधिना मन्मथःआधीयतेऽस्मिन्निितितथाभूतेन यौवनपौगंडसंधिगतेनेत्यर्थः ॥२४॥धरणीति येनप्रागुक्तेनएकार्णवेउत्तानशायिनापादाग्रेणैवपृथ्वीधृता तथावटुनापादाभ्यांक्रमणाभ्यांलोकांतरसहिताआक्रांतासाइदानींतेनवयःसंधिगतेनअस्मदादिनेवश्रीयतइत्यत्यंतमाश्चर्यमित्यर्थः ॥२५॥ अग्रकरोदक्षिणहस्तःद्वितीयोवामः ॥२६॥ आत्मनोविश्वतैजसप्राज्ञतुरीयाख्यापादचतुष्टयवत् उत्पत्तिक्रमापेक्षयाप्रथमंपदंनिर्गुणंब्रह्मेत्यर्थः ॥२७॥ २८ २९॥

॥ ३० ॥ ३१ ॥ ३२॥ जित्वात्रैलोक्यमितिशेषः ॥३३॥ प्रसृष्टस्यवैरस्यगाधः पारोयंशमकामादीनामन्योविरोधोऽस्मिन्प्रातेनश्यतीत्यर्थःअतएवायंप्रश्नोपनिषदिषड्भिःप्रश्नैःश्रुतः तत्पूर्वकंप्रतिपादितः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांपंचविंशोऽध्यायः ॥ २५ ॥ छ ॥

अस्येदंशासनेसर्वंजगत्स्थास्यतिशाश्वतम् ॥ निहतामित्रसामंतस्फीतंकृतयुगेतथा ३० अयमास्थायवसुधांस्थापयित्वाजगद्वशे ॥ राज्ञांभविष्यत्युपरिनचराजाभविष्यति ३१ नूनंत्रिभिःक्रमैर्जित्वायथानेनप्रभुःकृतः ॥ पुरापुरंदरोराजादेवतानांत्रिविष्टपे ३२ तथैववसुधांजित्वाजितपूर्वांत्रिभिःक्रमैः ॥ स्थापयिष्यतिराजानमुग्रसेनंनसंशयः ३३ प्रसृष्टवैरगाधोयंप्रश्नैश्चबहुभिश्श्रुतः ॥ ब्राह्मणैर्ब्रह्मवादैश्चपुराणोयंहिगीयते ३४ स्पृहणीयोहिलोकस्यभविष्यतिचकेशवः ॥ तथाह्यस्योत्थिताबुद्धिर्मानुष्यमुपजीवितुम् ३५ अहंत्वस्याद्यवसतिंपूजयिष्येयथाविधि ॥ विष्णुत्वंमनसाचैवपूजयिष्यामिमंत्रवत् ३६ यच्चज्ञातिपरिज्ञानंप्रादुर्भावश्चवैनृषु ॥ अमानुषंवेद्मिचैनंयेचान्येदिव्यचक्षुषः ३७ सोहंकृष्णेनवैरात्रौसंमंत्र्यविदितात्मना ॥ सहानेनगमिष्यामिसव्रजोयदिमंस्यते ॥ ३८ एवंबहुविधंकृष्णंदृष्ट्वाहेत्वर्थकारणैः ॥ विवेशनंदगोपस्यकृष्णेनसहसंसदम् ३९ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिअक्रूरागमनंनामपंचविंशोऽध्यायः २५॥ छ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ सनंदगोपस्यगृहंप्रविष्टस्सहकेशवः ॥ गोपवृद्धान्समानीयप्रोवाचामितदक्षिणः १ कृष्णंचैवाब्रवीत्प्रीत्यारौहिणेयेनसंगतम् ॥ श्वःपुरींमथुरांतातगमिष्यामसुखायवै २ यास्यंतिचव्रजास्सर्वेगोपालास्सपरिग्रहाः ॥ कंसाज्ञयासमुचितंकरमादायवार्षिकम् ३ समृद्धस्तत्रकंसस्यभविष्यतिधनुर्महः ॥ तंद्रक्ष्यथसमृद्धंचस्वजनैश्चसमेष्यथ ४ पितरंवसुदेवंचसततंदुःखभाजनम् ॥ दीनंपुत्रवधश्रांतंयुवामद्यसमेष्यथ ५ सततंपीड्यमानंचकंसेनाशुभबुद्धिना ॥ दशांतेशोषितंवृद्धंदुःखैश्शिथिलतांगतम् ६ कंसस्यभयसंत्रस्तंभवद्भ्यांचविनाकृतम् ॥ दह्यमानंदिवारात्रौसोत्कंठेनांतरात्मना ७ तांचद्रक्ष्यसिगोविंदपुत्रैरमृदितस्तनीम् ॥ देवकींदेवसंकाशांसीदंतींविहतप्रभाम् ८ पुत्रशोकेनशुष्यंतींत्वद्दर्शनपरायणाम् ॥ वियोगशोकसंतप्तांविवत्सामिवसौरभीम् ९

षड्विंशतितमेध्यायेसर्वगोपनिमंत्रणं ॥ दर्शनंवैष्णवंचांभस्यक्रूरस्येतिवर्ण्यते ॥१॥ सनंदगोपस्य अमितदक्षिणोदानपतिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ दशांतेवार्द्धक्येशोषितंक्षीणरक्तमांसं यतोवृद्धंजराग्रस्तम् ॥ ६ ॥ ७ ॥ पुत्रैरमृदितस्तनीमितिकंसापराधंसद्योजातशिशुवधरूपंसूचयतिक्रोधोद्दीपनाय ॥ ८ ॥ ९ ॥

३४ उपप्लुतेक्षणांदीनांनित्यंमलिनवाससम् ॥ स्वर्भानुवदनग्रस्तांशशांकस्यप्रभामिव १० त्वद्दर्शनपरांनित्यंतवागमनकांक्षिणीम् ॥ त्व अ०२६
त्प्रवृत्तेनशोकेनसीदंतींवैतपस्विनीम् ११ त्वत्प्रलापेष्वकुशलांत्वयाबाल्येवियोजिताम् ॥ अरूपज्ञांतवविभोवक्त्रस्यास्येंदुवर्चसः ॥
१२ यदित्वांजनयित्वासादेवकीतातप्यते ॥ अपत्यार्थोनुकस्तस्यावरंह्येवानपत्यता १३ अपुत्राणांहिनारीणामेकश्शोकोविधीयते ॥
सपुत्रात्वफलेपुत्रेधिक्प्रजातेनतप्यते १४ त्वंतुशक्रसमःपुत्रोयस्यास्त्वसदृशोगुणैः ॥ परेषामप्यभयदोनसाशोषितुमर्हति १५ वृ
द्धौतवांबपितरौपरभृत्यत्वमागतौ ॥ भर्त्सितौत्वत्कृतेनित्यंकंसेनाशुभबुद्धिना १६ यदितेदेवकीमान्याप्टथिवीवात्मधारिणी ॥ तांशोकस
लिलेमग्नामुत्तारयितुमर्हसि १७ तंचवृद्धंप्रियसुतंवसुदेवंसुखोचितम् ॥ पुत्रयोगेनसंयोज्यकृष्णधर्ममवाप्स्यसि १८ यथानागस्सुदु
र्वृत्तोदमितोयमुनाह्रदे ॥ विमूलस्सकृतश्शैलोयथावैभूधरस्त्वया १९ दर्पोत्सिक्तश्चबलवानरिष्टोविनिपातितः ॥ परप्राणहरःकेशीदुष्टा
त्माचहयोहतः २० एतेनैवप्रयत्नेनवृद्धावुद्धृत्यदुःखितौ ॥ यथाधर्ममवाप्नोषितत्कृष्णपरिचिंत्यताम् २१ निर्भर्त्स्यमानौयैर्दृष्टःपिताते
कंससंसदि ॥ तेसर्वेचक्रुरश्रूणिनेत्रैर्दुःखान्विताभृशम् २२ गर्भावकर्तनादीनिदुःखानिसुबहून्यपि ॥ मातातेदेवकीकृष्णकंसस्यसहतेवशा
२३ मातापितृभ्यांसर्वेणजातेनतनयेनवै ॥ ऋणंवैप्रतिकर्तव्यंयथायोगमुदाहृतम् २४ एवंतेकुर्वतःकृष्णमातापित्रोरनुग्रहम् ॥ परित्य
जेतांतौशोकंस्याच्चधर्मस्तवानघ २५ ॥ वैशंपायनउवाच ॥ कृष्णस्सुविदितार्थोवैतमाहामितविक्रमम् ॥ बाढमित्येवतेजस्वीनचक्रोधव
शंगतः २६ तेचगोपास्समागम्यनंदगोपपुरःसराः ॥ अक्रूरवचनंश्रुत्वाचेलुःकंसस्यशासनात् २७ गमनायचतेसज्जाबभूवुर्व्रजवासिनः
सज्जंचोपायनंकृत्वागोपवृद्धाःप्रतस्थिरे २८ करंचानडुहस्सर्पिर्महिषांश्चौपनायिकान् ॥ यथासारंयथायूथमुपानीयपयोदधि २९ तंस
ज्जयित्वाकंसस्यकरंचोपायनानिच ॥ तेसर्वेगोपपतयोगमनायोपतस्थिरे ३० अक्रूरस्यकथाभिश्चसहकृष्णेनजाग्रतः ॥ रौहिणेयस्ततो ३४
यस्यसानिशाव्यत्यवर्तत ३१ ततःप्रभातेविमलेपक्षिव्याहारसंकुले ॥ नैशाकरेरश्मिजालेक्षणदाक्षयसंहृते ३२

चेलुःप्रस्थानंचक्रुः ॥ २७ ॥ २८ ॥ औपनायिकान् उपहारार्थान् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ नाशयतेअदर्शनंनयति वपुस्तेजः ॥ ३५ ॥ ३६ ॥ ३७ ॥ गुरुकंभारयुक्तंभांडंउपकरणसामग्री ॥ ३८ ॥ ३९ ॥ ४० ॥ हयभांडेअश्वभूषणादौ

नभस्यरुणसंस्तीर्णेपर्यस्तेज्योतिषांगणे ॥ प्रत्यूषपवनासारैःक्लेदितेधरणीतले ३३क्षीणाकारासुतारासुसुप्तनिष्प्रतिभासुच ॥ नैशमंतर्दधेरूपमुद्गच्छतिदिवाकरे ३४ शीतांशुश्शांतकिरणोनिष्प्रभस्समपद्यत ॥ एकोनाशयतेरूपमेकोवर्द्धयतेवपुः ३५ गोभिश्चसमकीर्णासुव्रजनिर्याणभूमिषु ॥ मंथनावर्तपूर्णेषुगर्गरेषुनदत्सुच ३६ दामभिर्दम्यमानेषुवत्सेषुतरुणेषुच ॥ गोपैरापूर्यमाणासुघोषरथ्यासुसर्वशः ३७ तत्रैवगुरुकंभांडंशकटारोपितंबहु ॥ त्वरिताःपृष्ठतःकृत्वाजग्मुस्स्यंदनवाहनाः ॥ ३८ ॥ कृष्णोथरौहिणेयश्चसचैवामितदक्षिणः ॥ त्रयोरथगताजग्मुस्त्रिलोकपतयोयथा ३९ अथाहकृष्णमक्रूरोयमुनातीरमाश्रितः ॥ स्यंदनंचात्ररक्षस्वयत्नंचकुरुवाजिषु ४० हयेभ्योयवसंदत्त्वाहयभांडेरथेतथा ॥ प्रगाढंयत्नमास्थायक्षणंतातप्रतीक्ष्यताम् ॥ ४१ ॥ यमुनायाह्रदेह्यस्मिंस्तोष्यामिभुजगेश्वरम् ॥ दिव्यैर्भागवतैर्मंत्रैस्सर्वलोकप्रभुंयतः ॥ ४२ ॥ गुह्यंभागवतंदेवंसर्वलोकस्यभावनम् ॥ श्रीमत्स्वस्तिकमूर्द्धानंप्रणमिष्यामिभोगिनम् ॥ सहस्रशिरसंदेवमनंतंनीलवाससम् ४३ धर्मंदेवस्यतस्याथयद्विषंप्रभविष्यति ॥ सर्वंतदमृतप्रख्यमशिष्याम्यमरोयथा ४४ स्वस्तिकायतनंदृष्ट्वाद्विजिह्वंश्रीविभूषितम् ॥ समाजस्तत्रसर्पाणांशांत्यर्थंवैभविष्यति ४५ आस्तांमांसमुदीक्षंतौभवंतौसंगतावुभौ ॥ निवृत्तोभुजगेंद्रस्ययावदस्मिह्रदोत्तमात् ४६ तमाहकृष्णस्संहृष्टोगच्छधर्मिष्ठमाचिरम् ॥ आवांखलुनशक्तौस्वस्त्वयाहीनावुपासितुम् ४७ सह्रदेयमुनायास्तुममज्जामितदक्षिणः ॥ रसातलेसदद्दशेनागलोकमिमंयथा ४८ तस्यमध्येसहस्रास्यंहेमतालोच्छ्रितध्वजम् ॥ लांगलासक्तहस्ताग्रंमुसलोपाश्रितोदरम् ४९ असितांबरसंवीतंपांडुरंपांडुरासनम् ॥ कुंडलैकधरंमत्तंसुप्तमंबुरुहेक्षणम् ५० भोगोत्करासनेशुभ्रेस्वेनदेहेनकल्पिते ॥ स्वासीनंस्वस्तिकाभ्यांचवराहाभ्यांमहीधरम् ५१ किंचित्सव्यापवृत्तेनमौलिनाहेमचूलिना ॥ जातरूपमयैःपद्मैर्मालयाच्छन्नवक्षसम् ५२ रक्तचंदनदिग्धांगंदीर्घबाहुमरिंदमम् ॥ पद्मनाभसिताभ्राभंभाभिर्ज्वलिततेजसम् ५३

॥ ४१ ॥ भुजगेश्वरंशेषमनंताख्यम् ॥ ४२ ॥ ४३ ॥ धर्मंदेवस्यधर्माधिष्ठातुःअनुग्रहवशात्विषस्याप्यमृतम् ॥ ४४॥ स्वस्तिकस्यायतनभूतंस्वस्तिकायतनंशेषंतत्रशेषसमीपे ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ तस्योत्संगइत्यादिग्रंथः सप्ततेसप्तशाकिनएकमेकाशताददुः यमुनायामधिश्रुतमुद्राधोगव्यंमृजेनिराधोअश्व्यंमृजेइत्येतंमंत्रमुपबृंहयतिमं
त्रार्थस्तु मारुतंसूक्तंअघमर्षणकालेभगवंतंदृष्ट्वातद्देवतांमरुतंएवंस्तौति सप्तसप्तएकोनपंचाशत्शाकिनः शक्नुवंतितेइतिवाशक्नुवंत्येतैरितिवाशाकिनः शक्तिमंतःशक्तिप्रदावा
मरुतः एकमेकाप्रत्येकंशताशतमैश्वर्यंभवतीतियास्कः ऐश्वर्याणिददुः यतोहंश्रितंएवा स्यपरमासंपदितिवेदशिरोभ्यआकर्णितंराधोधनंसूत्रांतर्यामिरूपंयमुनायांअधिमध्ये मृजे

ददर्शभोगिनांनाथंस्थितमेकार्णवेश्वरम् ॥ पूज्यमानंद्विजिह्वैर्वासुकिप्रमुखैःप्रभुम् ५४ कंबलाश्वतरौनागौतौचामरकरावुभौ ॥ अवीजयेतांतंदेवंधर्मासनगतंप्रभुम् ५५ तस्याभ्याशगतोभातिवासुकिःपन्नगेश्वरः ॥ वृतोन्यैस्सचिवैस्सर्पैःकर्कोटकपुरस्सरैः ५६ तंघटैःकांचनैर्दिव्यैःपंकजच्छन्नमस्तकैः। राजानंस्नापयामासुस्स्नातमेकार्णवांबुभिः ५७ तस्योत्संगेघनश्यामंश्रीवत्साच्छादितोरसम्॥ पीतांबरधरंविष्णुंसूपविष्टंददर्शह ५८ अपरंचैवसोमेनतुल्यसंहननंप्रभुम् ॥ संकर्षणमिवासीनंतंदिव्यंविष्टरंविना ५९ सकृष्णंतत्र सहसाव्याहर्तुमुपचक्रमे ॥ तस्यसंस्तंभयामासवाक्यंकृष्णस्स्वतेजसा ६० सोनुभूयभुजंगानांतंभागवतमव्ययम् ॥ उदतिष्ठत्पुन स्तोयाद्विस्मितोमितदक्षिणः ६१ सतौरथस्थावासीनौतत्रैवबलकेशवौ ॥ निरीक्ष्यमाणावन्योन्यंददर्शाद्भुतरूपिणौ ६२ अथामज्ज त्पुनस्तत्रतदाक्रूरःकुतूहलात् ॥ इज्यतेयत्रदेवोसौनीलवासाःसिताननः ६३ तथैवासीनमुत्संगेसहस्रास्यधरस्यवै ॥ ददर्शकृष्णम क्रूरःपूज्यमानंतदाप्रभुम् ६४ भूयश्चसहसोत्थायतंमंत्रंमनसाजपन् ॥ रथंतेनैवमार्गेणजगामामितदक्षिणः ६५ तमाहकेशवो हृष्टःस्थितमक्रूरमागतम् ॥ कीदृशंनागलोकस्यवृत्तंभागवतेह्रदे ६६ चिरंचभवताकालोव्याक्षेपेणविलंबितः ॥ मन्येदृष्टंत्वयाश्चर्यं हृदयंतेयथाचलम् ६७ प्रत्युवाचसतंकृष्णमाश्चर्यंभवताविना ॥ किंभविष्यतिलोकेषुस्थावरेषुचरेषुच ६८ तत्राश्चर्यंमयादृष्टंकृ ष्णयद्भुविदुर्लभम्॥ तदिहापियथातत्रपश्यामिचरमामिच ६९ संगतश्चापिलोकानांआश्चर्येणेहरूपिणा ॥ अतःपरतरंकृष्णनाश्चर्यं द्रष्टुमुत्सहे ७० तदागच्छगमिष्यामःकंसराजपुरींप्रभो ॥ यावन्नास्तंव्रजत्येषदिवसांतेदिवाकरः ७१

मृगयामिपश्यामीत्यर्थः तदेवराधःउत्ऊर्ध्वंगव्यंगोषुसूर्यरश्मिषुस्थितंगव्यंमृजेतथाअश्व्यंअश्ववतिरथेस्थितंचदेवरानिमृजेअधोपिभूलोकेपश्यामीत्यर्थः॥ ५८ ॥ विष्टरंआसनं
विनाभूमावेव ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ व्याक्षेपेणव्यासंगेन ॥ ६७ ॥ ६८ ॥ ६९ ॥ रूपिणामूर्तिमता ॥ ७० ॥ ७१ ॥

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ५ ॥ सप्तविंशेस्मिन्नीशेनरजकोनिहतःपुरा ॥ कुब्जास्वानुग्रहोभंगोधनुषश्चात्रवर्ण्य
ते ॥ १ ॥ तेतुइतिप्रायन्मथुरांप्राप्ताः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ यास्यावेतिलोडुत्तमद्विवचनं आवामितिच्छेदः यास्यावोवामितिपाठंप्रकल्प्यआकारलोपआ

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिअक्रूरकृतनागलोककथनंनामषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ५ ॥ ॥ वैशंपायनउवाच ॥
तेतुयुक्त्वारथवरंसर्वएवामितौजसः॥ कृष्णेनसहिताप्रायंस्तथासंकर्षणेनच १ आसेदुस्तेपुरींरम्यांमथुरांकंसपालिताम्॥ विविशुस्तेपुरीं
रम्यांकालेरक्तदिवाकरे २ तौतुस्वभवनंवीरौकृष्णसंकर्षणावुभौ ॥ प्रवेशितौबुद्धिमताह्यक्रूरेणार्कवर्चसौ ३ तावाहवरवर्णाभौभी
तोदानपतिस्तदा ॥ त्यक्तव्यातातगमनेवसुदेवगृहेस्पृहा ४ युवयोर्हिकृतेवृद्धःकंसेनसनिरस्यते ॥ भर्त्स्यतेचदिवारात्रौनेहस्थातव्य
मित्यपि ५ तद्युवाभ्यांहिकर्तव्यंपित्रर्थंसुखमुत्तमम् ॥ यथासुखमवाप्नोतितद्वैकार्यंहितान्वितम् ६ तमुवाचततःकृष्णोयास्यावावाम
तर्कितौ ॥ प्रेक्षंतौमथुरांवीरराजमार्गंचधार्मिक ॥ तस्यैवतुगृहंसाधोगच्छावोयदिमन्यसे ७ ॥ वैशंपायनउवाच ॥ अक्रूरोपिनम
स्कृत्यमनसाकृष्णमव्ययम् ॥ जगामकंसपार्श्वंतुप्रहृष्टेनांतरात्मना ८ अनुशिष्टौचतौवीरौप्रस्थितौप्रेक्षकावुभौ ॥ आलानाभ्यामि
वोन्मुक्तौकुंजरौयुद्धकांक्षिणौ ९ तौतुमार्गगतंदृष्ट्वारजकंरंगकारकम् ॥ अयाचेतांततस्तौतुवासांसिरुचिराणिवै १० रजकःसतुतौप्राह
युवांकस्यवनेचरौ ॥ राजवासांसियौमौढ्याद्याचेतांनिर्भयावुभौ ११ अहंकंसस्यवासांसिनानादेशोद्भवानिवै ॥ कामरागाणिशत
शोरंजयामिविशेषतः १२ युवांकस्यवनेजातौमृगैःसहविवर्द्धितौ ॥ जातरागाविदंदृष्ट्वारक्तमाच्छादनंबहु १३ अहोवांजीवितंत्यक्तं
यौभवंताविहागतौ ॥ मूर्खौप्राकृतविज्ञानौवासोयाचितुमिच्छथः १४ तस्मैचुकोपवैकृष्णोरजकायाल्पमेधसे ॥ प्राप्तारिष्टायमू
र्खायसृजतेवाङ्मयंविषम् १५ तलेनाशनिकल्पेनसतंमूर्द्धन्यताडयत् ॥ सगतासुःपपातोर्व्यांरजकोव्यस्तमस्तकः १६ तंहतंपरिदेवंत्यो
भार्यास्तस्यविचुक्रुशुः ॥ त्वरितंमुक्तकेश्यश्चजग्मुःकंसनिवेशनम् १७ तावप्युभौसुवसनौजग्मतुर्माल्यकारणात् ॥ वीथींमाल्या
पणानांवैगंधाघ्रातौद्विपाविव १८

र्षइतिप्रांचोव्याचख्युः तस्यैवकंसस्यैव ॥ ७ ॥ ८ ॥ अनुशिष्टौ आज्ञप्तौ आलानाभ्यांगजबंधनाभ्यां ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ वांयुवयोःत्यक्तंनष्टम् ॥ १४॥
॥ १५ व्यस्तःपृथक्भूतःमस्तकोयस्य ॥ १६ ॥ परिदेवंत्यःशोचंत्यः ॥ १७ ॥ १८ ॥

गुणकोग्रथकोनामतस्तुश्रीदामाख्यः ॥ १९ ॥ २० ॥ भवतोःस्वं भवदीयमेतद्धनम् ॥ २१ ॥ मत्संभवामत्प्रीणनप्रभावा ॥ २२ ॥ २३ ॥ उत्तरंकर्तव्यंकंसभयान्नज्ञा तवान्मौढ्यादित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ तीर्थगौजलांतर्गतौ अतएवतत्पंकेनदिग्धांगौ ॥ ३४ ॥ स्थग



गुणकोनामतत्रासीन्माल्यवृत्तिःप्रियंवदः ॥ प्रभूतमाल्यापणवाँल्लक्ष्मीवान्प्रियदर्शनः १९ तंकृष्णश्श्लक्ष्णयावाचामाल्यार्थमाभि सृष्टया ॥ देहीत्युवाचतत्कालेमालाकारमकातरम् २० ताभ्यांप्रीतोददौमाल्यंप्रभूतंमाल्यजीवनः ॥ भवतोःस्वमिदंचेतिप्रोवाचप्रिय दर्शनौ २१ प्रीतःसुमनसाकृष्णोगुणकायवरंददौ ॥ श्रीस्त्वांमत्संभवासौम्यधनौघैरभिपत्स्यते २२ सलब्ध्वावरमव्यग्रोमाल्यवृ त्तिरधोमुखः ॥ कृष्णस्यपतितोमूर्ध्नाप्रतिजग्राहतंवरम् २३ यक्षाविमावितितदासमेनेमाल्यजीवकः ॥ सभृशंभयसंविग्नोनोत्तरंप्रत्यप द्यत २४ वसुदेवसुतौतौचराजमार्गगतावुभौ ॥ कुब्जांददृशतुर्भूयस्सानुलेपनभाजनाम् २५ तामाहकृष्णःकुब्जेतिकस्येदमनुलेप नम् ॥ नयस्यंबुजपत्राक्षिक्षिप्रमाख्यातुमर्हसि २६ सस्मितासंमुखीभूत्वाप्रत्युवाचांबुजेक्षणम् ॥ कृष्णंजलदगंभीरंविद्युत्कुटिलगामि नी २७ राज्ञस्स्नानगृहंयामितद्गृहाणानुलेपनम् ॥ दृष्ट्वेवत्वारविंदाक्षविस्मितास्मिवरानन २८ यत्त्वमिच्छसिमेवीरत्वंगृहाणानुलेपनम् ॥ स्थितास्म्यागच्छभद्रंतेहृदयस्यासिमेप्रियः २९ कुतश्चागम्यतेसौम्ययन्मांत्वंनावबुध्यसे ॥ महाराजस्यदयितांनियुक्तामनुलेपने ॥ ३० तामुवाचहसंतींतुकृष्णःकुब्जामवस्थिताम् ॥ आवयोर्गात्रसदृशंदीयतामनुलेपनम् ३१ वयंहिदेशातिथयोमल्लाःप्राप्तावरानने ॥ दुष्टंधनुर्महद्दिव्यंराष्ट्रंचैवमहर्धिमत् ३२ प्रत्युवाचाथसाकृष्णंप्रियोसिममदर्शने ॥ राजार्हमिदमव्यग्रंतद्गृहाणानुलेपनम् ३३ तावुभा वनुलिप्तांगौचारुगात्रौविरेजतुः ॥ तीर्थगौपंकदिग्धांगौयमुनायांयथावृषौ ३४ तांचकुब्जांस्थगोर्मध्येह्यंगुलेनाग्रपाणिना ॥ शनैस्संपी डयामासकृष्णोलीलाविधानवित् ३५ साचमग्नंस्थगुंमत्वास्वायतांगीशुचिस्मिता ॥ जहासोच्चैःस्तनतटाऋजुयष्टिर्लतायथा ३६ प्रणयाच्चापिकृष्णंसाबभाषेमत्तकाशिनी ॥ क्वयास्यसिमयारुद्धःकांततिष्ठगृहाणमाम् ३७ तौजातहासावन्योन्यंसतलाक्षेपमव्ययौ ॥ वीक्ष्यमाणौप्रहसितौकुब्जायाःश्रुतिविस्तरौ ३८

यतिनाभिमाच्छादयतीतिस्थगुःभुग्नंपृष्ठं स्थडुइतिटवर्गीयोपधपाठेतुमूलंमृग्यंतस्यमध्येउन्नतेदेशेशनैःसंपीडयामास संतोडयामासेतिपाठेपिसएवार्थः तुडभेदनेइतिधातुः संतो लयामासेतिपाठेपिविषमंपृष्ठंसमतयामितवान्॥३५॥अतएवमग्नमंतर्हितम्॥३६॥३७॥सतलाक्षेपंअन्योन्यंदत्ततालंयथास्यात्तथाश्रुतौश्रोत्रगतोविस्तरोगुणकलापोययोस्तौ ॥३८॥

राजसंसदंउपग्रहम् ॥ ३९ ॥ गूढचेष्टाननौगुप्तचेष्टाप्रारंभौ ॥ ४० ॥ ४१ ॥ आसमंतात्युज्यंतेयोधाअस्मात्इत्यायोगोविख्यातिःतयाभूषितम् ॥ ४२ ॥ ४३ ॥ आयोगभूतंप्रख्यातंधनुर्महनिमित्तमित्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥५० ॥ काकएवकाकः भयचकितत्वेनचंचलदृष्टिः उच्छ्वसितीत्युच्छ्वासश्चेतिसमासः कात

कृष्णस्तुकुब्जांकामार्तांसस्मितंविससर्जह ॥ ततस्तौकुब्जयामुक्तौप्रविष्टौराजसंसदम् ३९ तावुभौव्रजसंवृद्धौगोपवेषविभूषितौ ॥
गूढचेष्टाननौभूत्वाप्रविष्टौनृपवेश्मतत् ४० धनुःशालांगतौतत्रबालावपरितर्कितौ ॥ हिमवद्वनसंभूतौसिंहाविवमदोत्कटौ ४१ दिदृक्ष
तौमहत्तत्रधनुरायोगभूषितम् ॥ पप्रच्छतुश्चतौवीरावायुधागारिकंतदा ४२ भोःकंसधनुषांपालश्रूयतामावयोर्वचः ॥ कतरत्तद्धनुःसौ
म्यमहोयंयस्यवर्तते ४३ आयोगभूतंकंसस्यदर्शयस्वयदीच्छसि ॥ सतयोर्दर्शयामासतद्धनुःस्तंभसन्निभम् ४४ अनारोप्यमसंभेद्यं
देवैरपिसवासवैः ॥ तद्गृहीत्वातदाकृष्णस्तोलयामासवीर्यवान् ४५ दोर्भ्यांकमलपत्राक्षःप्रहृष्टेनांतरात्मना ॥ तोलयित्वायथाकामंत
द्धनुर्दैत्यपूजितम् ४६ आरोपयामासबलीनामयामासचासकृत् ॥ आनाम्यमानंकृष्णेनप्रकर्षादुरगोपमम् ४७ द्विधाभूतमभून्मध्येधनु
रायोगभूषितम् ॥ भंक्त्वातुतद्धनुःश्रेष्ठंकृष्णस्त्वरितविक्रमः ॥ निश्चक्राममहावेगस्सचसंकर्षणोयुवा ४८ धनुषोभंगनादेनवायुनिर्घो
षकारिणा ॥ चचालांतःपुरंसर्वंदिशश्चैवपुपूरिरे ४९ निर्गम्यत्वायुधागाराज्जग्मतुर्गोपसन्निधौ ॥ वेगेनायुधपालस्तुगच्छन्संभ्रांतमान
सः ५० समीपंनृपतेर्गत्वाकाकोच्छ्वासोऽभ्यभाषत ॥ श्रूयतांममविज्ञाप्यमाश्चर्यंधनुषोगृहे ५१ निर्वृत्तमस्मिन्कालेयज्जगतस्संभ्रमोप
मम् ॥ नरौकस्याप्यसदृशौशिखावितितमूर्द्धजौ ५२ नीलपीतांबरधरौपीतश्वेतानुलेपनौ ॥ तावंतःपुरमज्ञातौप्रविष्टौकामवेषिणौ ॥
देवपुत्रोपमौवीरौबालाविवहुताशनौ ५३ स्थितौधनुर्गृहेसौम्यौसहसाखादिवागतौ ॥ मयादृष्टौपरिव्यक्तंरुचिराच्छादनस्रजौ ५४
तयोरेकस्तुपद्माक्षश्श्यामपीतांबरस्रजः ॥ जग्राहतद्धनूरत्नंदुर्ग्राह्यंदैवतैरपि ५५ तत्सबालोमहच्चापंबलाद्यंत्रमिवायसम् ॥ आरोपयि
त्वावेगेननामयामासलीलया ५६ आकृष्यमाणंतत्तेनबिबाणंबाहुशालिना ॥ मुष्टिदेशेविकूजित्वाद्विधाभूतमभज्यत ५७ ततःप्रचलि
ताभूमिर्नैवभातिचभास्करः ॥ धनुषोभंगनादेनभ्रमतीवनभस्तलम् ५८ तदद्भुतंमहदृष्ट्वाविस्मयंपरमंगतः ॥ भयाद्भयदशत्रुभ्य
स्तदिहाख्यातुमागतः ॥ नजानामिमहाराजकौतावमितविक्रमौ ५९

रश्वसोच्छ्वासश्चेत्यर्थः ॥ ५१ ॥ संभ्रमोपमम् प्रलयतुल्यम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ आयसमिवअनाम्यम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

६० ॥ ६१ ॥ ६२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांसप्तविंशोऽध्यायः ॥ २७ ॥ श्रीमद्गोपीजनमानसायश्रीकृष्णायनमः ॥ ७ ॥ ॥ ७ ॥
अष्टाविंशेत्वथाध्यायेमंचानांरचनोच्यते महामात्रायकंसस्यस्वजन्मार्थचिकीर्षितं ॥ १ ॥ पूर्वेणाध्यायेन युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाइत्यर्धर्चार्थउपबृं
हितः अस्यार्थस्तुयुवंयुवांपीवसाबलेन रजकंहत्वेत्यर्थः वस्त्राणिवसाथे युवोःयुवयोः मंतवोमानयिताःमालाकारकुब्जाप्रभृतयः सर्गाःसृजंतिमाल्यानुलेपनादिकंतेसर्गाः अच्छि
द्राः नीचत्वकुब्जत्वादिदोषहीनाभवंतीति अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथेइत्यस्योपबृंहणार्थउत्तरोग्रंथः तत्रअयादवोपिकंसोयदूनामाधिपत्यमिच्छन्ननृतःतेनप्र
युक्तानिमल्लादीनिअनृतानिविश्वसर्वाणितानि अवातिरतंतिरस्कृतवंतौ ऋतेनसत्येनैवयादवत्वेनगोपत्वाच्छादिततयाप्रागप्रसिद्धेन मित्रावरुणौसूत्रांतर्यामिणौ रामकृष्णौसचे

एकःकैलाससंकाशएकोंजनगिरिप्रभः ॥ सतुतच्चापरत्नंवैभंक्त्वास्तंभमिवद्विपः ६० निष्पपातानिलगतिस्सानुगोमितविक्रमः ॥ अग
मत्तंद्विधाकृत्वानजानेकोप्यसौनृप ६१ श्रुत्वैवधनुषोभंगंकंसोविदितविस्तरः ॥ विसृज्यायुधपालंवैप्रविवेशगृहोत्तमम् ६२ इतिश्रीम
हाभारतेखिलेषुहरिवंशेविष्णुपर्वणिकंसधनुर्भंगोनामसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
वैशंपायनउवाच ॥ सचिंतयित्वाधनुषोभंगंभोजविवर्द्धनः ॥ बभूवविमनाराजाचिंतयन्भृशदुःखितः १ कथंबालोविगतभीरवमत्यमहा
बलम् ॥ प्रेक्षमाणस्तुपुरुषैर्धनुर्भंक्त्वाविनिर्गतः २ यस्यार्थेदारुणंकर्मकृतंलोकविगर्हितम् ॥ पितृष्वस्त्रात्मजान्वीरान्षडेवाहंन्यपोथय
म् ३ दैवंपुरुषकारेणनशक्यमतिवर्तितुम् ॥ नारदोक्तंचवचनंनूनंमह्यमुपस्थितम् ४ एवंराजाविचिंत्याथनिष्क्रम्यस्वगृहोत्तमात् ॥ प्रे
क्षागारंजगामाशुमंचानामवलोककः ५ सदृष्ट्वासर्वनिर्मुक्तंप्रेक्षागारंनृपोत्तमः ॥ श्रेणीनांदृढनिर्युक्तैर्मंचवाटैर्निरंतरम् ६ सोत्तमागार
युक्ताभिर्वलभीभिर्विभूषितम् ॥ छदीभिःसंप्रवृद्धाभिरेकस्तंभैर्विभूषितम् ७ सर्वतःसारनिर्व्यूहंस्वायतंसुप्रतिष्ठितम् ॥ उदग्राक्लिष्टसुश्लि
ष्टंमंचारोहणमुत्तमम् ८

थेसंगच्छेथेयुवां तत्रकंसस्यानृतत्वमत्रमहामात्रकथयाउपबृंह्यतेसचिंतयित्वेति भोजविवर्द्धनोभोजच्छेदी ॥१ ॥ २ ॥ यस्यार्थेयन्निमित्तं ॥३॥ वचनंनवसुदेवयत्नोरात्रावेवविफली
कृतइत्येवंरूपम् ॥ ४ ॥ प्रेक्षागारंधनुर्महप्रेक्षार्थंकृतंस्थानम् ॥ ५ ॥ निर्युक्तंनिष्पन्नं श्रेणीनांएकशिल्पोपजीविनां दृढंनियुक्तैर्दृढसंयुक्तैःदृढबद्धैः ॥ ६ ॥ सएकोमंचारोहणं
दृष्ट्वारंगमाज्ञापयतेतिव्यवहितेनसंबंधः वलभीभिःउभयतोनमत्पक्षद्वयाभिःछदीभिःषट्स्तंभाभिः कूटीभिरितिपाठे कोष्ठकोष्ठकैःसतच्छदिकैःचतुस्तंभैः ॥ ७ ॥ सारनिर्व्यू
हंदृढंनागदंतागृहान्निर्गतदारुरूपाणियत्र उदग्रंउच्चंअक्लिष्टंअसंकुचितंसुश्लिष्टंचमंचारोहणंसोपानपंक्तिर्यत्र ॥ ८ ॥

परिक्षिप्तंव्याप्तं ॥९ ॥ रंगंधनुर्महं आज्ञापयतआज्ञापितवान् ॥ सचित्राइत्यादिमंचवाटानांविशेषणम् ॥१० ॥ वपुष्मंतश्चित्रपुरुषादियुक्ताः उत्तरच्छदामहास्तरणानि ॥११॥
करीषस्यशुष्कगोमयचूर्णस्यराशयः मल्लानांस्वेदापमार्जनार्थमंगलार्थंवा ॥ १२ ॥ पानकुंभाः घटोच्छ्रायिकाः ॥ १३ ॥ कषायाः रसाः प्राश्निकाःयुद्धधर्मविदः ॥ १४ ॥ प्रे

नृपासनपरिक्षिप्तंसंचारपथसंकुलम् ॥ छन्नंतद्वेदिकाभिश्चमानुषौघभरक्षमम् ९ सदृष्ट्वाभूषितंरंगमाज्ञापयतबुद्धिमान् ॥ श्वस्सचित्रास्समाल्याश्चसपताकास्तथैवच १० सुवासितावपुष्मंतउपनीतोत्तरच्छदाः ॥ क्रियंतांमंचवाटाश्चवलभ्योवीथयस्तथा ११ रंगवाटेकरीषस्यकल्प्यंतांराशयोव्ययाः ॥ पटास्तरणशोभाश्चवलयश्चानुरूपतः १२ स्थाप्यंतांसुनिखाताश्चपानकुंभायथाक्रमम् ॥ उदभारसहास्सर्वेसकांचनघटोत्तमाः १३ वलयश्चोपकल्प्यंतांकषायाश्चैवकुंभशः ॥ प्राश्निकाश्चनिमंत्र्यंतांश्रेण्यश्चसपुरोगमाः १४ आज्ञाचदेयामल्लानांप्रेक्षकाणांतथैवच ॥ समाजेमंचवाटाश्चकल्प्यंतांसूपकल्पिताः १५ एवमाज्ञाप्यराजाससमाजविधिमुत्तमम् ॥ समाजवाटान्निष्क्रम्यविवेशस्वंनिवेशनम् १६ आज्ञानंतत्रसंचक्रेतस्यमल्लद्वयस्यवै ॥ चाणूरस्यप्रमेयस्यमुष्टिकस्यतथैवच १७ तौतुमल्लौमहावीर्यौबलिनौबाहुशालिनौ ॥ कंसस्याज्ञांपुरस्कृत्यहृष्टौविविशतुस्तदा १८ तौसमीपगतौदृष्ट्वामल्लौजगतिविश्रुतौ ॥ उवाचकंसोनृपतिस्सोपन्यासमिदंवचः १९ भवंताममैविख्यातौमल्लौवीरध्वजोच्छ्रितौ ॥ पूजितौचयथान्यायंसत्कारार्हौविशेषतः ॥ २० तन्मत्तोयदिसत्कारस्स्मर्यंतेसुकृतानिच ॥ कर्तव्यंमेमहत्कर्मभवद्भ्यांस्वेनतेजसा २१ यावेतौममसंवृद्धौव्रजेगोपालकावुभौ ॥ संकर्षणश्चकृष्णश्चबालावपिजितश्रमौ २२ एतौरंगगतौयुद्धेयुद्ध्यमानौवनेचरौ ॥ निपातानंतरंशीघ्रंहंतव्यौनात्रसंशयः २३ बालाविमौसुचपलावक्रियावितिसर्वथा ॥ नावज्ञातत्रकर्तव्याकर्तव्योयत्नएवहि २४ ताभ्यांयुधिनिरस्ताभ्यांगोपाभ्यांरंगसंनिधौ ॥ आयत्यांचतदात्वेचश्रेयोममभविष्यति २५ नृपतेस्स्नेहसंयुक्तैर्वचोभिर्हृष्टमानसौ ॥ ऊचतुर्युद्धसंमत्तौमल्लौचाणूरमुष्टिकौ २६ यद्यावयोस्तौप्रमुखेस्थास्येतेगोपकिल्बिषौ ॥ हतावित्येवमंतव्यौप्रेतरूपौतपस्विनौ २७ यद्यावांप्रतियोत्स्येतेतावरिष्टपरिप्लुतौ ॥ आवाभ्यांरोषयुक्ताभ्यांप्रमुखेतौवनेचरौ २८

क्षकाणांयुद्धसाक्षिणाम् ॥ १५ ॥ १६ ॥ १७ ॥१८ सोपन्यासंसोपपत्तिकं ॥१९ ॥ वीरध्वजःसोत्कर्षसूचकंतोडरादितेनउच्छ्रितौ ॥ २० ॥ २१ ॥ जितश्रमौकदाचिदपिनश्रमवंतौ ॥ २२ ॥ निपातानंतरंसंबंधमात्रेणेत्यर्थः ॥ २३ ॥ अक्रियौअशिक्षितौ ॥२४॥ आयत्यांउत्तरकाले तदात्वेवर्तमानकाले॥ २५ ॥ २६ ॥२७॥ प्रमुखेतौनिहंतव्याविति शेषः २८

॥२९॥ ३० ॥ दानोत्कटकटःमदोत्कटगंडः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२॥ ४३ ॥४४॥ ४५ ॥ संमुखंगत्वासंप्रवे



एवंवाग्विषमुत्सृज्यतावुभौमल्लपुंगवौ ॥ अनुज्ञातौनरेंद्रेणस्वेगृहेतौप्रजग्मतुः २९ महामात्रंततःकंसोबभाषेहस्तिजीविनम् ॥ हस्ती
३८ कुवलयापीडस्समाजद्वारितिष्ठतु ३० बलवान्मदलोलाक्षश्चपलःक्रोधनोनृषु ॥ दानोत्कटकटश्चंडःप्रतिवारणरोषणः ३१ ससंनोद अ०२८
यितव्यस्तेतावुद्दिश्यवनौकसौ ॥ वसुदेवसुतौवीरौयथास्यातांगतायुषौ ३२ त्वयाचैवगजेंद्रेणयदितौगोष्ठजीविनौ ॥ भवेतांपतितौरं
गेपश्येयमहमुत्कटौ ३३ ततस्तौपतितौदृष्ट्वावसुदेवस्सबांधवः ॥ छिन्नमूलोनिरालंबस्सभार्योविनशिष्यति ३४ येचेमेयादवामूर्खा
स्सर्वेकृष्णपरायणाः ॥ विनशिष्यंतिछिन्नाशादृष्ट्वाकृष्णंनिपातितम् ३५ एतौहत्वागजेंद्रेणमल्लैर्वास्वयमेववा ॥ पुरींनिर्यादवींकृत्वा
विचरिष्याम्यहंसुखी ३६ पिताहिमेपरित्यक्तोयादवानांकुलोद्वहः ॥ शेषाश्चमेपरित्यक्तायादवाःकृष्णपक्षिणः ३७ नचाहमुग्रसेनेन
जातःकिलसुतार्थिना ॥ मानुषेणाल्पवीर्येणयथामामाहनारदः ३८ ॥ महामात्रउवाच ॥ कथमुक्तंनारदेनराजन्देवर्षिणापुरा ॥ आश्च
र्यमेतत्कथितंत्वत्तःश्रुतमरिंदम ३९ कथमन्येनजातस्त्वमुग्रसेनात्पितुर्विना ॥ तवमात्राकथंराजन्कृतंकर्मेदमीदृशम् ४० अन्यापि
प्राकृतानारीनकुर्याच्चजुगुप्सितम् ॥ विस्तरंश्रोतुमिच्छामिह्येतत्कौतूहलंहिमे ४१ ॥ कंसउवाच ॥ यथाकथितवान्विप्रोमहर्षिर्नारदः
प्रभुः ॥ तथाहंसंप्रवक्ष्यामियदितेश्रवणेमतिः ४२ आगतश्शक्रसदनात्सवैशक्रसखोमुनिः ॥ चंद्रांशुशुक्लवसनोजटामंडलमुद्वहन् ४३
कृष्णाजिनोत्तरीयेणरुक्मयज्ञोपवीतवान् ॥ दंडीकमंडलुधरःप्रजापतिरिवापरः ४४ गाताचतुर्णांदेवानांविद्वान्गांधर्ववेदवित् ॥ सना
रदोथदेवर्षिर्ब्रह्मलोकचरोव्ययः ४५ तमागतमृषिंदृष्ट्वापूजयित्वायथाविधि ॥ पाद्यार्घमासनंदत्त्वासंप्रवेश्योपविश्यह ४६ सुखोप
विष्टोथमुनिःपृष्ट्वाचकुशलंमम ॥ उवाचचप्रीतमनादेवर्षिर्भावितात्मवान् ४७ ॥ नारदउवाच ॥ पूजितोहंत्वयावीरविधिदृष्टेनकर्म
णा ॥ इदमेकंममवचश्श्रूयतांप्रतिगृह्यताम् ४८ गतोहंदेवसदनंसौवर्णमेरुपर्वतम् ॥ सोहंकदाचिद्देवानांसमाजेमेरुमूर्द्धनि ४९ तत्रमं
त्रयतामेवंदेवतानांमयाश्रुतः ॥ भवतस्सानुगस्यैववधोपायस्सुदारुणः ५० तत्रयोदेवकीगर्भोविष्णुर्लोकनमस्कृतः ॥ योस्यागर्भोष्टमः
कंसस्सतेमृत्युर्भविष्यति ५१ देवानांसतुसर्वस्वंत्रिदिवस्यगतिश्चसः ॥ परंरहस्यंदेवानांसतेमृत्युर्भविष्यति ५२ ३८

श्यगृहं ततःपाद्यसहितंअर्घंदत्त्वाआचमनंचदत्त्वातत्संनिधौस्वयमुपविश्य ॥ ४६ ॥ भावितात्मवान् पूतचित्तः ॥४७॥ ४८ ॥ ४९ ॥ ५० ॥ अस्याःदेवक्याः ॥५१ ॥५२॥

रिपवेरिपौ ॥ ५३ ॥ ५४ ॥ कथंकीदृशोद्रुमिलः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ स्त्रीधर्मं अष्टगुणकामवत्त्वम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

यत्नश्चक्रियतांकंसगर्भाणांपातनंप्रति॥ नावज्ञारिपवेकार्यादुर्बलेस्वजनेपिवा ५३ नचायमुग्रसेनस्सपितातवमहाबलः॥ द्रुमिलोनाम
तेजस्वीसौभस्यपतिरूर्जितः ५४ श्रुत्वाहंतद्वचस्तस्यकिंचिद्दोषसमन्वितः ॥ भूयोपृच्छंकथंब्रह्मन्द्रुमिलोनामदानवः ५५ ममात्रा
कथंतस्यब्रूहिविप्रसमागमः॥एतदिच्छाम्यहंश्रोतुंविस्तरेणतपोधन ५६ नारदउवाच॥ हंततेकथयिष्यामिशृणुराजन्यथार्थतः ॥ द्रुमि
लस्यचमात्रातेसंवादंचसमागमम् ५७ सुयामुनंनामनगंतवमातारजस्वला॥ प्रेक्षितुंसहितास्त्रीभिर्गतावैसाकुतूहलात् ५८ सातत्ररमणी
येपुरुचिरद्रुमसानुषु ॥ चचारनगशृंगेषुकंदरेषुनदीषुच ५९ किन्नरोद्गीतमधुराःप्रतिश्रुत्याभिनादिताः ॥ शृण्वंतीकामजननीर्वाच
श्श्रोत्रसुखावहाः ६० बर्हिणांचैवविरुतंखगानांचविकूजितम्॥ अभीक्ष्णमभिशृण्वंतीस्त्रीधर्ममभिरोचयत् ६१ एतस्मिन्नंतरेवायुर्वनरा
जिविनिस्सृतः॥ हृद्यःकुसुमगंधाढ्योववौमन्मथबोधनः ६२ द्विरेफाभरणाश्चैवकदंबावायुघट्टिताः ॥ मुमुचुर्गंधमधिकंसंततासारमू
र्च्छिताः ६३ केसराःपुष्पवर्षैश्चववृषुर्मदबोधनाः॥ नीपादीपाइवाभांतिपुष्पकंटकधारिणः ६४ महीनवतृणच्छन्नाशक्रगोपविभूषि
ता॥ यौवनस्थेववनितास्वेदधारार्तवंवपुः ६५ अथसौभपतिश्श्रीमान्द्रुमिलोनामदानवः॥ भविष्यद्दैवयोगेनविधात्रातत्रनीयते ६६
कामगेनरथेनाशुतरुणादित्यवर्चसा ॥ यदृच्छयागतस्तत्रसुयामुनदिदृक्षया ६७ विहायसाकामगमोमनसाप्याशुगामिना ॥ सतंप्रा
प्यपर्वतेंद्रमवतीर्यरथोत्तमात् ६८पर्वतोपवनेन्यस्यरथंपररथारुजम्॥अथासौसूतसंहितश्चचारनगमूर्द्धनि ६९ ततोबहून्यपश्यतांकाननानि
वनानिच ॥ सर्वर्तुगुणसंपन्नेनंदनस्येवकानने ७० चेरतुर्नगशृंगेषुकंदरेषुनदीषुच ॥ नानाधातुपिनद्धैश्चशृंगैर्बहुभिरुच्छ्रितैः ७१ ना
नारत्नविचित्रेषुकांचनांजनराजतान् ॥ नानाकुसुमगंधाढ्यान्नानासत्त्वगणैर्युतान् ७२ नानाद्विजगणैस्तुष्टान्नानापुष्पफलद्रुमान् ॥
नानौषधिसमायुक्तानृषिसिद्धानुसेवितान् ७३विद्याधरान्किंपुरुषानृक्षवानरराक्षसान्॥ सिंहान्व्याघ्रान्वराहांश्चमहिषाञ्छरभाञ्छशा
न् ७४ सृमरांश्चमरान्न्यंकून्मातंगान्यक्षराक्षसान् ॥ एवंबहुविधान्पश्यन्चरमाणौनगोत्तमम् ७५

नीयतेअनीयतनीतइत्यर्थः ॥ ६६ ॥ ६७ ॥ विहायसाआकाशमार्गेण कामगमःइच्छयागंतुंशीलः ॥ ६८ ॥ ६९ ॥ काननानिआरोपितवृक्षाणि वनानिरोपितवृक्षाणि
॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

दूराद्दर्शनृपतिर्देवींदेवसुतोपमाम् ॥ क्रीडमानांसखीभिश्चपुष्पंचैवविचिन्वतीम् ७६ ततश्चरंतींसुश्रोणींसखीभिस्सहसंवृताम् ॥
३९ दृष्ट्वासोभपतिर्दूराद्विस्मयन्सूतमब्रवीत् ७७ कस्येयंमृगशावाक्षीवनांतरविचारिणी ॥ रूपौदार्यगुणोपेतामन्मथस्यरतिर्यथा ७८ श अ०२८
चीवपुरुहूतस्यउताहोवातिलोत्तमा ॥ नारायणोरुंनिर्भिद्यसंभूतावरवर्णिनी ॥ ऐलस्यदयितादेवीयोषिद्रत्नंकिमुर्वशी ७९ क्षीरार्णवे
मथ्यमानेसुरासुरगणैस्सह ॥ मंथानंमंदरंकृत्वामृतार्थमितिनश्श्रुतम् ८० ततोमृतात्समुत्तस्थौदेवीश्रीर्लोकभाविनी ॥ नारायणांक
लुलिताकिंश्रीरेषावरांगना ८१ नीलमेघांतरगताद्योतयंत्यचिरप्रभा ॥ तथायोषिद्गणान्मध्येरूपंप्रद्योतयद्वने ८२ अतीवसुकु
मारांगीसुप्रभेंदुनिभानना ॥ दृष्ट्वारूपमनिंद्यांग्याविभ्रांतोऽप्याकुलेंद्रियः ८३ कामस्यवशमापन्नोमनोविक्लतीवमे ॥ भृशंकृं
ततिमेंगानिसायकैःकुसुमायुधः ८४ भित्त्वाहृदिशरान्पंचनिर्दयंहंतिमेमनः ॥ हृदयाग्निंवर्द्धयतिआज्यसिक्तइवानलः ॥ कथमद्यप्र
वेत्कार्यंशमार्थंमन्मथाग्निना ८५ केनोपायेनकिंकुर्मोभजेन्मांमत्तगामिनी ॥ एवंबहुचिंतयानोनोपलभ्यचदानवः ८६ सूतमाह
मुहूर्तंतुतिष्ठस्वत्वमिहानघ ॥ अहंयास्यामितांद्रष्टुंकस्येयमितियोषितम् ८७ प्रतीक्षमाणस्तिष्ठस्वयावदागमनंमम ॥ श्रुत्वातुवचनं
तस्यतथास्त्वितिवचोब्रवीत् ८८ एवमुक्त्वादानवेंद्रोगमनायमनोदधे ॥ वायुपस्पृश्यबलवान्ध्यानमेवान्वचिंतयत् ८९ मुहूर्तंध्यानमा
त्रेणदृष्टंज्ञानबलात्ततः ॥ उग्रसेनस्यपत्नीतिज्ञात्वाहर्षमुपागतः ९० उग्रसेनस्यरूपंवैकृत्वास्वंपरिवर्त्यसः ॥ उपासर्पन्महाबाहुः
प्रहसन्दानवेश्वरः ९१ स्मयमानश्चशनकैर्जग्राहामितवीर्यवान् ॥ उग्रसेनस्यरूपेणमातरंतेऽप्यधर्षयत् ९२ सापतिस्निग्धहृदयातंभा
वेनोपसर्पती ॥ शंकिताचाभवत्पश्चात्तस्यगौरवदर्शनात् ९३ सातमाहोत्थिताभीतानत्वंममपतिर्ध्रुवम् ॥ कश्चत्वंविकृताचारोयेनास्मि
मलिनीकृता ९४ एकभर्तृव्रतमिदंममसंदूषितंत्वया ॥ पत्युर्मेरूपमास्थायनीचनीचेनकर्मणा ९५ किंमांवक्ष्यंतिरुषिताबांधवाःकुल
पांसनीम् ॥ जुगुप्सिताचवत्स्यामिपतिपक्षैर्निराकृता ९६ ३९

॥ ८३ ॥ ८४ ॥ निर्दयंयथास्यात्तथामेमां ॥ हृदयाग्निःकामाग्निः वर्द्धयतिछिनत्तिदहतीत्यर्थः मन्मथाग्निनाषष्ठ्यर्थेतृतीया ॥ ८५ ॥ नोपलभ्यअनुपलभ्यधैर्यमितिशेषः ॥ ८६ ॥
॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ गौरवदर्शनात्रतेःस्पर्शगौरवानुभवात् ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

अक्षांतं अक्षाणांइंद्रियाणांअंतोनाशोयस्यतम् ॥ ९७ ॥ प्रसज्जंतींकलहायमानां क्षिप्तःधिक्कृतः ॥ ९८ ॥ ९९ ॥ व्यभिचारादमानुषसंबंधजात्चित्तस्यचंचलत्वात्स्वा
माभिचारवदयंमानुषजोव्यभिचारस्तवनदोषायेत्यर्थः ॥ १०० ॥ स्त्रियः कुंतीमदयंतीप्रभृतयः ॥ १ ॥ शुद्धकेशान्यानिकानिचपापानिकेशाना॥श्रित्यातिष्ठंतीतिवचनात् नि

धिङ्मामीदृशमक्षांतंदुष्कुलंव्युत्थितेंद्रियम् ॥ अविश्वास्यमनायुष्यंपदाराभिमर्शनम् ९७ सतामाहप्रसज्जंतींक्षिप्तःक्रोधेनदानवः ॥
अहंवैद्रुमिलोनामसौभस्यपतिरूर्जितः ९८ किंमांक्षिपसिरोषेणमूढेपंडितमानिनि ॥ मानुषंपतिमाश्रित्यनीचंमृत्युवशेस्थितम् ९९
व्यभिचारान्नदुष्यंतिस्त्रियःस्त्रीमानगर्विते ॥ नह्यासांनियताबुद्धिर्मानुषीणांविशेषतः १०० श्रूयंतेहिस्त्रियोबह्व्योव्यभिचारव्यतिक्रमैः
प्रसूतादेवसंकाशान्पुत्रान्निश्चलविक्रमान् १ अतीवहित्वंस्त्रीलोकेपतिधर्मवतीसती ॥ शुद्धकेशान्विधुन्वंतीभाषसेयद्यदिच्छसि २ कस्य
त्वमितियच्चाहंत्वयोक्तोमत्तकाशिनि ॥ कंसस्तस्माद्रिपुध्वंसीतवपुत्रोभविष्यति ३ सासरोषापुनर्भूत्वानिंदंतीतस्यतंवरम् ॥ उवाचव्यथि
तादेवीदानवंधृष्टवादिनम् ४ धिक्तेवृत्तंसुदुर्वृत्तयःसर्वानिंदसिस्त्रियः ॥ संतिस्त्रियोनीचवृत्तास्संतिचैवपतिव्रताः ५ यास्त्वेकपत्न्यश्श्रूयं
तेऽरुंधतीप्रमुखाःस्त्रियः ॥ धृतायाभिःप्रजास्सर्वालोकाश्चैवकुलाधम ६ यस्त्वयाममपुत्रोवैदत्तोवृत्तविनाशनः ॥ नमेबहुमतस्त्वेषशृणुचापि
यदुच्यते ७ उत्पत्स्यतिपुमान्नीचःपतिवंशेममाऽव्ययः ॥ भविष्यतिसतेमृत्युर्यश्चदत्तस्त्वयासुतः ८ द्रुमिलस्त्वेवमुक्तस्तुजगामाकाश
मेवतु ॥ तेनैवरथमुख्येनदिव्येनाप्रतिगामिना ९ जगामचपुरींदीनामातातदहरेवते ॥ मामेवमुक्त्वाभगवान्नारदोमुनिसत्तमः १०
दीप्यमानस्तपोवीर्यात्साक्षादग्निरिवज्वलन् ॥ वल्लकींवाद्यमानोहिसप्तस्वरविमूर्च्छिताम् ११ गायनोलक्ष्यवीथींसजगामब्रह्मणोंति
कम् ॥ शृणुष्वेदंमहामात्रनिबोधवचनंमम १२ तथ्यंचोक्तंनारदेनत्रैलोक्यज्ञेनधीमता ॥ अलंबलेनवीर्येणनयेनविनयेनच १३ प्रमाणै
र्वापिवीर्येणतेजसाविक्रमेणच ॥ सत्येनचैवदानेननान्योस्तिसदृशःपुमान् १४ विदित्वासर्वमात्मानंवचनंश्रद्दधाम्यहम् ॥ क्षेत्रजोहं
सुतस्तस्यउग्रसेनस्यहस्तिप १५ मातापितृभ्यांसंत्यक्तःस्थापितस्स्वेनतेजसा ॥ उभाभ्यामपिविद्विष्टोबांधवैश्चविशेषतः ११६

ष्पापान्अस्मानपिविधुन्वंतीभर्त्सयंतीयदिच्छासितद्भाषसे यथेष्टंप्रलपसिमौढ्यादित्यर्थः ॥ १०२ ॥ १०३ ॥ १०४ ॥ धिगितिकुंत्यादीनामप्यापद्धर्मापेक्षयापुरुषांतरसंबं
धोनकामविकारेणेत्यर्थः सःत्वंतुसर्वासांनिंदांकुर्वन्पापतमोसीत्यर्थः ॥ १०५ ॥ ६ ॥ ७ ॥ पुमान्ईश्वरःतेतवत्वत्पुत्रस्यचमयिजातस्य ॥ ८ ॥ ९ ॥ ११० ॥ वाद्यमा
नःवादयन् ॥ ११ ॥ लक्ष्यवीथींब्रह्मलोकमार्गंदेवयानम् ॥ १२ ॥ १३ ॥ सदृशोमयेतिशेषः ॥ १४ ॥ १५ ॥ १६ ॥

॥ १७ ॥ ११८ ॥ इतिहारिवंशेविष्णुपर्वणिटीकायामष्टाविंशोध्यायः ॥२८ ॥ ॥ छ ॥ ॥ एकोनत्रिंशेकंसेभप्रमुखस्याथमारणम् ॥ श्रीकृष्णेनकुवलयापीडनाम्नोनिरूप्यते॥ ॥ १ ॥ तस्मिन्नइति ॥ १ ॥ यत्रमंचाःभांति ससमाजवाटः प्राङ्मुखैर्मंचागारैःशुशुभेइतिपंचमचतुर्थतृतीयस्थानांपदानांसंबंधः ॥ तत्रमंचाः कीदृशाइत्यनआहद्वितीयनश्लोकेन सचित्रेति चित्रसहिताःसचित्राः अष्टास्रयोअष्टकोणाश्चरणायेषांतेसाचित्राष्टास्त्रिचरणाः ॥ २ ॥ निर्मुक्तैः बिरलतंतुभिरंतःपटैर्युक्तानिमंचागाराणि येषुस्थिताःराज

एतानपिहनिष्यामियादवान्कृष्णपक्षिणः ॥ तदिमौघातयित्वातुहस्तिनागोपकिल्बिषौ १७ तद्गच्छगजमारुह्यसांकुशप्रासतोमरः ॥ स्थिरोभवमहामात्रसमाजद्वारिमाचिरम् ११८ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिकंसवाक्यंनामाष्टाविंशोऽध्यायः २८ ॥ ॥ वैशंपायनउवाच ॥ तस्मिन्नहनिविर्वृत्तेद्वितीयेसमुपस्थिते ॥ आपूर्यतमहारंगःपौरैर्युद्धदिदृक्षुभिः १ सचित्राष्टास्त्रिचरणास्सार्गलद्वारवेदिकाः ॥ सगवाक्षार्द्धचंद्राश्चसुतल्पोत्तमभूषिताः २ प्राङ्मुखैश्चारुनिर्मुक्तैर्माल्यदामावतंसितैः ॥ अलंकृतैर्विराजद्भिःशारदैरिवतोयदैः ३ मंचागारैःसुनिर्युक्तैर्युद्धायसुविभूषितैः ॥ समाजवाटःशुशुभेसमेघौघइवार्णवः ४ स्वकर्मद्रव्ययुक्ताभिःपताकाभिर्निरंतरम् ॥ श्रेणीनांचगणानांचमंचाभांत्यचलोपमाः ५ अंतःपुरचराणांचप्रेक्षागाराण्यनेकशः ॥ रेजुःकांचनचित्राणिरत्नज्वालाकुलानिच ६ तानिरत्नौघक्लृप्तानिससानुप्रग्रहाणिच ॥ रेजुर्जवनिकाक्षेपैस्सपक्षाइवखेनगाः ७ तत्रचामरहारैश्चभूषणानांचसिंजितैः ॥ वाणीनांचविचित्राणांविचित्राश्चेरुरर्चिषः ८ गणिकानांपृथङ्मंचाश्शुभैरास्तरणांबरैः ॥ शोभितावारमुख्याभिर्विमानप्रतिमौजसः ९ तत्रासनानिख्यातानिपर्यंकाश्चहिरण्मयाः ॥ प्रकीर्णाश्चकुथाश्चित्रास्सपुष्पस्तबकैर्वृताः १० सौवर्णाःपानकुंभाश्चपानभूम्यश्चशोभिताः ॥ फलावदंशपूर्णाश्चचांगेर्यःपानयोजिताः ११ अन्येचमंचाबहवःकाष्ठसंचयबंधनाः॥ रेजुःप्रस्तरणास्तत्रशतशोथसहस्रशः १२

दाराःसर्वंबहिस्थंपश्यंतिबाह्याश्चतान्नपश्यंतीतितादृशैश्चारुनिर्मुक्तैः ॥ ३॥सुनिर्युक्तैःशोभनाःनिर्युक्ताःमल्लादयोयेषुतैः ॥४॥ स्वकर्मद्रव्ययुक्ताभिः यस्यशिल्पवतोयदुपकरणद्रव्यंतेन चिह्निताभिः श्रेणीनांअनेकजातीनामप्येकशिल्पोपजीविनांगणानांएकजातीनां ॥ ५ ॥ ६ ॥ तानीतिजवनिकारूपैराक्षेपैरंतर्द्धिकैरस्तिरोहिताधोभागानि रत्नौघै.क्लृप्तानिकृतानिप्रेक्षागाराणिससानुप्रग्रहाणिउपरिदेशेसपताकानिखेसपक्षपर्वतवद्भांतीत्यर्थः ॥ ७ ॥ तत्रप्रेक्षागारेषु ॥ ८ ॥ ९ ॥ कुथाःआस्तरणविशेषाः ॥ १० ॥ फलावदंशाःजंबीराद्युपदंशास्तैःपूर्णाः चांगेर्यः चुक्रिकादिपानरसाः पानयोजिताःपानार्थंस्थापिताः ॥ ११ ॥ प्रस्तरणाःप्रकृष्टास्तरणाः ॥ १२ ॥

उत्तमागारिकाःगृहोपरिगृहंयत्तदुत्तमागारंतत्रभवाःसूक्ष्मजालद्वारावलोकोयस्तद्वंतःप्रेक्षागृहाःप्रेक्षार्थागृहाः ॥ १३ ॥ प्राङ्मुखःप्रेक्षागारः कंसस्यचकाशेइति द्वयोःसंबंधः ॥ १४ ॥ १५ ॥ १६ ॥ राजाकंसः ॥ १७ ॥ १८ ॥ १९ ॥ आवलितानिप्रस्फुरितानिअंबराणियेषाम् ॥ २० ॥ क्ष्वेडितंतत्साहितेनआस्फोटितेनआस्फालनेनउपल

उत्तमागारिकाश्चैवसूक्ष्मजालावलोकिनः ॥ स्त्रीणांप्रेक्षागृहाभांतिराजहंसाइवांबरे १३ प्राङ्मुखश्चारुनिर्युक्तोमेरुशृंगसमप्रभः ॥
रुक्मपत्रनिभस्तंभश्चित्रनिर्योगशोभितः १४ प्रेक्षागारस्सकंसस्यप्रचकाशेधिकंश्रिया ॥ शोभितोमाल्यदामैश्चनिवासकृतलक्षणः ॥
१५ तस्मिन्नानाजनाकीर्णेजनौघप्रतिनादिते ॥ समाजवाटेसंस्तब्धेकंपमानार्णवप्रभे १६ राजाकुवलयापीडस्समाजद्वारिकुंजरः ॥
तिष्ठत्विति समाज्ञाप्यप्रेक्षागारमुपाययौ १७ सशुक्लेवाससीबिभ्रच्छ्वेतव्यजनचामरः ॥ शुशुभेश्वेतमुकुटश्श्वेताभ्रइवचंद्रमाः १८
तस्यसिंहासनस्थस्यसुखासीनस्यधीमतः ॥ रूपमप्रतिमंदृष्ट्वापौराःप्रोचुर्जयाशिषः १९ ततःप्रविविशुर्मल्लारंगमावलितांबराः ॥
तिस्रश्चभागशःकक्षाःप्राविशन्बलशालिनः २० ततस्तूर्यनिनादेनक्ष्वेडितास्फोटितेनच ॥ वसुदेवसुतौहृष्टौरंगद्वारमुपस्थितौ २१ ( ब
द्धवौवस्त्रसंवीतौसुरचंदनभूषितौ ॥ ऊर्ध्वपीडौस्त्रगापीडौबाहुशस्त्रकृतौयमौ ॥ आस्फोटयंतावन्योन्यंबाहूचैवार्गलोपमौ ) २२ तावापतं
तौत्वरितौप्रतिषिद्धौवराननौ ॥ तेनमत्तेननागेनचोद्यमानेनवैभृशम् २३ समत्तहस्तीदुष्टात्माकृत्वाकुंडलिनंकरम् ॥ चकारचोदितोयत्नं
निहंतुंबलकेशवौ २४ ततःप्रहसितःकृष्णस्त्रास्यमानोगजेनवै ॥ कंसस्यतन्मतंचैवजगर्हेसदुरात्मनः २५ त्वरतेखलुकंसोयंगंतुंवै
वस्वतक्षयम् ॥ योमामनेननागेनप्रधर्षयितुमिच्छति २६ सन्निकृष्टेततोनागेगर्जमानेतथाघने ॥ सहसोत्पत्यगोविंदश्चक्रेतालस्वनंप्रभुः
२७ क्ष्वेडितास्फोटितरवंकृत्वानागस्यचाग्रतः ॥ करंससीकरंतस्यप्रतिजग्राहवक्षसा २८ विषाणांतरगोभूत्वापुनश्चरणमध्यगः ॥
बबाधेतंगजंकृष्णःपवनस्तोयदंयथा २९ सहस्ताग्राद्विनिष्क्रांतोविषाणाग्राच्चदंतिनः ॥ विमुक्तःपदमध्याच्चकृष्णोद्विपमपोथयत् ३०
सोतिकायस्तुसंमूढोहंतुंकृष्णमशक्नुवन् ॥ गजस्स्वेष्वेवगात्रेषुमथ्यमानोरराससह ३१ पपातभूमौजानुभ्यांदशनाभ्यांतुतोदच ॥
मदंसुस्त्रावरोषाच्चघर्मापायेयथाघनः ३२ कृष्णस्तुतेननागेनक्रीडित्वाशिशुलीलया ॥ निधनायमतिंचक्रेकंसद्विष्टेनचेतसा ३३

क्षितौ ॥ २१ ॥ २२ ॥ २३ ॥ करंशुंडादंडम् ॥ २४ ॥ २५ ॥ २६ ॥ तालस्वनंगजंकोपयितुंकरतालिकाध्वनिम् ॥ २७ ॥ २८ ॥ बबाधव्याकुलंचकार ॥ ॥ २९ ॥ अपोथयत्पुच्छाकर्षणेनभूमौघर्षितवान् ॥ ३० ॥ संमूढःव्याकुलःरराससशब्दंकृतवान् ॥ ३१ ॥ दशनाभ्यांमूलतोभग्नाभ्यांतुतोदव्यथांप्राप ॥ ३२ ॥ ३३ ॥

प्रमुखेभ्रूमध्यदेशे विषाणंदंतम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ सार्तेतिसंधिरार्षः महन्महांतम् ॥ ३९ ॥ तोरणस्यबहिर्द्वारस्यअंगानिस्तंभादीनि तोरणंवाहनंग जस्तस्यांगानीतिदंतद्वयंद्वाभ्यांगृहीतमित्यन्ये ॥ ४० ॥ ४१ ॥ ४२ ॥ भोजराजःकंसःविषसादविषादंप्राप तत्रहेतुंतरं पौराणामनुरागंचकृष्णेआलक्ष्य ॥ ४३ ॥ ४४ ॥







सतस्यप्रमुखेपादंकृत्वाकुंभादनंतरम् ॥ दोर्भ्यांविषाणमुत्पाट्यतेनैवप्राहरत्तदा ३४ सतेनवज्रकल्पेनस्वेनदंतेनकुंजरः ॥ हन्यमान
श्शकृन्मूत्रंमुमोचार्तोररासह ३५ कृष्णजर्जरितांगस्यकुंजरस्यार्तचेतसः ॥ कटाभ्यामतिसुस्राववेगवद्भूरिशोणितम् ३६ लांगूलंचा
स्यवेगेननिश्चकर्षहलायुधः ॥ शैलपृष्ठार्द्धसंलीनंवैनतेयइवोरगम् ३७ तेनैवगजदंतेनकृष्णोहत्वातुदंतिनम् ॥ जघानैकप्रहारेणग
जारोहणमुल्बणम् ३८ सार्तनादंमहत्कृत्वाविदंतोदंतिनांवरः ॥ पपातसमहामात्रोवज्रभिन्नइवाचलः ३९ ततस्तौतोरणांगानिप्र
गृह्यरणकर्कशौ ॥ गजस्यपादरक्षांश्चजघ्नतुःपुरुषर्षभौ ४० तांश्चहत्वाविविशतुर्मध्यंरंगस्यतावुभौ ॥ नासत्यावश्विनौस्वर्गादवती
र्णौविवेच्छया ४१ वृष्ण्यंधकाश्चभोजाश्चददृशुर्वनमालिनौ ॥ क्ष्वेडितोत्कुष्टनादेनबाह्वोरास्फोटितेनच ॥ सिंहनादैश्चतालैश्चहर्ष
यामासतुर्जनम् ४२ तौदृष्ट्वाभोजराजस्तुविषसादव्यथामतिः ॥ पौराणामनुरागंचहर्षंचालक्ष्यभारत ४३ तंहत्वापुंडरीकाक्षोनदंतंदं
तिनांवरम् ॥ अवतीर्णोर्णवाकारंसमाजंसहपूर्वजः ४४ ॥ इतिश्रीमहाभारतेविष्णुपर्वणिकुवलयापीडवधोनामैकोनत्रिंशो
ऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ प्रविशंतंतुवेगेनमारुतावल्गिनांवरम् ॥ पूर्वजंपुरतःकृत्वाकृष्णंकमललो
चनम् १ गजदंतकृतोल्लेखंसुभुजंदेवकीसुतम् ॥ लीलाकृतांगदंवीरंमदेनरुधिरेणच २ वल्गमानंयथासिंहंव्यूहमानंयथाधनम् ॥
बाहुशब्दप्रहारेणचालयंतंवसुंधराम् ३ औग्रसेनिःसमालोक्यदंतिदंतोद्यतायुधम् ॥ कृष्णंभृशायस्तमुखस्सरोषंसमुदैक्षत ४ भुजा
सक्तेनशुशुभेगजदंतेनकेशवः ॥ चंद्रार्द्धबिंबसंसक्तोयथैकशिखरोगिरिः ५

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥ त्रिंशेमुष्मिन्नथाध्यायेमल्लयुद्धंपरस्परम् ॥ मल्लानांहननंप्रोक्तंकंसस्यसानुगस्यच ॥ १ ॥ प्रविशंतंपूर्वजंपुरतःकृत्वाप्रविशंतमित्यन्वयः ॥ १ ॥ मदेनहस्तिसंबंधिनालिप्तबाहुदेशमित्यर्थः ॥ २ ॥ व्यूहमानंकंसंहंतुंविशेषतःतर्कयंतंतंघनमिवसंचरंतं वापक्षे ॥ ॥ ३ ॥ आयस्तमुखःम्लानमुखः ॥ ४ ॥ ५ ॥



---

१ 'युद्धसंमर्दयोगेने'ति मुद्रितपूर्वपु० पाठः ।

॥ ६ ॥ ७ ॥ अंध्रंअंधयितारंचाणूरापरनामानं कृष्णायदिदेशेतिसंबंधः बलदेवायमुष्टिकमितिच निकृतिंकपटवंतमित्युभयत्रसंबंधनीयम् ॥८ ॥ ९ ॥ १० ॥ अवघुष्टेराजाज्ञयानिः
शब्दाभवतेतिश्राविते ॥ ११ ॥ सप्राश्निकंसपरीक्षकंअकातरंभीरुराहितंनिर्मितंविधिना ॥ १२ ॥ विनेयःपरिहर्तव्यः ॥ १३ ॥ स्थितःस्थितेनसंयुज्यतोनियुद्ध्यतः ॥ १४ ॥

वल्गमानेतुगोविंदेसकृत्स्नोरगसागरः ॥ जनौघप्रतिनादेनपूर्यमाणइवाबभौ ६ ततःक्रोधाभितांम्राक्षःकंसःपरमकोपनः ॥ चाणूरमा
दिशद्युद्धेकृष्णस्यसुमहाबलम् ७ अंध्रंमल्लंचनिकृतिंमुष्टिकंचमहाबलम् ॥ बलदेवायसक्रोधोदिदेशाद्रिचयोपमम् ८ कंसेनापिसमा
ज्ञप्तश्चाणूरःपूर्वमेवतु ॥ योद्धव्यंसहकृष्णेनत्वयायत्नवतेतिवै ९ सरोषेणतुचाणूरःकषायीकृतलोचनः ॥ अभ्यावर्ततयुद्धार्थमपांपूर्णो
यथाघनः १० अवघुष्टेसमाजेतुनिश्शब्दःस्तिमितेजने ॥ यादवास्सहितास्तत्रइदंवचनमब्रुवन् ११ बाहुयुद्धमिदंरंगेसप्राश्निक
मकातरम् ॥ क्रियाबलसमाज्ञातमशस्त्रंनिर्मितंपुरा १२ अद्भिश्चातिश्रमोनित्यंविनेयःकालदर्शिभिः ॥ करीषेणचमल्लस्यसततंसत्क्रि
यास्मृता १३ स्थितोभूमिगतेनैवयोयथामार्गतःस्थितः ॥ संयुज्यतश्चपर्यायःप्राश्निकैःसमुदाहृतः १४ बालोवायदिवावृद्धोमध्यो
वापिकृशोपिवा ॥ बलस्थोवास्थितोरंगेज्ञेयःकक्षांतरेणवै १५ बलतश्चक्रियातश्चबाहुयुद्धविशारदैः ॥ निपातानंतरंकिंचि
च्चिन्नकर्तव्यंविजानता १६ तदिदंप्रस्तुतंरंगेयुद्धंकृष्णांध्रमल्लयोः ॥ बालःकृष्णोमहानंध्रःकथंनःस्याद्विचारणा १७ ततःकिलकिला
शब्दस्समाजेसमवर्तत ॥ प्रावल्गतचगोविंदोवाक्यंचेदमुवाचह १८ अहंबालोमहानंध्रोवपुषापर्वतोपमः ॥ युद्धंममानेनसहरो
चतेबाहुशालिना १९ युद्धव्यतिक्रमःकश्चिन्नभविष्यतिमत्कृतः ॥ नह्यहंबाहुयोधानांदूषयिष्यामियन्मतम् २० योयंकरीषधर्म
श्चतोयधर्मश्चरंगजः ॥ कषायस्यचसंसर्गःसमयोह्येषकल्पितः २१ संयमःस्थिरताशौर्यंव्यायामःसत्क्रियाबलम् ॥ रंगेचनियतासि
द्धिरेतद्युद्धविदांमतम् २२

एवंबालोबालेनेत्यादिकक्षांतरेणस्वस्वकक्षामध्यतएवेत्यर्थः ॥ १५ ॥ १६ ॥ प्रकृतेविशेषमाह तदिदमिति ॥ १७ ॥ १८ ॥ एवंसंदेहमानंजनंभगवानाश्वासयति अहमिति
१९॥ २० ॥ यइतिकरीषेणोद्वर्तनंजलेनक्षालनंकषायेणगैरिकेणानुलेपनंचेतिमल्लानांसंप्रदायइत्यर्थः ॥ २१ ॥ संयमः अन्योन्यंअपसारणं स्थिरताअनपसरणं व्यायामः
स्थिरयोरपिहस्तपादादिचालनं सत्क्रियाचालनेपिमर्मास्पर्शित्वं सत्क्रियायामपिबलाधिक्येनरंगेनियतासिद्धिर्जयाख्याषड्भिःसाधनैर्भवतीत्यर्थः ॥ २२ ॥

---

१ ‘ तत्र नस्याद्विचारणा ’ इति पाठान्तरम् ।

॥ ५ ॥ ६ ॥विंध्येतिविंध्यस्योत्तरतःऋक्षवतोदक्षिणतइत्यर्थः ॥ ७ ॥ ८ ॥ तत्रैव सह्यस्योपरिष्टादेवपरतःपाश्चिमायांदिशि ॥ ९ ॥ पन्नगराजस्यधूम्रवर्णाख्यस्य १० स्वपुरं रैवताचलसमीपस्थं ॥ ११ ॥ १२ ॥ मृगयंतोजिज्ञासमानाः ॥ १३ ॥ दारुणोपलसंकटेविषमाश्मदुर्गमे ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ महाश्मसंघातवर्ती



 तातयुक्तास्समवयसाबलेमहतिसंस्थिताः ॥ क्षिप्रमाज्ञप्तुमिच्छामःकिंकुर्मस्तवशासनात् ५ सतान्नृपतिशार्दूलश्शार्दूलानिववेगितान्॥प्रीत्यापरमयाप्राहसु 
तान्वीर्यकुतूहलात् ६ विंध्यर्क्षवंतावभितोद्वेपुर्यौपर्वताश्रये ॥ निवेशयतुयत्नेनमुचुकुंदस्सुतोमम ७ सह्यस्यचोपरिष्टात्तुदक्षिणांदिशमाश्रितः ॥ पद्मवर्णो
पिमेपुत्रोनिवेशयतुमाचिरम् ८ तत्रैवपरतःकांतेदेशेचंपकभूषिते ॥ सारसोमेपुरंरम्यंनिवेशयतुपुत्रकः ९ हरितोयंमहाबाहुस्सागरेहारितोदके ॥ द्वीपंप
न्नगराजस्यसुतोमेपालयिष्यति १० माधवोमेमहाबाहुर्ज्येष्ठपुत्रश्चधर्मवित् ॥ यौवराज्येनसंयुक्तस्स्वपुरंपालयिष्यति ११ सर्वेनृपाश्रियंप्राप्ताअभिषिक्ता
स्सचामराः ॥ पित्रानुशिष्टाश्चत्वारोलोकपालोपमानृपाः १२ स्वंस्वंनिवेशनंसर्वेभेजिरेनृपसत्तमाः ॥ पुरस्थानानिरम्याणिमृगयंतोयथाक्रमम् १३ मु
चुकुंदश्चराजर्षिर्विंध्यमध्यमरोचयत् ॥ स्वस्थानंनर्मदातीरेदारुणोपलसंकटे १४ सचतंशोधयामासविविक्तंचचकारह ॥ सेतुंचैवसमंचक्रेपरिखाश्चामि
तोदकाः १५ स्थापयामासभागेषुदेवतायतनान्यपि ॥ रथ्यावीथीर्नृगांमार्गांश्चत्वराणिवनानिच १६ सतांपुरींधनवतींपुरुहूतपुरीप्रभाम् ॥ नातिदी
र्घेणकालेनचकारनृपसत्तमः १७ नामचास्याश्शुभंचक्रेनिर्मितंस्वेनतेजसा ॥ तस्याःपुर्यानृपश्रेष्ठोदेवश्रेष्ठपराक्रमः १८ महाश्मसंघातवतीऋक्षवंतमु
पाश्रिता ॥ माहिष्मतीनामपुरीप्रकाशमुपयास्यति १९ उभयोर्विंध्ययोःपादेनगयोस्तांमहापुरीम् ॥ मध्येनिवेशयामासश्रियापरमयावृताम् २०
पुरिकांनामधर्मात्मापुरींदेवपुरीप्रभाम् ॥ उद्यानशतसंबाधांसमृद्धापणचत्वराम् २१ ऋक्षवंतसमभितस्तीरेतत्रनिरामये ॥ निर्मितासापुरीराज्ञापु
रिकानामनामतः २२ सतेद्वेविपुलेपुर्यौदेवभोग्योपमेशुभे ॥ पालयामासधर्मात्माराजाधर्मेव्यवस्थितः २३ पद्मवर्णोपिराजर्षिस्सह्यपृष्ठेपुरोत्तम
म् ॥ चकारनद्यावेणायास्तीरेतरुलताकुले २४ विषयस्याल्पतांज्ञात्वासंपूर्णंराष्ट्रमेवच ॥ निवेशयामासनृपस्सवप्रप्रायमुत्तमम् २५ पद्मावतंजन
पदंकरवीरंचतत्पुरम् ॥ निर्मितंपद्मवर्णेनप्राजापत्येनकर्मणा २६ सारसेनापिविहितंरम्यंक्रौंचपुरंमहत् ॥ चंपकाशोकबहुलंविपुलंताम्रमृत्तिकम् २७
वनवासीतिविख्यातःस्फीतोजनपदोमहान् ॥ पुरस्यतस्यतुश्रीमान्द्रुमैस्सार्वर्तुकैर्वृतः २८

तिमाहिष्मतीपदस्यावयवार्थोदर्शितः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ राजामुचुकुंदः ॥ २३ ॥ २४ ॥ विषयस्येतिभूभागस्याल्पत्वेपिअतिनिविडतयातत्रैवकृत्स्नस्यराष्ट्र
स्यसमावेशंकृत्वातस्यैवमहांतंवप्रंमहाप्राकारोपमंचकारेत्यर्थः ॥ २५ ॥ प्राजापत्येनत्वष्टृसंबंधिनाकर्मणाशिल्पेन ॥ २६ ॥ क्रौंचपुरंवेणायाः दक्षिणेभागे ॥ २७ ॥ २८ ॥

॥ २९ ॥ दाशाःधीवराः ॥ ३० ॥ संचिन्वंतिराशीन्कुर्वंति युक्ताःसावधानाःजातरूपंदीप्तिमत् ॥ ३१ ॥ प्रचिन्वंतोन्वेषयंतः नौभिःमहानौकाभिः संयानगामिनः क्षुद्रनौकागामिनः क्षुद्रनौकाबलेनालोड्यएकत्रमहानौकायांप्रक्षिपंतीत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ यदुवंशस्यद्विशाखत्वमुपसंहरति एवमिति चतुर्धेतिमाधवस्यमुख्यस्तंभरूपत्वात् ॥ शाखारूपेणैवचतुर्धात्वंवंशस्येत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ तस्मिन्भीमे ॥ ३९ ॥ ४० ॥ पर्ययेअवतारोपरमेसतिभीमेनवैष्णवंस्थानंमथुराख्यं

हरितोपिसमुद्रस्यद्वीपंसमभिपालयत् ॥ रत्नसंचयसंपूर्णंनारीजनमनोहरम् २९ तस्यदाशाजलेमग्नामद्गुरानामविश्रुताः ॥ येहरंतिसदाशंखान्समुद्रोदरचारिणः ३० तस्यापरेदाशजनाःप्रवालांजनसंभवान् ॥ संचिन्वंतिसदायुक्ताजातरूपंचमौक्तिकम् ३१ जलजानिचरत्नानिनिषादास्तस्यमानवाः ॥ प्रचिन्वंतोर्णवेयुक्तानौभिस्संयानगामिनः ३२ मत्स्यमांसेनतेसर्वेवर्तंतेस्मसदानराः ॥ गृह्णंतस्सर्वरत्नानिरत्नद्वीपनिवासिनः ३३ तैस्संयानगतैर्द्रव्यैर्वणिजोदूरगामिनः ॥ हरितंतर्पयंत्येकं यथैवधनदंतथा ३४ एवमिक्ष्वाकुवंशात्तुयदुवंशोविनिस्सृतः ॥ चतुर्द्धायदुपुत्रैस्तुचतुर्भिर्भिद्यतेपुनः ३५ सयदुर्माधवेराज्यंविसृज्ययदुपुंगवे ॥ त्रिविष्टपंगतोराजादेहंत्यक्त्वामहीतले ३६ बभूवमाधवसुतस्सत्त्वतोनामवीर्यवान् ॥ सत्त्ववृत्तिर्गुणोपेतोराजाराजगुणेस्थितः ३७ सत्वतस्यसुतोराजाभीमोनाममहानभूत् ॥ येनभैमास्सुसंवृत्तास्सत्वतात्सात्वतास्स्मृताः ३८ राज्येस्थितेनृपेतस्मिन्रामेराज्यंप्रशासति ॥ शत्रुघ्नोलवणंहत्वाचिच्छेदसमधोर्वनम् ३९ तस्मिन्मधुवनेस्थानेपुरींचमथुरामिमाम् ॥ निवेशयामासविभुस्सुमित्रानंदवर्द्धनः ४० पर्ययेचैवरामस्यभरतस्यतथैवचसुमित्रासुतयोश्चैवस्थानंप्राप्तंचवैष्णवम् ४१ भीमेनेयंपुरीतेनराज्यसंबंधकारणात् ॥ स्ववशेस्थापितापूर्वंस्वयमध्यासितातथा ४२ ततःकुशेस्थितेराज्येलवेतुयुवराजनि ॥ अंधकोनामभीमस्यसुतोराज्यमकारयत् ४३ अंधकस्यसुतोजज्ञेरैवतोनामपार्थिवः ॥ ऋक्षोपिरैवताज्जज्ञेरम्येपर्वतमूर्द्धनि ४४ ततोरैवतउत्पन्नःपर्वतस्सागरांतिके ॥ नाम्नारैवतकोनामभूमौभूमिधरस्स्मृतः ४५ रैवतस्यात्मजोराजाविश्वगर्भोमहायशाः ॥ बभूवपृथिवीपालःपृथिव्यांप्रथितःप्रभुः ४६ तस्यतिसृषुभार्यासुदिव्यरूपासुकेशव ॥ चत्वारोजज्ञिरेपुत्रालोकपालोपमाश्शुभाः ४७ वसुर्बभ्रुस्सुषेणश्चसभाक्षश्चैववीर्यवान् ॥ यदुप्रवीराःप्रख्यातालोकपालाइवापरे ४८ तैरयंयादवोवंशःपार्थिवैर्बहुलीकृतः ॥ यैस्साकंकृष्णलोकेस्मिन्प्रजावंतःप्रजेश्वराः ४९

प्राप्तमित्युत्तरसहितस्यान्वयः ॥ ४१ ॥ राज्यसंबंधकारणात् मधोःपुत्रेलवणेनष्टेमधुदौहित्राराज्यप्रार्थिनोभवंतीतिशास्त्रीयसंबंधात्तद्दौहित्रजत्वाच्चभीमस्येत्यर्थः ॥ ४२ ॥ राज्यअयोध्यायामितिशेषः ॥ ४३ ॥ रैवताद्रैवतोरैवताद्विश्वगर्भइत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

वसोरितिवसोःशूरापरनाम्नःसुतोवसुदेवोभवत् ततोवसुदेवोभवत् ततोवसुदेवादनंतरंसवसुर्द्वेदारिकेजनयामास तेचपृथाश्रुतश्रवाख्येकुंतिविषयेकुंतिभोजस्यराज्ञोविषयेगोचरेदु हितृत्वेनदत्तत्वात्तदधीनेइतियावत् ५० ॥ ५१ ॥ ५२ ॥ प्रनष्टे अभिभूते ॥५३ ॥ पौरमात्रेणपुरवासिलोकसाम्येनत्वांजरासंधाद्गूहयितुंवयंक्षमान एतच्चसर्वज्ञत्वाद्भवःनेववेदे त्याह ॥ देवेति भावयतीतिभावनः ज्ञाता ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ अग्रंप्रतीतिप्रत्यग्रंराजभागार्थरोधोयस्याः सेव यथाहि कर्षकग्रामंकरार्थेराजभ



वसोस्तुकुंतिविषयेवसुदेवस्सुतोविभुः ॥ ततस्सजनयामाससुप्रभेद्वेचदारिके ५० कुंतींचपांडोर्महिषींदेवतामिवभूचरीम् ॥ भार्यांचदमघोषस्यचेदिरा जस्यसुप्रभाम् ५१ एषतेस्वस्यवंशस्यप्रभवस्समर्कार्तितः ॥ श्रुतोमयापुराकृष्णकृष्णद्वैपायनांतिकात् ५२ त्वंत्विदानींप्रनष्टेस्मिन्वंशेवंशभृतांवर ॥ स्वयंभूरिवसंप्राप्तोभवायास्मज्जयायच ५३ नतुत्वांपौरमात्रेणशक्तागूहयितुंवयम् ॥ देवगुह्येष्वपिभवान्सर्वज्ञस्सर्वभावनः ५४ शक्तश्चापिजरासंधंनृपं योधयितुंविभो ॥ त्वद्बुद्धिवशगास्सर्वेवयंयोधव्रतेस्थिताः ५५ जरासंधस्तुबलवान्नृपाणांमूर्ध्नितिष्ठति ॥ अप्रमेयबलश्चैववयंचकृशसाधनाः ५६ नचे यमेकाहमपिपुरीरोधंसहिष्यति ॥ कृशभक्तेंधनक्षामादुर्गैरपरिवेष्टिता ५७ असंस्कृतांबुपरिखाद्वारयंत्रविवर्जिता ॥ वप्रप्राकारनिचयाकर्तव्याबहुविस्त रा ५८ संस्कर्तव्यायुधागारायोक्तव्याचेष्टिकाचयैः ॥ कंसस्यबलभोग्यत्वान्नातिगुप्तापुराजनैः ५९ सद्योनिपतितेकंसेराज्येस्माकंनवोदये ॥ पुरीप्रत्य ग्ररोधेवनरोधंविसहिष्यति ६० बलंसंमर्दभग्नंचकृष्यमाणंपरेणह ॥ असंशयमिदंराष्ट्रंजनैस्सहविनंक्ष्यति ६१ यादवानांविरोधेनयोजिताराज्यकामुकैः तेसर्वेद्वैधमिच्छंतियत्क्षमंतद्विधीयताम् ६२ वंचनीयाभविष्यामोनृपाणांनृपकारणात् ॥ जरासंधभयार्त्तानांद्रवतांराज्यसंभ्रमे ६३ आर्तावक्ष्यंतिनः सर्वेरुध्यमानाःपुरेजनाः ॥ यादवानांविरोधेनविनष्टास्मेतिकेशव ६४ एतन्ममतंकृष्णविस्रंभात्समुदाहृतम् । त्वंतुविज्ञापितःपूर्वंनपुनस्संप्रबोधितः ६५ यदत्रवःक्षमंकृष्णतच्चैवसंविधीयताम् ॥ त्वमस्यनेतासैन्यस्यवयंत्वच्छासनेस्थिताः ॥ त्वन्मूलश्चविरोधोयंरक्षास्मानात्मनासह ६६ ॥ इतिश्रीमहाभा रतेखिलेषुहरिवंशेविष्णुपर्वणिविकद्रुवाक्यंनामअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ विकद्रोस्तुवचःश्रुत्वावसुदे वोमहायशाः ॥ परितुष्टेनमनसावचनंचेदमब्रवीत् १ राजाषाड्गुण्यवक्तावैराजामंत्रार्थतत्त्ववित् ॥ सतत्त्वंचहितंचैवकृष्णोक्तंकिलधीमता २

टाअवरुंधंतितद्वत् ॥ ६० ॥ ६१ ॥ कामुकैरस्माभिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ७ ॥ एकोनचत्वारिंशेथजरासंधभयाद्द्रुतिः ॥ उच्यतेजामदग्न्येनसंगतीरामकृष्णयोः ॥ १ ॥ विकद्रोरिति ॥ १ ॥ २ ॥

॥ ३ ॥ ४ ॥ हेतुतः मन्निमित्तंवैरमितिहेतुतः क्रमतः शत्रोःपराक्रमतोन्यायतःयन्निमित्तंवैरंतस्यैवपरिहारेणारिष्टशांतिःकर्तव्येतियुक्तेःशास्त्रतःअशक्तस्यापसरणानुज्ञावशात् दे
वंभाविकार्यंअनुपश्यताम् ॥ ५ ॥ ६ ॥ ७ ॥ तत्रक्रमतःशास्त्रतइत्येतौहेतूव्याचष्टेबलिनइति सन्निकृष्टेनिकटे ॥ ८ ॥ इतरयोर्हेत्वोरुत्तरमाह अहमित्यादिना ॥ ९ ॥ १०

भाषिताराजधर्माश्चसत्याश्चजगतोहिताः ॥ विकद्रुणायदुश्रेष्ठयद्धितंतद्विधीयताम् ३ एतच्छ्रुत्वापितुर्वाक्यंविकद्रोश्चमहात्मनः ॥ विकद्रोस्तद्वचस्त
थ्यंनिशम्ययदुपुंगवः ॥ वाक्यमुत्तममेकाग्रोबभाषेपुरुषोत्तमः ४ ब्रुवतांवरश्रुतंवाक्यंहेतुतःक्रमतस्तथा ॥ न्यायतश्शास्त्रतश्चैवदैवंचैवानुपश्यताम् ५
श्रूयतामुत्तरंवाक्यंश्रुत्वाचपरिगृह्यताम् ॥ नयेनव्यवहर्तव्यंपार्थिवेनयथाक्रमम् ६ संधिंचविग्रहंचैवयानमासनमेवच ॥ द्वैधीभावंसंश्रयंचषाड्गुण्यंचिं
तयेत्सदा ७ बलिनस्संनिकृष्टेतुनस्थेयंपंडितेनवै ॥ अपक्रमेद्धिकालज्ञस्समर्थोयुद्धमुद्वहेत् ८ अहंतावत्सहार्येणमुहूर्तेस्मिन्प्रकाशिते ॥ जीवितार्थंगमि
ष्यामिशक्तिमानप्यशक्तवत् ९ ततस्सह्याचलयुतंसहार्येणाहमक्षयम् ॥ आत्मद्वितीयश्श्रीमंतंप्रवेक्ष्येदक्षिणापथम् १० करवीरपुरंचैवरम्यंक्रौंचपुरंतथा ॥
द्रक्ष्यावस्तत्रसहितौगोमंतंचनगोत्तमम् ११ आवयोर्गमनंश्रुत्वाजितकाशीसपार्थिवः ॥ अप्रविश्यपुरींदर्पादनुसारंकरिष्यति १२ ततस्सह्यवनेष्वेवराजा
यातिसानुगः ॥ आवयोर्ग्रहणेचैवनृपतिःप्रयतिष्यति १३ एषानश्श्रेयसीयात्राभविष्यतिकुलस्यवै ॥ पौराणामथपुर्याश्चदेशस्यचसुखावहा १४ नचश
त्रोःपरिभ्रष्टाराजानोविजिगीषवः ॥ पराराष्ट्रेषुमृष्यंतिमृधेशत्रोःक्षयंविना १५ एवमुक्त्वातुतौवीरौकृष्णसंकर्षणावुभौ ॥ प्रपेदतुरसंभ्रांतौदक्षिणौदक्षि
णापथम् १६ तौतुराष्ट्राणिशतशश्चरंतौकामरूपिणौ ॥ दक्षिणांदिशमास्थायचेरतुर्मार्गगौसुखम् १७ सह्यपृष्ठेषुरम्येषुमोदमानावुभौतथा ॥ दक्षिणापथ
गौवीरावध्वानंसंप्रपेदतुः १८ तौचस्वल्पेनकालेनसह्याचलविभूषितम् ॥ करवीरपुरंप्राप्तौस्ववंशेनविभूषितम् १९ तौतत्रगत्वावेणायानद्यास्तीरांतमाश्रि
तम् ॥ आसेदतुःप्ररोहाढ्यंन्यग्रोधंतरुपुंगवम् २० अधस्तात्तस्यवृक्षस्यमुनिंदीप्ततपोधनम् ॥ अंसावसक्तपरशुंजटावल्कलधारिणम् २१ गौरमग्निशिखा
कारंतेजसाभास्करोपमम् ॥ क्षत्रांतकरमक्षोभ्यंवपुष्मंतमिवार्णवम् २२

॥ ११ ॥ अनुसारंपृष्ठतोधावनम् ॥ १२ ॥ राजाजरासंधःप्रयतिष्यतिवेगेनागमिष्यति ॥ १३ ॥ १४ ॥ १५ ॥ शत्रोःशत्रुंप्राप्यपरिभ्रष्टाःस्वराष्ट्रेस्थित्वापृष्ठतोशत्रोर्वधमेवकाम
यंतेनतुस्वराष्ट्ररक्षांतत्रमुख्यार्थिनःपरस्याभिनिवेशाभावादित्यर्थः ॥ १५ ॥ दक्षिणौसमर्थौ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

न्यस्तंसमारोपितंअतएवसंकुचितंआधानंत्रेताग्निविस्तारोयस्यतम् अथापिकालेभादुष्कृतेष्वग्निषुहुतहुताशनम् ॥ २३ ॥ होमार्थंदुह्यतेसाहोमधुक् साचासौकामदोहनाचेति समासः ॥ २४ ॥ २५ ॥ सधिष्ण्यौसस्थानौ ॥ २६ ॥ २७ ॥ २८ ॥ समुद्रात्भूमिषुपातमात्रंप्राप्यतत्रशूर्पारकंनामनगरंकृतं कृत्स्नायाःक्षितेःकाश्यपायदानत्वात् ॥ २९॥

न्यस्तसंकुचिताधानंकालेहुतहुताशनम् ॥ क्लिन्नंत्रिषवणांभोभिराद्यंदेवगुरुंयथा २३ सवत्सांधेनुकांश्वेतांहोमधुक्कामदोहनाम् ॥ क्षीरारणिंकर्षमाणंमहेंद्रगिरिगोचरम् २४ ददृशतुस्तौसहितावपरिश्रांतमव्ययम् ॥ भार्गवंराममासीनंमंदरस्थंयथारविम् २५ न्यायतस्तौतुतंदृष्ट्वापादमूलेकृतासनौ ॥ वसुदेवसुतौवीरौसधिष्ण्याविवपावकौ २६ कृष्णस्तमृषिशार्दूलमुवाचवदतांवरः ॥ श्लक्ष्णंमधुरयावाचालोकवृत्तांतकोविदः २७ भगवन्जामदग्निंत्वामवगच्छामिभार्गवम् ॥ राममुनीनामृषभंक्षत्रियाणांकुलांतकम् २८ त्वयासायकवेगेनक्षिप्तोभार्गवसागरः ॥ इषुपातेननगरंकृतशूर्पारकंत्वया २९ धनुष्यंचशतायाममिषुपंचशतोच्छ्रयम् ॥ सह्यस्यचनिकुंजेषुस्फीतोजनपदोमहान् ३० अतिक्रम्योदधेर्वेलामपरांतेनिवेशितः ॥ त्वयातत्कार्तवीर्यस्यसहस्रभुजकाननम् ३१ छिन्नंपरशुनैकेनस्मरतानिधनंपितुः ॥ इयमद्यापिरुधिरैःक्षत्रियाणांहतद्विषाम् ३२ स्निग्धैस्त्वत्परशूत्सृष्टैरक्तपंकावसुंधरा ॥ रैणुकेयंविजानेत्वांक्षितौक्षितिपरोषणम् ३३ परशुप्रग्रहेयुक्तंयथैवेहरणेतथा ॥ तदिच्छावस्त्वयाविप्रकंचिदर्थमुपश्रुतम् ३४ उत्तरंचश्रुतार्थेनप्रयुक्तमविशंकया आवयोर्मथुरारामयमुनातीरशोभिनी ३५ यादवौस्वोमुनिश्रेष्ठयदितेश्रुतिमागतौ ॥ वसुदेवोयदुश्रेष्ठःपितानौहिधृतव्रतः ३६ जन्मप्रभृतिचैवावांव्रजेष्वेवनियोजितौ ॥ तौस्वःकंसभयात्तत्रशंकितौपरिवर्द्धितौ ३७ वयंचप्रथमंप्राप्तौमथुरायांप्रवेशितौ ॥ तावावांव्युत्थितंहत्वासमाजेकंसमोजसा ३८ पितरंतस्यतत्रैवस्थापयित्वाजनेश्वरम् ॥ स्वमेवकर्मचारब्धौगवांव्यापारकारकौ ३९ अथावयोःपुरंरोद्धुंजरासंधोऽभ्यवस्थितः ॥ संग्रामान्सुबहून्कृत्वालब्धलक्षावपिस्वयम् ४० ततस्स्वपुररक्षार्थंप्रजानांचधृतव्रत ॥ अकृतार्थावनुद्योगौकर्तव्यबलसाधनौ ४१ अरथौपत्तिनौयुद्धेनिस्तनुत्रौनिरायुधौ ॥ जरासंधोद्यमभयात्पुराद्वाविवनिस्सृतौ ४२ एवमावामनुप्राप्तौमुनिश्रेष्ठतवांतिकम् ॥ आवयोर्मंत्रमात्रेणकर्तुमर्हसिसत्क्रियाम् ४३ श्रुत्वैतद्भार्गवोरामस्तयोर्वाक्यमनिंदितम् ॥ रैणुकेयःप्रतिवचोधर्मसंहितमब्रवीत् ४४ अपरांतादहंकृष्णसंप्रतीहागतःप्रभो ॥ एकएवविनाशिष्यैर्युवयोर्मंत्रकारणात् ४५

धनुश्चतुर्हस्तं इषुर्द्विहस्तः ॥ ३० अपरांतेपश्चिमसमुद्रतीरे ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ कर्तव्यंसंपादनीयंबलंसैन्यसाधनंधनादिकंययोस्तौ ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ द्वेषानुशायिनाद्वेषमेवानुशेतेऽनुरुध्यतेनतुधर्मेतेन ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ विषयांतेदेशसीम्नि निवासायरात्रिवासाय ॥ ५६ ॥ प्ररुहंउपगिरिम् ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ श्राम्यतःश्रममाणानूवानप्रस्थानितियावत् ॥ ६१ ॥ वनमेववास्यंवासार्हंयस्यसवनवास्यः सचसौ

विदितोमेव्रजेवासस्तवपद्मनिभेक्षण ॥ दानवानांवधश्चापिकंसस्यापिदुरात्मनः ४६ विग्रहंचजरासंधेविदित्वापुरुषोत्तम ॥ तवसभ्रातृकस्येहसंप्राप्तोस्मि वरानन ४७ जानेत्वांकृष्णगोप्तारंजगतःप्रभुमव्ययम् ॥ देवकार्यार्थसिद्ध्यर्थमबालंबालतांगतम् ४८ नत्वयाविदितंकिंचित्त्रिषुलोकेषुविद्यते ॥ तथापि भक्तिमात्रेणशृणुवक्ष्यामितेवचः ४९ पूर्वजैस्तवगोविंदपूर्वंपुरमिदंकृतम् ॥ करवीरपुरंनामराष्ट्रंचैवनिवेशितम् ५० पुरेस्मिन्नृपतिःकृष्णवासुदेवोमहायशाः ॥ शृगालइतिविख्यातोनित्यंपरमकोपनः ५१ नृपेणतेनगोविंदतववंशभवान्नृपाः ॥ दायादानिहतास्सर्वेवीरद्वेषानुशायिना ५२ अहंकारपरो नित्यमजितात्मातिमत्सरी ॥ राज्यैश्वर्यमदाविष्टःपुत्रेष्वपिचदारुणः ५३ तन्नेहभवतस्स्थानंरोचतेमेनरोत्तम ॥ करवीरपुरेघोरेनित्यंपार्थिवदूषिते ५४ श्रूयतांकथयिष्यामियत्रोभौशत्रुबाधनौ ॥ जरासंधंबलोदग्रंभवंतौयोधयिष्यतः ५५ तीर्त्वावेणामिमांपुण्यांनदीमद्यैवबाहुभिः ॥ विषयांतेनिवासाय गिरिंगच्छामदुर्गमम् ५६ रम्यंयज्ञगिरिंनामसह्यस्यप्ररुहंगिरिम् ॥ निवासंमांसभक्षाणांचौराणांघोरकर्मणाम् ५७ नानाद्रुमलतायुक्तंचित्रंपुष्पितपादपम् । प्रोष्येतत्रनिशामेकांखट्वांगांनामनिम्नगाम् ५८ भद्रंतेसंतरिष्यामोनिकषोपलभूषणाम् ॥ गंगाप्रपातप्रतिमांश्रेष्ठांचमहतोगिरेः ५९ तस्याःप्रपातंद्रक्ष्यामस्तापसारण्यभूषणम् ॥ उपभुज्यत्विमान्कामान्गत्वातान्धरणीधरान् ६० द्रक्ष्यामस्तत्रतान्विप्राञ्छ्राम्यतोवैतपोधनान् ॥ रम्यंक्रौंचपुरंनाम गमिष्यामःपुरोत्तमम् ६१ वंशजस्तत्रतेराजाकृष्णधर्मरतस्सदा ॥ महाकपिरितिख्यातोवनवास्यजनाधिपः ६२ तमदृष्ट्वैवराजानंनिवासायगतेहनि ॥ तीर्थमानडुहंनामतत्रस्थास्यामसंगताः ६३ ततश्च्युतागमिष्यामस्सह्यस्यविवरेगिरिम् ॥ गोमंतमितिविख्यातंनैकशृंगविभूषितम् ६४ स्वर्गतिक्रमहाशृंगंदुरारोहंखगैरपि ॥ विश्रामभूतंदेवानांज्योतिर्भिरभिसंवृतम् ६५ सोपानभूतंस्वर्गस्यगगनाद्रिमिवोच्छ्रितम् ॥ तंविमानावतरणंगिरिंमेरुमिवापरम् ६६ तस्योत्तमेमहाशृंगेभास्वंतौदेवरूपिणौ ॥ उदयास्तमयेसूर्यंसोमंचज्योतिषांपतिम् ६७, ऊर्मिमंतंसमुद्रंचअपारद्वीपभूषणम् ॥ प्रेक्ष्यमाणौसुखंतत्र नगाग्रेविचरिष्यथः ६८

जनश्चतस्याधिपतिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ दर्शयिष्यंतिप्रकटीभविष्यंति ॥ ७४ ॥ ७५ ॥ ७६ ॥ भजस्वलभस्व ॥ ७७ ॥ ७८ ॥ ७९ ॥ व्यूहानांशत्रुसैन्यानाम् ॥ ८०
॥ ८१ ॥ ८२ ॥ ८३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ७ ॥ चत्वारिंशचमेध्यायेवर्ण्यतेरामकृष्णयोः ॥ गोमंतारो



शृंगस्थौतस्यशैलस्यगोमंतस्यवनेचरौ ॥ दुर्गयुद्धेनधावंतौजरासंधंविजेष्यथः ६९ तत्रशैलगतौदृष्ट्वाभवंतौयुद्धदुर्मदौ ॥ अशक्तश्शैलयुद्धेवैजरासंधोभ
विष्यति ७० भवद्भ्यामपियुद्धेतप्रवृत्तेतत्रदारुणे ॥ आयुधैस्सहसंयोगंपश्यामिनचिरादिव ७१ संग्रामश्चमहान्कृष्णनिर्दिष्टस्तत्रदैवतैः ॥ यदूनांपार्थि
वानांचमांसशोणितकर्दमः ७२ तत्रचक्रंहलंचैवगदांकौमोदकींतथा ॥ सौनंदंमुशलंचैववैष्णवान्यायुधानिच ७३ दर्शयिष्यतिसंग्रामेयास्यंतिचमहोक्षिताम्
रुधिरंकालयुक्तानांवपुर्भिःकालसंनिभैः ७४ सचक्रमुशलोनामसंग्रामःकृष्णविश्रुतः ॥ दैवतैरिहनिर्दिष्टःकालस्यादेशसंज्ञितः ७५ तत्रतेकृष्णसंग्रामेसु
व्यक्तंवैष्णवंवपुः ॥ द्रक्ष्यंतिरिपवःसर्वेसुराश्चसुरभावन ७६ तांभजस्वगदांकृष्णचक्रंचचिरविस्मृतम् ॥ भजस्वस्वेनरूपेणसुराणांविजयायवै ७७ बल
श्चापंहलंघोरंमुशलंचारिमर्दनम् ॥ वधायसुरशत्रूणांभजताल्लोकभावनः ७८ एषतेप्रथमःकृष्णसंग्रामोभुविपार्थिवैः ॥ पृथिव्यर्थेसमाख्यातोभाराव
तरणेसुरैः ७९ आयुधावाप्तिरत्रैववपुषोवैष्णवस्यच ॥ लक्ष्म्याश्चतेजसश्चैवव्यूहानांचविदारणम् ८० अतःप्रभृतिसंग्रामोधरण्यांशस्त्रमूर्च्छितः ॥ भविष्य
तिमहान्कृष्णभारतंनामवैशसम् ८१ तद्गच्छकृष्णशैलेंद्रंगोमंतंचनगोत्तमम् ॥ जरासंधमृधेचापिविजयस्त्वामुपस्थितः ८२ इदंचैवामृतप्रख्यंहोमधेनोः
पयोमृतम् ॥ पीत्वागच्छतभद्रंवोमयादिष्टेनकर्मणा ८३ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरामवाक्यंनामएकोनचत्वारिंशोऽध्यायः ३९ ॥
॥ वैशंपायनउवाच ॥ ॥ तत्तुधेन्वाःपयःपीत्वाबलदर्पसमन्वितौ ॥ ततस्तौरामसहितौप्रस्थितौयदुपुंगवौ १ गोमंतंपर्वतंद्रष्टुंमत्तनागेंद्रगामिनौ
जामदग्न्यप्रदिष्टेनमार्गेणवदतांवरौ २ जामदग्न्यतृतीयस्तेत्रयस्त्रयइवाग्नयः ॥ शोभयंतिस्मपंथानंत्रिदिवंत्रिदशाइव ३ तेचाध्वविधिनासर्वेततोवैदिवस
क्रमात् ॥ गोमंतमचलंप्राप्तामंदरंत्रिदशाइव ४ लताचारुविचित्रंचनानाद्रुमविभूषितम् ॥ नानागुरुपिनद्धांगंचित्रंचित्रैर्मनोहरैः ५ द्विरेफगणसंकीर्णशिला
संकटपादपम् ॥ मत्तबर्हिणनिर्घोषैर्नादितंमेघनादिभिः ६ गगनालग्नशिखरंजलदासक्तपादपम् ॥ मत्तद्विपविषाणाग्रैःपरिघृष्टोपलांकितम् ७ कूजद्भि
श्चांडजगणैस्समंतात्प्रतिनादितम् ॥ दरीप्रपातांबुरवैश्छन्नंशार्दूलपल्लवः ८ नीलाश्मचयसंघातैर्बहुवर्णंयथावनम् ॥ धातुविस्रावदिग्धांगंसानुप्रस्रव
भूषितम् ९ ५७

हृष्णंतस्मात्प्रत्यावृत्तिर्द्विजन्मनः ॥ १ ॥ १ ॥ २ ॥ ३ ॥ अध्वविधिनामानुषगत्या ॥ ४ ॥ चित्रैःमयूरैः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ प्रस्थानिसानूनि ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥२४ ॥ दरीकंदरयोःकृत्रिमाकृत्रिम

कीर्णंसुरगणैःकांतैर्मैनाकमिवकामगम् ॥ उच्छ्रितंसुविशालाग्रंसमूलांबुपरिस्रवम् १० सकाननदरीप्रस्थंश्वेताभ्रगणभूषितम् ॥ पनसाम्रातकाम्रौ
घैर्वेत्रस्यंदनचंदनैः ११ तमालैलावनयुतंमरीचक्षुपसंकुलम् ॥ पिप्पलीवल्लिकलिलंचित्रमिंगुदिपादपैः १२ द्रुमैस्सर्जरसानांचसर्वतःपरिशोभितम्
प्रांशुशालवनैर्गुप्तंबहुचित्रवनैर्युतम् १३ सर्जनिंबार्जुनवनंपाटलीकुलसंकुलम् ॥ हिंतालैश्चतमालैश्चपुन्नागैश्चोपशोभितम् १४ जलेषुजलजैश्छन्नंस्थ
लेषुस्थलजैरपि ॥ पंकजैर्द्रुमखंडैश्चसर्वतःप्रतिभूषितम् १५ जंबूजंबूलवृक्षाढ्यंकद्रुकंदलभूषितम् ॥ चंपकाशोकबकुलंबिल्वतिंदुकशोभितम् १६ कुं
जैश्चनागपुष्पैश्चसमंतादुपशोभितम् ॥ नागयूथसमाकीर्णंमृगसंघातशोभितम् १७ सिद्धचारणरक्षोभिस्सेवितप्रस्तरांतरम् ॥ गंधर्वैश्चसमायुक्तंगुह्यकैः
पक्षिभिस्तथा १८ विद्याधरगणैर्नित्यमनुकीर्णशिलातलम् ॥ सिंहशार्दूलसन्नादैस्सततंप्रतिनादितम् ॥ सेवितंवारिधाराभिश्चंद्रपादैश्चशोभितम् १९
स्तुतंत्रिदशगंधर्वैरप्सरोभिरलंकृतम् ॥ वनस्पतीनांदिव्यानांपुष्पैरुच्चावचैश्चितम् २० शक्रवज्रप्रहाराणामनभिज्ञंकदाचन ॥ दवाग्निभयनिर्मुक्तंमहा
वातभयोज्झितम् २१ प्रपातप्रभवाभिश्चसरिद्भिरुपशोभितम् ॥ काननैराननाकारैर्विशेषद्भिरिवाश्रियम् २२ जलशैवलशृंगाग्रैरुन्मिषंतमिवाश्रिया ॥
स्थलीभिर्मृगजुष्टाभिःकांताभिरुपशोभितम् २३ पार्श्वैरुपलकल्माषैर्मेघैरिवविभूषितम् ॥ पादप्रच्छन्नभूमीभिस्सपुष्पाभिस्समंततः २४ मंडितंवनराजी
भिःप्रमदाभिःपतिंयथा ॥ सुंदरीभिर्दरीभिश्चकंदराभिस्तथैवच २५ तेषुतेष्ववकाशेषुसदारामिवशोभितम् ॥ औषधीदीप्तशिखरंवानप्रस्थनिषेवितम् ॥
जातरूपैर्वनोद्देशैःकृत्रिमैरिवभूषितम् २६ मूलेनसुविशालेनशिरसाप्युच्छ्रितेनच ॥ पृथिवीमंतरिक्षंचगाहयंतमिवस्थितम् २७तेतमासाद्यगोमंतंरम्यंभूमि
धरोत्तमम् ॥ रुचिरंरुरुचुस्सर्वेवासायामरसन्निभाः २८ रुरुहुस्तेगिरिवरंखमूर्ध्वमिवपक्षिणः ॥ असज्जमानावेगेनवैनतेयपराक्रमाः २९ तेतुतस्योत्तरंशृंग
मारूढास्त्रिदशाइव ॥ अगारंसहसाचक्रुर्मनसानिर्मितोपमम् ३० निविष्टौयादवौदृष्ट्वाजामदग्न्योमहामतिः ॥ रामोभिमतमक्लिष्टमाप्रष्टुमुपचक्रमे ३१
कृष्णयास्याम्यहंतातपुरंशूर्पारकंविभो ॥ युवयोर्नास्तिवैमुख्यंसंग्रामेदैवतैरपि ३२ प्राप्तवानास्मियांप्रीतिंमार्गानुगमनादपि ॥ सामेकृष्णानुगृह्णा
तिशरीरमिदमव्ययम् ३३ इदंयत्स्थानमुद्दिष्टंयत्रायुधसमागमः ॥ युवयोर्विहितोदेवैस्समयस्सांपरायिकः ३४ देवानांमुख्यवैकुंठविष्णोदेवैरभिष्टुत ॥
कृष्णसर्वस्यलोकस्यशृणुमेनैष्ठिकंवचः ३५

त्वेनव्यवस्था ॥ २५ ॥ २६ ॥ गाहयंतंगाहमानम् ॥ २७ ॥ २८॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ सांपरायिकःपरलोकहितः ॥ ३४ ॥ नैष्ठिकंतात्विकम् ॥ ३५ ॥

इदंभूभारहरणरूपंप्रस्तुतंआरब्धम् ॥ ३६ ॥ प्रथमोमुख्यःकल्पःप्रयोगः ॥३७॥ तत्रेति त्वमेवतवायुधादिकंभाव्यमलौकिकेनसामर्थ्येनयदाह यास्कः आत्मैवैषांरथोभवत्यात्मा श्वाआत्मायुधमात्मेषवआत्मासर्वंदेवस्येति ॥ ३८ ॥ चतुर्द्विगुणपीनांसंअष्टबाहुमित्यर्थः एतेनकृष्णस्यसाक्षाद्विष्णुत्वमुक्तंनतुतदंशत्वंविदश्यंकृष्णस्येदमेवरूपमृद्विभुजंस्व विद्वद्दृश्यमितिज्ञेयम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ वैधव्येनआगामिनाअधिवासितापरिगृहीताअतएवएकवेणीधराअसंस्कृतकेशबंधा ॥ ४३ ॥ हेकृष्णक्षत्रंसंक्षिप्यनप्र तीक्षतइतिपूर्वेणसंबंधः क्षत्रियाः मरणभयात्संकोचंप्राप्यकालावधिंनप्रतीक्षंतेअपितुउत्फुल्लाभूत्वाशीघ्रमेवमरणंकामयंते यतःसग्रहंक्रूरैःग्रहैराक्रांतंक्षत्रमस्तिइत्यर्थः ॥४४॥४५॥

यदिदंप्रस्तुतंकर्मत्वयागोविंदलौकिकम् ॥ मानुषाणांहितार्थायलोकेमानुषदेहिना ३६ तस्यायंप्रथमःकल्पःकालेनतुवियोजितः ॥ जरासंधेनवैसार्द्धंसंग्रा मेसमुपस्थिते ३७ तत्रायुधबलंचैवरूपंचरणकर्कशम् ॥ स्वयमेवात्मनाकृष्णत्वयात्मानंविधत्स्वह ३८ चक्रोद्यतकरंदृष्ट्वात्वांगदापाणिमाहवे ॥ चतु र्द्विगुणपीनांसंबिभ्येदपिशतक्रतुः ३९ अद्यप्रभृतितेयात्रास्वर्गोक्तासमुपस्थिता ॥ पृथिव्यांपार्थिवेंद्राणांकृतास्त्रेत्वयिमानद ४० वैनतेयस्यचाह्वानं वाहनंध्वजकर्मणः ॥ कुरुशीघ्रंमहाबाहोगोविंदवदतांवर ४१ युद्धकामानृपतयस्त्रिदिवाभिमुखोद्यताः ॥ धार्तराष्ट्रस्यवशगास्तिष्ठंतिरणवृत्तयः ४२ राज्ञांनिधनदृष्टार्थावैधव्येनाधिवासिता ॥ एकवेणीधराचेयंवसुधात्वांप्रतीक्षते ४३ सग्रहंकृष्णनक्षत्रंसंक्षिप्यारिविमर्दन ॥ त्वयिमानुष्यमापन्नेयुद्धे चसमुपस्थिते ४४ त्वरस्वकृष्णयुद्धायदानवानांवधायच ॥ स्वर्गायचनरेंद्राणांदेवतानांसुखायच ४५ सत्कृतोहंत्वयाकृष्णलोकैश्वसचराचरैः ॥ त्व यासत्कृतरूपेणयेनसत्कृतवानहम् ४६ साधयामिमहाबाहोभवतःकार्यसिद्धये ॥ स्मर्तव्यश्चास्मियुद्धेषुकांतारेषुमहीक्षिताम् ४७ इत्युक्त्वाजा मदग्न्यस्तुकृष्णमक्लिष्टकारिणम् ॥ जयाशिषावर्द्धयित्वाजगामाभीप्सितांदिशम् ४८ इतिश्रीमहाभारतेखिलेषुहारिवंशेविष्णुपर्वणिगोमंतारोहणंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥ छ ॥ वैशंपायनउवाच ॥ जामदग्न्येगतेरामेतौयादवकुलोद्वहौ ॥ गोमंतशिखरेरम्येचेरतुःकामरूपिणौ १ वनमालाकुलो रस्कौनीलपीतांबरावुभौ ॥ नीलश्वेतवपुष्मंतौगगनस्थाविवांबुदौ २ तौशैलधातुदिग्धांगौयुवानौशिखरेस्थितौ ॥ चेरतुस्तत्रकांतेषुवनेषुरतिलालसौ ३ उदयंतंनिरीक्षंतौशशिनंज्योतिषांवरम् ॥ उदयास्तमनेचैवग्रहाणांधरणीधरे ४

सत्कृतंसत्कारस्तद्वानहंत्वयाविश्वात्मनायतोस्मि अतःसर्वत्रसत्कृतोस्मीत्यर्थः ॥ ४६ ॥ साधयामीति एतेनयुद्धेजयार्थिभिःशूरैःपरशुरामःस्मर्तव्यइतिविधीयतइतिज्ञेयं ॥ ४७ ॥ ॥ ४८ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायांचत्वारिंशोध्यायः ॥ ४० ॥ छ ॥ अथैकचत्वारिंशेस्मिन्रामकृष्णजिघृक्षया ॥ जरासंधस्यनृपतेरन्वागमनमुच्यते ॥ १ ॥ जामद ग्न्येइति ॥ १ ॥ २ ॥ ३ ॥ उदयंतंउद्गच्छंतम् ॥ ४ ॥

॥ ५ ॥ सुच्छायेशोभनायांछायायाम् ॥ ६ ॥ ७ ॥ ८ ॥९॥१० ॥ ११॥ १२ ॥ रूपिणीमूर्तिमतीअमृतारणीअमृतप्रसूः यथावाजपेयसौत्रामण्यादिषुसुगृहवत्सुक्ततुषुआ स्वादितयापुरुषाःअमृतपानमपिप्राप्नुवंतितादृशीमेध्येत्यर्थः ॥ १३ ॥ कादंबरीमदकलंसुरामदेनाव्यक्तवाचम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ वडवामुखेवडवाग्निसंन्नि धौपातालेशेषरूपेणनित्यंस्थितंत्वांइदानीमंतर्हितं एतेनरामोपिपूर्णएवशेषावतारोनतुशेषांशइतिदर्शितं पर्येमिपरिभ्रमामित्वामन्वेषयंतीतिशेषः १८ पुष्पचक्रंविकसितस मुदायः

अथसंकर्षणश्श्रीमान्विनाकृष्णेनवीर्यवान् ॥ चचारतस्यशिखरेनगस्यनगसन्निभः ५ प्रफुल्लस्यकदंबस्यसुच्छायेनिषसादह ॥ वायुनामंदगंधेनवीज्य मानस्सुखेनवै ६ तस्यतेनानिलौघेनसेव्यमानस्यतत्रवै ॥ मद्यसंस्पर्शजोगंधस्संस्पृशन्घ्राणमागतः ७ तृष्णाचैनंविवेशाशुवारुणीप्रभवातदा ॥ शुशोषचमुखंतस्यमत्तस्येवापरेहनि ८ स्मारितस्सपुरावृत्तममृतप्राशनंविभुः ॥ तृषितोमदिरान्वेषीततस्तंतरुमैक्षत ९ तस्यप्रावृषिफुल्लस्ययदं भोजलजोज्झितम् ॥ तत्कोटरस्थंमदिरासंजायतमनोहरा १० तांतुतृष्णाभिभूतात्मापिबन्नार्त्तइवासकृत् ॥ मोहाच्चचलिताकारस्समजायतसप्रभुः ॥ ११ तस्यमत्तस्यवदनंकिंचिच्चलितलोचनम् ॥ घूर्णिताकारमभवच्छरत्कालेंदुसप्रभम् १२ कदंबकोटरेजातानाम्नाकादंबरीतिसा ॥ रूपिणीवारुणीतत्र देवानाममृतारणी १३ कादंबरीमदकलंविदित्वाकृष्णपूर्वजम् ॥ तिस्रस्त्रिदशनार्यस्तमुपतस्थुःप्रियंवदाः १४ मदिरारूपिणीभूत्वाकांतिश्चशशिनःप्रिया श्रीश्चदेवीवरिष्ठास्त्रीस्वयमेवांबुजध्वजा १५ सांजलिप्रग्रहादेवीरौहिणेयमुपस्थिता ॥ वारुण्यासहितंवाक्यमुवाचमदविक्लवम् १६ बलंजयस्वदैत्यानां बलदेवदिवीश्वर ॥ अहंतेदयिताकांतावारुणीसमुपस्थिता १७ त्वामेवांतर्हितंश्रुत्वाशाश्वतंवडवामुखे ॥ क्षीणपुण्येववसुधांपर्येमिविमलानन १८ पु ष्पचक्रानुलिप्तेषुकेसरेषूषितंमया ॥ अतिमुक्तेषुचाक्षोभ्यपुष्पस्तबकवत्सुच १९ अहंकदंबमालीनामेघकालेमुखप्रिया ॥ तृषितंमार्गमाणात्वांस्वेनरूपे णछादिता २० सास्मिपूर्णेनयोगेनयथैवामृतमंथने ॥ समीपंप्रेषितापित्रावरुणेनतवानघ २१ सायथैवार्णवगतातथैववडवामुखे ॥ त्वयोपभोक्तुमि च्छामिसंमतस्त्वंहिमेगुरुः २२ नत्वानंतपरित्यक्ष्येभर्त्सितापित्वयानघ ॥ नाहंत्वयाविनालोकानुत्सहेदेवसेवितुम् २३ आदिपद्मंचपद्मांकंदिव्यंश्रवण भूषणम् ॥ कौशेयानिचनीलानिसमुद्राहाणिबिभ्रती २४ मदिरानंतरंकांतिस्संकर्षणमुपस्थिता ॥ मदेनागलितश्रोणीकिंचिदाघूर्णितेक्षणा २५ प्रोवाच प्रणयात्कांतिर्बद्धांजलिपुटासती ॥ जयपूर्वेणयोगेनसस्मितंवाक्यमर्थवत् २६

केसराणामेवतेनानुलिप्तेषुकेसरवत्सुकुसुमादिषु अतिमुक्तेषुवासंतीलतासु ॥ १९ ॥ २० ॥ पूर्णेनयोगेनसर्वांगसंपत्त्यायुक्तासती ॥ २१ ॥ त्वयाकर्त्राउपभोक्तुमात्मानंभोक्तुं गुरुःस्वामी पाठांतरेगुरोःपितुःसंमतः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ कांतिर्मूर्तिमती जयपूर्वेणयोगेनरामसंबोधनसंबंधेन जयरामेतिशब्देन अभिमुखीकृत्येत्यर्थः॥२६ ॥

२७ ॥ श्रीश्चवैष्णव्याधिराममेवानुमतेत्याह श्रीश्चेति ॥ २८ ॥ दंशितावस्त्रभूषणादिभिःसपन्ना ॥ २९ ॥ ३० ॥ मौलिर्मुकुटः ॥ ३१ ॥ ३२ ॥ समुद्राहार्णि समुद्रःकामः कामं समुद्रमाविशेतिमंत्रवर्णात् मनोरथानुरूपाणीत्यर्थः भावतःआदरेण प्रतिगृह्णीष्वेत्युत्तरेणान्वयः ॥ ३३ ॥ भूषणमेवत्वयालंक्रियालंकरणंभवतिनतुतैस्तवतथापितेतवसमयो यम लंकारप्रतिग्रहस्येत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ताभ्यांतयोःसंलापेन्योन्यभाषणेअध्वानमतिचक्रामतत्राजगामेत्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ किरीटंमोक्षयि

अहंचंद्रादपिगुरुंसहस्रशिरसंप्रभुम् ॥ स्वैर्गुणैरनुरक्तात्वांयथैवमदिरातथा २७ श्रीश्चपद्मालयादेवीविधेयावैष्णवोरसि ॥ रोहिणेयोरसिशुभामालेवामल तांगता २८ सामालाममलांगृह्यबलस्योरसिदंशिता ॥ पद्मास्यापद्महस्तावैसंकर्षणमथाब्रवीत् २९ रामरामाभिरामस्त्वंवारुण्यासमलंकृतः ॥ कां त्यामयाचदेवेशसंगतश्चंद्रमायथा ३० इयंचसामयामौलिःप्रोद्धतावरुणालयात् ॥ मूर्ध्निशीर्षसहस्रस्ययातेभानुरिवाबभौ ३१ जातरूपमयंचैकंकुंडलंव ज्रभूषितम् ॥ आदिपद्मंचपद्माक्षंदिव्यश्रवणभूषणम् ३२ कौशेयानिचनीलानिसमुद्राहार्णिभावतः ॥ हारंचपीनतरलंसमुद्राभ्यंतरोषितम् ३३ देवेमां प्रतिगृह्णीष्वपौराणींभूषणक्रियाम् ॥ समयस्तेमहाबाहोभूषणानामलंक्रिया ३४ संगृह्यतमलंकारंताश्चतिस्रस्सुरस्त्रियः ॥ शुशुभेबलदेवोहिशारदेंदुसमप्र भः ३५ ससमागम्यकृष्णेनजलजांभोदवर्चसा ॥ मुदंपरमिकांलेभेग्रहयुक्तश्शशीयथा ३६ ताभ्यामुभाभ्यांसंलापेवर्तमानेगृहेयथा ॥ वैनतेयस्ततो ध्वानमतिचक्रामवेगतः ३७ संग्रामयुक्तस्तेजस्वीदैत्यप्रहरणांकितः ॥ देवतानांजयश्लाघीदिव्यस्रगनुलेपनः ३८ सुप्तस्यशयनेदिव्येक्षीरोदेवरुणालये विष्णोःकिरीटंदैत्येनहृतंवैरोचनेनवै ३९ तदर्थस्तेनसंग्रामःकृतोगुर्वर्थमोजसा ॥ किरीटार्थेसमुद्रस्यमध्येदैत्यगणैस्सह ४० मोक्षयित्वाकिरीटंतुवैष्णवं पततांवरः ॥ व्यत्यक्रमतवेगेनगगनंदेवतालयम् ४१ सददर्शगुरुंशैलेविष्णुंकार्यांतरागतम् ॥ तेनक्रोडावलंबेनकिरीटेनविराजता ४२ सदृष्ट्वामानुषंवि ष्णुंशैलराजशिरोगतम् ॥ प्रकाशचेष्टानिर्मुक्तंविमौलिमिवमानुषम् ४३ अभिज्ञस्तस्यभावानांगरुत्मान्पततांवरः ॥ चिक्षेपस्वंगतोमौलिंविष्णोःशिर सिहृष्टवत् ४४ उपेंद्रमूर्ध्निसामौलिरपिनद्धाइवापतत् ॥ शिरसस्स्थाननिर्मुक्ताकृष्णंचैवान्वशोभयत् ॥ यथैवमेरुशिखरेभानुर्मध्यंदिनेयथा ४५ वैनते यप्रयोगेणविदित्वामौलिमागताम् ॥ कृष्णःप्रहृष्टवदनोराममंवचनमब्रवीत् ४६

त्वाक्षीरोदेविष्णुमदृष्ट्वागग नंव्यत्यक्रमतेत्यर्थः ॥ ४१ ॥ ततोगगनादेवशैलेविष्णुंददर्शनतुवैकुंठे क्रोडावलंबेनस्कंधावसक्तेन ॥ ४२ ॥ विमौलिंविकिरीटं एतावताग्रंथेनकृष्णस्तु भगवान्स्वयमित्येतद्दर्शितं वैकुंठक्षीरोदयोस्तदभावात् तत्रापिमूर्तेःसत्वेतुअंशावतारत्वमेवस्यादिति ॥ ४३ ॥ ४४ ॥ स्थानेनिर्युक्तानिश्चयेननयोजिता ॥ ४५ ४६ ॥

॥ ४७ ॥ ४८ ॥ अहिशयनात्तुगतेइतिशेषः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ एषांस्थानेसति ॥ ६१ ॥
॥ ६२ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायामेकचत्वारिंशोऽध्यायः ॥ ४१ ॥ अथद्विचत्वारिंशेस्मिन्जरासंधप्रचोदितैः ॥ राजभिर्विहितोदाहोगोमंतरयेतिवर्ण्यते ॥ १ ॥

त्वरतेखलुकार्यार्थोदेवतानांनसंशयः ॥ यथेयमावयोश्शैलेसंग्रामेरचनाकृता ४७ वैरोचनेनसुप्तस्यममम‍ौलिर्महोदधौ ॥ शक्रस्यसदृशंरूपंदिव्यमास्थाय सागरात् ४८ ग्राहरूपेणयोनीतआनीतोसौगरुत्मता ॥ ममाहिशयनान्मौलिर्हृत्वाक्षिप्तोगरुत्मता ४९ सुव्यक्तंसन्निकृष्टस्ससजरासंधोनराधिपः ॥ लक्ष्यं तेहिध्वजाग्राणिरथानांवातरंहसाम् ५० एतानिविजिगीषूणांशशिकल्पानिभूभृताम् ॥ छत्राण्यार्यविराजंतेदंशितानिमितानिच ५१ अहोनृपरथोद्धा विमलाश्छत्रपंक्तयः ॥ अभिवर्ततिनश्शुभ्रायथाखेहंसपंक्तयः ५२ अहोद्योर्विमलाभानांशस्त्राणांविमलानना ॥ प्रभाभास्करभामिश्राचरंतीवदिशोद श ५३ एतानिनूनंसमरेपार्थिवैरायुधानिच ॥ क्षिप्तानिविनशिष्यंतिमयिसर्वाणिसंयुगे ५४ कालेखलुनृपःप्राप्तोजरासंधोमहीपतिः ॥ आवयोर्युद्धनि कषःप्रथमःसमरातिथिः ५५ आर्यतिष्ठावसहितौनखल्वनागतेनृपे ॥ युद्धारंभःप्रयोक्तव्योबलंतावद्विमृश्यताम् ५६ एवमुक्त्वाततःकृष्णस्स्वस्थस्संग्रामला लसः ॥ जरासंधवधंप्रेप्सुश्चकारबलदर्शनम् ५७ वीक्ष्यमाणश्चतान्सर्वान्नृपान्यदुवरोऽव्ययः ॥ आत्मानमात्मनोवाचयत्पूर्वंदिविमंत्रितम् ५८ इमेतेपृथि वीपालाःपार्थिववर्त्मनिस्थिताः ॥ येविनाशंगमिष्यंतिशास्त्रदृष्टेनकर्मणा ५९ प्रोक्षितान्खल्विमान्मन्येमृत्युनानृपसत्तमान् ॥ स्वर्गगामीनिचाप्येषांवपूंषि प्रचकाशिरे ६० स्थानेभारपरिश्रांतावसुधेयंदिवंगता ॥ एषांनृपतिसिंहानांबलैर्वैरभिपीडिता ६१ अल्पेनखलुकालेनविविक्तंपृथिवीतलम् ॥ भविष्य तिनरेंद्रौघैराकीर्णंचनभस्तलम् ६२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिजरासंधाभिगमनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ छ ॥
॥ वैशंपायनउवाच ॥ जरासंधस्ततःप्राप्तोनृपस्सर्वमहीक्षिताम् ॥ नराधिपैर्बलयुतैरनुयातोमहाद्युतिः १ व्यायतोदग्रतुरगैर्विस्पष्टार्थसमाहितैः ॥ रथैस्सां ग्रामिकैर्युक्तैरसंगगतिभिःक्वचित् २ हेमकक्षैर्महाघंटैर्वारणैर्वारिदोपमैः ॥ महामात्रोत्तमारूढैःकल्पितैरणवल्गितैः ३ सारूढैस्सादिभिर्युक्तैःप्रेंखमाणैःप्रव ल्गितैः ॥ वाजिभिर्वायुसंकाशैःप्लवद्भिरिवपत्रिभिः ४ खड्गचर्मबलोदग्रैःपत्रिभिर्वल्गितांबरैः ॥ सहस्रसंख्यैर्निर्मुक्तैरुत्पतद्भिरिवोरगैः ५

जरासंधइति ॥१॥ विस्पष्टार्थाअश्वशास्त्रविदस्तैःसमाहिताःसुशिक्षितास्तैः ॥२॥३॥ आरूढंसर्वत्रप्रसिद्धिस्तद्युक्तैःसारूढैःप्रख्यातैःसादिभिःयुक्ताःनियुक्ताः वाजिनस्तैः ॥ ४ ॥ ५ ॥

धृतव्रतइत्यलौकिकमपिसामर्थ्यंसूचिम् ॥ ६॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ कृतकौतुकाःकृतकौतुकमंगलाः ॥ १४ ॥ १५॥ १६॥ १७ ॥ १८॥ १९ ॥
॥ २० ॥ २१ ॥ २२ ॥ नरपतिः शिशुपालोयुद्धाभिज्ञत्वादितिप्रांचः नरपतिर्ग्रंथविशेषोयत्रवाहनध्वजादीनांसंस्कारउच्यतेरुद्रयामलादिषुदृश्यमानः तत्रचतुरशीतिभूबला



एवंचतुर्विधैस्सैन्यैःप्रचलद्भिरिवांबुदैः ॥ नृपोभियातोबलवान्जरासंधोधृतव्रतः ६ सरथैर्नैमिघोषैश्चगजैश्चमदर्शिजितैः ॥ हेषद्भिश्चापितुरगैःक्ष्वेडितोग्रैश्चपत्तिभिः ७ सन्नादयन्दिशस्सर्वास्सर्वांश्चापिगुहाशयान् ॥ सराजासागराकारस्ससैन्यःप्रत्यदृश्यत ८ तद्बलंपृथिवीशानांहृष्टयोधजनाकुलम् ॥ क्ष्वेडितास्फोटितरवंमेघसैन्यमिवाबभौ ९ रथैःपवनसंपातैर्गजैश्चजलदोपमैः॥ तुरगैश्चासिताभ्राभैःपत्तिभिश्चापिदंशितैः १० व्यामिश्रंतद्बलंभातिपत्तिद्विपरथाकुलम् ॥ घर्मांतेसागरगतंयथाभ्रपटलंतथा ११ सबलास्तेमहीपालाजरासंधपुरोगमाः ॥ परिवार्यगिरिंसर्वेनिवेशायोपचक्रमुः १२ बभौतस्यनिविष्टस्यबलश्रीश्शिबिरस्यवै ॥ शुक्लपर्वणिपूर्णस्ययथारूपंमहोदधेः १३ वीतरात्रेततःकालेनृपास्तेकृतकौतुकाः ॥ आरोहणार्थंशैलस्यसमेतायुद्धलालसाः ॥ १४ समवायीकृतास्सर्वेगिरिप्रस्थेषुतेनृपाः ॥ निविष्टामंत्रयामासुर्युद्धकालकुतूहलाः १५ एषांतुतुमुलश्शब्दश्शुश्रुवेपृथिवीक्षिताम् ॥ युगांतेभिद्यमानानांसागराणांयथास्वनः १६ तेषांसकंचुकोष्णीषास्स्थविरावेत्रपाणयः ॥ चेरुर्माशब्दइत्येवंब्रुवंतोराजशासनात् १७ तस्यरूपंबलस्यासीन्निश्शब्दस्तिमितस्यवै ॥ लीनमीनभुजंगस्यनिश्शब्दस्यपयोदधेः १८ तस्मिन्स्तिमितनिश्शब्देयोगादिवमहार्णवे ॥ जरासंधोबृहद्वाक्यंबृहस्पतिरिवाददे १९ शीघ्रंसमभिवर्ततांबलानीहमहीक्षिताम् ॥ सर्वतःपर्वतश्चायंबलौघैःपरिवार्यताम् २० अश्मयंत्राणियुज्यंतांक्षेपणीयाश्चमुद्गराः ॥ ऊर्ध्वंचापिप्रवाह्यंतांप्रासावैतोमराणिच २१ ऊर्ध्वंप्रक्षेपणार्थायदृढानिचलघूनिच ॥ शस्त्रपातविघातानिक्रियंतामाशुशिल्पिभिः २२ शूराणांयुद्ध्यमानानांप्रमत्तानांपरस्परम् ॥ यथानरपतिःप्राहतथाशीघ्रंविधीयताम् २३ दार्यतामेषटंकौघैःखनित्रैश्चनगोत्तमः ॥ नृपाश्चयुद्धदुर्गज्ञाविन्यस्यंतामदूरतः २४ अद्यप्रभृतिसैन्यैर्मेगिरिरोधःप्रवर्त्यताम् ॥ यावदेतौपातयामोवसुदेवसुतावुभौ २५ अचलोयंशिलायोनिःक्रियतांनिश्चलांडजः ॥ आकाशमपिबाणौघैर्निस्संपातंविधीयताम् २६ मयानुसृष्टास्तिष्ठंतुगिरिभूमिषुभूमिपाः ॥ तेषुतेष्ववकाशेषुशीघ्रमारुह्यतांगिरिः २७ मद्रःकलिंगाधिपतिश्चेकितानश्चबाह्लिकः ॥ काश्मीरराजोगोनर्दःकरूषाधिपतिस्तथा २८



निचतुरशीतिचक्राणिष ॥ तत्रयस्ययस्ययाभूर्बलकरीशत्रोश्चापकर्षकरीसतानाश्रयत्वित्यर्थः यथापतंतिनोवाहाइतिपाठेतुतथागिरिप्रांतोविषमःसमीकर्तव्यःयथास्माकंचहयास्तत्र गच्छंतीत्यर्थः ॥ २३ ॥ युद्धदुर्गज्ञाःयुद्धरहस्यज्ञाः ॥ २४ ॥ २५ ॥ निःसंतापंनिरवकाशंअतएवसंचारस्थानाभावान्निश्चलांडजत्वं युज्यतेगिरेः ॥ २६ ॥ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ विमर्दंतोविमर्दयंतः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रतिबंधेन

द्रुमःकिंपुरुषश्चैवपार्वतीयाश्चमालवाः ॥ पर्वतस्यापरंपार्श्वंक्षिप्रमारोहयंत्वमी २९ पौरवोवेणुदारिश्ववैदर्भस्सोमकस्तथा ॥ रुक्मीचभोजाधिपतिस्सू र्याक्षश्चैवमालवः ३० पांचालाधिपतिश्चैवद्रुपदश्चनराधिपः ॥ विंदानुविंदावावंत्यौदंतवक्रश्चवीर्यवान् ३१ छागलिःपुरमित्रश्चदरदश्चमहीपतिः ॥ कौशां ब्योमालवश्चैवशतधन्वाविदूरथः ३२ भूरिश्रवास्त्रिगर्तश्चबाणःपंचनदस्तथा ॥ उत्तरंपर्वतोद्देशमेतेदुर्गंसहानृपाः ॥ आरोहंतुविमर्दंतोवज्रप्रतिमगौरवाः ३३ उलूकःकैतवेयश्ववीरश्चांशुमतःसुतः ॥ एकलव्योदृढाश्वश्चक्षत्रधर्माजयद्रथः ३४ उत्तमौजास्तथाशाल्वःकेरलेयश्चकैशिकः ॥ वैदिशोवामदेवश्चसुकेतु श्चापिवीर्यवान् ३५ पूर्वपर्वतनिर्व्यूहमेतेष्वायतमस्तुनः ॥ विदारयंतोधावंतुवाताइवबलाहकान् ३६ अहंचदरदश्चैवचेदिराजश्ववीर्यवान् ॥ दक्षिणंशै लनिचयंदारयिष्यामदंशिताः ३७ एवमेषगिरिःक्षिप्रंसमंताद्वेष्टितोबलैः ॥ वज्रप्रपातप्रतिमंप्राप्नोतुतुमुलंभयम् ३८ गदिनोवेगदाभिश्चपरिघैःपरिवा युधाः ॥ अपरेविविधैशस्त्रैर्दारयंतुनगोत्तमम् ३९ एषभूमिधरोद्यैवविषमोन्नशिलान्वितः ॥ कार्योभूमिसमस्सर्वोभवद्भिर्वसुधाधिपैः ४० जरासंधवचश्श्रु त्वापार्थिवाराजशासनात् ॥ गोमंतंवेष्टयामासुस्सागरःपृथिवीमिव ४१ उवाचराजाचेदीनांदेवानांमघवानिव ॥ किंतेयुद्धेनदुर्गेस्मिन्गोमंतेचनगोत्तमे ॥ ४२ दुरारोहश्चशिखरेप्रांशुपादपकंटके ॥ काष्ठैस्तृणैश्चबहुभिःपरिवार्यसमंततः ४३ अद्यैवदीप्यतांक्षिप्रमलमन्येनकर्मणा ॥ क्षत्रियास्सुकुमाराहिरणेसाय कयोधिनः ४४ नियुक्ताःपर्वतेदुर्गेनियोक्तुंपादयोधिनः ॥ ननामप्रतिबंधेननचावस्कंदकर्मणा ४५ शक्यएषगिरिस्तातदेवैरप्यवमर्दितुम् ॥ दुर्गयुद्धेक्रम श्चैयात्रोधयुद्धेनपार्थिवाः ४६ भक्तोदकेंधनैःक्षीणाःपात्यंतेगिरिसंश्रिताः ॥ वयंबहवइत्येवंनाथेषुनिपुणोनयः ४७ यादवौनावमंतव्यौद्वावप्येतौरणे स्थितौ ॥ अविज्ञातबलावेतौश्रूयेतेदेवसंमितौ ४८ कर्मभिस्त्वमरौविद्मोबालावतिबलान्वितौ ॥ दुष्कराणीहकर्माणिकृतवंतौयदूत्तमौ ४९ शुष्ककाष्ठैस्तृ णैर्वेष्ट्यसर्वतःपर्वतोत्तमम् ॥ अग्निनादीपयिष्यामोदह्येतांगतचेतनौ ५० यदिचेन्निष्क्रमिष्येतेदह्यमानावितोंतिके ॥ समेत्यपातयिष्यामस्त्यक्ष्यतोजीवि तंततः ५१ वाक्यमेतत्तुरुरुचेसबलानांमहीक्षिताम् ॥ यदुक्तंचेदिराजेननृपाणांहितशंसिना ५२ ततःकाष्ठैस्तृणैर्वंशैश्शुष्कशाखैश्चपादपैः ॥ उपादी प्यतशैलेंद्रस्सूर्यपादैरिवांबुदः ५३

रोधमात्रेण अवस्कंदेनकर्मणा उपर्युत्प्लवनेन ॥ ४५ ॥ ४६ ॥ भक्तादिभिःरहिताएवपात्यंतेनत्वन्यथा ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३॥

१ संकट इतिपाठान्तरम्

॥ ५४ ॥ ५५ ॥ पवनायस्तःवायुनाउद्धूतः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ रीतीःधातुरसानांधाराःनिर्वर्तयामासप्रवर्तितवान् ॥ ६० ॥ ६१ ॥ ६२ ॥ प्रपातानांप्र



ददृुस्तेसर्वतस्तूर्णंपावकंतत्रपार्थिवाः ॥ यथोद्देशंयथावातंशैलस्यलघुविक्रमाः ५४ सवायुदीपितोवह्निरुत्पपातसमंततः ॥ सधूमज्वालमालाभिर्भाभिः
खमिवशोभयन् ५५ सोनलःपवनायस्तःकाष्ठसंचयमूलवान् ॥ ददाहशैलंश्रीमंतंगोमंतंकांतपादपम् ५६ सदह्यमानश्शैलेंद्रोमुमोचविपुलाशिलाः ॥
शतशश्शतधाभूत्वामहोल्काकारदर्शनाः ५७ सचित्रभानुश्शैलेंद्रोभाभिर्भानुरिवांबुदम् ॥ आलिंपतीवविविधवरसमंतादर्चिरुद्धतः ५८ धातुभिःपच्यमा
नैश्चज्वलद्भिश्चैवपादपैः ॥ उद्भ्रांतश्वापदोरौतितुद्यमानइवाद्रिराट् ५९ प्रतप्तोदह्यमानस्तुसशैलःकृष्णवर्त्मना ॥ रीतीर्निर्वर्तयामासकांचनांजनराजतीः
६० वह्निनाचापिदीप्तांगोगिरिर्नीतिविराजते ॥ धूमांधकारोर्ध्वतनुर्मज्जमानइवांबुदः ६१ विश्लिष्टोपलसंघातःकर्कशांगारवर्षणः ॥ गिरिर्भात्यनलोद्गारै
रुल्कावृष्टिरिवांबुतः ६२ प्रपातप्रस्रवोरिक्षिप्तोधूमसंवर्द्धितोदरः ॥ सगिरिर्भस्मतांयातोयुगांताग्निहतोपमः ६३ विह्वलास्तस्यपार्श्वेभ्यस्सर्पादग्धार्द्धदे
हिनः ॥ श्वसंतःपृथुमूर्द्धानोनिश्चेरुरशिवेक्षणाः ६४ उत्पत्योत्पत्यगगनात्पुनःपुनरवाङ्मुखाः ॥ रेसुश्चोद्वेजितास्सिंहाश्शार्दूलाश्चानलाविलाः ६५ मुमुचुः
पादपाश्चैवदाहनिर्यासजंजलम् ६६ वहत्यूर्ध्वगतिर्वातोभस्मांगाराभिपिंगलः ॥ धूमच्छायाचगगनेदर्पितांभोददर्शना ६७ त्यज्यमानोमहासानुर्विह
गैःश्वापदैरपि ॥ गिरिर्वैकल्यमायातिप्रागल्भ्यात्कृष्णवर्त्मनः ६८ समुमोचशिलाश्शैलश्चलोदग्रशिलोच्चयः ॥ वज्रेणपुरुहूतस्ययथास्याद्दारितस्तथा
६९ आदीप्यतंतुशैलेंद्रंक्षत्रियाव्यूहदंशिताः ॥ अर्धक्रोशमपक्रांताःपावकेनाभितापिताः ७० दह्यमानेनगश्रेष्ठेसीदमानैर्महाद्रुमैः ॥ धूमभारैरनालक्ष्येमूले
शिथिलतांगते ७१ सरोषंहितदारामोवचनंकेशिसूदनम् ॥ बभाषेपद्मपत्राक्षंससाक्षान्मधुसूदनम् ७२ दह्यतेयंगिरिस्तातससानुशिखरद्रुमः ॥ आवयोः
कृष्णवैरेणबलिभिर्वसुधाधिपैः ७३ पश्यकृष्णानलोष्णानांसधूमानांसमंततः ॥ वनानांविरसंतीवनगाभ्याशेद्विपोत्तमाः ७४ अयंयद्यावयोरर्थेगोमंत
स्तातदह्यते ॥ अयशस्यमिदंलोकेकौलीनंचभविष्यति ७५ तदस्यानृण्यहेतोर्हिनगस्यनगसन्निभ ॥ क्षत्रियान्निहनिष्यामोदोर्भ्यामेवयुधांवर ७६ एतेते
क्षत्रियाःसर्वेगिरिमादीप्यदंशिताः ॥ रथिनस्तातदृश्यंतेयथादेशंयुयुत्सवः ७७ एवमुक्त्वागिरेश्शृंगान्मेरुशृंगादिवोडुराट् ॥ निपपातबलश्श्रीमान्वनमा
लाधरोयुवा ७८ कादंबरीमदक्षीबोनीलवासास्सिताननः ॥ सशारदेंदुसंकाशोवनमालान्वितोदरः ७९



स्रवैरुत्क्षिप्तउज्झितः शुष्कतांगतइत्यर्थः ॥ ६३ ॥ ६४ ॥ रेसुः आर्तनादंचक्रुः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ विरसंतीवक्रं
दंतीव ॥ ७४ ॥ कौलीनंलोकापवादः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

॥ ८० ॥ ८१ ॥ ८२ ॥ प्रस्नुतःप्रस्विन्नः ॥ ८३ ॥ सिंहस्यआरसितमहाध्वानिस्तद्वन्निर्घोषोयस्यसः ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ इतिहरिवंशेवि॰टीकायांद्विचत्वा
रिंशोध्यायः ॥ ४२ ॥ अथत्रिचत्वारिंशेस्मिन्मागधस्यपराजयः ॥ करवीरपुरेप्रोक्तःसृगालस्यवधोद्भुतः ॥ १ ॥ तौनगात्इति ॥ १ ॥ २ ॥ ३ ॥ पतंतिस्मआयुधानी

कांतैककुंडलधरश्चारुमौलिरवाङ्मुखः ॥ निपपातनरेंद्राणांमध्येकेशवपूर्वजः ८० अवप्लुतेततोरामेकृष्णःकृष्णांबुदोपमः ॥ गोमंतशिखराच्छ्रीमानाप्लुतोमि
तविक्रमः ८१ ततस्तंपीडयामासपद्भ्यांगिरिवरंहरिः ॥ सपीडितोगिरिस्तेननिर्ममज्जसमंततः ८२ जलाकुलोपलस्तत्रप्रस्नुतोद्विरदोयथा ॥ सतेनवा
रिणावह्निस्तत्क्षणात्प्रशमंययौ ८३ कल्पांतेवारिधाराभिर्मेघजालैरिवांशुमान् । सिंहारसितनिर्घोषःपीतवासाघनाकृतिः ८४ किरीटमूर्द्धासौम्यास्यःपुं
डरीकनिभेक्षणः ॥ श्रीवत्सवक्षास्सुमुखस्सहस्राक्षसमद्युतिः ८५ रामादनंतरंकृष्णःप्लुतोवैवीर्यवांस्ततः ॥ ताभ्यामेवप्लुताभ्यांचचरणैःपीडितोगिरिः ८६
मुमोचसलिलोत्पीडांस्तीव्रपावकशांतये । सलिलोत्पीडनंदृष्ट्वापार्थिवाभयमाविशन् ॥ ८७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशे विष्णुपर्वणिगोमंत
दाहोनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ७ ॥ वैशंपायनउवाच ॥ तौनगादाप्लुतौदृष्ट्वावसुदेवसुतावुभौ ॥ क्षुब्धंनरवरानीकंसर्वंसंमूढवाहनम् १ बा
हुप्रहरणौतौतुचेरतुस्तत्रयादवा ॥ मकराविवसंरब्धौसमुद्रक्षोभणावुभौ २ ताभ्यांमृधेप्रविष्टाभ्यांयादवाभ्यांमतिस्त्वभूत् ॥ आयुधानांपुराणानामादा
नकृतलक्षणा ३ ततोंबरतलाद्भूयःपतंतिस्ममहात्मनोः ॥ मध्येराजसहस्रस्यसमरंप्रतिकांक्षिणोः ४ यानिवैमाथुरेयुद्धेप्राप्तान्याहवशोभिनोः ॥ तान्यं
बरात्पतंतिस्मदिव्यान्याहवसंप्लवे ५ लेलिहानानिदिव्यानिदीप्ताग्निसदृशानिवै ॥ निक्षिप्ययानितत्रैवतानिप्राप्तौस्मयादवौ ६ क्रव्यादैरनुयातानिमूर्ति
मंतिबृहंतिच ॥ तृषिताऩ्याहवेभोक्तुंनृपमांसानिसर्वशः ७ दिव्यस्रग्दामधारीणित्रासयंतिचखेचरान् ॥ प्रभयाभासमानानिदंशितानिदिशोदश
८ हलंसंवर्तकंनामसौनंदंमुसलंतथा ॥ चक्रंसुदर्शनंनामगदांकौमोदकींतथा ९ चत्वार्येतानितेजांसिविष्णुप्रहरणानिवै ॥ ताभ्यांसमवतीर्णानियादवा
भ्यांमहामृधे १० जग्राहप्रथमंरामोललामप्रतिमंरणे ॥ सर्पंतमिवसर्पेंद्रंदिव्यमालाकुलंहलम् ११ सव्येनसात्वतांश्रेष्ठोजग्राहमुसलोत्तमम् ॥ सौनंदं
नामबलवान्निरानंदकरंद्विषाम् १२ दर्शनीयंचलोकेषुचक्रमादित्यवर्चसम् ॥ नाम्नासुदर्शनंनामप्रीतोजग्राहकेशवः १३

तिशेषः ॥ ४ ॥ ५ ॥ यानितत्रैवमथुरायांनिक्षिप्ययातौतानिप्राप्तौलब्धवंतौ ॥ ६ ॥ ७ ॥ स्रग्दाममालारूपाणिदामानिरज्जुविशेषाः ॥ ८ ॥ ९ ॥ ताभ्यांतयोरर्थे ॥ १० ॥
ललामप्रतिमंध्वजतुल्यं ललामंलांछनेध्वजेइतिमेदिनी ॥ ११ ॥ १२ ॥ वर्चसमितिसमासांतात्टच् ॥ १३ ॥

१ सौमदमिति पाठान्तरम् ।

॥ १४ ॥ १५ ॥ विष्णुतनुःब्रह्मा ॥ तत्तुल्यौ कर्तुमन्यथाकर्तुंशक्ताविरयर्थः ॥ १६ ॥ १७ ॥ अप्रतिरूपौअतुल्यौ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

दर्शनीयंचलोकेषुधनुर्जलदनिस्वनम् ॥ नाम्नाशार्ङ्गमितिख्यातंप्रीतोजग्राहवीर्यवान् १४ देवैर्निगदितार्थस्यगदातस्यापरेकरे ॥ निषिक्ताकुमुदाक्षस्य नाम्नाकौमोदकीतिसा १५ तौसप्रहरणौवीरौसाक्षाद्विष्णुतनूपमौ ॥ समरेरामगोविंदौरिपूंस्तान्प्रत्ययुद्ध्यताम् १६ आयुधप्रग्रहौवीरौतावन्योन्यमया वुभौ ॥ पूर्वजानुजसंज्ञौतुरामगोविंदलक्षणौ १७ समरेप्रतिरूपौतौविष्णुरेकोद्विधाकृतः ॥ द्विषत्सुप्रतिकुर्वाणौपराक्रांतौयथेश्वरौ १८ हलमुद्यम्यराम स्तुसर्पेंद्रमिवकोपनम् ॥ चचारसमरेवीरोद्विपतामंतकोपमः १९ विकर्षन्रथवृंदानिक्षत्रियाणांमहात्मनाम् ॥ चकाररोषंसफलंनागेषुचहयेषुच २० कुं जराँल्लांगलोत्क्षिप्तान्मुसलाक्षेपताडितान् ॥ रामोभिरामस्समरेनिर्ममंथाचलोपमः २१ तेवध्यमानारामेणसमरेक्षत्रियर्षभाः ॥ जरासंधांतिकंभीता विरथाःप्रतिजग्मिरे २२ तानुवाचजरासंधःक्षत्रधर्मेव्यवस्थितः ॥ धिगेतांक्षत्रवृत्तिंवस्समरेकातरात्मनाम् २३ पराक्रांतस्यसमरेविरथस्यपलायतः ॥ भ्रूणहत्यामिवासह्यांप्रवदंतिमनीषिणः २४ पत्तिनोभुविचैकस्यगोपस्याल्पबलीयसः ॥ भीताःकिंविनिवर्तध्वंधिगेतांक्षत्रवृत्तिताम् २५ क्षिप्रंसमभि वर्ततांममवाक्येननोदिताः ॥ यावदेतौरणेगोपौप्रेषयामियमक्षयम् २६ ततस्तेक्षत्रियास्सर्वेजरासंधेननोदिताः ॥ क्षिपंतश्शरजालानिहृष्टायोद्धुमुप स्थिताः २७ तेहयैःकांचनापीडैरथैश्चेंदुसमप्रभैः ॥ नागैश्चांभोदसंकाशैर्महामात्रप्रणोदितैः २८ सतनुत्राणनिस्त्रिंशास्सायुधाभरणांबराः ॥ स्वारो पितधनुष्मंतस्सतूणीरास्ससायकाः २९ सच्छत्रोत्सेधिनस्सर्वेचारुचामरवीजिताः ॥ रणावनिगतारेजुस्स्यंदनस्थामहीक्षितः ३० तौयुद्धरंगापतितौ विधावंतौमहाभुजौ ॥ वसुदेवसुतौवीरौयुयुत्सूप्रत्यदृश्यताम् ३१ तद्युद्धमभवत्तत्रतयोस्तेषांतुसंयुगे ॥ सायकोत्सर्गबहुलंगदानिर्घात[illegible]णम् ३२ ततश्शर सहस्राणिप्रतीच्छंतौरणेषिणौ ॥ तस्थतुर्योधमुख्यौतावभिवृष्टौयथाचलौ ३३ गदाभिश्चैवगुर्वीभिःक्षेपणीयैश्चमुद्गरैः ॥ अर्द्यमानौमहेष्वासौयादवौ नचकंपतुः ३४ ततःकृष्णोंबुदाकारश्शंखचक्रगदाधरः ॥ व्यवर्द्धतमहातेजावातयुक्तइवानलः ३५ सचक्रेणार्कतुल्येनदीप्यमानेनतेजसा ॥ चिच्छे दसमरेवीरोनृगजाश्वमहारथान् ३६ गदानिपातविहतालांगलेनचकर्षिताः ॥ नशेकुस्तेरणेस्थातुंपार्थिवानष्टचेतसः ३७ चक्रक्षुरनिकृंतानिविचित्राणिम हीक्षिताम् ॥ रथयूथानिभग्नानिनशेकुश्चलितुंरणे ३८

पराक्रांतस्यशत्रुणावशीकृतस्य ॥ २४ ॥ पत्तिनःपदातेः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ प्रतीच्छंतौगृह्णंतौ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ चक्रक्षुरश्चक्रधारा ॥ ३८ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ सपूर्वजःसभ्रातृकः ॥ ५३ ॥ ५४ ॥ ५५ ॥ सेव

मुशलाशेपभग्नाश्वकुंजराःषष्टिहायनाः ॥ घनाइवघनापायेभग्नदंताविचुक्रुशुः ३९ चक्रानलज्वालहतास्सादिनस्सपदातयः ॥ पेतुःपरासवस्तत्रयथा वज्रहतास्तथा ४० चक्रलांगलनिर्दग्धंतत्सैन्यंविदलीकृतम् ॥ युगांतोपहतप्रख्यंसर्वंपतितमावभौ ४१ आक्रीडभूमिंदिव्यानामायुधानांवपुष्मताम् ॥ वैष्णवानांनृपास्तेतुद्रष्टुमप्यबलीयसः ४२ केचिद्रथास्समृदिताःकेचिन्निहतपार्थिवाः ॥ भग्नैकचक्रास्त्वपरेविकीर्णाधरणीतले ४३ तस्मिन्विशसनेघोरे चक्रलांगलसंप्लवे ॥ दारुणानिप्रवृत्तानिरक्षांस्यौत्पातिकानिच ४४ आर्तानांकूजमानानांपाटितानांचवेणुवत् ॥ अंतोनशक्यतेन्वेष्टुंनृनागरथवाजिना म् ४५ सापातितनरेंद्राणांरुधिरार्द्रारणक्षितिः ॥ योषेवचंदनार्द्रांगीभैरवाप्रतिभातिवै ४६ नरकेशास्थिमज्जांत्रैश्शातितानांचदंतिनाम् ॥ रुधिरौघप्लवस्तत्र छादयामासमेदिनीम् ४७ तस्मिन्महाभीषणकेनरवाहनसंक्षये ॥ शिवानामशिवैश्शब्दैर्नादितेघोरदर्शने ४८ आर्तस्तनितसंनादेरुधिरांबुह्रदाकुले ॥ अं तकाक्रीडसदृशेनागदेहैस्समावृते ४९ अपास्तैर्बाहुभिर्योधैस्तुरगैश्चविदारितैः ॥ कंकैश्चबलगृध्रैश्चनादितैःप्रतिनादिते ५० निपातेपृथिवीशानांमृत्युसा धारणेरणे ॥ कृष्णश्शत्रुवधंकर्तुंचचारांतकदर्शनः ५१ युगांतार्कप्रभंचक्रंकालींचैवायसींगदाम् ॥ गृह्यसैन्यावनिगतोबभाषेकेशवोनृपान् ५२ किन्नयुद्ध्यतवै शूराहस्त्यश्वरथसंयुताः ॥ किमिदंगम्यतेशूराःकृतास्त्राद्दृढनिश्चयाः ॥ अहंसपूर्वजस्संख्येपदातिःप्रमुखेस्थितः ५३ अदृष्टदोषेणरणेभवंतोयेनपालि ताः ॥ सइदानींजरासंधःकिमर्थंनाभिवर्तते ५४ एवमुक्तेतुनृपतिर्दरदोनामवीर्यवान् ॥ रामंहलाग्रोग्रभुजंप्रत्ययात्सैन्यमध्यगम् ५५ बभाषेसतुताम्राक्षमु क्षाणमिवसेवनी ॥ एह्येहिरामयुध्यस्वमयासार्द्धमरिंदम ५६ तद्युद्धमभवत्ताभ्यांरामस्यदरदस्यच ॥ मृधेलोकवरिष्ठाभ्यांकुंजराभ्यामिवौजसा ५७ योजयित्वाततस्कंधेरामोदरदमाहवे ॥ हलेनबलिनांश्रेष्ठोमुशलेनावपोथयत् ५८ स्वकायगतमूर्धावैमुसलेनावपोथितः ॥ पपातदरदोभूमौदारिताद्रिरिव इवाचलः ५९ रामेणनिहतेतस्मिन्दरदेराजसत्तमे ॥ जरासंधस्यराज्ञस्तुरामेणासीत्समागमः ६० महेंद्रस्येववृत्रेणदारुणोलोमहर्षणः ॥ गदेगृहीत्वावि क्रांतावन्योन्यमभिधावतः ६१ कंपयंतौभुवंवीरौतावुद्यतमहागदौ ॥ ददृशातेमहात्मानौगिरीसशिखराविव ६२ व्युपारमंतयुद्धानिप्रेक्ष्यतौपुरुषर्षभौ ॥ संरब्धाविवधावंतौगदायुद्धेषुविश्रुतौ ६३

नीकर्षकः सेवनंसीवनोपास्त्योर्हलेरामस्यकर्षणे इतिमेदिनी मत्तोवृषः कर्षकस्येवतद्वचनमगणयंतमित्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ददृशातेदृश्येते ६२ ६३

तावुभौपरमाचार्यौलोकेख्यातौमहाबलौ ॥ मत्ताविवमहानागावन्योन्यंसमधावताम् ६४ ततोदेवास्संगधर्वास्सिद्धाश्चपरमर्षयः ॥ यक्षाश्चाप्सरसश्चैव
६३ समाजग्मुस्सहस्रशः ६५ तद्देवयक्षगंधर्वमहर्षिभिरलंकृतम् ॥ शुशुभेभ्यधिकंराजन्नभोज्योतिर्गणैरिव ६६ अभिदुद्राववरामंतुजरासंधोनराधिपः ॥ सव्यं अ०४३
मंडलमाश्रित्यबलदेवस्तुदक्षिणम् ६७ तावन्योन्यंप्रजह्वातेगदायुद्धविशारदौ । दंताभ्यामिवमातंगौनादयंतौदिशोदश ६८ गदानिपातोरामस्यशुश्रुवे
शनिनिस्वनः ॥ जरासंधस्यचरणेपर्वतस्येवदीर्यतः ६९ नस्मकंपयतेरामंजरासंधकरच्युता ॥ गदागदाभृतांश्रेष्ठंविंध्यंगिरिमिवानिलः ७० रामस्य
तुगदावेगंराजासमगधेश्वरः ॥ सेहेधैर्येणमहताशिक्षयाचव्यपोथयत् ७१ ततोंतरिक्षेवागासीत्सुस्वरालोकसाक्षिणी ॥ नत्वयारामवध्योयमलंखेदेनमान
द ७२ विहितोस्यमयामृत्युस्तस्मात्साधुव्युपारम ॥ अचिरेणैवकालेनप्राणांस्त्यक्ष्यतिमागधः ७३ जरासंधस्तुतच्छ्रुत्वाविमनाःसमपद्यत ॥ नप्राहरत्तत
स्तस्मैपुनरेवहलायुधः ॥ तौव्युपारमतांयुद्धात्कृष्णयस्तेचपार्थिवाः ७४ दीर्घकालंमहाराजनिजघ्नुरितरेतरम् ॥ पराजितेत्वपक्रांतेजरासंधेमहीपतौ ॥
विविक्तमभवत्सैन्यंपरावृत्तमहारथम् ७५ तेनृपाश्चोदितैर्नागैस्स्यंदनैस्तुरगैस्तथा ॥ दुद्रुवुर्भीतमनसोव्याघ्राघ्राताम्रृगाइव ७६ तन्नरेंद्रैःपरित्यक्तंभग्नदर्पैर्महार
थैः ॥ घोरंक्रव्यादबहुलंरौद्रमायोधनंबभौ ७७ द्रवत्सुरथमुख्येषुचेदिराजोमहाद्युतिः ॥ स्मृत्वायादवसंबंधंकृष्णमेवान्ववर्तत ७८ वृतःकारूषसैन्येनचेदि
सैन्येनचानघ ॥ संबंधकामोगोविंदमिदमाहसचेदिराट् ७९ अहंपितृष्वसुर्भर्तातवयादवनंदन ॥ सबलस्त्वामुपावृत्तस्त्वंहिमेदयितःप्रभो ८० उक्तश्चै
षमयाराजाजरासंधोल्पचेतनः ॥ कृष्णाद्विरमदुर्बुद्धेविग्रहाद्व्रणकर्मणि ८१ तदेषोद्यमयात्यक्तोममवाक्यस्यदूषकः ॥ भग्नोयुद्धेजरासंधस्त्वयाद्रवतिसा
नुगः ८२ निर्वैरोनैषसंयातिस्वपुरंपृथिवीपतिः ॥ त्वय्येवभूयोप्यपरंदर्शयिष्यतिकिल्बिषम् ८३ तदिमांसंत्यजाशुत्वंमहींहतनराकुलां ॥ क्रव्यादगणसंकी
र्णांसेवितव्याममानुषैः ८४ करवीरपुरंकृष्णगच्छामसबलानुगाः ॥ शृगालंवासुदेवंवैद्रक्ष्यामस्तत्रपार्थिवम् ८५ इमौरथवरोदग्रौयुवयोःकारितौमया ॥
योजितौशीघ्रतुरगैस्स्वंगचक्राक्षकूबरौ ८६ शीघ्रमारुहभद्रंतेबलदेवसहायवान् ॥ त्वरामःकरवीरस्थंद्रष्टुंतंवसुधाधिपम् ८७ वैशंपायनउवाच ॥ पितृ
ष्वसृपतेर्वाक्यंश्रुत्वाचेदिपतेस्तदा ॥ वाक्यंहृष्टमनाःकृष्णोजगादजगतोगुरुः ८८ अहोयुद्धाभिसंतप्तौदेशकालोचितौत्वया ॥ बांधवप्रतिरूपेणसंसि ६३
क्तौवचनांबुना ८९ देशकालविशिष्टस्यहितस्यमधुरस्यच ॥ वाक्यस्यदुर्लभालोकेवक्तारश्चेदिसत्तम ९०

॥ ९१ ॥ ९२ ॥ ९३ ॥ धरिष्यंति जीविष्यंति ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ इतिह० टीकायांत्रिचत्वारिंशोध्यायः ॥ ४३ ॥ छ ॥ चतुश्चत्वारिंशकेथशृगा

चेदिनाथसनाथौस्वस्संवृत्तौतवदर्शनात् ॥ नावयोःकिंचिदप्राप्यंययोस्त्वंबंधुरीदृशः ९१ जरासंधस्यनिधनंयेचान्येतत्समानृपाः ॥ पर्याप्तौत्वत्सनाथौ
स्वःकर्तुंचेदिकुलोद्वह ९२ यदूनांप्रथमोबंधुस्त्वंहिसर्वमहीक्षिताम् ॥ अतःप्रभृतिसंग्रामान्द्रक्ष्यसेचेदिसत्तम ९३ चक्रमौशलमित्येवंसंग्रामंरणवृत्तयः ॥
कथयिष्यंतिलोकेस्मिन्येधरिष्यंतिपार्थिवाः ९४ राज्ञांपराजयंयुद्धेगोमंतेचलसत्तमे ॥ श्रवणाद्धारणाद्वापिस्वर्गलोकंव्रजंतिहि ९५ तद्गच्छाममहाराज
करवीरंपुरोत्तमम् ॥ त्वयोद्दिष्टेनमार्गेणचेदिराजशिवायवै ९६ तेस्यंदनगतास्सर्वेपवनोत्पातिभिर्हयैः ॥ भेजिरेदीर्घमध्वानंमूर्तिमंतइवाग्नयः ९७ तेत्रि
रात्रोषिताःप्राप्ताःकरवीरंपुरोत्तमम् ॥ शिवायचशिवेदेशेनिविष्टास्त्रिदशोपमाः ९८ इतिश्रीम०खिलेषुहरिवंशेवि०करवीरपुराभिगमनंनामत्रिचत्वारिंशो
ऽध्यायः ॥ ४३ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ ॥ तानागतान्विदित्वाथशृगालोयुद्धदुर्मदः ॥ पुरस्यधर्षणंमत्वानिर्जगामेंद्रविक्रमः १ रथे
नादित्यवर्णेनभास्वतारणगामिना ॥ आयुधप्रतिपूर्णेननेमिनिर्घोषहासिना २ मंदराचलकल्पेनचित्राभरणभूषिणा ॥ अक्षय्यसायकैस्तूणैःपूर्णेनार्णवघो
षिणा ३ हर्यश्वेनाशुगतिनासक्तेनशिखरेष्वपि ॥ हेमकूबरगर्भेणदृढाक्षेणातिशोभिना ४ सुबंधुरेणदीप्तेनपतत्रिवरगामिना ॥ खगतेनेवशक्रस्यहर्यश्वेनर
थाद्रिणा ५ सावित्रेनियमेपूर्णेयंददौसवितास्वयम् ॥ आदित्यरश्मिभिरिवरश्मिभिर्योनिगृह्यते ६ तेनस्यंदनमुख्येनद्विषत्स्यंदनघातिना ॥ सशृगालो
भ्ययात्कृष्णंशलभःपावकंयथा ७ चापपाणिस्सुतीक्ष्णेषुःकवचीहेममालिकः ॥ सितप्रावरणोष्णीषःपावकाकारलोचनः ८ मुहुर्मुहुर्ज्याचपलंविक्षिप
न्दुस्सहंधनुः ॥ निर्वमन्नोषजंवायुंसानलज्वालमंडलम् ९ आभिर्भूषणपंक्तीनांदीप्तोमेरुरिवाचलः ॥ रथस्थइवशैलेंद्रःशृगालःप्रत्यदृश्यत १० तस्यारासि
तशब्देनरथनेमिस्वनेनच ॥ गुरुत्वेनचनाम्यंतीचचालोर्वीभयातुरा ११ तमापतंतंश्रीमंतंमूर्तिमंतमिवाचलम् ॥ शृगालंलोकपालाभंदृष्ट्वाकृष्णोन
विव्यथे १२ शृगालश्चापिसंरब्धस्स्यंदनेनाशुगामिना ॥ समीपेवासुदेवस्ययुयुत्सुःप्रत्यदृश्यत १३ वासुदेवंस्थितंदृष्ट्वाशृगालोयुद्धलालसः ॥ अभिदु
द्राववेगेनमेघराशिरिवाचलम् १४ वासुदेवस्स्मितंकृत्वाप्रतियुद्धायतस्थिवान् ॥ तद्युद्धमभवत्ताभ्यांसमरेघोरदर्शनम् ॥ उभाभ्यामिवमत्ताभ्यांकुंजरा
भ्यांयथावने १५ शृगालस्त्वब्रवीत्कृष्णंसमरेसमुपस्थितम् ॥ युद्धरागेणतेजस्वीमोहाच्चलितगौरवः १६

लवधईर्यते ॥ तन्नारीणांविलापश्चतत्पुत्रस्याभिषेचनं ॥ १ ॥ तानागतानिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ शक्रस्यरथाद्रिणासमानइतिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥
॥ ९ ॥ १० ॥ आरसितशब्देनगर्जितध्वनिना ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ परिक्षिपन्परिक्षिपत् ॥ २७ ॥ प्रमाणस्थंचक्रभयादपलायितमित्यर्थः ॥ २८ ॥

गोमंतेयुद्धमार्गेणयत्त्वयाकृष्णचेष्टितम् ॥ अनायकानांमूर्खाणांनृपाणांदुर्बलेबले १७ समेसुविदितःकृष्णक्षत्रियाणांपराजयः ॥ कृपणानामसत्वानाम
युद्धानांरणोत्सवे १८ तिष्ठेदानींयथाकामंस्थितोहंपार्थिवेपदे ॥ क्वयास्यसिमयारुद्धोरणेष्वपरिनिष्ठितः १९ नचाहमेकंसबलोयुक्तस्त्वांयोद्धुमाहवे ॥
अहमेकस्त्वमप्येकोद्वौयुद्धावरणेस्थितौ २० किंजनेननिरस्तेनत्वंवाहंचरणेस्थितः ॥ धर्मयुद्धेननिधनंव्रजत्वेकतरोरणे २१ लोकेस्मिन्वासुदेवोहंभविष्या
मिहतेत्वयि ॥ हतेमयित्वमप्येकोवासुदेवोभविष्यसि २२ शृगालस्यवचश्श्रुत्वावासुदेवःक्षमापरः ॥ ईर्ष्यंतंप्रहरस्वेतितमुक्त्वाचक्रमाददे २३ तत
स्सायकजालानिशृगालःक्रोधमूर्च्छितः ॥ चिक्षेपकृष्णेघोराणियुद्धायलघुविक्रमः २४ शस्त्राणियानिचान्यानिमुशलाद्यानिसंयुगे ॥ पातयामासगोविं
देसशृगालःप्रतापवान् २५ शृगालप्रहितैरस्त्रैःपावकज्वालमालिभिः ॥ निर्दयाभिहतःकृष्णःस्थितोगिरिरिवाचलः २६ सोस्त्रप्रहाराभिहतःकिंचिद्रो
षसमन्वितः ॥ चक्रमुद्यम्यगोविंदश्शृगालस्यपरिक्षिपन् २७ तंरथस्थंप्रमाणस्थंशृगालंयुद्धदुर्मदम् ॥ जघानसमरेचक्रंजातदर्पमहाबलम् २८ ततस्सु
दर्शनंचक्रंपुनरायाद्गुरोःकरे ॥ चक्रेणोरसिनिर्भिन्नस्सगतासुर्गतोत्सवः ॥ पपातक्षतजस्रावीशृगालोद्रिरिवाहतः २९ निशम्यतंनिपतितंवज्रपातादिवाच
लम् ॥ तस्यसैन्यान्यपययुर्विमनांसिहतेनृपे ३० केचित्प्रविश्यनगरंकश्मलाभिहताभृशम् ॥ रुरुदुर्दुःखसंतप्ताभर्तृशोकाभिपीडिताः ३१ केचित्तत्रै
वशोचंतस्स्मरंतस्सुकृतानिच ॥ पतितंभूपतिंभूमौनत्यजंतिस्मदुःखिताः ३२ ततोमेघनिनादेनस्वरेणारिविमर्दनः ॥ कृष्णःकमलपत्राक्षोजनानामभयं
ददौ ३३ चक्रोचितेनहस्तेनराजतांगुलिपर्वणा ॥ नभेतव्यंनभेतव्यमितितानभ्यभाषत ३४ नास्यपापस्यदोषेणनिराबाधकरंजनम् ॥ घातयिष्या
मिसमरेनेदंशूरव्रतंमतम् ३५ अश्रुपूर्णमुखादीनाःक्रंदमानाभृशंतदा ॥ पतितोवैशृगालाख्योभ्रष्टस्सन्दीनमानसः ३६ तेस्मपश्यंतिपतितंधरण्यांधरणी
पतिम् ॥ चक्रनिर्दारितोरस्कंभिन्नशृंगमिवाचलम् ३७ विलपंतिस्मतेसर्वेसचिवास्सप्रजाभृशम् ॥ साश्रुपातेक्षणादीनाश्शोकस्यवशमागताः ३८ ते
षांरुदितशब्देनपौराणांविस्वरैस्स्वरैः ॥ महिष्यस्तस्यनिष्पेतुस्सपुत्रारुदितानना ३९ तास्तंनिपतितंदृष्ट्वाश्लाघ्यंभूमिपतिंपतिम् ॥ स्तनानारुज्यक
रजैर्भृशार्ताःपर्यदेवयन् ४० उरांस्युरसिजांश्चैवशिरोजान्याकुलान्यपि ॥ निर्दयंताडयंत्यस्ताविस्वरंरुरुदुःस्त्रियः ४१ तस्योरसिसुदुःखार्तामृदिताःक्लि
न्नलोचनाः ॥ पेतरूर्ध्वभुजास्सर्वाश्छिन्नमूलालताइव ४२ तासांबाष्पांबुपूर्णानिनेत्राणिनृपयोषिताम् ॥ वारिविप्रहतानीवपंकजानिचकाशिरे ४३

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ आरुज्यविदार्य ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥

१ शृगालस्योरसिक्षिपदितिपाठान्तरम् इतिलिखितपुस्तके टीकातुनैव ।

ताःपतिंपतितंभूमौरुदंत्योह्वदिताडिताः ॥ लालप्यमानाःकरुणंयोषितःपर्यदेवयन् ४४ पुत्रंचास्यपुरस्कृत्यबालंप्रस्नुतलोचनम् ॥ शक्रदेवंपितुःपार्श्वेद्विगुणंरुरुदुःस्त्रियः ४५ अयंतेवीरविक्रांतोबालःपुत्रोनपंडितः ॥ त्वद्विहीनःकथमयंपदेस्थास्यतिपैतृके ४६ कथमेकपदेत्यक्त्वागतोस्यंतःपुरंपरम् ॥ अतृप्तास्तवसौख्यानांकिंकुर्मोविधवावयम् ४७ तस्यपद्मावतीनाममहिषीप्रमदोत्तमा ॥ रुदतीपुत्रमादायवासुदेवमुपस्थिता ४८ यस्त्वयापातितोवीररणप्रोक्तेनकर्मणा ॥ तस्यप्रेतगतस्यायंपुत्रस्त्वांशरणंगतः ४९ यदित्वांप्रणमेतासौकुर्याद्वाशासनंतव ॥ नायमेकप्रहारेणजनस्तप्येतदारुणम् ५० यदिकुर्यादयंमूढस्त्वयिबांधवकंविधिम् ॥ नैवंपरीतःकृपणस्सेवेतधरणीतलम् ५१ अयमस्यविपन्नस्यबांधवस्यतवानघ ॥ संततीरक्ष्यतांवीरपुत्रःपुत्रइवात्मजः ॥ ५२ तस्यास्तद्वचनंश्रुत्वामहिष्यायदुनंदनः ॥ मृदुपूर्वमिदंवाक्यमुवाचवदतांवरः ५३ राजपत्निगतोरोषस्सहानेनदुरात्मना ॥ प्रकृतिस्थावयंजातादेविसैषोस्मिबांधवः ५४ रोषोमेविगतस्साध्वितववाक्यैरकल्मषैः ॥ योयंपुत्रश्शृगालस्यममाप्येषनसंशयः ५५ अभयंचाभिषेकंचददाम्यस्मैसुखायवै ॥ आहूयंतांप्रकृतयःपुरोधामंत्रिणस्तथा ५६ पितृपैतामहेराज्येतवपुत्रोभिषिच्यताम् ॥ ततःप्रकृतयस्सर्वाःपुरोधामंत्रिणस्तथा ५७ अभिषेकार्थमाजग्मुर्यतोवैरामकेशवौ ॥ ततस्सिंहासनस्थंतुराजपुत्रंजनार्दनः ५८ अभिषेकेणदिव्येनयोजयामासवीर्यवान् ॥ अभिषिच्यशृगालस्यकरवीरपुरेसुतम् ॥ कृष्णस्तदहरेवाशुप्रस्थानमभ्यरोचयत् ५९ रथेनहरियुक्तेनतेनयुद्धार्जितेनवै ॥ केशवःप्रस्थितोध्वानंवृत्रहात्रिदिवंयथा ६० शक्रदेवोपिधर्मात्मासहमात्रापरंतप ॥ सबालवृद्धयुवतीमुख्याःप्रकृतयस्तथा ६१ शिबिकायामथारोप्यशृगालंयुद्धदुर्मदम् ॥ संहतादूरमार्गेणपश्चिमाभिमुखाययुः ६२ नैधनस्यविधानेनचक्रुस्तेतस्यसत्क्रियाम् ॥ सत्कारंकारयामासुःपितॄणांपारलौकिकम् ६३ उद्दिश्योद्दिश्यराजानंश्राद्धंकृत्वासहस्रशः ॥ ततस्तेसलिलंदत्त्वानामगोत्रादिकीर्तनैः ६४ पितर्युपरतेघोरेशोकसंविग्नमानसः ॥ कृत्वोदकंतदाराजाप्रविवेशपुरोत्तमम् ६५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशृगालवधोनामचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ तौतुस्वल्पेनकालेनदमघोषेणसंगतौ १४ अथाध्वविधिनातौतुपंचरात्रोषितौपथि १ दमघोषेणसंगम्यएकरात्रोषितावपि ॥ जग्मतुस्सहितौवीरौमुदापरमयायुतौ ॥ नगरींमथुरांप्राप्तौवसुदेवसुतावुभौ २

पंचचत्वारिंशकेस्मिन्प्रोच्यतेरामकृष्णयोः ॥ मथुरागमनंचाथप्रवेशनमहोत्सवः ॥ १ ॥ तौत्विति ॥ १ ॥ २ ॥

॥ ३ ॥ श्रेण्यःनानाजातीयाअनेकशिल्पोपजीविनः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥९॥ १० ॥ दैवतानिप्रतिमाः ॥ ११ ॥ लिंगानिलक्षणानि ॥ १२ ॥ १३ ॥
॥१४॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांपंचचत्वरिंशोऽध्यायः ॥ ४५ ॥ छ ॥ षट्चत्वारिंशेधिकेषड्भिरामस्यगोकुलागमः क्रीडनं



ततःप्रत्युद्गतास्सर्वेयादवायदुनंदनौ ॥ सबलाहृष्टमनसउग्रसेनपुरोगमाः ३ श्रेण्यःप्रकृतयश्चैवमंत्रिणश्चयथोचिताः ॥ सबालवृद्धासाचैवपुरीसमभि
वर्तत ४ नंदितूर्याण्यवाद्यंतस्तूयेतांपुरुषर्षभौ ॥ रथ्यापताकामालिन्योभासंतिस्मसमंततः ५ हृष्टाप्रमुदितासर्वापुरीपरमशोभिता ॥ भ्रात्रोस्तयो
रागमनेयथैवेंद्रमहेतथा ६ मुदितास्तत्रगायंतिराजमार्गेषुगायकाः ॥ स्तवाशीर्बहुलागाथायादवानांप्रियंकराः ७ गोविंदरामौसंप्राप्तौभ्रातरौलोकवि
श्रुतौ ॥ स्वेपुरेनिर्भयास्सर्वेक्रीडध्वंयादवास्सुखम् ८ नतत्रकश्चिद्दीनोवामलिनोवाविचेतनः ॥ मथुरायामभूत्कश्चिद्रामकृष्णसमागमे ९ वयांसिसा
धुवाक्यानिप्रहृष्टागोहयद्विपाः ॥ नरनारीगणाश्चैवभेजिरेमानसंसुखम् १० शिवाश्चप्रववुर्वाताविरजस्कादिशोदश ॥ दैवतान्यपिसर्वाणिहृष्यंत्याय
तनेष्वथ ११ यानिलिंगानिलोकस्यवृत्तानीहकृतेयुगे ॥ तानिसर्वाण्यदृश्यंततयोरागमनेतदा १२ ततःकालेशिवेपुण्येस्यंदनेनारिमर्दनौ ॥ हरियुक्तेन
तौवीरौप्रविष्टौमथुरांपुरीम् १३ प्रविशंतंपुरींरम्यांगोविंदंराममेवच ॥ अनुजग्मुर्यदुगणाश्शक्रंदेवगणाइव १४ वसुदेवस्यभवनंपितुस्तौयदुनंदनौ ॥
प्रविष्टौहृष्टवदनौचंद्रादित्याविवाचलम् १५ तत्रायुधानिसंन्यस्यगृहेस्वेस्वैरचारिणौ ॥ मुमुदातेयदुवरौवसुदेवसुतावुभौ १६ ततस्तुवसुदेवस्यपादौसम
भिपीड्यच ॥ तत्रोग्रसेनंराजानमन्यांश्चयदुपुंगवान् १७ यथान्यायंपूजयित्वातौसर्वैश्चाभिनन्दितौ ॥ जग्मतुर्हृष्टमनसौमातुरेवनिवेशनम् १८ एवंतावे
कनिर्माणौमथुरायांशुभाननौ ॥ उग्रसेनानुगौभूत्वाकंचित्कालंमुमोदतुः १९ इतिश्रीमहाभारतेखिलेषुह० वि० रामकृष्णयोर्मथुरायांप्रत्यागमनंनाम
पंचचत्वारिंशोध्यायः ॥ ४५ ॥ छ ॥ वैशंपायनउवाच ॥ कस्यचित्त्वथकालस्यस्मृत्वागोपेषुसौहृदम् ॥ जगामैकोव्रजंरामःकृष्णस्यानुमतेस्थितः १
सगतस्तत्ररम्याणिददर्शविपुलानिवै ॥ भुक्तपूर्वाण्यरण्यानिसरांसिसुरभीणिच २ सप्रविष्टस्तुवेगेनतंव्रजंकृष्णपूर्वजः ॥ वन्येनरमणीयेनवेषेणालंकृतःप्र
भुः ३ सतानभाषतप्रीत्यायथापूर्वमरिंदमः ॥ गोपांस्तेनैवविधिनायथान्यायंयथावयः ४ तथैवप्राहतान्सर्वान्तथैवपरिहर्षयन् ॥ तथैवसहगोपीभिर्यो
जयन्मधुराःकथाः ५ तमूचुःस्थविरागोपाःप्रियंमधुरभाषिणः । रामंरमयतांश्रेष्ठंप्रवासात्पुनरागतम् ६ स्वागतंतेमहाबाहोयदूनांकुलनंदन ॥ अद्यस्म
निर्वृतास्तातयत्त्वांपश्यामहेवयम् ७ प्रीताश्चैववयंवीरयत्त्वंपुनरिहागतः। विख्यातस्त्रिषुलोकेषुरामशत्रुभयंकरः ८ वर्द्धनीयावयंवीरत्वयायादवनंदन ॥
अथवाप्राणिनस्तातरमंतेजन्मभूमिषु ९



गोपनारीभिःकालिंद्याःकर्षणंतथा ॥ १ ॥ कस्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ निर्वृताःस्मसुखिनःस्म ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ तिमिनातिमितुल्येनपंचजनेन ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ रतंक्रीडनम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ २३ ॥ आवृ
तमौलिनावक्रीभूतकिरीटेन ॥२५॥ २६ ॥२७॥ २८ ॥ २९ ॥ स्नातुंस्नानपूर्वकंत्वांपरिणेतुंइच्छेइच्छामि रूपिणीमूर्तिमतीभूत्वेतिशेषः ॥३०॥ मत्तोक्तांमत्तेनोक्तामितिहेतुना

त्रिदशानांवयंमान्याध्रुवमद्यामलानन ॥ येस्मद्दृष्टास्त्वयातातकांक्षमाणास्तदागमम् १० दिष्ट्यातेनिहतामल्लाःकंसश्चविनिपातितः ॥ उग्रसेनोभि
षिक्तश्चमाहात्म्येनजनेनवै ११ समुद्रेचश्रुतोस्माभिस्तिमिनासहविग्रहः ॥ वधःपंचजनस्यैवजरासंधेनविग्रहः ॥ गोमंतेचश्रुतोस्माभिःक्षत्रियैस्सहवि
ग्रहः १२ दरदस्यवधश्चैवजरासंधपराजयः ॥ तत्रायुधावतरणंश्रुतंनःपरमाहवे १३ वधश्चैवशृगालस्यकरवीरपुरोत्तमे ॥ तत्सुतस्याभिषेकश्चनागराणां
चसांत्वनम् १४ मथुरायांप्रवेशश्चकीर्तनीयस्सुरोत्तमैः ॥ प्रतिष्ठिताचवसुधापार्थिवाश्चवशीकृताः १५ त्वचागमनंदृष्ट्वासभाग्यास्स्मयथापुरा ॥ तेन
स्मपरितुष्टावैहृषिताश्चसबांधवाः १६ प्रत्युवाचततोरामस्सर्वांस्तानभितःस्थितान् ॥ यादवेष्वपिसर्वेषुभवंतोममबांधवाः १७ इहावयोर्गतंबाल्यमि
हचैवावयोरतम् । भवद्भिर्वर्द्धिताश्चैववयास्यामोविक्रियांकथम् १८ गृहेषुभवतांभुक्तंगावश्चपरिरक्षिताः ॥ अस्माकंबांधवास्सर्वेभवंतोबद्धसौहृदाः १९
ब्रुवत्येवंयथातत्वंगोपमध्येहलायुधे ॥ संहृष्टवदनाभूयोबभूवुर्व्रजयोषितः २० ततोवनांतरगतोरेमेरामोमहाबलः ॥ एतस्मिन्नंतरेप्राप्तेरामायाविदितात्म
ने २१ गोपालैर्देशकालज्ञैरुपानीयतवारुणी ॥ सोपिबत्पांडुराभ्राभस्तत्कालंज्ञातिभिर्वृतः २२ वनांतरगतोरामःपानंमदसमीरणम् ॥ उपनिन्युस्तत
स्तस्मैवन्यानिविविधानिच २३ प्रत्यग्ररमणीयानिपुष्पाणिचफलानिच ॥ मेध्यांश्चविविधान्गंधान्भक्ष्यांश्चहृदयंगमान् २४ सद्योहृतानिपद्मानिविकचा
न्युत्पलानिच ॥ शिरसाचारुकेशेनकिंचिदावृतमौलिना ॥ श्रवणैकावलंबेनकुंडलेनविराजता २५ चंदनार्द्रेणपीतेनवनमालावलंबिना ॥ विबभावुर
सारामःकैलासेनेवमंदरः २६ नीलेवसानोवसनेप्रत्यग्रजलदप्रभे ॥ रराजवपुषाशुभ्रस्तिमिरौघेयथाशशी २७ लांगलेनावसिक्तेनभुजगाभोगवर्तिना ॥
तथाभुजाग्रश्लिष्टेनमुशलेनचभास्वता २८ समत्तोबलिनांश्रेष्ठोरराजाघूर्णिताननः॥ शैशिरीषुत्रियामासुयथास्वेदालसश्शशी २९ रामस्तुयमुनामाहस्नातु
मिच्छेमहानदि ॥ एहिमामभिगच्छत्वंरूपिणीसागरंगमे ३०संकर्षणस्यमत्तोक्तांभारतींपरिभूयसा ॥ नाभ्यवर्ततत्तंदेशंस्त्रीस्वभावेनमोहिता ३१ ततश्चुक्रो
धबलवान्रामोमदसमीरितः ॥ चकारसहलंहस्तेकर्षणाधोमुखंबली ३२ तस्यामुपरिमेदिन्यांपेतुस्तामरसस्रजः॥ मुमुचुःपुष्पकोशैश्चवासरेण्वरुणंजलम् ३३

तांभारतींपरिभूयनाभ्यवर्तत ॥ ३१ ॥ कर्षणायअधोमुखंकर्षणाधोमुखम् ॥ ३२ ॥ तस्यांहलाकृष्टायांयाःस्रजःपेतुःताःपुष्पकोशैःकरणैः वासरेण्वरुणंसुगंधिपरागारुणंम
दिरारूपंजलंमुमुचुः उद्वेमुरित्यर्थः ॥ ३३ ॥

॥ ३४ ॥ ह्रदप्रस्थितसंचयाह्रदात्प्रस्थिताः ॥ प्रचलिताःसंचयामत्स्यादयोयस्याःसा ॥ ३५ ॥ ३६ ॥ पुलिनंश्रोणिरिवयस्याःबिंबरक्तपद्मामंडलमेवओष्ठोयस्याः अंबु



सहलेननताग्रेणकूलेगृह्यमहानदीम् ॥ चकर्षयमुनांरामोव्युत्थितांवनितामिव ३४ साविह्वलजलस्रोताह्रदप्रस्थितसंचया ॥ व्यावर्ततनदीभीताहल
मार्गानुसारिणी ३५ लांगलादिष्टवर्त्मासावेगगाचक्रगामिनी । संकर्षणभयत्रस्तायोषेवाकुलतांगता ३६ पुलिनश्रोणिबिंबौष्ठीमृदितैस्तोयताडितैः ॥
फेनमेखलसूत्रैश्चछिन्नैरंबुदगामिनी ३७ तरंगविषमापीडाचक्रवाकोन्मुखस्तनी ॥ वेगगंभीरवक्रांगीत्रस्तमीनविभूषणा ३८ सितहंसेक्षणापांगीकाशक्षौ
मोच्छ्रितांबरा ॥ तीरजोद्भूतकेशांताजलस्खलितगामिनी ३९ लांगलोल्लिखितापांगीक्षुभितासागरंगमा । मत्तेवकुटिलानारीराजमार्गेणगच्छती ४०
कृष्यतेसातिवेगेनस्रोतस्खलितगामिनी । उन्मार्गानीतमार्गासायेनवृंदावनंवनम् ४१ वृंदावनस्यमध्येनसानीतायमुनानदी ॥ रोरूयमाणेवखगैरन्वि
तातोयवासिभिः ४२ सायदासमतिक्रांतानदीवृंदावनंवनम् ॥ तदास्त्रीरूपिणीभूत्वायमुनाराममब्रवीत् ४३ प्रसीदनाथभीतास्मिप्रतिलोमेनकर्मणा ॥
विपरीतमिदंरूपंतोयंचममजायते ४४ असत्यहंनदीमध्येरौहिणेयत्वयाकृता ॥ कर्षणेनमहाबाहोस्वमार्गव्यभिचारिणी ४५ प्राप्तांमांसागरेपूर्वंसपत्न्यो
वेगगर्विताः॥ फेनहासैर्हसिष्यंतितोयव्यावृत्तगामिनीम् ४६प्रसादंकुरुमेवीरयाचेत्वांकृष्णपूर्वज ॥ सुप्रसन्नमनानित्यंभवत्वंसुरसत्तम ४७ कर्षणायुधकृष्टा
स्मिरोषोयंविनिवर्त्यताम् ॥ मूर्ध्नागच्छामिचरणौतवैषालांगलायुध ४८ मार्गमादिष्टमिच्छामिक्वगच्छामिमहाभुज ॥ वैशंपायनउवाच ॥ प्रणयावनतां
दृष्ट्वायमुनांलांगलायुधः ॥ प्रत्युवाचार्णववधूंमदक्लांतइदंवचः ४९ लांगलादिष्टमार्गात्वमिमंमेप्रियदर्शने ॥ देशमंबुप्रदानेनप्लावयस्वाखिलंशुभे ५० एषते
सुभ्रुसंदेशःकथितःसागरंगमे ॥ शांतिंव्रजमहाभागेगम्यतांचयथासुखम् ५१ यावत्स्थास्यतिलोकोयंतावत्स्थास्यतुमेयशः ॥ यमुनाकर्षणंदृष्ट्वासर्वेते
व्रजवासिनः ५२ साधुसाध्वितिरामायप्रणामंचक्रिरेतदा ॥ तांविसृज्यमहाभागांतांश्चसर्वान्व्रजौकसः ५३ ततस्संचिंत्यमनसारामःप्रहरतांवरः ॥ पुनः
प्रतिजगामाशुमथुरांरोहिणीसुतः ५४ सगत्वामथुरांरामोभवनेमधुसूदनम् ॥ परिवर्तमानंददृशेपृथिव्यांसारमव्ययम् ५५ तथैवाध्वन्यवेषेणसोपश्लि
ष्यजनार्दनम् ॥ प्रत्यग्रवनमालेनवक्षसाभिविराजता ५६ सदृष्ट्वातूर्णमायांतंराममंलांगलधारिणम् ॥ सहसोत्थायगोविंदोददावासनमात्मनः ५७

दगामिनीसागरगामिनी ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ संदेश आज्ञा ॥ ५१ ॥
॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

॥ ५८ ॥ ५९ ॥ ६० ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांषट्चत्वारिंशोध्यायः ॥ ४६ ॥ सप्तचत्वारिंशकेस्मिन्चाराणांवचनादथ ॥ कृष्णस्येच्छाहिरुक्मिण्यां कुंडिनेगम
नंतथा ॥ १ ॥ एतस्मिन्निति प्रावृत्तिकाःप्रवृत्तिसूचकाः ॥ १ ॥ आत्ययिकशंसीपुविरोधशंसिषुदैर्ष्यैछंद्गोनुरोधात् ॥ २ ॥ पार्थिवात्ययिकंराज्ञांविनाशकारणम् ॥ ३ ॥ ४ ॥

उपविष्टंतदारामंपप्रच्छकुशलंव्रजे ॥ बांधवेषुचसर्वेषुगोषुचैवजनार्दनः ५८ प्रत्युवाचततोरामोभ्रातरंसाधुभाषिणम् ॥ सर्वत्रकुशलंकृष्णयेषांकुशलमिच्छ
सि ५९ ततस्तयोर्विचित्रार्थाःपौराण्यश्चाभवन्कथाः ॥ वसुदेवाग्रतःपुण्यारामकेशवयोस्तदा ६० इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणियमुना
कर्षणंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥छ॥ वैशंपायनउवाच ॥ एतस्मिन्नंतरेप्राप्तालोकप्रावृत्तिकानराः ॥ चक्रायुधगृहंसर्वेलोकपालगृहोपमम् १ ते
ष्वात्ययिकशंसीषुलोकप्रावृत्तिकेष्विह ॥ कृतसंज्ञायदुश्रेष्ठास्समेताःकृष्णसंसदि २ समागतेषुसर्वेषुयदुमुख्येषुसंसदि ॥ प्रावृत्तिकानराःप्राहुःपार्थिवात्य
यिकंवचः ३ जनार्दननरेंद्राणांपार्थिवानांसमागमः ॥ भविष्यतिक्षितीशानांसमूहानित्यनेकशः ४ त्वरितास्तत्रगच्छंतिनानाजनपदेश्वराः ॥ कुंडिनेपुं
डरीकाक्षभोजपुत्रस्यशासनात् ५ प्रकाशंस्मकथास्तत्रश्रूयंतेमनुजेरिताः ॥ रुक्मिणीकिलनाम्नास्तिरुक्मिणःप्रथमस्वसा ६ भावीस्वयंवरस्तत्रतस्याः
किलजनार्दन ॥ इत्यर्थमेतेसबलागच्छंतिमनुजाधिपाः ७ तस्यास्त्रैलोक्यसुंदर्यास्तृतीयेहनियादव ॥ रुक्मभूषणभूषिण्याभविष्यतिस्वयंवरः ८ राज्ञां
तत्रसमेतानांहस्त्यश्वरथगामिनाम् ॥ द्रक्ष्यामश्शतशस्तत्रशिबिराणिमहात्मनाम् ९ सिंहशार्दूलदप्तानांमत्तद्विरदगामिनाम् ॥ सदायुद्धप्रियाणांहिपरस्प
रमर्षिणाम् १० जयायशीघ्रंसहिताबलौघेनसमन्विताः ॥ निरुद्धाःपृथिवीपालाःकिमेकांतचरावयम् ॥ निरुत्साहाभविष्यामोगच्छामोयदुनंदनम् ॥
११ श्रुत्वैतत्केशवोवाक्यंहृदिशल्यमिवार्पितम् ॥ निर्जगामयदुश्रेष्ठोयदूनांसहितोबलैः १२ यादवास्तेबलोदग्रास्सर्वेसंग्रामलालसाः ॥ निर्ययुस्स्यं
दनवरैर्गर्विताश्त्रिदशाइव १३ बलाग्रेणनियुक्तेनहरिरीशानसंमतः ॥ चक्रोद्यतकरःकृष्णोगदापाणिर्व्यरोचत १४ यादवाश्चापरेतत्रवासुदेवानुयायिनः ॥
रथैरादित्यसंकाशैःकिंकिणीप्रतिनादितैः १५ उग्रसेनंतुगोविंदःप्राहनिश्चितदर्शनः ॥ तिष्ठत्वन्नृपशार्दूलभ्रात्रामेसहितोनघ १६ क्षत्रियाविकृतिप्रज्ञाश्शा
स्त्रनिश्चितदर्शनाः ॥ पुरींशून्यामिमांवीरजघन्येभिपतन्तिह १७

भोजपुत्रस्यरुक्मिणः शासनात्निमंत्रणात् ॥ ५ ॥ प्रथमामुख्या ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ निरुद्धाःरुक्मिणीलिप्सयेतिशेषःतत्रवयंकिंभिल्लवदेकांतचराःयेननिरुत्साहा
भविष्यामःअपितुअतिप्रसिद्धास्तेनसोत्साहाएवतत्रगच्छामइतिसार्द्धश्लोकवाक्यम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ विकृतिप्रज्ञाः कपटबुद्धयःशास्त्रनिश्चितदर्श
नाःराजनीतिविदःजघन्येमम पृष्ठतः शून्येइत्यर्थः ॥ १७ ॥

अस्माकंअस्मत्तः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥२४॥ २५ ॥ राजसींतनुंकामक्रोधप्रधानांप्रकृतिं ॥ २६ ॥ पुरातनंप्राक्सिद्धं ॥२७ सुखलक्ष्यंसाम्यं ॥ २८ ॥ सौम्येन

अस्माकंशंकितास्सर्वेजरासंधवशानुगाः ॥ मोदंतेसुखिनस्तत्रदेवलोकेयथामराः १८ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वाभोजराजोमहायशाः ॥ कृष्णस्नेहेनविक्लवंबभाषेवचनामृतम् १९ कृष्णकृष्णमहाबाहोयदूनानंदिवर्द्धन ॥ श्रूयतांयदहंत्वद्यवक्ष्यामिरिपुसूदन २० त्वयाविहीनास्सर्वेस्मनशक्तास्सुखमासितुम् ॥ पुरेस्मिन्विषयांतेवापतिहीनाइवस्त्रियः २१ त्वत्सनाथावयंतातत्वद्बाहुबलमाश्रिताः ॥ बिभीमोननरेंद्राणांसेंद्राणामपिमानद २२ विजयाययदुश्रेष्ठयत्रयत्रगमिष्यसि ॥ तत्रत्वंसहितोस्माभिर्गच्छेथायादवर्षभ २३ तस्यराज्ञोवचश्श्रुत्वासस्मितंदेवकीसुतः ॥ यथेष्टंभवतामद्यतथाकर्तास्म्यसंशयम् २४ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुवैकृष्णोजगामाशुरथेनवै ॥ भीष्मकस्यगृहंप्राप्तोलोहितायतिभास्करे २५ प्राप्तेराजसमाजेतुशिबिराकीर्णभूतले ॥ रंगंसुविपुलंदृष्ट्वाराजसींतनुमाविशत् २६ वित्रासनार्थंभूपानांप्रकाशार्थंपुरातनम् ॥ मनसाचिंतयामासवैनतेयंमहाबलम् २७ ततश्चिंतितमात्रस्तुविदित्वाविनतात्मजः ॥ सुखलक्ष्यंवपुःकृत्वानिलिल्येकेशवांतिके २८ तस्यपक्षनिपातेनपवनोद्भ्रांतकारिणा ॥ कंपितामनुजास्सर्वेन्युब्जाश्चपतिताभुवि २९ गरुडाभिहतास्सर्वेप्रचेष्टंतोयथोरगाः ॥ तान्संनिपतितान्दृष्ट्वाकृष्णोगिरिरिवाचलः ३० सराज्ञःपक्षपातेनमेनेपतगसत्तमम् ॥ ददर्शगरुडंप्राप्तंदिव्यस्रगनुलेपनम् ३१ पक्षवातेनपृथिवींचालयंतंमुहुर्मुहुः ॥ पृष्ठासक्तैःप्रहरणैर्लेलिह्यंतमिवोरगैः ३२ वैष्णवंहस्तसंश्लेषमान्यमानैरवाङ्मुखैः ॥ चरणाभ्यांप्रकर्षंतंपांडुरंभोगिनांवरम् ३३ हेमपत्रैरुपचितंधातुमंतमिवाचलम् ॥ अमृतारंभहर्तारंद्विजिह्वेंद्रविनाशनम् ३४ त्रासनंदैत्यसंघानांवाहनंध्वजलक्षणम् ॥ तंदृष्ट्वासध्वजंप्राप्तंसचिवंसांपरायिकम् ३५ धृतिमंतंगरुत्मंतंजगादमधुसूदनः दृष्ट्वापरमसंहृष्टःस्थितंदेवमिवापरम् ३६ तुल्यसामर्थ्ययावाचागरुत्मंतमवस्थितम् ॥ श्रीकृष्णउवाच ॥ स्वागतंखेचरश्रेष्ठसुरसेनारिमर्दन ॥ विनताहृदयानंदस्वागतंकेशवप्रिय ३७ व्रजपत्ररथश्रेष्ठकैशिकस्यानिवेशनम् ॥ वयंतत्रैवगत्वाद्यप्रतीक्षामस्स्वयंवरम् ३८ राज्ञांतत्रसमेतानांहस्त्यश्वरथगामिनाम् ॥ द्रक्ष्यामःशतशस्तत्रसमेतानांमहात्मनाम् ३९ एवमुक्त्वामहाबाहुर्वैनतेयंमहाबलम् ॥ जगामाथपुरींकृष्णःकैशिकस्यमहात्मनः ४० वैनतेयसखश्श्रीमान्यादवैश्चमहारथैः ॥ विदर्भनगरींप्राप्तेकृष्णेदेवकिनंदने ४१

लीनेनापियत्कृतंतदाह तस्येति न्युब्जाःअधोमुखास्तथाचेष्टंतयथोरगानोत्थातुंशक्नुवंतीत्यर्थः ॥ २९ ॥३०॥ तान्राज्ञइतिसंबन्धःमेनेमनसापूजितवान् ॥ ३१ ॥ ३२ ॥३३॥ ॥ ३४ ॥ साचिवंबुद्धिसहायंसांपारायिकंआपदिहितं ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ कैशिकस्यभीष्मकपितुः ॥ ४० ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥४५ ॥ ४६ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांसप्तचत्वारिंशोध्यायः ॥४७॥ अष्टचत्वारिंशकेथजरासंधसुनीथयोः ॥ विदर्भस्यसभायांतुवचनंश

हृष्टाःप्रमुदितास्सर्वेनिवासायोपचक्रमुः ॥ सर्वेशस्त्रायुधधराराजानोबलशालिनः ४२ ॥ वैशंपायनउवाच ॥ एतस्मिन्नेवकालेतुराजानयविशारदः ॥ कैशिकस्ततउत्थायप्रहृष्टेनांतरात्मना ४३ अर्घ्यमाचमनंदत्त्वासराजाकैशिकस्स्वयम् ॥ सत्कृत्यविधिवत्कृष्णंस्वपुरंसंप्रवेशयत् ४४ पूर्वमेवतु कृष्णायकारितंदिव्यमंदिरम् ॥ विवेशसबलश्श्रीमान्कैलासंशंकरोयथा ॥ खाद्यपानादिरत्नौघैरर्चितोवासवानुजः ४५ सुखेनउषितःकृष्णस्तस्यराज्ञोनि वेशने ॥ पूजितोबहुमानेनस्नेहपूर्णेनचेतसा ४६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरुक्मिणीस्वयंवरेसप्तचत्वारिंशोध्यायः ४७ ॥ ॥ वैशंपायनउवाच ॥ तेकृष्णमागतंदृष्ट्वावैनतेयसहाच्युतम् ॥ बभूवुश्चिंतयाविष्टास्सर्वेनृपतिसत्तमाः १ तेसमेत्यसभांराजन्राजानोभीमविक्रमाः ॥ मंत्रायमंत्रकुशलानीतिशास्त्रार्थवित्तमाः २ भीष्मकस्यसभांगत्वारम्यांहेमपरिष्कृताम् ॥ हिंसासनेषुचित्रेषुविचित्रास्तरणेषुच ॥ निषेदुस्तेनृपवरादेवा देवसभामिव ३ तेषांमध्येमहाबाहुर्जरासंधोमहाबलः ॥ बभाषेसमहातेजादेवान्देवेश्वरोयथा ४ जरासंधउवाच ॥ श्रूयतांभोनृपश्रेष्ठाभीष्मक श्चमहामतिः ॥ कथ्यमानंमयाबुद्ध्यावचनंवदतांवराः ५ योसौकृष्णइतिख्यातोवसुदेवसुतोबली ॥ वैनतेयसहायेनसंप्राप्तःकुंडिनंत्विह ६ कन्याहेतो र्महातेजायादवैरभिसंवृतः ॥ अवश्यंकुरुतेयत्नंकन्यावाप्तिर्यथाभवेत् ७ यदत्रकारणंकार्यंसुनयोपेतमृद्धितम् ॥ कुरुध्वंनृपशार्दूलाविनिश्चित्यबलाबलम् ८ पदातिनौमहावीर्यौवसुदेवसुतावुभौ ॥ वैनतेयंविनातस्मिन्गोमंतेपर्वतोत्तमे ॥ कृतवंतौमहाघोरंभवद्भिर्विदितंहितत् ९ वृष्णिभिर्यादवैश्चैवभोजांधक महारथैः ॥ समेत्ययुद्ध्यमानस्यकीदृशोविग्रहोभवेत् १० कन्यार्थेयततानेनगरुडस्थेनाविष्णुना ॥ कःस्थास्यतिरणेतस्मिन्नपिशक्रस्सुरैस्सह ११ यदा चास्मैनापिसुताकदाचित्संप्रदीयते ॥ ततोह्ययंबलादेनांनेतुंशक्तस्सुरैस्सह १२ पुराएकार्णवेवीरेश्रूयतेमेदिनीत्वियम् ॥ पातालतलसंमग्नाविष्णुनाप्र भविष्णुना १३ वाराहंरूपमास्थायउद्धृताजगदादिना ॥ हिरण्याक्षश्चदैत्येंद्रोवराहेणनिपातितः १४ हिरण्यकशिपुश्चैवमहाबलपराक्रमः ॥ अव ध्योमरदैत्यानामृषिगंधर्वकिन्नरैः १५ यक्षराक्षसनागानांनाकाशेनावनिस्थले ॥ नचाभ्यंतररात्र्यह्नोर्नशुष्केणार्द्रकेणच १६

जसूच्यते ॥ १ ॥ तेकृष्णमितिवैनतेयेत्यत्रतृतीयालोपआर्षः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ऋद्धितंऋद्धिःसंजायतेयेनतत् ॥ ८ ॥ ९ ॥ १० ॥ ११॥ यदेत्यारभ्यसुरैःसहेत्यंतोयंश्लोकः सर्वपुस्तकेषुनदृश्यते ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६

१ नास्यास्य श्लोकस्य पाठो लिख्यते.

॥ १७ ॥ योदित्यागर्भसंभूतोतेनैवविष्णुनाबलिर्बध्वापातालसंश्रयःकृतइतिपूर्वेणसंबंधः ॥ १८ ॥ १९ ॥ २० ॥ पर्शुनापरशुना ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

अवध्यास्त्रिषुलोकेषुदैत्येंद्रस्त्वपराजितः ॥ नारसिंहेनरूपेणनिहतोविष्णुनापुरा १७ वामनेनतुरूपेणकश्यपस्यात्मजोबली ॥ अदित्यागर्भसंभूतोबलिर्बध्वासुरोत्तमः १८ सत्यरज्जुमयैःपाशैःकृतःपातालसंश्रयः ॥ कार्तवीर्योमहावीर्यस्सहस्रभुजविग्रहः १९ दत्तात्रेयप्रसादेनमत्तोराज्यमदेनच ॥ जामदग्न्योमहातेजारेणुकागर्भसंभवः २० त्रेताद्वापारयोस्संधौरामश्शस्त्रभृतांवरः ॥ पर्शुनावज्रकल्पेनसप्तद्विपेश्वरोनृपः ॥ विष्णुनानिहतोभूयश्चछद्मरूपेण हैहयः २१ इक्ष्वाकुकुलसंभूतोरामोदाशरथिःपुरा ॥ त्रिलोकविजयंवीरंरावणंसंन्यपातयत् २२ पुराकृतयुगेविष्णुस्संग्रामेतारकामये ॥ षोडशार्द्धभुजोभूत्वागरुडस्थोहिवीर्यवान् २३ निजघानासुरान्युद्धेवरदानेनगर्वितान् ॥ कालनेमिश्चदैतेयोदेवानांचभयप्रदः २४ सहस्रकिरणाभेनचक्रेणनिहतोयुधि ॥ महायोगबलेनाजौविश्वरूपेणविष्णुना २५ अनेनप्राप्तकालास्तेनिहताबहवोसुराः ॥ वनेवनचरादैत्यामहाबलपराक्रमाः २६ निहताबालभावेनप्रलंबारिष्टधेनुकाः ॥ शकुनींकेशिनंचैवयमलार्जुनकावपि २७ नागंकुवलयापीडंचाणूरंमुष्टिकंतथा ॥ कंसंचबलिनांश्रेष्ठंसगणंदेवकीसुतः २८ निहनन्द्रोपवेषेणक्रीडमानोहिकेशवः ॥ एवमादीनिदिव्यानिछद्मरूपाणिचक्रिणा २९ कृतानिदिव्यरूपाणिविष्णुनाप्रभविष्णुना ॥ तेनाहंवःप्रवक्ष्यामिभवतांहितकाम्यया ३० तंमन्येकेशवंविष्णुंसुराद्यमसुरांतकम् ॥ नारायणंजगद्योनिंपुराणंपुरुषंध्रुवम् ३१ स्रष्टारंसर्वभूतानांव्यक्ताव्यक्तंसनातनम् ॥ अदृश्यंसर्वलोकानांसर्वलोकनमस्कृतम् ,३२ अनादिमध्यनिधनंक्षरमक्षरशाश्वतम् ॥ स्वयंभुवमजंस्थाणुमजेयंसचराचरैः ३३ त्रिविक्रमंत्रिलोकेशंत्रिदशेंद्रारिनाशनम् ॥ इतिमेनिश्चिताबुद्धिर्जातोयंमथुरामधि ३४ कुलेमहतिवैराज्ञांविपुलेचक्रवर्तिनाम् ॥ कथमन्यस्यमर्त्यस्यगरुडोवाहनंभवेत् ३५ विशेषेणतुकन्यार्थेविक्रमस्थेजनार्दने ॥ कस्स्थास्यतिपुमानद्यगरुडस्याग्रतोबली ३६ स्वयंवरकृतेनासौविष्णुस्स्वयमिहागतः ॥ विष्णोरागमनेचैवमहान्दोषःप्रकीर्तितः ३७ भवद्भिरनुचिंत्येदंक्रियतांयदनंतरम् ॥ वैशंपायनउवाच ॥ एवंविब्रुवमाणेतुमगधानांजनेश्वरे ३८ सुनीथोथमहाप्राज्ञोवचनंचेदमब्रवीत् ॥ सुनीथउवाच ॥ सम्यगाहमहाबाहुर्मगधाधिपतिर्नृपः ३९ समक्षंनरदेवानांयथावृत्तंमहाहवे ॥ गोमंतेरामकृष्णाभ्यांकृतंकर्मसुदुष्करम् ४० गजाश्वरथसंबाधापत्तिध्वजसमाकुला ॥ निर्दग्धामहतीसेनाचक्रलांगलवह्निना ४१

॥ २६ ॥ शकुनींपूतनां ॥ २७ ॥ २८ ॥ दिव्यानिकर्माणीतिशेषः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ क्षरंदृश्यरूपंअक्षरंकूटस्थम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ एष्यतेकाम्यते महापुरुषविग्रहंयुद्धम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायामष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ऊनपंचाशत्तमेथाध्यायेमागधभाषितात् ॥ दंतवक्रस्यशाल्वस्यवचनंसम्यगुच्यते ॥ १ ॥ इत्येवमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ वासुदेवे

तेनायंमागधश्श्रीमाननागतमचिंतयत् ॥ ब्रुवतेराजसेनायामनुस्मृत्यसुदारुणम् ४२ पदात्योर्युध्यतोस्तत्रबलकेशवयोर्युधि ॥ दुर्निवार्यंतरोवीरोह्य भवद्वाहिनीक्षयः ४३ विदितंवस्सुपर्णस्यस्वागतस्यनृपोत्तमाः ॥ पक्षवेगानिलोद्भूताबभ्रमुर्गगनेचराः ४४ समुद्राःक्षुभितास्सर्वेचचालाद्रिर्महीमुहुः ॥ वयंसर्वेसुसंत्रस्ताःकिमुत्पातेतिविक्लवाः ४५ यदासंनह्ययुध्येतआरूढःकेशवःखगम् ॥ कथमस्मद्विधश्शक्तःप्रतिस्थातुंरणाजिरे ४६ राज्ञांस्वयंवरोनाम सुमहान्हर्षवर्धनः ॥ कृतोनरवरैराद्यैर्यशोधर्मस्यवैविधिः ४७ इदंतुकुंडिनगरमासाद्यमनुजेश्वराः ॥ पुनरेवैष्यतेक्षिप्रंमहापुरुषविग्रहम् ४८ यदिसावरये दन्यंराज्ञांमध्येनृपात्मजा ॥ कृष्णस्यभुजयोर्वीर्यंकःपुमान्प्रसहिष्यति ४९ विज्ञापितमिदंदोषंस्वयंवरमहोत्सवम् । तदर्थमागतःकृष्णोवयंचैवनराधिपाः ५० कृष्णस्यागमनंचैवनृपाणामतिगर्हितम् ॥ कन्याहेतोर्नरेंद्राणांयथावदतिमागधः ५१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरुक्मिणीस्वयंवरेसुनीथवाक्येऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ इत्येवमुक्तेवचनेसुनीथेनमहात्मना ॥ करूषाधिपतिर्वीरोदंतवक्त्रोभ्यभाषत १ दंतवक्रउवाच ॥ यदुक्तंमागधेनात्रसुनीथेननराधिपाः । युक्तपूर्वमहंमन्येयदस्माकंवचोहितम् २ नचविद्वेषणेनाहंनचाहंकारवादिना ॥ नचात्मविजिगीषुत्वाद्भूषयामिवचोमृतम् ३ वाक्यार्णवंमहागाधंनीनिशास्त्रार्थबृंहितम् ॥ कएषनिखिलंवक्तुंशक्तोवैराजसंसदि ४ किंत्वनुस्मरणार्थेहंयद्ब्रवीमिशृणुध्वमे ॥ आगतोवासुदेवेतिकिमाश्चर्यंनराधिपाः ५ यथागतावयंसर्वेकृष्णोपीहतथागतः ॥ किमत्रदोषोगौण्योवाकन्याहेतोरस्समागताः ६ यदस्माभिस्समेत्यैक्यात्कृतंगोमंतरोधनम् ॥ तत्रयुद्धकृतंदोषंकथंवैवक्तुमर्हथ ७ वनवासेस्थितौवीरौकंसस्यामोहहेतुना ॥ देवर्षिवचनाद्राजन्वृंदावनतटेस्थितौ ८ तावाहूयवधार्थेनउभौरामजनार्दनौ ॥ नागेनोद्दीपितौवीरौहत्वानागंविवेशतुः ९ ततस्स्ववीर्यमाश्रित्यनिहतोरंगसागरे ॥ गतासुरिवचासीनोमथुरेशस्सहानुगः १० किमत्रविहितोदोषोयेनास्माभिर्वयोधिकैः ॥ उपरोधपराराजन्वयंसर्वेसमागताः ११ सेनालिबलमालोक्य वित्रस्तौरामकेशवौ ॥ पुरंबलंसमुत्सृज्यगोमंतेचगतावुभौ १२ तत्रापिगतमस्माभिर्हंतुंसमरयोधिभिः ॥ अप्राप्तयौवनाभ्यांचपदातिभ्यांरणाजिरे १३

तिसंधिराषः ॥ ५ ॥ गौण्यःगुणः ॥ ६ ॥ ७ ॥ ८ ॥ नागेनकुवलयापीडेनउद्दीपितौकोपितौ विवेशतुःरंगभितिशेषः ॥ ९ ॥ गतासुरिवेत्यसावधानत्वमरयोक्तम् ॥ १० ॥ येनकंसंनिघ्नतावयोधिकैरस्माभिःसहवैरंकृतंतस्यउपरोधपरायदिवयंतद्वाकिमत्रदोषोविहितःनकोपीत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥

रथादिबलेनउपेतैरस्माभिःसहतेनविग्रहोयुद्धंनकृतं अथोपरोधश्चकृतस्तत्रदंडोदहनमेवयुक्तमित्याशयः ॥ १४ ॥ नचाप्ययमधर्मइत्याह ॥ दावाग्नीति तपस्विनोदावाग्निमर
णंश्रेयइति एतौचदुर्विनीततपस्विनौ अतएतयोर्मुख्योदुर्विनीततरः सएतेनमरणेनविनीतःसुशिक्षितःस्यादितिमन्यामइतियोजना अथयुद्धकरणंश्रेयोविमुखस्यदूषणमिति
तृतीयार्द्धार्थः सार्द्धश्लोकवाक्यं ॥ १५ ॥ एवंस्वस्यानपराधित्वमुक्त्वासंप्रतिविरोधेहेत्वंतरमाह यत्रयत्रेत्यादिना ॥ १६ ॥ १७ ॥ पूर्ववैरंस्मृत्वायुद्धंदास्यतीत्यपिनेत्याशयेना

रथाश्वनरनागेननास्माभिर्विग्रहःकृतः ॥ कृत्वोपरोधंशैलस्यक्षत्रधर्मेणदीपितः १४ दावाग्निमुखमाविश्यदुर्विनीततपस्विनौ ॥ विनीतइतिमन्यामस्सर्वे
क्षत्रियपुंगवाः ॥ प्रतियुद्धेकृतेत्वेवंदूषयामजनार्दनम् १५ यत्रयत्रप्रयास्यामोवयंतत्रभवेत्कलिः ॥ प्रीत्यर्थंप्रयतिष्यामोकृष्णेनसहभूमिपाः १६ इदंकुं
डिपुरंकृष्णोनागतःकलिहेतुना ॥ कन्यानिमित्तागमनेकस्ययुद्धंप्रयच्छति १७ मर्त्येस्मिन्पुरुषेंद्रोसौनकश्चित्प्राकृतोनरः ॥ देवलोकेषुदेवेषुप्रवरःपुरुषो
त्तमः १८ देवानामपिकर्तासौलोकानांचविशेषतः ॥ नचैवबालिशाबुद्धिर्नचेर्ष्यानापिमत्सरः १९ नस्तब्धोनकृशोनार्तःप्रणतार्तिहरस्सदा ॥ एषविष्णुः
प्रभुर्देवोदेवानामपिदैवतम् २० आगतोगरुडेनेहछद्मप्राकाश्यहेतुना ॥ नानास्त्रसहितोयातिकृष्णश्शत्रुविनाशने २१ इमांयात्रांविजानीध्वंप्रीत्य
र्थंह्यागतोहरिः ॥ सहितोयादवेंद्रैश्चभोजवृष्ण्यंधकैरिह २२ अर्घ्यमाचमनंदत्त्वाआतिथ्यंचनराधिपाः ॥ करिष्यामवयंसर्वेकेशवायमहात्मने २३ एवंसं
धानतःकृत्वाकृष्णेनसहितावयम् ॥ वसामोविगतोद्वेगानिर्भयाविगतज्वराः २४ तस्यतद्वचनंश्रुत्वादंतवक्रस्यधीमतः ॥ शाल्वःप्रवदतांश्रेष्ठस्तानुवाचन
राधिपान् २५ शाल्वउवाच ॥ किंभयेनास्यनस्सर्वेन्यस्तशस्त्राभवामहे ॥ संधानकरणाद्धेतोःकृष्णस्यभयकंपिताः २६ परस्तवेनकिंकार्यंविनिंद्यबलमा
त्मनः ॥ नैषधर्मोनरेंद्राणांक्षात्रेधर्मेचतिष्ठतां २७ महत्सुराजवंशेषुसंभूताःकुलवर्द्धनाः ॥ तेषांकापुरुषाबुद्धिःकथंभवितुमर्हति २८ अहंजानामिवैकृष्ण
मादिदेवंसनातनम् ॥ प्रभुंसर्वामरेंद्राणांनारायणपरायणम् २९ वैकुंठमजयंलोकेचराचरगुरुंहरिम् ॥ संभूतंदेवकीगर्भेविष्णुंलोकनमस्कृतम् ३० कं
सराजवधार्थायभारावतरणायच ॥ अस्माकंचविनाशायलोकसंरक्षणायच ३१ अंशावतरणेकृत्स्नंजानेविष्णोर्विचेष्टितम् ॥ संग्राममतुलंकृत्वाविष्णु
नासहभूमिपाः ३२ चक्रानलविनिर्दग्धायास्यामोयमसादनम् ॥ तत्त्वंजानामिराजेंद्राःकालेनायुःक्षयोभवेत् ३३

ह मर्त्यइति ॥ मर्त्येमनुष्यलोके ॥ १८ ॥ ईर्ष्याअक्षमा मत्सरःपरोत्कर्षासहनम् ॥ १९ ॥ २० ॥ छद्मप्राकाश्यहेतुनास्वयंवरागमनव्याजेनस्वरूपंप्रकाशनीयमितिहेतोः २१॥
यादवेंद्राणांमुख्यैर्भोजादिभिः ॥ २२ ॥ २३ ॥ संधानतःसाम्ना विगतउद्वेगोयेषांतेविगतोद्वेगाः ॥ २४ ॥ २५ ॥ किमिति अस्यअस्मात्नोस्माकंभयेसतिकिंन्यस्तशस्त्राः नभवा
महे अपितुभवामहेएव भीतेनशस्त्रत्यागपूर्वकंसंधानमवश्यंकर्तव्यंनतुवयंभीताःस्मइत्यर्थः ॥ २६ ॥ २७ ॥ २८ २९ ३० ३१ ३२ यमसादनंमृत्योर्मृत्युंविष्णुमित्यर्थः ३३

३४ ॥ ३५ ॥ ३६ ॥ चेष्टानिकर्माणि ॥ ३७ ॥ यस्ययं तस्यतम् ॥ ३८ ॥ ३९ ॥ ४० ॥ कस्यचित्कस्माच्चित् ॥ ४१ ॥ ह्रियतेकन्येतिशेषःयद्वाऽयमेवह्रियतेकालेनेति

नाकालेम्रियतेकश्चित्प्राप्तेकालेनजीवति ॥ एवंविनिश्चयंकृत्वानकुर्यात्कस्यचिद्भयम् ३४ सएवभगवान्विष्णुरालोक्यतपसःक्षयम् ॥ निहंतादितिजेंद्राणांय थाकालेनयोगवित् ३५ बलिंवैरोचनिंचैवबद्धावध्यंमहाबलम् ॥ कृतवान्देवदेवेशःपातालतलवासिनम् ३६ एवमादीनिवैविष्णोश्चेष्टानिचनराधिपाः ॥ त स्मादयुक्तंभवतांविग्रहार्थेविचारणम् ३७ नचसंग्रामहेतोर्हिकृष्णस्यागमनंत्विह ॥ यस्यवाकस्यवाकन्यावरयिष्यतितस्यसा ॥ किमत्रविग्रहोराज्ञांप्रीतिर्भ वतिवैध्रुवम् ३८ वैशंपायनउवाच ॥ एवंकथयमानानांनृपाणांबुद्धिशालिनाम् ॥ नकिंचिदब्रवीद्राजाभीष्मकःपुत्रकारणात् ३९ महावीर्यमदोत्सिक्तंभार्गवा स्त्राभिरक्षितम् ॥ रणप्रचंडातिरथंविचिंत्यमनसासुतम् ४० ॥ ॥ भीष्मउवाच ॥ कृष्णंनसहतेनित्यंपुत्रोमेबलदर्पितः ॥ नित्याभिमानीचरणेनबिभेति चकस्यचित् ४१ कृष्णस्यभुजवीर्येणह्रियतेनात्रसंशयः ॥ भविष्यतिततोयुद्धंमहापुरुषविग्रहम् ४२ द्वेषीचैवाभिमानीचकुतोजीवतिमेसुतः ॥ जीवितंनात्रप श्यामिममपुत्रस्यकेशवात् ४३ कन्याहेतोस्सुतंज्येष्ठंपितॄणांनंदिवर्द्धनम् ॥ कारयिष्येकथंयुद्धंपुत्रेणसहकेशवम् ४४ नचनारायणंदेवंवरमिच्छतिरुक्मवान् ॥ मूढभावोमदोन्मत्तःसंग्रामेष्वनिवर्तकः ॥ नियतंभस्मसाद्यातितूलराशिर्यथानलात् ४५ करवीरेश्वरश्शूरश्शृगालश्चित्रयोधिना ॥ क्षणेनभस्मसान्नीतःकेशवे नबलीयसा ४६ वृंदावनेवसञ्श्रीमान्केशवोबलिनांवरः ॥ उद्धृत्यैकेनहस्तेनसप्ताहंधृतवान्गिरिम् ४७ दुष्करंकर्मसंस्मृत्यमनस्सीदतिमेभृशम् ४८ न गेंद्रेसहसागम्यदैवतैस्सहवृत्रहा ॥ अभिषिच्याब्रवीत्कृष्णमुपेंद्रेतिशचीपतिः ४९ यथावैदमितोनागःकालियोयमुनाह्रदे ॥ विषाग्निज्वालितोघोरःका लांतकसमप्रभः ५० केशीचापिमहावीर्योदानवोहयविग्रहः ॥ निहतोवासुदेवेनदेवैरपिदुरासदः ५१ सांदीपनिसुतश्चैवचिरनष्टोहिसागरे ॥ दैत्यंपंचज नंहत्वाआनीतोयममंदिरात् ५२ गोमंतेसुमहद्युद्धंबहुभिर्वेष्टितावुभौ ॥ कृत्वावित्रासजननंनागाश्वरथसंक्षयम् ५३ गजेनगजवृंदानिरथेनरथयोधिनः ॥ सादिनश्चाश्वयोधेननरेणचपदातिनः ॥ जघ्नतुस्तौमहावीर्यौवसुदेवसुतावुभौ ५४ नदेवासुरगंधर्वानयक्षोरगराक्षसाः ॥ ननागानचदैत्येंद्रानपिशाचानगु ह्यकाः ५५ कृतवंतस्तथाघोरंगजाश्वरथसंक्षयम् ॥ तमनुस्मृत्यसंग्रामंभृशंसीदतिमेमनः ५६ नमयाश्रुतपूर्वोवादृष्टपूर्वःकुतोपिवा ॥ तादृशोभुविमर्त्यो न्योवासुदेवात्सुरोत्तमात् ५७ सम्यगाहमहाबाहुर्दंतवक्त्रोमहीपतिः ॥ सांत्वयित्वामहावीर्यंसंविधास्यामयत्क्षमम् ५८

शेषः ॥ ४२ ॥ ४३ ॥ ज्येष्ठंसुतंकेशवेनसहकेशवंचपुत्रेणसहकथंयुद्धंकारयिष्येइतियोज्यं ॥ ४४ ॥ रुक्मवान् रुक्मी ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ महावीर्यंश्रीकृष्णम् ॥ ५८ ॥

॥ ५९ ॥ नरेंद्रोभीष्मकः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ सेनानृपमंडली ॥ ६४ ॥ व्यतिक्रमंराज्ञोऽनादत्यसंकरं ॥ ६५ ॥ ६६ ॥ दूताःइंद्रस्येतिशेषः लेखंराजेंद्रत्वेस र्वैःकृष्णोभिषिच्यतामित्येवंरूपंउद्धृत्यक्रथकैशिकौसमर्पितवंतइतिशेषः ॥ ६७ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ छ ॥ अथपंचाशत्त 

 वैशंपायनउवाच ॥ इतिसंचिंत्यमनसाबलाबलविनिश्चयम् ॥ गमनायमतिंचक्रेप्रसादयितुमच्युतम् ५९ चिंतयानोनरेंद्रस्तुबहुभिर्नयशालिभिः ॥ सू 
तमागधबंदिभ्योबोधितस्तुतिमंगलैः ६० प्रभातायांरजन्यांतुकृतपूर्वाह्णिकक्रियाः ॥ उपविष्टान्नृपास्सर्वेस्वेषुविश्रामवेश्मसु ६१ येविमृष्टास्तुराजानो
विदर्भायांनराधिपैः ॥ तैरागम्यस्वभूपेषुरहोगत्वानिवेदितम् ६२ श्रुत्वाकृष्णाभिषेकंतुकेचिद्धृष्टानराधिपाः ॥ केचिद्दीनतराभीताउदासीनास्तथापरे
६३ त्रिधाप्रभिन्नासासेनानरनागाश्वमालिनी ॥ महार्णवइवक्षुब्धाअभिषेकेणचालिता ६४ नृपाणांभेदमालोक्यभीष्मकोराजसत्तमः ॥ व्यतिक्रमम
चिंत्यंचकृतंनृपतिनास्वयम् ६५ विचिंत्यमनसाराजादह्यमानेनचेतसा ॥ जगामनरदेवानांसमाजेप्रतिबोधितम् ६६ एतस्मिन्नंतरेदूताःसंप्राप्ताःक्रथकैशि
कौ ॥ लेखमुद्धृत्यशिरसाविविशुस्तेनृपार्णवम् ६७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरुक्मिणीस्वयंवरएकोनपंचाशत्तमोऽध्यायः
४९ ॥ ॥ जनमेजयउवाच ॥ ॥ हत्वाकंसंमहावीर्यंदेवैरपिदुरासदम् ॥ नाभिषिक्तःस्वयंराज्येनोपविष्टोनृपासने १ कन्यार्थेचागतःकृष्णस्तत्रा
पिनकृतोतिथिः ॥ अमानमतुलंप्राप्यक्षांतवान्केनहेतुना २ विनतायास्सुतश्चैवमहाबलपराक्रमः ॥ सचापिक्षमयायुक्तःकारणंकिमपेक्षितः ॥ एतदा
ख्याहिभगवन्परंकौतूहलंहिमे ३ वैशंपायनउवाच ॥ विदर्भनगरींप्राप्तेवैनतेयेसहाच्युते ॥ मनसाचिंतयामासवासुदेवायकैशिकः ४ दृष्ट्वाश्चर्यंहिनःसर्वा
न्राजन्यान्प्रवदाम्यहम् । वसुदेवसुतेदृष्टेध्रुवंपापक्षयोभवेत् ५ विशुद्धभावःकृष्णस्यआवयोर्दृष्टतत्त्वतः ॥ अतःपात्रतरःकोन्यस्त्रिषुलोकेषुविद्यते ६ कृष्णा
त्कमलपत्राक्षाद्देवदेवाज्जनार्दनात् ॥ तस्यावांकिंप्रदास्यावआतिथ्यकरणेनृप ७ पात्रमासाद्यवैराजन्यथाधर्मोनलुप्यते ॥ एवमन्योन्यसंचिंत्यभ्रातरौक्र
थकैशिकौ ८ स्वंराज्यंदातुकामौतुजग्मतुःकेशवांतिकम् ॥ देवमासाद्यतौवीरौविदर्भनगराधिपौ ९ ऊचतुस्तौमहाभागौप्रणम्यशिरसाहरिम् ॥ अद्या
वांसफलंजन्मअद्यावांसफलंयशः ॥ अद्यावांपितरस्तृप्तादेवेचावांगृहागते १०

मेतुकृष्णेनाश्वासनंकृतं ॥ नृपाणांसमवेतानांकुंडिनेभीष्मसंसदि ॥ १ ॥ हत्वेति ॥ १ ॥ अतिथिर्नकृतः आतिथ्येननार्चितःअमानं अपमानम् ॥ २ ॥ कारणंनिमित्तं अपेक्षितः 
आश्रितः ॥ ३ ॥ क्षमामूलंक्रथकैशिकयोःकृपेत्याह विदर्भेति ॥ ४ ॥ दृष्ट्वेति आश्चर्यंकृष्णाभिषेकं नोस्माकंपापक्षयइति ॥ ५ ॥ सर्वान्विशुद्धभावआविशेदिति चास्याद्वत्य
योज्यं क्रथकैशिकयोःदृष्टतत्त्वतःदृष्टतत्त्वात् कृष्णस्यतत्त्वमावाभ्यांदृष्टमस्तीत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ आवांआवयोः ॥ १० ॥

सुहितासुपुष्टातवत्वदीयैवेत्यर्थः ॥ ११ ॥ अभिषिक्तंअभिषेकस्तद्दानददामिदद्वः ॥ १२ ॥ आवयोःआवाभ्यांजरासंधोपिनान्यथाकर्तुंशक्नोतीतिविपरिणामेनयोज्यम् ॥ १३ ॥ १४॥ अनध्यास्यंअध्यासितुंयोग्यंनास्ति ॥ १५ ॥ १६ ॥ आस्यतिआसिष्यतिउपवेक्षतीतियावत् ॥ १७ ॥ १८ ॥ कारितंविभक्तिलोपआर्षः ॥ १९ ॥ नकेवलंराजत्वमपिकिंतुराजेंद्रत्वंआसनसंकटंउपवेशनेसंशयःअराजाकथमुच्चतममासनमारोक्ष्यतीत्येवंरूपः ॥ २० ॥ एषांजरासंधादीनांविचेष्टयविचालय ॥ २१ अधिवास्यपूर्वांगेनसंस्कारेणसंयोज्यदेव

चामरंव्यजनंछत्रंध्वजंसिंहासनंबलम् ॥ स्फीतकोशापुरीचेयमावाभ्यांसुहितातव ११ उपेंद्रस्त्वंमहाबाहोदेवेंद्रेणाभिषिक्तवान् ॥ आवामिहहिराज्येत्वामभिषिक्तंददामिते १२ आवयोर्यत्कृतंकार्यंबहुभिःपार्थिवैरपि ॥ नशक्यतेऽन्यथाकर्तुंजरासंधेनवास्वयम् १३ शत्रुर्हतेमागधोराजाजरासंधोमहाद्युतिः ॥ कथांतंब्रुवतेनित्यंनृपाणामभयप्रदः १४ सिंहासनमनध्यास्यंपुरंचास्यनविद्यते ॥ कथंराजसमाजेस्मिन्नास्यतेदेवकीसुतः १५ कृष्णोपिसुमहावीर्योह्यभिमानीमहाद्युतिः ॥ नचागमिष्यतेवास्मिन्कन्यार्थेचस्वयंवरे १६ पार्थिवेषूपविष्टेषुस्वेषुसिंहासनेषुवै ॥ कथमास्यतिनीचेषुआसनेषुमहाद्युतिः १७ इतिसंचिंत्यमानस्तुश्रुत्वासौभीष्मकोनृपः ॥ आवयोःसहसंमंत्र्यविग्रहोपशमार्थिना १८ तवविश्रामहेतोर्हिकारितंदंगृहोत्तमम् ॥ देवानामादिदेवोसिसर्वलोकनमस्कृतः १९ मानुष्येमर्त्यलोकेस्मिन्राजेंद्रत्वंसमाचर ॥ समाजमनुजेंद्राणांमाभूदासनसंकटम् २० विदर्भनगरेचैषांराजेंद्रत्वंविचेष्टय ॥ आस्यतामासनेशुभ्रेश्वःप्रभातेमहाद्युते २१ अधिवास्याद्यचात्मानंविधिदृष्टेनकर्मणा ॥ यथागमिष्यंतिनृपाःकरिष्येदेवशासनात् २२ एवमुक्त्वासुरश्रेष्ठंप्रणिपत्यकृतांजली ॥ प्रेषयामासतुर्वीरौरंगमध्येनृपैर्वृते २३ एवंदूतस्यवचनंयथोक्तंवज्रपाणिना ॥ लिखित्वासुमहातेजाःकैशिकःप्राहशासनम् २४ कैशिकउवाच ॥ विदितंवोनृपाःसर्वेवैनतेयसहाच्युतः ॥ आगतोतिथिरूपेणविदर्भनगरींहरिः २५ प्राप्तमालोक्यपात्रोयमितिसंचिंत्यभूपतिः ॥ प्रददौवासुदेवायस्वंराज्यंधर्महेतुना २६ इदमासनमास्स्वेतिभ्रात्रामेचोदिततततः ॥ वागुक्ताचाशरीरेणकेनापिव्योमचारिणा २७ देवदूतउवाच ॥ नयुक्तमासनंदातुंत्वयासीनंनराधिप ॥ इदमस्यासनंदिव्यंसर्वरत्नविभूषितम् २८ जांबूनदमयंशुभ्रंरचितंविश्वकर्मणा ॥ प्रेषितंदेवराजेनसिंहलक्षणलक्षितम् २९

शासनात्पूर्वाध्यायांतेउक्तात्इंद्राज्ञापनात्आगमिष्यंतिअभिषेकार्थमितिशेषः ॥ २२ ॥ प्रेषयामासतुःदेवशासनमितिविपरिणामेनानुषंगः ॥ २३ ॥ देवदूतस्यवचनंस्वयंपत्रोलिखित्वालेखद्वारैवआहतथाशासनमपिदेवेंद्राज्ञापत्रमपिप्राह ॥ २४ ॥ तदनुसारीस्वकृतंतावदाह विदितमिति ॥ २५ ॥ भूपतिःक्रथः ॥ २६ ॥ २७ ॥ देवदूतस्यवाक्यमाहदेवदूतउवाचेत्यादिना ॥ २८ ॥ २९ ॥

अभिषिंचंतुपट्टाभिषेकेणयोजयंतु ॥ ३० ॥ अस्यइंद्रस्य ॥ ३१॥ ३२ ॥ दिव्याभरणा दिव्ययोनयो दिव्यासनाः ॥ ३३॥३४॥ ३५ ॥ येसमागतास्तैर्भवद्भिःशक्रस्यदूतेनेरितंदुनिर्वार्यतरमित्यन्वयः ३६ अभिषिंचंतंअभिषिच्यमानंकृष्णंयुष्माभिर्दर्शनेयुष्मत्कर्तृकेदर्शनेयुक्तंप्रेक्षतमंमन्यामहेइतिशेषः ॥ ३७ ॥ दृष्ट्वेतिप्राग्व्याख्यातं ॥ ३८ ॥ ३९ ॥ ४० ॥



अत्रोपविष्टंदेवेशंचराचरनमस्कृतम् ॥ अभिषिंचंतुराजेंद्रंबहुभिःपार्थिवैस्सह ३० आगताःकुंडिनगरेकन्याहेतोर्नराधिपाः ॥ नागमिष्यतियःकश्चित्सोऽस्यवध्योभविष्यति ३१ इमेचैवाष्टकलशानिधीनामंशसंभवाः ॥ अक्षयाराजराजस्यधनेशस्यमहात्मनः ३२ दिव्याःकांचनरत्नाढ्यादिव्याभरणयोनयः ॥ राजेंद्रस्याभिषेकार्थमागच्छंतिनृपैर्वृताः ३३ एषशक्रस्यसंदेशःकथितोवोनराधिपाः ॥ लेखेनाहूयतान्सर्वानभिषिंचंतुकेशवम् ३४ कैशिकउवाच ॥ इतिसंचोद्यखस्थोसौदेवदूतोगतोदिवम् ॥ दत्त्वासनंचकृष्णायबालार्कसदृशप्रभम् ३५ तेनाहंनोदयिष्यामिभवद्भिर्येसमागताः ॥ दुर्निवार्यतरंघोरंशक्रस्यस्वयमीरितम् ३६ युष्माभिर्दर्शनेयुक्तमद्भुतंभुविदुर्लभम् ॥ कलशैरभिषिंचंतंस्वयमेवनभस्तलात् ३७ दृष्ट्वाश्चर्यंहिनस्सर्वाध्रुवंपापक्षयोभवेत् ॥ स्नापनार्थंचकृष्णायदेवदेवायविष्णवे ३८ आगच्छध्वंनृपश्रेष्ठानभयंकर्तुमर्हथ ॥ आवयोःकृतसंधानोयुष्मदर्थेजनार्दनः ३९ सर्वेषां मनुजेंद्राणामभयंकुरुतेहरिः ॥ विशुद्धभावःकृष्णस्तुआवयोर्दृष्टतत्त्वतः ४० मागधस्यविशेषेणनवैरंहृदिदृश्यते ॥ यदत्रकारणंकार्यंतद्भवद्भिर्विचिंत्यताम् ४१॥ वैशंपायनउवाच ॥ एवंसंचिंतयामासुर्नृपाश्शापभयार्दिताः ॥ भूयश्शुश्रुवुराजेंद्राःकेशवायमहात्मने ४२ मेघगंभीरनादेनस्वरेणापूरयन्नभः ॥ वागुवाचाशरीरेणदेवराजस्यशासनात् ४३॥ चित्रांगदउवाच ॥ त्रैलोक्याधिपतिश्शक्रःप्रजापालनहेतुना ॥ आज्ञापयातियुष्माकंनृपाणांहितकाम्यया ४४ नयुक्तंवसतान्योन्यंकृष्णेनसहवैरिणा ॥ वसध्वंप्रीतिमुत्पाद्यस्वराष्ट्रेषुनृपोत्तमाः ४५ प्रणतार्तिहरःकृष्णःप्रतिसेनांतकोनलः ॥ अनेनसहसंप्रीत्यामोदध्वंविगतज्वराः ४६ मानुषाणांनृपादेवान्नृपाणांदेवतास्सुराः ॥ सुराणांदेवताशक्रश्शक्रस्यापिजनार्दनः ४७ एषविष्णुःप्रभुर्देवोदेवानामपिदैवतम् ॥ जातोयंमानुषेलोकेनररूपेणकेशवः ४८ अजेयस्सर्वलोकेषुदेवदानवमानवैः ॥ कार्तिकेयसहायस्यअपिशूलभृतस्स्वयम् ४९ तस्मैदेवाधिदेवायकेशवायमहात्मने ॥ अभिषेक्तुंसुरैस्साद्धंकिमिच्छेयमतःपरम् ५० नचाधिकारोदेवानांराजेंद्रस्याभिषेचने ॥ तनाहंनाभिषिंचामिसर्वलोकनमस्कृतम् ॥ नृपाणामधिकारोयंराजेंद्रस्यनिवेशने ५१ गत्वायूयंविदर्भायांक्रथकैशिकयोःसह ॥ संचिंत्यविधिदृष्टेनकुरुध्वंनृपसत्तमाः ५२



॥ ४१ ॥ शुश्रुवुःअत्रविसर्गलोपआर्षः ॥ ४२ ॥ अशरीरेणअदृश्येनप्रयुक्ता ॥ ४३ ॥ ४४ ॥ वैरिणाकृष्णेनसहयत्वसततत्वोऽन्योन्यंनयुक्तमितियोजना ॥ ४५ ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ कार्तिकेयेत्यत्रतृतीयालोपआर्षःस्वयंजेतुंनशक्तइतिशेषः ॥ ४९ ॥ अभिषेक्तुंइच्छेयमित्यपकृष्ययोज्यम् ॥ ५० ॥ ५१ ॥ ५२ ॥

वसूनामयंवासवोदेवानादूतोस्मीत्यर्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ तिष्ठंतुचत्वारःकृष्णद्वेषिणइत्याशयः ॥ ५६ ॥ ५७ ॥ ५८ ॥ दह्यमानेनपुत्रदोषादित्याशयः ॥ ५९ ॥ ६० ॥ स्नानहे
तोःपट्टाभिषेकार्थम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ पंचयोनिसमुत्थानि मूलत्वक्पत्रपुष्पफलानियोनयःकारणानितेभ्यःसमुत्थानिपंच मंदारपारिजातकसंतानकल्पवृक्षह

प्रीतिसंधानकालोयमितिसंचिंत्यवासवः ॥ बोधनार्थंविसृष्टोहंयुष्माकंमनुजेश्वराः ५३ विदर्भनगरेकृष्णश्श्रावितोस्याधिवासनम् ॥ राजेंद्रत्वाभिषेका
र्थंराजानौक्रथकैशिकौ ॥ ताभ्यांसहनृपश्रेष्ठाःकृत्वासुमहदुत्सवम् ५४ अभिषेकेगसत्कृयप्रतिगृह्यास्यदक्षिणाम् ॥ आगमिष्ययसंहृष्टाःपुनरेवस्वयंवर
म् ५५ जरासंधःसुनीथश्चरुक्मीचैवमहारथः ॥ शाल्वःसौभपतिश्चैवचत्वारोराजसत्तमाः ॥ रंगस्याशून्यहेतोर्हितिष्ठंतुइहपार्थिवाः ५६ वैशंपायनउ
वाच ॥ एवमाज्ञांसुरेशस्यश्रुत्वाचित्रांगदेरिताम् ॥ गमनायमतिंचक्रुःसर्वएवनृपोत्तमाः ५७ अनुज्ञातानरेंद्रेणजरासंधेनधीमता ॥ भीष्मकंपुरतःकृत्वा
प्रयाताःस्वबलैर्वृताः ५८ भीष्मकश्चमहाबाहुस्स्वबलेनसमान्वितः ॥ जगामपार्थिवैस्सार्द्धंदह्यमानेनचेतसा ५९ यत्रकृष्णोमहाबाहुःकैशिकस्यनिवेशने
दूरादेवप्रकाशंतीपताकाध्वजमालिनी ६० शुभादेवसमारम्यास्नानहेतोरिहागता ॥ दिव्यरत्नप्रभाकीर्णादिव्यध्वजसमाकुला ६१ दिव्यांबरपताकाढ्या
दिव्याभरणभूषिता ॥ दिव्यस्रग्दामकलिलादिव्यगंधाधिवासिता६२विमानयानैश्श्रीमद्भिस्समंतात्परिवारिता । दिव्याप्सरोगणाश्चैवविद्याधरगणास्तथा
६३ गंधर्वामुनयश्चैवकिंनराश्चसमंततः ॥ उपगायंतिदेवेशमंबरांतरमाश्रिताः ६४ स्तुवंतिमुनयश्चैवसिद्धाश्चपरमर्षयः ॥ देवदुंदुभयश्चैवस्वयमेवानद
न्दिवि ६५ पंचयोनिसमुत्थानिगंधचूर्णान्यनेकशः ॥ समंतात्पात्यमानानिचाकाशस्थैर्दिवौकसैः ६६ स्वयमागत्यदेवेंद्रोदेवैस्सहशचीपतिः ॥ विमान
वरमारुह्यसप्रकाशस्स्थितोंबरे ६७ अष्टौयेलोकपालास्तेस्वासुदिक्षुसमास्थिताः ॥ उपगायंतिनृत्यंतिस्तुवंतिचसमंततः ६८ श्रुत्वासुतुमुलंनादंसर्वएव
नराधिपाः ॥ विस्मयोत्फुल्लनयनाविविशुस्तेसभांशुभाम् ६९ कैशिकश्चमहाबाहुरुपगम्यनराधिपान् ॥ प्रवेशयामासबलीप्रतिपूज्ययथाविधि ७० नि
वेदितेसुरश्रेष्ठेपार्थिवानांसमागमे ॥ निर्जगामहरिश्श्रीमान्सर्वमंगलपूजितः ७१ ततोंबरस्थास्तेदिव्याःकलशाश्चैलकंठिनः ॥ सहकारसमायुक्तावर्षुर्ज
लदाइव ७२ दिव्यकांचनरत्नौघैर्दिव्यपुष्पसमन्वितैः ॥ गंधचूर्णविमिश्रैश्चराजेंद्रस्याभिषेचने ७३ यथोक्तविधिपूर्वेणअभिषिच्यजनार्दनम् ॥ दर्शयि
त्वानरेंद्राणांदिव्यैराभरणैश्शुभैः ७४

रिचंदनाख्यादेवतरवएवयोनयस्तेभ्यःसमुत्थानि ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ सुरश्रेष्ठेकृष्णे ॥ ७१ ॥ ७२ ॥ ७३ ॥ दर्शयित्वादर्शनीयंकृत्वालंकृत्येत्यर्थः ॥ ७४ ॥

राज्ञआगतान्सत्कृत्यमानयित्वातेषामाज्ञांगृहीत्वेत्यर्थः ॥ ७५ ॥ देवसभेसिंहासनेउपविष्टः ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ अविज्ञाताः ज्ञान हीनाः ॥ ८३ ॥ उपरुद्धानां अपराधवतांभवंतंउद्दिश्य ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांपंचाशत्तमोऽध्यायः ॥ ५० ॥ एकपंचाशत्तमेथकृष्णभीष्मकयोरिह ॥ उक्तिप्रत्युक्तःप्रोक्ताक्रथकैशिकसत्क्रिया ॥ १ ॥ पुत्रोमेइति ॥ १ ॥ मममतिस्तुस्वयंवरेदानमतीवबाल्यं एकाएकंवृणीतेतियुक्तमि

दिव्यांबरविचित्रैश्चदिव्यमाल्यानुलेपनैः ॥ सत्कृत्यविधिवद्राज्ञउपविष्टोजनार्दनः ७५ शुभेदेवसभेरम्येस्नानहेतोरिहागते ॥ उपास्यमानोयदुभिर्विदर्भै श्चनराधिपैः ७६ वैनतेयश्चबलवान्कामरूपीनराकृतिः ॥ दक्षिणंपार्श्वमाश्रित्यआसनस्थोमहाबलः ७७ क्रथकैशिकौचवीरौवामपार्श्वेतथासने ॥ उप विष्टौमहात्मानौदेवस्यानुमतेनृपौ ७८ तथैववामपार्श्वेतुवृष्ण्यंधकमहारथाः ॥ सात्यकिप्रमुखावीराउपविष्टामहाबलाः ७९ भास्करप्रतिमेदिव्येदिव्या स्तरणविस्तृते ॥ सुखोपविष्टंश्रीमंतंदेवैरिवशचीपतिम् ८० सचिवैश्चाविनास्सर्वेप्रविष्टास्तेनराधिपाः ॥ यथार्हेणचसंपूज्यराजानस्सर्वएवते ८१ सु खोपविष्टास्तेस्वेषुआसनेषुनराधिपाः ॥ कैशिकस्तुमहाप्राज्ञस्सर्वशास्त्रार्थवित्तमः ८२ पूजयित्वायथान्यायमुवाचवदतांवरः ॥ कैशिकउवाच ॥ अविज्ञाता नृपास्सर्वेमानुषोयमितिप्रभो ८३ भवंतमुपरुद्धानांदेवत्वंक्षंतुमर्हसि ॥ श्रीकृष्णउवाच ॥ नमेवैरोप्रवसतिएकाहमपिकैशिक ८४ विशेषेणनरेंद्राणांक्षत्र धर्मेवतिष्ठताम् ॥ योद्धव्यमितिधर्मेणअधर्मेतुपराङ्मुखे ८५ तेषांकिंहेतुनाकोपःकर्तव्यस्त्ववनीश्वराः ॥ यद्गतंतदतिक्रांतंयेमृतास्तेदिवंगताः ८६ एष धर्मोनृलोकेस्मिन्जायंतेचम्रियंतिच ॥ तस्मादशोच्यंभवतांमृतार्थेचनराधिपाः ॥ क्षंतव्यंरोचतेस्माकंगीतवैराभवंतुते ८७ वैशंपायनउवाच ॥ ॥ एवमुक्त्वानरेंद्रांस्तानाश्वास्यमधुसूदनः ॥ कैशिकस्यमुखंवीक्ष्यविराममहाद्युतिः ८८ एतस्मिन्नेवकालेतुभीष्मकोनयकोविदः ॥ पूजयित्वायथान्या यमुवाचवदतांवरः ८९ इतिश्रीमहाभारतेखिलेषुह०विष्णुपर्वणिरुक्मिणीस्वयंवरेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ भीष्मकउवाच ॥ पुत्रोमेबालभावे नभगिनींदातुमिच्छति ॥ स्वयंवरेनरेंद्राणांनचाहंदातुमुत्सहे १ अतीवबालभावत्वाद्दातुमिच्छन्मतिर्मम ॥ एकाह्येकंसमालोक्यवरयिष्यतिमेमतिः २ अतःप्रसादयिष्येत्वांपुत्रदुर्नयहेतुना ॥ प्रसादंकुरुदेवेशक्षंतुमर्हसिमेप्रभो ३ ॥ श्रीकृष्णउवाच ॥ बालभावेनपुत्रेणचालितंनृपमंडलम् ॥ यदाभवतिवैप्रौढः कीदृशोविनयोभवेत् ४ सूर्येंदुसदृशाल्लोकांस्तपसोपार्जिताश्रियः ॥ लोकेस्मिन्नरदेवानांमहाकुलसमुद्भवान् ५

त्यर्थः ॥ २ ॥ अथापिमनमतंनप्रसिद्धयतीत्याशयेनाह अतइति ॥ ३ ॥ चालितम्चालितवान्कर्तरिक्तः अविनयइतिच्छेदः ॥ ४ ॥ योवितर्तवदेत्सस्वान्लोकान्दंडवह्निनायमयातनाग्निनानिर्दहेदितिद्वयोःसंबंधः कीदृशा न्लोकान्सूर्येंदुवत्प्रकाशमानान्महाकुलोत्पन्नत्वेनाविश्वजिदादिक्रतुभवान् यतोदहेदतस्तेषांलोकानांमध्येस्मिन्नेकस्मिन्नपिलोकेनतिष्ठतिसर्वेषांदग्धत्वादित्यर्थः ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ आस्तांतावत्पुत्रवार्त्ता त्वमपिमिथ्यैवब्रवीषीत्याह तादृशमिति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ नकृतातिथ्यमितिसमस्तंपदं अ
तिथ्यहीनंतवालयंविदित्वेत्यर्थः ॥ १६ ॥ हेनराधिपराजेंद्राणांपार्थिवोप्यहंह्रियाभिभूतोस्मि तत्रहेतुर्विदर्भेति यद्यत्राविश्रामोनकृतः स्यात्तदानर्चानिमित्तोममाभिभवोनजातःस्या

एकस्यापिनृपस्याग्रेमोहाद्योवितथंवदेत् ॥ नसतिष्ठतिलोकेस्मिन्निर्दहेद्दंडवह्निना ६ एषधर्मोनरेंद्राणामितितेविदितंप्रभो ॥ लोकधर्मंपुरस्कृत्यपुरागी
तंस्वयंभुवा ७ कथंतवसुतस्तेषामग्रतोमनुजेश्वर ॥ वक्तुमर्हतिराजेंद्रवितथंराजसंसदि ८ तादृशंरंगमतुलंकारयंस्तनयस्तव ॥ कथंत्वयाह्यविज्ञातइति
मेसंशयोमहान् ९ आगतानांनरेंद्राणामनलार्केंदुवर्चसाम् ॥ यथार्हेणतुसंपूज्यआतिथ्यंकृतवानसि १० रथाश्वनरनागानांविमर्दमतुलंतथा ॥ कथंन
ज्ञातवान्राजंस्तवपुत्रस्यचेष्टितम् ११ विषादोनभवेदत्रचतुरंगबलागमे ॥ कथंनज्ञायतेराजन्नितिमेबुद्धिसंशयः १२ ममागमनमेवेहप्रायेणनहितंतव ॥
अतोनकृतमातिथ्यमपात्रायनरेश्वर १३ पात्रेभ्योदीयतांकन्यांमामपास्यनरेश्वर ॥ ममागमनदोषेणकथंकन्यांनदास्यसे १४ कन्याविघ्नंचकुर्वाणोनरके
परिपच्यते ॥ इतिधर्मविदैर्गीतंमन्वादिभिर्नरोत्तमैः १५ अतोर्थंनप्रविष्टोहंरंगमध्येविशांपते ॥ विदित्वानकृतातिथ्यंनरदेवतवालयम् १६ ह्रियाभिभूतो
राजेंद्रपार्थिवोहंनराधिप ॥ विदर्भनगरेराजन्बलविश्रामहेतुना १७ अवाभ्यांकृतमातिथ्यंकैशिकस्तुप्रियातिथिः ॥ उषितौचयथास्वर्गेपुरागरुडकेशवौ
१८ वैशंपायनउवाच ॥ एवमेवंब्रुवाणंतंकृष्णंवाग्वज्रचोदितम् ॥ श्लक्ष्णवाचांबुनासिच्यशमितोग्निरिवज्वलन् १९ भीष्मकउवाच ॥ प्रसीददेवलो
केशपाहिमांलोकशासन ॥ अज्ञानतमसाविष्टंज्ञानचक्षुष्प्रदोभव २० मानुष्येमांसचक्षुष्ट्वादसम्यग्विदितावयम् ॥ नप्रसिद्ध्यंतिकर्माणिक्रियतामविचार
णात् २१ भवंतंशरणंप्राप्यदेवानामपिदैवतम् ॥ सम्यग्भवतुमेदृष्टिःसंपश्यंतुचमेक्रियाः २२ अनिष्पन्नामपिक्रियांनयोपेतांविचक्षणाः ॥ फलदांहिप्र
कुर्वंतिमहासेनापतिर्यथा २३ भवंतंशरणंप्राप्यनातिबाधंतिमेभयम् ॥ यन्मयाचिंतितंकार्यंतद्भवाञ्छ्रोतुमर्हसि २४ नदातुमिच्छेत्कन्यांवैपार्थिवेभ्य
स्स्वयंवरे ॥ प्रसादंकुरुदेवेशनकोपंकर्तुमर्हसि २५ ॥ श्रीकृष्णउवाच ॥ वचनेनकिमुक्तेनत्वयाराजन्महामते ॥ स्वकन्यांदास्यसेनेतिकोत्रनेतातवा
नघ २६

दितिभावः ॥ १७ ॥ एवमप्यावाभ्यांकृष्णगरुडाभ्यांकृतंपूर्णआतिथ्यंलब्धमेवेतिशेषः तत्रहेतुमाह कैशिकस्त्विति ॥ १८ ॥ वाग्वज्रंचोदितंयेनतंकृष्णंआसिच्यसएवशामितःशांतिंनी
तः ॥ १९ ॥ २० ॥ असम्यग्विदिताः विपरीतज्ञानाः क्रियतांकुर्वताम् ॥ २१ ॥ संपश्यंतुसंपन्नाःसंतु ॥ २२ ॥ २३ ॥ बाधतिबाधतेमेमां ॥ २४ ॥ स्वयंवरणंयत्रक्रियायांतथा
स्वयंवरं मेकन्यांदातुंनइच्छेत्पुत्रइतिशेषः स्वयंवरेहिसातित्वामेवसावृणुयादित्यभिप्रेत्यत्वय्यागतेपुत्रोमेस्वयंवरंनइच्छेदित्यर्थः ॥ २५ ॥ नेतानियंता ॥ २६ ॥

मेमया मा देहि अन्यस्मै ददस्वमह्यं इत्युभयमपिनाख्येयम् संबंधेस्वयंभाविनिक्षमेवास्माकंकारणंप्रधानमित्यर्थः ॥२७॥ एतदेवाह मेरुकूटइत्यादिना कृतंस्वीकृतम् निःसृष्टाआज्ञप्ताश्रीपतिनाविष्णुना ॥ २८ ॥ प्रत्यवेक्ष्यअनुकंप्यवासवंइंद्रं ॥ २९ ॥ ३० ॥ ३१ ॥ एकायएकस्मै ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अस्मद्विधे अ



मादेहीतिनचाख्येयंददस्वेतिनमेवचः ॥ रुक्मिण्यादिव्यमूर्तित्वंसंबंधेकारणंमम २७ मेरुकूटेपुरादेवैःकृतमंशावतारणम् ॥ तदानिसृष्टासापूर्वंगच्छत्वंपतिनासह २८ मानुष्येकुंडिनगरेभीष्मकस्यांगनोदरे ॥ जायस्वविपुलश्रोणिप्रत्यवेक्ष्यचवासवम् २९ तेनाहंवःप्रवक्ष्यामिराजन्नकृतकंवचः ॥ श्रुत्वास्वयंविनिश्चित्ययद्युक्तंतत्करिष्यति ३० रुक्मिणीनामतेकन्यानसाप्राकृतमानुषी ॥ श्रीरेषाब्रह्मवाक्येनजाताकेनापिहेतुना ३१ नचसामनुजेंद्राणांस्वयंवरविधिक्षमा ॥ एकात्वेकायदातव्याइतिधर्मोव्यवस्थितः ३२ नचतांशक्यसेराजल्लक्ष्मींदातुंस्वयंवरे ॥ सदृशंवरमालोक्यदातुमर्हसिधर्मतः ३३ अतोर्थेवैनतेयोयंविघ्नकारणहेतुना ॥ आगतःकुंडिनगरेदेवराजेनचोदितः ३४ अहंचैवागतोराज्ञांद्रष्टुकामोमहोत्सवम् ॥ तांचकन्यांवरारोहांपद्मेनरहितांश्रियम् ३५ क्षंतव्यमितियत्प्रोक्तंत्वयाराजन्ममाग्रतः ॥ युक्तिपूर्वमहंमन्येकलुषायनपार्थिव ३६ पूर्वमेवमयाख्यातंयेनास्मिविषयेतव ॥ आगतस्सौम्यरूपेणतेनैवक्षांतवान्विभो ३७ क्षांतेषुगुणबाहुल्यंदोषापहरणंक्षमा ॥ कथमस्मद्विधेराजन्कलुषोवसतेहृदि ३८ कुलजेसत्त्वसंपन्नेधर्मज्ञेसत्यवादिनि ॥ भवादृशेकथंराजन्कलुषोभुविवर्तते ३९ क्षांतोयमितिमंतव्यंममसेनासहागतम् ॥ नचाहंसेनयासार्द्धयास्यामिरिपुवाहिनीम् ४० अक्षांतश्चारिसेनायांयास्यामिद्विजवाहने ॥ स्थितस्सोमार्कसंकाशान्यायुधानिकरैर्वृतः ४१ मान्योस्माकंत्वयाराजन्वयसाचपितासमः ॥ पालयस्वपुरींसम्यक्क्षत्रेषुपितृवद्वस ४२ कलुषोनामराजेंद्रवसेत्कापुरुषेषुवै ॥ शूरेषुशुद्धभावेषुकलुषोवसतेकथम् ४३ जानीध्वमेषामेवृत्तिःपुत्रेषुपितृवद्वयम् ॥ इमावपिचराजानौविदर्भनगराधिपौ ४४ आतिथ्यकरणेऽस्माकंस्वराज्यंदत्तवानुभौ ॥ तेनदानफलेनास्यदशपूर्वादिवंगताः ४५ भविष्याश्चैवराजानःपुत्रपौत्रादशावराः ॥ तेपितत्रैवयास्यंतिदेवलोकंनराधिपाः ४६ अनयोस्तुचिरंकालंभुक्त्वाराज्यमकंटकम् ॥ यदाभिलाषंमोक्षस्ययास्येतेनिर्वृतिंसुखम् ४७ नरेंद्राश्चमहाभागायेभिषेचितुमागताः ॥ कालेनतेपियास्यंतिदेवलोकंत्रिविष्टपम् ४८ स्वस्तिवोस्तुगमिष्यामिवैनतेयसहायवान् ॥ नगरींमथुरांरम्यांभोजराजेनपालिताम् ४९



स्मद्विधस्यहृदि ॥ ३८ ॥ ३९ ॥४०॥४१॥ अस्माकंपितामान्यःवयसाचत्वयासमः ॥४२॥४३ ॥ एषानिष्कलषामेवृत्तिरितिजानीध्वम् ॥ ४४ ॥ ४५ ॥ ४६ ॥४७ ॥४८॥४९॥

वैदर्भाभ्यांक्रथकैशिकाभ्यांसह सभातसभास्थानात् ॥५०॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

॥ वैशंपायनउवाच ॥ एवमुक्कातुराजानंभीष्मकंयदुनंदनः ॥ राज्ञश्चैवमुपामंत्र्यवैदर्भाभ्यांविशेषतः ॥ सभान्निष्क्रम्यदेवेशोजगामरथमंतिकम् ५०
ततःप्रहृष्टोराजर्षिर्भीष्मकःकिलकेशवम् ॥ तेसर्वेचमहीपालाविषण्णवदनाभवन् ५१ आद्यंस्वायंभुवंरूपंसुरासुरनमस्कृतम् ॥ सहस्रपात्सहस्राक्षंसह
स्रभुजविग्रहम् ५२ सहस्रशिरसंदेवंसहस्रमुकुटोज्ज्वलम् ॥ दिव्यमाल्यांबरधरंदिव्यगंधानुलेपनम् ५३ दिव्याभरणसंयुक्तंदिव्यानेकोद्यतायुधम् ॥
कृष्णंरक्तारविंदाक्षंचंद्रसूर्याग्निलोचनम् ५४ दृष्ट्वासराजाराजेंद्रंप्रणिपत्यकृतांजलिः ॥ वाङ्मनःकायसंयुक्तंस्तोतुमारब्धवांस्तदा ५५ भीष्मकउवाच ॥
देवदेवनमस्तुभ्यमनादिनिधनायवै ॥ शाश्वतायादिदेवायनारायणपरायण ५६ स्वयंभुवेचविश्वायस्थाणवेवेधसायच ॥ पद्मनाभायजटिनेदंडिने
पिंगलायच ५७ हंसप्रभायहंसायचक्ररूपायवैनमः ॥ वैकुंठायनमस्तस्मैअजायपरमात्मने ५८ सदसद्भावयुक्तायपुराणपुरुषायच ॥ पुरुषोत्तमाय
युक्तायनिर्गुणायनमोस्तुते ५९ वरदोभवमेनित्यंत्वद्भक्तायसुरोत्तम ॥ लोकनाथोसिनाथस्त्वंविष्णुस्त्वंविदितात्मनाम् ६० ॥ वैशंपायनउवाच ॥
एवंस्तुत्वामहादेवंनृपाणामग्रतोनृपः ॥ महार्हमणिमुक्ताभिर्वज्रवैदूर्यहासिनम् ६१ शातकुंभस्यनिचयंकृष्णायप्रददौनृपः ॥ पुनश्चक्रेनमस्कारंवैनतेये
महाबले ६२ ॥ भीष्मकउवाच ॥ नमस्तस्मैखगेंद्रायनमोमारुतरंहसे ॥ कामरूपायदिव्यायकाश्यपायचवैनमः ६३ ॥ वैशंपायनउवाच॥ इतिसंक्षे
पतःस्तुत्वासत्कृत्यवरभूषणैः ॥ ततोविसर्जयामासकृष्णंकमललोचनम् ६४ अनुजग्मुर्नृपाश्चैवप्रस्थितंवासवानुजम् ॥ प्रतिगृह्यचसत्कारंनृपानामंत्र्य
वीर्यवान् ६५ जगाममथुरांकृष्णोद्योतयानोदिशोदश ॥ वैनतेयंपुरस्कृत्यसौम्यरूपंखगोत्तमम् ६६ महतारथवृंदेनपरिवार्यसमंततः ॥ भेरीपटहनादेनशं
खदुंदुभिनिस्स्वनैः ६७ बृंहितेनचनागानांहयानांहेषितेनच । सिंहनादेनशूराणांरथनेमिस्वनेनच ६८ तुमुलस्तुमहानासीन्महामेघरवोपमः ॥ गतेकृष्णे
महावीर्येआदायवरमासनम् ६९ सभामादायदेवाश्चप्रययुस्त्रिदशालयम् ॥ महताचतुरंगेणबलेनपरिवारिताः ७० क्रोशमात्रमुपव्रज्यअनुज्ञातेजनार्दने ॥
प्रययुस्तेनृपास्सर्वेपुनरेवस्वयंवरम् ७१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिकृष्णाभिषेकोनामएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ७ ॥
॥ वैशंपायनउवाच ॥ ततःप्रयातेवसुदेवपुत्रेनराधिपाभूषणभूषितांगाः ॥ सभांसमाजग्मुसुरेंद्रकल्पाःप्रबोधनार्थंगमनोत्सवास्ते ॥ १ ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायामेकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ द्विपंचाशत्तमेध्यायेमागधादिप्रचोदितः
शाल्वोगाद्यवनेंद्रंतंकृष्णमानाप्नुत्तये ॥ १ ॥ ततःसभांभीष्मकस्यसभांजग्मुर्विसर्गलोपआर्षः ॥ १ ॥

राजाभीष्मकः ॥ २ ॥ स्वयंवरेकृष्णविरोधाख्योदोषोविश्वक्षयकरोभविष्यतीतिमत्वास्वयंवरार्थमाहूतान्नृपान्सांत्वयतिस्वयमितिशेषः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ 

सभागतान्सोमरविप्रकाशान्सुखोपविष्टान्विरासनेषु ॥ समीक्ष्यराजासुनयार्थवादीजगादवाक्यंनरराजसिंहः २ स्वयंवरकृतंदोषंविदित्वावोनराधिपाः ॥

 क्षंतव्योममवृद्धस्यदुर्दग्धस्यफलोदयम् ३ वैशंपायनउवाच ॥ एवमाभाष्यतान्सर्वान्सत्कृत्यचयथाविधि ॥ ततोविसर्जयामासनृपांस्तान्मध्यदेशजान् 

४ पूर्वपश्चिमजांश्चैवउत्तरापथिकानपि ॥ तेपिसर्वेमहेष्वासाःप्रहृमनसोनराः ५ यथार्हेणचसंपूज्यजग्मुस्तेनरपुंगवाः ॥ जरासंधस्सुनीथश्चदंतवक्र श्चवीर्यवान् ६ शाल्वस्सौभपतिश्चैवमहाकूर्मश्चपार्थिवः ॥ क्रथकैशिकमुख्याश्चनृपाःप्रवरवंशजाः ७ वेणुदारिश्चराजर्षिःकाश्मीराधिपतिस्तथा एतेचान्येचबहवोदक्षिणापथिकानृपाः ८ श्रोतुकामारहोवाक्यंस्थिताविभीष्मकांतिके ॥ तान्वैसमक्षियराजेंद्रस्सराजाभीष्मकोबली ९ स्नेहपूर्णेनमनसा स्थितांस्तानवनीश्वरान् ॥ त्रिवर्गसहितंश्लक्ष्णंषड्गुणालंकृतंशुभम् १० उवाचनयसंपन्नंस्निग्धगंभीरयागिरा ॥ भीष्मकउवाच ॥ भवतामवनी शानांसमालोक्यनयान्वितम् ११ वचनंव्याहृतंश्रुत्वाकृतवान्कार्यमीदृशम् ॥ क्षंतव्यंभवतांसद्भिर्वयंनित्यापराधिनः १२ ॥ वैशंपायनउवाच ॥ एवमु क्त्वातुराजासभीष्मकोनयकोविदः ॥ उवाचसुतमुद्दिश्यवचनंराजसंसदि १३ ॥ भीष्मकउवाच ॥ पुत्रस्यचेष्टामालोक्यत्रासाकुलितलोचनः ॥ मन्येबा लानिमाँल्लोकान्सएषपुरुषःपरः १४ कीर्तिकीर्तिमतांश्रेष्ठोयशश्चयशभाग्बली ॥ स्थापिताभुविमर्त्येस्मिन्स्वबाहुबलमूर्जितम् १५ धन्याखलुमहाभागा देवकीयोषितांवरा ॥ पुत्रंत्रिभुवनश्रेष्ठंकृत्वागर्भेणकेशवम् १६ कृष्णंकमलपत्राक्षंश्रीपुंजममरार्चितम् ॥ नेत्राभ्यांस्नेहपूर्णाभ्यांवीक्षतेमुखपंकजम् १७ ॥ वैशंपायनउवाच ॥ एवंलालप्यमानंतुराजानंराजसंसदि ॥ उवाचश्लक्ष्णयावाचाशाल्वराजोमहाद्युतिः १८ ॥ शाल्वउवाच ॥ अलंखेदेनराजेंद्रसुता यरिपुमर्दिने ॥ क्षत्रियस्यरणेराजन्ध्रुवेजयपराजयौ १९ नियतागतिमर्त्यानामेषधर्मस्सनातनः ॥ बलकेशवयोरन्यस्तृतीयःकःपुमानिह २० रणेयोध यितुंशक्तस्तवपुत्रंमहाबलम् ॥ रथातिरथवृंदानामेकएवरणाजिरे २१ रिपून्बाधयितुंशक्तोधनुर्गृह्यमहाभुजः ॥ भार्गवास्त्रंमहारौद्रंदेवैरपिदुरासदम् ॥ २२ सृजतोबाहुवीर्येणकःपुमान्प्रसहिष्यति ॥ अयंतुपुरुषःकृष्णोह्यनादिनिधनोऽव्ययः २३ तंविजेतान्नलोकेस्मिन्नापिशूलधरस्स्वयम् ॥ तवपुत्रोमहा राजसर्वशास्त्रार्थतत्वविद् २४ विदित्वादेवमीशानंनयोधयतिकेशवम् ॥ अद्यतस्यरणेजेतायवनाधिपतिर्नृप ॥ २५ ॥

॥ ११ ॥ व्याहृतंकृष्णस्तुतिरूपं कृतःकारितःकृतवान्वा ॥ १२ ॥ १३ ॥ इमानितिपुत्रंप्रदर्श्याह एषःकृष्णः ॥ १४ ॥ यशभाग्यशोभोगी स्थापितास्थापयिष्यति १५ 

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

॥ २६ ॥ अयोशनः लोहचूर्णाहारः मुनिनागार्ग्येण ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ब्रह्मणोवचनंअन्योस्यमृत्युरस्तीतिबलदेवंप्रत्यशरीरवाक्यम् ॥
॥ ३३ ॥ पूर्वस्मिन्काले ॥ ३४ ॥ यथाकन्यास्वपतिमपहायजारमाश्रयतेएवमहंस्वबलमनाश्रित्यपरमाश्रयामीत्यर्थः ॥ ३५ ॥ ३६ ॥ योगविहीनःउपायहीनः ॥ ३७

सकालयवनोनामअवध्यःकेशवस्यह ॥ तप्त्वासुदारुणंघोरंतपःपरमदुश्चरम् २६ रुद्रमाराधयामासद्वादशाब्दानयोशनः ॥ पुत्रकामेनमुनिनातोष्यरुद्रात्सुतोवृतः २७ माथुराणामवध्योयंभवेदितिचशंकरात् ॥ एवमस्त्वितिरुद्रोपिप्रददौमुनयेसुतम् २८ एवंगार्ग्यस्यतनयश्श्रीमान्रुद्रवरोद्भवः ॥ माथुराणामवध्योयंमथुरायांविशेषतः २९ कृष्णोपिबलवानेषमाथुरेजातवानयम् ॥ सजेष्यतिरणेकृष्णंमथुरायांसमागतः ३० मन्यध्वंयदिवायुक्तांनृपावाचंमयेरिताम् ॥ तत्रदूतंविसृजध्वंयवनेंद्रपुरंप्रति ३१॥ वैशंपायनउवाच॥ श्रुत्वासौभपतेर्वाक्यंसर्वेतेनृपसत्तमाः ॥ कुर्मइत्यब्रुवन्हृष्टाजरासंधंमहाबलम् ३२ सतेषांवचनंश्रुत्वाजरासंधोमहीपतिः॥ बभूवविमनाराजन्ब्रह्मणोवचनंस्मरन् ३३ ॥ जरासंधउवाच ॥ मांसमाश्रित्यपूर्वस्मिन्नृपानृपभयार्दिताः ॥ प्राप्नुवंतुहृतंराज्यंसभृत्यबलवाहनम् ३४ इहाहंचोद्यतेभूपैःपरसंश्रयहेतुना ॥ कन्येवस्वपतिद्वेषादन्यंरतिपरायणा ३५ अहोसुबलवद्दैवमशक्यंविनिवर्तितुम् यदहंकृष्णभीतोन्यंसंश्रयामिबलाधिकम् ३६ नूनंयोगविहीनोहंकारयिष्येपराश्रयम् ॥ श्रेयोहिमरणंमह्यंनचान्यंसंश्रयेनृपाः ३७ कृष्णोवाबलदेवोवायोवासौवानराधिपाः ॥ हंतारंप्रतियोत्स्यामियथाब्रम्हप्रचोदितः ३८ एषामेनिश्चिताबुद्धिरेतत्सत्पुरुषव्रतम् ॥ अतोन्यथानशक्तोहंकर्तुंपरसमाश्रयम् ॥ ३९ भवतांसाधुवृत्तानामाबाधंनकरोतिसः ॥ तेनदूतंप्रदास्यामिनृपाणांरक्षणायवै ४० व्योममार्गेणयातव्यंयथाकृष्णोनबाधते ॥ गच्छंतमनुचिंत्यैवंप्रेषयध्वंनृपोत्तमाः ४१ अयंसौभपतिश्श्रीमाननलार्केंदुविक्रमः ॥ रथेनादित्यवर्णेनप्रयातिस्वपुरंबली ४२ यवनेंद्रोयथाभ्येतिनरेंद्राणांसमागमम् ॥ वचनंचतथास्माभिर्दूत्येनःकृष्णविग्रहे ४३ वैशंपायनउवाच ॥ पुनरेवाब्रवीद्राजासौभस्यपतिमूर्जितम्॥ गच्छसर्वनरेंद्राणांसाहाय्यंकुरुमानद ४४ यवनेंद्रोयथायातियथाकृष्णंविजेष्यति ॥ यथावयंचतुष्यामस्तथानीतिर्विधीयताम् ४५ एवंसंदिश्यसर्वांस्तान्भीष्मकंपूज्यधर्मतः ॥ प्रययौस्वपुरंराजास्वेनसैन्येनसंवृतः ४६ शाल्वोपिनृपतिश्श्रेष्ठस्ताभ्यांसंपूज्यधर्मतः ॥ जगामाकाशमार्गेणरथेनानिलरंहसा ४७ तेपिसर्वेमहीपालादक्षिणापथवासिनः अनुव्रज्यजरासंधंगतास्स्वनगरंप्रति ४८

हंताअरमितिछेदःब्राह्मेणअशरीरेणवचनेन ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ दूत्येदूतकर्मणियथाऽस्माभिर्वचनंवक्तव्यंतथाऽयंवदत्वित्यर्थः नः अस्माकंकृष्णविग्रहे उपस्थितेसति ॥ ४३ ॥ राजाजरासंधः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

तावुभौकथकैशिकौ दुर्नयंचपुत्रस्यानुचिंतयन् ॥४९॥ विदिताज्ञातवती ॥ ५० ॥ ५१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांद्विपंचाशत्तमोऽध्यायः ॥५२॥
त्रिपंचाशत्तमेध्यायेशाल्वआकाशवर्मना ॥ अभ्ययाद्यवनाधीशपुरींविज्ञप्तिकारणात् ॥ १ ॥ १ ॥ पदःस्थानंचवृद्धिश्चत्रिवर्गोनीतिवेदिनामित्युक्तात्रिवर्गवेत्ता । षड्गुणान्संधिवि



भीष्मकस्सहपुत्रेणतावुभौचिंत्यदुर्नयम् ॥ स्वेगृहेन्यवसद्दीनःकृष्णमेवानुचिंतयन् ४९ विदितारुक्मिणीसाध्वीस्वयंवरनिवर्तनम् ॥ कृष्णस्यागमना
द्धेतोर्नृपाणांदोषदर्शनम् ५० गत्वातुसासखीमध्येउवाचव्रीडिताननां ॥ नचान्येषांनरेंद्राणांपत्नीभवितुमुत्सहे ॥ कृष्णात्कमलपत्राक्षात्सत्यमेतद्वचोम
म ५१ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरुक्मिणीस्वयंवरोनामद्विपंचाशत्तमोऽध्यायः ५२ वैशंपायनउवाच यवनानांबलोदग्रःसकालयव
नोनृपः ॥ बभूवराजाधर्मेणरक्षितापुरवासिनां १ त्रिवर्गविदितःप्राज्ञःषड्गुणानुपजीवकः ॥ सप्तव्यसनसंमूढोगुणेष्वभिरतस्सदा २ श्रुतिमान्धर्मशीलश्च
सत्यवादीजितेंद्रियः ॥ सांग्रामिकविधिज्ञश्चदुर्गलाभानुसारणः ३ शूरोप्रतिबलश्चैवमंत्रिप्रवरसेवकः ॥ सुखासीनस्सभांरम्यांसचिवैःपरिवारितः ४ उ
पास्यमानोयवनैरात्मविद्भिर्विपश्चितैः ॥ विविधाश्चकथादिव्याःकथ्यमानाःपरस्परम् ५ एतस्मिन्नेवकालेतुदिव्यगंधवहोनिलः ॥ प्रववौमदनाबोधंच
कारसुखशीतलः ६ किंस्विदित्येकमनसस्सभायांयेसमागताः ॥ उत्फुल्लनयनास्सर्वेराजाचैवावलोकयसः ७ अपश्यंतरथंदिव्यमायांतंभास्करोपमम् ॥
शातकुंभमयैःशुभ्रैरथांगैरुपशोभितम् ८ दिव्यरत्नप्रभाकीर्णंदिव्यध्वजपताकिनम् ॥ वाहितंदिव्यतुरगैर्मनोमारुतरंहसैः ९ चंद्रभास्करबिंबानिकृत्वा
जांबूनदेनतम् ॥ रचितंवैविश्वकृतावैयाघ्रवरभूषितम् १० रिपूणांत्रासजननंमित्राणांहर्षवर्द्धनम् ॥ दक्षिणादिगुपायांतंरथंपररथारुजं ११ तत्रोपविष्टं
श्रीमंतंसौभस्यपतिमूर्जितम् ॥ दृष्ट्वापरमसंहृष्टश्चार्घ्यंपाद्योतिचासकृत् १२ उवाचयवनेंद्रस्यमंत्रीमंत्रविदांवरः ॥ तत्रोत्थायमहाबाहुस्स्वयमेवनृपासनात्
१३ प्रत्युद्गम्यार्घ्यमादायरथावतरणेस्थितः ॥ शाल्वोपिचमहातेजादृष्ट्वाराजानमागतम् १४ मुदापरमयायुक्तंशक्रप्रतिमतेजसम् ॥ अवतीर्यसुविश्रब्ध
एकएवरथोत्तमात् १५ विवेशपरमंप्रीतोमित्रदर्शनलालसः ॥ दृष्ट्वार्वमुद्यतंराजाशाल्वोराजर्षिसत्तमः १६ उवाचश्लक्ष्णयावाचानार्घार्होस्मिमहाद्युते ॥
दूतोहंमनुजेंद्राणांसकाशाद्भवतोंतिकं १७ प्रेषितोबहुभिस्साद्धंजरासंधेनधीमता ॥ तेनमन्येमहाराजनार्घार्होस्मीतिराजसु १८ कालयवनउवाच ॥ जा
नाम्यहंमहाबाहोदौत्येनत्वामिहागतं ॥ साहित्येनरदेवानांप्रेषितोमागधेनवै १९

ग्रहयानासनद्वैधीभावाश्रयान् । सप्तव्यसनानिद्यूतंमांसं सुरावेश्यात्रिवर्गेष्वन
भिज्ञतेत्युक्तानि तेषु संमूढोऽनभिज्ञः॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ रंहसैर्वेगिभिः ॥ ९ ॥ वैय्याघ्रवरंव्याघ्रचर्मवरंतेनभूषितंपरिवृतम् ॥ १० ॥ दक्षिणादक्षि
णतः दिशः सकाशात्उपयांतम् ॥ ११ ॥ अर्घ्यंपाद्यंचासकृत् उवाचविभक्तिलोपआर्षः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

॥ २० ॥ अर्चितंअर्चनम् ॥ २१ ॥ २२ ॥ यत्परस्यजरासंधस्य ॥ २३ ॥ २४ ॥ २५ ॥ जगतांबाधीबाधकः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

तेनत्वामर्चयेराजन्विशेषेणमहामते ॥ अर्घपाद्यादिसत्कारैरासनेनयथाविधि २० भवत्यभ्यर्चितेराज्ञांसर्वेषामर्चितंभवेत् ॥ आस्यतामासनेशुभ्रेमया
सार्द्धंजनेश्वर २१ ॥ वैशंपायनउवाच ॥ सहस्तालिंगनंकृत्वापृष्ट्वाचकुशलामयम् ॥ सुखोपविष्टौसहितौशुभेसिंहासनेस्थितौ २२ ॥कालयवनउवाच॥
यद्बाहुबलमाश्रित्यवयंसर्वेनराधिपाः ॥ वसामोविगतोद्विग्नादेवाइवशचीपतिम् २३ किमसाध्यंभवेदस्ययेनासिप्रेषितोमयि ॥ वदसत्यंवचस्तस्यकिमा
ज्ञापयतिप्रभुः ॥ करिष्येवचनंतस्यअपिकर्मसुदुष्करम् २४ ॥ शाल्वउवाच ॥ यथावदतिराजेंद्रमगधाधिपतिस्तव ॥ तथाहंसंप्रवक्ष्यामिश्रूयतांयवना
धिप २५ जरासंधउवाच ॥ जातोयंजगतांबाधीकृष्णःपरमदुर्जयः ॥ विदित्वातस्यदुर्वृत्तमहंहंतुंसमुद्यतः २६ पार्थिवैर्बहुभिस्सार्द्धंसमग्रबलवाहनैः ॥
उपरुध्यमहासैन्यैर्गोमंतमचलोत्तमम् २७ चेदिराजस्यवचनंमहार्थंश्रुतवानहम् ॥ यदातयोर्विनाशायहुताशनमयोजयम् २८ ज्वालाशतसहस्राढ्यंयुगां
ताग्निसमप्रभम् ॥ दृष्ट्वारामोगिरेःकूटादाप्लुतोहेमतालधृक् २९ विनिष्पत्यमहासेनांमध्येसागरसन्निभाम् ॥ आजघानदुराधर्षोनराश्वरथदंतिनाम् ३०
सर्पंतमिवसर्पेंद्रंविकृष्याकृष्यलांगलम् ॥ नरनागाश्ववृंदानिमुशलेनव्यपोथयत् ३१ गजेनगजमास्फाल्यरथेनरथयोधिनम् ॥ हयेनचहयारोहंपदाते
नपदातिनम् ३२ समरेसमहातेजानृपार्कशतसंकुले ॥ विचरन्विविधान्मार्गान्निदाघेभास्करोयथा ३३ रामादनंतरंकृष्णःप्रगृह्यार्कसमप्रभम् ॥ चक्रंचक्र
भृतांश्रेष्ठस्सिंहःक्षुद्रमृगंयथा ३४ प्रविचाल्यमहावीर्यःपादवेगेनतंगिरिम् ॥ शत्रुसैन्येपपातोच्चैर्यदुवीरःप्रतापवान् ३५ प्रवृष्यन्निवशैलेंद्रस्तोयधारा
भिषेचितः ॥ घूर्णमानोविवेशोर्वीविनिर्वाप्यहुताशनम् ३६ आदीप्यमानशिखरादवप्लुत्यजनार्दनः ॥ जघानवाहिनींराजंश्चक्रव्यग्रेणपाणिना ३७ वि
क्षिप्यविपुलंचक्रंगदापातादनंतरम् ॥ नरनागाश्ववृंदानिमुशलेनव्यचूर्णयत् ३८ क्रोधानिलसमुद्भूतचक्रलांगलवह्निना ॥ निर्दग्धामहतीसेनानरेंद्रार्का
भिपालिता ३९ नरनागाश्वकलिलंपत्तिध्वजसमाकुलम् ॥ रथानीकंपदाताभ्यांक्षणेनविदलीकृतम् ४० सेनांप्रभग्नामालोक्यचक्रानलभयार्दिताम् ॥
महतारथवृंदेनपरिवार्यसमंततः ४१ तत्राहंयुद्ध्यमानस्तुभ्रातास्यबलवान्बली ॥ स्थितोममाग्रतश्शूरोगदापाणिर्हलायुधः ४२ द्वादशाक्षौहिणीर्हत्वा
प्रभिन्नइवकेसरी ॥ हलंसौनंदमुत्सृज्यगदयामामताडयत् ४३

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ हलंसौनंदंमुसलंचउत्सृज्यत्यक्त्वा गदयैवमामताडयत् अयोधयत् ॥ ४३ ॥

वैशाखेनविशाखःकार्तिकेयःतस्येदंवैशाखंशक्तिप्रहरणंतेन ॥ ४४ ॥ स्थानंमर्मस्थानमास्थायअभिलक्ष्यवैशाखंमोक्तुंइच्छन्वीक्षतेस्मेत्यध्याहृत्ययोज्यम् ॥ ४५ ॥ ४६ ॥ कुलांकुशे
नकौपृथिव्यांलीयतेइतिकुलंहलंतदेवांकुशः तेननिर्धूतांकंपितांभ्रामितांवाकृत्वेतिशेषः ॥ ४७ ॥ वाक्वाचम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ देवदेवंदेवराजानंप्राप्त

वज्रपातनिभंवेगंपातयित्वाममोपरि ॥ भूयःप्रहर्तुकामोमांवैशाखेनास्थितोमहीम् ४४ वैशाखंस्थानमास्थायगुहःक्रौंचंयथापुरा ॥ तथामांदीर्घने
त्राभ्यामीक्षतेनिर्दहन्निव ४५ तादृग्रूपंसमालोक्यबलदेवंरणाजिरे ॥ जीवितार्थीनृलोकेस्मिन्कःपुमान्स्थातुमर्हति ४६ गृहीत्वासगदांभीमांकालदंड
मिवोद्यताम् ॥ कुलांकुशेननिर्धूतांस्थितएवाग्रतोमम ४७ ततोजलदगंभीरस्वरेणापूरयन्नभः ॥ वाग्रुवाचाशरीरेणस्वयंलोकपितामहः ४८ प्रहर्तव्योन
राजायमवध्योयंतवानघ ॥ कल्पितोस्यवधोन्यस्माद्विरमस्वहलायुध ४९ श्रुत्वाहंतेनवाक्येनचिंताविष्टोनिवर्तितः ॥ सर्वप्राणहरंघोरंब्रह्मणास्वयमीरित
म् ५० तेनाहंवःप्रवक्ष्यामिनृपाणांहितकाम्यया ॥ श्रुत्वात्वमेवराजेंद्रकर्तुमर्हसितद्वचः ५१ तपसोग्रेणमहतापुत्रार्थीतोष्यशंकरम् ॥ प्राप्तवान्नरदेववंत्वा
मवध्यंमाथुरैर्जनैः ५२ महामुनिश्चायसचूर्णमश्नन्नुपस्थितोद्वादशवार्षिकंव्रतम् ॥ सुरासुरैस्संस्तुतपादपंकजस्सलब्धवानीप्सितकामसंपदम् ५३ तपो
बलाद्गार्ग्यमुनेर्महात्मनोवरप्रभावाच्छकलेंदुमौलिनः ॥ भवंतमासाद्यजनार्दनोहिमंविलीयतेभास्कररश्मिनायथा ५४ यतःस्वराज्ञांवचनप्रचोदितोव्रज
स्वयात्रांविजयायकेशवम् ॥ प्रविश्यराष्ट्रंमथुरांचसेनयानिहत्यकृष्णंप्रथयन्स्वकंयशः ५५ माथुरोवासुदेवोयंबलदेवस्सबांधवः ॥ तौविजेष्य
सिसंग्रामेगत्वातांमथुरांपुरीम् ५६ ॥ शाल्वउवाच ॥ इत्येवंनरपतिभास्करप्रगीतंवाक्यंतेकथितमिदंहितंनृपाणाम् ॥ तत्सर्वंसहसचिवैर्विमृश्यबुद्ध्याय
द्युक्तंकुरुमनुजेंद्रचात्मनिष्ठम् ॥ ५७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशाल्ववाक्यंनामत्रिपंचाशत्तमोऽध्यायः ५३ ॥ वैशंपायनउवाच ॥
एवंकथयमानंतंशाल्वराजंनृपाज्ञया ॥ उवाचपरमप्रीतोयवनाधिपतिर्नृपः १ ॥ कालयवनउवाच ॥ धन्योस्म्यनुगृहीतोस्मिसफलंजीवितंमम ॥ कृ
ष्णनिग्रहहेतोर्यन्नियुक्तोबहुभिर्नृपैः २ दुर्जयस्त्रिषुलोकेषुसुरासुरगणैरपि ॥ तस्यनिग्रहहेतोर्मामवधार्यजयाशिषम् ३ प्रहृष्टैराजसिंहैस्तैरवधार्योजयोमम ॥
तेषांवाचांबुवर्षेणविजयोमेभविष्यति ४ करिष्येवचनंतेषांनृपसत्तमचोदितम् ॥ पराजयोपिराजेंद्रजयेनसदृशोमम ५ अद्यैवतिथिनक्षत्रंमुहूर्तंकरणंशुभ
म् ॥ यास्यामिमथुरांराजन्विजेतुंकेशवंरणे ६

वान्महामुनिरित्यग्रिमेणसंबंधः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायांत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ छ ॥ चतुष्पंचाशत्त
मेथशाल्ववाक्येनतेजितः ॥ अभ्ययाद्यवनाधीशःकृष्णंजेतुमितीर्यते ॥ १ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

॥ ७ ॥ सिद्धादेशायअवितथाशिषे ॥ ८ ॥ ९ ॥ १० ॥ इतिहरिवंशोव० णिटीकायांचतुष्पंचाशत्तमोऽध्यायः ॥५४॥ छ ॥ पंचपंचाशत्तमेथगरुडप्रेषणांतरं ॥ राजेंद्रस्याभि षेकश्चवर्ण्यतेतिमहोत्सवः ॥ १ ॥ विदर्भनगरायातेमथुरांप्रति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ गमिष्येतिसंधिरार्षः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ स्वैरिण्यौनर्तकयः

वैशंपायनउवाच ॥ एवमाभाष्यराजानंसौभस्यपतिमूर्जितम् ॥ सत्कृत्यचयथान्यायंमहार्हमणिभूषणैः ७ ब्राह्मणेभ्योददौवित्तंसिद्धादेशायवैनृपः ॥ पु रोहितायराजेंद्रप्रददौबहुशोधनम् ८ हुत्वाग्निंविधिवद्राजाकृतकौतुकमंगलः ॥ प्रस्थानंकृतवान्सम्यक्जेतुकामोजनार्दनम् ९ शाल्वोपिभरतश्रेष्ठकृता र्थोहृष्टमानसः ॥ यवनेंद्रंपरिष्वज्यजगामस्वपुरंनृपः १० इति० हरि० कालयवनवाक्यंनामचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ जनमेजयउवाच ॥ विद र्भनगराद्यातेशक्रतुल्यपराक्रमे ॥ किमर्थंगरुडोनीतःकिंचकर्मचकारसः १ नचारुरोहभगवान्वैनतेयंमहाबलम् ॥ एतन्मेसंशयंब्रह्मन्ब्रूहितत्त्वंमहामुने २ वैशंपायनउवाच ॥ शृणुराजन्सुपर्णेनकृतंकर्मातिमानुषम् ॥ विदर्भनगरींगत्वावैनतेयोमहाद्युतिः ३ असंप्राप्तेचनगरींमथुरांमधुसूदने ॥ मनसाचिं तयामासवैनतेयोमहाद्युतिः ४ यदुक्तंदेवदेवेननृपाणामग्रतःप्रभो ॥ यास्यामिमथुरांरम्यांभोजराजेनपालिताम् ५ इतितद्वचनस्यांतेगमिष्येतिविचिंतयन् ॥ कृतांजलिपुटःश्रीमान्प्रणिपत्याब्रवीदिदम् ६ गरुडउवाच ॥ देवयास्यामिनगरींरैवतस्थकुशस्थलीम् ॥ रैवतंचगिरिंरम्यंनंदनप्रतिमंवनम् ७ रुक्मिणोद्वा सितांरम्यांशैलोदधितटाश्रयाम् ॥ वृक्षगुल्मलताकीर्णांपुष्परेणुविभूषिताम् ८ गजेंद्रभुजगाकीर्णांऋक्षवानरसेविताम् ॥ वराहमहिषाक्रांतांमृगयूथैरनेक शः ९ तांसमंतात्समालोक्यवासार्थंतेक्षमाक्षमम् ॥ यदिस्याद्भवतोरम्याप्रशस्तानगरीतिच ॥ कंटकोद्धरणंकृत्वाआगमिष्येतवांतिकम् १० वैशंपायनउ वाच ॥ एवंविज्ञाप्यदेवेशंप्रणिपत्यजनार्दनम् ॥ जगामपतगेंद्रोपिपश्चिमाभिमुखोबली ११ कृष्णोपियदुभिस्सार्द्धंविवेशममथुरांपुरीम् ॥ स्वैरिण्यउ ग्रसेनश्चनागराश्चैवसर्वशः ॥ प्रत्युद्गम्यार्चयन्कृष्णंप्रहृष्टजनसंकुलम् १२ ॥ जनमेजयउवाच ॥ श्रुत्वाभिषिक्तंराजेंद्रंबहुभिर्वसुधाधिपैः ॥ किंचकारमहाबा हुरुग्रसेनोमहीपतिः १३ ॥ वैशंपायनउवाच ॥ श्रुत्वाभिषिक्तंराजेंद्रंबहुभिःपार्थिवोत्तमैः ॥ इंद्रेणकृतसंधानंदूतंचित्रांगदंकृतम् १४ एकैकंनृपतेर्भागंशत साहस्रसंमितम् ॥ राजेंद्रेत्वर्बुदंदत्तंमानवेषुचवैदश १५ येतत्रसमनुप्राप्तानरिकास्तेगृहंगताः ॥ शंखोयादवरूपेणप्रददौहरिचिंतितम् १६ एवंनिधिपति श्श्रीमान्दैवतैरनुमोदितः ॥ इतिश्रुत्वात्मिकजनाल्लोकप्रावृत्तिकान्नरात् १७

॥ १२ ॥ १३ ॥ कृतसंधानंकृताभिसंधिंदूतंचचित्रांगदंकृत्वेतिसंबंधः ॥ १४ ॥ नृपतेर्मांडलिकस्यशतसहस्रंलक्षंदत्तं मांडलिकेशाय अर्बुदं मनुष्यमात्रेदशसहस्रं ॥ १५ ॥ न रिक्ताःनअपूर्णाः शंखोनिधिः यादवरूपेणधनंददौ ॥ १६ ॥ १७ ॥

चकारनृपइत्युत्तरेणान्वयः तोरणवंतौ उभयपार्श्वौयस्यततृतोरणोभयपार्श्वंपार्श्वतइतिप्रथमार्थेतसिः ॥ १८ ॥ १९ ॥ सभासभायां ॥२० ॥ २१ ॥ २२॥ चंदनोदकस्यसेचितंसेकंकारयामासेतिपूर्वेणसंबंधः ॥ २३ ॥ २४ ॥ २५ पुरानंदंपुरस्यानंदकरंविधिमित्यर्थः ॥ २६ ॥२७ ॥ मधुरंमधुपुरंतद्वासिनः ॥ २८ ॥ उग्रसेनेनसहइतिशेषः ॥ २९॥

चकारमहतींपूजादेवतायतनेष्वपि ॥ वसुदेवस्यभवनेतोरणोभयपार्श्वतः १८ नटानांनृत्यगेयानिवाद्यानिचसमंततः ॥ पताकाध्वजमालाढ्यांकारयामा
सवैनृपः १९ कंसराजस्यचसभांविचित्रांबरसुप्रभाम् ॥ पताकाविविधाकारादापयामासभोजराट् २० तोरणंगोपुरंचैवसुधापंकानुलेपनम् ॥ कारयामास
राजेंद्रोराजेंद्रस्यासनालयम् २१ नटानांनृत्यगेयानिवाद्यानिचसमंततः ॥पताकावनमालाढ्याःपूर्णकुंभास्समंततः२२राजमार्गेषुराजेंद्रचंदनोदकसेचितम् ॥
वस्त्राभरणकंराजादापयामासभूतले २३ धूपंपार्श्वोभयेचैवचंदनागुरुगुग्गुलैः ॥ गुडंसर्जरसंचैवदह्यमानंततस्ततः २४ वृद्धस्त्रीजनसंघैश्चगायद्भिःस्तुति
मंगलम् ॥ अर्घंकृत्वाप्रतीक्षंतेस्वेषुस्थानेषुयोषितः २५ एवंकृत्वापुरानंदमुग्रसेनोनराधिपः ॥ वसुदेवगृहंगत्वाप्रियाख्यानंनिवेद्यच २६ रामेणसहसंमं
त्र्यनिर्गतोरथमंतिकम् ॥ तस्मिन्नेवांतरेराजञ्छंखध्वनिरभून्महान् २७ पांचजन्यस्यनिनदंश्रुत्वामधुरवासिनः ॥ स्त्रियोवृद्धाश्चबालाश्चसूतामागधबंदि
नः २८ विनिर्ययुर्महासेनारामंकृत्वाग्रतोनृप ॥ अर्घंपाद्यंपुरस्कृत्यउग्रसेनेनधीमता २९ दृष्टिपंथानमासाद्यउग्रसेनोमहीपतिः ॥ अवतीर्यरथाच्छुभ्रात्पा
दमार्गेणचाग्रतः ३० दृष्ट्वासीनंरथेरम्येदिव्यरत्नविभूषितम् ॥ अंगेष्वाभरणंचैवदिव्यरत्नप्रभायुतम् ३१ वनमालोरसंदिव्यंतपंतमिवभास्करम् ॥ चाम
रव्यजनंछत्रंखगेंद्रध्वजमुच्छ्रितम् ३२ राजलक्षणसंपूर्णमासन्नार्कमिवोज्ज्वलम् ॥ श्रियाभिभूतंदेवेशंदुर्निरीक्ष्यतरंहरिम् ३३ दृष्ट्वासराजाराजेंद्रहर्षगद्गद
यागिरा ॥ बभाषेपुंडरीकाक्षंरामंबलनिषूदनम् ३४ रथेननमयागंतुंयुक्तपूर्वेतिचिंत्यवै ॥ अवतीर्णोमहाभागगच्छत्वंस्यंदनेनच ३५ विष्णुनाछद्मरू
पेणगत्वेमांमथुरांपुरीम् ॥ अनुप्रकाशितात्मानंदेवेंद्रत्वंनृपार्णवे ३६ तमहंस्तोतुमिच्छामिसर्वभावेनकेशवम् ॥ प्रत्युवाचमहातेजाराजानंकृष्णपूर्वजः ३७
नयुक्तंनृपतेस्तोतुंव्रजंतंदेवसत्तमम् ॥ विनास्तोत्रेणसंतुष्टस्तवराजन्जनार्दनः ३८ तुष्टस्यस्तुतिनाकिंतेदर्शनेननतत्रस्तुतिः ॥ राजेंद्रत्वमनुप्राप्यआगत
स्तववेश्मनि ३९ नत्वयास्तुतवान्राजन्दिव्यैःस्तोत्रैरमानुषैः ॥ एवमाब्रुवमाणौतौसंप्राप्तौकेशवांतिकम् ४० अवौद्यतभुजंदृष्ट्वास्थापयित्वारथोत्तमम् ॥
उवाचवदतांश्रेष्ठउग्रसेनंनराधिपम् ४१

॥ ३० ॥ ३१ ॥ ३२ ॥अभिभूतंव्याप्तं ॥ ३३ ॥ बलनिषूदनंशत्रुसैन्यहंतारं ॥ ३४॥ त्वंस्यंदनेनगच्छेत्युक्त्वावतीर्णोभवत्इत्यर्थः ॥ ३५ ॥ गत्वाप्राप्य ॥३६॥ नृपार्णवेदेवेंद्रत्वंदर्शितामितिशेषः तंअनुप्रकाशितात्मानंपश्चात्प्रदर्शितस्वरूपमहंस्तोतुमिच्छामीत्यन्वयः ॥ ३७ ॥ हेनृपतेत्वयानयुक्तंनयुज्यतइत्यर्थः ॥ ३८ ॥ स्तुतिनास्तुत्यादर्शनमात्रेणस्तुतिर्जातैवेत्यर्थः ॥ ३९ ॥ ४० ॥ वदतांश्रेष्ठःकृष्णः ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ स्थानभागंक्षुद्रराजप्रदेयंराज्यधनांशं ॥ ४५ ॥ तथाशतसाहस्त्रिकःलक्षसंमितःवस्त्रादिवर्जितःकेवलकांचनमयःत्वदर्थेस्थापितोस्तीतिसं
बंधः ॥ ४६ ॥ ४७ ॥ ४८ ॥ देवायकांतायअनंतायशेषाय शौरिणेशूरपुत्राय सीरिणइतिपाठेहलिनेवज्रपाणिना ॥ ४९ ॥ दिव्याभरणमित्येकत्वंजात्यभिप्रायेणदीनारः

यन्मयाचाभिषिक्तस्त्वंमथुरेशोभवत्विति ॥ नयुक्तमन्यथाकर्तुंमथुराधिपतेस्वयम् ४२ अर्ध्यमाचमनीयंचपाद्यंचास्मैनिवेदितम् ॥ नदातुमर्हसेराजन्नेष मेमनसःप्रियः ४३ तवाभिप्रायंविज्ञायब्रवीमिनृपतेवचः ॥ त्वमेवमाथुरोराजानान्यथाकर्तुमर्हसि ४४ स्थानभागंचनृपतेदास्यामितवदक्षिणाम् ॥ यथानृपाणांसर्वेषांतथातेस्थापितोग्रतः ४५ शतसाहस्त्रिकोभागोवस्त्राभरणवर्जितः ॥ आरुहस्वरथंशुभ्रंचामीकरविभूषितम् ४६ चामरंव्यजनंछत्रंध्वजंच मनुजेश्वर॥दिव्याभरणसंयुक्तंमुकुटंभास्करप्रभम् ४७धारयस्वमहाभागपालयस्वपुरीमिमाम् ॥ पुत्रपौत्रैःप्रमुदितोमथुरांपरिपालय ४८ जित्वारिगणसंवांश्चभोजवंशंविवर्द्धय ॥ देवदेवाद्यनंतायशौरिणेवज्रपाणिना ४९ प्रेषितंदेवराजेनदिव्याभरणमबंरम् ॥ माथुराणांचसर्वेषांभागादीनारकादश ५० सूतमागधबंदीनामेकैकस्यसहस्त्रिकम् ॥ वृद्धस्त्रीजनसंघानांगणिकानांशतंशतम् ५१ नृपेणसहतिष्ठंतिविकद्रुप्रमुखाश्चये॥दशसाहस्त्रिकोभागस्तेषांधात्राप्रकल्पितः ५२ वैशंपायनउवाच ॥ एवंसंपूज्यराजानंमाथुराणांचमूमुखे ॥ कृत्वासुमहदानंदांमथुरांमधुसूदनः ५३ दिव्याभरणमाल्यैश्चदिव्यांबरविलेपनैः ॥ दीप्यमानस्समंताच्चदेवाइवात्रिविष्टपे ५४ भेरीपटहनादेनशंखदुंदुभिनिःस्वनैः ॥ बृंहितेनचनागानांहयानांहेषितेनच ५५ सिंहनादेनशूराणांरथनेमिस्वनेनच ॥ तुमुलस्सुमहानासीन्मेघनादइवांबरे ५६ बंदिभिस्तूयमानंचनमश्वक्रुरपिप्रजाः ॥ दत्त्वादानमनंतंचनययौविस्मयंहरिः ५७ स्वभावोन्नतभावत्वाद्दृष्टपूर्वात्ततोधिकम् ॥ अनहंकारभावाच्चविस्मयंनजगामह ५८ दीप्यमानंस्ववपुषाआयांतंभास्करप्रभम् ॥ दृष्ट्वामथुरवासिन्योनमश्चक्रुःपदेपदे ५९ एषनारायणश्श्रीमान्क्षीरार्णवनिकेतनः ॥ नागपर्यंकमुत्सृज्यप्राप्तोयंमथुरांपुरीम् ६० बद्धाबलिंमहावीर्यंदुर्जयंत्रिदशैरपि ॥ शक्रायप्रददौराज्यंत्रैलोक्यंवज्रपाणये ६१ हत्वादैत्यगणान्सर्वान्कंसंचबलिनांवरम् ॥ भोजराजायमथुरांदत्त्वाकेशिनिषूदनः ६२ नाभिषिक्तस्स्वयंराज्येनचासीनोनृपासने राजेंद्रत्वंचसंप्राप्यमथुरामाविशत्ततः ६३ एवमन्योन्यसंजल्पंश्रुत्वापुरनिवासिनाम् ॥ बंदिमागधसूतानामिदमूचुर्गणाधिपाः ६४ किंवाशक्यामहेवक्तुंगुणानांतेगुणोदधे ॥ मानुषेणैकजिह्वेनप्रभावोत्साहसंभवान् ६५

स्वर्णसाहस्त्रमित्यभिधानोक्तेः ॥ ५० ॥ ५१ ॥ धात्राइंद्रेण ॥ ५२ ॥ मथुरांप्रविवेशइतिशेषः ॥ ५३ ॥ देवाइवासन्नितिशेषः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ पूर्वात्पूर्वत्वात् ॥ ५८ ॥ मथुरवासिन्यः मथुरावासिन्यः ॥ ५९ ॥ ६० ॥ ६१ ॥ भोजराजायउग्रसेनाय ॥ ६२ ॥ ६३ ॥ ६४ ॥ गुणानांप्रभावः उत्साहः संभवश्चतान् ६५

 जिह्वास्थेनवागिंद्रियेणद्विसाहस्रस्थानेष्वभिव्यक्तेनेत्यर्थः वासुकिरत्रशेषएव ॥ ६६ ॥ ६७ ॥ कलशैः कर्तृभिः ॥ ६८ ॥ धन्याभूदितिशेषः ॥ ६९ ॥ ७० ॥ ७१ ॥ 

 सतत्रभोगीनागेंद्रःकदाचिद्देवबुद्धिमान् ॥ द्विसाहस्रेणजिह्वेनवासुकिःकथयिष्यति ६६ किंत्वद्भुतमिदंलोकेमानवेंद्रेषुभूतले ॥ नभूतंनभविष्यंचशक्रादा 
सनमागतम् ६७ सभावतरणंचैवकलशैरागतंस्वयम् ॥ नश्रुतंनचदृष्टंवातेनमन्यामहेद्भुतम् ६८ धन्यादेवीमहाभागादेवकीयोषितांवरा ॥ भवंतंत्रिदश
श्रेष्ठंधृत्वागर्भेणकेशवम् ६९ कृष्णंपद्मपलाशाक्षंश्रीपुंजममरार्चितम् ॥ नेत्राभ्यांस्नेहपूर्णाभ्यांवीक्ष्यतेमुखपंकजम् ७० इतिसंजल्पमानानांशृण्वंतौपृथ
गीरितम् ॥ उग्रसेनंपुरस्कृत्यभ्रातरौरामकेशवौ ७१ प्राकारद्वारिसंप्राप्तावर्चयामासवैतदा ॥ अर्घ्यमाचमनंदत्त्वापाद्यंपाद्येतिचाब्रवीत् ७२ उग्रसेनस्त
तोधीमान्केशवस्यरथाग्रतः ॥ प्रणम्यशिरसाकृष्णंगजमारुह्यवीर्यवान् ॥ घनवत्तोयधारेणववर्षकनकांबुभिः ७३ धनौघैर्वर्षमाणस्तुसंप्राप्तःपितृवेश्मनि
मथुराधिपतिश्श्रीमानुवाचमधुसूदनम् ७४ राजेंद्रत्वमनुप्राप्ययुक्तंमेनृपवेश्मनि ॥ स्थापितुंदेवराजेनदत्तंसिंहासनंप्रभो ७५ नेष्यामिमथुरेशस्यसभांभु
जबलार्जिताम् ॥ प्रसादयिष्येभगवन्नकोपंकर्तुमर्हसि ७६ देवकीवसुदेवश्चरोहिणीचविशांपते ॥ नकिंचित्कारणेशक्ताहर्षक्लमविमोहिता ७७ कंसमा
तात्ततोराजन्नर्चयामासकेशवम् ॥ नानादिग्देशजानीतंकंसेनोपार्जितंधनम् ७८ देशकालंसमालोक्यपादयुग्मेन्यवेदयत् ॥ उग्रसेनंसमाहूयउवाचश्ल
क्ष्णयागिरा ७९ ॥ श्रीकृष्णउवाच ॥ नचाहंमथुराकांक्षीनमयावित्तकांक्षया ॥ घातितस्तवपुत्रोयंकालेननिधनंगतः ८० यजस्वविविधान्यज्ञान्दद
स्वविपुलंधनम् ॥ जयस्वरिपुसैन्यानिममबाहुबलाश्रयात् ८१ त्यजस्वमनसस्तापंकंसनाशोद्भवंभयम् ॥ नयस्ववित्तनिचयंमयादत्तंपुनस्तव ८२ इ
तिप्राश्वास्यराजानंकृष्णस्तुहलिनासह ॥ प्रविवेशततश्श्रीमान्मातापित्रोरथांतिकम् ८३ आनंदपरिपूर्णाभ्यांहृदयाभ्यांमहाबलौ ॥ पितृमात्रोस्तुपा
दान्वैनमश्चक्रतुरानतौ ८४ तस्मिन्मुहूर्तेनगरीमथुरातुबभूवसा ॥ स्वर्गलोकंपरित्यज्योवतीर्णेवामरावती ८५ वसुदेवस्यभवनंसमीक्ष्यपुरवासिनः ॥
मनसाचिंतयामासुर्देवलोकंनभूतलम् ८६ विसृज्यमथुरेशंतुमहिषीसहितंतदा ॥ भवनंवसुदेवस्यप्रविश्यबलकेशवौ ८७ न्यस्तशस्त्रावुभौवीरौस्वगृहे
स्वैरचारिणौ ॥ ततःकृताह्निकौभूत्वासुखासीनौकथांतरे ८८

॥ ७२ ॥ ७३ ॥ मथुराधिपतिः उग्रसेनः ॥ ७४ ॥ ७५ ॥ मथुरेशस्यतव ॥ ७६ ॥ ७७ ॥ ७८ ॥ उवाचकृष्णः ॥ ७९ ॥ ८० ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ 

१ अर्घमादाय इतिपाठान्तरम्

एतस्मिन्नेवकालेतुमहोत्पातोबभूवह ॥ बभ्रमुश्चघनाकाशेचेलुश्चभुविपर्वताः ८९ समुद्राःक्षुभितास्सर्वेविभ्रांतोभोगिनांवरः ॥ कंपितायादवास्सर्वेन्युब्जा श्चपतिताभुवि ९० तौतान्निपतितान्दृष्ट्वारामकृष्णौतुनिश्चलौ ॥ महतापक्षवातेनविज्ञातौपतगोत्तमम् ९१ ददर्शसमनुप्राप्तंदिव्यस्रगनुलेपनम् ॥ प्रण म्यशिरसाताभ्यांसौम्यरूपीकृतासनः ९२ तंदृष्ट्वासमनुप्राप्तंसचिवंसांपरायिकम् ॥ धृतिमंतंगरुत्मंतमुवाचबलिसूदनः ९३ स्वागतंखेचरश्रेष्ठसुरसेना रिमर्दन ॥ विनताहृदयानंदस्वागतंकेशवप्रिय ९४ तमुवाचततःकृष्णःस्थितंदेवमिवापरम् ॥ तुल्यसामर्थ्ययावाचाआसीनंविनतात्मजम् ९५ ॥ श्री कृष्णउवाच ॥ यास्यामःपतगश्रेष्ठभोजस्यांतःपुरंमहत् ॥ तत्रगत्वासुखासीनामंत्रयामोमनोनुगम् ९६ ॥ वैशंपायनउवाच ॥ प्रविष्टौतौमहावीर्यौबल देवजनार्दनौ ॥ वैनतेयतृतीयौचगुह्यंमंत्रमथाब्रुवन् ९७ अवध्योसौकृतोस्माकंसुमहच्चरिपोर्बलम् ॥ वृतस्सैन्येनमहतामहद्भिश्चनराधिपैः ९८ बहुला निचसैन्यानिहंतुंवर्षशतैरपि ॥ नशक्ष्यामःक्षयंकर्तुंजरासंधस्यवाहिनीम् ९९ अतोर्थेवैनतेयत्वांब्रवीमिमथुरांपुरीम् ॥ नसतोरावयोश्श्रेयोनभवेदितिमे मतिः १०० ॥ गरुडउवाच ॥ देवदेवंनमस्कृत्यगतोहंभवतोंतिकात् ॥ वासार्थमीक्षितुंभूमिंतवदेवकुशस्थलीम् १ गत्वाहंखेसमास्थायसमंतादव लोक्यताम् ॥ दृष्ट्वाहंविबुधश्रेष्ठपुरींलक्षणपूजिताम् २ सागरानूपविपुलांप्रागुदक्प्लवशीतलाम् ॥ सर्वतोदधिमध्यस्थामभेद्यांत्रिदशैरपि १०३ स र्वरत्नाकरवतींसर्वकामफलद्रुमाम् ॥ सर्वर्तुकुसुमाकीर्णांसर्वतस्सुमनोहराम् १०४ सर्वाश्रमाधिवासांचसर्वकामगुणैर्युताम् ॥ नरनारिसमाकीर्णांनित्या मोदविवर्द्धिनीम् १०५ प्राकारपरिखोपेतांगोपुराट्टालमालिनीम् ॥ विचित्रचत्वरपथांविपुलद्वारतोरणाम् ६ यंत्रार्गलविचित्राढ्यांहेमप्राकारशोभिता म् ॥ नरनागाश्वकलिलांरथसैन्यसमाकुलाम् ७ नानादिग्देशजाकीर्णांदिव्यपुष्पफलद्रुमाम् ॥ पताकाध्वजमालाढ्यांमहाभवनशालिनीम् ८ भीषणींरिपुसंघानांमित्राणांहर्षवर्द्धनीम् ॥ मनुजेंद्राधिवासेभ्योविशिष्टांनगरोत्तमाम् ९ रैवतंचगिरिश्रेष्ठंकुरुदेवसुरालयम् ॥ नंदनप्रतिमंदिव्यंपुरद्वा रस्यभूषणम् ११० कारयस्वाधिवासंचतत्रगत्वासुरोत्तम ॥ कुमारीणांप्रचारश्चसुरमण्योभविष्यति ११ नाम्नाद्वारवतीज्ञेयात्रिषुलोकेषुविश्रुता ॥ भ विष्यतिपुरीरम्याशक्रस्येवामरावती १२

यदिमहोदधिर्भूमिंदास्यतितर्हिउक्तगुणापुरीस्यादितियोजना ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ ॥ १२४ ॥ १२५ ॥ इतिहरिवंशेविष्णुपर्वणिटीकायांपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ षट्पंचाशत्तमेध्यायेद्वारावतीविवक्षया ॥ हेतुमद्वचआभाष्यमथुराचलनं



यदिस्यात्संवृतांभूमिंप्रदास्यतिमहोदधिः ॥ यथेष्टंविविधंकर्मविश्वकर्माकरिष्यति १३ मणिमुक्ताप्रवालाभिर्वज्रवैदूर्यसप्रभैः ॥ दिव्यैरभिप्राययुतैर्दि
व्यरत्नैस्त्रिलोकजैः १४ दिव्यस्तंभशताकीर्णान्स्वर्गेदेवसभोपमान् ॥ जांबूनदमयाञ्छुभ्रान्सर्वरत्नविभूषितान् १५ दिव्यध्वजपताकाढ्यान्देवगंधर्वपा
लितान् ॥ चंद्रसूर्यप्रतीकाशान्प्रासादान्कारयप्रभो १६ ॥ वैशंपायनउवाच ॥ एवंकृत्वातुसंकल्पंवैनतेयोथकेशवम् ॥ प्रणम्यशिरसाताभ्यांनिषसादकृता
सनः १७ कृष्णोपिरामसहितोविचिंत्यहितमीरितम् ॥ प्रकाशंकर्तुकामौतौविसृज्यविनतात्मजम् १८ सत्कृत्यविधिवद्राजन्महार्हवरभूषणैः ॥ मोदेतेसु
खिनौतत्रसुरलोकेयथामरौ १९ तस्यतद्वचनंश्रुत्वाभोजराजोमहायशाः ॥ कृष्णंस्नेहेनविस्रब्धंबभाषेवचनामृतम् २० कृष्णकृष्णमहाबाहोयदूनांनंदि
वर्द्धन ॥ श्रूयतांवचनंत्वाद्यवक्ष्यामिरिपुसूदन १२१ त्वयाविहीनास्सर्वेस्मनशक्तास्सुखमासितुम् ॥ पुरेस्मिन्विषयांतेवापतिहीनाइवस्त्रियः २२ त्व
त्सनाथावयंतातत्वद्बाहुबलमाश्रिताः ॥ बिभीमोननरेंद्राणांसेंद्राणामपिमानद २३ विजयाययदुश्रेष्ठयत्रयत्रगमिष्यसि ॥ तत्रत्वंसहितोस्माभिर्गच्छेथा
यादवर्षभ २४ तस्यराज्ञोवचश्श्रुत्वासस्मितंदेवकीसुतः ॥ यथेष्टंभवतामद्यतथाकर्तास्म्यसंशयम् २५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्व
णिमंत्रोदाहरणेरुक्मिणीस्वयंवरेराजेंद्राभिषेचनसमाप्तिर्नामपंचपंचाशत्तमोऽध्यायः ५५ ॥ वैशंपायनउवाच ॥ कस्यचित्त्वथकालस्यसभ्यांस्तान्यदुसंस
दि ॥ बभाषेपुंडरीकाक्षोहेतुमद्वाक्यमुत्तमम् १ यादवानामियंभूमिर्मथुराराष्ट्रमालिनी । वयंचैवेहसंभूताव्रजेचपरिवर्द्धिताः २ तदिदानींगतंदुःखंशत्रव
श्चपराजिताः ॥ नृपेषुजनितंवैरंजरासंधेनविग्रहः ३ वाहनानिचनस्संतिपादातंचाप्यनंतकम् ॥ रत्नानिचविचित्राणिमित्राणिचबहूनिच ४ इयंचमा
थुरीभूमिरल्पागम्यापरस्यतु ॥ वृद्धिश्चैवपरास्माकंबलतोमित्रतस्तथा ५ कुमारकोट्यायाश्चेमाःपदातीनांगणाश्चये ॥ एषामपीहवसतांसंमर्दमुपलक्ष
ये ६ अत्रनोरोचतेमह्यंनिवासोयदुपुंगवाः ॥ पुरींनिवेशयिष्यामिममतत्क्षंतुमर्हथ ७ एतद्यदनुरूपंवोममाभिप्रायजंवचः ॥ भवायभवतांकालेयदुकंय
दुसंसदि ८ तमूचुर्यादवास्सर्वेहृष्टेनमनसातदा ॥ साध्यतांयदभिप्रेतंजनस्यास्यभवायवै ९ ततस्संमंत्रयामासुर्वृष्णयोमंत्रमुत्तमम् ॥ अवध्योसौकृतो
स्माकंसुमहच्चरिपोर्बलम् १०

हरेः ॥१॥ कस्यचिदिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ ११ ॥ राजाजरासंधः सकालयवनः कालयवनेनसहितः ॥ १२ ॥ इदंअवध्योसावित्यादिपूर्वोक्तंअपयानंप्रतिपेदिरेशरणीचक्रुः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ सूतैःप्लुतैः आज्ञामात्रादुत्पतद्भिः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ वास्तुस्थानम् ॥ २४ ॥ सिकतायुक्तातास्रमृत्तिकायस्मिन् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

कृतस्सैन्यक्षयश्चापिमहानिहनराधिपैः ॥ बहुलानिचसैन्यानिहंतुंवर्षशतैरपि ॥ नशक्ष्यामोह्यतस्तेषामपयानेभवन्मतिम् ११ तस्मिंश्चैवांतरेराजास कालयवनस्तदा ॥ सैन्येनतादृशेनैवमथुरामभ्युपागमत् १२ ततोजरासंधबलंदुर्निवार्यमभूत्तदा ॥ तेकालयवनंचैवश्रुत्वेदंप्रतिपेदिरे १३ केशवःपुनरेवा हयादवान्सत्यसंगर ॥ अद्यैवदिवसःपुण्योनिर्यामस्स्वबलानुगाः १४ ततोनिश्चक्रमुःसर्वेयादवाःकृष्णशासनात् ॥ ओघाइवसमुद्रस्यबलौघप्रति नादिताः १५ संगृह्यतेकलत्राणिवसुदेवपुरोगमाः ॥ सुसन्नद्धैर्गजैर्मत्तैरथैरश्वैश्चदंशितैः १६ आहत्यदुंदुभीन्सर्वेस्वजनज्ञातिबांधवाः ॥ निर्ययुर्यादवास्स र्वेमथुरामपहायवै १७ स्यंदनैःकांचनापीडैर्मत्तैश्चवरवारणैः ॥ सूतैःप्लुतैश्चतुरगैःकशापार्ष्णिप्रणोदितैः १८ स्वानिस्वानिबलाग्राणिशोभयंतःप्रक र्षिणः ॥ प्रत्यङ्मुखाययुर्हृष्टावृष्णयोभरतर्षभ १९ ततोमुख्यतमास्सर्वेयादवारणकोविदाः ॥ अनीकाग्राणिकर्षंतोवासुदेवपुरोगमाः २० तेस्मनाना लताचित्रंनालिकरवनायुतम् ॥ कीर्णंनागबलैःकांतंकेतकीखंडमंडितम् २१ तालपुन्नागबकुलद्राक्षावनघनंक्वचित् ॥ अनूपंसिंधुराजस्यप्रपेतुर्यदुपुं गवाः २२ तेतत्ररमणीयेषुविषयेषुसुखप्रियाः ॥ मुमुदुर्यादवास्सर्वेदेवास्स्वर्गगताइव २३ पुरवास्तुविचिन्वन्सःकृष्णस्तुपरवीरहा ॥ ददर्शविपुलंदे शंसागरेणोपशोभितम् २४ वाहनानांहितंचैवसिकतातास्रमृत्तिकम् ॥ पुरलक्षणसंपन्नंकृतास्पदामिवाश्रिया २५ सागरानिलसंवीतंसागरांबुनिषेवित म् ॥ विषयंसिंधुराजस्यशोभितंपुरलक्षणैः २६ तत्ररैवतकोनामपर्वतोनातिदूरतः ॥ मंदरोदारशिखरस्सर्वतोभिविराजते २७ तत्रैकलव्यसंवासोद्रोणेना ध्युषितश्चिरम् ॥ प्रभूतपुरुषोपेतस्सर्वरत्नसमाकुलः २८ विहारभूमिस्तत्रैवतस्यराज्ञस्सुनिर्मिता ॥ नाम्नाद्वारवतीनामस्वायताष्टापदोपमा २९ के शवेनमतिस्तत्रपुर्यर्थेविनिवेशिता ॥ निवेशंतत्रसैन्यानांरोचयंतिस्मयादवाः ३० तेरक्तसूर्यदिवसेतत्रयादवपुंगवाः ॥ सेनापालांश्चसंचक्रुस्स्कंधावार निवेशनम् ३१ ध्रुवायतत्रन्यवसत्केशवस्सहयादवैः ॥ देशेपुरनिवेशायसयदुप्रवरोविभुः ३२ तस्यांस्तुविधिवन्नामवास्तूनिचगदाग्रजः ॥ निर्ममेपुरुष श्रेष्ठोमनसायादवोत्तमः ३३ एवंद्वारवतींचैवपुरींप्राप्यसबांधवाः ॥ सुखिनोन्यवसन्राजन्स्वर्गेदेवगणाइव ३४

अष्टापदोपमाशारिकाफलतुल्यादीर्घचतुरस्रद्वयसंबंधवतीत्यर्थः ॥ २९ ॥ मतिः इच्छा ॥ ३० ॥ ३१ ॥ ३२ ॥ वास्तूनिगृहाणिनिर्ममेविभक्तवान्मनसासंकल्पमात्रेण ३३ ॥ ३४ ॥

---

१ तस्मिंस्तु इति पाठान्तरम् ।

॥ ३५ ॥ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायांषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ सप्तपंचाशत्तमेस्मिन्मुचुकुंददृशाहरिः ॥ यवनंघातयामासमानयन्शांकरंवरं ॥ १ ॥ भगवन्निति ॥ १ ॥ परित्यज्यगतइत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ दारान्विद्यमानानपिनविंदतिनाभ्यगच्छत् ॥ ७ ॥ राजनिराजसभायां ॥ ८ ॥ अलिप्सन्अनि



कृष्णोपिकालयवनंज्ञात्वाकेशिनिषूदनः ॥ जरासंधभयाच्चैवपुरींद्वारवतींययौ ३५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिद्वारावतीप्रयाणंनामषट्पंचाशत्तमोऽध्यायः ५६ ॥ ॥ ध ॥ ॥ जनमेजयउवाच ॥ भगवञ्छ्रोतुमिच्छामिविस्तरेणमहात्मनः ॥ चरितंवासुदेवस्ययदुश्रेष्ठस्यधीमतः १ किमर्थंचपरित्यज्यमथुरांमधुसूदनः ॥ मध्यदेशस्यककुदंधामलक्ष्म्याश्चकेवलम् २ शृंगंपृथिव्यास्स्वालक्ष्यंप्रभूतधनधान्यवत् ॥ आर्याढ्यजलभूयिष्ठमधिष्ठानवरोत्तमम् ३ अयुद्धेनैवदाशार्हस्त्यक्तवान्द्विजसत्तम ॥ सकालयवनश्चापिकृष्णेकिंप्रत्यपद्यत ४ द्वारकांचसमासाद्यवारिदुर्गांजनार्दनः ॥ किंचकारमहाबाहुर्महायोगीमहातपाः ५ किंवीर्यःकालयवनःकेनजातश्चवीर्यवान् ॥ यमसह्यंसमालक्ष्यव्यपयातोजनार्दनः ६ वैशंपायनउवाच ॥ वृष्णीनामंधकानांचगुरुर्गार्ग्योमहामनाः ॥ ब्रह्मचारीपुराभूत्वानस्मदारान्सविंदति ७ तथाहिवर्तमानंतमूर्ध्वरेतसमव्ययम् ॥ श्यालोभिशस्तवान्गार्ग्यमपुमानितिराजनि ८ सोभिशस्तस्तदाराजन्नगरेत्वजितंजये ॥ अलिप्संस्तुस्त्रियंचैवतपस्तेपेसुदारुणम् ९ ततोद्वादशवर्षाणिसोयश्चूर्णमभक्षयत् ॥ आराधयन्महादेवमचिंत्यंशूलपाणिनम् १० रुद्रस्तस्मैवरंप्रादात्समर्थंयुधिनिग्रहे ॥ वृष्णीनामंधकानांचसर्वतेजोमयंसुतम् ११ ततश्शुश्रावतंराजायवनाधिपतिर्वरम् ॥ पुत्रप्रसवजंदेवादपुत्रःपुत्रकामिता १२ सनृपस्तमुपानाय्यसांत्वयित्वाद्विजोत्तमम् ॥ तंघोषमध्येयवनोगोपस्त्रीषुसमासृजत् १३ गोपालीत्वप्सरास्तत्रगोपस्त्रीवेषधारिणी ॥ धारयामासगार्ग्यस्यगर्भंदुर्द्धरमच्युतम् १४ मानुष्यांगार्ग्यभार्यायांनियोगाच्छूलपाणिनः ॥ सकालयवनोनामजज्ञेशूरोमहाबलः १५ अपुत्रस्याथराज्ञस्तुववृधेंतःपुरेशिशुः ॥ तस्मिन्नुपरतेराजन्सकालयवनोनृपः १६ युद्धाभिकामोनृपतिःपर्यपृच्छद्द्विजोत्तमान् ॥ वृष्ण्यंधककुलंतस्यनारदेननिवेदितम् १७ ज्ञात्वातुवरदानंतन्नारदान्मधुसूदनः ॥ उपप्रैक्षततेजस्वीवर्द्धंतंयवनेषुतम् १८ समृद्धोहियदाराजायवनानांमहाबलः ॥ ततएवंनृपाम्लेच्छास्संश्रित्यानुययुस्तदा १९ शकास्तुषारादरदाःपारदाश्शृंगलाःखसाः ॥ पह्लवाश्शतशश्चान्येम्लेच्छाहैमवतास्तथा २०



च्छन्कोपेन ॥ ९ ॥ १० ॥ ११ ॥ पुत्रस्यकामिताकामयिता ॥ १२ ॥ तंगार्ग्यंउपानाय्यस्वगृहमानाय्य ॥ १३ ॥ १४ ॥ मानुष्यांमानुषीरूपायामप्सरसिभार्यायां भार्यावद्वर्त्तमानायाम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

शलभैरिवेतिबहुत्वेदृष्टांतः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ राजानोऽस्मान् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

सतैःपरिवृतोराजादस्युभिश्शलभैरिव ॥ नानावेषायुधैर्भीमैर्मथुरामभ्यवर्तत २१ गजवाजिखरोष्ट्राणामयुतैरर्बुदैरपि ॥ पृथिवींकंपयामाससैन्येनमहता
वृतः २२ रेणुनासूर्यमार्गंतुसमवच्छाद्यपार्थिवः ॥ मूत्रेणशकृताचैवसैन्येनसस्रजेनदीम् २३ अश्वोष्ट्रशकृतांराशेर्निस्सृतेतिजनाधिप ॥ ततोश्वशकृ
दित्येवनामनद्याबभूवह २४ तत्सैन्यंमहदायाद्देश्रुत्वावृष्ण्यंधकाग्रणीः ॥ वासुदेवस्समानाय्यज्ञातीनिदमुवाचह २५ इदंसमुत्थितंघोरंवृष्ण्यंधकभयं
महत् ॥ अवध्यश्चापिनश्शत्रुर्वरदानात्पिनाकिनः २६ सामादयोभ्युपायाश्चविहितास्तेस्यसर्वशः ॥ मत्तोमदबलाभ्यांतुयुद्धमेवाचिकीर्षति २७ एता
वानिहवासश्चकथितोनारदेनमे ॥ एतावंतिचवक्तव्यंसामैवपरमंमतम् २८ जरासंधश्चनोराजानित्यमेवनमृष्यते ॥ तथान्येपृथिवीपालावृष्णिचक्रप्रता
पिताः २९ केचित्कंसवधाच्चापिविरक्तास्तद्गतानृपाः ॥ समाश्रित्यजरासंधमस्मानिच्छंतिबाधितुम् ३० बहवोज्ञातयश्चैवयदूनांनिहतानृपैः ॥ व
र्द्धितुंनैवशक्ष्यामपुरेस्मिन्निितिकेशवः ३१ अपयानेमतिंकृत्वादूतंतस्मैससर्जह ॥ ततःकुंभेमहासर्पंभिन्नांजनचयोपमम् ३२ घोरमाशीविषंकृष्णंकृष्णःप्रा
क्षेपयत्तदा ॥ ततस्तंमुद्रयित्वातुस्वेनदूतेनहारयत् ३३ निदर्शनार्थंगोविंदोभीषयामासतंनृपम् ॥ सदूतःकालयवनेदर्शयामासतंघटम् ३४ कालसर्पो
पमःकृष्णइत्युक्त्वाभरतर्षभ ॥ तत्कालयवनोबुद्ध्वात्रासनंयादवैःकृतम् ३५ पिपीलिकानांचंडानांपूरयामासतंघटम् ॥ ससर्पोबहुभिस्तीक्ष्णैस्सर्वतस्तैःपि
पीलिकैः ३६ भक्ष्यमाणःकिलांगेषुभस्मीभूतोभवत्तदा ॥ तंमुद्रयित्वातुघटंतथैवयवनाधिपः ॥ प्रेषयामासकृष्णायबाहुल्यमुपवर्णयन् ३७ वासुदेव
स्तुतंदृष्ट्वायोगंविहतमात्मनः ॥ उत्सृज्यमथुरामाशुद्वारकामभिजग्मिवान् ३८ वैरस्यांतंविधित्संस्तुवासुदेवोमहायशाः ॥ निवेश्यद्वारकांराजन्वृष्णी
नाश्वास्यचैवह ३९ पदातिःपुरुषव्याघ्रोबाहुप्रहरणस्तदा ॥ आजगाममहावीर्योमथुरांमधुसूदनः ४० तंदृष्ट्वानिर्ययौहृष्टस्सकालयवनोरुषा ॥ प्रेक्षा
पूर्वंचकृष्णोपिनिश्चकर्षमहाबलः ४१ अथान्वगच्छद्गोविंदंजिघृक्षुर्यवनेश्वरः ॥ नचैनमशकद्राजागृहीतुंयोगधर्मिणम् ४२ मांधातुस्तुसुतोराजामुचुकुं
दोमहायशाः ॥ पुरादेवासुरेयुद्धेकृतकर्मामहाबलः ४३ वरेणच्छंदितोदेवैर्निद्रामेवगृहीतवान् ॥ श्रांतस्यतस्यवागेवंतदाप्रादुरभूत्किल ४४ प्रसुप्तंबो
धयेद्योमांतंदहेयमहंसुराः ॥ चक्षुषाक्रोधदीप्तेनएवमाहपुनःपुनः ४५ एवमस्त्वितितंशक्रउवाचत्रिदशैस्सह ॥ ससुरैरभ्यनुज्ञातआद्रिराजमुपागमत्
४६ सपर्वतगुहांकांचित्प्रविश्यश्रमकर्शितः ॥ सुष्वापकालमेतंवैयावत्कृष्णस्यदर्शनम् ४७

॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ चत्वारःतुर्वसुर्द्रुह्युरनुःपुरुरितियवीयसोयवीयांसः ॥ ६० ॥ ६१ ॥ ६२ ॥







तत्सर्वंवासुदेवायनारदेननिवेदितम् ॥ वरदानंचदेवेभ्यस्तेजस्तस्यचभूपतेः ४८ कृष्णोनुगम्यमानश्चतेनम्लेच्छेनशत्रुणा ॥ तांगुहांमुचुकुंदस्यप्रविवेश
विनीतवत् ४९ शिरःस्थानेतुराजर्षेर्मुचुकुंदस्यकेशवः ॥ संदर्शनपथंत्यक्त्वातस्थौबुद्धिमतांवरः ५० अनुप्रविश्ययवनोददर्शपृथिवीपतिम् ॥ सतंसुप्तंकृ
तांताभमाससादसुदुर्मतिः ५१ वासुदेवंतुतंमत्वाघट्टयामासपार्थिवम् ॥ पादेनात्मविनाशायशलभःपावकंयथा ५२ मुचुकुंदस्तुराजर्षिःपादस्पर्शप्रबो
धितः ॥ निद्राच्छेदेनचुक्रोधपादस्पर्शेनतेनच ५३ संस्मृत्यसवरंशक्रादवैक्षततमग्रतः ॥ सदृष्टमात्रःक्रोधेनसंप्रजज्वालसर्वशः ५४ ददाहपावकस्तंतुशु
ष्कंवृक्षमिवाशनिः ॥ क्षणेनकालयवनंनेत्रतेजोविनिर्गतः ५५ तंवासुदेवश्श्रीमंतंचिरसुप्तंनराधिपम् ॥ कृतकार्योब्रवीद्धीमानिदंवचनमुत्तमम् ५६ राज
ञ्चिरप्रसुप्तोसिकथितोनारदेनमे ॥ कृतंमेसुमहत्कार्यंस्वस्तितेस्तुव्रजाम्यहम् ५७ वासुदेवमुपालक्ष्यराजाह्रस्वंप्रमाणतः ॥ परिकृतंयुगंमेनेकालेनमहता
तदा ५८ उवाचराजागोविंदंकोभवान्किमिहागतः ॥ कश्चकालःप्रसुप्तस्ययदिजानासिकथ्यताम् ५९ ॥ श्रीकृष्णउवाच ॥ सोमवंशोद्भवोराजाययाति
र्नामनाहुषः ॥ तस्यपुत्रोयदुर्ज्येष्ठश्चत्वारोन्येयवीयसः ६० यदुवंशात्समुत्पन्नंवसुदेवात्मजंविभो ॥ वासुदेवंविजानीहिनृपतेत्वामिहागतम् ६१ त्रेता
युगेप्रसुप्तोसिविदितोमेसिनारदात् ॥ इदंकलियुगंविद्धिकिमन्यत्करवाणिते ६२ ममशत्रुस्त्वयादग्धोदेवदत्तवरोनृप ॥ अवध्योयोमयासंख्येअवेद्वर्षश
तैरपि ६३ ॥ वैशंपायनउवाच ॥ इत्युक्तस्सतुकृष्णेननिर्जगामगुहामुखात् ॥ अन्वीयमानःकृष्णेनकृतकार्येणधीमता ६४ ततोददर्शपृथिवीमावृ
तांह्रस्वकैर्नरैः ॥ स्वल्पोत्साहैरल्पबलैरल्पवीर्यपराक्रमैः ॥ परेणाधिष्ठितंचैवराज्यंकेवलमात्मनः ६५ प्रीत्याविसृज्यगोविंदंप्रविवेशमहद्वनम् ॥ हिमवंत
मगाद्राजातपसेधृतमानसः ६६ ततस्सतपआस्थायविनिर्मुच्यकलेवरम् ॥ आरुरोहदिवंराजाकर्मभिस्स्वैर्जिताशुभैः ६७ वासुदेवोपिधर्मात्माउ
पायेनमहामनाः ॥ घातयित्वात्मनश्शत्रुंतत्सैन्यंप्रत्यपद्यत ६८ प्रभूतरथहस्त्यश्ववर्मशस्त्रायुधध्वजम् ॥ आदायोपययौधीमान्ससैन्यंनिहतेश्वरम् ६९
निवेदयामासततोनराधिपेतदुग्रसेनेप्रतिपूर्णमानसः ॥ जनार्दनोद्वारवतींचतांपुरीमशोभयत्तेनधनेनभूरिणा ७० इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णु
पर्वणिकालयवनवधोनामसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ छ ॥ वैशंपायनउवाच ॥ ततःप्रभातेविमलेभास्करेउदितेतदा ॥ कृतजाप्योहृषीकेशो
बनांतेनिषसादह १

६३ ॥ ६४ ॥ ६५ ॥ ६६ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

इतिहरिवंशेविष्णुपर्वणिटीकायांसप्तपंचाशत्तमोध्यायः ॥५७॥ अष्टपंचाशत्तमेथाध्यायेत्वष्टारमाह्वयन्॥ द्वारकातिविशेषायाहरिस्तेनविनिर्ममे ॥ १ ॥ ततइति ॥ १ ॥

॥ २ ॥ रोहिण्याम् रोहिणीनक्षत्रे श्रेष्ठेअहनिमंदवासरे शनैाहिसुसमारंभंकृतवानीश्वरःस्वयं ॥ इतिवचनात् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ त्रिकंतिसृभिःअष्टपंक्तिभिः
कल्पितंत्रिकोणांत्रिकं चत्वरंचतसृभिश्चतुरस्त्रंतदेव राजमार्गःद्वाभ्यांपण्यपंक्तिभ्यांकल्पितदीर्घरथ्यारूपः ॥ ९ ॥ शिल्पिमुख्यानांआह्वायकाइतिशेषः ॥ १० ॥ ११ ॥ १२ ॥

परिचक्रामतंदेशंदुर्गस्थानदिदृक्षया ॥ उपतस्थुःकुलप्राग्र्यायादवायदुनंदनम् २ रोहिण्यामहनिश्रेष्ठेस्वस्तिवाच्यद्विजोत्तमान् ॥ पुण्याहघोषैर्विपुलैर्दु
र्गस्यारब्धवान्क्रियाम् ३ ततःपंकजपत्राक्षोयादवान्केशिसूदनः ॥ प्रोवाचवदतांश्रेष्ठोदेवान्वृत्रारिपुर्यथा ४ कल्पितेयंमयाभूमिःपश्यध्वंदेवसद्मवत् ॥ ना
मचास्याःकृतंपुर्याःख्यातिंयदुपयास्यति ५ इयंद्वारवतीनामपृथिव्यांनिर्मितामया ॥ भविष्यतिपुरीरम्याशक्रस्येवामरावती ६ तान्येवास्याःकारयिष्येचि
ह्नान्यायतनानिच ॥ चत्वरान्राजमार्गांश्वसम्यगंतःपुराणिच ७ देवाइवात्रमोदंतुभवंतोविगतज्वराः ॥ बाधमानारिपूनुग्रानुग्रसेनपुरोगमाः ८ गृह्यंतां
वेश्मवास्तूनिकल्प्यंतांत्रिकचत्वराः ॥ मीयंतांराजमार्गांश्वप्रासादस्यचयागतिः ९ प्रेष्यंतांशिल्पिमुख्यानांयुक्तानांवेश्मकर्मसु ॥ नियुज्यंतांचदेशेषुप्रेष्य
कर्मकराजनाः १० एवमुक्तेतुयदवोगृहसंग्रहतत्पराः ॥ यथानिवेशंसंहृष्टाश्चक्रुर्वास्तुपरिग्रहम् ११ सूत्रहस्तास्ततोभानंचक्रुर्यादवसत्तमाः ॥ पुण्येहनिम
हाराजद्विजातीनभिपूज्यच १२ वास्तुदैवतकर्माणिविधिनाकारयंतिच ॥ स्थपतीनथगोविंदस्तत्रोवाचमहामतिः १३ अस्मदर्थेसुविहितंक्रियतामत्रमंदि
रम् ॥ विविक्तचत्वरपथंसुनिविष्टदैवतम् १४ तेतथेतिमहाबाहुमुक्त्वास्थपतयस्तदा ॥ दुर्गकर्माणिसंस्कारानुपकल्प्ययथाविधि १५ यथान्यायंनि
र्मिमिरेदुर्गाण्यायतनानिच ॥ स्थानानिनिदधुश्चात्रब्रह्मादीनांयथाक्रमम् १६ अपामग्नेस्सुरेशस्यदृषदोलूखलस्यच ॥ चातुर्देवानिचत्वारिद्वाराणिनिदधु
श्वते १७ शुद्धाक्षमैंद्रंभल्लाटंपुष्पदंतंतथैवच ॥ तेषुवेश्मसुयुक्तेषुयादवेषुमहात्मसु १८ पुर्याःक्षिप्रंनिवेशार्थंचिंतयामाससमाधवः ॥ तस्यदैवोत्थिताबुद्धि
र्विमलाक्षिप्रकारिणी १९ पुर्याःप्रियकरीसावैयदूनामभिवर्द्धिनी ॥ शिल्पिमुख्यस्तुदेवानांप्रजापतिसुतःप्रभुः २० विश्वकर्मास्वमत्यावैपुरींसंस्थापयि
ष्यति ॥ मनसासमनुध्यायतस्यागमनकारणात् ॥ त्रिदशाभिमुखःकृष्णोविविक्तेसमपद्यत २१ तस्मिन्नेवततःकालेशिल्पाचार्योमहामतिः ॥ विश्वक
र्मासुरश्रेष्ठःकृष्णस्यप्रमुखेस्थितः २२ ॥ विश्वकर्मोवाच ॥ शक्रेणप्रेषितःक्षिप्रंतवविष्णोधृतव्रत ॥ किंकरस्समनुप्राप्तश्शाधिमांकिंकरोमिते २३

स्थपतीन्वास्तुकर्मज्ञान्सूत्रधारान् ॥ १३ ॥ १४ ॥ संस्कारान्कटकाद्युद्वासनावटारोधादीन् ॥ १५ ॥ ब्रह्मादीनांद्वारेपितामहंविद्यादित्याशास्त्रोक्तानांगृहबलिदेवतानां ॥ १६ ॥
चतुर्देवानीतिपाठेदेवाःशुद्धाक्षादयस्तद्वंति तांश्चतत्तत्स्थापनपूर्वकंपूजयेदित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

यथामेब्रह्मादयोमान्यास्तथात्वंदेवमान्योब्रह्मादीनांमाम्योसि वःयुष्मत्तःपूजायांबहुत्वं विशेषोविशिष्टत्वंनास्ति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ प्रकाशार्थस्वकोशलस्यमयिमन्नि
मित्तम् ॥ २८ ॥ २९ ॥ ममस्थानंवैकुंठइदंरहस्यंकार्यम् ॥ ३० ॥ मतीश्वरःमतिमतांप्रभुः ॥ ३१ ॥ पुरीपुर्यर्थाभूमिः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥मारु



यथासौदेवदेवोमेशंकरश्चयथाव्ययः ॥ तथात्वंदेवमान्योमेविशेषोनास्तिवःप्रभो २४ त्रैलोक्यज्ञापिकांवाचमुत्सृजस्वमहाभुज ॥ एषोस्मिपरिदृष्टार्थः किंकरोमिप्रशाधिमाम् २५ श्रुत्वाविनीतंवचनंकेशवोविश्वकर्मणः ॥ प्रत्युवाचयदुश्रेष्ठःकंसारिरतुलंवचः २६ श्रुतार्थोदेवगुह्यस्यभवान्यत्रवयंस्थिताः ॥ अवश्यंत्विहकर्तव्यंसदनंमेसुरोत्तम २७ तदियंपूःप्रकाशार्थेनिवेश्यामयिसुव्रत ॥ मत्प्रभावानुरूपैश्चगृहैश्चेयंसमंततः २८ उत्तमाचपृथिव्यांवैयथास्वर्गेमरावती ॥ तथेयंहित्वयाकार्याशक्तोह्यसिमहामते २९ ममस्थानमिदंकार्यंयथावैत्रिदिवेतथा ॥ मर्त्याःपश्यंतुमेलक्ष्मींपुर्यायदुकुलस्यच ३० एवमुक्तस्ततःप्राहविश्वकर्मामतीश्वरः ॥ कृष्णमक्लिष्टकर्माणंदेवामित्रविनाशनम् ३१ सर्वमेतत्करिष्यामियत्त्वयाभिहितंप्रभो ॥ पुरीत्वियंजनस्यास्यनपर्याप्ता भविष्यति ३२ भविष्यतिचविस्तीर्णावृद्धिरस्यास्तुशोभना ॥ चत्वारःसागराह्यस्यांविचरिष्यंतिरूपिणः ३३ यदीच्छेत्सागरःकिंचिदुत्स्रष्टुमपितोयराट् ॥ ततस्स्वायतलक्षण्यापुरीस्यात्पुरुषोत्तम ३४ एवमुक्तस्ततःकृष्णःप्रागेवकृतनिश्चयः ॥ सागरंसरितांनाथमुवाचवदतांवरः ३५ समुद्रदशचद्वेचयोजनानिजलाशये ॥ प्रतिसंह्रियतामात्मायद्यस्तिमयिमान्यता ३६ अवकाशेत्वयादत्तेपुरीयंमामकंबलम् ॥ पर्याप्तविषयारम्यासमग्रंविसहिष्यति ३७ ततःकृष्णस्यवचनंश्रुत्वानदनदीपतिः ॥ समारुतेनयोगेनउत्ससर्जजलाशयम् ३८ विश्वकर्माततःप्रीतःपुर्यास्संलक्ष्यवास्तुतत् ॥ गोविंदेचैवसन्मानंकृतवान्सागरस्तदा ३९ विश्वकर्माततःकृष्णमुवाचयदुनंदनम् ॥ अद्यप्रभृतिगोविंदसर्वेसमधिरोहत ४० मनसानिर्मिताचेयंमयापूःप्रवराविभो ॥ अचिरेणैवकालेनगृहसंबाधमालिनी ४१ भविष्यतिपुरीरम्यासुद्वाराप्राग्र्यतोरणा ॥ चयाट्टालककेयूरापृथिव्यांककुदोपमा ४२ अंतःपुरंचकृष्णस्यपरिचर्याक्षयंमहत् ॥ चकारतस्यांपुर्यांवैदेशेत्रिदशपूजिते ४३ ततस्सानिर्मिताकांतापुरीद्वारावतीतदा ॥ मानसेनप्रयत्नेनवैष्णवीविश्वकर्मणा ४४ विधानविहितद्वाराप्राकारवरशोभिता ॥ परिखाचयसंगुप्तासाट्टप्राकारतोरणा ४५ कांतनारीनरगणावणिग्भिरुपशोभिता ॥ नानापण्यगणाकीर्णाखेचरीवचगांगता ॥ ४६ प्रपावापीप्रसन्नोदाउद्यानैरुपशोभिता ॥ समंततस्संवृतांगीवनितेवायतेक्षणा ४७ ८२

तेनयोगेनवायुसंकोचनप्रधानेन ॥३८ ॥३९॥ ४०॥४१ ॥ प्राग्र्यतोरणाश्रेष्ठवंदनमालिका ॥ ४२ ॥ परिचर्याक्षयंस्नानादिगृहम् ॥४३ ॥४४ ॥४५॥ गांपृथिवीम् ॥४६॥४७

वेश्मोत्तमेषुउच्चवेश्मसुघनाचितामेघव्याप्ताअत्युच्चेत्यर्थः ॥ ४८ ॥ निचयशालिनीसमृद्धिमती ॥ ४९ ॥ सुक्षेत्रापुण्याधिवसती ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ उदग्रा

समृद्धचत्वरवतीवेश्मोत्तमघनाचिता ॥ रथ्याकोटिसहस्राढ्याशुभ्रराजपथोत्तरा ४८ भूषयंतीसमुद्रंसास्वर्गमिंद्रपुरीयथा ॥ पृथिव्यांसर्वरत्नानामेकानिचय
शालिनी ४९ सुराणामपिसुक्षेत्रासामंतक्षोभकारिणी ॥ अप्रकाशंतदाकाशंप्रासादैरुपकुर्वती ५० पृथिव्यांपृथुराष्ट्रायांजनौघप्रतिनादिता ॥ ओघैश्ववारिरा
जस्यशिशिरीकृतमारुता ५१ अनूपोपवनैःकांतैःकांत्याजनमनोहरा ॥ सतारकाद्यौरिवसाद्वारकाप्रत्यराजत ५२ प्राकारेणार्कवर्णेनशातकौंभेनसंवृता ॥
हिरण्यप्रतिवर्णैश्चगृहैर्गंभीरनिस्स्वनैः ५३ शुभ्रमेघप्रतीकाशैर्द्वारैस्सौधैश्चशोभिता ॥ क्वचित्क्वचिदुदग्राग्रैरुपावृतमहापथा ५४ तामावसत्पुरींकृष्णस्स
र्वैर्यादवनंदनाः ॥ अभिप्रेतजनाकीर्णांसोमःखमिवभासयन् ५५ विश्वकर्माचतांकृत्वापुरींशक्रपुरीमिव ॥ जगामत्रिदिवंदेवोगोविंदेनाभिपूजितः ५६
भूयश्चबुद्धिरभवत्कृष्णस्यविदितात्मनः ॥ जनानिमान्धनौघैश्चतर्पयेयमहंयदि ५७ सवैश्रवणसंस्पृष्टंनिधीनामुत्तमंनिधिम् ॥ शंखमाह्वयतोपेंद्रोनिशि
स्वेभवनेप्रभुः ५८ सशंखःकेशवाह्वानंज्ञात्वाहिनिधिराट्स्वयम् ॥ आजगामसमीपंवैतस्यद्वारवतीपतेः ५९ सशंखःप्राजलिर्भूत्वाविनयादवनिंगतः ॥
कृष्णंविज्ञापयामासयथावैश्रवणंतथा ६० भगवन्किंमयाकार्यंसुराणांवित्तरक्षिणा ॥ नियोजयमहाबाहोयत्कार्यंयदुनंदन ६१ तमुवाचहृषीकेशश्शंखंगु
ह्यकमुत्तमम् ॥ जनाःकृशधनायेस्मिंस्तान्धनेनाभिपूरय ६२ नेच्छाम्यनशितंद्रष्टुंकृशंमलिनमेवच ॥ देहीतिचैवयाचंतंनगर्यांनिर्द्धनंनरम् ६३ ॥ वै
शंपायनउवाच ॥ ॥ गृहीत्वाशासनंमूर्ध्नानिधिराट्केशवस्यह ॥ निधीनाज्ञापयामासद्वारवत्यांगृहेगृहे ६४ धनौघैरभिवर्षध्वंचक्रुस्सर्वंतथाचते ॥
नाधनोविद्यतेतत्रक्षीणभाग्योपिवानरः ६५ कृशोवामलिनोवापिद्वारवत्यांकथंचन ॥ द्वारवत्यांपुरिपुराकेशवस्यमहात्मनः ६६ चकारवायोरा
ह्वानंभूयश्चपुरुषोत्तमः ॥ तत्रस्थएवभगवान्यादवानांप्रियंकरः ६७ प्राणयोनिस्तुभूतानामुपतस्थेगदाधरम् ॥ एकमासीनमेकांतेदेवगुह्यधरंप्रभुम् ॥
६८ किंमयादेवकर्तव्यंसर्वगेनाशुगामिना ॥ यथैवदूतोदेवानांतथैवास्मितवानघ ६९ तमुवाचततःकृष्णोरहस्यंपुरुषोहरिः ॥ मारुतंजगतःप्राणंरूपिणं
समुपस्थितम् ७० गच्छमारुतदेवेशमनुमान्यसहामरैः ॥ सभांसुधर्मामादायदेवेभ्यस्त्वमिहानय ७१ यादवाधर्मिकाह्येतेविक्रांताश्चसहस्रशः ॥
तस्यांविशेयुरेतेवैनतुयाकृत्रिमाभवेत् ७२याह्यक्षयासभारम्याकामगाकामरूपिणी ॥ सायदून्धारयेत्सर्वान्यथैवत्रिदशांस्तथा ७३

ग्रैरत्युच्चसौधैः उपावृतःछाययापिहितःमहापथोयस्यांसा ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ अनशितंनिरन्नम् ॥ ६३ ॥ ६४ ॥
॥ ६५ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

संगृह्यवचनंतस्यकृष्णस्याक्लिष्टकर्मणः ॥ वायुरात्मोपमगतिर्जगामत्रिदिवालयम् ७४ सोनुमान्यसुरान्सर्वान्कृष्णवाक्यंनिवेद्यच ॥ सभांसुधर्मामादाय
पुनरायान्महीतलम् ७५ सुधर्मायसुधर्मीतांकृष्णायाक्लिष्टकारिणे ॥ देवोदेवसभांदत्वावायुरंतरधीयत ७६ द्वारवत्यास्तुसामध्येकेशवेननिवेशिता ॥
सुधर्मायदुमुख्यानांदेवानांत्रिदिवेयथा ७७ एवंदिव्यैश्चभोगैश्चजलजैश्चाव्ययोहरिः ॥ द्रव्यैरलंकरोतिस्मपुरींस्वांप्रमदामिव ७८ मर्यादाश्चैवसंचक्रेश्रे
णीश्चप्रकृतीस्तथा ॥ बलाध्यक्षांश्चयुक्तांश्चप्रकृतीशांस्तथैवच ७९ उग्रसेनंनरपतिंकाश्यंचापिपुरोहितम् ॥ सेनापतिमनाधृष्टिंविकद्रुंमंत्रिपुंगवम् ८०
यादवानांकुलकरान्स्थविरान्दशतत्रवै ॥ मतिमान्स्थापयामाससर्वकार्येष्वनंतरान् ८१ रथेष्वतिरथोयंतादारुकःकेशवस्यवै ॥ योधमुख्यश्चयोधानां
प्रवरस्सात्यकिःकृतः ८२ विधानमेवंकृत्वाथकृष्णःपुर्यामनिंदितः ॥ मुमुदेयदुभिस्सार्द्धंलोकस्रष्टामहीतले ८३ रेवतस्याथकन्यांचरेवतींशीलसंमताम् ॥
प्राप्तवान्बलदेवस्तुकृष्णस्यानुमतेतदा ॥ ८४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिद्वारावतीनिर्माणंनामाष्टपंचाशत्तमोऽध्यायः ५८ ॥ छ ॥
॥ वैशंपायनउवाच ॥ ॥ एतस्मिन्नेवकालेतुजरासंध प्रतापवान् ॥ नृपानुद्योजयामासचेदिराजप्रियेप्सया १ सुतायाभीष्मकस्याथरुक्मिण्यारुक्म
भूषणः ॥ शिशुपालस्यनृपतेर्विवाहोभवितांकिल २ दंतवक्रस्यतनयंसुवक्रममितौजसम् ॥ सहस्राक्षसयंयुद्धेमायाशतविशारदम् ३ पौंड्रस्यवासुदे
वस्यतथापुत्रंमहाबलम् ॥ सुदेवंवीर्यसंपन्नंपृथगक्षौहिणीपतिम् ४ एकलव्यस्यपुत्रंचवीर्यवंतंमहाबलम् ॥ पुत्रंचपांड्यराजस्यकलिंगाधिपतिंतथा ५
कृताप्रियंचकृष्णेनवेणुदारिंनराधिपम् ॥ अंशुमंतंतथाक्राथंश्रुतधर्माणमेवच ६ निवृत्तशत्रुंकालिंगंगांधाराधिपतिंतथा ॥ प्रसह्यचमहावीर्यंकौशांब्या
धिपमेवच ७ भगदत्तोमहासेनश्शलश्शाल्वोमहाबलः ॥ भूरिश्रवामहासेनःकुंतिवीर्यश्चवीर्यवान् ॥ स्वयंवरार्थंसंप्राप्ताभोजराजनिवेशने ८ ॥ जन
मेजयउवाच ॥ कस्मिन्देशेनृपोजज्ञेरुक्मीवेदविदांवरः ॥ कस्यान्वयवायेद्युतिमान्संभूतोद्विजसत्तम ९ वैशंपायनउवाच ॥ राजर्षेर्यादवस्यासीद्विदर्भो
नामवैसुतः ॥ विंध्यस्यदक्षिणेपार्श्वेविदर्भायांन्यवेशयत् १०

८३

मेगत्वाकुंडिनमोजसा ॥ रामोपरान्समासज्यरुक्मिणीमहरद्धरिः ॥ १ ॥ एतस्मिन्निति चेदिराजोदमघोषःतस्यप्रियशिशुपालाख्यपुत्रस्यविवाहस्तदीप्सया ॥१॥ तदेवाह सुता
याइति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ निवृत्ताः निष्प्रचाराः शत्रवोयस्यनिवृत्तशत्रुंकीलितशत्रुमित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ श्रवादाकर्णनात् ॥ १६ ॥ १७ ॥ १८ ॥ सुनीथस्यसुनीथपुत्रस्यशिशुपालस्य ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ सु

क्रथकैशिकमुख्यास्तुपुत्रास्तस्यमहाबलाः ॥बभूवुर्वीर्यसंपन्नाःपृथग्वंशकरान्नृपाः ११तस्यान्ववायेभीमस्यजज्ञिरेवृष्णयोनृपाः॥क्रथस्यत्वंशुमान्वंशेभीष्म
कःकैशिकस्यतु १२ हिरण्यरोमेत्याहुर्यंदाक्षिणात्येश्वरंनृपाः ॥ अगस्त्यगुप्तामाशांयःकुंडिनस्थोन्वशान्नृपः १३ रुक्मीतस्याभवत्पुत्रोरुक्मिणीचविशांपते ॥
रुक्मीचास्त्राणिदिव्यानिद्रुमात्प्रापमहाबलः १४ जामदग्न्यात्तथारामाद्ब्राह्ममस्त्रमवाप्तवान् ॥ प्रास्पर्द्धतसकृष्णेननित्यमद्भुतकर्मणा १५ रुक्मिणीत्वभवद्राज
न्रूपेणासदृशीभुवि ॥ चकमेवासुदेवस्तांश्रवादेवमहाद्युतिः १६ सतयाचाभिलषितश्श्रवादेवजनार्दनः ॥ तेजोवीर्यबलोपेतस्समेभर्ताभवेदिति १७ तांद
दौनचकृष्णायद्वेषाद्रुक्मीमहाबलः ॥ कंसस्यवधसंतापात्कृष्णायामिततेजसे ॥ याचमानायकंसस्यद्वेष्योयमितिचिंतयन् १८ चैद्यस्यार्थेसुनाथस्यजरासं
धस्तुभूमिपः ॥ वरयामासतांराजाभीष्मकंभीमविक्रमम् १९ चेदिराजस्यतुवसोरासीत्पुत्रोबृहद्रथः ॥ मगधेषुपुरायेननिर्मितोसौगिरिव्रजः २० तस्या
न्ववायेजज्ञेसौजरासंधोमहाबलः ॥ वसोरेवतदावंशेदमघोषोपिचेदिराट् २१ दमघोषस्यपुत्रास्तुपंचभीमपराक्रमाः ॥ भगिन्यांवसुदेवस्यश्रुतश्रवासिजज्ञि
रे २२ शिशुपालोदशग्रीवोरैभ्योथोपदिशोबली ॥ सर्वास्त्रकुशलावीरावीर्यवंतोमहाबलाः २३ ज्ञातेस्समानवंशस्यसुनीथःप्रददौसुतम् ॥ जरासंधस्तु
सुतवद्ददर्शैनंजुगोपच २४ जरासंधंपुरस्कृत्यवृष्णिशत्रुंमहाबलम् ॥ कृतान्यागांसिचैद्येनवृष्णीनांचाप्रियैषिणा २५ जामातात्वभवत्तस्यकंसस्त
स्मिन्हतेयुधि ॥ कृष्णार्थेवैरमभवज्जरासंधस्यवृष्णिभिः २६ भीष्मकंवरयामाससुनीथार्थेचरुक्मिणीम् ॥ तांददौभीष्मकश्चापिशिशुपालायवीर्य
वान् २७ ततश्चैद्यमुपादायजरासंधोनराधिपः ॥ ययौविदर्भान्सहितोदंतवक्रेणयायिना २८ अनुज्ञातश्चपौंड्रेणवासुदेवेनधीमता ॥ अंगवंगकलिंगानां
ईश्वरस्समहाबलः २९ मानयिष्यंश्चतान्रुक्मीप्रत्युद्गम्यनराधिपान् ॥ वरयापूजयोपेतांस्तान्निनायपुरींप्रति ३० पितृष्वसुःप्रियार्थंचरामकृष्णावुभाव
पि ॥ प्रययुर्वृष्णयश्चान्येरथैस्तत्रबलान्विताः ३१ क्रथकैशिकभर्तातान्प्रतिगृह्ययथाविधि ॥ पूजयामासपूजार्हान्बहिश्चैवन्यवेशयत् ३२ श्वोभाविनि
विवाहेचरुक्मिणीनिर्ययौबहिः ॥ चतुर्युजारथेनैंद्रंदेवतायतनेशुभे ३३ इंद्राणीमर्चयिष्यंतीकृतकौतुकमंगला ॥ दीप्यमानेनवपुषाबलेनमहतावृता ॥
३४ तांददर्शतदाकृष्णोलक्ष्मींसाक्षादिवस्थिताम् ॥ रूपेणाग्र्येणसंपन्नांदेवतायतनांतिके ३५

नीथः सुतंशिशुपालंददौ तवायंसहकारीभूयादिति ॥ २४ ॥ वृष्णीनांदुःखदानितिशेषः ॥ २५ ॥ तत्रनिमित्तमाह जामातेति ॥ २६ ॥ वरयामासजरासंधःसुनीथार्थेशिशुपाला
र्थे २७ यायिनागच्छतासहसहायेनवा २८ २९ ३० ३१ क्रथकैशिकानांदेशानांभर्ताज्येष्ठोदमघोषः ३२ चतुर्युजाचतुरश्ववता ऐंद्रेज्येष्ठानक्षत्रे ३३ ३४ ३५

॥३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रभासद्भिः प्रकर्षेणभासमानैः ॥ ४० ॥ ४१ ॥ ४२ ॥ प्रमाथेहरणे प्रणिधायनिवेद्य ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ युयुधानेसात्यकौ ४७ ॥ ४८ ॥

वह्नेरिवशिखांदीप्तांमायांभूमिगतामिव ॥ पृथिवीमिवगंभीरामुत्थितांपृथिवीतलात् ३३ मरीचिमिवसोमस्यसौम्यांस्त्रीविग्रहांभुवि ॥ श्रीमिवाग्र्यां विनापद्मंभविष्यांश्रीसहायिनीम् ॥ कृष्णेनमनसादृष्टांदुर्निरीक्ष्यांसुरैरपि ३७ श्यामावदातासाह्यासीत्पृथुचार्वायतेक्षणा ॥ ताम्रौष्ठनयनापांगीपीनो रुजघनस्तनी ३८ बृहतीचारुसर्वांगीतन्वीशशिसितानना ॥ ताम्रतुंगनखीसुभ्रूर्नीलकुंचितमूर्धजा ३९ अत्यर्थंरूपतःकांतापीनश्रोणिपयोधरा ॥ ती क्ष्णशुक्लैस्समैर्दंतैःप्रभासद्भिरलंकृता ४० अनन्याप्रमदालोकेरूपेणयशसाश्रिया ॥ रुक्मिणीरूपिणीदेवीपांडुरक्षौमवासिनी ४१ तांदृष्ट्वाववृधेकामः कृष्णस्यप्रियदर्शनाम् ॥ हविषेवानलस्यार्चिर्मनस्तस्यांसमादधत् ४२ रामेणसहनिश्चित्यकेशवस्तुमहाबलः ॥ तत्प्रमाथेकरोद्बुद्धिंवृष्णिभिःप्र णिधायच ४३ कृतेतुदेवताकार्येनिष्क्रामंतींसुरालयात् ॥ उन्मथ्यसहसाकृष्णस्स्वंनिनायरथोत्तमम् ४४ वृक्षमुत्पाट्यरामोपिजवानापततःपरान् ॥ स मनह्यंतदाशार्हास्तदाज्ञप्ताश्चसर्वशः ४५ तेरथैर्विविधाकारैस्समुच्छ्रितमहाध्वजैः ॥ वाजिभिर्वारणैश्चैवपरिवव्रुर्हलायुधम् ४६ आदायरुक्मिणींकृष्णो जगामाशुपुरींप्रति ॥ रामेभारंतमासज्ययुयुधानेचवीर्यवान् ४७ अक्रूरेविपृथौचैवगदेचकृतवर्मणि ॥ चक्रदेवेसुदेवेचसारणेचमहाबले ४८ निर्वृत्तशत्रौ विक्रांतेभंगकारेविदूरथे ॥ उग्रसेनात्मजेकंकेशतद्युम्नेचकेशवः ४९ राजाधिदेवेमृदरेप्रसेनेचित्रकेतथा ॥ अतिदांतेबृहद्दुर्गेश्वफल्केसत्यकेपृथौ ५० वृ ष्ण्यंधकेषुचान्येषुमुख्येषुमधुसूदनः ॥ गुरुमासज्यतंभारंययौद्वारवतींप्रति ५१ दंतवक्रोजरासंधःशिशुपालश्चवीर्यवान् ॥ सन्नद्धानिर्ययुःक्रुद्धाजिघांसंतोज नार्दनम् ५२ अंगवंगकलिंगैश्चसार्द्धंपौंड्रैश्चवीर्यवान् ॥ निर्ययौचेदिराजस्तुभ्रातृभिःसमहारथैः ५३ तान्प्रत्यगृह्णन्संरब्धावृष्णिवीरामहारथाः ॥ संकर्ष णंपुरस्कृत्यवासवंमरुतोयथा ५४ आपतंतंहिवेगेनजरासंधंमहाबलम् ॥ षड्भिर्विव्याधनाराचैर्युयुधानोमहामृधे ५५ अक्रूरोदंतवक्रंतुविव्याधनवभिः शरैः ॥ तंप्रत्याविद्ध्यत्कारूषोबाणैर्दशभिराशुगैः ५६ विपृथुःशिशुपालंतुशरैर्विव्याधसप्तभिः ॥ अष्टभिःप्रत्यविद्ध्यत्तंशिशुपालःप्रतापवान् ५७ गवेषण स्तुचैद्यंतुषड्भिर्विव्याधमार्गणैः ॥ अतिदांतस्तथाष्टाभिर्बृहद्दुर्गश्चपंचभिः ५८ प्रतिविव्याधतांश्चैद्यःपंचभिःपंचभिःशरैः ॥ जवानाश्वांश्चचतुरश्चतुर्भिर्विपृ थोःशरैः५९बृहद्दुर्गस्यभल्लेनाशिरश्चिच्छेदचारिहा ॥ गवेषणस्यसूतंतुप्राहिणोद्यमसादनम् ६०हताश्वंतुरथंत्यक्त्वापिपृथुस्तुमहाबलः ॥ आरुरोहरथंशीघ्रं बृहद्दुर्गस्यवीर्यवान् ६१ विपृथोःसारथिश्चापिगवेषणरथंद्रुतम् ॥ आरुह्यजवनानश्वान्नियंतुमुपचक्रमे ६२

४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ कारूषोदंतवक्रः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

कलापिनः बाणहस्ताः ॥ ६३ ॥ ६४ ॥ बली शिशुपालभ्राता ॥ ६५ ॥ ॥ ६६ ॥ राजपुत्रंपौंड्रकवासुदेवसुतम् ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ निसृष्टेनप्रक्षितेन

तेक्रुद्धाःशरवर्षेणसुनीथंसमवाकिरन् ॥ नृत्यंतंरथमार्गेषुचापहस्ताःकलापिनः ६३ चक्रदेवोदंतवक्रंबिभेदोरसिपत्रिणा ॥ षड्रथंपंचभिश्चैवविव्याधयुधिमार्गणैः ६४ ताभ्यांसविद्धोदशभिर्बाणैर्मर्मातिगैःशितैः ॥ ततोबलीचक्रदेवंबिभेददशभिःशरैः ६५ पंचभिश्चापिविव्याधसोपिदूराद्विदूरथम् ॥ विदूरथोपितंषड्भिर्विव्याधाजौशितैःशरैः ६६ त्रिंशताप्रत्यविध्यत्तंबलीबाणैर्महाबलम् ॥ कृतवर्माबिभेदाजौराजपुत्रंत्रिभिःशरैः ६७ न्यहनत्सारथिंचास्यध्वजंचिच्छेदसोच्छ्रितम् ॥ प्रतिविव्याधतंक्रुद्धःपौंड्रःषड्भिःशिलीमुखैः ६८ धनुश्चिच्छेदचाप्यस्यभल्लेनकृतवर्मणः ॥ निवृत्तशत्रुःकालिंगंबिभेदनिशितैःशरैः ॥ तोमरेणांसदेशेतंनिर्बिभेदकलिंगराट् ६९ गजेनासाद्यकंकस्तुगजमंगस्यवीर्यवान् ॥ तोमरेणबिभेदांगंबिभेदांगश्चतंशरैः ७० चित्रकश्चश्वफल्कश्चसत्यकश्चमहारथः ॥ कलिंगस्यतथानीकंनाराचैर्बिभिदुःशतैः ७१ तंनिसृष्टद्रुमेणाजौवंगराजस्यकुंजरम् ॥ जघानरामःसंक्रुद्धोवंगराजंचसंयुगे ७२ तंहत्वारथमारुह्यधनुरादायवीर्यवान् ॥ संकर्षणोजघानोग्रैर्नाराचैःकैशिकान्बहून् ७३ षड्भिर्निहत्यकारूषान्महेष्वासान्सवीर्यवान् ॥ शतंजघानसंक्रुद्धोमागधानांमहाबले ७४ निहत्यतान्महाबाहुर्जरासंधंततोभ्ययात् ॥ तमापतंतंविव्याधनाराचैर्मागधस्त्रिभिः ७५ तंबिभेदाष्टभिःक्रुद्धोनाराचैर्मुसलायुधः ॥ चिच्छेदचास्यभल्लेनध्वजंहेमपरिष्कृतम् ७६ तद्युद्धमभवद्घोरंतेषांदेवासुरोपमम् ॥ सृजतांशरवर्षाणिनिघ्नतामितरेतरम् ७७ गजैर्गजाहिसंक्रुद्धाःसंनिपेतुःसहस्रशः ॥ रथैरथाश्चसंरब्धाःसादिनश्चापिसादिभिः ७८ पदातयःपदातींश्चशक्तिचर्मासिपाणयः ॥ छिंदंतश्चोत्तमांगानिविचेरुर्युधितेपृथक् ७९ असीनांपात्यमानानांकवचेषुमहास्वनः ॥ शराणांपततांशब्दःपक्षिणामिवशुश्रुवे ८० भेरीशंखमृदंगानांवेणूनांचमृधेध्वनिम् ॥ जुगूहघोषःशस्त्राणांज्याघोषश्चमहात्मनाम् ८१ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरुक्मिणीहरणंनामैकोनषष्टितमोऽध्यायः ५९ ॥ वैशंपायनउवाच ॥ कृष्णेनाह्रियमाणांतांरुक्मीश्रुत्वातुरुक्मिणीम् ॥ प्रतिज्ञामकरोत्क्रुद्धःसमक्षंभीष्मकस्यह १ ॥ रुक्म्युवाच ॥ अहत्वायुधिगोविंदमनानीयचरुक्मिणीम् ॥ कुंडिनंनप्रवेक्ष्यामिसत्यमेतद्ब्रवीम्यहम् २ आस्थायसरथंवीरःसमुदग्रायुधध्वजम् ॥ जवेनप्रययौक्रुद्धोबलेनमहतावृतः ३ तमन्वयुर्नृपाश्चैवदक्षिणापथवर्तिनः ॥ क्राथोंशुमाञ्छ्रुतर्वाचवेणुदारिश्चवीर्यवान् ४ भीष्मकस्यसुताश्चान्येरथेनरथिनांवराः ॥ क्रथकैशिकमुख्याश्चसर्वएवमहारथाः ५

द्रुमेणनिष्पत्रवृक्षेण ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ८० ॥ जुगूहसमावृणोत् ॥ ८१ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥ छ ॥ अथषष्टितमेध्यायेरुक्मिणंश्रीहरिःस्वयं जित्वामुक्त्वाथवैदर्भीमुपयेमइतीर्यते ॥ १ ॥ कृष्णेनेति ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

 ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ तंरुक्मिणं जनार्दनंजिघांसंतः १० ॥ ११ ॥ १२ ॥ १३ १४ १५ १६ ॥ १७ ॥ १८॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ 

 तेगत्वादूरमध्वानंसरितंनर्मदामनु ॥ गोविंदंददृशुःक्रुद्धाःसहैवप्रिययास्थितम् ६ अवस्थाप्यचतत्सैन्यंरुक्मीमदबलान्वितः ॥ चिकीर्षुर्द्वैरथंयुद्धमभ्यया 
न्मधुसूदनम् ७ सविव्याधचतुःषष्ट्यागोविंदंनिशितैःशरैः ॥ तंप्रत्यविध्यत्सप्तत्याबाणैर्युधिजनार्दनः ८ यतमानस्यचिच्छेदध्वजंचास्यमहाबलः ॥ ज
हारचशिरःकायात्सारथेस्तस्यवीर्यवान् ९ तंकृच्छ्रगतमाज्ञायपरिवव्रुर्जनार्दनम् ॥ दाक्षिणात्याजिघांसंतोराजानःसर्वएवहि १० तमंशुमान्महाबाहुर्विव्या
धदशभिःशरैः ॥ श्रुतर्वापंचभिःक्रुद्धोवेणुदारिश्चसप्तभिः ११ ततोंशुमंतंगोविंदोबिभेदोरसिवीर्यवान् ॥ निषसादरथोपस्थेव्यथितःसनराधिपः १२ श्रुत
र्वणोजघानाश्वांश्चतुर्भिश्चतुरःशरैः ॥ वेणुदारेर्ध्वजंछित्त्वाभुजंविव्याधदक्षिणम् १३ तथैवचश्रुतर्वाणंशरैर्विव्याधपंचभिः ॥ शिश्रियेसध्वजंश्रांतोन्यषीद
च्चव्यथान्वितः १४ मुंचंतःशरवर्षाणिवासुदेवंततोभ्ययुः ॥ क्रथकैशिकमुख्याश्चसर्वएवमहारथाः १५ बाणैर्बाणांश्चचिच्छेदतेषांयुधिजनार्दनः ॥ जघान
चैषांसंरब्धःपतमानश्चताञ्शरान् १६ पुनरन्याश्चतुःषष्ट्याजघानानिशितैःशरैः ॥ क्रुद्धानापततोवीरानाद्रवत्समहाबलः १७ विद्रुतंस्वबलंदृष्ट्वारुक्मीक्रो
धवशंगतः ॥ पंचभिर्निशितैर्बाणैर्विव्याधोरसिकेशवम् १८ सारथिंचास्यविव्याधसायकैर्निशितैस्त्रिभिः ॥ आजघानशरेणास्यध्वजंचनतपर्वणा १९ के
शवस्त्वरितंदृष्ट्वाक्रुद्धोविव्याधमार्गणैः ॥ धनुश्चिच्छेदचाप्यस्ययतमानस्यरुक्मिणः २० अथान्यद्धनुरादायरुक्मीकृष्णजिघांसया ॥ प्रादुश्चकारचान्या
निदिव्यान्यस्त्राणिवीर्यवान् २१ अस्त्रैरस्त्राणिसंवार्यतस्यकृष्णोमहाबलः ॥ पुनश्चिच्छेदतच्चापंरथेषांचत्रिभिःशरैः २२ सच्छिन्नधन्वाविरथःखड्गमादायच
र्मच ॥ उत्पपातरथाद्वीरोगरुत्मानिववीर्यवान् २३ तस्याभिपततःखड्गंचिच्छेदयुधिकेशवः ॥ नाराचैश्चत्रिभिःक्रुद्धोबिभेदैनमथोरसि २४ सपपातमहा
बाहुर्वसुधामनुनादयन् ॥ विसंज्ञोमूर्च्छितोराजावज्रेणेवमहासुरः २५ तांश्चराज्ञःशरैःसर्वान्पुनर्विव्याधमाधवः ॥ रुक्मिणंपतितंदृष्ट्वाव्यद्रवंतनराधिपाः ॥
२६ विचेष्टमानंतंभूमौभ्रातरंवीक्ष्यरुक्मिणी ॥ पादयोर्न्यपतद्विष्णोर्भ्रातुर्जीवितकांक्षिणी २७ तामुत्थाप्यपरिष्वज्यसांत्वयामासकेशवः ॥ अभयंरु
क्मिणेदत्त्वाप्रययौस्वपुरींततः २८ वृष्णयोपिजरासंधंभंक्त्वातांश्चैवपार्थिवान् ॥ प्रययुर्द्वारकांहृष्टाःपुरस्कृत्यहलायुधम् २९ प्रयातेपुंडरीकाक्षेश्रुतर्वा
भ्येत्यसंगरे ॥ रुक्मिणंरथमारोप्यप्रययौस्वांपुरींप्रति ३० अनानीयस्वसारंतुरुक्मीमानमदान्वितः ॥ हीनप्रतिज्ञोनैच्छत्सप्रवेष्टुंकुंडिनंपुरम् ३१ विदर्भेषु 
निवासार्थंनिर्ममेन्यत्पुरंमहत् ॥ तद्भोजकटमित्येवबभूवभुविविश्रुतम् ३२

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ३२

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ कालिंदींसूर्यस्यपुत्रींयमुनांप्रथमां मित्रविंदांराजाधिदेव्यांपितृष्वसरिआवंत्याज्जातांद्वितीयां सत्यांअयो ध्यापतेर्नग्नजितःपुत्रींनाग्नजितींतृतीयां जांबवत.सुतांजांबवतींचतुर्थीं रोहिणींश्रुतकीर्तौपितृष्वसरिकैकेयाज्जातांभद्रापरनाम्नींपंचमीं ॥४१॥ मद्रराजसुतांलक्ष्मणामितिव्यवहि तेनान्वयस्तांषष्ठीं सात्राजितींसत्यभामांसप्तमीं ॥ ४२ ॥ शैब्यस्यसुतांतन्वीं नामतःगांधार्यभिधामष्टमीं एताःपट्टनायिकाःरुक्मिणीतुसाक्षात्श्रीरेवतेयासुनगणिता समंए

तत्रौजसामहातेजादक्षिणांदिशमन्वशात् ॥ भीष्मकःकुंडिनेचैवराजोवासमहाभुजः ३३ द्वारकांचापिसंप्राप्तेरामेवृष्णिबलान्विते ॥ रुक्मिण्याःकेशवः पाणिंजग्राहविधिवत्प्रभुः३४ ततःसहतयारेमेप्रिययाप्रीयमाणया॥ सीतयेवपुरारामःपौलोम्येवपुरंदरः ३५ साहितस्याभवज्ज्येष्ठापत्नीकृष्णस्यभामिनी पतिव्रतागुणोपेतारूपशीलगुणान्विता ३६ तस्यामुत्पादयामासपुत्रान्दशमहारथान् ॥ चारुदेष्णंसुदेष्णंचप्रद्युम्नंचमहाबलम् ३७ सुषेणंचारुगुप्तंचचारु बाहुंचवीर्यवान् ॥ चारुविंदंसुचारुंचभद्रचारुंतथैवच ३८ चारुंचबलिनांश्रेष्ठंसुतांचारुमतींतथा ॥ धर्मार्थकुशलास्तेतुकृतास्त्रायुद्धदुर्मदाः ३९ महिषीः सप्तकल्याणीस्ततोन्यामधुसूदनः ॥ उपयेमेमहाबाहुर्गुणोपेताःकुलोद्भवाः ४० कालिंदींमित्रविंदांचसत्यांनाग्नजितीमपि ॥ सुतांजांबवतश्चापिरोहिणींका मरूपिणीम् ४१ मद्रराजसुतांचापिसुशीलांशुभलोचनाम् ॥ सात्राजितींसत्यभामांलक्ष्मणांचारुहासिनीम् ४२ शैब्यस्यचसुतांतन्वींरूपेणाप्सरसोप माम् ॥ स्त्रीसहस्राणिचान्यानिषोडशातुलविक्रमः ॥ उपयेमेहृषीकेशःसर्वाभेजेसताःसमम् ४३ परार्ध्यवस्त्राभरणाःकामैःसर्वैःसुखोचिताः ॥ जज्ञिरे तासुपुत्राश्चतस्यवीराःसहस्रशः४४ शास्त्रार्थकुशलाःसर्वेबलवंतोमहारथाः ॥ यज्वानःपुण्यकर्माणोमहाभागामहाबलाः ४५ ॥ ॥ इतिश्रीमहाभारते खि०हरि०विष्णु०रुक्मिणीहरणंनामषष्टितमोऽध्यायः॥ ६० ॥ ॥ छ ॥ वैशंपायनउवाच ॥ ततःकालेव्यतीतेतुरुक्मीमहतिवीर्यवान् ॥ दुहितुःका रयामासस्वयंवरमरिंदम १ तत्राहूताहिराजानोराजपुत्राश्चरुक्मिणा ॥ समाजग्मुर्महावीर्यानानादिग्भ्यःश्रियान्विताः २ तत्राजगामप्रद्युम्नःकुमारैरपरैर्वृ तः॥ साहितंचकमेकन्यासचतांशुभलोचनाम् ३ शुभांगीनामवैदर्भीकांतिद्युतिसमन्विता ॥ पृथिव्यामभवत्ख्यातारुक्मिणस्तनयातदा ४ उपविष्टेषुसर्वेषु पार्थिवेषुमहात्मसु ॥ वैदर्भीवरयामासप्रद्युम्नमरिसूदनम् ५ सहिसर्वास्त्रकुशलःसिंहसंहननोयुवा ॥ रूपेणाप्रतिमोलोकेकेशवस्यात्मजोभवत् ६

कसमयावच्छेदेननतुपर्यायेणभेजेउपयेमेच मूर्तिभेदेनयोगेश्वरत्वात् ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटिकायांषष्टितमोऽध्यायः ॥ ६० ॥ ॥ छ ॥ एकषष्टितमेध्यायेप्रद्युम्नतत्तनूजयोः विवाहःकथ्यतेतत्ररुक्मिणश्चतथावधः ॥१ ॥ ततइतिकालेमहति ॥ १ ॥ २ ॥ साकन्याचकमेकामितवती ॥ ३ ॥ ४ ॥ ५ ॥ सिंह संहननःसिंहवददृढांगः बरांगरूपोपेतोयःसिहसंहननोहिसइत्युक्तोवा ॥ ६ ॥

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ कितवैः



वयोरूपगुणोपेताराजपुत्रीचसाभवत् ॥ नारायणीचंद्रसेनाजातकामाचतंप्रति ७ वृत्तेस्वयंवरेजग्मूराजानःस्वपुराणिते ॥ उपादायचवैदर्भींप्रद्युम्नोद्वारकांययौ ८ रेमेसहतयावीरोदमयंत्यानलोयथा ॥ सतस्यांजनयामासदेवगर्भोपमंसुतम् ९ अनिरुद्धमितिख्यातंकर्मणाप्रतिमंभुवि ॥ धनुर्वेदेचवेदेचनीतिशास्त्रेचपारगम् १० अभवत्सयदाराजन्ननिरुद्धोवयोन्वितः ॥ तदास्यरुक्मिणःपौत्रींश्रीमतींरुक्मसन्निभाम् ॥ पत्न्यर्थेवरयामासनाम्नारुक्मवतीतिसा ११ अनिरुद्धंगुणैर्दातुंकृतबुद्धिर्नृपस्ततः ॥ प्रीत्याहिरौक्मिणेयस्यरुक्मिण्याश्चाप्युपग्रहात् १२ विस्पर्द्धन्नपिकृष्णेनवैरंत्यज्यमहायशाः ॥ ददामीत्यब्रवीद्राजाप्रीतिमान्जनमेजय १३ केशवःसहरुक्मिण्यापुत्रैःसंकर्षणेनच ॥ अन्यैश्चवृष्णिभिःसार्द्धंविदर्भान्सबलोययौ १४ संयुक्ताज्ञातयश्चैवरुक्मिणःसुहृदश्चये ॥ आहूतारुक्मिणातेपितत्राजग्मुर्नराधिपाः १५ शुभेतिथौमहाराजनक्षत्रेचाभिपूजिते ॥ विवाहःसोनिरुद्धस्यबभूवपरमोत्सवः १६ पाणौगृहीतेवैदर्भ्यास्त्वनिरुद्धेनतत्रवै ॥ वैदर्भयादवानांचबभूवपरमोत्सवः १७ रेमिरेवृष्णयस्तत्रपूज्यमानायथामराः ॥ अथाश्मकानामधिपोवेणुदारिरुदारधीः १८ अक्षःश्रुतर्वाचाणूरःक्राथश्चैवांशुमानपि ॥ जयत्सेनःकलिंगानामधिपश्चमहाबलः १९ पांड्यश्चनृपतिःश्रीमानृषीकाधिपतिस्तथा ॥ एतेसंमंत्र्यराजानोदाक्षिणात्यामहर्द्धयः २० अभिगम्याब्रुवन्सर्वेरुक्मिणंरहसिप्रभुम् ॥ भवानक्षेषुकुशलोवयंचापिरिरंसवः ॥ प्रियद्यूतश्चरामोसावक्षेष्वनिपुणोपिच २१ तेभवंतंपुरस्कृत्यजेतुमिच्छामतंवयम् ॥ इत्युक्तोरोचयामासरुक्मीद्यूतंमहारथः २२ तेशुभांकांचनस्तंभांकुसुमैर्भूषिताजिराम् ॥ सभामाविविशुर्हृष्टाःसिक्तांचंदनवारिणा २३ तांप्रविश्यततःसर्वेशुभ्रस्रगनुलेपनाः ॥ सौवर्णेष्वासनेष्वासांचक्रिरेविजिगीषवः २४ आहूतोबलदेवस्तुकितवैरक्षकोविदैः ॥ बाढमित्यब्रवीद्धृष्टःसहदीव्यामपण्यताम् २५ निकृत्याविजिगीषंतोदाक्षिणात्यानराधिपाः ॥ मणिमुक्ताःसुवर्णंचतत्रानिन्युःसहस्रशः २६ ततःप्रावर्ततद्यूतंतेषांरतिविनाशनम् ॥ कलहस्यास्पदंघोरंदुर्मतीनांक्षयावहम् २७ निष्काणांचसहस्राणिसुवर्णस्यदशादितः ॥ रुक्मिणासहसंपातेबलदेवोग्लहंददौ २८ तंजिगायततोरुक्मीयतमानंमहाबलम् ॥ तावदेवापरंभूयोबलदेवंजिगायसः २९ असकृज्जीयमानस्तुरुक्मिणाकेशवाग्रजः ॥ सुवर्णकोटीर्जग्राहग्लहंतस्यमहात्मनः ३० जितमित्येवहृष्टोथतमाहूतिरभाषत ॥ श्लाघ्यमानश्चचिक्षेपप्रहसन्मुशलायुधम् ३१ अविद्योदुर्बलःश्रीमान्हिरण्यममितंमया ॥ अजेयोबलदेवोयमक्षद्यूतेपराजितः ३२



द्यूतवेदिभिः ॥ २५ ॥ निकृत्याकपटेन ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ आहृतिः अत्यंतकुटिलः ह्रुकौटिल्यइत्यस्यरूपं चिक्षेपनिनिंद ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ आधिपांसुलेअधिकसरजस्के क्रोधकालेद्यूतदेशेचेत्यर्थः ॥ ३७ ॥ ३८ ॥ चातुरक्षेचतुरंकांकितेऽक्षेनिर्वृत्तेनिपतितेसातिउभयोर्धनेप्रत्येकंद
शधाकृतेयदिवादीएकांकंपातयेत्तदाएकमंशंधनाद्धरेत् द्व्यंकपातेपूर्वेणसहत्रीनंशान्त्र्यंकपातेपूर्वैस्त्रिभिःसहषडंशान्चतुरंकपातेपूर्वैःषड्भिःसहदशाप्यंशान्हरेदितिद्यूतविदांम

कलिंगराजस्तच्छ्रुत्वाप्रजहासभृशंतदा ॥ दंतान्संदर्शयन्हृष्टस्तत्राक्रुद्धयद्धलायुधः ३३ रुक्मिणस्तद्वचश्श्रुत्वापराजयनिमित्तजम् ॥ निगृह्यमाणस्तीक्ष्णा
भिर्वाग्भिर्भीष्मकसूनुना ३४ रोषमाहारयामासजितरोषोपिधर्मवित् ॥ संक्रुद्धोधर्षणांप्राप्यरौहिणेयोमहाबलः ३५ धैर्यान्मनःसन्निधायततोवचन
मब्रवीत् ॥ दशकोटिसहस्राणिग्लहएकोममापरः ३६ एनंसंपरिगृह्णीष्वपातयाक्षान्नराधिप ॥ कृष्णाक्षाल्लोहिताक्षांश्चदेशेस्मिंस्त्वधिपांसुले ३७ इ
त्येवमाह्वयामासरुक्मिणंरोहिणीसुतः ॥ अनुक्त्वावचनंकिंचिद्बाढमित्यब्रवीत्पुनः ३८ अक्षान्रुक्मीततोहृष्टःपातयामासपार्थिवः ॥ चातुरक्षेतुनिर्वृत्ते
निर्जितःसनराधिपः ३९ बलदेवेनधर्मेणनेत्युवाचततोबलम् ॥ धैर्यान्मनःसमाधायसनकिंचिदुवाचह ४० बलदेवंततोरुक्मीमयाजितमितिस्मयन् ॥
बलदेवस्तुतच्छ्रुत्वाजिह्मंवाक्यंनराधिप ४१ भूयःक्रोधसमाविष्टोनोत्तरंव्याजहारह ॥ ततोगंभीरनिर्घोषावागुवाचाशरीरिणी ४२ बलदेवस्यतंक्रोधंव
र्धयंतीमहात्मनः ॥ सत्यमाहबलःश्रीमान्धर्मेणैषपराजितः ४३ अनुक्त्वावचनंकिंचित्प्राप्तोभवतिकर्मणा ॥ मनसासमनुज्ञातंतत्स्यादित्यवगम्यताम्
४४ इतिश्रुत्वावचस्तथ्यमंतरिक्षात्सुभाषितम् ॥ संकर्षणस्तथोत्थायसौवर्णेनोरुणाबली ४५ रुक्मिण्याभ्रातरंज्येष्ठंनिजघानमहीतले ॥ विवादेकुपि
तोरामःक्षेप्तारंकिलरुक्मिणम् ॥ जघानाष्टापदेनैवप्रमथ्ययदुनंदनः ४६ ततोपसृत्यसंक्रुद्धःकलिंगाधिपतेरपि ॥ दंतान्बभंजसंरंभादुन्ननादचसिंहवत् ४७
खड्गमुद्यम्यतान्सर्वांस्त्रासयामासपार्थिवान् ॥ स्तंभंसभायाःसौवर्णमुत्पाट्यबलिनांवरः ४८ गजेंद्रइवसंस्तंभंकर्षन्संकर्षणस्ततः ॥ निर्जगामसभाद्वारा
त्त्रासयामासकैशिकान् ४९ रुक्मिणंनिकृतिप्रज्ञंसहत्वायादवर्षभः ॥ वित्रास्यविद्विषःसर्वान्सिंहःक्षुद्रमृगानिव ५० जगामशिबिरंरामःस्वयमेवजनावृतः ॥
न्यवेदयत्सकृष्णायतत्रसर्वंयथाभवत् ५१ नोवाचसतदाकृष्णःकिंचिद्रामंमहाद्युतिः ॥ निगृह्यचतदात्मानंकुच्छ्रादश्रूण्यवर्तयत् ५२ नहतोवासुदेवेनयः
पूर्वंपरवीरहा ॥ ज्येष्ठोभ्राताथरुक्मिण्यारुक्मिणीस्नेहकारणात् ५३ सरामकरमुक्तेननिहतोद्यूतमंडले ॥ अष्टापदेनबलवान्राजावज्रधरोपमः ५४ त
स्मिन्हतेमहावीर्येनृपतौभीष्मकात्मजे ॥ द्रुमभार्गवतुल्येवैद्रुद्रभार्गवशिक्षिते ५५

र्यादयासर्वंधनंजितमित्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥अनुक्त्वापिजयंप्राप्तोभवतिरामइत्यध्याहृत्ययोज्यंमनसाप्रतिवादिनामितिशेषःमनसानुज्ञातमपिवाचानाभ्यनुज्ञा
यतइतिदौरात्म्यांतेषामितिभावः ॥ ४४ ॥ उरुणामहताअष्टापदेनेतिवक्ष्यमाणत्वात् ॥ ४५ ॥ ४६ ॥ कलिंगाधिपतेर्जयत्सेनस्य ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५

कृतौसत्क्रियायांकुशलेइत्येकदेशेनसंबंधःनित्ययाजिनिनित्यकर्मपरे ॥ ५६ ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायामेकषष्टितमोऽध्यायः ॥ ६१ ॥ ७ ॥ अथाध्यायेषष्टितमेद्व्याधिकेरिमान्निरूप्यते ॥ बलदेवस्यमाहात्म्यंभूरिभाग्यवतांप्रियम् ॥ १ ॥ भूयइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥



कृतौचयुद्धकुशलेनित्ययाजिनिपातिते ॥ वृष्णयश्चांधकाश्चैवसर्वेविमनसोभवन् ५६ ॥ वैशंपायनउवाच ॥ रुक्मिणीचमहाभागाविलपंत्यार्तयागिरा ॥ विलपंतींतथादृष्ट्वासांत्वयामासकेशवः ५७ एतत्तेसर्वमाख्यातंरुक्मिणोनिधनंयथा ॥ वैरस्यचसमुत्थानंवृष्णिभिर्भरतर्षभ ५८ वृष्णयोपिमहाराजधनान्यादायसर्वशः ॥ रामकृष्णौसमाश्रित्यययुर्द्वारवतींप्रति ५९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि०रुक्मीवधोनामैकषष्टितमोऽध्यायः ६१ ॥ ॥ ७ ॥ ॥ राजोवाच ॥ भूयएवतुविप्रर्षेबलदेवस्यधीमतः ॥ माहात्म्यंश्रोतुमिच्छामिशेषस्यधरणीभृतः १ अतीवबलदेवंतंतेजोराशिमनिर्जितम् ॥ कथयंतिमहात्मानंयेपुराणविदोजनाः २ तस्यकर्माण्यहंविप्रश्रोतुमिच्छामितत्त्वतः ॥ अनंतंयंविदुर्नागमादिदेवंजनेश्वरम् ३ ॥ वैशंपायनउवाच ॥ पुराणेनागराजोसौपठ्यतेधरणीधरः ॥ शेषस्तेजोनिधिःश्रीमानकंप्यःपुरुषोत्तमः ४ योगाचार्योमहावीर्योदेवमंत्रमुखोबली ॥ जरासंधंगदायुद्धेजितवान्योनचावधीत् ५ बहवश्चैवराजानःप्रथिताःपृथिवीतले ॥ अन्वयुर्मागधंसर्वेतेचापिविजितारणे ६ नागायुतबलप्राणोभीमोभीमपराक्रमः ॥ असकृद्बलदेवेनबाहुयुद्धेपराजितः ७ दुर्योधनस्यकन्यांतुहरमाणोन्यगृह्यत ॥ सांबोजांबवतीपुत्रोनगरेनागसाह्वये ८ राजभिःसर्वतोरुद्धोहरमाणोबलात्किल ॥ तदुपश्रुत्यसंरुद्धआजगाममहाबलः ९ रामस्तस्यतुमोक्षार्थमागतोनालभच्चतम् ॥ ततश्चक्रोधबलवानद्भुतंचाकरोन्महत् १० अनिवार्यमभेद्यंचदिव्यमप्रतिमंबले ॥ लांगलास्त्रंसमुद्यम्यब्रह्ममंत्राभिमंत्रितम् ११ प्राकारवप्रेविन्यस्यपुरस्यचमहाद्युतिः ॥ प्रक्षेप्तुमैच्छद्गंगायांनगरंकौरवस्यतत् १२ तद्विघूर्णितमालक्ष्यपुरंदुर्योधनोनृपः ॥ सांबंनिर्यातयामाससभार्यंतस्यधीमतः १३ ददौशिष्यंतदात्मानंरामस्यसुमहात्मनः ॥ गदायुद्धेकुरुपातिंशिष्यंजग्राहतंचसः १४ ततःप्रभृतिराजेंद्रपुरमेतद्विघूर्णितम् ॥ आवर्जितमिवाभातिगंगामाभिमुखंनृप १५ इदमत्यद्भुतंकर्मरामस्यकथितंभुवि ॥ भांडीरेकथितंराजन्यत्कृतंशौरिणापुरा १६ प्रलंबंमुष्टिनैकेनयज्जवानहलायुधः ॥ धेनुकंतुमहावीर्यंचिक्षेपनगमूर्द्धनि ॥ सगतायुःपपातोर्व्यांदैत्योगर्दभरूपधृक् १७ लवणजलगमामहानदीद्रुतजलवेगतरंगमालिनी ॥ नगरमभिमुखंयदाहृताहलविधृतायमुनायमस्वसा १८ बलदेवस्यमाहात्म्यमेतत्तेकथितंमया ॥ अनंतस्याप्रमेयस्यशेषस्यधरणीभृतः १९

भीमोभीमसेनः ॥ ७ ॥ न्यगृह्यतनिगृहीतःकौरवैरितिशेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

॥ २० ॥ इतिहरिवंशेविष्णुपर्वणिटीकायांद्विषष्टितमोऽध्यायः ॥ ६२ ॥ अथात्रत्रिषष्टितमेसुरेंद्रःकृष्णमब्रवीत् । कुंडलाभ्यांदितेर्मातुर्हर्तुश्चाथनिबर्हणम् ॥ १ ॥ प्रत्येत्येति ॥ १ ॥
तैःयदुभिः ॥ २ ॥ यानिरत्नानिप्रत्यपद्यततानिनैर्ऋतान्प्रत्यवारयत् राक्षसैःस्वगृहेआनाय्यस्थापितवानित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ मूर्तिलिंगस्थःदृश्यज्ञापकंसत्वंमूर्तिलिंगंतत्स्थः

इतिपुरुषवरस्यलांगलेर्बहुविधमुत्तममन्यदेवच ॥ यदकथितमिहाद्यकर्मतेतदुपलभस्वपुराणविस्तरात् २० ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि
ष्णुपर्वणिबलदेवमाहात्म्यंनामद्विषष्टितमोऽध्यायः ६२ ॥ छ॥ जनमेजयउवाच । प्रत्येत्यद्वारकांविष्णुर्हतेरुक्मिणिवीर्यवान् ॥ अकरोद्यन्महाबाहुस्तन्मेव
दमहामुने १ वैशंपायनउवाच ॥ सतैःपरिवृतःश्रीमान्पुरींयादवनंदनः ॥ द्वारकांभगवान्विष्णुःप्रत्यवैक्षतवीर्यवान् २ प्रत्यपद्यतरत्नानिविविधानिवसूनि
च ॥ यथार्हंपुंडरीकाक्षोनैर्ऋतान्प्रत्यवारयत् ३ तत्रविघ्नंचरंतिस्मदैतेयाःसहदानवैः ॥ तान्जघानमहाबाहुर्वरदत्तान्महासुरान् ४ विघ्नंचास्याकरोत्तत्रन
रकोनामदानवः ॥ त्रासनःसर्वदेवानांदेवराजरिपुर्महान् ५ सभौमोमूर्तिलिंगस्थःसर्वदेवाधिबाधिता ॥ देवतानामृषीणांचप्रतीपमकरोत्तदा ६ त्वष्टुर्दुहितरंभौ
मःकशेरुमगमत्तदा ॥ गजरूपेणजग्राहरुचिरांगींचतुर्दशीम् ७ प्रमथ्यतांवरारोहांनरकोवाक्यमब्रवीत् ॥ नष्टशोकभयोमोहात्प्राग्ज्योतिषपतिस्तदा
८ यानिदेवमनुष्येषुरत्नानिविविधानिच ॥ बिभर्तिचमहीकृत्स्नासागरेषुचयद्वसु ९ अद्यप्रभृतितानीहसहिताःसर्वनैर्ऋताः ॥ ममैवोपाहरिष्यंतिदैत्या
श्चसहदानवैः १० एवमुत्तमरत्नानिवस्त्राणिविविधानिच ॥ सजहारतदाभौमस्तत्रनाधिचकारसः ११ गंधर्वाणांचयाःकन्याजहारनरकोबली ॥ याश्च
देवमनुष्याणांसप्तचाप्सरसांगणाः १२ चतुर्दशसहस्राणिएकविंशच्छतानिच ॥ एकवेणीधराःसर्वाःसतीमार्गमनुव्रताः १३ । वैशंपायनउवाच ॥ तासां
पुरवरंभौमोकारयन्मणिपर्वतम् ॥ अलकायामदीनात्मामुरोःस्वविषयंप्रति १४ ताश्चप्राग्ज्योतिषपतिंमुरोश्चैवदशात्मजाः ॥ नैर्ऋताश्चयथामुख्याःपा
लयंतउपासते ॥ सएषतमसःपारेवरदत्तोमहासुरः १५ नचासुरगणैःसर्वैःसहितैःकर्मतत्पुरा ॥ कृतपूर्वंतदाघोरंयदकार्षीन्महासुरः १६ अदितिंधर्षयामा
सकुंडलार्थेमहासुरः ॥ यंमहीसुषुवेदेवीयस्यप्राग्ज्योतिषंपुरम् १७ द्वारपालाश्चचत्वारस्तस्यासन्युद्धदुर्मदाः ॥ हयग्रीवोनिसुंदश्चवीरःपंचनदस्तथा १८

प्राक्ज्योतिषपुरस्थोवा बाधितावाधकः ॥ ६ ॥ कशेरुंस्थानविशेषंअगमत् चतुर्दशींसर्वदाचतुर्थ्यादशयायुक्तांसाचगर्भकौमारपौगंडसंधियौवनमितिदशभ्यउर्ध्वंपंचदशभ्योर्वाक्च
तुर्दशवार्षिकीमित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ तच्चरत्नजातंआहृतमपिनाधिचकारनबुभुजे ॥ ११ ॥ १२ ॥ एकविंशच्छतानिशताधिकेद्वेचतुर्दश वेतिषोडशसहस्राणिश
तंच एकवेणीधराःकुमारिकाः ॥ १३ ॥ मुरोर्दैत्यस्य ॥ १४ ॥ ताःप्राग्ज्योतिषपतिंचेत्यन्वयःसएषनरकःतमसःनीलवर्णस्यसमुद्रस्यपारेतीरे ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ वासवक्षयात्इंद्रालयात् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

मुरुःपुत्रसहस्रैश्चवरदत्तोसुरोमहान् ॥ आदेवयानमावृत्यपंथानंसमुपस्थितः ॥ वित्रासनःसुकृतिनांविरूपैराक्षसैःसह १९ तद्वधार्थंमहाबाहुःशंखचक्र
गदासिभृत् ॥ जातोवृष्णिषुदेवक्यांवसुदेवाज्जनार्दनः २० तस्याथपुरुषेंद्रस्यलोकप्रथिततेजसः ॥ निवासोद्वारकादेवैरुपायादुपपादिता २१ अती
वहिपुरीरम्याद्वारकावासवक्षयात् ॥ महार्णवपरिक्षिप्तापंचपर्वतशोभिता २२ तस्यांदेवपुराभायांसभाकांचनतोरणा ॥ सादाशार्हीतिविख्यातायोज
नायामविस्तृता २३ तत्रवृष्ण्यंधकाःसर्वेरामकृष्णपुरोगमाः ॥ लोकयात्रामिमांकृत्स्नांपरिरक्षंतआसते २४ तत्रासीनेषुसर्वेषुकदाचिद्भरतर्षभ ॥ दि
व्यगंधोववौवायुःपुष्पवर्षंपपातह २५ ततःकिलकिलाशब्दःप्रभाजालाभिसंवृतः ॥ मुहूर्तमंतरिक्षेऽभूत्ततोभूमौप्रतिष्ठितः २६ मध्येतुतेजसस्तस्य
पांडुरंगजमास्थितः ॥ वृतोदेवगणैःसर्वैर्वासवःसमदृश्यत २७ रामकृष्णौचराजासवृष्ण्यंधकगणैःसह ॥ प्रत्युद्ययुर्महात्मानंपूजयंतःसुरेश्वरम् २८
सोवतीर्यगजात्तूर्णंपरिष्वज्यजनार्दनम् ॥ सस्वजेबलदेवंचतंचराजानमाहुकम् २९ वृष्णीनन्यान्सस्वजेचयथाकालंयथावयः ॥ पूजितोरामकृष्णाभ्या
माविवेशसतांसभाम् ३० तत्रासीनोभ्यलंकृत्वासभांताममरेश्वरः ॥ अर्घादिसमुदाचारंप्रत्यगृह्णद्यथाविधि ३१ ॥ वैशंपायनउवाच ॥ ॥ अथोवाच
महातेजावासवोवासवानुजम् ॥ सांत्वपूर्वंकरेणास्यसंस्पृश्यवदनंशुभम् ३२ देवकीनंदनवचःशृणुमेमधुसूदन ॥ येनत्वाभिगतोस्म्यद्यकार्येणामित्र
कर्शन ३३ नैर्ऋतोनरकोनामब्रह्मणोवरदर्पितः ॥ अदित्याःकुंडलेमोहाज्जहारदितिनंदनः ३४ देवानांविप्रियेनित्यमृषीणांचसवर्त्तते ॥ तंचदेवांतरं
प्रेक्ष्यजहित्वंपापपूरुषम् ३५ अयंत्वांगरुडस्तत्रप्रापयिष्यतिकामगः ॥ कामवीर्योतितेजस्वीवैनतेयोंतरिक्षगः ३६ अवध्यःसर्वभूतानांभौमःसनर
कोसुरः ॥ निषूदयित्वातंपापंक्षिप्रमागंतुमर्हसि ३७ इत्युक्तःपुंडरीकाक्षोदेवराजेनकेशवः ॥ प्रतिजज्ञेमहाबाहुर्नरकस्यनिबर्हणे ३८ ततःसहैव
शक्रेणशंखचक्रगदासिभृत् ॥ प्रतस्थेगरुडेनाथसत्यभामासहायवान् ३९ क्रमेणसप्तस्कंधान्समरुतांसहवासवः ॥ पश्यतांयदुसिंहानामूर्ध्वमाचक्र
मेबली ४० वारणेंद्रगतःशक्रोगरुडस्थोजनार्दनः ॥ विदूरत्वात्प्रकाशेतेसूर्याचंद्रमसाविव ४१ अंतरिक्षेचगंधर्वैरप्सरोभिश्चकेशवः ॥ स्तूयमानो
थशक्रश्चक्रमेणांतरधीयत ४२ समाधायेतिकर्तव्यंवासवोविबुधाधिपः ॥ स्वमेवभवनंप्रायात्कृष्णःप्राग्ज्योतिषंप्रति ४३

॥ ३६ ॥ ३७ ॥ ३८ ॥ सत्यभामासहायवान्इतिअस्याःसत्यभामायाःपृथिव्यंशत्वात्पृथिव्याज्ञयैवतस्यमृत्युर्विहितोस्तीतिसत्यभामाज्ञयैवतंहनिष्यामीत्याशयः ॥ ३९ ॥
सप्तस्कंधान्आवहप्रवहादीन्वायुमार्गान् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ मौरवान्मुरुविहितान्क्षुरांतवदतिसूक्ष्मान्दृढतरावयवसंयोगंपाषाणादिकमपिप्रविश्यछेत्तुमर्हांनित्यर्थः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

पक्षानिलहतोवायुःप्रतिलोमंववौतदा ॥ ततोभीमरवामेघाबभ्रमुर्गगनेचराः ४४ क्षणेनसमनुप्राप्तोद्विजेनाकाशगेनवै ॥ दूरादेवचतान्दृष्ट्वाप्रययौ
यत्रतेस्थिताः ४५ अपश्यद्द्वारितत्रस्थांहस्त्यश्वरथवाहिनीम् ॥ क्षुरांतान्मौरवान्पाशान्षट्सहस्रान्ददर्शह ४६ ॥ वैशंपायनउवाच ॥ गरुडस्योपरिश्री
मान्शंखचक्रगदाधरः ॥ बिभ्रन्नीलांबुदाकारंपीतवासाश्चतुर्भुजः ४७ वनमालाकुलोरस्कःश्रीवत्सांकितभूषणः ॥ किरीटमूर्द्धासूर्याभःसविद्युदिवचंद्रमाः
४८ ज्यांविकूजन्महाशब्दःश्रूयतेशनिनिःस्वनः ॥ ज्ञात्वाचदानवःसर्वंस्वयंविष्णुरिहागतः ४९ क्रोधाद्विगुणरक्ताक्षोमुरुःकालांतकोपमः ॥ अभ्यधाव
तवेगेनशक्तिंगृह्यमहासुरः ५० चिक्षेपसुमहाशक्तिंवज्रकांचनभूषिताम् ॥ तामापतंतींशक्तिंतुमहोल्कांज्वलितामिव ५१ समाधत्तशरंचैकंरुक्मपुंखं
जनार्दनः ॥ द्विधाच्छिनत्क्षुरप्रेणवासुदेवःसवीर्यवान् ५२ शक्तिंचिच्छेदतत्रासौविद्युत्पुंजइवज्वलन् ॥ पुनश्चक्रोधरक्ताक्षोमुरुर्गृह्यमहागदाम् ५३
इंद्राशनिरिवेंद्रेणविकृष्टइवनिःस्वनः ॥ आकर्णमुक्तंचिक्षेपअर्धचंद्रंसुरोत्तमः ५४ मध्यदेशेतुचिच्छेदगदांतांरुक्मभूषिताम् ॥ पुनश्चिच्छेदभल्लेनदानवस्याशि
रोरणे ५५ संछिद्यपाशान्सर्वांस्तान्मुरुंहत्वासबांधवम् ॥ सोग्र्यात्रक्षोगणान्हत्वानरकस्यमहाबलान् ५६ शिलासंधानतिक्रम्यभगवान्देवकीसुतः ॥
अपश्यद्दानवंसैन्यंनिसुंदंचमहाबलम् ५७ हयग्रीवंचदितिजंतथान्यांश्चित्रयोधिनः ॥ रोधयामासतन्मार्गंस्वसैन्येनमहाबलः ५८ निसुंदोबलिनांश्रे
ष्ठोरथमारुह्यसत्वरम् ॥ जग्राहकार्मुकंदिव्यंहेमपृष्ठंदुरासदम् ५९ विव्याधदशभिर्बाणैर्निसुंदोमधुसूदनम् ॥ केशवश्चापिसप्तत्याविव्याधनिशितैःशरैः ॥
६० अप्राप्तांश्चांतरिक्षेतान्शरांश्चिच्छेदमाधवः ॥ तेसर्वेसैनिकाःकृष्णंसमंतात्पर्यवारयन् ६१ शरजालेनमहताछाद्यमानःसुरोत्तमः ॥ दृष्ट्वातान्दा
नवान्सर्वान्सक्रोधोमधुसूदनः ६२ ततोदिव्येनचास्त्रेणपार्जन्येनजनार्दनः ॥ महताशरवर्षेणवारयामासतद्बलम् ६३ पंचपंचशरैस्तेषुएकैकेनचतान्बहू
न् ॥ पार्जन्यस्यप्रभावेणसर्वान्मर्मस्वताडयत् ६४ दुद्रुवुर्भयसंत्रस्ताभग्नास्तेदानवारणे ॥ स्वसैन्यंविद्रुतंदृष्ट्वानिश्चक्रामपुनर्मृधे ६५ विसृजञ्छरवर्षाणि
छादयामासकेशवम् ॥ नविभातिरणेसूर्योनापिव्योमदिशोदश ६६ शरैःसंछादयामासनिसुंदोगरुडध्वजम् ॥ सावित्रंनामदिव्यास्त्रंजग्राहपुरुषोत्तमः ६७
तेनबाणेनतान्बाणांश्चिच्छेदसमरेहरिः ॥ बाणैर्बाणांश्चसंछिद्यतस्यकृष्णोमहाबलः ६८ छत्रमेकेनबाणेनरथेषांचत्रिभिःशरैः ॥ पुनश्चिच्छेदतानश्वांश्च
तुर्भिश्चतुरःशरैः ६९ सारथिंपंचभिर्बाणैर्ध्वजमेकेनचिच्छिदे ॥ शरैकेनवपुःकृष्णःसुतीक्ष्णेनशितेनवै ७०

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

८९ शिरश्चिच्छेभल्लेननिसुंदस्यसुरोत्तमः ॥ यःसहस्रसमास्त्वेकःसर्वान्देवानयोधयत् ७१ निसुंदंपतितंदृष्ट्वाहयग्रीवःप्रतापवान् ॥ शिलांप्रगृह्यमहतींतो अ०६३
लयामासदानवः ७२ आविध्यसहसामुंचच्छिलांशैलसमांप्रभुः ॥ गृहीत्वादिव्यपार्जन्यमस्त्रमस्त्रविदांवरः ७३ दिव्यास्त्रेणशिलांविष्णुःसप्तधाकृत
तेजसा ॥ तद्विदार्यमहच्चाश्मपातयामासभूतले ७४ ततस्तैःशार्ङ्गनिर्मुक्तैर्नानावर्णैर्महाशरैः ॥ यथादेवासुरंयुद्धमभवद्भरतर्षभ ॥ नानाप्रहरणाकीर्णंतथा
घोरमवर्तत ७५ ततःशार्ङ्गविनिर्मुक्तैर्नानावर्णैर्महाशरैः ॥ गरुडस्थोमहाबाहुर्निजघानमहासुरान् ७६ महालांगलनिर्भिन्नाःशंखशक्तिनिपातिताः ॥ वि
नेशुर्दानवाःसर्वेसमासाद्यजनार्दनम् ७७ केचिच्चक्राग्निनिर्दग्धादानवाःपेतुरंबरात् ॥ संनिकर्षगताःकेचिद्गतासुविकृताननाः ७८ असृजञ्छरवर्षाणिवृष्टि
मंतइवांबुदाः ॥ विकृतांगासुराःसर्वेकृष्णबाणप्रपीडिताः ७९ शोणिताक्ताःस्मदृश्यंतेपुष्पिताइवकिंशुकाः ॥ व्यद्रवंतसुवित्रस्ताभग्नाश्चाश्चित्रयोधिनः ॥
८० पुनश्चक्रोधरक्ताक्षोवायुवेगेनदानवः ॥ दृश्यामोच्छ्रितंवृक्षंसमारुह्यवनस्पतिम् ८१ वृक्षमुत्पाट्यवेगेनप्रतिगृह्याभ्यधावत ॥ चिक्षेपसुमहावृक्षंशिक्ष
यासुवनाकृतिः ८२ वृक्षवेगानिलोद्भूतःशुश्रुवेसुमहास्वनः ॥ ततःशरसहस्रेणयतमानोजनार्दनः ८३ नैकधातंप्रचिच्छेदचित्रभक्तिनिभाकृतिम् ॥ पुनश्चै
केनबाणेनहयग्रीवस्यचोरसि ८४ विव्याधस्तनयोर्मध्येसायकोज्वलनप्रभः ॥ विवेशसोतिवेगेनहृदयंभित्त्वाविनिर्गतः ८५ तंजघानमहाघोरंहयग्रीवंमहाबल
म् ॥ अपारतेजादुर्द्धर्षःसर्वयादवनंदनः ८६ मध्येलोहितगंगस्यभगवान्देवकीसुतः ॥ औदकायांविरूपाक्षंपाप्मानंपुरुषोत्तमः ८७ अष्टौशतसहस्राणि
दानवानांपरंतप ॥ निहत्यपुरुषव्याघ्रःप्राग्ज्योतिषमुपाद्रवत् ८८ हत्वापंचनदंनामनरकस्यमहासुरम् ॥ ततःप्राग्ज्योतिषंनामदीप्यमानमिवश्रिया
८९ पुरमासादयामासयुद्धंतत्राभवन्महत् ॥ ततःप्रध्मापयच्छंखंपांचजन्यंमहाबलः ९० शुश्रुवेसुमहाशब्दःसंवर्तनिनदोयथा ॥ श्रूयतेत्रिषुलोकेषुभीमगं
भीरनिःस्वनः ॥ तंश्रुत्वानरकश्चासीत्क्रोधसंरक्तलोचनः ९१ लोहचक्राष्टसंयुक्तंत्रिनल्वप्रातिमंरथम् ॥ रत्नकांचनचित्राढ्यंवेदिकाभोगविस्तरम् ९२ ॥
वज्रध्वजेनमहताकांचनेनविराजितम् ॥ हेमदंडपताकाढ्यंवैदूर्यमणिकूबरम् ९३ युक्तमश्वसहस्रेणरथंपररथारुजम् ॥ लोहजालैश्चसंछन्नंचित्रभक्तिविरा
जितम् ९४ रथमध्यगतोवीरस्ससंध्यइवभास्करः ॥ नानाप्रहरणाकीर्णंरथंहेमपरिष्कृतम् ९५ ८९

॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ लोहितगंगस्यसिंधोःप्रदेशविशेषस्यमध्ये औदकायांउदकपरिखायांपुर्याम् ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥
॥ ९३ ॥ ९४ ॥ रथंआरुरोहेतिशेषः ॥ ९५ ॥

॥ ९६ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ ३ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ मधुःकैटभभ्रातातद्वत् ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

वज्रंरथोरश्छदामिंदुवर्णव्यानद्धमुक्तानलतुल्यतेजाः ॥ किरीटमूर्द्धार्कहुताशनाभःकर्णौतथाकुंडलयोर्ज्वलंतौ ९६ धूम्रवर्णामहाकायारक्ताक्षाविकृतान
नाः ॥ नानाकवचिनःसर्वेदैत्यदानवराक्षसाः ९७ खड्गचर्मधराःकेचित्केचित्तूर्णधनुर्भृतः ॥ शक्तिहस्तास्तथाकेचिच्छूलहस्तास्तथापरे ९८ गजवाजिरथौ
घैश्चकालयंतश्चमेदिनीम् ॥ निर्ययुर्नगरात्सर्वेसुसन्नद्धाप्रहारिणः ९९ वृतोदैत्यगणैःसार्द्धंनरकःकालसंनिभः ॥ भेरीशंखमृदंगानांपणवानांसहस्रशः १००
वाद्यमानानिशुश्रावजीमूतनिनदोपमः ॥ यतःकृष्णस्ततोगत्वासर्वेतेविकृताननाः १ परिवार्यगरुत्मंतंमवैयुध्यंतसंगताः ॥ महताछादयामासुःशरवर्षेण
सैनिकाः २ शक्तिशूलगदाप्रासांस्तोमरान्सायकान्बहून् ॥ आकाशंछादयामासुर्विमुंचंतःसहस्रशः ३ कृष्णःकृष्णांबुदाकारःशार्ङ्गंगृह्यधनुस्ततः॥ वि
स्फार्यसुमहच्चापंधनुर्जलदनिस्वनम् ४ व्यसृजच्छरवर्षाणिदानवानांजनार्दनः ॥ शरवर्षेणतत्सैन्यंव्यद्रवत्तुमहाहवात् ५ तद्युद्धमभवद्घोरंघोररूपेणरक्ष
सा ॥ भग्नव्यूहाश्चतेसर्वेकृष्णबाणप्रपीडिताः ६ केचिच्छिन्नभुजाश्चैवछिन्नग्रीवाशिराननाः ॥ केचिच्चक्रद्विधाच्छिन्नाःकेचिद्बाणार्दितोरसः ७ केचिद्द्वि
धाकृताःशक्त्यागजाश्वरथवाहनाः ॥ केचित्कौमोदकीभिन्नाःकेचिच्चक्रविदारिताः ८ एवंविमथितासर्वानराश्वरथवाहिनी ॥ तत्रासीन्नरकेणास्ययुद्धंपरम
दारुणम् ९ यत्समासेनवक्ष्यामितन्मेनिगदतःशृणु ॥ त्रासनःसुरसंघानांनरकःपुरुषोत्तमम् १० योधयामासतेजस्वीमधुघ्नंमधुसूदनम् ॥ क्रोधरक्तांत
नयनोनरकोघनसंनिभः ११ जग्राहकार्मुकंवीरःशक्रचापमिवोच्छ्रितम् ॥ तथार्ककिरणप्रख्यंबाणंजग्राहकेशवः १२ दिव्येनास्त्रेणसमरेपूरयामासतंरथम्
उत्तमास्त्रंमहापातंमुमोचनरकोबली १३ वज्रविस्फूर्जिताकारमायांतंवीक्ष्यकेशवः ॥ चिच्छेदास्त्रंमहाभागश्चक्रेणमधुसूदनः १४ व्यहनत्सरथंचास्यशरै
केणजनार्दनः ॥ सरथंसध्वजंसाश्वंजघानदशभिःशरैः १५ तनुत्रंचैवचिच्छेदशरेणमधुसूदनः ॥ ततोविमुक्तकवचःसर्पस्येवतनुर्यथा १६ हताश्वोपिरणेवी
रोवितनुत्रश्चदानवः ॥ जग्राहविमलज्वालंलोहभारार्पितंदृढम् १७ आविध्यसहसामुक्तंशूलमिंद्राशनिप्रभम् ॥ तदापतत्समंप्रेक्ष्यशूलंहेमपरिष्कृतम्
१८ द्विधाछिन्नंक्षुरप्रेणकृष्णेनाद्भुतकर्मणा ॥ तद्युद्धमभवद्घोरंघोररूपेणरक्षसा १९ शस्त्रपातमहाघातंनरकेणमहात्मना ॥ मुहूर्तंयोधयामासनरकंमधुसूदनः
२० अथोग्रचक्रश्चक्रेणप्रदीप्तेनाकरोद्द्विधा ॥ चक्रद्विधाकृतंतस्यशरीरमपतद्भुवि २१

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

१ शार्ङ्गधन्वा हतस्तत इति पा० ।

॥ २२ ॥२३ भूमिः रूपिणीभूत्वा ॥२४॥२५ ॥हेदेवतस्यनरकस्य ते प्रसिद्धे ॥२६॥ इतिहरिवंशेविष्णुपर्वणिटीकायांत्रिषष्टितमोऽध्यायः ॥६३॥ चतुःषष्टितमेध्यायेह्यमुष्मिन्नं



विभक्तंकुलिशेनैवागिरेःशृंगंद्विधाकृतम् ॥ कृष्णमासाद्यदेवेशंजगामास्तमिवांशुमान् २२ चक्रोत्कंतितगात्रोसौदानवःपतितोरणे ॥ वज्रप्रहारनिर्भिन्नंय
थागैरिकपर्वतम् २३ भूमिरतुपतितंपुत्रंनिरीक्ष्यादायकुंडले ॥ उपातिष्ठतगोविंदंवचनंचेदमब्रवीत् २४ दत्तस्त्वयैवगोविंदत्वयैवविनिपातितः ॥ यथे
च्छासितथाक्रीडबालःक्रीडनकैरिव २५ इमेतेकुंडलेदेवप्रजास्तस्यानुपालय ॥ २६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिनरकवधेत्रि
षष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ निहत्यनरकंभौमंवासवोपमविक्रमम् ॥ वासवावरजोविष्णुर्ददर्श
नरकालयम् १ अथार्थगृहमासाद्यनरकस्यजनार्दनः ॥ ददर्शधनमक्षय्यंरत्नानिविविधानिच २ मणिमुक्ताप्रवालानिवैदूर्यस्यचसंचयान् ॥ मासारगल्व
कूटानितथावज्रस्यसंचयान् ३ जांबूनदमयान्यस्यशातकुंभमयानिच ॥ प्रदीप्तज्वलनाभानिशीतरश्मिनिभानिच ४ शयनानिमहार्हाणितथासिंहास
नानिच ॥ हिरण्यदंडरुचिरंशीतरश्मिसमप्रभम् ५ ददर्शतन्महच्छत्रंवर्षमाणमिवांबुदम् ॥ जातरूपस्यशुभ्रस्यधाराःशतसहस्रशः ६ वरुणादाहृतंपूर्वं
नरकेणेतिनःश्रुतम् ॥ यावद्रत्नंगृहेदृष्टंनरकस्यधनंबहु ७ नैवराज्ञःकुबेरस्यनशक्रस्ययमस्यच ॥ रत्नसंनिचयस्तादृग्दृष्टपूर्वोनचश्रुतः ८ हतेभौमेनिसुं
देचहयग्रीवेचदानवे ॥ उपानिन्युस्ततस्तानिरत्नान्यंतःपुराणिच ९ दानवाहतशिष्टायेकोशसंचयरक्षिणः ॥ केशवायमहार्हाणियान्यर्हतिजनार्दनः १०
दैत्याऊचुः ॥ इमानिमणिरत्नानिविविधानिबहूनिच ॥ भीमरूपाश्चमातंगाःप्रवालविकृतांकुशाः ११ हेमसूत्रामहाकक्षाश्चापतोमरशालिनः ॥ रुचिरा
भिःपताकाभिःशबलारुचिरांकुशाः १२ तेचविंशतिसाहस्राद्विस्तावत्यःकरेणवः॥अष्टादशसहस्राणिदेशजाश्चोत्तमाहयाः १३ गोषुचापिभवेत्कामोयावत्तव
जनार्दन ॥ तावतीःप्रापयिष्यामोवृष्ण्यंधकनिवेशनम् १४ आविकानिचसूक्ष्माणिशयनान्यासनानिच ॥ कामव्याहारिणश्चैवपक्षिणःप्रियदर्शनाः ॥
१५ चंदनागरुकाष्ठानितथाकालीयकान्यपि ॥ वसुयत्त्रिषुलोकेषुधर्मेणाधिगतंतव १६ प्रापयिष्यामतस्सर्वंवृष्ण्यंधकनिवेशनम् ॥ देवगंधर्वरत्नानिपन्न
गानांचयद्वसु ॥ तानिसर्वाणिसंतीहनरकस्यनिवेशने १७ वैशंपायनउवाच ॥ तत्रसर्वंहृषीकेशःपरिगृह्यपरीक्ष्यच ॥ सर्वमाहारयामासदानवैर्द्वारकांपु
रीम् १८ ततस्तद्वारुणंछत्रंस्वयमुत्क्षिप्यमाधवः ॥ हिरण्यवर्षंवर्षंतमारुरोहविहंगमम् १९

दनस्थितं ॥ पारिजातंसमुद्धृत्यद्वारकामनयद्धरिः ॥ १ ॥ निहत्येति ॥ १ ॥ २ ॥ मासारंमरकतं गल्वश्चंद्रकांतः वज्रंहीरः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अंतःपुरा
णिकन्यारत्नानि ॥ ९ ॥ १० ॥ ११ ॥ शबलानानावर्णाः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ कालीयकानिकालागरुकाष्ठानि ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

माणपर्वतंकन्यावरोधपुरम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ महाबाहुंकृष्णम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

गरुडंपतगश्रेष्ठंमूर्तिमंतमिवांबुदम् ॥ ततोऽभ्ययाद्गिरिश्रेष्ठमभितोमणिपर्वतम् २० तत्रपुण्यावववुर्वाताह्यभवंश्चामलाःप्रभाः ॥ मणीनांहेमवर्णानामाभि
भूयदिवाकरम् २१ तत्रवैदूर्यरत्नानिददर्शमधुसूदनः ॥ सतोरणपताकानिद्वाराणिशिखराणिच २२ विद्युद्ग्रथितमेघाभःप्रबभौमणिपर्वतः ॥ हेमचित्रवि
तानैश्चप्रासादैरुपशोभितः २३ तत्रतावरहेमाभाददर्शमधुसूदनः ॥ गंधर्वसुरमुख्यानांप्रियादुहितरस्तथा २४ ददर्शपृथुलश्रोणीःसंरुद्धागिरिकंदरे ॥
नरकेणसमानीतारक्ष्यमाणाःसमंततः २५ त्रिविष्टपसमेदेशेतिष्ठंतीरपराजिताः ॥ निर्विशंत्योयथादेव्यःसुखिन्यःकामवर्जिताः २६ परिवव्रुर्महाबाहुमेकवे
णीधराःस्त्रियः ॥ सर्वाःकाषायवासिन्यःसर्वाश्चनियतेंद्रियाः २७ व्रतोपवासतन्वंग्यःकांक्षंत्यःकृष्णदर्शनम् ॥ समेत्ययदुसिंहस्यसर्वाश्चक्रुःस्त्रियोंजलीन् ॥
२८ नरकंनिहतंज्ञात्वामुरंचैवमहासुरम् ॥ हयग्रीवंनिसुंदंचताःकृष्णंपर्यवारयन् २९ येचासांरक्षिणोवृद्धादानवायदुनंदनम् ॥ कृतांजलिपुटाःसर्वेप्रणिपेतुर्व
योधिकाः ३० तासांपरमनारीणामृषभाक्षंनिरीक्ष्यतम् ॥ सर्वासामेवसंकल्पःपतित्वेनाभवत्ततः ३१ तस्यचंद्रोपमंवक्त्रंनिरीक्ष्यमुदितेंद्रियाः ॥ संप्रहृष्टा
महाबाहुमिदंवचनमब्रुवन् ३२ सत्यंचयत्पुरावायुरिहास्मान्वाक्यमब्रवीत् ॥ सर्वभूतमतिज्ञश्चदेवर्षिरपिनारदः ३३ विष्णुर्नारायणोदेवःशंखचक्रगदासिभृ
त् ॥ सभौमंनरकंहत्वाभर्ताचभवितासवः ३४ सुप्रियंबतपश्यामश्चिरश्रुतमरिंदमम् ॥ दर्शनेनकृतार्थाहिवयमद्यमहात्मनः ३५ ततस्ताःसांत्वयामासप्र
मदावासवानुजः ॥ सर्वाःकमलपत्राक्षीर्दृष्ट्वाचोवाचमाधवः ३६ यथार्हतःपूजयित्वासमाभाष्यचकेशवः ॥ यानैःकिंकरसंयुक्तैरुवाहमधुसूदनः ३७ किं
कराणांसहस्राणिरक्षसांवातरंहसाम् ॥ शिबिकांवहतांतत्रनिर्घोषःसुमहानभूत् ३८ तस्यपर्वतराजस्यशृंगंयत्परमार्चितम् ॥ विमलार्केंदुसंकाशंमणिकां
चनतोरणम् ३९ सपक्षिगणमातंगंसमृगव्यालपादपम् ॥ शाखामृगगणाकीर्णंसुप्रस्तरशिलातलम् ४० न्यंकुभिश्चवराहैश्चरुरुभिश्चनिषेवितम् ॥ सप्रपा
तंमहासानुंविचित्रशिखरद्रुमम् ४१ अत्यद्भुतमचिंत्यंचमृगवृंदविलोडितम् ॥ जीवंजीवकसंघैश्चबर्हिभिश्चनिनादितम् ४२ तदप्यतिबलोविष्णुर्दोर्भ्यामु
त्पाट्यभासुरम् ॥ आरोपयामासबलीगरुडेपक्षिणांवरे ४३ मणिपर्वतशृंगंचसभार्यंचजनार्दनम् ॥ उवाहलीलयापक्षीगरुडःपततांवरः ४४ सपक्षबल
विक्षेपैर्हिमाद्रिशिखरोपमम् ॥ दिक्षुसर्वासुसंह्लादंजनयामासपक्षिराट् ४५ आरुजन्पर्वताग्राणिपादपांश्चसमुत्क्षिपन् ॥ संजहारमहाभ्राणिविजहारचका
निचित् ४६

॥ ३५ ॥ ३६ ॥ उवाहद्वारकांप्रापयामास ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ जीवंजीवकश्चकोरः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ४६ ॥

विषयंसमतिक्रम्यदेवयोश्चंद्रसूर्ययोः ॥ ययौवातजवःपक्षीजनार्दनवशेस्थितः ४७ समेरुगिरिमासाद्यदेवगंधर्वसेवितम् ॥ देवसद्मानिसर्वाणिददर्शमधुसू
९१ दनः ४८ विश्वेषांमरुतांचैवसाध्यानांचनराधिप ॥ भ्राजमानान्यतिक्रामन्नश्विनोश्चपरंतप ४९ प्राप्यपुण्यतमाँल्लोकान्देवलोकमरिंदम ॥ शक्रसद्मसमा अ० ६४
साद्यप्रविवेशजनार्दनः ५० अवतीर्यसताक्ष्यात्तुददर्शविबुधाधिपम् ॥ प्रीतश्चैवाभ्यनंदत्तंदेवराजःशतक्रतुः ५१ प्रादायकुंडलेदिव्येववंदेतंतदाच्युतः ॥
सभार्योविबुधश्रेष्ठंनरश्रेष्ठोजनार्दनः ५२ अर्चितोदेवराजेनरत्नैश्चप्रतिपूजितः ॥ सत्यभामाचपौलोम्यायथावदभिनंदिता ५३ वासवोवासुदेवश्चजग्मतुः
सहितौतदा ॥ अदित्याभवनंदिव्यंदेवमातुर्महर्द्धिमत् ५४ तत्रादितिमुपासंतीमप्सरोभिःसमंततः ॥ ददर्शातेमहात्मानौमहाभागांतपोन्विताम्
५५ ततस्तेकुंडलेदिव्येप्रादाददितिनंदनः ॥ ववंदेतांशचीभर्तामातरंस्वांपुरंदरः ५६ जनार्दनंपुरस्कृत्यकर्मचैवशशंसतत् ॥ अदितिस्तौसुतौप्रीत्यापरि
ष्वज्याभिनंद्यच ५७ आशीर्भिरनुकूलाभिरभ्यवदत्तदा ॥ पौलोमीसत्यभामाचप्रीत्यापरमयायुते ५८ अगृह्णीतांवरार्हायादेव्यास्तेचरणौशुभौ ॥
तेचाप्यभ्यवदत्प्रेम्णादेवमातायशस्विनी ५९ यथावदब्रवीच्चैवजनार्दनमिदंवचः ॥ अधृष्यःसर्वभूतानामवध्यश्चभविष्यसि ६० यथैवदेवराजोयमजि
तोलोकपूजितः ॥ भवत्वियंवरारोहानित्यंचप्रियदर्शना ६१ सर्वलोकेषुविख्यातादिव्यगंधामनोरमा ॥ सत्यभामोत्तमास्त्रीणांसुभगास्थिरयौवना ६२
जरांनयास्यतिवधूर्यावत्त्वंकृष्णमानुषः ॥ एवमभ्यर्चितःकृष्णोदेवमात्रामहाबलः ६३ देवराजाभ्यनुज्ञातोरत्नैश्चप्रतिपूजितः ॥ वैनतेयंसमारुह्यसहितः
सत्यभामया ६४ देवाक्रीडंपरिक्रामन्पूज्यमानंसुरर्षिभिः ॥ सददर्शमहाबाहुराक्रीडेवासवस्यह ६५ दिव्यमभ्यर्चितंदेवैःपारिजातंमहाद्रुमम् ॥ नित्यपु
ष्पधरंदिव्यंपुण्यगंधमनुत्तमम् ६६ यमासाद्यजनःसर्वोजातिंस्मरतिपौर्विकीम् ॥ संरक्ष्यमाणंदेवैस्तंप्रसह्यामितविक्रमः ६७ उत्पाट्यारोपयामासविष्णुस्तं
गरुडोपरि ॥ सोपश्यत्सत्यभामाचदिव्यमप्सरसांगणम् ६८ पृष्ठतःसत्यभामाचदिव्यायोषाचवीक्षिताम् ॥ प्रायात्तेताद्वारवतींवायुजुष्टेनवैपथा ६९
श्रुत्वातंदेवराजस्तुकर्मकृष्णस्यतत्तदा ॥ अनुमेनेमहाबाहुःकृतकर्मेतिचाब्रवीत् ७० सपूज्यमानस्त्रिदशैःसप्तर्षिगणसंस्तुतः ॥ प्रतस्थेद्वारकांकृष्णोदेव
लोकादरिंदम ७१ सोभिपत्यमहाबाहुर्दीर्घमध्वानमल्पवत् ॥ पूजितोदेवराजेनददृशेयादवींपुरीम् ७२ तथाकर्ममहत्कृत्वाभगवान्वासवानुजः ॥ उपा ९१
याद्द्वारकांकृष्णःश्रीमान्गरुडवाहनः ७३

॥ ६५ ६६ ॥ ६७ ॥ सः कृष्णः सत्यभामाचापश्यत् ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

इतिहरिवंशेविष्णुपर्वणिटीकायांचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ पंचषष्टितमेध्यायेद्युतरोःपुष्पमर्थिनी ॥ रुक्मिणीहरिणाश्रुत्वारुष्टासत्येतिवर्ण्यते ॥ १ ॥ प्रादुर्भावइति॥ १
षड्गुणं ऐश्वर्यस्यसमग्रस्यज्ञानस्ययशसः श्रियः वैराग्यस्यचधर्मस्यषण्णांभगइतीङ्गना इतिषड्विधैश्वर्ययुक्तं यद्वा षड्गुणंषडंगानिच सर्वज्ञतातृप्तिरनादिबोधःस्वतंत्रतानित्यमलु

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणंद्वारकाप्रवेशोनामचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ छ ॥ जनमेजयउवाच ॥ प्रादुर्भावेमु
निश्रेष्ठमाथुरेचरितंशुभम् ॥ शृण्वन्नैवाधिगच्छामितृप्तिंकृष्णस्यधीमतः १ द्वारकायांनिवसतःकृतदारस्यषड्गुणम् ॥ चरितंब्रूहिकृष्णस्यसर्वंहिविदितंतव
२ ॥ वैशंपायनउवाच ॥ जनमेजयकृष्णस्यकृतदारस्यभारत ॥ निबोधचरितंचित्रंतस्यैवसदृशंप्रभो ३ प्राप्तदारोमहातेजावासुदेवःप्रतापवान् ॥ रुक्मि
ण्यासहितोदेव्याययौरैवतकंनृप ४ उपवासावसानंहिरुक्मिण्याःप्रतिपूजयन् ॥ तर्पयिष्यन्स्वयंविप्रान्जगाममधुसूदनः ५ कुमाराःप्रययुस्तत्रपुत्रभ्रा
तरएवच ॥ प्रेषितावासुदेवेननारदस्याभ्यनुज्ञया ६ षोडशस्त्रीसहस्राणिजग्मुरेवचधीमतः ॥ ऋद्ध्यापरमयाराजन्विष्णोरेवानुरूपया ७ ततस्तत्रद्विजा
तीनांकामान्प्रादादधोक्षजः॥ अर्थिनांधर्मनित्यानांवंदिनामिष्टवादिनाम् ८ कल्याणनामगोत्राणांमहतांपुण्यकर्मणाम् ॥ यौनैःश्रौतैश्चमौखैश्चशुद्धानां
कुरुनंदन ९ तर्पयित्वाद्विजान्कामैरिष्टैरिष्टःसतांगतिः ॥ ज्ञातीन्संतर्पयामासयथार्हंभक्तवत्सलः १० उपवासावसानेथभगवान्सविशेषतः ॥ बहुमेनेप्रियां
भार्यांरुक्मिणींभीष्मकात्मजाम् ११ वसतस्तस्यकृष्णस्यसदारस्यामितौजसः ॥ सहासीनस्यरुक्मिण्यानारदोभ्याययौमुनिः १२ आगतंचाप्रमेयात्मा
मुनिमिंद्रानुजस्तदा ॥ शास्त्रदृष्टेनविधिनाअर्चयामासकेशवः १३ सोर्चितोवासुदेवेनमुनिरर्च्यतमःसताम् ॥ पारिजाततरोःपुष्पंददौकृष्णायभारत
१४ तद्वृक्षराजकुसुमंरुक्मिण्याःप्रददौहरिः ॥ पार्श्वस्थासाहिकृष्णस्यभोज्यानरवराभवत् १५ प्रतिगृह्यतुतत्पुष्पंकामारणिरनिंदिता ॥ शिरस्यमलप
त्राक्षीददौकृष्णेंगितानुगा १६ त्रैलोक्यरूपसर्वस्वंनारायणमनोहरा ॥ शुशुभेदेवपुष्पेणद्विगुणंभैष्मकीतदा १७ तांनारदस्तथोवाचमुनिर्ब्रह्मसुतस्त
दा ॥ तवैवौपयिकंपुष्पमेकंदेविपतिव्रते १८ अलंकृतंपुष्पमेतत्संसर्गात्तवसर्वथा ॥ अत्यर्हाचमतामेत्वमेतत्पुष्पाद्धृतव्रते १९ कल्याणगुणसंपन्नेसततं
भर्तृवत्सले ॥ अम्लानमेतत्सततंपुष्पंभवतिकामिनि २० संवत्सरपरंकालंकालज्ञेगुणसंमते ॥ ईप्सितानपिगंधांश्चददातिवदतांवरे २१ शीतोष्णेचे
प्सितेदेविपुष्पमेतत्प्रयच्छति ॥ स्रवत्यपिरसान्देविमनसाकांक्षितान्वरान् २२

प्तशक्तिः ॥ अनंतशक्तिश्चविभोर्विभुज्ञाःषडाहुरंगानिमहेश्वरस्येतिवायुपुराणोक्तानि ॥ २ ॥ ३ ॥ ४ ॥ अवसानंव्रतपारणाम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ यौनैःयोनिसंबंधैःश्रौ
तैःअध्ययनसंबंधैःमौखैःआर्त्विज्यसंबंधैः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ हेनरवर ॥ १५ ॥ १६ ॥ १७ ॥ औपयिकंयोग्यम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ भगाधानंऐश्वर्याधायकम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ सुवादित्रानितिपुंस्त्वमार्षम् ॥ ३० ॥ ३१ ॥ कृतिःस्वभावःसामर्थ्यमित्यर्थःसर्गकृ
ताब्रह्मणाकृतेतिशेषः ॥ ३२ ॥ ३३ महेंद्रस्यसुरताचअरणिश्चेतिसुरतारणीस्त्री चमाताचेत्यर्थः ॥ ३४ ॥ वसुदेवताःवसुमुख्याःतेषांकालोब्रह्ममानेनसंवत्सरःपर उत्कृष्टो



सेव्यमानंचसौभाग्यंददातिवरवर्णिनि ॥ स्रवत्यपितथागंधानीप्सितान्प्रीतिवर्द्धनान् २३ यानियानिचपुष्पाणित्वंदेव्यभिलषिष्यसि ॥ कुसुमंवृक्षराज
स्यतानितानिप्रदास्यति २४ एतदेवभगाधानंधर्मिष्ठेपुत्रदंतथा ॥ मतिंचनाशुभेधत्तेधार्यमाणंसदाशुभे २५ यद्यदिच्छसिवर्णंचतत्सर्वंधारयिष्यति ॥
स्वल्पंवायदिवास्थूलंछंदतस्तेभविष्यति २६ अनिष्टगंधहरणंतत्समंगंधवर्द्धनम् ॥ प्रदीपकर्मरात्रौचकरोतिकमलेक्षणे २७ संतानकस्रजोमालांपुष्पव
स्त्रादिवाच्युतम् ॥ पुष्पमंडपमुख्यानिचिंतितेनप्रदास्यति २८ बुभुक्षावापिपासावाग्लानिर्वाप्यथवाजरा ॥ देववद्धारयंत्यास्तेस्वच्छंदेनभविष्यति
२९ अनुगीतानिगीतानिदास्यत्यपिचचिंतिते ॥ सुवादित्रान्समधुरांस्तथैवतवसंमतान् ३० पूर्णेसंवत्सरेदेविपुष्पमेतत्तशांतिकात् ॥ निर्वर्त्स्यतेतरुवरं
समयेनप्रयास्यति ३१ कृतिरेषाहिभद्रंतेपारिजातस्यसुप्रभे ॥ निसर्गतःसर्गकृतासत्कारार्थेसुरद्विषाम् ३२ उमादेववरस्येष्टाहिमालयसुतासती ॥ धा
रयंतीश्वरीनित्यंपुष्पाण्येतानिसुप्रभे ३३ अदितिश्चसपौलोमीमहेंद्रसुरतारिणी ॥ सावित्रीदेवमाताचश्रीश्चसर्वगुणोचिता ३४ देवपत्न्यस्तथैवान्यादे
वाश्चवसुदेवताः ॥ संवत्सरपरःकालःसर्वेषांनतुसंशयः ३५ षोडशस्त्रीसहस्राणांमध्येत्वंखलुवर्तसे ॥ अद्येष्टावासुदेवस्यवेद्मित्वांभोजनंदिनि ३६
सपत्न्यस्तेगुणोपेतेसर्वाःसर्वेश्वरप्रिये ॥ अवमानावसेकेनत्वयासिक्ताद्यभामिनि ३७ प्रकाशमद्यसौभाग्यमनिवार्ययशश्वते ॥ मंदारकुसुमंदत्तंयत्तेमधु
निघातिना ३८ अद्यसात्राजितीदेवीज्ञास्यतेवरवर्णिनी ॥ सौभाग्याद्यंसदावेत्तियात्मानंसुभगंसती ३९ सांबमाताचगांधारीभार्याश्चान्यामहात्मनः ॥
सौभाग्यार्थोद्यताकांक्षामद्यमोक्ष्यंतिनिःस्पृहाः ४० सौभाग्यैकरथोजैत्रस्तवदेव्यद्यनिःसृतः ॥ मनोरथरथानांयःसहस्रैरपिदुर्जयः ४१ अद्याहमवगच्छा
मिसर्वथासर्वशोभने ॥ आत्माद्वितीयःकृष्णस्यभोजेत्वमितिभामिनि ४२ त्रैलोक्यरत्नसर्वस्वमददाद्यत्तवाच्युतः ॥ जीवितातिशयस्तेनत्वयाप्राप्तोहरि
प्रिये ४३ नारदेनैवमुक्तंतुतथ्यंवाक्यंनराधिप ॥ तत्रस्थाःशुश्रुवुःप्रेष्याःप्रेषिताःसत्यभामया ४४ देवीनांचतथान्यासांपत्नीनांचविशांपते १३ दृष्ट्वाताःसवि
शेषंचनारदेनाभ्युदाहृतम् ४५ तच्चश्रुत्वासुनिखिलंप्रेष्याभिःस्त्रीस्वभावतः ॥ प्रकाशीकृतमेवासीद्विष्णोरंतःपुरेतदा ४६

नततोधिकोप्यस्तीत्यर्थः ॥ ३५ ॥ भोजनंदिनिहेरुक्मिणि ॥ ३६ ॥ सिक्ताअद्येतिच्छेदःसंधिरार्षः ॥ ३७ ॥ ३८ ॥ ३९ ॥ सांबमाताजांबवती ॥ ४० ॥ निःसृतःप्रसृ
तः ॥ ४१ ॥ हेभोजेभोजकन्ये ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

कौलीनंकुलगुह्यं देव्यःकृष्णपत्न्यः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ सकुंकुमंकुंकुमरक्तंशुक्लतमंचतदेकंचशुक्लतमैकंअंशुकंवस्त्रंइदंरोषचिह्नम् ॥ ५१ ॥ क्रोधगृहंअसंस्कृतं
शून्यगृहम् ॥ ५२ ॥ पर्यंतदेशंललाटप्रांतदेशम् ॥ ५३ ॥ ५४ ॥ कुशेशयंमुखकमलं ॥ ५५ ॥ इतिश्रीमहा० खिलेषुहरिवंशेविष्णुपर्वणिटीकायांपंचषष्टितमोऽध्यायः

कर्णाकर्णिततोदेव्यःकौलीनमिवसंघशः ॥ मंत्रयांचक्रिरेहृष्टारुक्मिण्यातिगुणोदयम् ४७ अर्हेतिपुत्रमातेतिज्येष्ठेतिचसमागताः ॥ प्रायेणप्रवदंतिस्म
हृष्टादामोदरस्त्रियः ४८ ममृषेनसपत्न्यास्तुतरसौभाग्यगुणोदयम् ॥ सत्यभामाप्रियानित्यंविष्णोरतुलतेजसः ४९ रूपयौवनसंपन्नास्वसौभाग्येनग
र्विता ॥ अभिमानवतीदेवीश्रुत्वैवेर्ष्यावशंगता ५० समुत्सृजंतीवसनंसकुंकुमंशुचिस्मिताशुक्लतमैकमंशुकम् ॥ जग्राहरोषाकुलितेनचेतसावन्हेस्त
दाश्रीरिववर्द्धितेंधना ५१ दंदह्यमानाज्वलनेनवर्द्धताईर्ष्यासमुत्थेनगतप्रभेव ॥ क्रोधान्विताक्रोधगृहंविविक्तंविवेशतारेवघनंसतोयम् ५२ बद्धाललाटे
हिमचंद्रशुक्लंदुकूलपट्टंप्रियरोषचिह्नम् ॥ पर्यंतदेशंसरसेनदेवीविलिप्यसालोहितचंदनेन ५३ संस्मृत्यसंस्मृत्यशिरःसरोषंप्रकंपमानासमुपोपविष्टा
दीर्घोपधानेशयनेपनीयविभूषणान्येवनिबद्धवेणी ५४ अकारणार्थेनविकृष्यमाणाप्रेष्याजनस्याभिजनान्वितापि ॥ विचूर्णयामासकुशेशयंसानिःश्वस्य
निःश्वस्यनखैर्नतभ्रूः ५५ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि०पारिजातहरणेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥
उपविष्टंमुनिंज्ञात्वारुक्मिण्यासहकेशवः ॥ निश्चक्रामाप्रमेयात्माव्यपदेशेनसर्ववित् १ जगामत्वरितश्चैवसत्यभामागृहंमहत् ॥ रम्येरैवतकोद्देशेनिर्मि
तंविश्वकर्मणा २ अभिमानवतीमिष्टांप्राणैरपिगरीयसीम् ॥ जानन्सात्राजितींविष्णुर्विवेशशनकैरिव ३ रुषितामिवतांदेवींस्नेहात्संकल्पयन्निव ॥ भीत
भीतःसशनकैर्विवेशमधुसूदनः ४ सेवकंद्वारदेशेतुतिष्ठेत्युक्त्वाविवेशह ॥ नारदस्योपचारार्थंप्रद्युम्नंविनियुज्यसः ५ सददर्शप्रियांदूरात्क्रोधागारगतां
तदा ॥ प्रेष्यामिवस्थितांकोपान्निश्वसंतींमुहुर्मुहुः ६ करजाग्रावलीढंतुपंकजंमुखपंकजे ॥ संश्लेषयित्वानिश्वस्यविहसंतींपुनपुनः ७ किंचिदाकुलिता
ग्रेणचरणेनवसुंधराम् ॥ कृत्वापृष्ठेथवदनंविहरंतींपुनःपुनः ८ करपद्मेपुनःसव्येमुखपद्मंनिवेश्यच ॥ वनितांचारुसर्वांगींध्यायंतींकमलेक्षणाम् ९
सरसंचंदनंगृह्यप्रेष्याहस्तादनिंदिताम् ॥ प्रह्लादयित्वाहृदयंक्षिपंतींनिर्दयंपुनः १०

॥ ६५ ॥ ॥ छ ॥ ॥ एतस्मिन्षट्षष्टितमेगत्वाभामागृहेहरिः ॥ तस्यैह्यपृच्छद्रोषस्यकारणंचेतिवर्ण्यते ॥ १ ॥ उपविष्टमिति व्यपदेशेनव्याजांतरेणसर्ववित्सत्यभामाभाव
वित् ॥ १ ॥ २ ॥ विवेशआससाद ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ पंकजंक्रीडाकमलंविहसंतींसपत्नीमत्तोपिसौभाग्याधिक्यंप्राप्तवतीत्याश्चर्येणेतिभावः ॥ ७ ॥ वसुंधरांलिख
तीमितिशेषः ॥ पृष्ठेइतितिर्यक्त्वस्योपलक्षणम् ॥ ८ ॥ ९ ॥ प्रह्लादयित्वाचंदनस्तुत्याप्रेष्यांस्तुत्वापिविक्षिपंतींनिंदंतींतेनभ्रांतत्वमस्याःव्यक्तम् ॥ १०

॥ ११ ॥ अवगुंठ्यवस्त्रेणाच्छाद्यउपधानेउच्छीर्षकेअंतरंअवकाशम् ॥ १२ ॥ संज्ञायसंकेत्यतांसोन्वगमत् ॥ १३ ॥ ग्रहायगृहीत्वा ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ गंधाश्र यमदृष्ट्वामेदिन्येवगंधंमुंचतीतितर्कयति कथमिति एकतरोतिशयिततरः ॥ १९ ॥ विवेक्षंतीव्यवेक्षमाणा भागुरिमतेनाकारलोपः अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्पर



पुनरुत्थायशयनात्पतंतींचपुनःपुनः ॥ तास्ताश्चेष्टाःप्रियायाश्चतथान्याददृशेहरिः ११ अवगुंठ्ययदावक्त्रमुपधानेन्यवेशयत् ॥ इदमंतरमित्येवंतदागत्वा जनार्दनः १२ प्रेष्याजनंससंज्ञायअनाख्येयोस्मिसंज्ञया ॥ सशंकितप्रचारश्चवारितोन्वगमत्सताम् १३ ग्रहायव्यजनंचैवस्थित्वासपरिपार्श्वतः ॥ शनैरिवासृजद्वातंजहासशनकैरिव १४ सपारिजातपुष्पस्यसंसर्गादनुवासितः ॥ बभारभगवान्गंधंदिव्यंमानुषदुर्लभम् १५ अत्यद्भुतंसुगंधंच जिघ्रित्वाविस्मयान्विता ॥ अपावृणोन्मुखंसत्याकिमेतदितिचाब्रवीत् १६ सोत्थितापृष्ठतोदेवमपश्यंतीशुचिस्मिता ॥ पर्यपृच्छदथोप्रेष्यागंधस्यप्रभवेतदा १७ ताःपृष्टास्त्वप्रभाषंत्योजानुभ्यांधरणींगताः ॥ अधोमुख्यस्ततस्तस्थुःकृतांजलिपुटास्तदा १८ तदपूर्वमदृष्ट्वैवगंधंमुंचतिमेदिनी ॥ कथमेकतरस्तस्यागंधोयमितितत्खलु १९ किंस्विदंस्यादितिचसाविवेक्षंतीसमंततः ॥ ददृशेकेशवंदेवीसहसालोकभावनम् २० युज्यतीतिततोवाचसहसास्राविलेक्षणा ॥ अवर्तिकेवरोषेणबभूवप्रणयान्विता २१ साप्रस्फुरितचार्वोष्ठीनिश्वस्याधोमुखीतदा ॥ मुहूर्तमसितापांगीतस्थावन्यमुखीशुभा २२ निबध्यभ्रुकुटिंवामांसम्यग्विक्षिप्यलोचने ॥ निवेश्यवदनंहस्तेशोभसीत्यब्रवीद्धरिम् २३ तस्याःसुस्रावनेत्राभ्यांवारिप्रणयकोपजम् ॥ कुशेशयपलाशाभ्यामवश्यायजलंयथा २४ समुत्पत्यजलंतत्रपतितंवदनांबुजात् ॥ प्रतिजग्राहपद्माक्षःकराभ्यामतिसत्वरः २५ अथोरसिपतत्तोयंश्रीवत्सांकोंबुजेक्षणः ॥ प्रियानयनजंदेवःपरिमृज्येदमब्रवीत् २६ स्रवत्यसितपत्राक्षिकिमर्थंतवभामिनि ॥ तोयंसुंदरिनेत्राभ्यांपुष्कराभ्यामिवोदकम् २७ प्रभातेपूर्णचंद्रस्यमध्याह्नेपंकजस्यच ॥ बिभर्तितवकिंवक्त्रंवपुस्तवमनोहरे २८ किमर्थंकौंकुमंवासोमहारजतमेवच ॥ नानुगृह्णासिसुश्रोणिशुक्लंवासोनुगृह्यते २९ वासस्येतेतवाभीष्टेमहारजतकौंकुमे ॥ देवाभिगमनादूर्ध्वंशुक्लंनेष्टंहितस्त्रियाः ३०

स्मैपदम् ॥ २० ॥ युज्यतीतिउवाचसद्योस्राविलेक्षणाभूत्नतुअन्यत्वक्तुमशकत् ॥ २१ ॥ अन्यमुखीकृष्णमनवेक्षमाणा ॥ २२ ॥ शोभसीत्युपलंभार्थंनतुरंजनार्थं ॥ २३ ॥ ॥ २४ ॥ २५ ॥ उरसिपरिमृज्येतिस्नेहातिशयसूचनम् ॥ २६ ॥ २७ ॥ वपुः स्वरूपम् ॥ २८ ॥ कुंकुमेनरक्तंकौंकुमंपीतारुणमित्यर्थःमहारजतेनरक्तद्रव्यविशेषेणरक्तम् महारजतंरक्तकौसुंभमित्यर्थः ॥ २९ ॥ देवेतिदेवपूजायामेवशुक्लमिष्टंनान्यदित्यर्थः ॥ ३० ॥

चित्रकस्थानंपत्रलेखास्थानम् आक्रांतमश्रुलिप्तमित्यर्थः ॥ अवरोधूसरोवर्णः देहकांतिस्तद्वतिहेअवरवर्णिनि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ रत्नैश्चरत्नजातसंबंधिभिः ॥ ३५ ॥ स्मेरेणउत्फुल्लेन माद्यमामद्य ॥ ३६ ॥ तोयमश्रु अंजनेनदुर्दिनंमालिनम् ॥ ३७ ॥ द्विषमित्यदंतत्वंकप्रत्ययांतत्वात् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

किंचानाभरणंगात्रंसुगात्रितवकथ्यताम् ॥ चित्रकस्थानमाक्रांतंकस्मादवरवर्णिनि ३१ श्वेतेनतवपादेनवाससाप्रियदर्शने ॥ ललाटंसेव्यतेकस्माच्चंदनेनसुगंधिना ३२ सरसेनायतापांगिकांतेनहृदयप्रिये ॥ प्रभोपमर्देकेनापिकारणेनाननस्यच ॥ करोषिममवात्यर्थंमनोग्लापयसिप्रिये ३३ प्रमृतश्चंदनरसः कपोलप्रणयीतव ॥ पत्रलेखासपत्नस्त्वंप्राप्तोनातिविराजते ३४ रत्नैश्चाभरणैर्मुक्तातवग्रीवानशोभते ॥ ग्रहनक्षत्ररहिताद्यौरिवाव्यक्तशारदी ३५ पूर्णचंद्रसपत्नेनस्मेरेणाबहुभाषिणा ॥ किमुनोभाषसेमाद्यमुखेनोत्पलगंधिना ३६ अर्द्धाक्षणापिहितावन्मांकिमर्थंननिरीक्ष्यसे ॥ मुंचस्येवसनिश्वासंतोयमंजनदुर्दिनम् ३७ अलमिंदीवरश्यामेरुदितेनमनस्विनि ॥ जलमंजनकल्माषंमामोक्षीराननद्विषम् ३८ त्वदीयोहंयदादेविख्यातोजगतिकिंकरः ॥ नज्ञापयसिकिंमांत्वंपुरेववरवर्णिनि ३९ किमकार्षमहंदेविविप्रियंतवभामिनि ४१ येनातिमात्रमात्मानमायासयसिसुंदरि ४० मनसाकर्मणावाचानत्वामतिचराम्यहम् ॥ सर्वथासर्वचार्वंगिसत्यमेतद्ब्रवीम्यहम् ४१ बहुमानोपमान्यासुस्त्रीषुसर्वासुशोभने ॥ स्नेहश्चबहुमानश्चत्वामृतेऽन्यासुनास्तिमे ४२ नैवत्वांमदनोजह्यान्मृतेपिमयिमामकः ॥ इतिमेनिश्चितंविद्धिचेतःसुरसुतोपमे ४३ क्षमादयश्चमदिन्यांशब्दाद्याश्चांबरेगुणाः ॥ ध्रुवंपंकजगर्भाभेत्वयिस्नेहस्तथामम ४४ रुचिरग्नौयथादिव्याप्रभाचैवदिवाकरे ॥ कांतिश्चशाश्वतीचंद्रेस्नेहस्त्वयितथामम ४५ एवंवादिनमात्मेष्टंसत्यभामाजनार्दनम् ॥ शनैरुवाचनेत्राभ्यांप्रमृज्यसुभगाजलम् ४६ मदीयस्त्वमितिह्यासीन्ममनित्यंमनःप्रभो ॥ अद्यसाधारणंस्नेहंत्वयितावद्गतास्म्यहम् ४७ नाज्ञासिषमहंपूर्वमनित्यंकालपर्ययम् ॥ अद्यलोकगतिंकृत्स्नामवगच्छामिनध्रुवम् ४८ अमृतायाद्वितीयोपिजन्मौहिममसर्वथा ॥ किमत्रबहुनोक्तेनहृदयंवेद्मितेच्युत ४९ वाङ्मात्रमेवपश्यामिसाधुयैसंप्रयुज्यसे ॥ मयिस्नेहश्चकृतकस्तवान्यत्रनकृत्रिमः ५० ऋजुस्वभावांभक्तांचसर्वथापुरुषोत्तम ॥ अवजानासिजानन्मांकैतवींवृत्तिमास्थितः ५१ एतावत्खलुपर्याप्तंदृष्टंद्रष्टव्यमव्ययम् ॥ श्रुतंचाप्ययथच्छ्राव्यंदृष्टःस्नेहफलोदयः ५२ यदित्वहमनुग्राह्यामामनुज्ञातुमर्हसि ॥ तपस्येहंपरंकृत्वानिश्चयंपुरुषोत्तम ५३

मदनोनैवजह्यादित्यरतियौवनंवातवमास्त्वित्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अमृतायाःजीवंत्याः ममद्वितीयस्त्वमिति अपिशब्दात्तवाप्यहमेवद्वितीयेति मयास्वजन्मऔहिअतर्कि यथाहंत्वदन्यंनजानेएवंत्वमपिमदन्यांनजानासीत्येवमहंनित्यंतर्कितवतीत्यर्थः ॥ जन्मोहि पुंस्त्वमार्षमितिप्रांचः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ग्रहायआदायहरिवाससस्पटांतं अंचलम् ॥ ५५ ॥ इतिश्रीनीलकंठीयेभारतभावदीपेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांषट्षष्टितमोध्यायः ॥ ६६ ॥ ॥ ७ ॥
सप्तषष्टितमेध्यायेपारिजातद्रुणाततः ॥ हरिणासांत्विताद्सत्यासुरेंद्रमदभित्तये ॥ १ ॥ १ ॥ २ ॥ शापितासिचपथेनाभियुक्तासि अनत्ययःअविनाशः ॥ ३ ॥ ४ ॥ ५ ॥



भर्तुश्छंदेननारीणांतपोवाव्रतकानिवा ॥ निष्फलंखलुयद्भर्तुरच्छंदेनक्रियेताहि ५४ इतीदमुक्त्वापुनरेवशोभनामुमोचतोयंनयनोद्भवंसती ॥ ग्रहायपी
तंहरिवाससःशुभापटांतमाधायमुखेशुचिस्मिता ५५ इतिश्रीम०खिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेषट्षष्टितमोध्यायः ॥ ६६ ॥ ॥ ७ ॥
वैशंपायनउवाच ॥ नारायणःसत्यभामांपुनरेवैषभारत॥ प्रोवाचप्रणयात्क्रुद्धामभिमानवतींसतीम् १ ॥ श्रीभगवानुवाच ॥ दहंतीवममांगानिशोकःकम
ललोचने ॥ किमुतत्कारणंयेनत्वमेवमतिविक्लवा २ शापितासिममप्राणैराचक्ष्वानत्ययोयदि ॥ श्रोतव्यंयदिभक्तेनभर्त्रासर्वांगशोभने ३ ततःप्रोवाच
भर्तारंसत्यासत्यव्रतेस्थितम् ॥ बाष्पगद्गदयावाचातथैवाधोमुखीस्थिता ४ त्वयैवस्थापितंपूर्वंसौभाग्यंमममानद ॥ जगत्यमलपत्राक्षयत्ख्यातंकेशि
नाशन ५ शिरोवहामिचेष्टत्वात्तवाहंदेवगर्विता ॥ सर्वसीमंतिनीमध्येस्पृहणीयास्मिसर्वथा ६ साहमद्यावहास्यामिसपत्नीनांजनस्यच ॥ इतिप्रेष्या
भिराख्यातंश्रुत्वातथ्यंततस्ततः ७ यत्पारिजातकुसुमंदत्तवान्नारदस्तव ॥ तत्किलेष्टजनेदत्तंत्वयाहंपरिवर्जिता ८ रत्नातिशयदानेनतस्यामभ्यधिकःकि
ल ॥ स्नेहश्चबहुमानश्चप्रकाशंगमितस्त्वया ९ तामस्तौषीत्समक्षंतेप्रियांसकिलनारदः ॥ तमश्रौषीश्चहृष्टस्त्वंप्रियायाःसंस्तवंकिल १० स्तोतव्योय
दितावत्सनारदेनतवाग्रतः ॥ दुर्भगोयंजनस्तत्रकिमर्थमनुशब्दितः ११ प्रणयस्यरसंदत्त्वापश्चात्तापःप्रभोयदि ॥ अनुज्ञांमेप्रयच्छस्वतपःकर्तुंप्रसीदमे ॥
१२ स्वप्नेनापिनदृष्टाहंश्रद्दध्यांपुष्करेक्षण ॥ यदन्यदेवनिर्वृत्तमश्रौषंपश्यतस्तव १३ कामंकामोस्तुतस्यैवमुनेरतुलतेजसः ॥ अत्रमन्युस्तुमेदेवसांनि
ध्यंतवतत्रयत् १४ मानार्थंजीव्यतेलोकेसद्भिरित्युक्तवानसि ॥ तदेवंसतिनेच्छामिजीवितुंमानवर्जिता १५ मामाभवद्यतोरक्षाभयमद्यततोमम ॥ सर्व
तोरक्षतेयोमांसमांनाद्याभिरक्षति १६ हागतिंकांगमिष्यामित्यक्तादेवत्वयाविभो ॥ कुमुद्वतीगतांनूनंगतिंयास्याम्यसंगता १७ किमकार्षमहं
मोहादीश्वराणांप्रियाप्रियम् ॥ प्रियाभूत्वाप्रियाभूतायद्यहंतवमानद १८

शिरः प्रौढिम् ॥ ६ ॥ ७ ॥ इष्टजनेइतिशेषात्रुक्मिण्याअभिधानम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ यदहंस्वप्नेनयोगमयेनदृष्टापिनश्रद्दध्यांतवअन्यत्रप्रेमास्तीति
तदेवनिर्वृत्तमश्रौषंइतियोज्यम् ॥ १३ ॥ मुनेःकामोरुक्मिणीस्तुतावस्तु परंतुतवतत्स्तोत्रश्रवणमयुक्तमितिभावः ॥ १४ ॥ १५ ॥ १६ ॥ कुमुद्वतीगतां चंद्रकरस्पर्शादुल्लसनां
अस्पर्शेमुकुलीभावरूपांगतिं कुमुद्वत्याअजभार्यायापतिर्भर्तुरग्रेमरणंतांवा ॥ १७ ॥ १८ ॥

॥ १९ ॥ परपुष्टस्वनोन्मिश्रंकोकिलध्वनिनादितम् द्वेष्यातवेतिशेषः ॥ २० ॥ २१ ॥ कःस्मरिष्यतिमयिमृतायामितिभावः ॥ २२ ॥ २३ ॥ २४ ॥ नाहमिति हेतत्पक्षमत्सपत्नी पक्षपातिन् पक्षेहेऽरिंदमसंसारशत्रुनाशन इतःपूर्वंत्वांकितवंधूर्तंइत्यादिरूपंतवसार्वात्म्यं ब्रह्मदाशाब्रह्मदासाब्रह्मेमेकिंतवाउतेत्याद्यागमादपिनाज्ञासिषं अद्यतु हेअजनजन्मादिहीनत्वंतत्पक्षचंचलइति ज्ञातोसि तस्याःमत्सपत्न्याःमायायाःपक्षेएवचंचलोमायाविशिष्टचिद्रूपस्यतवमायांशेनैवचांचल्यंत्वंचकत्वंच नतुचिदंशेनेत्यद्यैवमित्यर्थःतत्पक्षेति समासैकदेशोपिवंचकशब्देनसंबद्धुंआवर्त्तते ॥ २५ ॥ वाङ्मनसोरगोचरोहंकथंत्वयाज्ञातइत्यतआह स्वरेति हेदेव त्वंस्वरश्चवर्णश्चइंगितंचआकारश्चतैःलिंगैःकृत्वात्वंअतिगूढोनिष्प्रकटोपि यत्नतःशठोमध्यस्थउदासीनइतिज्ञातोसि अयंभावः वागाद्युद्बोधकतयासंघाताविशिष्टरूपेणप्रत्यगात्मत्वात्नित्यंज्ञातोपिसाक्षिवदसंगत्वेनइदानीमेवज्ञातइत्यर्थः

वसंतकुसुमैश्चित्रंसदारैवतकंगिरिम् ॥ प्रियाभूत्वाऽप्रियाभूताकथंद्रक्षाम्यहंपुनः १९ परपुष्टस्वनोन्मिश्रंपुष्पगंधवहंशुचिम् ॥ कथंनामानिलंद्वेष्यासेवेयं दुर्भगासती २० जलक्रीडांतवांकस्थादेवकृत्वामहोदधौ ॥ कथंदौर्भाग्यमापन्नापश्येयमपिसागरम् २१ सात्राजितिप्रियानान्यात्वत्तोमेस्तीतिवि द्विमाम् ॥ यदवोचःक्वतद्यातमथवाकःस्मरिष्यति २२ यदद्राक्षीद्धिमांश्वश्रूर्बहुमानेननंदिनी ॥ अवज्ञातांत्वयाराज्ञीनूनंदौर्भाग्यकर्शिताम् २३ किंनुगूढे नमेप्रेम्णासुस्निग्धेनापिमानद ॥ यत्समानांजनैर्देवोमांनपश्यतिनित्यदा २४ नाहंत्वांकितवंधूर्तमज्ञासिषमरिंदम ॥ अद्यज्ञातोसितत्पक्षचंचलोजनवंचकः २५ स्वरवर्णेंगिताकारैर्निगूढोदेवयत्नतः ॥ चौरज्ञातोसितत्पक्षवाङ्मात्रमधुरःशठः २६ एवमीर्ष्यावशंप्राप्तांदेवींसात्राजितींहरिः ॥ अभिमानवतींदेवःसांत्वपूर्वमथाब्रवीत् २७ मैवंपद्मपलाशाक्षिप्राणेश्वरिवदप्रिये ॥ किमत्रबहुनोक्तेनत्वदीयमवगच्छमाम् २८ तत्पारिजातकुसुमंतस्यादेविममाग्रतः नारदोमत्प्रियंकुर्वन्मुनिरक्लिष्टकर्मकृत् २९ दाक्षिण्यादानुरोधाच्चदत्तवान्नात्रसंशयः ॥ प्रसीदैकापराधंमेमर्षयस्वशुचिस्मिते ३० पारिजातकपुष्पाणियदीच्छस्यतिकोपने ॥ तदादातास्मिसुश्रोणिसत्यमेतद्ब्रवीमिते ३१ स्वर्गास्पदादानयित्वापारिजातंद्रुमेश्वरम् ॥ गृहेतेस्थापयिष्यामियावत्कालंत्वमिच्छसि ३२ एवमुक्तातुहरिणाप्रोवाचहरिवल्लभा ॥ यद्येवंसद्रुमःशक्यस्त्विहानयितुमच्युत ३३ मन्युरेषप्रमृष्टोहिभवेद्बहुगुणंमम ॥ सीमंतिनीनांसर्वासामधिकास्यामधोक्षज ३४ तथास्तुप्रथमःकल्पइतितांमधुसूदनः ॥ प्रोवाचाप्रतिमोदेवोजगतःप्रभवाप्ययः ३५

अतएव चौरवत्प्रच्छन्नत्वाच्चौरेतिसंबोधयति तत्पक्षेति मायापक्षेब्राह्मलौकिकांतैश्वर्यविषयेरम्याःरामाःजरामरणवर्जितःकायः संकल्पमात्रोपनताभोगाइत्यादिवाङ्मात्रेणमधुरःमधुरभाषीवेदकर्तृत्वात्असि नत्वर्थतस्तत्रमाधुर्यमस्तीतिभावःयतःशठउदासीनअभोक्तृत्वात् शठोमध्यस्थपुरुषेधूर्तधत्तूरयोरपीतिविश्वः कथापक्षेतुद्वयोरपिश्लोकयोःस्पष्टएवार्थः ॥ २६ ॥ २७ ॥ त्वदीयमात्मानमितिशेषः पक्षेस्पष्टम् ॥ २८ ॥ तस्यादत्तवानित्यग्रिमस्थेनसंबंधः ॥ २९ ॥ ३० ॥ ३१ ॥ स्वर्गास्पदात्स्वर्गस्थानात् ॥ ३२ ॥ ३३ ॥ प्रमृष्टस्त्यक्तः बहुगुणंसुखमितिशेषः ॥ ३४ ॥ प्रथमोमुख्यः कल्पःसांत्वनोपायः ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ भृंगारेणकनकपात्रेण भृंगारीझिल्लिकायांचकनकालौपुनःपुमानितिमेदिनी ॥ ४० ॥ परमान्नंपायसम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५
॥ ४६ ॥ विघसंदेवब्राह्मणशेषम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ सोमःउमयासहवर्तमानःसप्रवरःप्रमथगणयुतः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥



तथेत्युक्तेतिकृष्णेनतुतोषसमितिंजय ॥ सत्यभामासतामिष्टाकंसनाशनवल्लभा ३६ ततःस्नातोजगन्नाथःसर्वेशःसर्वभावनः ॥ चकारावश्यकंसर्वंसर्वकामप्रदःसताम् ३७ दध्यौचनारदंदेवःस्नातोदेवमुनिर्नृप ॥ अभ्याजगामस्नानांतेमुनिश्रेष्ठोमहोदधौ ३८ तमागतंनरपतेसतांगतिरधोक्षजः ॥ सत्ययासहधर्मात्मायथाविधिअपूजयत् ३९ पादौप्रक्षालयांचक्रेमुनेःसात्राजितीस्वयम् ॥ जलंदेवःस्वयंकृष्णोभृंगारेणददौतदा ४० अथोपकल्पयामाससुखासीनायकेशवः ॥ परमान्नंसमुनयेप्रयतात्माजगद्गुरुः ४१ तल्लोककर्त्रासत्कृत्यदत्तंमुनिरुदारधीः ॥ बुभुजेवदतांश्रेष्ठःश्रद्धयापरयायुतः ४२ उपस्पृश्यततस्तृप्तःप्रददौचाशिषःप्रभोः ॥ ताश्चप्रीतेनमनसाप्रतिजग्राहकेशवः ४३ ततःसात्राजितींदेवींप्रणतांनारदोब्रवीत् ॥ प्रसार्यदक्षिणंहस्तंसजलंजलजेक्षणाम् ४४ यथेदानींतथैवत्वंभवदेविपतिव्रता ॥ सविशेषंचसुभगाभवमत्तपसोबलात् ४५ इत्युक्तामुनिमुख्येनसत्यभामाहरिप्रिया ॥ उत्तस्थौमहतायुक्ताहर्षेणगतुनराधिप ४६ सकृष्णोप्यभ्यनुज्ञांतुलब्ध्वामुनिवरात्तदा ॥ बुभुजेविघसंधीमानप्रमेयपराक्रमः ४७ ततस्त्वावश्यकंकृत्वासत्यभामापिभारत ॥ अनुज्ञयातदाभर्तुर्विवेशांतर्गृहंमुदा ४८ ततोविनिर्गतादेवीकृष्णस्यैवाभ्यनुज्ञया ॥ स्थितापार्श्वेचकृष्णस्यनमस्कृत्वामहात्मने ४९ ततोमुहूर्तमासित्वानारदःकृष्णमब्रवीत् ॥ आपृच्छेत्वांगमिष्यामिशक्रलोकमधोक्षज ५० तत्राद्यंदेवमीशानंनमस्कृत्यमहेश्वरम् ॥ गास्यंतिदेव गंधर्वास्तथैवाप्सरसांगणाः ५१ मासिमास्युचितंह्येतन्महेंद्रसदनेप्रभो ॥ पूजार्थंदेवदेवस्यगांधर्वंनृत्यमेवच ५२ अंतर्हितोदेवदेवःसोमःसप्रवरोविभुः ॥ पश्यत्यमरमुख्येनकृतंभक्त्याद्रिवातिना ५३ निमंत्रितोहंपूर्वेद्युःपुष्पंदत्तंमहाद्युते ॥ पारिजातस्यभद्रंतेतरुराज्ञोमहात्मनः ५४ यदेतदातद्वृहंस्वर्गात्त्वदर्थंतुमयाविभो ॥ देवोपभोग्यमेतद्धितरुराजसमुद्भवम् ५५ इष्टःसवृक्षःसततंशच्याःपुष्करलोचन ॥ सौभाग्यमावहत्येवपूज्यमानोपिनित्यशः ५६ पुण्यंकर्तुंतदास्रष्टःपारिजातोमहाद्रुमः ॥ अदित्याधर्मनित्येनकश्यपेनमहात्मना ५७ पुरादित्यामहातेजास्तोषितःकिलकश्यपः ॥ वरेणच्छंदयामासमारीचस्तपसोनिधिः ५८ सोवाचसुभगायेनभवेयंमुनिसत्तम ॥ स्वलंकृताकामतश्चसर्वैरेवविभूषणैः ५९ ईप्सितंगीतनृत्यंचभवेन्ममतपोधन ॥ कुमारीनित्यदाचैवभवेयंतपसोनिधे ६० विरजाशोकरहिताभवेयमितिनित्यदा ॥ पतिभक्तिमतीचैवधर्मशीलातथैवच ६१



पुण्यंपुण्यकाख्यंव्रतविशेषम् ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

॥ ६२ ॥ ६३ ॥ पुष्पाणीतितज्जातीयसुगंधद्रव्यमात्रस्योपलक्षणं बहूनिचतानिरूपाणिचेतिविग्रहः रूपाणिइतिशब्दात् गांधर्वमित्यर्थः रूपंस्वभावसौंदर्यैनालोकेपशुश
ब्दयोरितिमेदिनीपद्मानीविधिमात्रस्योपलक्षणम् ॥ ६४ ॥ अतएवमंदारात्कल्पवृक्षाच्चायंसारभूतइत्यर्थः ॥ ६५ ॥ ततस्तत्रनिबध्येत्यादिनापरकृतिसरूपार्थवादेनसौभाग्यकामन
याभर्तृसहितस्यपारिजातस्यदानंकर्तव्यम् निष्क्रयेणपुनर्भर्ताचभोक्तव्यइतिविधिरुन्नेयः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ विष्णुपद्याःगंगायाःपरिउपरिजातइतिपारिजातः
स्वार्थेऽण् संयोगेमंतुमानयितुंवियोगेदारयितुंचयोग्यानिमंदाराणिचतानिपुष्पाणिचतैः ॥ ७० ॥ कोविदारइत्याविकारात् ॥ ७१ ॥ ७२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरि

पारिजातंततोस्राक्षीददित्याःप्रियकाम्यया ॥ सर्वकामप्रदैःपुष्पैरावृतंनित्यगंधदैः ६२ त्रिशाखंसर्वदादृश्यंसर्वभूतमनोहरम् ॥ सर्वपुष्पाणिदृश्यंतेतस्मिन्ने
वमहाद्रुमे ६३ ईदृशान्यपिपुष्पाणिबिभर्त्येकापिरूपिणी ॥ बहुरूपाणिचाप्यन्यापद्मानिचततोपरा ६४ मंदारादपिवृक्षाच्चसारमुद्धृत्यकश्यपः ॥ त
स्मादेषतरुश्रेष्ठःसर्वेषांश्रेष्ठतांगतः ६५ ततस्तत्रनिबध्याथकश्यपंप्रददौशुभे ॥ अदितिर्ममपुण्यार्थंसौभाग्यार्थंतथैवच ६६ अदित्याकश्यपोदत्तःपुण्यार्थंच
तथामम ॥ पुष्पदाम्नावेष्टयित्वाकंठेपुण्यार्थमात्मवान् ६७ निष्क्रयेणमयामुक्तःकश्यपस्तुतपोधनः ॥ इंद्रोदत्तस्तथेंद्राण्यासौभाग्यार्थंततोमम ६८ सोम
श्चाप्यथरोहिण्याऋद्ध्याचधनदस्तथा ॥ एवंसौभाग्यदोवृक्षःपारिजातोनसंशयः ६९ पारिजातोविष्णुपद्याःपारिजातेतिशब्दितः ॥ मंदारपुष्पैर्यद्युक्तो
मंदारस्तेनकथ्यते ७० कोप्ययंदारुरित्याहुरजानंतोयतोजनाः ॥ कोविदारइतिख्यातस्ततःससुमहातरुः ७१ मंदारःकोविदारश्चपारिजातश्चनामभिः ॥
सवृक्षोज्ञायतेदिव्योयस्यैतत्कुसुमोत्तमम् ७२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेसप्तषष्टितमोऽध्यायः ॥ ६७॥ ॥ छ ॥
॥ वैशंपायनउवाच ॥ ततोजिगमिषुंतत्रनारदंमुनिसत्तमम् ॥ प्रोवाचभगवान्विष्णुरप्रमेयपराक्रमः १ महर्षेधर्मतत्त्वज्ञस्वर्गंगत्वात्वयानघ ॥ दृष्ट्वासद
स्यान्देवस्यत्रिपुरघ्नस्यधीमतः २ अनाज्ञयामद्वचनाद्विज्ञाप्यःपाकशासनः ॥ संभावयित्वाभ्रातृत्वंपौराणंवेत्सियन्मुने ३ यमस्राक्षीन्मुनिश्रेष्ठोभगवान्क
श्यपस्तरुम् ॥ पारिजातंपुरादित्याःसुखार्थंधर्मसत्तमः ४

वंशेविष्णुपर्वणिटीकायांसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अष्टषष्टितमेध्यायेमुष्मिन्नारदसंनिधौ ॥ पारिजातस्समाहृत्यैप्रतिज्ञाहरिणाकृता ॥ १ ॥ एवंतावत्पूर्वाध्यायेनिमंत्रितो
हम् पुष्पंदत्वामहामतेइतिनारदवचःश्रुत्वातस्यचस्वकार्योपयोगित्वाद्भगवान्नारदंउवाचेत्याह ततोजिगमिषुमिति ॥ १ ॥ अत्रनारदेनपूर्वंस्वप्रयोजनमुक्तं निमंत्रितोहंपूर्वेद्युः
पुष्पंदत्वामहामतइतितत्कुर्वन्नेवमयापिकार्यंकुर्विंतिभगवान्नारदमाह महर्षेइति ॥ २ ॥ अनाज्ञयाश्रेष्ठस्यभृत्यंप्रतियत्प्रेरणरूपंवचनंतदाज्ञातयाविनेत्यर्थःविज्ञापनाउत्तमस्यनि
कृष्टेनप्रार्थनेतिभेदःपौराणंवामनावतारीयम् ॥ ३ ॥ ४ ॥

सदत्तःसन्निर्तिशेषःतवइंद्रस्यसंबंधिनंतरुंदेवीभिः पूर्वोक्ताभिरदित्यादिभिर्नारदायदत्तम् ॥ नारदेनचपुनस्तुभ्यंदत्तमितिश्लोकद्वयस्यसंबंधः ॥ ५ ॥ ६ ॥ आनाययत्स्कृष्णः ॥
॥ ७ ॥ पूर्वोक्तमर्थंस्पष्टीकरोति दत्तेदानइति आस्माकंदानफलंभविष्यति तवतुकापिहानिर्नास्तीत्यर्थः॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥१३॥ १४ ॥ १५॥ १६॥ शच्याः

सपुण्यमतिसौभाग्यंददातितरुसत्तमः॥ तवदत्तंपुरादानंव्रतेनतरुमुत्तमम् ५ देवीभिर्धर्मनित्याभिर्धर्मार्थममरोत्तम॥ दत्तंश्रुत्वाभिकांक्षंतिदातुंपत्न्योममप्र
भो६ पुण्यार्थंदानधर्मार्थंममप्रीत्यर्थमेवच ॥ आनाययद्वावरतींपारिजातंमहाद्रुमम् ७ दत्तेदानेपुनःस्वर्गंतरुंत्वंनेतुमर्हसि॥ सवाच्यएवंभगवान्बलभिद्भग
वंस्त्वया ८ तथातथाप्रयत्नश्चकार्योस्मिन्मुनिसत्तम ॥ यथातरुवरंदद्यात्पारिजातंसुरेश्वरः ९ तत्रदूतगुणंतावत्पश्यामस्तेतपोधन ॥ संभाव्यासर्वकृत्यानां
संपद्धित्वयिमेमता १० एवंनारायणेनोक्तोनारदोभगवानृषिः ॥ प्रहस्योवाचकेशिघ्नमिदंवाक्यंतपोधनः ११ बाढमेवंप्रवक्ष्यामियदुमुख्यसुरेश्वर ॥ नतु
दास्यतिदेवेंद्रःपारिजातंकथंचन १२ मंदरंपर्वतश्रेष्ठंदानवैस्त्रिदशैस्तथा ॥ निक्षिप्यतोयधौपूर्वंपारिजातःसमाहृतः १३ मंदरात्पर्वतश्रेष्ठान्नयितुंप्रेषितःपुरा
पारिजातंहरेणापिलोककर्त्राजनार्दन १४स्वयंविज्ञापितोगत्वाततःशक्रेणशंकरः॥ आक्रीडद्रुमउद्यानेशच्याःस्यादितियाचितः १५तथास्त्वितिवरोदत्तोमहा
देवेनचानघ॥ नचनीतःपारिजातोमंदरंचित्रकंदरम् १६क्रीडावृक्षःसशच्येतिव्यपदेशेनमोक्षितः॥ महेंद्रेणमहाबाहोपारिजातस्ततःपुरा १७ प्रियार्थमुमया
साक्षात्पारिजातवनंहरः॥ गव्यूतिशतविस्तीर्णंमंदरस्यैवकंदरम् १८ नतत्रसूर्यआःकृष्णप्रविशंतिनगोत्तमे ॥ नचचंद्रप्रभाःशीतानैवकृष्णसदागतिः १९
शीतोष्णेछंदतस्तत्रशैलपुत्र्याभवंतिहि ॥ स्वयंप्रभंवनंतद्धिमहादेवस्यतेजसा २० वर्जयित्वामहादेवौसगणौयदुनंदन ॥ मांचान्यस्तद्वनंदिव्यंनप्रयातिक
थंचन २१ स्रवंतितत्रवार्ष्णेयपारिजाताःसमंततः ॥ सर्वरत्नानिमुख्यानिमनसाकांक्षितानिवै २२ गणास्तान्युपभुंजंतिप्रवराणांमहात्मनाम् ॥ आज्ञ
यादेवदेवस्यलोकनाथस्यकेशव २३ पारिजाताद्बहुगुणंफलंतेषांतथावनम् ॥ अभिमानंप्रभाश्चैवगुणाभूरिगुणास्तथा २४ मूर्तिमंतश्चतेवृक्षाःसोमंदेवंवृ
षध्वजम् ॥ उपतिष्ठंतिसततंप्रवरैःसहकेशव २५ रौद्रेणतेजसाजुष्टादुःखैर्हीनाःसुखान्विताः॥ तरवोमंदरेतेहिदयिताःशैलकन्यया २६ प्रविवेशांधको
नामघोरस्तत्रमहाबलः॥ दैतेयोवरदानेनदर्पितःपापनिश्चयः २७ सहतोदेवदेवेनहरेणामित्रघातिना ॥ अवध्यःसर्वभूतानांवृत्राद्दशगुणंबली २८

क्रीडावृक्षइतिमिषेणमोक्षितःमोचितः शच्याइतिछेदःसंधिरार्षः ततोरुद्रात् ॥१७॥ उमयाउमायाः ॥१८ ॥१९ ॥ २० ॥ देवौदेवीदेवश्चेतिद्वंद्वैकशेषः तौमांचवर्जयित्वेतिसंबंधः
२१ २२ गणासंघाः प्रवराणांप्रमथानां ॥ २३ ॥ २४ ॥ सोमंउमासहितम् ॥ २५ ॥ कन्ययाकन्यायाः ॥ २६॥ वरदानेनसर्वत्रतवगतिरकुंठितास्त्वित्येवंरूपेण २७ २८

दुःखंदुःखलभ्यम् २९ सहितोहितेनेष्टसुखदानेनयुक्तःसहितः ॥ ३० ॥ ३१ ॥ पारावर्यस्यलोकमर्यादायाः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ३६ ॥ विप्लवोभवेत्सर्वेप्यनृत वादिनोभविष्यंतीत्यर्थः कारणानुसारित्वात्कार्यस्य ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ इति०वि० टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ एकोनसप्ततितमेध्यायेस्मिन्कृष्णवाक्श्र

एवंदुःखंनतेदेवपारिजातंप्रदास्यति ॥ पुष्कराक्षसहस्राक्षःसत्यमेतद्ब्रवीमिते २९ सततंसहितोदेव्याशच्यासहिवरद्रुमः ॥ सर्वकामप्रदःकृष्णतथेंद्रायमहौजसे ३० ॥ ॥ श्रीभगवानुवाच ॥ ॥ मुनेतद्युज्यतेसाधुमहादेवेनधीमता ॥ यच्छचीकारणंकृत्वाननीतःसतरुःपुरा ३१ सज्येष्ठःसर्वभूतानांलोककृत्प्रभवोव्ययः ॥ पारावर्यस्यसद्दशंकृतवानितिमेमतिः ३२ अहंयवीयान्देवस्यसर्वथाबलवातिनः ॥ लालनीयश्चभगवन्जयंतइवसत्तम ३३ सर्वथाभगवांस्तावदुपायैर्बहुविस्तरैः ॥ करोतुयत्नंप्रीत्यर्थंशक्रोह्यसितपोधन ३४ मयामुनेप्रतिज्ञातंपुण्यार्थंसत्यभामया ॥ स्वर्गादिहानयिष्यामिपारिजातमितिप्रभो ३५ मयातदनृतंकर्तुंकथंशक्यंतपोधन ॥ नानृतंहिवचोविप्रप्रोक्तंपूर्वंमयानघ ३६ मयिभग्नप्रतिज्ञेवैलोकानांविप्लवोभवेत् ॥ यन्मयाहिमुनिश्रेष्ठलोकधर्मागुणान्विताः ॥ परिवार्याःस्थितास्तेसर्वेसकथंह्यनृतंवदेत् ३७ नदेवगंधर्वगणानराक्षसानचासुरानैवचयक्षपन्नगाः ॥ ममप्रतिज्ञामपहंतुमुद्यतामुनेसमर्थाःखलुभद्रमस्तुते ३८ सपारिजातंयदिनप्रदास्यतिप्रयाच्यमानोभवतामरेश्वरः ॥ ततःशचीव्यामृदितानुलेपनेगदांविमोक्ष्यामिपुरंदरोरसि ३९ इतिप्रवाच्योयदिसामपूर्वकंप्रयाच्यमानोनतरुंप्रयच्छति ॥ सुनिश्चयंमद्गमनायसर्वथात्वयाऽपिकार्यःखलुतत्रनिश्चयः ४० ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेनारदकृष्णभाषणंनामाष्टषष्टितमोऽध्यायः ६८ ॥ ॥ ६१ ॥ ॥ वैशंपायनउवाच ॥ नारदोऽथमुनिर्गत्वामहेंद्रसदनंप्रति ॥ तांरात्रिमवसत्तत्रददर्शेचमहोत्सवम् १ तत्रादित्यामहात्मानोवसवश्चसुरोत्तमाः ॥ राजर्षयश्चविद्वांसःस्वर्गताःकर्मभिःशुभैः २ नागायक्षाश्चसिद्धाश्चचारणाश्चतपोधनाः ॥ ब्रह्मर्षयश्चशतशोदेवर्षिमनवस्तथा ३ सुपर्णाश्चमहात्मानोमरुतश्चमहाबलाः ॥ दिवौकसांनिकायाश्चशतशोऽन्येसमागताः ४ उपर्युपरिसर्वेषांसोमदेवोमहेश्वरः ॥ तस्थावमितविक्रांतःस्वैर्गणैःपरिवारितः ५ देवर्षिभिर्मुनिश्रेष्ठैःसंवृतःसर्वभावनः ॥ कल्पांतरसहस्रेषुक्षयोयेषांनविद्यते ६ यानर्चयंतिसततंदेवादेवेश्वरोपमाः ॥ आत्मज्ञानावलेपांधायेचधर्मपथिस्थिताः ७ रुद्राश्चकाश्यपादेवमध्युपासंतभारत ॥ स्कंदश्चभगवानग्निर्गंगाचसरितांवरा ८ अर्विष्मांस्तुंबुरुश्चैवमारिश्चवदतांवरः ॥ नेतारोदेवदेवानामेतेहितपसान्विताः ९ एतानानुविधीयंतेसर्वदेवगणान्नृप ॥ धर्मनित्यास्तपोनित्याःसतांमार्गमुपाश्रिताः १०

वान् ॥ पारिजातंनदास्यामीत्याहशक्रइतीर्यते ॥ १ ॥ नारदोऽथेति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ नावलेपांधाः गर्वहीनाः ॥ ७ ॥ ८ ॥ मारिर्गंधर्वविशेषः ॥ ९ ॥ अनुविधीयंते अनुसरंति ॥ १० ॥

तान् मानुषान् अर्चयंतिदृष्टफलप्रदानेनपूजयंति ॥ ११ ॥ देवानांकृत्येषुयेवर्तंतइतिचज्ञेयं अनुष्ठिताः अनुष्ठितवंतः ॥ १२॥ १३॥ षड्गुणान्वाक्रिमस्निग्धमधुरलास्यविभ
क्तावबद्धाख्यान् ॥ १४ ॥ १५ ॥ जुजोषप्रीत्याजग्राह उपस्थानंनृत्यादिरूपांपरिचर्याम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्यैवार्तिहरणंकार्यम् ॥ २१ ॥ २२ ॥



येत्विमेमानुषादेवाअर्चयंतिशुभार्थिनः ॥ तानर्चयंतिह्यमरास्तथाराजञ्छुभार्थिनः ११ पितृकृत्येषुदेवानांसंन्यासंयेत्वनुष्ठिताः ॥ स्वाध्यायवंतःकौरव्य
सदानियमचारिणः १२ गंधर्वाधिपतिःश्रीमांस्तत्रचित्ररथोनृप ॥ सपुत्रोवादयामासदेववाद्यानिहृष्टवत् १३ ऊर्णायुश्चित्रसेनश्चहाहाहूहूस्तथैवच ॥
डुंबरस्तुंबुरुश्चैवजगुरन्येचषड्गुणान् १४ उर्वशीविप्रचित्तिश्चहेमारंभाचभारत ॥ हेमदंताघृताचीचसहजन्यातथैवच १५ जुजोषभगवान्देवस्तदुपस्था
नमात्मवान् ॥ वृत्तेनतुष्टःशक्रस्यजगामजगतोगतिः १६ गतेभूतपतौसर्वेनृपाजग्मुर्यथागतम् ॥ महेंद्रेणार्चितादेवाःस्वानेवनिलयान्गताः १७ ततःस
र्वेषुयातेषुसुखासीनंपुरंदरम् ॥ सदस्यैःस्वैःसहासीनंनारदोभिययौमुनिः १८ तमिंद्रःपूजयामाससमुत्थायतपोधनम् ॥ दिदेशकुशगर्भंचपीठमात्मा
सनोपमम् १९ नारदोथमहातेजामहेंद्रमिदमब्रवीत् ॥ दूतोहममरश्रेष्ठविष्णोरतुलतेजसः २० किंचित्कार्यंपुरस्कृत्यप्रेषितोस्मिमहात्मना ॥ आनर्ता
दार्तिहरणंतस्यैवानघतेजसः २१ प्रीतिवाक्यानिहृद्यानिप्रयुज्यमुनयेतदा ॥ ततःप्रहृष्टोभगवानब्रवीत्पाकशासनः २२ किमाहपुरुषश्रेष्ठःशीघ्रमाचक्ष्व
मेमुने ॥ चिरस्यखलुकृष्णेनसंस्मृतोस्मिमहात्मना २३ ॥ ॥ नारदउवाच ॥ ॥ महेंद्रेंद्रानुजंद्रष्टुंगतोहंभ्रातरंतव ॥ कथंचिद्द्वारकांतत्रकाश्यपा
नांयशस्करम् २४ तंतुरैवतकेऽद्राक्षंतदासीनमरिंदमम् ॥ रुक्मिण्यासहितंवीरंस्तुवंतंवृषभध्वजम् २५ पारिजाततरोःपुष्पंतस्यदत्तंमयानघ ॥ विस्मा
पनार्थंदेवेशपत्नीनामुरुतेजसः २६ तद्दृष्ट्वातस्यपत्न्यस्तुविस्मयंपरमंययुः ॥ बहुकामप्रदंपुष्पंवृक्षराजसमुद्भवम् २७ गुणास्तासांमयाख्यातास्तस्य
पुष्पस्यमानद ॥ सृष्टिश्चपारिजातस्यकश्यपेनमहात्मना २८ अदित्याकश्यपोदत्तःपुण्यार्थंचयथामम ॥ पुष्पदाम्नावेष्टयित्वाकंठेपुण्यार्थमात्मवान्
२९ त्वंचदत्तोयथाशच्यादेवाश्चान्येसुरेश्वर ॥ निष्क्रयश्चयथादत्तःकश्यपायैर्महर्षिभिः ३० तच्छ्रुत्वातस्यपत्न्येकासत्यभामेतिविश्रुता ॥ पुण्यकार्थंमन
श्चक्रेदयितातेयवीयसः ३१ तयाचाभ्यर्थितोभर्तादेवदेव्यागणेश्वरः ॥ प्रतिजज्ञेसधर्मार्थंयवीयांस्तवमानद ३२ ततोमामुक्तवान्वीरोविष्णुर्बलवतां
वरः ॥ यथावत्सुरमुख्येशब्रुवतःशृणुभावतः ३३ लालनीयोयवीयांस्तुप्रणिपत्याच्युतोब्रवीत् ॥ आनयेयंसुरश्रेष्ठपारिजातंवरद्रुमम् ३४ मनोरथोस्तु
सफलोवध्वास्तेऽसुरसूदन ॥ धर्मकृत्येविशेषेणवध्वास्तेसुरसत्तम ३५

चिरस्यचिरेण ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ तासांकृष्णपत्नीनांपुरः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ भजासनंमित्यनेनदूतत्वात्तिष्ठन्नेवैतावद्वचनंनारदउक्तवानितिगम्यते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ प्रवर्तामिप्रवर्ते ॥
॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ त्रिदिवस्थःसन्त्वमपीतिसंबंधःनत्ववनिस्थइत्यर्थः ॥ ५२ ॥ आमिषभोज्यानांमांसभक्षैःदृष्टःपुष्टःअतएवदत्तत्वाद्धर्ममति

अयंदर्शितकल्याणोलोकोलोकगणेश्वर ॥ पश्यंत्वमरकल्याणंमत्प्रभावाच्चमानवाः ३६ ॥ वैशंपायनउवाच ॥ वासुदेववचःश्रुत्वामहेंद्रःकुलनंदन ॥ नारदंवदतांश्रेष्ठमिदंवाक्यमथाब्रवीत् ३७ भजासनंद्विजश्रेष्ठयुक्तमुक्तंत्वयाद्विजः ॥ संदेशंप्रतिदास्यामिविष्णोरतुलतेजसः ३८ आसीनेनारदेशक्रोलब्धानुज्ञोथनारदात् ॥ स्वमासनंततोभेजेतस्यैवसदृशंप्रभो ३९ उपविष्टःसुरपतिरथोवाचतपोधनम् ॥ निरीक्ष्यस्वबलंवीर्यंहर्षदंवृत्रनाशनः ४०॥शक्रउवाच॥ महर्षेकुशलंपृष्ट्वावक्तव्यस्तेजनार्दनः ॥ वचनान्ममधर्मज्ञसर्वभूतसुखावहः ४१ मदनंतरमीशस्त्वंजगतोनात्रसंशयः ॥ त्वदीयःपारिजातश्चरत्नान्यन्यानि चाच्युत ४२ त्वंतुभारावतरणंकर्तुंदेवमहींगतः ॥ मानुष्यंसर्ववृत्तानांस्थितःकार्यस्यसिद्धये ४३ त्वयितीर्णप्रतिज्ञेहिपुनःप्राप्तेत्रिविष्टपम् ॥ पूरयिष्यामिवध्वास्तेइष्टान्कामानधोक्षज ४४ स्वर्गीयानिचरत्नानिननेतव्यानिकेशव ॥ स्वल्पार्थेमानुषंलोकमितिपूर्वंकृतास्थितिः ४५ उक्रम्यहिस्थितिंदैवींप्रवर्तामिमहाबल ॥ यद्यहंकिंप्रवक्ष्यंतिप्रजापतिगणाःप्रभो ४६ ब्रह्मणासहपुत्रेणसपौत्रेणमहात्मना ॥ नियमाःसर्वकृत्यानांस्थापिताजगतोध्रुवाः ४७ प्रजापतिकृतंमार्गमपास्यव्रजतोमम ॥ श्रुत्वाप्रजापतिर्धीमाञ्च्छापमप्युत्सृजेत्प्रभुः ४८ अस्माभिर्भिद्यमानंहिमर्यादासेतुबंधनम् ॥ भेत्स्यंत्यशंकितादैत्यादित्यपक्षास्तथापरे ४९ स्त्रीनिमित्तमितोनीतेपारिजातेद्रुमेश्वरे ॥ स्वर्गौकसोभविष्यंतिविमनस्काश्चमानद ५० उपभोगामनुष्याणांविहितायेस्वयंभुवा ॥ तैस्तुतुष्यतुमेभ्रातासंपश्यन्कालपर्ययम् ५१ इहापितातत्रिदिवेममयःस्यात्परिग्रहः ॥ त्रिदिवस्थोपितंकृष्णःसर्वंभोक्तुमिहार्हति ५२ हृष्टोह्यामिषभोज्यानामभिमानाज्जनार्दनः ॥ ततोधर्मंसमुत्सृज्यपापमेवानुवर्तते ५३ स्त्रीवश्यताख्याप्यमानाकृष्णस्यहिमहात्मनः ॥ जगत्ययशसायोगंजनयेदितिमेमतिः ५४ मानुष्यंमानुषेप्राप्तोयदेतन्मधुसूदनः ॥ कुर्यान्निर्बंधनीयंयद्भ्रात्राज्येष्ठेननारद ५५ स्वर्ग्यरत्नविलोपेनधर्षणास्यान्ममानव ॥ ज्ञातितोधर्षणाचैवविशेषेणैवगर्हिता ५६ धर्ममर्थंचकामंचक्रमेणमधुसूदनः ॥ सेवत्वेषसतांधर्मान्स्थापितान्पद्मयोनिना ५७ महीतलंपारिजातमर्पयिष्याम्यहंयदि ॥ पौलोमीमादितःकृत्वाकोनुमांबहुमंस्यते ५८ पारिजातंमहीपृष्ठेदृष्ट्वापृष्ट्वाचमानुषाः ॥ स्वर्गार्थंनोद्यमिष्यंतिदृष्ट्वास्वर्गफलंक्षितौ ५९ पारिजातगुणान्मर्त्याजुषंतियदिनारद ॥ देवतानांमनुष्याणांनविशेषोभविष्यति ६०

क्रामति यथाहापस्तंबःदृष्टोदर्प्यतिदृप्तोधर्ममतिक्रामतीति ॥ ५३ ॥ ५४ ॥ मानुषेलोके ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ईतयःअतिवृष्ट्यादयः ॥ ६८ ॥ नक्षमंनयोग्यम् ॥ ६९ ॥ कार्यकर्मकार्यंकर्तव्यम् ॥ ७० ॥ ७१ ॥ ७२ ॥
॥ ७३ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ छ ॥ अथास्मिन्सप्ततितमेप्रतिज्ञांनारदेरिताम् ॥ कृष्णस्यबलमिच्छुत्वानदास्या

तत्रयत्क्रियतेकर्मइहतद्भुज्यतेनरैः ॥ स्वर्गार्थंनयतिष्यंतिपारिजातगुणान्विताः ६१ सर्वरत्नवरःस्वर्गेपारिजातस्तपोधन ॥ तुल्यंदेवसमैर्मर्त्यैःसर्वदैवजग
द्भवेत् ६२ यज्ञैर्मर्त्यानयक्ष्यंतिलब्धस्वर्गफलाभुवि ॥ नपूर्तानिप्रदास्यंतितुल्यत्वममरैर्गताः ६३ यज्ञैर्जप्याह्निकैश्चैवनित्यमाप्याययंतिनः ॥ मानु
षाःस्वर्गमिच्छंतःश्रद्दधानास्तपोधन ६४ तत्सर्वंनकरिष्यंतिपारिजातगुणान्विताः ॥ निस्तेजसोभविष्यामतेगतास्तद्विहीनताम् ६५ इतःसुवृष्ट्यास
स्यैस्तेजीवंतिपुरुषाभुवि ॥ आप्याययंतस्तेप्यस्मान्दानैर्यज्ञैस्तथैवच ६६ नबुभुक्षापिपासावाबाधतेयदिमानुषान् ॥ रोगोजरावामृत्युर्वाधर्मज्ञरतिरे
वच ६७ दौर्गंध्यंवासुघोरावाईतयःकर्मसंभवाः ॥ किमुद्योगंकरिष्यंतिपारिजातगुणान्विताः६८सर्वथानयनंतत्रपारिजातस्यनक्षमम् ॥ इतिवाच्यस्त्वया
विप्रविष्णुरक्लिष्टकर्मकृत् ६९ यथायथाचमेभ्रातातुष्यत्येतद्विचारयन् ॥ तथातथात्वयाकार्यंकार्यंमत्प्रीतिमिच्छता ७० हाराश्चमणयश्चैवचंदनान्यगुरू
णिच ॥ वस्त्राणिचविचित्राणिवध्वास्त्वंद्वारकांनय ७१ योग्यानियानिमर्त्यानांयावदिच्छतिकेशवः ॥ नस्वर्गपरिमोषंतुकर्तुमर्हतिसांप्रतम् ७२ ददा
मिरत्नानियथेप्सितान्यहंबहूनिचित्राणिविभूषणानिच ॥ नपारिजातंचकथंचनद्रुमंमुनेप्रदास्यामिदिवौकसांप्रियम् ७३ ॥ इतिश्रीमहाभारतेखिले
षुहरिवंशेविष्णुपर्वणिपारिजातहरणेइंद्रवाक्यंनामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ छ ॥ वैशंपायनउवाच ॥ देवराजवचःश्रुत्वानारदःकुरुनंदन ॥
प्रावोचवाक्यंवाक्यज्ञोधर्मात्माधर्मवित्तमः १ अवश्यमेववक्तव्यंहितंबलनिषूदन ॥ मयातवमहाबाहोबहुमानोस्तिमेत्वयि २ उक्तोमयावासुदेवोजान
ताभवतोमतम् ॥ नदत्तःपारिजातोयंहरस्यापित्वयापुरा ३ हेतवश्चमयातस्यदर्शितास्तेसमासतः ॥ नचावगतवान्देवःसत्यमेतद्ब्रवीमिते ४ उपेंद्रोहंमहें
द्रेणलालनीयःसदेतिमाम् ॥ उवाचपुंडरीकाक्षोदत्तमुत्तरमेवच ५ पुनःपुनर्मयावास्यहेतवोदेवदर्शिताः ॥ ततोनबुद्धिर्व्यावृत्तावृत्रनाशनतस्यवै ६ अपि
चाप्युक्तवान्देवोवाक्यांतेमधुसूदनः ॥ प्रत्याहपुरुषश्रेष्ठःसरोषमिववासव ७ नदेवगंधर्वगणानराक्षसानचासुरानैवचपन्नगोत्तमाः ॥ ममप्रतिज्ञामपहंतु
मुद्यतामुनेसमर्थाःखलुभद्रमस्तुते ८ सपारिजातंयदिनप्रदास्यतिप्रयाच्यमानोभवतापुरंदरः ॥ ततःशचीव्यामृदितानुलेपनेगदांविमोक्ष्यामिपुरंदरोरसि ॥
९ उपेंद्रस्यमहेंद्रायंभ्रातुस्तेनिश्चयःपरः ॥ यदत्रमन्यसेन्याय्यंसंप्रधार्यकुरुष्वतत् १० 

मीत्यवावदीत् ॥ १ ॥ देवराजेति ॥ १ ॥ २ ॥ ३ ॥ हेतवःमहीतलंपारिजातमित्यादिनापूर्वोक्ताःनचावगतवान् ॥ नांगीकृतवान् ॥ ४॥ ५॥ ६॥ ७॥ ८॥ ९॥ १०॥

तत्त्वंहितंचदेवेशश्रूयतांवदतोमम ॥ नयनंपारिजातस्यद्वारकांममरोचते ११ नारदेनैवमुक्तस्तुसुव्यक्तंबलदेहभित् ॥ रोषाविष्टःसहस्राक्षोब्रवीदेतन्नरा
धिप १२ अनागसिमयिज्येष्ठेसोदरेयदिकेशवः ॥ एवंप्रवृत्तःकिंशक्यंकर्तुमद्यतपोधन १३ बहूनिप्रतिलोमानिपुरासकृतवान्मयि ॥ कृष्णोनारदसोढानि
भ्रातेतिस्ममयासदा १४ खांडवेचार्जुनरथंपुरावाहयतासता ॥ मदीयावारितामेवाःशमयंतोग्निमुद्धतम् १५ गोवर्द्धनंधारयताविप्रियंचकृतंमम ॥ त
थावृत्रवधेप्राप्तेसाहाय्यार्थंवृतोमया १६ समोहमितिसर्वेषांभूतानामितिचोक्तवान् ॥ स्वबाहुबलमाश्रित्यवृत्रश्चनिहतोमया १७ देवासुरेषुप्राप्तेषुसंग्रामे
षुचनारद ॥ युध्यत्यात्मेच्छयाकृष्णोमुनेसुविदितंतव १८ बहुनात्रकिमुक्तेनतस्माद्दिष्ट्याप्रवर्तताम् ॥ ज्ञातिभेदोननःकार्यःसाक्षीत्वंममनारद १९ ममो
रसिगदांमोक्तुमुद्यतोयदिकेशवः ॥ अनुशद्ध्याथपौलोमींगुणःकइहदृश्यते २० उदवासगतोधर्मान्पितानःकश्यपःप्रभुः ॥ अदित्यासहमेमात्रातयोर्वाक्य
मिदंभवेत् २१ अजितात्मामभ्रातारजसातमसावृतः ॥ कामेनचस्त्रियोवाक्यादेवमामुक्तवान्गुरुम् २२ धिक्स्त्रियःसर्वथाविप्रधिग्राजसमर्तिंतथा ॥
यत्राधिक्षिप्तवान्विष्णुरेवंमांस्त्रीजितोद्विज २३ नदृष्टंकश्यपकुलेव्यपदेश्यंमहामुने ॥ नैवदक्षकुलेदृष्टंमातुर्मेयत्रसंभवः २४ नज्येष्ठतानराजत्वंदेवानांप्रति
मानितम् ॥ कामरागाभिभूतेनकृष्णेनखलुनारद २५ पुत्रदारसहस्रैर्हिभ्रातानघविशिष्यते ॥ सद्वृत्तेज्ञानसंपन्नइतिब्रह्मापुराब्रवीत् २६ नास्तिभ्रातृस
मोबंधुराहार्यइतरोजनः॥ इतिमामब्रवीन्मातापिताचैवप्रजापतिः २७ सोदरेतुविशेषंतुपितामेकश्यपोब्रवीत् ॥ दृष्टामयाविरुद्धंतेदानवाःपापनिश्चयाः ॥
२८ काममेतन्नवक्तव्यंस्वयमात्मस्तवान्वितम् ॥ प्राप्तस्त्ववसरोविप्रयदिहाद्योच्यतेमया २९ धनुर्ज्यायांमुनिश्रेष्ठछिन्नायांहिपुरानघ ॥ धन्वीभिरमरा
णांचवरदानान्महामुने ३० उत्कृत्ताशिरसोविष्णोःपुरादेहोधृतोमया ॥ संधितेचशिरोयत्नाच्छिन्नंरौद्रेणतेजसा ३१ अहंविशिष्टोदेवानामित्युक्त्वापुनर
च्युतः ॥ धनुरारोप्यदर्पेणस्थितोनारदकेशवः ३२ किंमांपितावामातावावक्ष्यतीतिमयामुने ॥ स्नेहेनचस्थितंविष्णोःशरीरंमुनिसत्तम ३३ ऐंद्रंवैष्णव
मस्यैवमुनेभागमहंददौ ॥ यवीयांसमहंप्रेम्णाकृष्णंपश्यामिनारद ३४ संग्रामेषुप्रहर्तव्यंतेनपूर्वंतपोधन ॥ राजाकिलाहंसमरेप्रहराम्यग्रतोध्रुवम् ३५
प्रादुर्भावेषुसर्वेषुस्वशरीरमिवानघ ॥ यतोरक्ष्यामिधर्मज्ञकेशवंभक्तिमाश्रितम् ३६

॥ २५ ॥ २६ ॥ आहार्यःसंभोज्यःसंपाद्योवा ॥ २७ ॥ २८ ॥ २९ ॥ धनुर्ज्यायामितिशतपथोक्तइतिहासोवगमितः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ऐंद्रमेवाधिप
त्यंश्रावणभाद्रपदपूज्यत्वंवैष्णवंकृत्वाहंददौदत्तवान्नैचिन्त्येनात्रपरोक्षता ॥ ३४ ॥ अन्यत्रसमरेऽहमग्रतःप्रहरामियतोराजाप्रभुः ॥ ३५ ॥ ३६ ॥

॥ ३७ ३८ ॥ परिभाषितःआक्रुष्टः ॥ ३९ ॥ ४० ॥ केशवेत्येवेतिसंधिरार्षः ॥ ४१ ॥ ४२ ॥ सह्यंसोढव्यम् ॥ ४३ ॥ रथांगेनचक्रेण नंदकेनखड्गेन ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ पलाशपत्रार्धमिति त्वयाअजितःपारिजातस्यपलाशंपत्रमात्रंपत्रार्द्धंवानप्रदास्यतिवृक्षस्यकावार्त्तेत्यर्थः ॥ ४९ ॥ जिह्मतांकुटिलताम् ॥ ५० ॥

इदंभंक्त्वामदीयंचभवनंविष्णुनाकृतम् ॥ उपर्युपरिलोकानामधिकंभुवनंमुने ३७ अवमानःसचमयापृष्ठतःक्रियतेमुने ॥ लालनीयोमयाबालइत्येवंभ्रातृगौरवात् ३८ बालोयंममपुत्रेतियवीयानितिनारद ॥ पित्रामात्राचगोविंदोमानीचपरिभाषितः ३९ इष्टस्तत्रजनानांचकेशवःसुविशेषतः ॥ वयंद्वेष्या नसंदेहस्तत्रस्नेहोतिरिच्यते ४० सर्वज्ञोबलवाञ्छूरःपात्रंमानयितातथा ॥ केशवेत्येवचध्यानंयत्तद्वितथतांगतम् ४१ गच्छनारदवक्तव्यःकेशवोवचनान्मम ॥ आहूतोननिवर्तेयंसमरंप्रतिशत्रुभिः ४२ यदीच्छसितदागच्छसह्यंतेयत्त्वमिच्छसि ॥ प्रहरस्वचपूर्वंत्वंभार्याजितयदीच्छसि ४३ रथांगेनाथशार्ङ्गेणगदयानंदकेनच ॥ प्रहरारुह्यगरुडंदृढोभूत्वाजनार्दन ४४ प्रहृतेप्रहरिष्यामियथाशक्त्याचकेशव ॥ अहोधिग्यदिमांस्नेहोविक्लवंनकरिष्यति ४५ यावन्नसंग्रामगतोजितोहंचक्रपाणिना ॥ पारिजातंनदास्यामितावद्ब्रोमुनिसत्तम ४६ मांसमाह्वयतेज्येष्ठंयवीयान्सतपोधन ॥ अहंतंमर्षयिष्यामिकिमर्थंस्त्रीजितंहरिम् ४७ अद्यैवगच्छभगवन्द्वारकांकृष्णपालिताम् ॥ विवादेसंस्थितःसोज्ञइतिवाच्यस्त्वयाच्युतः ४८ पलाशपत्रार्द्धमपित्वयाजितोनपारिजातस्यतवप्रदास्यति ॥ इतिप्रवाच्योमधुसूदनस्त्वयावचोमदीयंस्मरतातपोधन ४९ पुनःप्रवाच्योभगवंस्त्वयाच्युतोममीप्रियार्थंखलुनिर्विशंकितम् ॥ नमाययाहर्त्तुमिहार्हसिद्रुमंसुयुद्धमेवास्तुधिगस्तुजिह्मताम् ॥ ५० ॥ ७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेइंद्रवाक्यंनामसप्ततितमोध्यायः ॥ ७० ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ महेंद्रवचनंश्रुत्वानारदोवदतांवरः ॥ विविक्तेदेवराजानमिदंवचनमब्रवीत् १ कामंप्रियाणिराजानोवक्तव्यानात्रसंशयः ॥ प्राप्तकालंतुवक्तव्यंहितमप्रियमप्युत २ अनियुक्तपुरोभागोनस्यादितिवदंतिहि ॥ सुलोकगतितत्त्वज्ञोनयविज्ञानकोविदः ३ कार्याकार्येसमुत्पन्नेपरिपृच्छतिमांभवान् ॥ यतस्ततःप्रवक्ष्यामिगृह्यतांयदिरोचते ४ अनुक्तेनापिसुहृदावक्तव्यंजानताहितम् ॥ न्याय्यंचप्राप्तकालंचपराभवमनिच्छता ५ वक्तव्यंसर्वथासद्भिरप्रियंचापियद्धितम् ॥ आनृण्यमेतत्स्नेहस्यसद्भिरेवाहृतंपुरा ६

॥ इतिहरिवंशेविष्णुपर्वणिटीकायांसप्ततितमोऽध्यायः ॥ ७० ॥ ७ ॥ अथैकसप्ततितमेध्यायेशक्रविनिश्चयं ॥ सनिर्बंधंहरेर्वक्तुंनारदोद्वारकांगतः ॥ १ ॥ महेंद्रेति ॥ १ ॥ ॥ २ ॥ अनियुक्तपुरोभागः अनाज्ञप्तःसन्पुरोवर्त्तीनभवेदितिनिश्चितम् ॥ ३ ॥ तथापि यतःभवानपिकार्याकार्येमांपृच्छतिततोहंअननुपृष्टोपितुभ्यंहितंवदामीत्यर्थः ॥ ४ ॥ ५ अप्रियंअतिकटुकमपिहितंपरिणामसुखं ॥ ६ ॥

अनृतइति त्वय्यनृतत्वाद्यभावात्त्वांप्रतिवदामीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ विपाकंफलम् ॥ १२ ॥ विश्वंकार्यंप्रधानंकारणंचअध्यास्तेअधितिष्ठतिरथ
मिवयंता प्रकृत्यामाययातत्क्षेत्रंकारणस्थूलसूक्ष्मदेहाख्यंप्रकाशयतीतिक्षेत्रज्ञत्वम् ॥ १३ ॥ अव्यक्तस्यअव्याकृतस्यव्यक्तोभागःकार्यंहिरण्यगर्भादिः यःसर्वभवोद्भवः सर्वसंसा
रबीजं तस्यात्माअंतर्यामीचेतयिता नकेवलंतस्यैवअपितुसर्वस्यधीमतःचेतनावतःजंतुमात्रस्येत्यर्थः १४ रुद्रादप्ययमनन्यइत्याह प्रकृत्याइति प्रकृत्याः चिच्छक्तेःप्रथमोमुख्यों
शःव्यक्तःदृश्यमात्राकारःविश्वस्त्रीसंज्ञःकृत्स्नभोग्यवस्तुसंज्ञइत्यर्थः अतएवलोकश्चेतनस्तस्यभावनःसंतर्पयिता ॥ १५ ॥ तस्याःप्रकृतेःप्रथमोगुणउमावत् गुणीउमयारुक्मिण्या

अनृतेधर्मभग्नेचनशुश्रूषतिचाप्रिये ॥ नप्रियंनहितंवाच्यंसद्भिरेवेतिनिंदिताः ७ सर्वथोदववक्तव्यंश्रूयतांशृण्वतांवर ॥ श्रुत्वाचकुरुसर्वज्ञममश्रेयस्करं
वचः ८ अन्योन्यभेदोभ्रातृणांसुहृदांवाबलांतक ॥ भवत्यानंदकृद्देवद्विषतांनात्रसंशयः ९ हितानुबंधसहितंकार्यंज्ञेयंसुरेश्वर ॥ विपरीतंचतद्बुद्ध्वानित्यं
बुद्धिमतांवर १० यत्स्यात्तापकरंपश्चादारब्धंकार्यमीदृशम् ॥ आरभेन्नैवतद्विद्वानेषबुद्धिमतांनयः ११ विपाकमस्यकार्यस्यनानुपश्यामिशोभनम् ॥ य
दत्रकारणंदेवनिबोधविबुधाधिप १२ यएकोविश्वमध्यास्तेप्रधानंजगतोहरिः ॥ प्रकृत्यायंपरंसर्वेक्षेत्रज्ञंवैविदुर्बुधाः १३ तस्याव्यक्तस्ययोव्यक्तोभागःसर्व
भवोद्भवः ॥ तस्यात्मापरमोदेवोविष्णुःसर्वस्यधीमतः १४ प्रकृत्याःप्रथमोभागउमादेवीयशस्विनी ॥ व्यक्तःसर्वमयोविश्वस्त्रीसंज्ञोलोकभावनः १५ रु
क्मिण्याद्याःस्त्रियस्तस्याव्यक्तत्वेप्रथमोगुणः ॥ अव्ययाप्रकृतिर्देवीगुणीदेवोमहेश्वरः १६ नविशेषोस्यरुद्रस्यविष्णोश्चामरसत्तम ॥ गुणिनश्चाव्ययःशा
स्तासदाचप्रथमोगुणः १७ नारायणोमहातेजाःसर्वकृल्लोकभावनः ॥ भोक्तामहेश्वरोदेवःकर्त्ताविष्णुरधोक्षजः १८ ब्रह्मादेवगणाश्चान्येपश्चात्सृष्टामहा
त्मना ॥ महादेवेनदेवेशप्रजापतिगणास्तथा १९ एवंपुराणपुरुषोविष्णुर्देवेषुपठ्यते ॥ अचिंत्यश्चाप्रमेयश्चगुणेभ्यश्चपरस्तथा २० अदित्यातपसावि
ष्णुर्महात्माराधितःपुरा ॥ वरेणच्छंदितातेनपरितुष्टेनचादितिः २१ तयोक्तस्त्वत्समंपुत्रमिच्छामीतिसुरोत्तम ॥ प्रणिपत्यचविज्ञायनारायणमधोक्षज
म् २२ तेनोक्तंभुवनेनास्तिमत्समःपुरुषोऽपरः ॥ अंशेनतुभविष्यामिपुत्रःखल्वहमेवते २३

वाउपहितोगुणीमहेश्वरःरुद्रोविष्णुर्वा ॥
॥ १६ ॥ तदेवाहनेतिअर्द्धेन गुणिनोमायाविनोरुद्रस्यविष्णोर्वाविशेषोभेदकोगुणोनास्ति अतोविष्णुनाद्राविंतत्वांरुद्रोपिनरक्षिष्यतीतिभावःगुणिनइतिसार्द्धश्लोकद्वयंवाक्यं
किंचतस्यगुणिनोपियःशास्ता अव्ययोऽपरिणामी प्रथमोऽध्यस्तात्पूर्वत्वादधिष्ठानस्ययतः अगुणो यः सएवनारायणः एतेनतुर्यमूर्तिर्नारायणइतिदर्शितम् साचब्रह्मविष्णुरुद्रेभ्य
एकैकगुणोपाधिभ्योऽन्यासर्वगुणोपाधिमयी तेनैवयोभोक्तारुद्रः कर्त्ताविष्णुः ब्रह्माचबुद्ध्यभिमानी देवाश्चइंद्रियाभिमानिनस्तेसर्वेसृष्टाइतियोजना ॥ १७ ॥ १८ ॥ १९ ॥
२० ॥ छंदिताअनुगृहीता २१ तयेतिपंचानांतात्पर्यं त्वद्भ्रातृत्वान्नतवायंसाधारणोऽपितुअकर्मजनितोदेवभावोऽस्यास्ति त्वंतुकर्मदेवत्वात्ततोनिकृष्टोसीत्यर्थः ॥ २२ ॥ २३ ॥

॥ २४ ॥ भूतस्यभव्यस्यचभवाप्ययउत्पत्तिप्रलयस्थानंसर्वजगदुपादानभूतइत्यर्थः ॥ २५॥ यएवंभूतः सएवसाक्षात्कृष्णइत्याह प्रादुर्भावमिति ॥२६॥ पललपिंडःमांसपिंडः ॥ २७ ॥ सर्वात्माव्यष्टिसमष्टिदेहेंद्रियाद्याकारस्तैस्तैर्भावैस्तत्तद्धर्मैर्विकुर्वतिविकारंप्राप्नोतिसर्वज्ञोहंदुःखयहमित्याद्यभिमानवान्भवतीत्यर्थः वस्तुतस्त्वतिगुणोगुणातीतः ॥ २८॥ ॥ २९ ॥ अनंतःशेषः धारणार्थंभुवइतिशेषः ॥ ३० ॥ श्वेतइति अत्र कलिःशयानोभवतिसंजिहानस्तुद्वापरः ॥ उत्तिष्ठंस्त्रेताभवतिकृतंसंपद्यतेचरान्नितिश्रुतेः ॥ योऽविद्यानिद्रायांशेतेतिमूढःसपुमान्कलिः तदनुग्रहार्थेअस्मिन्नुईश्वरःकृष्णःकृष्णावताररूपीभवति यःकिंचित्श्रेयोदर्शीअर्द्धप्रबुद्धःसद्वापरः तंप्रतिपीतवर्णःहिरण्यवन्मनोहरोभवति सकिंचिद्द

सजातःसर्वकृद्देवोभ्रातातवसुरेश्वर ॥ नारायणोमहातेजायमुपेंद्रंप्रचक्षते २४ इच्छन्नेवहरिर्देवकाश्यपत्वमुपागतः ॥ तैस्तैर्भावैर्विकुरुतेभूतभव्यभवाप्ययः २५ प्रादुर्भावंगतोदेवोजगतोहितकाम्यया ॥ माथुरंजगतोनाथःकर्ताहर्ताचकेशवः २६ यथापललपिंडःस्याद्व्याप्तःस्नेहेनमानद ॥ तथाजगदिदंव्याप्तंविष्णुनाप्रभविष्णुना २७ ब्रम्हण्यदेवःसर्वात्मातैस्तैर्भावैर्विकुर्वति ॥ जगत्यतिगुणोदेवोवैकुंठःसर्वभावनः २८ अतःसमस्तदेवानांपूज्यएवचकेशवः ॥ पद्मनाभश्चभगवान्प्रजासर्गकरोविभुः २९ अनंतोधारणार्थंचबिभर्तिचमहद्यशः ॥ यज्ञइत्यपिसद्भिश्चकथ्यतेवेदवादिभिः ३० श्वेतःकृतयुगेदेवोरक्तस्त्रेतायुगेतथा ॥ द्वापरेचतथापीतःकृष्णःकलियुगेविभुः ३१ अवधीत्सहिरण्याक्षंदिव्यरूपधरोहरिः ॥ दधाराप्सुनिमज्जंतीमेषदेवोवसुंधराम् ३२ वाराहंवपुराश्रित्यजगतोहितकाम्यया ॥ जघ्नेहिरण्यकशिपुंनारसिंहवपुर्हरिः ३३ जिगायजगतींचैवविष्णुर्वामनरूपधृक् ॥ बबंधचबलिंदेवःश्रीमान्पन्नगबंधनैः ३४ देवदानवसंभूतामाक्रामयदपिश्रियम् ॥ त्वय्यनंतःपुराविष्णुरुदारोमितविक्रमः ३५ सावशेषंतपोयस्यतन्निहंतिजनार्दनः ॥ अलीकेष्वपिवर्ततंव्रतमेतन्महात्मनः ३६ जघ्नेचदानवान्मुख्यान्देवानांयेचशत्रवः ॥ तवप्रियार्थंगोविंदोधर्मनित्यःसतांगतिः ३७ रामत्वमपिचावाप्यजघ्नेरावणमात्मवान् ॥ भूत्वाकामगुणांश्चैवजघानद्विरदंहरिः ३८ हितायजगतोद्यापिलोकेवसतिमानुषे ॥ उपेंद्रोजगतांनाथःसर्वभूतोत्तमोत्तमः ३९ जटीकृष्णाजिनीदंडीदृष्टपूर्वोमयाहरिः ॥ दैतेयेषुचरन्देवस्तृणेष्वग्निरिवोद्धतः ४०

त्युन्मुखोभवतीत्यर्थः यस्तुश्रेयोर्थेयततेसत्रेता तदनुग्रहार्थेरक्तोऽनुरक्तोमातृवद्भवति यस्तुयुधिष्ठिरादिवदत्यंतंभक्तस्सकृतंतंप्रतिशुक्लः स्वीयंशुद्धमेवरूपंप्रकाशयतीति यथाश्रुतव्याख्यानंतुसर्वेषुयुगेषुसर्वेषांरूपाणांसत्वान्नयुज्यतइतिदिक् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ देवानांदानवानांचयत्नसंभूतांसाधारणीमपिश्रियंत्वयित्वन्निमित्तंआक्रामयत्आक्रांतवान् ॥ ३५ ॥ अलीकेषुमायासुवर्तमानमपिहंत्येवेत्यर्थः ॥ ३६ ॥ ३७ ॥ भूत्वाआविर्भूयतेष्ववतारेषु कामगुणान्यथेष्टंशौर्यादिगुणयुक्तानसुरान्हारिर्द्विरदंसिंहोगजानिवजघानद्विरदमित्येकत्वमार्षलुप्तोपमाच ॥ ३८ ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ वृद्धानांवृद्धवाक्यानाम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ पुरातनेवामनावतारेकिंनारब्धंनांगीकृतमपि

अद्राक्षमपिगोविंदंदानवैकार्णवंजगत् ॥ कुर्वाणंदानवैर्हीनंजगतोहितकाम्यया ४१ अवश्यंपारिजातंतेनयिष्यतिजनार्दनः ॥ द्वारकाममरश्रेष्ठनानृतंचब्र
वीम्यहम् ४२ भ्रातृस्नेहाभिभूतस्त्वंनकृष्णेप्रहरिष्यसि ॥ नातिकृष्णस्त्वपिज्येष्ठेप्रहरिष्यतिवासव ४३ नैवचेच्छ्रोष्यतिप्रोक्तंमयादेवकथंचन ॥ पृच्छ
त्वंनयधर्मज्ञान्येहितास्तवमंत्रिणः ४४ वैशंपायनउवाच ॥ नारदेनैवमुक्तस्तुमहेंद्रोजनमेजय ॥ इदमुत्तरमीशोथप्रत्युवाचजगद्गुरुम् ४५ एवंविधप्रभावं
त्वंकृष्णंवदसियद्द्विज ॥ एवमेतत्सुबहुशःश्रुतंखलुमयामुने ४६ यतश्चैवंविधःकृष्णस्ततोहंतस्यवैतरुम् ॥ नप्रदास्यामिदातव्यंसतांधर्ममनुस्मरन् ४७
महाप्रभावोनाल्पार्थैरुष्येदितिविचिंतयन् ॥ व्यवस्थितोहंभद्रंतेमुनेसर्वगुणादिति ४८ महाप्रभावाःसततंभवंतिहिसहिष्णवः ॥ श्रोतारश्चैवसततंवृद्धा
नांज्ञानचक्षुषां ४९ महात्माकारणेनाल्पेकृष्णोधर्मभृतांवरः ॥ भ्रात्राज्येष्ठेनसर्वज्ञोविरोधंगंतुमर्हति ५० यथैवममुमातुःसवरंप्रादादधोक्षजः ॥ तथैवत
स्याःपुत्राणांज्येष्ठानांसोढुमर्हति ५१ यथैवोपेंद्रतांयातःस्वयमिच्छन्जनार्दनः ॥ तथैवभ्रातुरिंद्रस्यसन्मानंकर्तुमर्हति ५२ ज्यैष्ठ्यमेतेनदेवेननारब्धंकिं
पुरातने ॥ अथेदानीमपीच्छेत्सज्येष्ठोस्तुमधुसूदनः ५३ सुनिश्चितंबलरिपुमीक्ष्यनारदोविसर्जितस्त्रिदशवरेणधर्मभृत् ॥ ययौपुरींयदुवृषभाभिरक्षितांकु
शस्थलींधृतिमतिमांस्तपोधनः ॥ ५४ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेनारदस्यस्वर्गात्पुनरागमनंनामैकसप्ततितमो
ऽध्यायः ॥ ७१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ अथैत्यद्वारकांरम्यांनारदोमुनिसत्तमः ॥ ददर्शपुरुषश्रेष्ठंनारायणमरिंदमम् १ स्ववे
श्मनिसुखासीनंसहितंसत्यभामया ॥ विराजमानंवपुषासर्वतेजोतिगामिना २ तमेवार्थंमहात्मानंचिंतयंतंदृढव्रतम् ॥ केवलंयोजयंतंचवाक्यमात्रेणभा
विनीम् ३ दृष्ट्वैवनारदंदेवःप्रत्युत्थायअधोक्षजः ॥ पूजयामासचतथाविधिदृष्टेनकर्मणा ४ सुखोपविष्टंविश्रांतंप्रहस्यमधुसूदनः ॥ वृत्तांतंपरिपप्रच्छपारि
जाततरुंप्रति ५ अथाचष्टमुनिःसर्वंविस्तरेणतपोधनः ॥ इंद्रानुजायेंद्रवाक्यंनिखिलंजनमेजय ६ श्रुत्वाकृष्णस्तुतत्सर्वंनारदंवाक्यमब्रवीत् ॥ अमरावतीं
पुरींयास्येश्वोहंधर्मभृतांवर ७ इत्युक्त्वानारदेनैवसहितःसागरंययौ ॥ संदिदेशततस्तत्रविविक्तोनारदंहरिः ८ महेंद्रभवनंगत्वाअद्यब्रूहितपोधन ॥ अ
भिवाद्यमहात्मानंमद्वाक्यममरोत्तमम् ९

लारब्धमेव ५३ ॥ ५४ ॥ इतिश्रीहरिवंशेविष्णुपर्वणिटीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ द्विसप्ततितमेध्यायेज्ञात्वेंद्रस्यविचेष्टितम् ॥ कश्यपोरुद्रमस्तौषीत्सोमइ
त्यभिधीयते ॥ १ ॥ अथैत्येति ॥ १ ॥ २ ॥ योजयंतं भाविनींसत्यभामाम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ अहोएतदारब्धंकृत्यंधिगितिकृत्यनिंदयाकृत्यवंतमेवधिक्करोतीतिद्वयोःसंबंधः ॥ १३ ॥ अनाख्यात्वाअपृष्ट्वाआर्षोल्यबभावः ममप्रति ॥ १४
॥ १५ ॥ लाघवंपराजयं ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सदृशींआत्मवच्छ्रुद्धांदेवशर्मणोगौतमगोत्रस्यभार्यांअहल्यांइच्छतः अन्यायेनकामयानस्यशतक्रतोरुपरिएव

नयुद्धेप्रमुखेशक्रस्थातुमर्हसिमेप्रभो ॥ पारिजातस्यनयनेनिश्चितंत्वमवेहिमां १० एवमुक्तस्तुकृष्णेननारदस्त्रिदिवंगतः ॥ आचचक्षेथकृष्णोक्तंदेवेंद्रस्या
मितौजसः ११ ततोबृहस्पतेःशक्रःशशंसबलनाशनः ॥ श्रुत्वाबृहस्पतिर्देवमुवाचकुरुनंदन १२ अहोधिग्ब्रह्मसदनंमयियातेशतक्रतो ॥ दुर्नीतमिदमा
रब्धमत्रभेदोहिदारुणः १३ अनाख्यात्वाकथंनामभवताभुवनेश्वर ॥ ममैतत्कृत्यमारब्धंदेवकेनापिहेतुना १४ अथवाभवितव्येनकर्मजेनप्रयुज्यते ॥
जगद्दृत्रघ्नविविधंनशक्यमनिवर्तितुम् १५ सहसैवतुकार्याणामारंभोनप्रशस्यते ॥ तदेतत्सहसारब्धंकार्यंदास्यतिलाघवम् १६ बृहस्पतिंमहात्मानंमहेंद्रस्त्व
ब्रवीद्वचः ॥ एवंगतेद्ययत्कार्यंतद्भवान्वक्तुमर्हति १७ तमुवाचाथधर्मात्मागतानागततत्त्ववित् ॥ अधोमुखश्चिंतयित्वाबृहस्पतिरुदारधीः १८ यतस्वस
हपुत्रेणयोधयस्वजनार्दनं ॥ तथाशक्रकरिष्यामियथान्याय्यंभविष्यति १९ बृहस्पतिस्त्वेवमुक्त्वाक्षीरोदंसागरंगतः ॥ आचष्टमुनयेसर्वंकश्यपायमहा
त्मने २० तच्छ्रुत्वाकश्यपःक्रुद्धोबृहस्पतिमभाषत ॥ अवश्यंभाव्यमेतद्धोःसर्वथानात्रसंशयः २१ इच्छतःसदृशींभार्यांमहर्षेर्देवशर्मणः ॥ अपध्यानकृतो
दोषःपतत्येषशतक्रतोः २२ तस्यदोषस्यशांत्यर्थमारब्धश्चमुनेमया ॥ उदवासःसदोषश्चप्राप्तएवसुदारुणः २३ तद्गमिष्यामिमध्येस्यसहादित्यातपोधन ॥
उभौतौवारयिष्यामिदेवंसंवदतेयदि २४ बृहस्पतिस्तुधर्मात्मामारीचमिदमब्रवीत् ॥ प्राप्तकालंत्वयातत्रभवितव्यंतपोधन २५ तथेतिकश्यपश्चोक्त्वा
संप्रस्थाप्यबृहस्पतिम् ॥ जगामार्चयितुंदेवंरुद्रंभूतगणेश्वरम् २६ तत्रसौम्यंमहात्मानमानर्च्यवृषभध्वजम् ॥ वरार्थीकश्यपोधीमानदित्यासहितःप्रभुः
२७ तुष्टावचतमीशानंमारीचःकश्यपस्तदा ॥ वेदोक्तैःस्वकृतैश्चैवस्तवैस्तुष्टंजगद्गुरुम् २८

दोषः पराभवरूपः मुनेः अपध्यानजः मानुषंभावमगणयतस्तव मानुषाद्भयंमहद्भविष्यतीतिमुनेरपध्यानंतज्जः २२ यद्यप्यारब्धःतथापिप्राप्तएवेत्यध्याहृत्ययोज्यम् ॥ २३ ॥
अस्याविरोधस्यमध्येगमिष्यामिमध्यस्थोभूत्वावारयिष्यामीत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ वेदोक्तैःस्वकृतैःस्वकृतिमिश्रैः ॥ २८ ॥

तानेवाहउरुक्रममित्यादिनाद्वात्रिंशद्भिःश्लोकैः उरुक्रममितिविष्णोर्विशेषणम् उरुर्महान्त्रैलोक्याक्रमणसमर्थःक्रमःपादविक्षेपोयस्यसइतियोगात्नचैतद्वामनस्यैवरुद्रोविष्णवभेद मंतरेणसंगच्छते अभेदश्चतयोर्बिंबप्रतिबिंबभावेनवा शास्त्रदृष्ट्याचेत्यन्यदेतत् एकस्यैवविश्वेश्वरस्य सर्वाणिनामानीत्येवतत्त्वं विश्वंकर्मकृतिसाध्यंयस्येतिकुलालवन्निमित्तत्वमुक्तं जगत्स्रष्टारमितिकालादिसाधारणकारणरूपत्वम् धर्मदृश्यंपुण्यप्राप्यंवरेशंअनुग्राहकंकर्मकर्तॄणां समित्युपसर्गस्यनमस्येइत्यनेनसंबंधः संनमस्येइत्यर्थः वेदेव्यवहिताश्चेतिधातूप सर्गयोर्व्यवहितत्वस्मरणात् सर्वंसर्वात्मकम् धृतिमद्धाम धृतिःसात्त्विकी धृत्यायया धारयतेमनःप्राणेंद्रियक्रियाः योगेनाव्यभिचारिण्याधृतिःसापार्थसात्त्विकीत्येवंलक्षणा तद्वतांधा मस्वप्रकाशचैतन्यरूपमधिष्ठानंयोगिनांनिलयमित्यर्थः ॥ २९ ॥ आपःपुरुषवचसोभवंतीतिश्रुतेरपांकार्यंशरीरंआपः उपाधिः ससर्वोयस्यगर्भंप्रतिबिंबचैतन्यरूपंधारयिष्यःदधाति आपोगर्भइतिपाठेपिधारयिष्यः आपोपियस्यगर्भः संकल्पोत्थस्तरंगइत्यर्थः॥ ३० ॥ शालेति अरुन्मुखान्यतीन्शालावृकेभ्यःप्रयच्छामितिश्रुतेः वेदांतविचारहीनमजितेंद्रियंयाति

कश्यपउवाच ॥ ॥ उरुक्रमंविश्वकर्माणमीशंजगत्स्रष्टारंधर्मदृश्यंवरेशम् ॥ ससर्वंत्वांधृतिमद्धामदिव्यंविश्वेश्वरंभगवंतंनमस्ये २९ योदेवानामधिप- पापहर्तातंतंविश्वंयेनजगन्मयत्वात् ॥ आपोगर्भंयस्यशुभाधरित्र्योविश्वेश्वरंतंशरणंप्रपद्ये ३० शालावृकान्योयतिरूपोनिजघ्नेदत्तानिंद्रेणप्रणुदोहि तानाम् ॥ विरूपाक्षंसुदर्शनंपुण्ययोनिंविश्वेश्वरंशरणंयामिमूर्ध्ना ३१ भुंक्तेयएकोविभुर्जगतोविश्वमग्र्यंधाम्नांधामसुकृतित्वान्नधृष्यः ॥ पुष्यात्समांम हसाशाश्वतेनसोमपानांमरीचिपानांवरिष्ठः ३२ अथर्वाणंसुशिरसंभूतयोनिंकृतिनंवीरंदानवानांचबाधम् ॥ यज्ञेहुतिंयज्ञियंसंस्कृतंवैविश्वेश्वरंशरणंयामिदे वम् ३३ जगज्जालंविततंयत्रविश्वंविश्वात्मानंप्रीतिदेवंगतानाम् ॥ यऊर्ध्वगंरथमास्थाययातिविश्वेश्वरःसुमनामेस्तुनित्यम् ३४ अंतश्चरंरोचनंचारुशाखं महाबलंधर्मनेतारमीड्यम् ॥ सहस्रनेत्रंशतवर्माणमुग्रंमहादेवंविश्वसृजंनमस्ये ३५

मिंद्रःशालावृकैर्भक्षयति तानिंद्रियशालावृकान्यः यतिरूपोजितेंद्रियःसन्निजघ्नेहतवान् हितानांशमदमादिरूपाणांमित्राणांप्रणुदःप्रणोदनपरान्अभिभावकान् यामिशरणंमूर्ध्नाच प्रपद्येनमस्करोमि ॥ ३१ ॥ यएकोजगतोविभुःस्वामी अग्र्यंज्येष्ठंविश्वंशुद्धान्जनान्भुंक्तेभुनक्तिपालयति अग्र्यंसूक्ष्ममपिविश्वंभुंक्तेसंहरतिवा धाम्नांचक्षुःसूर्यादीनांधामप्रकाशं सुकृतित्वात् तस्मात्तत्सुकृतमुच्यतइतिश्रुतेः सुकृतशब्दितब्रह्मरूपत्वात्नधृष्यःअभयरूपइत्यर्थःपुष्यात्पोषयेत् सोमपानांकर्मठानांमरीचिपानांचंद्ररश्मिपानमात्रेणवर्तयतांम हामुनीनांवरिष्ठःस्वर्गब्रह्मलोकादिस्थानप्रदइत्यर्थः ॥ ३२ ॥ अथर्वाणंअथर्ववेदप्रतिपाद्यं सुशिरसंशिरःपंचकोशेति भूतयोनिंजगत्कारणं बाधंबाधकं ॥ ३३ ॥ यत्राधिष्ठानेज गज्जालंजगदिंद्रजालंविततंविश्वंकृत्स्नं गतानांशरणंप्राप्तानांप्रीतिदेवंसुखप्रकाशकं यत्यः ऊर्ध्वगंअंतरिक्षचरंरथंवाहनंआस्थाययातिसंचरति सुमनाःसुखकरः ॥ ३४ ॥ रोच नंचिन्मयं चारुशाखंरमणीयाःशाखावेदमयायस्मात्जातास्तं शतवर्माणंशतपथविहितकर्मफलप्रदम् ॥ ३५ ॥

शुचिंअसंगं योगंयोगमाप्यं शंसनंवेदप्रशस्यं शर्वंशृणोातिहिनस्तीतिसंहर्तारं शंभुंसुखहेतुं शंकरंसुखकरं धुरंधरंजगतामितिशेषः चंद्रचिह्नंचंद्रमौलिं हृषीकाणांहिंस्राणांकाला दीनांअयनंआश्रयम् ॥ ३६ ॥ आशुः शीघ्रफलप्रदं शिशानंरागादिदोषाणांतनूकरणं वृषभंशमादिगुणानांवर्षकं रोरुवाणंप्रातःसवनादिक्रमेणगर्जंतं कृतंअनुष्ठितं धर्मंय ज्ञादिरूपं शिष्यतइतिशेषोपूर्वंधर्मजंपुण्यंआशुफलभोगेनशीघ्रनाशशीलःशेषोयस्यतं अतएवचाल्पफलत्वाद्वितथंनिष्फलप्रायं एवंसति नानुष्ठेयोधर्मइत्यतआह वसुंधरंसमृजीकं मृजीकासत्वशुद्धिस्तदुद्देशेनतयासहक्रियमाणंसमृजीकंअतएववसुंधरंकर्मजंपुण्यंवसुतस्यधारकं अफलोदयंशुद्ध्यर्थंकृतोधर्मोननश्यतीत्यर्थः समंबुद्ध्यवधिभूतंसर्वस्वरूपामित्य र्थः ॥३७॥ धृतकर्मफलप्रतिभुवंयज्ञाशेषंदेवतांतरवत् यज्ञांगभावहीनं ज्ञातंसंतंस्वतःपुरुषार्थभूतमित्यर्थः एवंसत्यपियजतांअभियाज्यंइज्यारंभविषयं यतोहविर्भुजं भुवनानांजग तीस्थानांजगतांवाज्येष्ठं द्विजंब्राह्मणरूपंधर्मभृतांमध्ये॥३८॥गुणेभ्यइंद्रियादिभ्यःपरंतुरीयं पृश्निगर्भःविष्णुस्तत्स्वरूपं शयःअश्नुतेइतिव्यापकं शृंगंप्रपंचंव्याप्यापिशृंगवत्ततोरिक्तं

शुचिंयोगंशंसनंशांतपापंशर्वंशंभुंशंकरंभूतनाथं ॥ धुरंधरंगोपतिंचंद्रचिह्नंहृषीकाणामयनंयामिमूर्ध्ना ३६ आशुःशिशानंवृषभंरोरुवाणंकृतंधर्मंवितथं चाशुशेषं ॥ वसुंधरंसमृजिकंसमंत्वांधृतव्रतंशूलधरंप्रपद्ये ३७ अनंतवीर्यंधृतकर्माणमाद्यंयज्ञाशेषंयजतांचाभियाज्यं ॥ हविर्भुजंभुवनानांसदैवंज्येष्ठंद्विजं धर्मभृतांप्रपद्ये ३८ परंगुणेभ्यःपृश्निगर्भस्वरूपंयशःशृंगंव्यूहनंकांतरूपं ॥ शुद्धात्मानंपुरुषंसत्यधामंसंमोहनंदुष्कृतिनांनमस्ये ३९ युक्तोंकारंस्वशिरसं चारुकर्मदृढव्रतंदृढधन्वानमाजं ॥ शूरंवेत्तारंधनुषोस्त्रातिरेकंपतिंपशूनांशमनंनमस्ये ४०एकोरातिश्चैवभूतंभविष्यंसर्वातिथिर्योहिजुषत्यरिघ्नः ॥ अरिंतुदोनु त्तमःसंविभागीविभाजकोमांभगवान्पातुदेवः ४१ यएकोयातिजगतांविश्वमीशोयएकोदान्मरुतांप्राणमग्र्यंम् ॥ येनानृशंस्याच्छाश्वतंसामजुष्टंस्समांजु ष्यात्सुकृतिश्रेयसेद्य ४२ ब्रह्मासृजद्योभुवनोत्तमोत्तमंतृप्तोविद्वान्ब्राह्मणःषड्गुणस्य ॥ सृष्ट्वारसंव्याहृतिरस्थंसमग्रंसमायादिहबहुरूपोरिहांगैः ॥ ४३ ॥

व्यूहनंमरणीयतयाजगत्क्षोभकं सत्यधामंअबाधितचैतन्यस्वरूपं संमोहनंमायाविनम् ॥ ३९ ॥ युक्तानांयोगिनांओंकारंसर्वप्रपंचरूपं स्वशिरसंओंकारस्यापिशिरोर्द्धमात्रातद्रूपं चारुकर्महिंसाशून्यधर्मस्वरूपं आजंक्षेपणक्रियारूपं शूरं धनुषोवेत्तारंअस्त्रातिरेकंसर्वास्त्रेभ्योधिकंपशूनांजीवानांशमनंसंहर्तारं ॥ ४० ॥ एकोद्वितीयःरातिर्मित्रं सर्वातिथिरग्निः जुषतिहाविर्भुंक्ते अरिघ्नःकामादिदोषघ्नःअरिंतुदःरक्षोघ्नः संविभागीविभागभाग्विभाजकश्च ॥ ४१ ॥ जगतांईशएकोपिबिंबंजलचंद्रवत्यातिप्रविशाति मरुतांप्राणमदात्प्राण स्यप्राणमित्यर्थः आनृशंस्यात्दयालुत्वात् साममैत्रीजुष्टंसेवितं जुष्यान्नयतु ॥ ४२ ॥ ब्रह्माचतुर्मुखःभुवनोत्तमोत्तमंसत्यलोकंअसृजत् यतःब्राह्मणःब्रह्मवित् अतएवषड्गुण स्यषड्भिर्गुणैःऐश्वर्यज्ञानयशःश्रीवैराग्यधर्मैस्तृप्तःपूर्णः पूर्णत्वादेवव्याहृतिरस्थंरसंप्रणवंतदर्थभूतंकृत्स्नंप्रपंचंसृष्ट्वाइहप्रपंचेआयात्प्राविष्टः अरिहाकामादिदोषघ्नः अंगैः सर्वज्ञतातृप्तिरनादिबोधःस्वतंत्रतानित्यमलुप्तशक्तिःअनंतशक्तिश्चविभोर्विभुज्ञाःषडाहुरंगानिमहेश्वरस्येतिपुराणोक्तैर्बहुरूपः ॥ ४३ ॥

व्यंजनःअतींद्रियाणामपींद्रियादीनामर्थानांज्ञापकः अजनोअजन्मा समग्रःदृग्दृश्यात्मा स्पृशिःविषयस्पृक् शंभुःतत्स्पर्शजसुखभोक्ता प्राणदःजीवनकृत् ध्रुवोरसःपरमानंदःपव
मानस्यवायोर्भर्ताप्राणपतिःसपत्नीशः पत्नीशाभ्यांसहितःयज्ञादिकृत् शंकरस्तत्फलकरःसारस्यबोधस्यच्चधाताजनयिता ४४ त्र्यंबकंत्रिनेत्रं वोयुष्माकं विप्राणांज्ञानिनाम् ॥४५॥
आस्यंअग्निरूपेण त्रिवृत्सोमं त्रिवृदादयःस्तोमाःस्तोत्राणियस्मिंस्तंसोमयागं वृक्षहंसंसारवृक्षघ्नं कर्मसाक्ष्यंकर्मसाक्षिणं भूतायनंभूतानांलयस्थानं ॥ ४६ ॥ साम्यंप्रकृत्यत्रस्था
वेदव्रतेषुवेदोक्तयज्ञेषुबहुधानानादैवतरूपेणगीतंअभित्रिविष्टपंस्वर्गंव्याप्यईशंनियंतारं ॥ ४७ ॥ महाजिनंगजाजिनवंतं मेखलालंमेखलयाअलंकृतं सुतोषणंअल्पायासप्रसन्नं
भूतंनित्यसिद्धं अतएवक्षेत्रज्ञंदेहेंद्रियाहंकारादिप्रकाशकं वंदनंवंदनीयंवंदनानांवंदनीयानां ॥ ४८ ॥ कृतिंकृतीनां यज्ञानांयज्ञं यज्ञियानामपियष्टव्यमित्यर्थः शतात्मानंअनंत

व्यंजनोजनोथविद्वान्समग्रःस्पृशिःशंभुःप्राणदःकृत्तिवासाः ॥ रसोध्रुवःपवमानस्यभर्तासपत्नीशःशंकरःसारधाता ॥ ४४ ॥ त्र्यंबकंपुष्टिदंवोब्रुवाणंधर्मंवि
प्राणांवरदंयज्वनांच ॥ वराद्वरंरणजेतारमीशंदेवंदेवानांशरणंयामिरुद्रं ४५ आस्यंदेवानामंतकंदुष्कृतीनांत्रिवृत्स्तोमंवृक्षहंकर्मसाक्ष्यम् ॥ भूतायनंभूतपतिं
गुणज्ञंगुणाकारंशरणंयामिरुद्रम् ४६ अनुद्भूतंयज्ञकर्तारमंतंमध्यंचाद्यंयज्ञकृतांसाम्यरूपम् ॥ वेदव्रतेषुबहुधागीतमीशमभित्रिविष्टपंशरणंयामिरुद्रम् ॥
४७ महाजिनंव्रतिनंमेखलालंसुतोषणंक्रोधधवंविपापं ॥ भूतंक्षेत्रज्ञंगुणिनंवाकपर्दिनंनतोस्मीशंवंदनंवंदनानाम् ४८ देवंदेवानांपावनंपावनानांकृतिंकृ
तीनांमहतोमहांतम् ॥ शतात्मानंसंस्तुतंगोपतीनांपतिंदेवंशरणंयामिरुद्रम् ४९ अंतश्चरंपुरुषंगुह्यसंज्ञंप्रभास्वंतंप्रणवंविप्रदीपम् ॥ हेतुंपरंपरमस्याक्षर
स्यशुभंदेवंगुणिनंसन्नतोस्मि ५० प्रसूतिरुभयोर्नप्रसूतश्चसूक्ष्मःपृथग्भूतेभ्योनपृथक्कैकभूतः ॥ स्वयंभूतःपातुमांसर्वसादःप्रदःस्वादःसंमदःपातुरत्नम् ५१
आसन्नःसन्नतरःसाधनानांश्रद्धावतांश्राद्धवृत्तिप्रणेता ॥ पतिर्गणानांमहतांसत्कृतीनांपायान्मेषःपूरणःषड्गुणानाम् ५२

मूर्तिं गोपतीनांइंद्रियाधिष्ठातृदेवनानांसंस्तुतंअधिष्ठातृत्वेन चक्षुषश्चक्षुरित्यादिश्रुतेः ॥ ४९ ॥ प्रभास्वंतंस्वप्रकाशं विप्रदीपंज्योतिरपिसूर्यादिकंज्योतिरंतरेणचक्षुरादिनाभास्यं
भवतिइदंतुनतथाविगतप्रदीपत्वात् अक्षरस्यजीवाख्यप्रतिबिंबस्यहेतुंबिंबभूतं ॥ ५० ॥ उभयोः जगज्जीवयोःप्रसूतिर्योनिःनप्रसूतश्चयोनिरपिन कारणातीतत्वात् अतएवसूक्ष्मो
दुर्ग्राह्यः भूतेभ्यःपृथक्नपृथक्एकभूतश्च पृथगितितदधिष्ठानत्वात् एकभूतइतितदभेदाग्रहात् स्वयंभूतःसर्वजगदाकारेणनिष्पन्नः सर्वंसीदतिलीयतेस्मिन्निितिसर्वसादः प्रदः
प्रकृष्टोदाता स्वादःरुचिःआम्रादिषुमाधुर्यरूपेणायमेवास्तीत्यर्थः संतदोहर्षःरत्नंरमणीयं ॥ ५१ ॥ आसन्नःअंतर्यामित्वेनानिकटगः साधनानांतद्वतांतुसन्नतरःअनावृतःश्राद्ध
वृत्तिःश्रद्धागृहीतमहावाक्यजावृत्तिरहंब्रह्मास्मीतिज्ञानंतस्यप्रदाता मामां ईषःइष्यमाणस्यार्थस्यपूरणःषड्गुणानांचसर्वज्ञत्वादीनांपूरणः ॥ ५२ ॥

अंतर्वहिर्वृजिनानांआधिव्याध्यादीनांकामक्लेशादीनांवा स्वयंकर्तेतिनिमित्तकारणत्वं भूताकारेणभवितुंशीलमस्येतिभूतभावीउपादानं विकुर्वन्विकारंप्राप्नुवन्क्रोधादीन्आवि
ष्कुर्वन् सुकृतिनांसाधूनांमेममचवृजिनंप्रणुद्यात् ॥ ५३ ॥ उद्धृताःकंटकवत्नाशिताः शरेणयतोदग्धाअतोवितथांताःविफलमरणाःअशस्त्रपुतत्वात्पूरदाहेनदग्धत्वादित्यर्थः
शापादीशइतिपाठेइंद्रस्यगौतमशापात विश्वस्यसर्वस्यउदस्यउदकस्यसर्वकारणस्यप्रधानस्येत्यर्थः धाताधारकःसर्वाश्रयत्वात् ॥ ५४ ॥ भागीयसांअतिशयेनभागभाजांदेवानांभा
गंअंतंअपमानेनवधंचइच्छन्दाक्षोयज्ञकृद्दक्षइतिवक्तव्येउपचारादुक्तंयेनकृत्तोवच्छिन्नःसन्नन्वधावत्यज्ञेशंशरणंआजगामेत्यर्थःतत्रयज्ञवाक्यमुदाहरतिविद्वानिति ॥५५॥ योजग
त्स्रष्टाऽत्तिअतिगुह्योगोप्योब्रह्मरूपीईश्वरस्ततोन्योविष्णुःपालनकर्तासचधन्यःमहाभागःयतः संस्कृतःशमादिसंस्कारयुक्तोऽतएवउत्तमोयःसमौदार्यःसमांमुखप्रभवत्वान्मुखादिं
द्रश्चाग्निश्चेतिश्रुतौइंद्राग्नीतौप्रमुखेआदौयस्यतस्मिन्यज्ञे नित्यंचिन्वानईश्वरंस्वाभेदेनसर्वत्रपश्यन्नारायणःसमांपातुमत्संततिमिंद्रंरक्षतु यतःषड्गुणानामैश्वर्यादीनांप्रथमोमुख्य

अंतर्बहिर्वृजिनानांनिहंतास्वयंकर्ताभूतभावीविकुर्वन् ॥ धृतायुधःसुकृतिनामुत्तमौजाप्रणुद्यान्मेवृजिनंदेवदेवः ५३ येनोद्धृतास्त्रैःपुरामायिनोवैदग्धाघो
रेणवितथांताःशरेण ॥ महत्कुर्वंतोवृजिनंदेवतानांज्यायानीशःपातुविश्वोदधाता ५४ भागीयसांभागमतोंतमिच्छन्मखोदाक्षोयेनकृत्तोन्वधावत् ॥
विद्वान्यज्ञस्यादिरथांतःसदेवःपायादीशोमांदक्षयज्ञांतहेतुः ५५ अन्योधन्यःसंस्कृतश्चोत्तमश्चजगत्स्रष्टायोत्तिसर्वातिगुह्यः ॥ समांमुखप्रमुखेपातुनित्यंवि
चिन्वानःप्रथमःषड्गुणानाम् ५६ गुणत्रैकाल्यंयस्यदेवस्यनित्यंसत्त्वोद्रेकोयस्यभावात्प्रसूतः॥गोप्तागोप्तॄणांसन्नदोदुष्कृतीनामाद्योविश्वस्यबाधमानस्यक्रुद्धः॥
५७ धाम्नोयस्यहरिरग्रोऽथविश्वोब्रह्मापुत्रैःसहितश्चद्विजाश्च ॥ पराभूताभवनेयस्यसोमोजुषत्वेषःश्रेयसेसाधुगोप्ता ५८ यस्माद्भूतानांभूतिरंतोथमध्यंधृति
र्भूतिर्यश्चगुहाश्रुतिश्च ॥ गृहाभिभूतस्यपुरुषेश्वरस्यमहात्मनःसंमृडवेद्यस्यतस्य ५९

आश्रयइत्यर्थःमखप्रमुखेइति
पाठेऽग्निविष्णू ॥ ५६ ॥ गुणत्रैकाल्यंकार्योत्पत्तिस्थितिसंहारसमयवत्त्वंयस्यनित्यं प्रवाहनित्यतयाउत्पत्त्यादयोयतोभवंतीत्यर्थः एतेनब्रह्मकर्मउक्तंसत्त्वोद्रेकःसत्त्वाधिक्यंचयस्यावि
ष्णुरूपस्यनित्यंयस्यचविष्णोर्भावात्स्वरूपात्प्रसूतः आविर्भूतःकृष्णोगोप्तॄणामिंद्रादीनांगोप्तासत्त्वमयत्वात् यश्चसन्नदः सन्नवसानोनाशस्तत्प्रदःकालरुद्ररूपेणेत्यर्थःविश्वस्या
द्योमातृपितृवत्पालकोपिबाधमानस्यजगत्पीडकस्यक्रुद्धःसन्सन्नदइत्यनुवर्तते ॥ ५७ ॥ यस्यधाम्नःतेजोजालस्यहरिर्विष्णुरग्रःअग्रमिवाग्रःसूक्ष्मोंशोथविश्वोविराट्ब्रह्माहिरण्यग
र्भःपुत्रैःसनकाद्यैः सहितोन्येचद्विजाःमरीच्यादयःसंभूताइतिशेषः तेचयस्यसोमस्यउमासहितस्यभवनेद्वारप्रवेशेपराभूताःसंतःप्रवेशंनलभंतइत्यर्थःएषदेवःसोमःजुषतुअस्मासुप्री
यताम् ॥ ५८ ॥ यस्माद्भूतानांवियदादीनांभूतिःसंभवःअंतोनाशःमध्यंस्थितिश्चभवतिअतोयस्यकस्यापिपराभूतस्यनरस्यमृडवेद्यस्यमृडएववेद्योन्वेष्योयस्यशिवैकशरणस्यततएव
धृत्यादिरूपोनुग्रहोगुहाश्रुतिर्गुह्यवस्तुश्रवणंचभवतिअतएवतस्यपुरुषेश्वरस्येतिमहात्मनइतिचविशेषणंयुज्यतेव्यसनागमेशरणीकृतोविश्वकर्ताव्यसनभंगंकरिष्यस्येवेतिभावः ५९

यदिलियथाकार्यसर्वंस्त्रीपुंसरूपंभगलिंगांकंएवंकारणमपितस्यतदनुरूपंभगलिंगांकंभग लिंगसंयोगरूपप्रतिमात्मकंअवगंतव्यं तेनयदिदंदृश्यतेलोकेशिवंलिंगंतदभिमानिचेतनो द्भवमिदंब्रह्मांडमित्यर्थः अतएवासौसर्वसर्वेश्वरः सर्वंअविशेषात्कृत्स्नः प्रपंचः सर्वंसमाप्नोषिततोसर्वइतिनिर्वचनात्तदुपादानभूतोविष्णुरपिसर्वशब्दार्थःतयोरीश्वरस्तुरीयब्रह्म रूपइत्यर्थः ॥ ६० ॥ धर्मधृग्वरंधर्मभृतांश्रेष्ठम् ॥ ६१ ॥ येनकार्येणयदर्थंसंस्तौषितज्जानेप्रजापतेहेकश्यप ॥ ६२ ॥ प्रकृतिंस्वास्थ्यं तत्रापिधर्मात्माहारिजेष्यतरियाहपा रिजातंत्विति ॥ ६३ ॥ इंद्रस्तुअधर्मदोषादभिभवंप्राप्स्यतीत्याशयेनाह अपध्यातइति ॥ ६४ ॥ ६५ ॥ कमलभवात्मजस्यमरीचेःसूनुःसुमनौकसंसुमनसांदेवानाओकां

यल्लिंगांकंत्र्यंबकःसर्वमीशोभगलिंगांकंयद्वद्युमासर्वधात्री ॥ नान्यत्तृतीयंजगतीहास्तिकिंचिन्महादेवात्सर्वसर्वेश्वरोसौ ६० इतिसंस्तूयमानस्तुभगवा न्वृषभध्वजः ॥ दर्शयामासधर्मात्माकश्यपंधर्मधृग्वरम् ६१ उवाचचैनंदेवेशःप्रसन्नेनांतरात्मना ॥ येनसंस्तौषिकार्येणत्वंतज्जानेप्रजापते ६२ इंद्रो पेंद्रौमहात्मानौदेवौप्रकृतिमेष्यतः ॥ पारिजातंतुधर्मात्मानायिष्यतिजनार्दनः ६३ अपध्यातोमहेंद्रोहिमुनिनादेवशर्मणा ॥ अस्याकांक्षत्पुराभार्यातपो दीप्तस्यकश्यप ६४ गम्यतांतत्रधर्मज्ञदाक्षायिण्यासहत्वया ॥ अदित्याशक्रसदनंश्रेयस्तेपुत्रयोर्ध्रुवम् ६५ इतिहरवचनंनिशम्यविद्वान्कमलभवात्मजसू नुरप्रमेयः ॥ त्रिदशगणगुरुंप्रणम्यरुद्रंमुदितमनाःसुमनौकसंजगाम ६६ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेकश्यपकृतरुद्रस्तो त्रंनामद्विसप्ततितमोध्यायः ७२ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ अथविष्णुर्महातेजामुहूर्ताभ्युदितेरवौ ॥ मृगयाव्यपदेशेनययौरैवतकं गिरिम् १ आरोप्यैकरथेदेवःसात्यकिंनरपुंगवम् ॥ प्रद्युम्नमनुगच्छेतिप्रोक्त्वाकुरुकुलोद्वह २ रैवतंचगिरिंदेवोगत्वादारुकमब्रवीत् ॥ मदीयंरथमेनंत्वं ग्रहायेहैवदारुक ३ प्रतिपालयमांसौम्यदिनार्द्धंवारयन्हरीन् ॥ रथेनैवप्रवेष्टाहंद्वारकांसूतसत्तम ४ इतिसंदिश्यभगवानारुरोहजयोद्यतः ८ तार्क्ष्यंस सात्यकोर्धीमानप्रमेयपराक्रमः ५ पृथग्रथेनकौरव्यप्रद्युम्नःशत्रुसूदनः ॥ आकाशगामिनाराजन्पृष्ठतःकृष्णमन्वयात् ६ निमेषांतरमात्रेणनंदनंकाननं हरिः ॥ देवोद्यानंययौधीमान्पारिजातजिहीर्षया ७ ददर्शतत्रभगवान्देवयोधान्दुरासदान् ॥ नानायुधधरान्वीरान्नंदनरक्षानधोक्षजः ८ तेषांसंपश्यता मेवपारिजातंमहाबलः ॥ उत्पाट्यारोपयामासपारिजातंसतांगतिः ९

सियत्रतंदेवलोकंसंधिरार्षः ॥ ६६ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेविष्णुपर्वणिटीकायांद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ अथत्रिसप्ततितमेध्यायेस्मिन्निंद्रकृष्णयोः ॥ युद्धंतु वर्ण्यतेतत्रविष्णोरुत्कर्षउच्यते ॥ १ ॥ अथविष्णुःमृगयाव्यपदेशेनमृगयाछलेन ॥ १ ॥ २ ॥ ग्रहायगृहीत्वा ॥ ३ ॥ प्रतिपालयप्रतीक्षस्व हरीन्अश्वान्प्रवेक्ष्यामि ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ पारिजातंसंपश्यतांपश्यतस्ताननादृत्येत्यर्थः पारिजातंआरोपयामासेतिपृथगन्वयान्नपौनरुक्त्यं ॥ ९ ॥

गरुडंपक्षिराजानमयत्नेनैवभारत ॥ उपस्थितोविग्रहवान्पारिजातःसकेशवम् १० सांत्वितोवासुदेवेनपारिजातश्चभारत ॥ उक्तश्चवृक्षमाभैस्त्वंकेशवे
नमहात्मना ११ तंप्रस्थितंतरुंदृष्ट्वापारिजातमधोक्षजः ॥ अमरावतींपुरींश्रेष्ठांततश्चक्रेप्रदक्षिणाम् १२ तेतुनंदनगोप्तारःपारिजातोद्रुमोत्तमः ॥ ह्रियती
तिमहेंद्रायगत्वानृपशशंसिरे १३ अथैरावतमारुह्यनिर्ययौपाकशासनः ॥ जयंतेनरथस्थेनपृष्ठतोनुगतःप्रभुः १४ पूर्वमभ्यागतंद्वारंकेशवंशत्रुनाशन
म् ॥ दृष्ट्वोवाचप्रवृत्तंभोःकिमिदंमधुसूदन १५ प्रणम्यगरुडस्थोथकेशवःशक्रमब्रवीत् ॥ वध्वास्तेपुण्यकार्यायनीयतेयंवरद्रुमः १६ तमुवाचततःशक्रो
मामैवंपुष्करेक्षण ॥ अयोधयित्वानतरुर्नयितव्यस्त्वयाच्युत १७ प्रहरस्वमहाबाहोप्रथमंमयिकेशव ॥ प्रतिज्ञासफलातेस्तुमुक्त्वाकौमोदकींमयि ॥
१८ ततःकृष्णःशरैस्तीक्ष्णैर्देवराजगजोत्तमम् ॥ बिभेदाशनिसंकाशैःप्रहसन्निवभारत १९ विव्याधगरुडंवज्रीदिव्यैःशरवरैस्तथा ॥ बाणांश्चिच्छेदस
हस्राकेशवस्यतरस्विनः २० यान्यान्मुमोचदेवेंद्रस्तांस्तांश्चिच्छेदमाधवः ॥ माधवेनप्रयुक्तांश्चचिच्छेदबलवृत्रहा २१ महेंद्रस्यचशब्देनधनुषःकुरुनं
दन ॥ शार्ङ्गस्यचनिनादेनमुमुहुःस्वर्गवासिनः २२ तयोर्वर्ततिसंग्रामेगरुडस्थोमहाबलः ॥ पारिजातंजयंतोथहर्तुमभ्युद्यतोबली २३ प्रद्युम्नमथकं
सघ्नोवारयेतितदाब्रवीत् ॥ ततस्तंवारयामासरौक्मिणेयःप्रतापवान् २४ जयंतोजयतांश्रेष्ठोरौक्मिणेयमथेषुभिः ॥ सर्वगात्रेषुविहसन्नाजवानरथेस्थि
तः २५ रथस्थएवरथिनंकामस्तुकमलेक्षणः ॥ ऐंद्रिमभ्यर्दयामासबाणैराशीविषोपमैः २६ ससन्निपातस्तुमुलोबभूवकुरुनंदन ॥ जयंतस्यचवीर
स्यरौक्मिणेयस्यचोभयोः २७ कृतप्रतिकृतंयुद्धेचक्रतुस्तौमहाबलौ ॥ महेंद्रोपेंद्रतनयौजगत्यस्त्रभृतांवरौ २८ देवाश्चमुनयश्चैवददृशुर्विस्मयान्वि
ताः ॥ तंसंग्राममंमहाघोरंसिद्धाश्चैवसचारणाः २९ ततस्तुप्रवरोनामदेवदूतोमहाबलः ॥ पारिजातंपुनर्हर्तुमियेषकुरुनंदन ३० सखासदेवराजस्यमहा
स्त्रविदरिंदमः ॥ अवध्योवरदानेनब्रह्मणःकुरुनंदन ३१ ब्राह्मणस्तपसासिद्धोजंबुद्वीपादिवंगतः ॥ स्वशक्त्यानृपसंयातःसखित्वंबलघातिना ३२ त
मापतंतंसंप्रेक्ष्यकृष्णःसात्यकिमब्रवीत् ॥ अत्रस्थएवप्रवरंशरैर्वारयसात्यके ३३ नत्वत्रनिर्दयंबाणामोक्तव्याःसात्यकेत्वया ॥ अस्यब्राह्मणचापल्यंसो
ढव्यंखलुसर्वथा ३४ ततःषष्ट्यारथेपूर्णांगरुडस्थंद्विजस्तदा ॥ आजघानमहाबाहोसात्यकिंप्रवरोभृशम् ३५ शिनेर्नप्ताधनुस्तस्यक्षिपतःसायकान्नृप ॥
चिच्छेदपुरुषव्याघ्रोवचनंचेदमब्रवीत् ३६ १०४

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ कृतप्रति
कृतंअन्योन्यंशस्त्रास्त्रपरिहारं ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ब्राह्मणचापल्यंब्राह्मणलाचापल्यमित्यर्थः॥ ३४ ॥ ३५ ॥ शिनेर्नप्तासात्यकिः ॥ ३६ ॥

॥ ३७॥३८॥३९॥ मन्यंतोमानयंतः ॥ ४० ॥ ४१ ॥ ४२ ॥ कार्ष्णिर्नातिशिष्येइत्यनुकृष्यते ॥ ४३ ॥ हंतेतिसंबोधनम् गृह्णगृहाण प्रतीच्छदेहि प्रहारमितिशेषः ॥
॥ ४४ ॥ ४५ ॥ दीप्यंतंदीप्यमानंपुंस्त्वंआर्षं शरैरुपेतंबाणजालम् ॥४६॥ रौक्मिणेयस्यापिघोरंदुःसहंकिमुतान्यस्य ॥४७॥ तेनपतितेनापि ॥४८॥४९॥५०॥५१॥५२॥

ब्राह्मणोनाभिहंतव्यस्तिष्ठतिष्ठस्ववर्त्मनि ॥ अवध्यायादवानांहिस्वापराधेपिहिद्विजाः ३७ प्रवरस्तुप्रहस्यैनमुवाचकुरुनंदन ॥ अलंक्षांत्यानृणांशूरयु
द्धचसर्वात्मनारणे ३८ जामदग्न्यस्यरामस्यशिष्योहमपियादव ॥ नामतःप्रवरोनामसखाशक्रस्यधीमतः ३९ नदेवायोद्धुमिच्छंतिमन्यंतोमधु
सूदनम् ॥ आनृण्यंसौहृदस्याहमधिगंतास्मिमाधव ४० ततस्तयोस्तदारौद्रःसंग्रामोवद्वृधेनृप ॥ अस्त्रैर्दिव्यैर्नरव्याघ्रशैनेयद्विजमुख्ययोः ४१ द्यौ
श्चचालतदाराजन्ह्यचलाश्चसहस्रशः ॥ तस्मिन्वर्त्ततिसंग्रामेतेषामतिमहात्मनाम् ४२ नातिशिष्येरणेकार्ष्णिरैंद्रिमस्त्रभृतांवरम् ॥ ऐंद्रिःकार्ष्णिमहा
त्मानंमायिनंशूरसत्तमम् ४३ हंतगृह्णप्रतीच्छेतितावुभौयोधसत्तमौ ॥ युयुधातेनरश्रेष्ठपरस्परजयैषिणौ ४४ अथशार्ङ्गायुधसुतंशचीपुत्रःप्रतापवान् ॥
विभाष्याभ्यहनद्राजन्दिव्येनास्त्रेणसत्वरः ४५ सोस्त्रंतदभिदीप्यंतमापतंतंशितैःशरैः ॥ तस्तंभेबाणजालेनतदद्भुतमिवाभवत् ४६ ततस्तद्दीप्यमानंतुप
पातरणमूर्द्धनि ॥ रौक्मिणेयस्यकौरव्यघोरंदानवमर्दनम् ४७ तेनास्त्रेणरथोदग्धःप्रद्युम्नस्यमहात्मनः ॥ नादहत्तत्सुघोरंतंरौक्मिणेयंनराधिप ४८ दहत्य
ग्निनखल्वग्निरुद्वतोतिविशांपते ॥ दग्धाद्रथान्महाबाहूरौक्मिणेयःप्रचक्रमे ४९ अथनारायणसुतोविरथोरथिनांवरः ॥ स्थितोधनुष्मानाकाशेजयंत
मिदमब्रवीत् ५० महेंद्रपुत्रदिव्यंत्वंयदस्त्रंमुक्तवानसि ॥ नाहमीदृशरूपाणांशक्योहंतुंशतैरपि ५१ प्रयत्नंकुरुशिक्षाणांयत्नंमेद्यप्रदर्शय ॥ नास्तिमेतिश
यंकर्त्तासंग्रामेमरनंदन ५२ आसीन्मेसाध्वसंदृष्ट्वारथस्थंत्वांधृतायुधम् ॥ बिभेमितवनेदानींयुद्धेदृष्टबलोबलम् ५३ मनसास्मर्यतांसैषपारिजातस्त्वया
तरुः ॥ शक्यंनखलुहस्ताभ्यांस्प्रष्टव्योयस्त्वयाह्यसौ ५४ रथोमायामयोदग्धस्त्वयायोह्यस्त्रतेजसा ॥ ईदृशानांसहस्राणिस्रष्टुंशक्तोस्मिमायया ५५ एव
मुक्तोजयंतश्चमुमोचास्त्रंमहाबलः ॥ तपसोपचितंतेनस्वयमेवातितेजसा ५६ तत्प्रद्युम्नोमहावेगंशरजालैरवारयत् ॥ चत्वार्यस्त्राणिदिव्यानिमुमुचेचाप
राणिसः ५७ दिक्षुसर्वासुरुरुधुस्तान्यस्त्राण्यथभारत ॥ रौक्मिणेयंमहात्मानमंतरिक्षेचपंचमम् ५८ महोल्कासदृशान्बाणानस्त्राण्यमरसत्तमः ॥ मुमो
चयानिघोराणिप्रद्युम्नंप्रतिसर्वतः ५९ तानिसर्वाणिबाणौघैःकार्ष्णिरस्त्राण्यवारयत् ॥ जयंतंचापरैर्बाणैर्विव्याधनिशितैस्तदा ६० ततोनादःसमुत्सृष्टोह्य
मरैःपुण्यकर्मभिः ॥ दृष्ट्वास्थैर्यंचशैघ्र्यंचप्रद्युम्नस्यमहात्मनः ६१

तवत्वत्तः युद्धेदृष्टंरिपोर्बलंयेनसः अबलं अल्पबलं ॥५३॥ खलुयस्मात् ॥५४॥५५॥५६॥ सजयंतः अपराणिततोप्यधिकानि ॥५७॥ पंचमंपश्चात्प्रयुक्तम् ॥५८॥५९॥६०॥६१॥

हस्तावापंहस्तत्राणंच ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ मांसान्युच्चकर्त्ततुः ॥६७ ॥ अथाष्टधारेत्यत्रास्त्रवरवाणेनेतिपाठेऽस्त्रादपिवरोयोवाणस्तेन ॥ ६८ ॥ तंसात्यकिं ॥ ६९ ॥ ७० ॥ विहस्तमिवेतिविकलहस्तमिव ॥७१॥ त्सरुदेशेमुष्टिप्रदेशेशरशतेनाशितखड्गे रिक्तहस्तमित्यर्थः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥



प्रवरस्यापिबाणेनशितेनाशिनिपुंगवः ॥ चिच्छेदेष्वासनंवीरोहस्तावापंचभारत ६२ ततोन्यत्सतुजग्राहमहत्तद्धनुरुत्तमम् ॥ महेंद्रदत्तंप्रवरोमहाशनिसमस्वनम् ६३ सतेनवीरोमहताधनुषाविप्रसत्तमः ॥ शरान्मुमोचविविधानर्करश्मिनिभ।स्तदा ६४ चकर्तचधनुश्चित्रंशैनेयस्यामितौजसः ॥ विव्याधसर्वगात्रेषुबाणैरपिचसात्यकिम् ६५ धनुरादायशैनेयस्ततोन्यत्कुरुनंदन ॥ दृढंभारसहंधीमान्विव्याधप्रवरंरणे ६६ उच्चकर्ततुरन्योन्यवर्मणीतौशितैःशरैः ॥ गात्रेभ्यश्चैवमांसानिमर्मभिद्भिःशरोद्यमैः ६७ अथाष्टधारबाणेनपुनरिष्वासनंद्विधा ॥ चिच्छेदप्रवरोवीरस्त्रिभिश्चैनमताडयत् ६८ अन्यदिष्वासनंतंतुग्रहीतुमनसंद्विजः ॥ गदयाताडयामासक्षेप्ययालघुहस्तवान् ६९ सोसिंचर्मचजग्राहसात्यकिःप्रहसन्निव ॥ नजग्राहधनुर्धीमान्गदयाभिहतोभृशम् ॥ ततःशरशतान्येवमुमोचप्रवरस्तदा ७० विहस्तमिवविज्ञायसात्यकिंयदुनंदनम् ॥ प्रद्युम्नोस्यददौखड्गंनिर्मलाकाशसन्निभम् ७१ तस्यचिच्छेदभल्लेननिस्त्रिंशंप्रवरस्तदा ॥ त्सरुदेशेपातयच्चप्रवरःप्रहसन्निव ७२ व्यधमच्चतथाचर्मशितैर्बाणैरजिह्मगैः ॥ आजघानचशक्त्यैनंहृदिविप्रोननादच ॥ ७३ तंविक्लवमिवज्ञात्वापारिजातजिहीर्षया ॥ तार्क्ष्याभ्याशेरथेनैवसतस्थौप्रवरस्तदा ७४ तंपक्षपुटवेगेनाचिक्षेपगरुडस्तथा ॥ गव्यूतिमेकांसरथःसपपातमुमोहच ७५ तंजयंतोनियत्त्वाथपतितंब्राह्मणंनृप ॥ समाश्वास्यरथंशीघ्रंसमारोपितवांस्तदा ७६ शैनेयमापिमुद्यंतंपतंतंचमुहुर्मुहुः ॥ आश्वासयानःप्रद्युम्नःपितृव्यंपरिषस्वजे ७७ तंहिपस्पर्शहस्तेनसव्येनमधुसूदनः ॥ विरुजःस्पर्शमात्रेणसात्यकिःसमपद्यत ७८ प्रद्युम्नोदक्षिणेपार्श्वेवामेतुशिनिपुंगवः ॥ तस्थतुःपारिजातस्ययुद्धशौंडतरावुभौ ७९ जयंतःप्रवरश्चैवरथेनैकेनभारत ॥ संपतंतौमहेंद्रेणप्रहस्योक्तौमहात्मना ८०नासन्नमभिगंतव्यंगरुडस्यकथंचन ॥ बलवानेषपततांराजाचविनतासुतः ८१ दक्षिणेचैवसव्येचपार्श्वेममधृतायुधौ ॥ उभौस्थितौयुद्ध्यमानंमामेवहिप्रपश्यतम् ८२ एवमुक्तौस्थितौवीरौततःशक्रस्यपार्श्वयोः ॥ ददृशातेयुद्ध्यमानौदेवराजजनार्दनौ ८३ अथेंद्रोगरुडंबाणैर्महाशनिसमस्वनैः ॥ विव्याधसर्वगात्रेषुमहास्त्रप्रवरैस्तथा ८४ सतान्बाणानगणयन्वैनतेयःप्रतापवान् ॥ ससाराभिमुखोवीरःशक्रनागमरिंदमः ८५ उभौतौसहसाराजन्बलिनौगजपक्षिणौ ॥ प्रयुद्धौवीर्यसंपन्नौमहाप्राणौदुरासदौ ८६ १०५

निरुजःपीडाहीनः ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ शक्रनागंऐरावतंप्राति ॥ ८५ ॥ प्रयुद्धौप्रकर्षेणयुद्ध्यमानौ ॥ ८६ ॥

रदनैः दंतैः करेणशुंडादंडेन ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ अस्मिन्जंबुप्रहितेद्वीपे ॥ ९१ ॥ पूर्वाभ्युपगमात् ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥९६॥ निसर्गेणस्वभावे नतपोवलाच्च ॥९७॥ ९८॥ ९९॥ १००॥ १॥ २ ॥ ३ ॥४॥ नाडिकाघटिका ॥ ५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

रदनैःपन्नगरिपुंकरेणशिरसातदा ॥ ऐरावतोगजपतिराजघाननदंस्तथा ८७ तथानखांकुशैस्तीक्ष्णैर्वैनतेयोबलोत्कटः ॥ तथापक्षनिपातैश्वशक्रनागंजघान ह ८८ मुहूर्त्तंसुमहानासीत्संपातोगजपक्षिणोः ॥ विस्मापनीयोजगतःप्रेक्षितॄणांभयावहः ८९ मूर्ध्न्यथैरावतंताक्ष्यस्ताडयामासभारत ॥ नखांकुशकरालेनचरणेनमहाबलः ९० संप्रहाराभिसंतप्तोनिपपातत्रिविष्टपात् ॥ पारियात्रेगिरिश्रेष्ठेद्वीपेस्मिन्जनमेजय ९१ पतंतमपितंशक्रोनमुमोचमहाबलः ॥ कारुण्यादथसौहार्दात्पूर्वाभ्युपगमादपि ९२ कृष्णोप्यन्वगमच्चैनंपृष्ठतःप्रभवाव्ययः ॥ पारिजातवताधीमान्गरुडेनमहाबलः ९३ सतस्थौपर्वतश्रेष्ठेपारियात्रेतुवृत्रहा ॥ ऐरावतेसमाश्वस्तेसंग्रामोववृधेपुनः ९४ शरैराशीविषप्रख्यैरत्नयुक्तैःसुतेजितैः ॥ अन्योन्यंकुरुशार्दूलशक्रकेशवयोर्महान् ९५ ततोवज्रायुधोवज्रमशनिंचपुनःपुनः ॥ मुमोचगरुडेराजन्नैरावतरिपौनृप ९६ वज्राशनिनिपातांस्तान्सेहेशक्रस्यपक्षिराट् ॥ अवध्योबलिनांश्रेष्ठोनिसर्गेणततोबलात् ९७ मुमोचपक्षमेकैकंमानयन्नशनिंसदा ॥ वज्रंचदेवराज्ञोथभ्रातुःकश्यपसंभवः ९८ आक्रम्यमाणस्ताक्ष्येणन्यमज्जन्नृपतेगिरिः ॥ विवेशधरणींराजञ्छीर्यमाणःसमंततः ९९ चुकूजबहुमानेनकृष्णस्यसतुपर्वतः ॥ तंचाद्राक्षीत्ततःकृष्णःकिंचिच्छेषमधोक्षजः १०० तंमुक्त्वागरुडेनाथतस्थौदेवोविहायसि ॥ प्रद्युम्नंचतदोवाचसर्वलोकभावनः १ इतोद्वारवतींगत्वारथमानयमाचिरम् ॥ सदारुकंमहाबाहोमत्तेजोबलमाश्रितः २ वक्तव्योबलभद्रश्चराजाचकुकुराधिपः ॥ श्वोजित्वेंद्रंत्वागमिष्येद्वारकामितिमानद ३ तथेत्युक्त्वातुधर्मात्माप्रद्युम्नःपितरंविभुः ॥ गत्वायथोक्तमुक्त्वाचयादवेंद्रबलावुभौ ४ नाडिकांतरमात्रेणपुनस्तंदेशमाययौ ॥ दारुकेणसमायुक्तंरथमास्थायभारत १०५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेकृष्णेंद्रयुद्धेत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ तमारुह्यरथंकृष्णःपारियात्रंगिरिंययौ ॥ यत्रैरावतमास्थायस्थितःसुरपतिःप्रभुः १ पारियात्रोगिरिश्रेष्ठोदृष्ट्वायांतंजनार्दनम् ॥ शाणपादसमोभूत्वाप्रविवेशवसुंधराम् २ प्रियार्थंवासुदेवस्यप्रभावज्ञोमहात्मनः॥ तस्यप्रीतोहृषीकेशःपर्वतस्यजनाधिप ३

चतुर्भिरधिकेसप्ततितमेहरिणाशिवः ॥ प्रसादितोवरान्प्रादादभीष्टानितिवर्ण्यते ॥ १ ॥तमारुह्योति॥ १ ॥शाणपादाः माषाः माषराशिवत्प्रशिथिलोभवदित्यर्थःचंदनघर्षणपाषाणोमहाराष्ट्रेषुसहाणइतिप्रसिद्धः तस्यपादइवक्षुद्रोवाऽधोग्रावा शाणोमाषचतुष्टयेलोहादीनांचनिकषइतिमेदिनी ॥ २ ॥ प्रियार्थंरथगतेरप्रतिबंधार्थंप्रीतोभूदितिशेषः ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ नातिकल्पंईषदसमर्थ ॥ ७ ॥ समुपोह्यतेसमानीयतेकालेनेतिशेष' ॥ ८ ॥ ९ ॥ व्रजंगिरिमयंपर्वतद्वंदमयम् आवरणंकृत्वेत्यर्थः व्रजोगोष्ठेथवृंदेष्वि
तिमेदिनी ॥ १० ॥ ११ ॥ १२ ॥ नारायणः कृष्णः ॥ १३ ॥ शाणप्रमाणः शणबीजप्रमाणइतिवा ॥ १४ ॥ शाणपादः शणुदानेशणातिददत्यस्यामितिशाणाभारतभू
मिः सपादमात्रंयस्यशाणपादइत्यर्थः एतदेवाहपुण्येनेति अर्द्धेनउपरिभागेन ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ईशेशंईशानांब्रह्मादीनामपिईश्वरंव्यापकंअशूङ्व्याप्तौ

ततःप्रयातंयुद्धार्थमच्युतंकुरुनंदन ॥ सपारिजातोगरुडःपृष्ठतोनुययौतदा ४ प्रद्युम्नःसात्यकिश्चापिगरुडस्थौमहाबलौ ॥ गतावुभौरक्षणार्थंपारिजातमरिं
दमौ ५ ततस्त्वस्तंगतःसूर्यःप्रवृत्तारजनीनृप ॥ उपस्थितंपुनर्युद्धंशक्रकेशवयोरिह ६ सुप्रहाराहतंदृष्ट्वाविष्णुरैरावतंगजम् ॥ नातिकल्पंमहातेजादेवराजा
नमब्रवीत् ७ गरुडाभिहतःपूर्वंनातिकल्पोगजोत्तमः ॥ ऐरावतोमहाबाहोरात्रिश्वसमुपोह्यते ८ श्वःप्रभातेयथाकामंप्रवर्तस्वयथेच्छसि ॥ एवमस्त्विवति
कृष्णंतुदेवराजोब्रवीत्प्रभुः ९ उवासपुष्कराभ्याशेदेवराजःपुरंदरः ॥ व्रजंगिरिमयंकृत्वाधर्मात्मानृपसत्तम १० ब्रह्माततोजगामाथकश्यपश्चमहानृषिः ॥
अदितिश्चैवसर्वेचदेवामुनयएवच ११ साध्याविश्वेचकौरव्यनासत्यावश्विनौतथा ॥ आदित्याश्चैवरुद्राश्चवसवश्चजनेश्वर १२ नारायणश्चपुत्रेणसत्यकेन
चभारत ॥ सहोवासगिरौरम्येपारियात्रेप्रहृष्टवत् १३ यत्सशाणप्रमाणोस्यभक्त्यासमभवन्नृप ॥ वरंप्रादात्ततस्तस्यपर्वतस्यमहाद्युतिः १४ शाणपादइति
ख्यातोभविष्यसिमहागिरे ॥ पुण्येनार्द्धेनतुल्योहिपुण्योहिमवतःशुभः १५ एवमेवचभूयिष्ठोभवपर्वतसत्तम ॥ मेरुणास्पर्द्धमानोहिबहुचित्रमृगैर्युतः ॥
रमेत्वांपश्यमानोहंबहुचित्रनगायुतम् १६ तथादत्वावरंतस्यपर्वतस्यतुकेशवः ॥ दध्यौगंगांसरिच्छ्रेष्ठांनमस्कृत्वावृषध्वजम् १७ अथाययौविष्णुपदी
स्मृताकृष्णेनभारत ॥ संपूज्यतांततःकृष्णःकृत्वास्नानमधोक्षजः १८ उदकंचगुहायाथबिल्वंचहरिरव्ययः ॥ देवमावाहयामासरुद्रंसर्वेश्वरेश्वरम् १९
ततःप्राप्तोमहादेवःसोमःसप्रवरोविभुः ॥ तस्थावुपरिबिल्वस्यतथागंगोदकस्यच २० तंपारिजातकुसुमैरर्चयामासकेशवः ॥ तुष्टाववाग्भिरीशेशंसर्वक
र्तारमीश्वरम् २१ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ रुद्रोदेवस्त्वंरुद्रनाद्रावणाच्चरोरूयमाणोद्रावणाच्चातिदेवः ॥ भक्तंभक्तानांवत्सलंवत्सलानांकीर्त्यायुंक्ष्वे
शाद्यप्रभवाम्यंतरेण २२

वित्यस्यरूपं ॥२१॥ हेदेवक्रीडापरहेद्योतमानत्वंलमेवरुद्रोसि सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमितिश्रुतेःशोकास्पदभूतोजीवः एतेहीदंसर्वंरोदयंतितस्मद्रुद्राइतिश्रुतेश्चप्रकारांतरेणाव
यवार्थावगमाद्रोदनादेःकारयिताभयंकरः भीषास्माद्वातःपवतइत्यादिशास्त्रप्रसिद्धोमहेश्वरश्चत्वमेवासि नान्योतोस्तिद्रष्टेत्यादिश्रुतेस्त्वदन्यश्चेतनोनास्तीत्यर्थः एवंरुद्रपदस्यसमुदा
यार्थमुक्त्वावयवार्थमाह रुदनाद्रावणाच्चेति रुदनात्मायापंजरेणजीवपक्षिणोनिरोधनात् इमेविंद्रिद्ररोदसीमाययाएहिकायेइतियकारस्थानेदकारनिपातनस्यदर्शितत्वात्तस्मिंश्चान्यो

माययासन्निरुद्धइतिश्रुतेश्च रुणद्धीतिरुद्रः रावणा न्मायायाहिंसनाच्चतस्याभिध्यानाद्योवजानाच्चत्वभावात् भूयश्चांतेविश्वमायानिवृत्तिरितिध्यातृमायाविनिवर्तकश्रुतेः त्वमेवसंसार दोमोक्षप्रदश्चातोरुद्रइत्युच्यते प्रकारांतरेणानिर्वक्ति रोरूयमाणोद्रावणाच्चेतिरोरूयते भृशंशब्दतेवाउच्यतेवागालंबनीभूतःप्रपंचोरुःतस्यद्रावणात्लवणोदकन्यायेनप्रविलापनाद्वा रुद्रःयद्वारोरूयमाणःशब्देनप्रतिपाद्यमानएवज्ञातमात्रःसन् संसारस्य द्रावणात् रुद्रइत्युच्यतेजीवईशश्चजीवानांरोधकोरोधनाशकः वाच्यमात्रलयस्थानंरुद्रोवागेकगोचरइतिअतिदेवः देवंप्रकाशकमतिक्रांतः स्वप्रकाशइत्यर्थः युंक्ष्वमामितिशेषः ॥ २२ ॥ ग्राम्यारण्यानांभोगसक्ताविरक्तानांपशूनांजवानां ॥ २३ ॥ ईशंवरंइतीश्वरपदंनिर्वक्तियस्मादिति शास्त्रार्थभूतश्चासौसर्वशास्त्रर्थतत्जानंतीतिशास्त्रर्थतज्ज्ञाः २४ शास्त्रार्थमेवाहभूतमितिअव्यक्तात्जीववदप्रसिद्धात्अक्षरात्त्वत्तएवजगद्भूतंहिअत्यंतअंतमतिक्रांतएतेनातोन्यदार्त्तमिति श्रुतेरितरस्यांतत्वमुक्तं धीरधीप्रवर्तक अक्षराणांजीवानांईशनियंतःअक्षरेश भवत्यस्मादितिभवःईश्वराणांकारणं स्वतस्तुभूतंनित्यसिद्धं अत्युदारंअक्लेशेपिमहावरप्रदं २५ योहंविद

ग्राम्यारण्यानांत्वंपतिस्त्वंपशूनांख्यातोदेवःपशुपतिःसर्वकर्मा ॥ नान्यस्त्वत्तःपरमोदेवदेवजगत्पतिःसुरवीराविहंता २३ यस्मादीशोमहतामीश्वराणां भवानाद्यःप्रीतिदःप्राणदश्च ॥ तस्माद्धित्वामीश्वरंप्राहुरीशंसंतोविद्वांसःसर्वशास्त्रार्थतज्ज्ञाः २४ भूतंयस्माज्जगदत्यंतधीरत्वत्तोऽव्यक्तादक्षरादक्षरेश ॥ तस्मात्त्वामाहुर्भवइत्येवभूतंसर्वेश्वराणांमहतामप्युदारम् २५ यस्माज्जितैरभिषिक्तोसिसर्वैर्देवासुरैःसर्वभूतैश्चदेव ॥ महेश्वरंविश्वकर्माणमाहुस्त्वांवैसर्वेतेनदेवातिदेव २६ पूज्योदेवैःपूज्यसेनित्यदावैशश्वच्छ्रेयःकांक्षिभिर्वरदामेयवीर्य ॥ तस्माद्विख्यातोभगवान्देवदेवःसतामिष्टःसर्वभूतात्मभावी २७ भूमित्रयाणांदेवयस्मात्प्रतिष्ठापुनर्लोकानांभावनामेयकीर्तिः ॥ त्र्यंबकेतिप्रथमंतेननामतवाप्रमेयत्रिदशेशनाथ २८ शर्वःशत्रूणांशासनादप्रमेयस्तथाभूयःशासनाच्चेश्वरेण ॥ सर्वव्यापित्वाच्छंकरत्वाच्चसद्भिःशब्दस्येशानःश्रीकरार्काग्र्यतेजाः २९

भंनगरेसर्वैःराजभिश्चनिर्जितैरभिषिक्तोस्मिसोपित्वमेवेतिप्रत्यगभेदेनस्तौतियस्माज्जितैरिति असिअस्मि त्वांमदभिन्नम् ॥ २६ ॥ पूज्यइत्यस्याद्यःपादएकादशाक्षरोद्वितीयश्चतुर्दशाक्षरः सर्वभूतात्मभावीसर्वाणिभूतानिआत्मनिभावयितुंशीलमस्यसतथा ॥ २७ ॥ भूमित्रयाणांभूमिप्रभृतीनित्रयाणित्रिकाणि भूमिरंतरिक्षंद्यौरिति प्राणोपानोव्यानइतिअग्निर्वायुःसूर्यइति भूतंभविष्यद्वर्तमानइत्येवमादितेषांप्रतिष्ठालयस्थानं भावनहेउत्पत्तिकारण पुनरित्यनेनलयोदयधारायाअनादित्वंदर्शितं तेनत्रिकाणांलयोदयकरत्वेनहेतुनात्र्यंबकेतित्रीणिसर्गस्थित्यंतादीनिअंबयतिगमयतिप्रकाशयतीतियोगात्त्र्यंबकइतितवनामप्रथमंमुख्यं हेअप्रमेयहेत्रिदशेशानांब्रह्मादीनांनाथ ॥ २८ ॥ शर्वपदयोगमाह शर्वइति शृणातिहिनस्तीतिशर्वः अप्रमेयःशत्रुभिरक्षेप्यःअप्रमेयःभूयइत्यंतर्यामित्वेनशासतोपिपुनरीश्वरेणराजादिभावेनइत्थंभावेतृतीयातेनापिरूपेणशासनात् सर्वव्यापित्वात्अंतर्बहिश्चव्यापकत्वात्शंकरःसुखकरःसद्भिःसतांहेतोरित्यर्थः नतुदुष्टानांशंकरःशब्दस्येशानःसर्वशब्दप्रमेयत्वेनावच्छेदकःहेश्रीकर ऋचःसामानियजूंषिसाहिश्रीरमृतासतामिति

एषास्यपरमासंपदितिचश्रुतिभ्यांश्रीशब्दोदितापरविद्याचतयोःकर्ता अर्कादप्यग्र्यंअधिकंतस्यापिप्रकाशकंतेजोयस्यसोर्काग्र्यतेजास्त्वमसीतिशेषः ॥ २९ ॥ संसक्तानां भक्तानांशमंसुखं भ्रातृव्यान् असुरान्व्यनैषीःशिक्षितवानासितेषांहितायैवेतिअतःसर्वेषांकल्याणकारित्वात्शंकरोसि ॥ ३० ॥ कल्पः समर्थोपिवात्सल्यात्कृतापकारमपि नवाधसेइत्याहदत्तइति सुरराज्ञाइंद्रेणाविष्णुनावाप्रहारोदत्तः तेनवज्रचक्रयोरपमानोमाभूदितिहेतुनाकंठेनैल्यंधत्सेप्रत्युतप्रहर्तुर्यशएवतनोषिनतुशासनामितिमहाकारुणिकत्वा न्मांपाहीत्यर्थः ॥ ३१ ॥ गुणिनंगुणवंतंअंबिकांचगुणत्रयरूपामितिशेषः ॥ ३२ ॥ वेदैः अजामेकांलोहितशुक्लामित्यादिनागीतासाहिमायातत्त्वंमहांतंप्रसूताजानितव तीसचमहान्क्रियाशक्तिमान्ज्ञानशक्तिमान् तत्राद्येनरूपेणयज्ञोसिलोकप्रसिद्धः दीक्षाणांदीक्षावतांद्वितीयेनयोगिनांयज्ञोजीवेशयोःपरमात्माग्नौप्रक्षेपरूपोसिहेदेवत्वत्समंअत्यद्भुतं

संसक्तानांनित्यदायत्करोषिशमंभ्रातृव्यान्यद्व्यनैषीःसमस्तान् ॥ तस्माद्देवःशंकरोस्यप्रमेयःसद्भिर्द्धर्मज्ञैःकथ्यसेसर्वनाथः ३० दत्तःप्रहारःकुलिशेनपू र्वंतवेशानसुरराज्ञातिवीर्य ॥ कंठेनैल्यंतेनतेयत्प्रवृत्तंतस्मात्ख्यातस्त्वंनीलकंठेतिकल्पः ३१ यल्लिंगांकंयच्चलोकेभगांकंसर्वंसोमत्वंस्थावरंजंगमंच ॥ प्राहुर्विप्रास्त्वांगुणिनंतत्त्वविज्ञास्तथाध्येयामंबिकांलोकधात्रीम् ३२ वेदैर्गीतासाहितत्त्वंप्रसूतायज्ञोदीक्षाणांयोगिनांचातिरूपः ॥ नात्यद्भुतंत्वत्समं देवभूतंभूतंभव्यंभवदेवाथनास्ति ३३ अहंब्रह्माकपिलोयोप्यनंतःपुत्राःसर्वेब्रह्मणश्चातिवीराः ॥ त्वत्तःसर्वेदेवदेवप्रसूताएवंसर्वेशःकारणात्मात्वमीड्यः ॥ ३४ इतिसंस्तूयमानस्तुभगवान्गोवृषध्वजः ॥ प्रसार्यदक्षिणंहस्तंनारायणमथाब्रवीत् ३५ मनीषितानामर्थानांप्राप्तिस्तेसुरसत्तम ॥ पारिजातंच हर्तासिमाभूत्तेमनसोव्यथा ३६ यथामैनाकमाश्रित्यतपस्त्वमकरोःप्रभो ॥ तथाममवरंकृष्णसंस्मृत्यस्थैर्यमाप्नुहि ३७ अवध्यस्त्वमजेयश्चमत्तःशूरतर स्तथा ॥ भवितासीत्यवोचंयत्तत्तथानतदन्यथा ३८ यश्चस्तवेनमांभक्त्यास्तोष्यतेमरसत्तम ॥ त्वयाकृतेनधर्मज्ञधर्मभाक्संभविष्यति ॥ समरेचजयंवि ष्णोप्राप्यपूजांतथोत्तमाम् ३९ बिल्वोदकेश्वरोनामभविताहमिहानघ ॥ देवेश्वरत्वयास्थापिदेवसिद्धोपयाचनः ४० इहस्थोपोषितोविद्वान्भक्तिमान्मम केशव ॥ त्रिरात्रमीप्सितांल्लोकान्गमिष्यतिजनार्दन ४१ अविंध्यानामदेशेस्मिन्गंगाचैवभविष्यति ॥ गंगास्नानसमंस्नानंमंत्रतोभवितातथा ४२

भूतंनास्ति अथयतः भूतंवाभव्यंवाभवद्वर्तमानंवानास्ति यत्दृश्यंतत्सर्वंकालत्रयेपिनास्ति अतस्तदंतर्गतंअद्भुतंयत्किंचित्तत्त्वत्साम्यंकथंलभेतेत्यर्थः॥ ३३ ॥ अतिवीराः आभ्यंतरश त्रुजयिनःसनकाद्याः इंद्राद्यावासर्वशत्रुजयिनः त्वत्तस्त्वदंशात् कारणस्यापिआत्मा अधिष्ठानंयत्रईश्वरोपिकल्पितइत्यर्थः अतएवईड्यःस्तुत्यः॥ ३४ ॥ गोवृषः महोक्षः ध्वजेय स्यसगोवृषध्वजः ॥ ३५ ॥ ३६ ॥ ३७ ॥ मत्तः शूरतरइत्यस्याभिव्यक्तिर्बाणयुद्धेव्यक्ताभविष्यति ॥ ३८ ॥ पूजांप्राप्यधर्मभाक्भविष्यतीतिसंबंधः ॥ ३९ ॥ अस्थापि स्थापितः हेदेवसिद्धंउपयानंप्रार्थनायस्मादित्यर्थः ॥ ४० ॥ ४१ ॥ मंत्रतःगंगास्मारकमंत्रपाठात् ॥ ४२ ॥

अंतर्द्धरणीदेशेभूविवरप्रदेशेगुप्तंपराक्रम्यपराक्रमेणवसंतीत्युत्तरेणसंबंधः ॥ ४३ ॥ सानैाअवच्छन्नावसंति अपायेबिलंचविशंतीत्यर्थः ॥ ४४ ॥ मानुषभावेनअंतारितःप्रच्छन्नः ॥ ४५ ॥ ४६ ॥ स्तूयस्तुत्वा ॥ ४७ ॥ ४८ ॥ ४९ ॥ अधिष्ठायानियम्य घोरान्असुरान् ॥ ५० ॥ मूर्ध्नितव ॥ ५१ ॥ त्वत्तः त्वत्संबंधिभिः ॥ ५२ ॥ ५३ ॥ ५४ ॥

षट्पुरंनामनगरंदानवानांजनार्दन ॥ अत्रांतर्द्धरणीदेशेपराक्रम्यमहाबलाः ४३ एतेदैत्यादुरात्मानोजगतोदेवकंटकाः ॥ छन्नावसंतिगोविंदसानावस्यम
हागिरेः ४४ अवध्यादेवदेवानांवरेणब्रह्मणोनघ ॥ मानुषांतरितस्तस्मात्त्वमेतान्जहिकेशव ४५ एवमुक्त्वामहादेवस्तत्रैवांतरधीयत ॥ परिष्वज्यम
हात्मानंवासुदेवंजनाधिप ४६ ततोयातेमहादेवेप्रभातायांनराधिप ॥ तस्यांनिशायांगोविंदःस्तूयपर्वतमब्रवीत् ४७ तवाधःपर्वतश्रेष्ठनिवसंतिमहासुराः
अवध्यादेवदेवानांवरेणब्रह्मणःपुरा ४८ निर्गमिष्यंतितेनैवमयारुद्धामहाबलाः ॥ द्वारेनिरुद्धेतत्रैवविनंक्ष्यंतिममाज्ञया ४९ त्वयिसन्निहितश्चाहंभविष्या
मिमहागिरे ॥ अधिष्ठायमहाघोरान्निवत्स्यामिचपर्वत ५० आरुह्यमूर्ध्निमद्रूपंदृष्ट्वापर्वतसत्तम ॥ गोसहस्रप्रदानस्यफलंप्राप्स्यतिशाश्वतम् ५१ त्वत्तो
रभिश्चप्रतिमांकारयित्वाहिभक्तितः ॥ शुश्रूषयंतियेनित्यंममयास्यंतितेगतिम् ५२ इतितंपर्वतंकृष्णोवरदोनुगृहीतवान् ॥ तदाप्रभृतिदेवेशस्त
त्रसन्निहितोच्युतः ५३ पाषाणैःप्रतिमांतातकारयित्वाचकौरव ॥ शुश्रूषंतिकृतात्मानोविष्णुलोकाभिकांक्षिणः ५४ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि
ष्णुपर्वणिपारिजातहरणेकृष्णकृतशिवस्तुतिर्नामचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ छ ॥ वैशंपायनउवाच ॥ ततोरथवरंकृष्णःसमारुह्यमहामनाः ॥
बिल्वोदकेश्वरंदेवंनमस्कृत्यययौनृप १ महेंद्रमाह्वयामासरथस्थोमधुसूदनः ॥ सत्कृतंपुष्कराभ्याशेसर्वैर्देवगणैःसह २ ततःशक्रोजयंतोथहरिभिर्युक्तमु
त्तमम् ॥ आरुरोहरथंदेवःसर्वकामप्रदःसताम् ३ ततोरथस्थयोर्युद्धमभवत्कुरुनंदन ॥ देवयोर्दैवयोगेनपारिजातकृतेतदा ४ ततोहनद्रणेविष्णुर्बाणैःशत्रु
बलार्दनः ॥ सैन्यानिदेवराजस्यबाणजालैरजिह्मगैः ५ उपेंद्रंनमहेंद्रोथनैवविष्णुःसुरेश्वरम् ॥ ताडयामासतुर्वीरौशस्त्रैःशक्तावपिप्रभो ६ एकैकमश्वंदश
भिर्महेंद्रस्यजनार्दनः ॥ विव्याधविशिखैस्तीक्ष्णैरस्त्रयुक्तैर्जनेश्वर ७ शैब्याद्यानपिदेवेंद्रःशरैरमरसत्तमः ॥ छादयामासराजेंद्रघोरैरस्त्राभिमंत्रितैः ८ सच
बाणसहस्रैश्चकृष्णोगजमवाकिरत् ॥ गरुडंचमहातेजाबलभिद्धरिवाहनम् ९ भूयिष्ठाभ्यांरथाभ्यांतौतदहःशत्रुदारुणौ ॥ युयुधातेमहात्मानौनारायणसु
राधिपौ १० चकंपेवसुधाकृत्स्नानौर्जलस्थेवभारत ॥ दिशांदाहेनदिग्देशाःसंवृताश्चसमंततः ११

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ पंचसप्ततिमेध्यायेयुद्धेनाराध्यवासवं ॥ द्वारकामनयद्धृष्टःपारिजातमितीर्यते ॥ १ ॥ ततोरथेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ शैब्याद्यान्शैब्यसुग्रीवबलाहकमेघपुष्पाख्यान्कृष्णाश्वान् सैन्याद्यानितिपाठेसेनायांशूरभूतानश्वादीन् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ज्योतींषिताराः ॥ १६ ॥ गर्दभवत्धूसराणिअरुणानिचसंस्थानानियेषांतैःछिन्नाभ्रैः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

 चेलुर्गिरिवराश्चैवपेतुश्चशतशोद्रुमाः ॥ पेतुश्चधरणीपृष्ठेमर्त्याधर्मगुणान्विताः १२ निर्घाताशतशश्चान्येपेतुस्तत्रनराधिप ॥ ऊहुश्चसरितःसर्वाःप्रति 
स्रोतोविशांपते १३ विष्वग्वाताववुश्चैवपेतुरुल्काश्चनिष्प्रभाः ॥ मुहुर्मुहुर्भूतसंघारथनादेनमोहिताः १४ प्रजज्वालजलेचैववन्हिर्जनपदेश्वर ॥ युयुधु
श्चग्रहैःसार्द्धंग्रहानभसिसर्वतः १५ ज्योतींषिशतशःपेतुःस्वर्गाच्चधरणीतलम् ॥ दिशांगजाःप्रकुपितानागाश्चधरणीतले १६ गर्दभारुणसंस्थानैश्छिन्ना
भ्रैश्चावृतंनभः ॥ विनदद्भिर्महारावान्रूक्षशोणितवर्षिभिः १७ नभूर्नद्यौर्नगगनंनरेंद्रव्यपभाभवन् ॥ खस्थानिसुरवीरौतुदृष्ट्वायुद्धगतौतदा १८ जेपुर्मुनि
गणामंत्रान्जगतोहितकाम्यया ॥ ब्राह्मणाश्चमहात्मानोह्यतिष्ठंस्तेषुसत्वराः १९ ततोब्रह्मामहातेजाःकश्यपंवाक्यमब्रवीत् ॥ गच्छवध्वासहादित्यापुत्रौ
वारयसुव्रत २० सतथेतितदादेवमुक्त्वापद्मभवंमुनिः ॥ जगामरथमास्थायतस्थौनरवरांतिके २१ स्थितंतुकश्यपंदृष्ट्वासहादित्यातदांतरा ॥ उभौरथा
भ्यांधरणीमवतीर्णौमहाबलौ २२ न्यस्तशस्त्रौचतौवीरौववंदतुररिंदमौ ॥ पितरौधर्मतत्त्वज्ञौसर्वभूताहितेरतौ २३ उभौगृहीत्वाहस्ताभ्यामदितिस्त्व
ब्रवीचद्वः ॥ असोदराविवैवंकिमन्योन्यंहंतुमिच्छतः २४ स्वल्पमर्थंपुरस्कृत्यप्रवृत्तमतिदारुणम् ॥ सदृशंनेतिपश्यामिसर्वथाममपुत्रयोः २५ श्रोतव्यं
यदिमातुश्चपितुश्चैवप्रजापतेः ॥ न्यस्तशस्त्रौस्थितौभूत्वाकुरुतंवचनंमम २६ तथेत्युक्त्वाचतौदेवौस्नातुकामौमहाबलौ ॥ गंगांजग्मतुरेवाथप्रजल्पंतौ
परस्परम् २७ ॥ शक्रउवाच ॥ त्वंप्रभुर्लोककृत्कृत्स्नराज्येहंस्थापितस्त्वया ॥ स्थापयित्वाकथंनामपुनर्मामवमन्यसे २८ भ्रातृत्वमुपगम्यैवज्येष्ठत्वं
चाप्यपोह्यच ॥ कथंकमलपत्राक्षनिर्वाणंकर्तुमिच्छसि २९ स्नातौतुजाह्नवीतोयेपुनरभ्यागतौनृप ॥ यत्रादितिःकश्यपश्चमहात्मानौदृढव्रतौ ३० प्रि
यसंगमनंनामतंदेशंमुनयोवदन् ॥ यत्रतौसंगतौचोभौपितृभ्यांकमलेक्षणौ ३१ ततःशक्रस्यकौरव्यदत्वावाचाभयंतदा ॥ यत्रदेवगणाःसर्वेसमेताधर्मचा
रिणः ३२ ततोययुर्विमानैस्तुदेवाःसर्वेत्रिविष्टपम् ॥ ऋद्ध्यापरमयायुक्तास्तेषामेवानुरूपया ३३ कश्यपश्चादितिश्चैवतथाशक्रजनार्दनौ ॥ विमानमे
कमारुह्यगताराजंस्त्रिविष्टपम् ३४ तेशक्रसदनंप्राप्तारम्यंसर्वगुणान्वितम् ॥ ऊषुरेकत्रकौरव्यमुदिताधर्मचारिणः ३५ शचीतुकश्यपंपत्न्यासहितंधर्मवत्स
ला ॥ उपाचरन्महात्मानंसर्वभूतहितेरतम् ३६ 

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ अभयंदत्वादत्तवान्कृष्णइतिशेषःददातेःआतोमनिन्क्वनिब्वनिपश्चेतिक्वनिप् ॥ ३२ ॥ ३३
॥ ३४ ॥ ३५ ॥ ३६ ॥

ततस्तस्यांप्रभातायांरजन्यामब्रवीद्धरिम् ॥ अदितिर्धर्मतत्वज्ञासर्वभूतहितंवचः ३७ उपेंद्रद्वारकांगच्छपारिजातंनयस्वच ॥ वध्वासंप्रापयस्वेशपुण्यकंहृदयेस्थितम् ३८ पुण्यकेसत्ययाप्राप्तेपुनरेषत्वयातरुः ॥ नंदनेपुरुषश्रेष्ठस्थाप्यःस्थानेयथोचिते ३९ एवमस्त्वितिकृष्णेनदेवमातायशस्विनी ॥ उक्ताधर्मगुणैर्युक्तानारदेनमहात्मना ४० ततोभिवाद्यपितरंमातरंचजनार्दनः ॥ महेंद्रंसहशच्याथप्रतस्थेद्वारकांप्रति ४१ ददौकृष्णायपौलोमीनियोगान्कुरुनंदन ॥ सर्वासामेवकृष्णस्यभार्याणांधर्मचारिणी ४२ दिव्यानांसर्वरत्नानांवाससांचमनस्विनी ॥ नानारागविरक्तानांसदैवारजसामपि ४३ भार्याणांचसहस्राणियानिषोडशमाधवे ॥ प्रतिगृह्यमहातेजाःप्रययौद्वारकांप्रति ४४ संपूज्यमानोद्युतिमान्खेचरैःपुण्यकर्मभिः ॥ ससात्यकिःसपुत्रश्वप्राप्तोरैवतकंगिरिम् ४५ सतत्रस्थापयित्वाचपारिजातंवरद्रुमम् ॥ सत्यकंप्रेषयामासद्वारकांद्वारशालिनीम् ४६ ॥ श्रीकृष्णउवाच ॥ पारिजातमिहानीतंमहेंद्रसदनान्मया ॥ निवेदयमहाबाहोभैमानांभैमवर्द्धन ४७ अद्यद्वारवतींचैवपारिजातमहंद्रुमम् ॥ प्रवेशयिष्येनगरेशोभाप्रक्रियतांशुभा ४८ इत्युक्तःसत्यकोगत्वातथोक्त्वापुनरागतः ॥ कुमारैर्नागरैःसार्द्धंसांबप्रभृतिभिःप्रभो ४९ ततोग्रतःपारिजातमारोप्यगरुडेतदा ॥ प्रद्युम्नोद्वारकांरम्यांविवेशरथिनांवरः ५० शैब्यादिहययुक्तेनरथेनानुययौहरिः ॥ तस्याथरथमुख्येनसत्यकःसांबएवच ५१ येत्वन्येनृपवार्ष्णेयायानैर्बहुविधैस्तथा ॥ ययुःप्रहृष्टास्तत्कर्मपूजयंतोमहात्मनः ५२ सत्यकाद्विस्तरंश्रुत्वायादवानागरास्तथा ॥ विस्मयंपरमंजग्मुरप्रमेयस्यकर्मणा ५३ तंदिव्यकुसुमंवृक्षंदृष्ट्वानर्तनिवासिनः ॥ राजन्नततपुहृष्टाःपश्यमानामहोदयम् ५४ तमद्भुतमचिंत्यंचमदकेलिकलांडजम् ॥ वृक्षोत्तमंपश्यतांवैवृद्धानामगमज्जरा ५५ येत्वंधचक्षुषःसर्वेतेभवन्दिव्यचक्षुषः ॥ विरोगारोगिणश्चासन्घ्रात्वागंधंवनस्पतेः ५६ लपंतःकोकिलाञ्छ्रुत्वानर्तनिवासिनः ॥ बभूवुर्हृष्टमनसोववंदुश्चजनार्दनम् ५७ नानाविधानितूर्याणिगेयानिमधुराणिच ॥ शुश्रुवुस्तस्यवृक्षस्यनातिदूरंगतानराः ५८ योयंसंकल्पयामासगंधंहृद्यंनरस्तथा ॥ सतदैवतमाजघ्रेपारिजातसमुद्भवम् ५९ ततःप्रविश्यरम्यांतुद्वारकांयदुनंदनः ॥ वसुदेवंमहात्मानंददर्शदेवकींतथा ६० कुकुराधिपतिंचैवबलंभ्रातरमेवच ॥ वृद्धाश्चयादवानांयेमानार्हानमरोपमान् ६१ विसृज्यतान्वैभगवाननादिनिधनोच्युतः ॥ संपूज्यचयथान्यायंस्वमेवभवनंगतः ६२

सत्यभामयासत्यभामायाः ग्रहायगृहीत्वाविवेश ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ व्रतकस्यव्रतेप्रदेयस्यदानस्य ६९ इतिश्रीमहाभारतेखिलेषुह०वि०टीकायांपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ षट्सप्ततितमेध्यायेऽमुष्मिन्पुण्यकसिद्धये ॥ नारदायप्रदायाथयुतरुंचानयद्दिवं ॥ १ ॥ अथेति ॥ १ ॥ २ ॥ कालेदानोचिते ॥ ३ ॥



ससत्यभामयावासंविवेशमधुसूदनः ॥ पारिजाततरुश्रेष्ठंग्रहायगदपूर्वजः ६३ सादेवीपूजयामासप्रहृष्टावासवानुजम् ॥ प्रतिजग्राहतंचापिपारिजातंमहाद्रुमम् ६४ मनीषितेनसतरुरल्पोभवतिभारत ॥ महांश्चवासुदेवस्यतदद्भुतमभून्महत् ६५ कदाचिद्द्वारकांसर्वांप्रच्छादयतिभारत ॥ कदाचिद्धस्तधार्यस्तुभवत्यंगुष्ठसन्निभः ६६ ननंदसत्याकौरव्यदेवीप्राप्यमनोरथम् ॥ पुण्यकार्थंतुसंभारान्संभर्तुमुपचक्रमे ६७ यानिद्रव्याणिकौरव्यजंबूद्वीपेतुकानिचित् योग्यानितानिकृष्णेनसंभृतानिमहात्मना ६८ मुनिंतदासंस्मृतवान्सनारदंजनार्दनः सर्वगुणोचितंवशी ॥ प्रतिग्रहार्थंव्रतकस्यसत्ययायथोपदिष्टस्यपुरंदरानुजः ॥ ६९ ॥ ॥ छ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातानननामपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥

वैशंपायनउवाच ॥ अथकृष्णस्यकौरव्यध्यातमात्रस्तपोधनः ॥ आजगाममुनिश्रेष्ठोनारदोवदतांवरः १ संपूजयित्वाविधिवद्वासुदेवोविशांपते ॥ प्रतिग्रहार्थंविधिवच्छ्रीमान्भक्त्याऽन्यमंत्रयत् २ ततःकालेचसंप्राप्तेस्नातंदेवोमहामुनिम् ॥ संपूजयमाल्यैर्गंधैश्चभोजयासभारत ३ सार्वकामिकमन्नाद्यंसर्वभूतकृद्व्ययः ॥ सत्ययाप्रिययासार्द्धंप्रहृष्टेनांतरात्मना ४ पुष्पदामावसज्याथकंठेकृष्णस्यभाविनी ॥ बबंधकृष्णंसुभगापारिजातेवनस्पतौ ५ अद्भिर्ददौनारदायततोनुज्ञाप्यकेशवम् ॥ देवीधेनुसहस्रंचकांचनस्यचपर्वतम् ६ हिरण्यरूप्यमिश्रंचमणिरत्नप्रभस्यच ॥ तिलमिश्रस्यचतथाधान्यैरन्यैर्युतस्यच ७ प्रतिगृह्यतुतत्सर्वंनारदोमुनिसत्तमः ॥ ससंप्रहृष्टोभुक्त्वाथभूयःकेशवमब्रवीत् ८ भोःकेशवमदीयस्त्वमद्भिर्दत्तोसिसत्यया ॥ सत्वंमामनुगच्छस्वकुरुयद्ब्रवीम्यहम् ९ प्रथमःपक्षइत्येवमब्रवीन्मधुसूदनः ॥ व्रजंतमनुवव्राजनारदंचजनार्दनः १० परिहासंबहुविधंकृत्वामुनिवरस्तदा ॥ तिष्ठस्वगच्छामीत्युक्त्वापरिहासविचक्षणः ११ अपनीयततःकंठात्पुष्पदामैनमब्रवीत् ॥ कपिलांगांसवत्सांभोनिष्क्रयार्थंप्रयच्छमे १२ कृष्णाजिनंतिलैःपूर्णंप्रयच्छचसकांचनम् ॥ एषोत्रनिष्क्रयःकृष्णविहितोवृषकेतुना १३ तथेत्युक्त्वाहृषीकेशस्तथाचक्रेजनाधिप ॥ सउवाचमुनिश्रेष्ठंहसित्वामधुसूदनः १४ वरंवरयधर्मज्ञयस्तेनारदकांक्षितः ॥ तत्तेदातास्मिधर्मज्ञपराप्रीतिर्हिमेत्वयि १५



॥ ४ ॥ भाविनीसद्भाववती ॥ ५ ॥ देवीकेशवमनुज्ञाप्यअद्भिर्नारदायददावित्यन्वयः ॥ ६ ॥ कांचनस्येतिविशेष्यंषष्ठ्यंतानां मणीनांरत्नानांचप्रभायस्मिन्तस्य ॥ ७ ८ ॥ ॥ ९ ॥ प्रथमोमुख्यः पक्षोयद्दासेनस्वामिकार्यंकर्तव्यमित्यर्थः ॥ १० ॥ परिहासंपादुकानयनाद्याज्ञापनैः ॥ ११ ॥ १२ ॥ वृषकेतुनारुद्रेण ॥ १३ ॥ १४ ॥ १५ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सन्नियोगेंदिव्यवस्त्राभरणादिकंइंद्राणीप्रेषितंविभज्यददौ ॥ २० ॥ प्रववृतेसगुणान्ख्यापयामास ॥ २१ ॥ गणाःसुहृत्संबंधिसमूहाः ॥ २२
तानेवाह पांडवानिति ॥ २३ ॥ श्रुतश्रवापितृष्वसाशिशुपालमाता ॥ २४ ॥ २५ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ मानुषोमानुषरूपीदेवः ॥ ३३

नारदउवाच ॥ ॥ नित्यमेवास्तुमेप्रीतोभवान्विष्णोसनातन ॥ त्वत्प्रसादात्तुसालोक्यंव्रजेयंतेमहामते १६ अयोनिजोभवेयंतेनारायणसतांगते ॥ भवे
यंब्राह्मणश्चैवपुनर्जात्यंतरेष्वपि १७ एवमस्त्वितितंदेवोविष्णुःप्रोवाचभारत ॥ तुतोषचततोधीमान्नारदोमुनिसत्तमः १८ षोडशस्त्रीसहस्राणिविष्णोरतुल
तेजसः ॥ निमंत्रिताश्चिकौरव्यसत्ययाहरिकांतया १९ तासांददौसन्नियोगमेकैकंहरिवल्लभा ॥ शच्यायोवासुदेवस्यपुरादत्तोनराधिप २० पारिजातोवसं
स्तत्रततःप्रववृतेतदा ॥ आज्ञयावासुदेवस्यनारदेनमहात्मना २१ निमंत्रितागणाःसर्वेकेशवेनमहात्मना ॥ विभूतिंपारिजातस्यददृशुःकुरुनंदन २२ पां
डवांश्चानयामाससहैवपृथयाहरिः ॥ द्रौपद्याचमहातेजास्तथैवचसुभद्रया २३ श्रुतश्रवांचससुतांभीष्मकंससुतंतदा ॥ अन्यानपिचकौरव्यमित्रसंबंधिबांध
वान् २४ रेमेचसहपार्थेनफाल्गुनेनजनार्दनः ॥ सांतःपुरोमहातेजाःपरमर्द्ध्यावसन्नृप २५ संवत्सरेततोयातेकेशिहामरसत्तमः ॥ पारिजातंपुनःस्वर्गमानयत्स
र्वभावनः २६ तत्रादितिंकश्यपंचदृष्ट्वास्वजननींप्रभुः ॥ शक्रेणसहितोधीमानप्रमेयपराक्रमः २७ तमुवाचादितिर्माताप्रणतंमधुसूदनम् ॥ सौभ्रात्रमस्तुवा
मेवंनित्यंचामरसत्तम २८ मनोरथंममत्वंचपूरयस्वजनार्दन ॥ तथेत्येवाब्रवीत्कृष्णस्ततोमातरमात्मवान् २९ आमंत्रयित्वापितरौदेवराजानमब्रवीत् ॥
वासुदेवोमहातेजाःकालप्राप्तमिदंवचः ३० महादेवेनदेवेशसंदिष्टोस्मिमहात्मना ॥ अंतर्भूमितलेवध्यानसुरान्प्रतिमानद ३१ तदितोदशरात्रेणहंताहमसु
रोत्तमान् ॥ तत्रोपविष्टान्स्थातव्यंप्रवरेणमहात्मना ३२ जयंतेनचवीरेणदानवानांजिघांसया ॥ एकोत्रमानुषोदेवोदेवपुत्रस्तथापरः ३३ अवध्याःकिलतेदेवै
र्ब्रह्मणोवरदर्पिताः ॥ अस्माभिःकिलहंतव्यामानुषत्वमुपागते ३४ तथेतिकृष्णंसहरिःप्रीतरूपस्तथाब्रवीत् ॥ सस्वजातेततोदेवावन्योन्यंजनमेजय ३५
इतिश्रीम० खिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेस्वर्गेपारिजातस्थापनंनामषट्सप्ततितमोऽध्यायः ७६ ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ ॥
पुण्यकानांममोत्पत्तिंकथयस्वद्विजोत्तम ॥ द्वैपायनप्रसादेनसर्वंहिविदितंतव १ ॥ ॥ वैशंपायनउवाच ॥ ॥ उमयापुण्यकविधिर्नरेंद्रोत्पादितःपुरा ॥
शृणुयेनविधानेनलोकेधर्मभृतांवर २

॥ ३४ ॥ ३५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ छ ॥ ॥ सप्ताधिकेसप्ततिमेपुण्यकानांनिरूप्यते ॥ पार्वत्यात
पसायुक्तंस्वरूपंतद्विधिस्तथा ॥ १ ॥ पुण्यकानामिति ॥ १ ॥ २ ॥

॥ ३ ॥ वधेकृतेसति ॥ ४ ॥ ५ ॥ तत्रजांबवत्यादयोपिसमागताः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ गंगाद्यानद्यभिमानिन्योदेवताः ॥ १५ ॥ १६ ॥ १७ ॥

स्वर्गान्नीतेपारिजातेकृष्णेनाक्लिष्टकर्मणा ॥ ययौद्वारवतींधीमान्नारदोमुनिसत्तमः ३ देवासुरेनृपश्रेष्ठसंग्रामेसमुपस्थिते ॥ षट्पुरस्यवधेघोरेमहादेवाज्ञया
नघ ४ कृष्णेनसहितंविप्रंनारदंधर्मवित्तमम् ॥ आसीनंपरिपप्रच्छरुक्मिणीभैष्मिकीनृप ५ तत्रजांबवतीदेवीसत्यभामाचभामिनी ॥ गांधारराजपुत्रीच
योगयुक्तानराधिप ६ देव्यश्चनृपकृष्णस्यबह्व्योन्यावैसमागताः ॥ कुलशीलगुणोपेताधर्मशीला पतिव्रताः ७ ॥ रुक्मिण्युवाच ॥ मुनेधर्मभृतांश्रेष्ठधर्म
ज्ञानभृतांवर ॥ उत्पत्तिंपुण्यकानांत्वंवक्तुमर्हस्यशेषतः ८ विधिंचफलयोगंचदानकालंतथैवच ॥ कौतूहलंनस्तत्सिद्धिंवदस्ववदतांवर ९ ॥ नारदउवाच ॥
शृणुवैदर्भि धर्मज्ञेसपत्नीभिःसहानघे ॥ पुण्यकानांविधिःप्रोक्तोयथादेविपुरामया १० चचारोमाव्रतंदेवीपुण्यकानांशुचिव्रता ॥ व्रतावसानेथतयासख्यो
देविनिमंत्रिताः ११ अदित्याद्याःसुताःसर्वादक्षस्याक्लिष्टकर्मणः ॥ पौलोमीचशचीदेवीख्यातालोकेपतिव्रता १२ रोहिणीचमहाभागासोमस्यदयितासती ॥
फाल्गुनीचतथापूर्वारेवतीचविशांपते १३ तथाशतभिषाचैवमघाचकुरुनंदन ॥ एताभिर्हिमहादेवीपूर्वमाराधितासती १४ गंगासरस्वतीचैववेणीगो
दाचनिम्नगा ॥ तथावैतरणीचैवगंडकीयाचभारत १५ अन्याश्चसरितोरम्यालोपामुद्राचभारत ॥ सत्यश्चान्याजगद्देविधारयंतिहिताःशुभाः १६ शुभाश्च
गिरिनंदिन्योवह्निकन्याश्चसुव्रताः ॥ स्वाहावह्निप्रियादेवीसावित्रीचयशस्विनी १७ ऋद्धिःकुबेरकांताचजलेचमहिषीतथा ॥ आर्यापितृपतेश्चैववसुपत्न्य
स्तथाचयाः १८ ह्रीःश्रीर्धृतिस्तथाकीर्तिराशामेधाचसुव्रताः ॥ प्रीतिर्मतिश्चख्यातिश्चसन्नीतिश्चतपोधनाः १९ देव्यःसत्यस्तथैवान्याःसर्वभूतहितेरताः ॥
तासांव्रतावसानेचपूजांचक्रेंबिकातदा २० तिलरत्नमयंदत्वापर्वतंसर्वधान्यवत् ॥ वासोभिर्भूषणैर्मुख्यैर्नानारागैःसुमध्यमे २१ प्रतिगृह्यतुतांपूजांदत्तांदे
व्यातपोधनाः ॥ उपविष्टाःकथाश्चित्राःकुर्वंत्योभर्तृदेवताः २२ पुण्यकार्थंकथास्तासामासन्देवीशशंसयाः ॥ विधिंचपुण्यकस्याथसतीनांभर्तृदेवते २३
तासांमतेनसाध्वीनांसर्वासांसोमनंदिनी ॥ पर्यपृच्छदुमांदेवींपुण्यकानांविधिंवरा २४ उमातासांप्रियार्थंतुपुण्यकान्यब्रवीत्तदा ॥ समक्षंममवैदर्भिसर्व
भूतहितेरता २५ ममैवचमयादत्तःसतदारत्नपर्वतः ॥ प्रतिगृह्यमयाचैवकृतोब्राह्मणसाच्छुभे २६ उमात्वरुंधतींसाध्वीमामंत्र्ययदभाषत ॥ शृणुकल्याणि
वक्ष्यामिसर्वाभिःसहिताशुभे २७ पुण्यकानांविधिंकृत्स्नंयथावदनुपूर्वशः ॥ यथाचैवमयादृष्टस्ततएषविधिःशुभे २८

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ भर्तृदेवतेपतिव्रतासमुदाये ॥ २३ ॥ सोमनंदिनीअरुंधती ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ अथाष्टसप्ततितमेध्यायेस्मिन्प्राहपार्वती ॥ अरुंधत्यैकवक्त्रेणप्रागुक्तमपिविस्तरात् ॥ १ ॥

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपुण्यकविधिकथनंनामसप्तसप्ततितमोऽध्यायः ७७ ॥ ॥ छ ॥ ॥ उमोवाच ॥ सर्वज्ञाहंयदाभर्त्तुः प्रसादेनशुचिस्मिते ॥ तदापुराममादिष्टोदृष्टःपुण्यविधिःशुभः १ सनातनःपुण्यविधिरितिबुध्यावगम्यताम् ॥ महादेवप्रसादेनमयादृष्टस्त्वरुंधति २ पुण्यकानिचसर्वाणिचीर्णवत्यस्म्यनिंदिते ॥ अनुज्ञयाभगवतोभर्त्तुःशर्वस्यधीमतः ३ सतीत्वंधर्मचरणंयस्यानित्यमखंडितम् ॥ पुण्यकानांविधिस्तस्याः पुराणैःपरिकीर्तितः ४ दानोपवासपुण्यानिसुकृतान्यप्यरुंधति ॥ निष्फलान्यसतीनांहिपुण्यकानितथाशुभे ५ यावंचयंतिभर्तारंयोनिदुष्टाश्चयाःस्त्रियः ॥ योनिदोषात्पुण्यफलंनाश्नंतिनिरयंगमाः ६ साध्व्योजगद्धारयंतिसुशीलाःपतिदेवताः ॥ अनन्याधर्मनित्याश्चसतीपंथानमाश्रिताः ७ अवाग्दुष्टाःशौचयुक्ताधृतिमत्यःशुभव्रताः ॥ सततंसाधुवादिन्योधारयंतिजगत्खलु ८ व्याधितःपतितोवापिदीनोवापिकथंचन ॥ नत्यक्तव्यःस्त्रियाभर्ताधर्मएषः सनातनः ९ अकार्यकारिणंवापिपतितंवापिनिर्गुणम् ॥ स्त्रीपतितारयत्येवतथात्मानंशुभानने १० योनिदुष्टस्त्रियोनास्तिप्रायश्चित्तंहतैवसा ॥ वाग्दुष्टेविहितंसद्भिःप्रायश्चित्तंपुरातने ११ भर्तुश्छंदेनकर्तव्यंव्रतकंसर्वदास्त्रिया ॥ उपवासोपिवासत्येकांक्षंत्यासुकृतांगतिम् १२ कल्पांतरसहस्रेषुनस्त्रीसा लभतेगतिम् ॥ तिर्यग्योनिसहस्रेषुपच्यतेयोनिविल्पवात् १३ यदिसानाममानुष्यंस्त्रीलभेदसतीसती ॥ चंडालयोनौदुर्मेधाजायतेकुक्कुराशना १४ भर्तादेवःसदास्त्रीणांसद्भिर्दृष्टस्तपोधने ॥ यस्याहितुष्यतेभर्तासासतीधर्मचारिणी १५ कौतूहलहतानांतुस्त्रीणांलोकोनशोभनः ॥ भर्तर्येवमनोयासांसद्भावेनव्यवस्थितम् १६ कर्मणामनसावाचापतिंनातिचरंतिया ॥ तासांपुण्यफलंसौम्येपुण्यकैःसमुदाहृतम् १७ पुण्यकानांविधिंकृत्स्नंस्वर्लोकप्रतिशोभने ॥ निबोधसहसर्वाभिर्दृष्टोयस्तपसामया १८ स्नात्वास्त्रीप्रातरुत्थायपतिंविज्ञापयेत्सती ॥ उपवासार्थमथवाव्रतकार्थेधृतव्रते १९ श्वशुराभ्यांचचरणौसततंसत्तमस्यच ॥ ग्रहायौदुंबरंपात्रंसकुशंसाक्षतंतथा २० गोशृंगंदक्षिणंसिच्यप्रतिगृह्णीततज्जलम् ॥ ततोभर्त्तुःसतीदद्यात्स्नातस्यप्रयतस्यच ॥ २१ आत्मनोपिनिषेक्तव्यंततःशिरसितज्जलम् ॥ त्रैलोक्यसर्वतीर्थेषुस्नानमेतदुदाहृतम् २२ उपवासेषुकर्तव्यमेतद्धिव्रतकेषुच ॥ स्नानमेतद्धिसामान्यंस्त्रीणांपुंसांचभाविनि २३

सर्वज्ञेति आदिष्टोउपदिष्टोभर्त्रेत्यर्थात्दृष्टोज्ञातश्च ॥ १ ॥ २ ॥ ३ ॥ अखंडितंईप्सितंभवेत् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ पुरातनेवेदे ॥ ११ ॥ हेसत्ये अरुंधति ॥ १२ ॥ १३ ॥ असतीभूत्वासतीविद्यमाना १४ कौतूहलंआश्चर्यंप्रोक्तम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ औदुंबरंताम्रमयम् २० सिच्यसिक्त्वा ॥ २१ ॥ २२ ॥ २३ ॥

व्रतांगनियमानाहअशल्येत्यादिना ॥ २४ ॥ २५ ॥ २६ ॥ पादुकार्थंतृणैर्वेत्रादिभिःपादत्राणंकर्तव्यंनतुचर्ममयमित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ अमृताहरितकीआमलकीवाश्रीफलैःपक्वबिल्वफलैःअमृन्मिश्रितैरितिच्छेदः ॥ ३० ॥ अभ्यंजनंकल्कस्नानं ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ इतिश्रीमाहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ अथैकोनाशीतितमेह्यध्यायेव्रतनिरूप्यते ॥ नित्यशेषैविधिर्यश्चकाम्यानांपरमोविधिः ॥ १ ॥ विधिनेनिचरेद्व्रतमितिशेषः ॥ १ ॥ २ ॥ यानिमंत्रिताएकादशस्त्रियःताःस

अरुंधतिमयादृष्टंतपसाहरतेजसा ॥ अशल्यविद्धंशयनमासनंचतथाविधम् २४ स्वयंप्रक्षालनंचापिपादयोरनुशब्दितम् ॥ अश्रुप्रपातोरोषश्चकलहश्चकृतःसति ॥ उपवासाद्व्रताद्वापिसद्योभ्रंशयतिस्त्रियः २५ शुक्लमेवसदावासःप्रशस्तंचंद्रसंभवे ॥ अंतर्वासोपरंचैवउपवासेव्रतेतथा २६ पादुकार्थंतृणैःकार्यंसर्वदाव्रतकेसति । उपवासेपिचविधिरेषएवप्रवर्तितः २७ अंजनंरोचनंचापिगंधान्सुमनसस्तथा ॥ व्रतकेचोपवासेचनित्यमेवविवर्जयेत् २८ दंतकाष्ठंशिरःस्नानमुद्वर्तनमथापिवा ॥ विवर्जितंमृदासर्वंशौचार्थंतुविधीयते २९ बिल्वामृतफलैर्नित्यंश्रीफलैश्चसमाचरेत् ॥ प्रक्षालनंवैशिरसःसदामृन्मिश्रितैर्जलैः ३० शिरसोभ्यंजनंसौम्येनैवतावत्प्रशस्यते ॥ नपादयोर्नगात्रस्यस्नेहेनेतिस्थितिःस्मृता ३१ गोयानमुष्ट्रयानंचखरयानंचवर्जितम् ॥ नग्नस्नानंचसततंव्रतेचाप्युपवासके ३२ नदीजलंप्रस्रवजंप्रशस्तंसोमनंदिनि ॥ शुभेतडागेवाप्यादौविस्तीर्णेजलजायुते ३३ गत्वास्नानंप्रशस्तंतुसदैवखलुसर्वथा ॥ अलाभेत्ववरुद्धास्त्रीघटस्नानंसमाचरेत् ३४ नवैश्चकुंभैःस्नातव्यंविधिरेषपुरातनः ॥ स्नानंचकार्यंशिरसातपःफलमवाप्नुयात् ३५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ छ ॥ उमोवाच ॥ विधिनैतेनकृत्स्नेनस्त्रीसदाभर्तृदेवता ॥ चरेत्संवत्सरंदांताषण्मासान्मासमेवच १ स्त्रियोह्यावाहयेत्साध्वीरेकादशसमाधिना ॥ स्वयंचैवविधिर्दृष्टोव्रतकानांमयाशुभः २ अद्भिर्दद्यात्सतीःसर्वायामूलव्रतिनीभवेत् ॥ तासांतुनिष्क्रयोदेयःकालदेशानुरूपतः ३ ततोमासांतशुक्लस्यतिथौचनवमीतथा ॥ आराधयित्वाकर्तव्यंव्रतकस्यापवर्जनम् ४ उपवासमहोरात्रंव्रतकंचापिनिश्चितम् ॥ आदौचांतेचकुर्वीतव्रतकस्यापिसिद्धये ५ क्षुरकर्मततोभर्तुरात्मनश्चैवकारयेत् ॥ उत्सादनंचस्नानंचतस्मिन्नहनिसंस्मृतम् ६ ततोविवाहवत्स्नानंविहितंपुण्यकेशुभे ॥ मंडनंचैवविहितंमाल्यधारणमेवच ७ कुंभैस्तुस्नाप्यमानेमंसाध्वीमंत्रमुदीरयेत् ॥ भर्तुःपादौनमस्कृत्यमनसावाथवागिरा ॥ ८ ॥

वींअद्भिःसाकंआचार्यायदद्यात् संनिहितत्वात् निष्क्रयोदेयः पूर्वंभर्तृभ्यःक्रीत्वाआचार्यायदेयास्ततः आचार्योनिष्क्रयेणगृहीतास्तद्भर्तृभ्यः प्रदद्यादित्यर्थः ३ अपवर्जनंसमापनम् ४ ५ व्रतकंउदिश्येतिशेषः आत्मनश्चकेशवर्जनखमात्रनिकृंतनं सर्वान्केशान्समुद्धृत्यछेदयेदंगुलद्वयम् एवमेवहिनारीणांवपनंसर्वदास्मृतमितिस्मृत्युक्तप्रकारेणवाक्षुरकर्म ॥ ६ ॥ ७ ॥ इमंवक्ष्यमाणं ॥ ८ ॥

ऋषीणांदेव्यः जनयित्र्यःयासुजातःकश्यपइतिलिंगात् दिवि भवाःआदित्यलोकावस्थानात्मदंत्योयज्ञेमदंतीसंज्ञाःशंकराःसुखकराःयतोधर्मस्यधात्र्यः पोषकाः हिरण्यवर्णाःनिर्मलाः पावकाःशोधकाःरसेनानिजगुणेनजुषंतुप्रीणयंतु ॥ ९ ॥१०॥ पौराणान्मंत्रानाहशुभेति शुभाकल्याणकरीभर्तुर्भवेयमितिसर्वत्रसंबंधनीयं अव्ययाअक्षीणाधनादिभिः यदाहयाज्ञवल्क्यः संयतोपस्करादक्षाहृष्टाव्ययपराङ्मुखीति वरेणवरहेतोर्दास्यातुल्येतिनीचकर्मापिकर्तुयोग्याभवेयंयथोक्तं कार्येषुदासशियनेषुरंभेत्यादि॥अन्यत्ररुषतक्रुद्धापिभर्तुर्वशंगा स्यां॥ ११॥

आपोदेव्यऋषीणांहिविश्वधात्र्योदिव्यामदंत्योयाःशंकराधर्मधात्र्यः ॥ हिरण्यवर्णाःपावकाशिवतमेनरसेनश्रेयसोमांजुषंतु ९ अपामेषस्मृतोमंत्रःसर्वत्रा न्यत्रमेशृणु ॥ मंत्राःपुराणविहिताःस्त्रीणांसर्वांगशोभने १० शुभाव्ययागुणिनीयुक्तधर्माभर्त्रासाकंममदास्यावरेण ॥ माकर्मणामनसावापिवाचाभर्तु र्भवेयंरुषतीस्यांवशंगा ११ सपत्नीनामधिनित्यंभवेयंसपुत्रास्यांशुभगाचारुरूपा ॥ संपन्नहस्तागुणवादिनीचसर्वात्मनास्यांमादरिद्राभवेयम् १२ पति श्चमेस्यात्सुमुखोमत्प्रतीक्षोनित्यंमद्भक्तःस्यान्मन्मतिर्मद्व्रतिश्च ॥ प्रीतिश्चनौस्याच्चक्रवाकानुरूपामनोविरागोनभवेत्साधुवत्स्यात् १३ लोकान्साध्वीनामु त्तमानांव्रजेयंयाभिःसर्वंधार्यतेविश्वरूपम् ॥ उभेकुलेयाःशुभाःपावयंतिपितुर्भर्तुश्चपतिभक्त्योर्जिताश्च १४ भूमिर्वायुर्जलमाकाशमग्निरंतःक्षेत्रज्ञःप्रकृतिर्यो म हांश्च ॥ अहंकारश्चममसाक्ष्येनियुक्ताःस्मरेयुर्मेनिश्चयंचव्रतंच १५ यैरारब्धोदेहिनांभौतिकोयंविधिःसत्त्वाद्यैर्भूतयुक्तैःसबीजैः ॥ संत्वेतेमेसाक्षिणःसर्वसंस्था व्रतेचास्मिन्निश्चयेचापिनित्यम् १६ चंद्रादित्यौपुण्यसाक्षीयमश्चदिशःसर्वादशचात्माचमेयम् ॥ संत्वेतेवैसाक्षिणःसर्वसंस्थाव्रतेचास्मिन्निश्चयेचापिनित्ये १७ मंत्रैरेतैःपुराणोक्तैःसर्वद्रव्याभिमंत्रिणम् ॥ व्रतचर्यात्प्रभृतिर्वैपुराणेसमुदाहृतम् १८ स्नात्वाथवाससीदद्याद्भर्तुःकर्त्यस्वयंशुभे ॥ अथात्मकर्ति तंनस्याच्छुभेविघ्नेनकेनचित् १९ वासोन्यदेवदद्याच्चश्वेतंमुख्यंनवंशुचि ॥ स्वकर्तितंचसूत्रंतुवाससातेनमिश्रयेत् २० ततोद्विजंशुचिंदांतंज्ञानविज्ञानको विदम् ॥ भोजयेच्चयथाशक्त्यासहभर्त्रासुमध्यमे २१ ब्राह्मणस्यापिदातव्यंवासोयुग्मंमहातपे ॥ शय्यासनंगृहंधान्यंदासंदासींतथैवच २२ अलंकारःश क्तितश्चरत्नपर्वतएवच ॥ सर्वधान्यसमुन्मिश्रस्तिलैश्चसविशेषतः २३

अधिउपरिसंपन्नहस्ताअन्नदानादौमुक्तहस्ता ॥ १२ ॥ मनोविरागः अन्योन्यमनुरक्तता ॥ १३ ॥ विश्वस्यरूपंस्वरूपंविश्वमित्यर्थः ॥ १४ ॥ भुमिरितिभूम्याद्यभिमानिन्यो देवताःव्रतंचनिश्चयंभर्किंचस्मरेयुः ॥ १५ ॥ विधिर्विध्यर्होदेहःयैरारब्धोभूतयुक्तैर्जरायुजादिसंबंधैःसत्त्वाद्यभिमानिदेवतैःसबीजैस्तत्प्राणिकर्मप्रयोजितैः ॥ १६ ॥ आत्मामनः॥ १७ ॥ व्रतचर्यात्व्रतारंभात्प्रभृतिप्रत्यहमेवकार्यमित्यर्थः ॥ १८ ॥ कर्त्यकर्तनादिनासंपाद्य शुभेहेअरुंधति ॥ १९॥ २०॥ २१ ॥ महातपेतपस्विनि ॥ २२ ॥ २३ ॥

सतिसंभवेहस्त्यश्वादीनांअवचयः समूहोदातव्यः अन्यथागौरेवदेयादेयैवेत्यन्वयः॥ २४ ॥ प्रतिमांउमामहेश्वरयोः ॥ २५ ॥ २६ ॥ २७ ॥ शिलांशिलामयींप्रतिमांदध्या दिभिःपंचामृतस्नानादिनापूजयेदित्यर्थः ॥ २८ ॥ २९ ॥ नदेयंभर्तुश्छंदेनविना ॥ ३० ॥ कूर्चःमयूरपुच्छमुष्टिःकुशमुष्टिरित्यासनमित्यर्थःअजिनंआसनार्थंकूर्चसाहचर्यात् कृष्णाजिनंतुप्रावरणार्थम् ॥ ३१ ॥ पुरोधिकाअग्रगण्या ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ एतंद्व्रतकरःव्रतेनाक्रियतइतिव्रतप्रसायः प्रियार्थं

वासोभिश्वप्रतिच्छन्नोनावावर्णैररुंधाति ॥ हस्त्यश्वावचयश्चैवदेयागौरेवचध्रुवम् २४ लवणप्रतिमांदद्यान्नवनीतस्यचापराम् ॥ गुडस्यमधुनश्चैवसुव र्णस्यचशोभनाम् २५ तथैवसर्वगंधानांरसानांपृथगेवच ॥ तथासुमनसांदद्याद्रूप्यसौदुंबरस्यच २६ फलानांचैवसर्वेषांवाससामपिनंदिनि ॥ चित्रप्रतिकृतिंचैवकाष्ठस्यप्रतिमांतथा २७ शिलांप्रतिकृतिंचैवदध्नोथपयसस्तथा ॥ सर्पिषादूर्वयाचैवयाचान्यामप्यभीप्सति २८ कालदे शानुरूपंचदेयंविभवतःसति ॥ अल्पंवाबहुलंवापिभर्तुश्छंदेनसर्वदा २९ तिलपात्रंप्रदातव्यंनदेयंननुशोभने ॥ गौरस्त्ववश्यंप्रदातव्याकपिलाकां स्यमेवच ३० कृष्णाजिनंचसुभगेसतिलंवाससान्वितम् ॥ आदर्शश्चैवकूर्चश्चतथाजिनमनिंदिते ३१ एतद्दत्वासर्वकामानाप्नोतिवरवर्णिनि ॥ पुरोधिकापुत्रवतीसुभगारूपभागिनी ३२ मृष्टहस्ताधनाढ्याचस्त्रीभवत्यमलेक्षणा ॥ इच्छयालभतेचैवकन्यारूपगुणान्विताः ३३ भवंतिसुभगाश्चा यास्तथैवचपुरोधिकाः ॥ पुत्रवत्योधनाढ्याश्वशीलवत्यश्चनित्यदा ३४ अरुंधतिकृतंह्येतन्मयैवप्रथमंयतः ॥ उमाव्रतकमित्येवख्यातमत्रमहीतले ३५ एतदेवोत्तमंस्त्रीणांव्रतंतस्मात्समाचरेत् ॥ सर्वकामानवाप्नोतिदत्वैवैतदनिंदिते ३६ एतद्व्रतकरोह्येवदेवदेवोवृषध्वजः ॥ पुराभिषिक्तवान्सौम्येप्रियार्थंमम सर्वक्त्व ३७ व्रतकस्यावसानेथदेयंभोज्यंचनित्यदा ॥ स्त्रीणांकामाःप्रदेयाश्वसदृशाःकालदेशयोः ३८ एकैकस्यप्रदातव्यंव्रतकंवरवर्णिनि ॥ छंदतोब्राह्म णानांतुदेयमन्नंसदक्षिणम् ३९ पायसंतत्रदातव्यंव्रतकेनान्यदिष्यते ॥ नात्रप्राणिवधःकार्यःपुराणेनियताश्रुतिः ४० अथद्वितीयंवक्ष्यामिव्रतंसोमसमुद्भ वे ॥ महादेवप्रसादेनदृष्टवत्यस्मियच्छुभे ४१ सर्वाःपुत्रफलानार्यःसद्भिरेतदुदाहृतम् ॥ तस्मादन्विष्यतींदद्यात्सपुत्रकरकान्शुभे ४२ ज्येष्ठाषाढौ शुभौमासौपुरोक्तंविधिमाचरेत् ॥ अथवाज्येष्ठमेवैकमाषाढंवासमाचरेत् ४३ ततोमासद्वयेपूर्णेमासेवावरवर्णिनि ॥ सपुत्रकरकान्दद्यात्फाणितप्रतिपूरितान् ४४ सर्पिषःपयसश्चैवदध्नोथमधुनोनघे ॥ जलस्यचतथादद्यात्पूरयित्वाशशिप्रभे ४५

पट्टमहिषीत्वार्थं ॥ ३७ ॥ ३८ ॥ व्रतकंव्रतोपकरणंद्रव्यंविभज्यदेयमित्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ अन्विष्यतींपुत्रकामनां करकान्नासिकान्वितान् अल्प घटान् सपुत्रेविशेषणंतदर्थिनीभिर्देयान् ॥ ४२ ॥ दानकालमाहज्येष्ठेति पुरोक्तंगोशृंगसेवनादि ४३ ॥ फाणितंशर्करोदकंपानकाख्यं ४४ ॥ सर्पिष इत्यादीनांपृथग्ग्रहणात् ॥ ४५॥

॥ ४६ ॥ ४७ ॥ ॥ ४८ ॥ व्रतांतरमाहयज्ञोपवीतमिति ॥ ४९ ॥ अपत्याख्यानयोगेनयत्पूर्वंदानमुक्तंतत्पुत्रापत्यकामापुनक्षत्रस्यपुष्यादेर्योगेनदद्यात् एवंकन्याकामास्त्रीनक्षत्रेरोहिण्यादेर्योगेकरकादिदद्यात् ॥ ५० ॥ ५१ ॥ कौमुद्यांकार्तिक्यांपौर्णमास्यां संस्थाप्यसमाप्य ॥ ५२ ॥ ५३ ॥ नारीधान्यंद्विदलं तथाफलंचद्विदलमेवेत्यर्थः ॥ ५४ ॥

एकस्मैज्ञानवृद्धायसुव्रतायजितात्मने ॥ सपुत्रकरकान्दद्याद्यावंतोमनसःप्रियाः ४६ इच्छेतस्त्रीदुहितरंस्त्रीणांकामकरंततः ॥ किंचिद्द्रव्यंसुताकामात्सुतांप्राप्नोत्यसंशयः ४७ गौर्वाथकांचनंवापिदक्षिणाचैवशस्यते ॥ विप्रस्याच्छादनंदेयमवश्यंतुशुचिस्मिते ४८ यज्ञोपवीतंव्रतकेदद्यान्नारीशुचिव्रता ॥ सुपुत्रकरकाणांतुविधिरुक्तोविपश्चिता ४९ अपत्याख्यानयोगेनब्राह्मणेभ्यःशुचिव्रता ॥ संवत्सरंसुसंपूर्णंव्रतधर्मानुपालिनी ५० करकानपिदद्याच्चपूर्णेसंवत्सरेशुभे अनुज्ञयासदाभर्तुःसत्यवादिन्यरुंधति ५१ सुवर्णसूत्रंविप्रायकौमुद्यांदातुमर्हति ॥ यज्ञोपवीतंविप्रस्यव्रतंसंस्थाप्यकामिकम् ५२ यज्ञोपवीतंकरकंदक्षिणांचस्वशक्तितः ॥ प्रयच्छतीसतीस्त्रीभ्यःसर्वान्कामान्समश्नुते ५३ नवंनभक्षयेत्किंचिन्नारीधान्यमथोफलम् ॥ पुष्पाणिनोपयुंजीतयावद्देवंसमाचरेत् ५४ एकभक्तेनधर्मज्ञेपुण्यकंकर्तुमर्हति ॥ ब्राम्हणायतथादेयंभर्तुश्चतदनंतरम् ५५ एवंसंवत्सरंकृत्वासुभगारूपशालिनी ॥ भवत्यविधवाचैवस्त्रीधनस्यतथेश्वरी ५६ वार्ताकानिनखादेद्यास्त्रीपूर्णंपरिवत्सरम् ॥ नसापुत्रविनाशंहिपश्यतीत्यवगम्यताम् ५७ शशकंमृगमांसंवानित्यमेवविवर्जयेत् ॥ नाप्नोतिमरणंनारीप्राप्नोतिपतिदेवताम् ५८ अलाबुंवर्जयेन्नारीतथैवोत्पादिकामपि ॥ अलाबुंकांचनींदद्याद्याभर्तुःसुखमिच्छति ५९ पूर्णेसंवत्सरेदद्यादेकैकंशाकमादृता ॥ सदक्षिणंपुत्रवतीभवत्येकापुरोधिका ६० स्वयंप्रक्षालयानास्त्रीस्वपादावेवमादितः ॥ प्रतिष्ठांलभतेनित्यमुद्वेगंनाधिगच्छति ६१ दिवायासूर्यपूतेनवर्तयेत्स्त्रीपतिव्रता ॥ एकंसंवत्सरंपूर्णंरात्रावन्नंविवर्जयेत् ६२ साजीवपुत्रासुभगाभवत्यमरवर्णिनि ॥ अधितिष्ठतिसर्वांश्चसपत्न्योनात्रसंशयः ६३ पूर्णेसंवत्सरेदद्यात्सौवर्णंसूर्यमुत्तमम् ॥ ब्राह्मणायाभिरूपायदरिद्राययशस्विने ६४ फलानिवाथपुष्पाणिभक्ष्याण्यपिचसुव्रता ॥ दद्यादनस्तमितकेचरितव्रतकातथा ६५ यातथास्तमितेसूर्येभुंक्तेस्त्रीनियतासती ॥ चंद्रनक्षत्रपूतानिभोज्यानिवरवर्णिनि ६६ सादद्यात्कांचनंचंद्रंनक्षत्राणिग्रहानपि ॥ अभिरूपायविप्रायवासश्चलवणान्वितम् ६७ चंद्रशीतलगात्रीसाभवत्यमरवर्णिनि ॥ सुभगादर्शनीयाचपुत्रवत्यपिभाविनी ६८ पौर्णमास्यांतुसततंप्राप्तेसोमोदयेंगना ॥ अर्घंदद्यात्सुमनसांसाक्षतंसकुशंतथा ६९

५५ ॥ ॥ ५६ ॥ वार्ताकानिवृंताकानि ॥ ५७ ॥ मरणमल्पायुष्यंपतिदेवतांपातिव्रत्यं ॥ ५८ ॥ अलाबुंतुंबीफलं ॥ उत्पादिकांउपोदकींपोईइतिप्रसिद्धां ॥ ५९ ॥ ६० ॥ प्रक्षालयानाप्रक्षालयंती ॥ ६१ ॥ व्रतांतरमाहदिवेति दिनैकभोजिनी ॥ ६२ ॥ सपत्न्यः सपत्नीः अधितिष्ठतीआक्रम्यतिष्ठती ॥ ६३ ॥ ६४ ॥ ६५ ॥ व्रतांतरमाहयातथेति ॥ ६६ ॥ ॥ ६७ ॥ ६८ ॥ ६९ ॥

यावकंसगुडघृतंगोधूमान्नम् ॥ ७० ॥ व्रतांतरमाह ॥ अदृष्टेति ॥ ७१ ॥ ७२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायामेकोनाशीतितमोध्यायः ॥ ७९ ॥ ॥ छ ॥ अथाशीतितमेध्यायेमुष्मिन्प्रोक्तानिकामतः ॥ अंगनिर्वेशहेतूनिव्रतकानिशुभान्यलं ॥ १ ॥ निर्वेष्टव्यमिति परसुखप्राप्तियोग्यंकर्तव्यं ॥ १ ॥ क्षिपतिउपोषणेनन यति ॥ २ ॥ ३ ॥ ४ ॥ ऊर्मिमन्तःसर्पसर्पणतुल्याः स्वरालाग्राःसुतरांकुटिलाग्राः ॥ ५ ॥ धात्र्याआमलक्याबिल्वेनश्रीफलेनसमंकृत्वातेनशिरःप्रक्षालयेत् ॥ ६ ॥

यावकंचबलिंदद्याद्दध्नाचसहसंयुतम् ॥ एवंयाकुरुतेनित्यंसर्वान्कामानवाप्नुयात् ७० अदृष्टायातुनाश्नातिसूर्यंनारीपतिव्रता ॥ दुर्दिनेवाथवाप्यभ्रेसेष्टा न्कामानवाप्नुयात् ७१ कांचनंशक्तितोदद्यात्साविप्रायमनस्विनी ॥ सुभगादर्शनीयाचभवत्यमरवर्णिनी ॥ ७२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि ष्णुपर्वणिपारिजातहरणेव्रतकथनंनामैकोनाशीतितमोध्यायः ॥ ७९ ॥ छ ॥ भगवत्युवाच ॥ निर्वेष्टव्यंशरीरंयैर्व्रतकैःपुण्यकैरपि ॥ अरुंधतिप्रवक्ष्या मिसहैताभिर्वरेणतु १ कृष्णाष्टमींयाक्षिपतिस्याद्वामूलफलाशिनी ॥ ब्राह्मणायैकमशनंस्वंदत्वाभर्तृदेवता २ शुक्लवस्त्राशुभाचारागुरुदैवतपूजका ॥ एवं संवत्सरंकृत्वाततोदद्याद्द्विजातये ३ गोवालरज्जुसुकृतंचामरंचध्वजंतथा ॥ दक्षिणापूर्णमिष्टान्नंशक्त्यावापिशुचिव्रते ४ ऊर्मिवंतःस्वरालाग्राःश्रोणिदेशावलं बिनः ॥ तस्याभवंतिकेशास्तुभक्तिमत्याहिभर्तरि ५ शिरोनिर्वेष्टुकामातुगोमयेनाशिरःसती ॥ प्रक्षालयेन्मलंधात्र्याबिल्वेनश्रीफलेनच ६ गोमूत्रंचसदा प्राश्येच्छिरःस्नानंचमिश्रयेत् ॥ कृष्णांचतुर्दशींत्वेतत्कर्तव्यंवरवर्णिनि ७ भवत्यविधवाचैवसुभगाविज्वरातथा ॥ शिरोरोगैर्नैवचास्याःशरीरमभितप्य ते ८ दर्शनीयंललाटंयाकांक्षतिस्त्रीशुचिस्मिते ॥ तिथिंप्रतिपदंनित्यंसाक्षिपेदेकभोजना ९ पयसाचतथाश्नीयाद्यावत्संवत्सरोगतः ॥ ब्राह्मणायततोद द्यात्पटंरूप्यमयंशुभं १० ललाटंरूपसंपन्नमाप्नोतिस्त्रीसुमध्यमा ॥ सततंस्त्रीद्वितीयायांभ्रुवोरिच्छेत्सुरूपतां ११ अनंतरोपवासेनशाकभक्ताशनासती ॥ ततःसंवत्सरेपूर्णेब्राह्मणंस्वस्तिवाचयेत् १२ फलैःपरिणतैःसौम्यैर्माषाणांदक्षिणान्वितैः ॥ लवणेनचभद्रंतेघृतपात्रेनचानघे १३ आत्मनःशोभनौकर्णा विच्छतीस्त्रीसुमध्यमा ॥ नक्षत्रेश्रवणेप्राप्तेध्रुवंभुंजीतपावकं १४ ततःसंवत्सरेपूर्णेकर्णौदद्याद्धिरण्मयौ ॥ घृतेप्रक्षिप्यविप्रायपयसासहितेशुभे १५ नासा मिच्छेल्ललाटांतामव्यंगांव्याधिवर्जितां ॥ तिलगुल्मंसदासिंचेद्यावत्पुष्पर्द्धिर्हिरक्षितः १६ अनंतरोपवासेनसेक्तव्यःसलिलैःसदा ॥ तस्मादवाप्यपुष्पा णिघृतेप्रक्षिप्यदापयेत् १७

॥ ७ ॥ ८ ॥ ९ ॥ पयसासहाश्नीयादोदनं पटंस्त्रीभिःशिरोदेशेबंधनीयंरूप्यमयंस्वर्णमयम् ॥ १० ॥ ११ ॥ १२ ॥ माषाणांसुवर्णमाषाणाम् ॥ १३ ॥ १४ ॥ १५ तिलगुल्मंतिलस्तोमंअनंतरेयवहितपूर्वदिनेउपोष्येत्यर्थः एवंयावद्धान्योत्पत्तिकर्तव्यम् ॥ १६ ॥ १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ भक्तद्वयमपिनाश्नीयादुपवसेदित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ तृणराजस्तालः ॥ ३० ॥

स्वक्षीभवेयमितियास्त्रीकांक्षत्यमृतोद्भवे ॥ अनंतरंवैभुंजानापयसाथघृतेनवा १८ ततःसंवत्सरेपूर्णेपद्मपत्राणिमंडिता ॥ तथैवोत्पलपत्राणिन्यसेत्क्षीरे शुचिस्मिते १९ प्लवमानानिविप्रायततोदद्यात्सतीसाति ॥ कृष्णसारसमानाक्षीतद्दत्वाभवतिस्मवै २० इच्छेद्दोष्ठौचारुरूपौयास्त्रीधर्मगुणान्विता ॥ सा मृन्मयेनतुपिबेदुदकंवत्सरंसती २१ अयाचितेनभुंजीतनवम्यांधर्मभागिनी ॥ ततःसंवत्सरेपूर्णेविद्रुमंदातुमर्हति २२ तेनबिंबफलाभौष्ठौस्त्रीभवत्येवशो भने ॥ सुभगाथवपुःपुत्रधनाढ्यागोमतीतथा २३ याचारुरूपानिच्छेतदंतानमरवर्णिनि ॥ शुक्लाष्टमींनसाश्नीयाद्भक्तद्वयमनिंदिता २४ ततःसंवत्सरेपूर्णे दद्याद्रौप्यमयान्सती ॥ दंतान्प्रक्षिप्यधर्मज्ञेपयस्यतिगुणोदिते २५ तेनसाजातिपुष्पाभान्दंतान्प्राप्नोतिसासती ॥ सौभाग्यमपिचाप्नोतिसपुत्रत्वंतथा नघे २६ सर्वमेवमुखंकांतमिच्छेद्याशुचिरानने ॥ सापूर्णमास्यांस्नात्वातुप्राप्यचंद्रोदयेशुभे २७ यावकंपयसासिद्धंदत्त्वाविप्रायभामिनी ॥ ततःसंवत्सरे पूर्णेचंद्रंरूप्यमयंशुभम् २८ पद्मेफुल्लेतुविन्यस्यब्राह्मणान्स्वस्तिवाचयेत् ॥ पूर्णचंद्रमुखीतेनदानेनस्त्रीशुभाभवेत् २९ स्तनाविच्छतियानारीतृणराजफ लोपमौ ॥ अयाचितंदशम्यांसानित्यमश्नीतवाग्यता ३० संवत्सरेततः पूर्णेद्वेबिल्वेकांचनेशुभे ॥ सदक्षिणेब्राह्मणायप्रयच्छतिधृतात्मने ३१ सौभाग्यं परमाप्नोतिबहुपुत्रांस्तथैवच ॥ सदोन्नतौस्तनौसास्त्रीबिभर्त्यमरवर्णिनि ३२ शातोदरत्वमिच्छंतीक्षिपेदेकांतभोजनी ॥ पंचम्यांतत्रभोक्तव्यमन्नंतोयेनानि त्यदा ३३ ततःसंवत्सरेपूर्णेदद्याज्जातिलतांशुभे ॥ फुल्लांसदक्षिणांधन्येब्राह्मणायधृतात्मने ३४ हस्ताविच्छतियानारीरूपयुक्तौसुमध्यमे ॥ द्वादशींसाक्षिप त्वेवंशाकैःसर्वैरनिंदितैः ३५ संवत्सरेततःप्राप्तेरौक्मेपद्मेददातुसा ॥ ब्राह्मणायाभिरूपायतथापद्मद्वयंशुभम् ३६ श्रोणींविशालामन्विच्छेत्स्त्रीक्षिपत्वेवसुव्रते ॥ त्रयोदशीमेकभक्तमश्नात्वेवमयाचितम् ३७ ततःसंवत्सरेपूर्णेलवणंसंप्रयच्छतु ॥ प्रजापतिमुखाकारंकृत्वातत्रवरानने ३८ कांचनंचैवदातव्यंतदाकारस्यसर्व दा ॥ अंजनेनचधर्मज्ञाशनकैरवचूर्णयेत् ३९ रत्नानिचैवपूर्णानिवासोरक्तंचदापयेत् ॥ तेनश्रोणीमभिमतांस्त्रीसौम्येप्रतिपद्यते ४० मधुरांवाचमिच्छंती वर्जयेल्लवणंसती ॥ संवत्सरंवामासंवाप्रयच्छेल्लवणंततः ४१ सदक्षिणंब्राह्मणायपरमाधुर्यमिच्छती ॥ शुकवाक्याच्छतगुणंभवत्यमरवर्णिनि ४२

॥ ३१ ॥ ३२ ॥ शातोदरत्वंकृशोदरत्वम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ प्रजापतेश्चतुर्वक्त्रस्यमुखाकारंराशेश्चतुर्दिक्षुमुखाकारंकुर्यादित्यर्थः ॥ ३८ ॥ तदाकारस्य प्रजापतिमुखाकारस्यसदृशाकारं ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

४३ ॥ ४४ ॥ ४५॥ ४६॥४७ ॥४८॥४९॥५०॥ माभवात्वित्यन्वयः ॥५१॥ पर्यश्नातुअतथ्यमनृतं ॥५२॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायाम

गूढगुल्फाशिरौपादाविच्छंत्यासोमनंदिनि ॥ षष्ठ्यांषष्ठ्यांवरारोहेभोक्तव्यंसलिलौदनम् ४३ अग्निर्वाब्राह्मणोवापिनस्प्रष्टव्यःपदासदा ॥ यदापदास्पृशे
त्संचवंदेततपसान्विते ४४ पादेनचैवपादौतुप्रक्षालयतुमर्हति ॥ एतैर्नित्यव्रतैर्युक्ताधर्मज्ञापतिदेवता ४५ कूर्मौरूप्यमयौदद्याद्ब्राह्मणायपतिव्रते ॥ तौ
वरायब्राह्मणायस्थापयित्वाघृतेनघे ४६ पद्मेचाधोमुखेकृत्वादद्याद्विप्रायनंदिनि ॥ रक्तैर्द्रव्यैर्मिश्रयित्वाकांचनेनाभ्यलंकृतौ ४७ सर्वमेवतुयागात्रमि
च्छत्यतिमनोहरम् ॥ त्रिरात्रंपुष्पकालेसाकरोतुपतिदेवता ४८ कौमुद्यामथवाषष्ठ्यांमाघ्यांचाश्वयुजेतथा ॥ मातरंपितरंचैवमन्यतेतिथिदैवतं ४९ घृ
तंचनित्यंविप्रेभ्योददातुलवणंतथा ॥ संमार्जनंगृहेचैवकरोतुपतिदेवता ५० उपलेपनंचधर्मज्ञेबलिकर्मचमानिनि ॥ वाग्दुष्टाचैवमाशुभ्रेभवत्वात्मार्थपं
डिता ५१ पर्यश्नातुचसाकंचिदपिदासंयशस्विनी ॥ बलिंसृजत्वतथ्यंचपरित्यजतुभामिनि ५२ इतिश्रीमहा० खि० ह० वि० पारिजातहरणे
व्रतकविधानेऽशीतितमोऽध्यायः ॥ ८० ॥ छ ॥ उमोवाच ॥ बांधवान्सगुणानिच्छेदेकभक्तेननित्यदा ॥ सप्तमींसप्तमींनित्यंक्षपेत्स्त्रीपतिदेवता ॥ १
ततःसंवत्सरेपूर्णेवृक्षंदद्याद्धिरण्मयं ॥ सदक्षिणंब्राह्मणायशुभबंधुमतीभवेत् २ करंजेदीपकंदद्यात्सदायाप्रमदावरे ॥ पूर्णेसंवत्सरेदद्यात्सौवर्णंदीपकंततः
३ रुच्यासास्त्रीभवेद्भर्तुरिष्टापुत्रवतीतथा ॥ सपत्नीनामाधितथादीपवज्ज्वलतेशुभे ४ याशेषभोजनीनित्यंनैवचस्यादरुंतुदा ॥ नचस्याद्व्यशनासौम्येनि
त्यंचपतिदेवता ५ शौचान्विताचसततंनचरूक्षाभिभाषिणी ॥ श्वश्रूश्वशुरयोर्नित्यंशुश्रूषाभिरतासती ६ किंतस्याव्रतकैःकार्यंकिंवास्यादुपवासकैः
याभर्तृदेवतानित्यंसत्यधर्मगुणान्विता ७ विधवास्त्रीतुयाहिस्याद्दैवयोगात्सतीसति ॥ तस्यावक्ष्यामियोधर्मःपुराणोक्तःसुमध्यमे ८ पतिंसंकल्पयि
त्वासाचित्रस्थंवाथमृन्मयं । तस्यपूजांसदाकुर्यात्सतांधर्ममनुस्मरन् ९ ततएवाभ्यनुज्ञासानित्यंयाचेतसुव्रता ॥ व्रतकेचोपवासेचभोजनेचविशेषतः
१० भर्तृलोकान्व्रजत्येवनचेद्युव्वरतेपतिम् ॥ शांडिलीसूर्यवद्भातिसततंपतिदेवता ११ अद्यप्रभृतिसर्वेषांदेवानांचैवयोषितः ॥ द्रक्ष्यंतिपुण्यकाविधिंपौ
राणोयःसनातनः १२ मुनिश्चनारदःकृत्स्नंपौराणंज्ञास्यतेविधिम् ॥ उपवासस्यधर्मात्माव्रतकानांतथैवच १३ अदितिस्तपसेंद्राणीत्वंचसोमसुतेवरे ॥
प्रवर्तनेपुण्यकानांव्रतकानांचसर्वदा १४ कीर्तनीयाःसतीनांहिभविष्यथगुणान्विताः ॥ उपवासव्रतविधिंयथावदिहकृत्स्नशः १५

शीतितमोऽध्यायः ॥ ८० ॥ एकाशीतितमेऽध्यायेसौष्ठवंस्त्रजनस्यच ॥ भवेद्यैर्व्रतैर्यद्यत्तत्तत्स्पष्टंनिरूप्यते ॥ १ ॥ बांधवानिति १ ॥ २ ॥ ३ ॥ ४ ॥ व्यशनाअन्नवर्जिता
सौम्येबुधवासरे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥१४ ॥ १५ ॥

१६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ युक्तैःउचितसाधनैः ॥ २१ ॥ २२ ॥ २३॥ २४ ॥ २५॥ आत्मनोगंगायाजलेस्वयमात्दत्तेस्वयमुपगतेवा ॥ २६ ॥ २७ ॥२८

प्रादुर्भावेषुसर्वेषुभार्याविष्णोर्महात्मनः ॥ ज्ञास्यंतिपुण्यकविधिंनित्यमेवसनातनम् १६ सविशेषंचधर्माणांस्त्रीधर्मेषुप्रशस्यते ॥ पतिभक्तिरदुष्टत्वमवाग्दुष्टत्वमेवच १७ ॥ ॥ नारदउवाच ॥ ॥ एवमुक्तास्तुताःसाध्व्योमहादेव्यातपोधनाः ॥ जग्मुर्हृष्टामहादेवींप्रणिपत्यहरप्रियाम् १८ अदितिर्व्रतकंचक्रेशृणुयद्धर्मचारिणी ॥ उमाव्रतविधिःसर्वःपूर्वोद्दिष्टस्तयाकृतः १९ पारिजातेनिबध्याथममदत्तस्तुकश्यपः ॥ अदितिव्रतकंनामतद्दत्तंसत्यभामया २० तदेवव्रतकंदत्तंसावित्र्याधर्मनित्यया ॥ तैरेवयुक्तैःसंयुक्तमिदंत्वभ्यधिकंकृतम् २१ संध्याकालेतुसंप्राप्तेस्थानेस्थानेतथैवच ॥ पूजनंवानमस्कारोजपश्चद्विगुणःस्मृतः २२ सावित्रीव्रतकंकृत्वातथादित्याव्रतंसती ॥ भर्तुःकुलंपितृकुलमात्मानंचैवतारयेत् २३ इंद्राणीव्रतकंचक्रेतदेवौमंयथाविधि ॥ रक्तमभ्यधिकंवासोभोजनंचैवसामिषम् २४ चतुर्थेदिवसेवापिपुण्यकार्थेविधिःपुनः ॥ अहोरात्रोपवासश्चदेयंकुंभशतंतथा २५ गंगयाव्रतकंदत्तंतदेवौमिंयशस्करि ॥ स्नानमभ्यधिकंत्वत्रप्रत्यूषस्यात्मनोजले २६ अन्यस्मिन्वाजलेमाघशुक्लपक्षेहरिप्रिये ॥ एतद्गंगाव्रतंनामसर्वकामप्रदंस्मृतम् २७ सप्तसप्तचसप्ताथकुलानिहरिवल्लभे ॥ स्त्रीतारयतिधर्मज्ञागंगाव्रतकचारिणी २८ देयंकुंभसहस्रंतुगंगायाव्रतकेशुभे ॥ तारणंपारणंचैवतद्व्रतंसार्वकामिकम् २९ यमभार्याचकाराथव्रतंयामरथंशुभम् ॥ हेमंतेतत्तुकर्त्तव्यमाकाशेहरिवल्लभे ३० इमानिचैववाक्यानिब्रूयादाकाशमास्थिता ॥ स्नात्वाशुचिसमाचारानमस्कृत्यपतिंशुभे ३१ चराम्यहंयामरथंहिमंपृष्ठेनधारये ॥ पतिव्रताजीवपुत्राभवेयंचपुरोधिका ३२ सपत्नीरधितिष्ठेयंपश्येयंचैवमायमम् ॥ सभर्तृपुत्राजीवेयंचिरंचसुखमेवच ३३ पतिलोकंचगच्छेयंभवेयंनंदिनीतथा ॥ सुचैलामृष्टहस्ताचस्वजनेष्टागुणान्विताः ३४ एवंकृत्वाततोविप्रंमधुनास्वस्तिवाचयेत् ॥ तिलैरपितथाकृष्णैःपायसेनतुभोजयेत् ३५ एवंव्रतानिदेवीभिःकृतान्यमरवर्णिनि ॥ महादेव्यापुरोक्तानिरुद्रपत्न्याहरिप्रिये ३६ अहंब्रवीमितपसामदीयेनसमन्विताः सर्वाद्रक्ष्यथगुण्यानिव्रतकानितथैवच ३७ पौराणान्युमयादेव्यायानिदृष्टानिवैपुरा ॥ कल्याणगुणयुक्तानिपावनानिशुभानिच ३८ वैशंपायनउवाच ॥ रुक्मिणीव्रतकंचक्रेदृष्ट्वाव्रतकविस्तरम् ॥ उमायावरदानेनदृष्ट्वादिव्येनचक्षुषा ३९ उमाव्रतेषुसर्वेषुवृषदानंतथाधिकम् ॥ रत्नमालाप्रदानंचतथान्नंसार्वकामिकम् ४०

तारणंदुःखानां पारणंमनोरथानाम् ॥ २९ ॥ यामरथंनामतः आकाशेअनाच्छादितेदेशे ॥ ३० ॥ ३१ ॥ धारयेधारयंती ॥ ३२ ॥ ३३ ॥ मृष्टहस्ताविशुद्धकरा ॥ ३४ ॥ ॥ मधुनामधुरसेन ॥ ३५ ॥ ३६ ॥ तपसामत्तपोबलेनातींद्रियमपिपुण्यफलंद्रक्ष्यथ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

११९ तथाजांबवतीचक्रेपुरोमात्रतकंयथा ॥ ददावभ्यधिकंसातुरत्नवृक्षंमनोहरम् ४१ सत्यादद्दौतथैवाथपुरोमात्रतकंयथा ॥ पीतमभ्यधिकंवासस्तयादत्तमुमात्र अ०८२
ते ४२ रोहिण्याथचफाल्गुन्यामघयाचपुरातने ॥ व्रतानिखलुदत्तानिबहूनिकुलवर्द्धने ४३ ददौशतभिषाचैवव्रतकंपुण्यलक्षणम् ॥ येननक्षत्रमुख्यत्वं
जगामकुरुनंदन ४४ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपारिजातहरणेउमाव्रतकथनसमाप्तिः पारिजातहरणकथनसमाप्तिर्नामचैकाशीतितमोऽ
ध्यायः ॥ ८१ ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ वैशंपायनधर्मज्ञव्यासशिष्यतपोधन ॥ पारिजातस्यहरणेषट्पुरंपरिकीर्तितम् १ निवासोसुरमुख्या
नांदारुणानांतपोधन ॥ तेषांवधंमुनिश्रेष्ठकीर्तयस्वांधकस्यच २ ॥ वैशंपायनउवाच ॥ त्रिपुरेनिहतेवीरेरुद्रेणाक्लिष्टकर्मणा ॥ तत्रप्रधानाबहवोबभूवुरसु
रोत्तमाः ३ शराग्निनानदग्धास्तेरुद्रेणत्रिपुरालयाः ॥ षष्टिःशतसहस्राणिनन्यूनान्यधिकानिच ४ तेज्ञातिवधसंतप्ताश्चक्रुर्वीराःपुरातपः ॥ जंबूमार्गेसता
मिष्टेमहर्षिगणसेविते ५ आदित्याभिमुखावीराःसहस्राणांशतंसमाः ॥ वायुभक्षान्नृपश्रेष्ठस्तुवंतःपद्मसंभवम् ६ तेषामुदुंबरंराजन्गणएकःसमाश्रितः॥ वृ
क्षंतत्रावसन्वीरास्तेकुर्वंतोमहत्तपः ७ कपित्थवृक्षमाश्रित्यकेचित्तत्रोषिताःपुरा ॥ सृगालवाटीस्त्वपरेचेरुरुग्रंतथातपः ८ वटमूलेतथाचेरुस्तपःकौरं
वनंदन ॥ अधीयंतोपरंब्रह्मवटंगत्वासुरात्मजाः ९ तेषांतुष्टःप्रजाकर्तानरदेवपितामहः ॥ वरंदातुंसुरश्रेष्ठःप्राप्तोधर्मभृतांवरः १० वरंवरयतेत्युक्तास्तेराजन्प
द्मयोनिना ॥ नेषुस्तद्वरदानंतुद्विषतस्त्र्यंबकंविभुं ११ इच्छंतोऽपचितिंगंतुंज्ञानिनांकुरुनंदन ॥ तानुवाचततोब्रह्मासर्वज्ञःकुरुनंदन १२ विश्वस्यजगतः
कर्तुःसंहर्तुश्चमहात्मनः ॥ कःशक्तोऽपचितिंगंतुंमास्तुवोऽत्रवृथाश्रमः १३ अनादिमध्यनिधनःसोमोदेवोमहेश्वरः ॥ तमसूयमुखंस्वर्गेवस्तुमिच्छंतिये
सुराः १४ तेनेषुस्तत्रकेचित्तुदुरात्मानोमहासुराः ॥ अथेषुरपरेराजन्नसुराभव्यभावनाः १५ नेषुर्येसुदुरात्मानस्तानुवाचपितामहः ॥ वरयध्वंवरंवीरारुद्र
क्रोधमृतेऽसुराः १६ तऊचुःसर्वदेवानामवध्यास्यामहेविभो ॥ पुराणिषट्चनोदेवभवत्वंतर्महीतले १७ सर्वकामसमृद्धार्थेषट्पुरंचास्तुनःप्रभो ॥ वयं
चषट्पुरंगत्वावसेमचसुखंविभो १८

तितमेह्यध्यायेवर्ण्यतेततः ॥ षट्पुरस्थानिकुंभस्यवधोपक्रमविस्तरः ॥ १ ॥ अथउत्तरार्द्धकथानिरूप्यते ॥ वैशंपायनेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६॥ ७॥ सृगालोपिवृक्ष ११९
विशेषःसाहचर्यात् ॥ ८ ॥ ९ ॥ १० ॥ तेनअसुराःनेषुःनांगीकृतवंतः ॥ ११ ॥ १२ ॥ अपचितिंरुद्रद्रोहेण आनृण्यं ॥ १३ ॥ असूयप्रतिगर्जित्वा ॥ १४ ॥ नेषुःब्रह्मोक्तं
भव्यभावनाःदीर्घदर्शनाः भवमहिमाभिज्ञावा ॥ १५ ॥ रुद्रक्रोधंरुद्रक्रोधनंकृतेविना ॥ १६ ॥ १७ ॥ १८ ॥

१९ ॥ २० ॥ २१ ॥ २२ ॥भाव्यभावनाइतियदुक्तंतदेवस्पष्टयतियेपिभक्ताइति अपिशब्दस्तुशब्दार्थे ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ कापित्थिकाकापित्थंतस्यवृक्षे २७ मासांतपक्षांतौअमापूर्णिमे ॥ २८ ॥ २९ ॥नचविदेशेविदूरेदेशेवानिवसतः ॥ ३० ॥ ३१ ॥ औदुंबरानित्यादितत्तत्स्थाननिवासिसंज्ञाःधर्मात्मानः ॥ ३२ ॥ ३३ ॥ तैरसू

रुद्रा दुग्रंभयंनस्याद्येननोज्ञातयोहताः ॥ निहतंत्रिपुरंदृष्ट्वाभीतास्मतपसांनिधे १९ ॥ ॥ पितामहउवाच ॥ ॥ असुराभवतावध्यादेवानांशंकरस्यच ॥ नबाधिष्यथचेद्विप्रान्सत्पथस्थान्सतांप्रियान् २० विप्रोपघातंमोहाच्चेत्करिष्यथकथंचन ॥ नाशंयास्यथविप्राहिजगतःपरमागतिः २१ नारायणाद्विभेत व्यंकुर्वद्भिर्ब्राम्हणाहितम् ॥ सर्वभूतेषुभगवान्हितंधत्तेजनार्दनः २२ तेगताअसुराराजन्ब्राह्मणायेविसर्जिताः ॥ येपिभक्तामहादेवमसुराधर्मचारिणः २३ स्वयंहिदर्शनंतेषांददौत्रिपुरनाशनः ॥ श्वेतंवृषभमारुह्यसोमःसप्रवरःप्रभुः ॥ उवाचेदंचभगवानसुरान्ससतांगतिः २४ वैरमुत्सृज्यदंभंचहिंसांचासुरसत्तमाः ॥ मामेवचाश्रितास्तस्माद्वरंसाधुददामिवः २५ यैर्दीक्षिताःस्थमुनिभिःसत्क्रियापरमैर्द्विजैः ॥ सहतैर्गम्यतांस्वर्गःप्रीतोहंवःसुकर्मणा २६ इहयेचैववत्स्यंतितापसाब्रह्मवादिनः ॥ अपिकापित्थिकावृक्षेतेषांलोकोयथामम २७ इहमासांतपक्षांतौयःकरिष्यतिमानवः ॥ वानप्रस्थेचविधिनापूजयन्मांतपोधन २८ वर्षाणांससहस्रंतुतपसांप्राप्स्यतेफलम् ॥ कृत्वात्रिरात्रंविधिवल्लप्स्यतेचेप्सितांगतिं २९ अर्कद्वीपेनिवसतोद्विगुणंतद्भविष्यति ॥ नविदेशेचभद्रंवोवरमेतद्ददाम्यहम् ३० श्वेतवाहननामानंयश्वमांपूजयिष्यति ॥ सर्वतोभयचित्तोपिगतिंसममयास्यति ३१ औदुंबरान्वाटमूलान्द्विजान्कापित्थिकानपि तथास्तृगालवाटीयान्धर्मात्मानोदृढव्रतान् ३२ मुनींश्वब्रम्हवादीयान्सविशेषेणयेनराः ॥ पूजयिष्यंतिसततंतेयास्यंतीप्सितांगतिम् ३३ इत्युक्त्वाथमहादेवोभगवान्श्वेतवाहनः ॥ तैरेवसहितःसर्वैरुद्रलोकंजगामवै ३४ जंबूमार्गेगमिष्यामिजंबूमार्गेवसाम्यहम् ॥ एवंसंकल्पमानोपिरुद्रलोकेमहीयते ॥ ३५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिषट्पुरवधेद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ एतस्मिन्नेवकालेतुचतुर्वेदषडंगवित् ॥ ब्राम्हणोयाज्ञवल्क्यस्यशिष्योधर्मगुणान्वितः १ ब्रह्मदत्तेतिविख्यातोविप्रोवाजसनेयिवान् ॥ अश्वमेधःकृतस्तेनवसुदेवस्यधीमतः २ ससंवत्सरदीक्षायांदीक्षितःषट्पुरालयः ॥ आवर्तायाःशुभेतीरेसुनद्यामुनिजुष्टया ३ सखाचवसुदेवस्यसहाध्यायीद्विजोत्तमः ॥ उपाध्यायश्चकौरव्यक्षीरहोतामहात्मनः ४ वसुदेवस्तत्रयातोदेवक्यासहितःप्रभो ॥ यजमानेषट्पुरस्थंयथाशक्रोबृहस्पतिम् ५

सुरैः ॥ ३४ ॥ ३५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ त्र्यधिकेथाशीतितमेत्राध्यायेयज्ञविस्तरः ॥ वर्ण्यतेब्रह्मदत्तस्यतत्रदुष्टविनिग्रहः ॥ १ ॥ एतस्मिन्निति ॥ १ ॥ ब्रह्मदत्तेत्यत्रसंधिरार्षः कारितःसंपादितइत्यर्थः ॥ २ ॥ ३ ॥ क्षीरहोताऽध्वर्युः ॥ ४ ॥ ५ ॥

उपासंतिसेवंते ॥ ६ ॥ ७ ॥ ददौसमागतेभ्यः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ पुराणशब्देनात्रवेदोभिधीयतेतस्मिन् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥



तत्सत्रंब्रह्मदत्तस्यबह्वन्नंबहुदक्षिणम् ॥ उपासंतिमुनिश्रेष्ठामहात्मानोदृढव्रताः ६ व्यासोहंयाज्ञवल्क्यश्चसुमंतुर्जैमिनिस्तथा ॥ धृतिमान्जाबालिश्चैवदेव लाद्याश्चभारत ७ ऋद्ध्यानुरूपयायुक्तंवसुदेवस्यधीमतः ॥ यत्रेप्सितान्ददौकामान्देवकीधर्मचारिणी ८ वासुदेवप्रभावेनजगत्स्रष्टुर्महीतले ॥ तस्मिन्सत्रे वर्तमानेदैत्याःषट्पुरवासिनः ९ निकुंभाद्याःसमागम्यतमूचुर्वरदर्पिताः ॥ कार्यतांयज्ञभागोनःसोमंयास्यामहेवयम् ॥ कन्याश्चब्रह्मदत्तोनोयजमानःप्रय च्छतु १० बह्वयःसंत्यस्यकन्याश्चरूपवंत्योमहात्मनः ॥ आहूयताःप्रदातव्याःसर्वथैवहिनःश्रुतम् ११ रत्नानिचब्रह्मदत्तोविशिष्टानिददातुनः ॥ अन्यथा तुनयष्टव्यंवयमाज्ञापयामहे १२ एतच्छ्रुत्वाब्रह्मदत्तस्तानुवाचमहासुरान् ॥ यज्ञभागोनविहितःपुराणेऽसुरसत्तमाः १३ कथंसत्रेसोमपानंशक्यंदातुंमया हिवः ॥ वृच्छतेहमुनिश्रेष्ठान्वेदभाष्यार्थकोविदान् १४ कन्याहिममयादेयास्ताश्चसंकल्पितामया ॥ अंतर्वेद्यांप्रदातव्याःसदृशानामसंशयम् १५ रत्ना नितुप्रयच्छामिसांत्वेनाहंविचिंत्यताम् ॥ बलान्नैवप्रदास्यामिदेवकीपुत्रमाश्रितः १६ निकुंभाद्यास्तुरुषिताःपापाःषट्पुरवासिनः ॥ यज्ञवाटंविलुलुपुर्जहुः कन्याश्चतास्तथा १७ तद्दृष्ट्वासंप्रवृत्तान्तुदध्यावानकदुंदुभिः ॥ वासुदेवंमहात्मानंबलभद्रंगदंतथा १८ विदितार्थस्ततःकृष्णःप्रद्युम्नमिदमब्रवीत् ॥ गच्छ कन्यापरित्राणंकुरुपुत्राशुमायया १९ यावद्यादवसैन्येनषट्पुरंयाम्यहंप्रभो ॥ सययौषट्पुरंवीरःपितुराज्ञाकरस्तदा २० निमेषांतरमात्रेणगत्वाकामो महाबलः ॥ कन्यास्तामाययाधीमानपजह्रेमहाबलः २१ मायामयीश्चकृत्वान्यान्यस्तवान्रुक्मिणीसुतः ॥ माभैरितिचधर्मात्मादेवकंमुक्तवांस्तदा २२ मायामयीस्ततोहृत्वासुताह्यस्यदुरासदाः ॥ षट्पुरंविविशुर्दैत्याःपरितुष्टानराधिप २३ कर्मचासार्यतेतत्रविधिदृष्टेनकर्मणा ॥ यद्विशिष्टंबहुगुणं तदभूद्वनराधिप २४ एतस्मिन्नंतरेप्राप्ताराजानस्तत्रभारत ॥ सत्रेनिमंत्रिताःपूर्वंब्रह्मदत्तेनधीमता २५ जरासंधोदंतवक्रःशिशुपालस्तथैवच ॥ पांडवाधार्त राष्ट्राश्चमालवास्सगणास्तथा २६ रुक्मीचैवाह्वतिश्चैवनीलोवाधर्मएवच ॥ विंदानुविंदावावंत्यौशल्यःशकुनिरेवच २७ राजानश्चापरेवीरामहात्मानोदृढा युधाः ॥ आवासितानातिदूरेषट्पुरस्यचभारत २८ तान्दृष्ट्वानारदःश्रीमानचिंतयदनिंदितः ॥ क्षत्रस्ययादवानांचभविष्यतिसमागमः २९ अत्रहेतुरहंयु द्धेतस्मात्तत्प्रयताम्यहम् ॥ एवंसंचिंतयित्वाथनिकुंभभवनंगतः ३०



तत्यज्ञवाटलुंठनं ॥ १८ ॥ १९ ॥ प्रभोइतिसंबोधनम् ॥ कन्यागोप्तृत्वंसंभावयति ॥ २० ॥ २१ ॥ २२ ॥ सुताब्रह्मदत्तस्य पारंपर्यतोदुरासदाः ॥ २३ ॥ कर्मसत्राख्यं आसार्यतेप्रसार्यतेविधीयतइत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

३१ ॥ विभुःस्वामीसखामित्रंच पितुःसखाइतिपाठांतरम् ३२ आनीतेतिडाजंतंआनीताइत्यर्थःप्रियकाम्ययातदाराधनेननिमित्तभूतेन ३३ ॥ ३४ ॥ ३५ ॥ ३६॥ कन्याःकमनीयाःकुमार्यःसंगमेसंगमेप्रतिसंगमम् ॥ ३७ ॥ ३८ ॥ सर्वांअप्सरसांगुणैर्युक्ताःअतएवसर्वागीतादिजानंतीतिवाक्यभेदः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

पूजितःसनिकुंभेनदानवैश्चतथापरे ॥ उपविष्टःसधर्मात्मानिकुंभमिदमब्रवीत् ३१ कथंविरोधंयदुभिःकृत्वास्वस्थैरिहास्यते ॥ योब्रह्मदत्तःसहरिःसहितस्यविभुःसखा ३२ शतानिपंचभार्याणांब्रह्मदत्तस्यधीमतः ॥ आनीतावसुदेवस्यसुतस्यप्रियकाम्यया ३३ शतद्वयंब्राह्मणीनांराजन्यानांशतंतथा ॥ वैश्यानांशतमेकंचशूद्राणांशतमेवच ३४ ताभिःशुश्रूषितोधीमान्दुर्वासाधर्मवित्तमः ॥ तेनतासांवरोदत्तोमुनिनापुण्यकर्मणा ३५ एकैकस्तनयोराजन्नेकैकादुहितातथा ॥ रूपेणानुपमाःसर्वावरदानेनधीमतः ३६ कन्याभवंतितनयास्तस्यासुरपुनःपुनः ॥ संगमेसंगमेवीरभर्तृभिःशयनेसह ३७ सर्वपुष्पमयंगंधंप्रस्रवंतिवरांगनाः ॥ सर्वदायौवनेन्यस्ताःसर्वाश्चैवपतिव्रताः३८ सर्वागुणैरप्सरसांगीतनृत्यगुणोदयं॥ जानंतिसर्वादैतेयवरदानेनधीमतः ३९ पुत्राश्चरूपसंपन्नाःशास्त्रार्थकुशलास्तथा ॥ स्वेस्वेस्थितावर्णधर्मेयथावदनुपूर्वशः ४० ताःकन्याभैममुख्यानांदत्ताःप्रायेणधीमता ॥ अवशेषंशतंत्वेकंयदानीतंकिलत्वया ४१ तदर्थेयादवान्वीरयोधयिष्यसिसर्वथा ॥ सहायार्थंतुराजानोव्रियंतांहेतुपूर्वकम् ४२ ब्रह्मदत्तसुतार्थंचरत्नानिविविधानिच ॥ दीयंतांभूमिपालानांसहायार्थंमहात्मनां ४३ आतिथ्यंक्रियतांचैवयेसमेष्यंतिवैनृपाः ॥ एवमुक्तेतथाचक्रुरसुरास्तेऽतिहृष्टवत् ४४ लब्ध्वापंचशतंकन्यारत्नानिविविधानिच ॥ यथार्हेणनरेंद्रैस्ताविभक्ताभक्तवत्सलाः ४५ ऋतेपांडुसुतान्वीरान्वारितानारदेनते ॥ निमेषांतरमात्रेणतत्रगत्वामहात्मना ४६ तुष्टैस्तैरसुराह्युक्ताराजन्भूमिपसत्तमैः ॥ सर्वकामसमृद्धार्थैर्भवद्भिःस्वर्गमैःस्वयम् ४७ अर्चितःस्मयथान्यायंक्षत्रंकिंवःप्रयच्छतु ॥ क्षत्रंचार्चितपूर्वंहिदिव्यैर्वीरैर्भवद्विधैः ४८ निकुंभोथाब्रवीद्धृष्टःक्षत्रंसुररिपुस्तदा ॥ अनुवर्णयित्वाक्षत्रस्यमाहात्म्यंसत्यमेवच ४९ युद्धंनोरिपुभिःसार्द्धंभविष्यतिनृपोत्तमाः ॥ साहाय्यंदातुमिच्छामोभवद्भिस्तत्रसर्वथा ५० एवमस्त्वितितानूचुःक्षत्रियाःक्षीणकिल्बिषाः ॥ पांडवेयानृतेवीरान्श्रुतार्थान्नारदाद्विभो ५१ क्षत्रियाःसन्निविष्टास्तेयुद्धार्थंकुरुनंदन ॥ पत्न्यस्तुब्रह्मदत्तस्ययज्ञवाटंगताआपि ५२ कृष्णोपिसेनयासार्द्धंप्रययौषट्पुरंविभुः ॥ महादेवस्यवचनमुद्वहन्मनसानृप । ५३ ॥ स्थापयित्वाद्वारवत्यामाहुकंपार्थिवंतदा ॥ सतयासेनयासार्द्धंपौराणांहितकाम्यया ५४ यज्ञवाटस्याविदूरेदेवोनिविविशेविभुः ॥ देशेप्रवरकल्याणेवसुदेवप्रचोदितः ५५ दत्तगुल्माप्रतिसरंकृत्वातंविधिवत्प्रभुः ॥ प्रद्युम्नमटनेश्रीमान्रक्षार्थंविनियुज्यच ५६

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ तंस्कंधावारंदत्तगुल्माप्रतिसरंदत्तैर्वृत्त्यर्थंस्थापितैर्गुल्मैर्नप्रतिसरअनिष्टमार्गोयस्मिंस्तंअटनेरक्षार्थपरिभ्रमणे ॥ ५६ ॥

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांत्र्यशीतितमोऽध्यायः ८३ ॥ चतुर्भिरधिकेशीतितमेकामस्यविक्रमः ॥ राजाबध्वारिपून्जित्वाकन्यास्त्वानीयआगतः ॥ १ ॥
मुहूर्तेति ॥ १ ॥ २ ॥ ३ तृतीयाषष्ठ्यर्थे॥३॥वियतिउपरिभागे ॥ ४ ॥ ५ ॥ ६॥७॥८॥ निचक्षुर्यादवः ९ सनत्कुमारोपियादवः ॥ १० ॥ ११॥ मेघानामिवनादोयेषांतान्



इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिषट्पुरवधेकृष्णस्यषट्पुरगमनेत्र्यशीतितमोऽध्यायः ८३ ॥ छ ॥ वैशंपायनउवाच ॥ मुहूर्ताभ्युदिते
सूर्येजनचक्षुषिनिर्मले ॥ बलःकृष्णःसात्यकिश्चतार्क्ष्यमारुरुहुस्तदा १ बद्धगोधांगुलित्राणादंशितायुद्धकांक्षिणः ॥ बिल्वोदकेश्वरंदेवंनमस्कृत्यसुरोत्तमं
२ आवर्तयाजलेस्नात्वारुद्रेणवरदत्तया ॥ गंगायाःकुरुशार्दूलरुद्रवाक्येनपुण्यया ३ प्रद्युम्नमग्रेसैन्यस्यवियतिस्थाप्यमानदः ॥ रक्षार्थंयज्ञवाटस्यपांडवा
न्विनियुज्यच ४ शेषांसेनांगुहाद्वारिभगवान्विनियुज्यच ॥ जयंतमथसस्मारप्रवरंचसतांगतिः ५ तावापेततुरेवाथस्वयंचापश्यतांतथा ॥ वियत्येवनि
युक्तौतौप्रद्युम्नइवभारत ६ ततःकृष्णस्यवचनादाहतोरणदुंदुभिः ॥ जलजामुरजाश्चैववाद्यान्येवापराणिच ७ माकरोरचितोव्यूहःसांबेनचगदेनच ॥ सा
रणश्चोद्धवश्चैवभोजोवैतरणस्तथा ८ अनाधृष्टिश्चधर्मात्मापृथुर्विपृथुरेवच ॥ कृतवर्माचदंष्ट्रश्चनिचक्षुरिरमर्दनः ९ सनत्कुमारोधर्मात्माचारुदेष्णश्चभारत ॥
अनिरुद्धसहायौतौपृष्ठानीकंररक्षतुः १० शेषायादवसेनातुव्यूहमध्येव्यवस्थिता ॥ रथैरश्वैर्नरैर्नागैराकुलाकुलवर्द्धन ११ षट्पुरादपिनिष्क्रांतादानवायुद्ध
दुर्मदाः ॥ आरुह्यमेघनादांश्चगर्दभानपिहस्तिनः १२ मकरान्शिशुमारांश्चद्रुतानपिचभारत ॥ महिषानपिखड्गांश्चउष्ट्रानपिचकच्छपान् १३ एतैरेवरथै
र्युक्ताविविधायुधपाणयः ॥ किरीटापीडमुकुटैरंगदैरपिमंडिताः १४ नानर्दमानैर्विविधैस्तूर्यैर्नेमिस्वनाकुलैः ॥ प्रध्मायमानैःशंखैश्चमहांबुदसमस्वनैः ॥
१५ तासामसुरसेनानामुद्यतानांजनेश्वर ॥ निकुंभोनिर्ययावग्रेदेवानामिववासवः १६ भूमिंद्यांचवपुर्धिरेदानवास्तेबलोत्कटाः ॥ नदंतोविविधान्नादा
न्क्ष्वेडंतश्चपुनःपुनः १७ राजसेनापिसंयत्ताचेदिराजपुरोगमाः ॥ असुराणांसहायार्थंनिश्चिताजनमेजय १८ दुर्योधनंभ्रातृशतंचेदिराजानुजाग्रगं ॥ स्थि
तंरथैर्नरव्याघ्रगंधर्वनगरोपमैः १९ कठिनानादिनोवीराद्रुपदस्यंदनास्तथा ॥ रुक्मीचैवाहृतिश्चैवतस्थतुर्निश्चितौरणे ॥ तालवृक्षप्रतीकाशेधुन्वानौधनु
षीशुभे २० शल्यश्चशकुनिश्चोभौभगदत्तश्चपार्थिवः ॥ जरासंधस्त्रिगर्तश्चविराटश्चसहोत्तरः २१ युद्धार्थमुद्यतावीरानिकुंभाद्याजयैषिणः ॥ युयुत्समा
नायदुभिर्देवैरिवमहासुराः २२ ततोनिकुंभःसमरेशरैराशीविषोपमैः ॥ ममर्दसमरेसेनांभैमानांभीमदर्शनाम् २३ सेनापतिरनाधृष्टिर्ममृषेतत्रयादवः ॥
ममर्दघोरैर्बाणौघैश्चित्रपुंखैःशिलाशितैः २४

॥ १२ ॥ द्रुतान्जविनः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ भूमिंद्यांचपूर
यित्वेतिशेषः ॥ १७ ॥ १८ ॥ चेदिराजःशिशुपालस्तदनुजेभ्योग्रगम् ॥ १९ ॥ २० ॥ २१ ॥ निकुंभआद्यःप्रधानःयेषांते ॥ २२ ॥ भैमानांयदूनां ॥ २३ ॥ २४ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सनत्कुमारंयादवविशेषं ऋक्षंजांबवतीपुत्रं निशठोल्मुकौबलभद्रपुत्रौ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ प्रवृत्ताःप्रक्षिप्ताःइषवोयेनसः

नरथोसुरमुख्यस्यदहशेनचवाजिनः ॥ नध्वजौननिकुंभस्तुसर्वेबाणाभिसंवृताः २५ सपरीत्यततोवीरोनिकुंभोमायिनांवरः ॥ अस्तंभयदनाधृष्टिमाय याभेमसत्तमम् २६ स्तंभयित्वानयद्वीरंगुहांषट्पुरसंज्ञिताम् ॥ रुद्ध्वाचाभ्यगमद्वीरोमायाबलमुपाश्रितः २७ पुनरेवनिकुंभस्तुकृतवर्माणमाहवे ॥ आ नयच्चारुदेष्णंचभोजंवैतरणंतथा २८ सनत्कुमारमृक्षंचतथैवनिशठोल्मुकौ ॥ बहूंश्चैवापरान्भोजान्मायाबलसमाश्रितः २९ नतस्यदहशेदेहोमायाच्छन्नो जनेश्वर ॥ नयतोयादवान्वीरान्गुहांषट्पुरसंज्ञिताम् ३० तदृष्ट्वाकदनंघोरंभैमानांभयवर्द्धनः ॥ चुकोपभगवान्कृष्णोबलःसत्यकएवच ३१ सविशेषंतथा कामःसांबश्चपरवीरहा ॥ अनिरुद्धश्चदुर्धर्षोभैमाश्चबहवोपरे ३२ ततःशार्ङ्गायुधःशार्ङ्गंकृत्वासज्यंनरेश्वर ॥ दानवेषुप्रवृत्तेषुतृणेष्विवहुताशनः ३३ तंदृष्ट्वा दानवादेवमभिदुद्रुवुरीश्वरम् ॥ शलभाःकालपाशार्त्ताःप्रदीप्तमिवपावकम् ३४ समुत्सृज्यशतघ्नीश्चपरिघांश्चसहस्रशः ॥ शूलानिचाग्नितुल्यानिप्रदीप्तां श्चपरश्वधान् ३५ पर्वताग्राणिवृक्षांश्चघोराश्चविपुलाःशिलाः ॥ उत्क्षिप्यचगजान्मत्तान्रथानपिहयानपि ३६ नारायणाग्निस्तान्सर्वान्ददाहप्रहसन्निव ॥ बाणार्चिषामहातेजाजगद्धितकरोहरिः ३७ शारदंवर्षणंयद्वत्सेहेधीरोगवांपतिः ॥ तद्वद्युदुवृषःसेहेबाणवर्षमरिंदमः ३८ नसेहिरेसुराबाणान्नारायणधनु श्च्युतान् ॥ वर्षंपर्जन्यविहितंवालुकासेतवोयथा ३९ नशेकुःप्रमुखेस्थातुंकृष्णस्यासुरसत्तमाः ॥ व्यादितास्यस्यसिंहस्यवृषभाइवभारत ४० तेवध्य मानाःकृष्णेनदिवमाचक्रमुस्तदा ॥ जीविताशांवहंतस्तुनारायणभयार्दिताः ४१ तानाकाशगतानैंद्रिर्जयंतःप्रवरस्तथा ॥ निजघ्नतुःशरैर्घोरैर्ज्वलितार्चिसमैः प्रभो ४२ निपेतुरसुराणांतुशिरांसिधरणीतले ॥ तृणराजफलानीवमुक्तानिशिखरात्तरोः ४३ निपेतुर्बाहवश्छिन्नादैत्यानांवसुधातले ॥ कालेनोपहतावी राःपंचवक्त्राइवोरगाः ४४ रौक्मिणेयस्ततःसृष्ट्वाघोरांमायामयींगुहाम् ॥ अदृश्यनिष्क्रमंवीरःक्षत्रंप्रक्षेप्तुमुद्यतः ४५ गदेनसहधर्मात्मासारणेनसुतेनच ॥ सांबेनचापरैश्चापिपूर्वंयेनप्रवेशिताः ४६ प्रमथ्यतरसाकर्णयतंतंरणमूर्द्धनि ॥ जग्राहबलवान्कार्ष्णिःप्रस्फुरंततस्ततः ४७ विनद्यचगुहांवीरोघोरांमा यामयींनृप ॥ दुर्योधनंचराजानंविराटद्रुपदावपि ४८ शकुनिंचैवशल्यंचनीलंचापिनदीसुतम् ॥ विंदानुविंदौराजानौजरासंधंचभारत ४९ त्रिगर्तान्मा लवांश्चैववासात्यांश्चमहाबलान् ॥ धृष्टद्युम्नादिकांश्चैवपांचालानस्त्रकोविदान् ५०

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ शिखरादग्रात् तरोस्तृणराजस्य ॥ ४३ ॥ ४४ ॥ ४५ ४६ ॥ ४७ ॥ ४८ ॥ नदी सुतंभीष्मं ॥ ४९ ॥ दसातिः सुराष्ट्रावंत्योरंतरं तत्रभवावासात्याः ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ गृहायगृहीत्वाप्रवराणांरुद्रपार्षदानांमध्येउत्तमःशैलादिर्नंदी ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ निःश्वसंतः

तथाभ्रतिमुवाचेदंमातुलंरुक्मिमेवच ॥ शिशुपालंचराजानंभगदत्तंचभारत ५१ संबंधंचगुरुत्वंचमानयामिनराधिपाः ॥ गुहामिमांघोररूपांयत्रप्रक्षेप यामिवः ५२ बिल्वोदकेश्वरेणाहमाज्ञप्तःशूलपाणिना ॥ प्रक्षेप्तव्यानरेंद्रास्तेगुहायामितिधीमता ५३ आश्रित्यशांबरींमायांनिकुंभेनमहात्मना ॥ प्रक्षि प्तान्यादवांश्चैवमोक्षयिष्यामिसर्वथा ५४ इत्युक्तोशिशुपालस्तुराजासेनापतिस्तथा ॥ शरैस्ततर्दतान्भैमान्प्रद्युम्नंचविशेषतः ५५ बिल्वोदके श्वरंदेवंरौक्मिणेयोनमस्यच ॥ आरभन्नृपतिंबंधुंशिशुपालंमहाबलम् ५६ ततःपाशसहस्राणिगृहायप्रवरोत्तमः ॥ शैलादिरब्रवीद्वीरंरौक्मिणेयंमहाब लम् ५७ बिल्वोदकेश्वरोदेवःप्राहत्वांयदुनंदन ॥ सर्वंकुरुतथारात्र्यांचोक्तस्त्वंभोयथामया ५८ कन्यार्थेरत्नलुब्धांस्तुबध्धानेमान्नराधिपान् ॥ पाशै स्त्वमेवमोक्तुंचप्रमाणंयदुनंदन ५९ असुरांस्तुमहाबाहोनिःशेषान्कर्तुमर्हसि ॥ एवमेवचवक्तव्यस्त्वयावीरजनार्दनः ६० ततःसभगदत्तंचशिशुपालंचभू मिप ॥ आभ्रतिंचैवरुक्मिंचशेषांश्चान्यान्नराधिपान् ६१ बबंधहरदत्तैस्तैःपाशैरुत्तमवीर्यधृक् ॥ मायामयींगुहांचैवमानयत्कुरुनंदन ६२ बद्धाचरौक्मि णेयोथनिःश्वसंतइवोरगान् ॥ अनिरुद्धंचकाराथरक्षितारंस्वमात्मजम् ६३ तेषांनिरवशेषेणबबंधयदुनंदनः ॥ सेनापतीन्क्षत्रियांश्चकोशाध्यक्षांश्चभारत ६४ हस्त्यश्वरथवृंदांश्चचकारचतथात्मसात् ॥ अव्यग्रस्तुततोहंतुमसुरानुद्यतःप्रभो ६५ सन्नद्धएवचोवाचब्रह्मदत्तंद्विजोत्तमम् ॥ विस्रब्धंवर्ततांकर्ममा भैःषश्यधनंजयम् ६६ नदेवेभ्योनासुरेभ्योनागेभ्योद्विजसत्तम ॥ भयंहिविद्यतेतस्यगोप्तारोयस्यपांडवाः ६७ नचासुरैस्तवसुताःस्प्रष्टाःखल्वपिचेतसा ॥ यज्ञवाटेनिरीक्ष्यंतांमाययानिहितामया ६८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिषट्पुरवधेचतुरशीतितमोऽध्यायः ८४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ रुद्धेषुभूमिपालेषुसानुगेषुविशांपते ॥ आविवेशासुरांश्चाथकश्मलंजनमेजय १ दिशःप्रतस्थुस्तेवीरावध्यमानाःसमंततः ॥ कृष्णानंत प्रभ्रतिभिर्यदुभिर्युद्धदुर्मदैः २ निकुंभस्तानथोवाचरुषितोदानवोत्तमः ॥ भित्त्वाप्रतिज्ञांकिंमोहाद्भयार्तायातविह्वलाः ३ हीनप्रतिज्ञाःकाल्लोकान्प्रयास्य थपलायिताः ॥ अगत्वापचितिंयुद्धेज्ञातीनांकृतनिश्चयाः ४ फलंजित्वेहभोक्तव्यंरिपून्समरकर्कशान् ॥ हतेनचापिशूरेणवस्तव्यंत्रिदिवेसुखम् ५ पला यित्वागृहंगत्वाकस्यद्रक्ष्यथहेमुखम् ॥ दारान्वक्ष्यथकिंचापिधिग्धिक्किंकिंनलज्जथ ६

कर्मणिप्रथमाछांदसी ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ निहितानिधानवद्रक्षिता ॥ ६८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांचतुरशीतितमोऽध्या यः ८४ ॥ ॥ छ ॥ ॥ पंचाधिकेशीतितमेध्यायेमुष्मिन्नथस्फुटः ॥ निकुंभप्रमुखानांचयदुभिर्वधउच्यते ॥ १ ॥ रुद्धेष्विति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सुमहान्सुमहांतम् ॥

एवमुक्तानिवृत्तास्तेलज्जमानानृपासुराः ॥ द्विगुणेनचवेगेनयुयुधुर्यदुभिःसह ७ उत्सवेयुद्धशौंडानांनानाप्रहरणैर्नृप ॥ येयांतियज्ञवाटंतंतान्निहंतिधनंजयः
॥ ८ यमौभीमश्चराजाचधर्मपुत्रोयुधिष्ठिरः ॥ द्यांप्रयातान्जघानैंद्रिःप्रवरश्चद्विजोत्तमः ९ अथासुरामृक्तोयाढ्याकेशशैवलशाड्वला ॥ चक्रकूर्मरथावर्ता
गजशैलानुशोभिनी १० ध्वजकुंततरुच्छन्नास्तनितोत्क्रुष्टनादिनी ॥ गोविंदशैलप्रभवाभीरुचित्तप्रमाथिनी ११ अमृग्बुद्बुदफेनाढ्याअसिमत्स्यतरंगि
णी ॥ सुस्रावशोणितनदीनदीवजलदागमे १२ तान्दृष्ट्वैवनिकुंभस्तुवर्द्धमानांश्चशात्रवान् ॥ हतान्सर्वान्सहायांश्चवीर्यादेवोत्पपातह १३ सवारितोजयंतेन
प्रवरेणचभारत ॥ शरैःकुलिशसंकाशैर्निकुंभोरणकर्कशः १४ सन्निवृत्याथदष्टौष्ठःपरिघेणदुरासदः ॥ प्रवरंताडयामाससपपातमहीतले १५ ऐंद्रिस्तंपतितं
भूमौबाहुभ्यांपरिषस्वजे ॥ विदित्वाचैवसप्राणंहित्वासुरमभिद्रुतः १६ अभिद्रुत्यनिकुंभंचनिस्त्रिंशेनजघानह ॥ परिघेणापिदैतेयोजयंतंसमताडयत् १७ तत
क्षबहुलंगात्रंनिकुंभस्यैंद्रिराहवे ॥ सचिंतयामासतदावध्यमानोमहासुरः १८ कृष्णेनसहयोद्धव्यंवैरिणाज्ञातिघातिना ॥ श्रावयामिकिमात्मानमाहवेश
क्रसूनुना १९ एवंसनिश्चयंकृत्वातत्रैवांतरधीयत ॥ जगामचैवयुद्धार्थयत्रकृष्णोमहाबलः २० तंदृष्ट्वैरावतस्कंधमास्थितोबलनाशनः ॥ द्रष्टुमभ्यागतो
युद्धंजहृषेसहदैवतैः २१ साधुसाध्वितिपुत्रंचपरितुष्टःससस्वजे ॥ प्रवरंचापिधर्मात्मासस्वजेमोहवर्जितम् २२ देवदुंदुभयश्चापिप्रणेदुर्वासवाज्ञया ॥ जय
मानंरणेदृष्ट्वाजयंतंरणदुर्जयम् २३ ददर्शाथनिकुंभस्तुकेशवंरणदुर्जयम् ॥ अर्जुनेनास्थितंसार्धंयज्ञवाटाविदूरतः २४ सनादंसुमहान्कृत्वापक्षिराजमताड
यत् ॥ परिघेणसुघोरेणबलंसत्यकमेवच २५ नारायणंचार्जुनंचभीमंचाथयुधिष्ठिरम् ॥ यमौचवासुदेवंचसांबंकामंचवीर्यवान् २६ युयुधेमाययादैत्यः
शीघ्रकारीचभारत ॥ नचैनंददृशुःसर्वेसर्वशस्त्रविशारदाः २७ यदातुनैवापश्यंस्तंतदाबिल्वोदकेश्वरम् ॥ दध्यौदेवंहृषीकेशःप्रमथानांगणेश्वरम् २८ तत
स्तेददृशुःसर्वेप्रभावादतितेजसः ॥ बिल्वोदकेश्वरस्याशुनिकुंभंमायिनांवरम् २९ कैलासशिखराकारंग्रसंतमिवधिष्ठितम् ॥ आह्वयंतंरणेकृष्णंवैरिणंज्ञाति
नाशनम् ३० सज्जगांडीवमेवाथपार्थस्तस्यरथेषुभिः ॥ परिघंचैवगात्रेषुविव्याधैनमथासकृत् ३१ तेबाणास्तस्यगात्रेषुपरिघेचजनाधिप ॥ भग्नाःशि
लाशिताःसर्वेनिपेतुःकुंचिताक्षितौ ३२ विफलानस्त्रयुक्तांस्तान्दृष्ट्वाबाणान्धनंजयः ॥ पप्रच्छकेशवंवीरःकिमेतदितिभारत ३३ पर्वतानपिभिंदंतिममव
ज्रोपमाःशराः ॥ किमिदंदेवकीपुत्रविस्मयोत्रमहान्मम ३४

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

महद्भूतंलोकोत्तरविक्रमः ॥ ३५ ॥ ३६ ॥ ३७ ३८ ॥ ब्रह्मण्यःब्राह्मणकुलहितःगतिराश्रयः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ अन्विष्यतद्गमनमार्गमितिशे

तमुवाचततःकृष्णःप्रहसन्निवभारत ॥ महद्भूतंनिकुंभोयंकौंतेयशृणुविस्तरात् ३५ पुरागत्वोत्तरकुंरूंस्तपश्चक्रेमहासुरः ॥ शतंवर्षसहस्राणांदेवशत्रुर्दुरासदः
३६ अथैनंछंदयामासवरेणभगवान्हरः ॥ सववेत्रीणिरूपाणिनवध्यानिसुरासुरैः ३७ तमुवाचमहादेवोभगवान्वृषभध्वजः ॥ ममवाब्राह्मणानां
वाविष्णोर्वाप्रियमाचरन् ३८ भविष्यसिहरेर्वध्योनत्वन्यस्यमहासुर ॥ ब्रह्मण्योहंचविष्णुश्चविप्राणांपरमागतिः ३९ सएषसर्वशस्त्राणामवध्यःपांडुनंदन
त्रिदेहोतिप्रमाथीचवरमत्तश्चदानवः ४० आनुमत्यापहरणेदेहोस्यैकोहतोमया ॥ अवध्यंषट्पुरंदेहमिदमस्यदुरात्मनः ४१ दितिंशुश्रूषतित्वेकोदेहोस्यत
पसान्वित· ॥ अन्यस्तुदेहोघोरोस्ययेनावसतिषट्पुरम् ४२ एतत्तुसर्वमाख्यातंनिकुंभचरितंमया ॥ त्वरयास्यवधेवीरकथापश्चाद्भविष्यति ४३ तयोःकथय
तोरेवकृष्णयोरसुरस्तदा ॥ गुहांषट्पुरसंज्ञांतांविवेशरणदुर्जयः ४४ अन्विष्यतस्यभगवान्विवेशमधुसूदनः ॥ तांषट्पुरगुहांघोरांदुर्द्धर्षांकुरुनंदन ४५ चंद्रसू
र्यप्रभाहीनांज्वलंतींस्वेनतेजसा ॥ सुखदुःखोष्णशीतानिप्रयच्छंतींयथेप्सितम् ४६ तत्रप्रविश्यभगवानपश्यतजनाधिपान् ॥ युयुधेसहघोरेणनिकुंभेनज
नाधिप ४७ कृष्णस्यानुप्रविष्टास्तुबलाद्यायादवास्तदा ॥ प्रविष्टाश्चतथासर्वेपांडवास्तेमहात्मनः ४८ समेतास्तुप्रविष्टास्तेकृष्णस्यानुमतेनवै ॥ युयुधे
सतुकृष्णेनरौक्मिणेयःप्रचोदितः ॥ अनयद्यादवान्सर्वान्यानयंबद्धवान्पुरा ४९ तेमुक्तारौक्मिणेयेनप्राप्तायत्रजनार्दनः ॥ प्रहृष्टमनसःसर्वेनिकुंभवधकांक्षि
णः ५० राजानोवीरमुंचेतिपुनःकामंयथाब्रुवन् ॥ मुमोचचाथतान्वीरोरौक्मिणेयःप्रतापवान् ५१ अधोमुखमुखाःसर्वेबद्धमौनानराधिपाः ॥ लज्जयाभि
प्लुतावीरास्तस्थुर्नष्टश्रियस्तदा ५२ निकुंभमपिगोविंदःप्रयतंतंजयंप्रति ॥ योधयामासभगवान्घोरमात्मरिपुंहरिः ५३ परिवेगाहतःकृष्णोनिकुंभेनभृशं
विभो ॥ गदयाचापिकृष्णेननिकुंभस्ताडितोभृशम् ५४ तावुभौमोहमापन्नौसुप्रहारहतौतदा ॥ ततःप्रव्यथितान्दृष्ट्वापांडवांश्चाथयादवान् ५५ जेपुर्मु
निगणास्तत्रकृष्णस्यहितकाम्यया ॥ तुष्टुवुश्चमहात्मानंवेदप्रोक्तैस्तथास्तवैः ५६ ततःप्रत्यागतप्राणोभगवान्केशवस्तदा ॥ दानवश्चपुनर्वीरावुद्यतौस
मरंप्रति ५७ वृषभाविवनर्दंतौगजाविवचभारत ॥ शालावृकाविवक्रुद्धौप्रहरंतौरणोत्कटौ ५८ अथकृष्णंतदोवाचनृपंवागशरीरिणी ॥ चक्रेणशमयस्वैनं
देवब्राह्मणकंटकं ५९ इतिहोवाचभगवान्देवोबिल्वोदकेश्वरः ॥ धर्मंयशश्चाविपुलंप्राप्नुहित्वंमहाबल ६०

षः ॥ ४५ ॥ सुखदुःखेतिस्वीयानांसुखंपरेषांदुःखमितिवक्तव्यम् ॥ ४६ ॥ जनाधिपान्निकुंभनिगृहीतान्यदून् ॥ ४७ ॥ ४८ ॥ कृष्णेनेति ॥ तत्रतेनायमर्थः सनिकुंभः कृष्णेनसहयुयुधे रौक्मिणेयस्तुकृष्णेनैवप्रचोदितः मनसाप्रेरितोयादवाननयदित्युत्तरेणसंबंधः ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ५९ ॥ ६० ॥

॥ ६१ ॥ सूर्यमंडलवर्चसमितिसुदर्शनविशेषणत्वात्पुंस्त्वम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ प्रवरंश्रेष्ठम् ॥ ६९ ॥ ७० ॥ ७१ ॥ ददौतेभ्य
इतिशेषः॥ ७२ ॥७३ ॥ ७४ ॥७५॥ ७६ ॥७७ ७८ ॥ ७९॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांपंचाशीतितमोऽध्यायः ॥ ८५ ॥ ६ ॥ षडशीतितमेमुष्मिन्न

तथेत्युक्त्वानमस्कृत्वालोकनाथःसतांगतिः॥सुदर्शनंमुमोचाथचक्रंदैत्यकुलांतकम् ६१ तन्निकुंभस्यचिच्छेदाशिरःप्रवरकुंडलम् ॥ नारायणभुजोत्सृष्टंसूर्यमं
डलवर्चसम् ६२ उत्पपाताशिरस्तस्यभूमौज्वलितकुंडलम् ॥ मेघमत्तोगिरेःशृंगान्मयूरइवभूतले ६३ निकुंभेनिहतेतास्मिन्देवोबिल्वोदकेश्वरः ॥ तुतो
षचनरव्याघ्रजगत्त्रासकरोविभुः ६४ पपातपुष्पवृष्टिश्चशक्रसृष्टानभस्तलात् ॥ देवदुंदुभयश्चैवप्रणेदुररिनाशने ६५ ननंदचजगत्कृत्स्नंमुनयश्चविशेषतः ॥
दैत्यकन्याश्चभगवान्यदुभ्यःशतशोददौ ६६ क्षत्रियाणांचभगवान्सांत्वयित्वापुनःपुनः॥ रत्नानिचविचित्राणिवासांसिप्रवराणिच ६७ रथानांवाजियुक्तानांष
ट्सहस्राणिकेशवः ॥ अददत्पांडवेभ्यश्चप्रीतात्मागदपूर्वजः ६८ तदेवचाथप्रवरंषट्पुरंपुरवर्द्धनः ॥ द्विजायब्रह्मदत्तायददौताक्ष्यर्वरध्वजः ६९ सत्रेसमाप्तेच
तदाशंखचक्रगदाधरः ॥ विसर्जयित्वातत्क्षत्रंपांडवांश्चमहाबलः ७० बिल्वोदकेश्वरस्याथसमाजमकरोत्प्रभुः ॥ मांसरूपसमाकीर्णबह्वन्नंव्यंजनाकुलम् ७१
नियुद्धकुशलान्मल्लान्देवोमल्लप्रियस्तदा ॥ योधयित्वाददौभूरिवित्तंवस्त्राणिचात्मवान् ७२ मातापितृभ्यांसहितोयदुभिश्चमहाबलः ॥ अभिवाद्यब्रह्म
दत्तंययौद्वारवतींपुरीं ७३ सविवेशपुरींरम्यांहृष्टपुष्टजनाकुलां ॥ पुष्पाचित्रपथांवीरोवंद्यमानोनरैःपथि ७४ इमंयःषट्पुरवधंविजयंचक्रपाणिनः ॥ शृणु
याद्वापठेद्वापियुद्धेजयमवाप्नुयात् ७५ अपुत्रोलभतेपुत्रमधनोलभतेधनम् ॥ व्याधितोमुच्यतेरोगीबद्धश्चाप्यथबंधनात् ७६ इदंपुंसवनंप्रोक्तंगर्भाधा
नंचभारत ॥ श्राद्धेषुपठितंसम्यगक्षय्यकरणंस्मृतम् ७७ इदममरवरस्यभारतेप्रथितबलस्यजयंमहात्मनः ॥ सततमिदंहियःपठेन्नरःसुगतिमितोव्रजते
गतज्वरः ७८ मणिकनकविचित्रपाणिपादोनिरतिशयार्कगुणोरिहादिनाथः ॥ चतुरुदधिशयश्चतुर्विधात्माजयतिजगत्पुरुषःसहस्रनामा ७९ इतिश्रीम
हाभारतेखिलेषुहरिवंशेविष्णुपर्वणिषट्पुरवधोनामपंचाशीतितमोऽध्यायः ॥ ८५ ॥ ६ ॥ जनमेजयउवाच ॥ श्रुतोयंषट्पुरवधोरम्योमुनिवरोत्तम ॥
पुरोक्तमंधकवधंवैशंपायनकीर्तय १ भानुमत्याश्चहरणंनिकुंभस्यवधंतथा ॥ प्रब्रूहिवदतांश्रेष्ठपरंकौतूहलंहिमे २ वैशंपायनउवाच ॥ दितिर्हतेषुपुत्रेषु
विष्णुनाप्रभविष्णुना ॥ तपसाराधयामासमारीचंकश्यपंपुरा ३ तपसाकालयुक्तेनतथाशुश्रूषयामुनेः ॥ आनुकूल्येनचतथामाधुर्येणचभारत ४ ॥
परितुष्टःकश्यपस्तुतामुवाचतपोधनः ॥ परितुष्टोस्मितेभद्रेवरंवरयसुव्रते ५

थाध्यायेहिवर्ण्यते ॥ अंधकस्यवधः प्रोक्तोराजप्रश्नानुसारतः १ श्रुतोयमिति १ निकुंभस्यत्रिदहस्यवधंभानुमत्याहरणेभगवताप्रोक्तम् २ ३ कालयुक्तेनबहुकालीनेन ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ब्रवीत्अब्रवीत् ॥ १६ ॥ सोढव्यंदुर्वृत्तत्वमितिशेषः ॥ १७ ॥ अत्रभवतीपूज्यादितिःतस्याः

दितिरुवाच ॥ हतपुत्रास्मिभगवन्देवैर्धर्मभृतांवर ॥ अवध्यंपुत्रमिच्छामिदेवैरमितविक्रमम् ६ ॥ कश्यपउवाच ॥ अवध्यस्तेसुतोदेविदाक्षायणिभवेदिति ॥
देवानांसंशयोनात्रकश्चित्कमललोचने ७ देवदेवमृतेरुद्रंतस्यनप्रभवाम्यहम् ॥ आत्मातत्तस्तेपुत्रेणरक्षितव्योहिसर्वथा ८ अन्वालभततांदेवींकश्यपःसत्य
वागथ ॥ अंगुल्योदरदेशेतुसापुत्रंसुषुवेततः ९ सहस्रबाहुंकौरव्यसहस्रशिरसंतथा ॥ द्विसहस्रेक्षणंचैवतावच्चरणमेवच १० सव्रजत्यंधवद्यस्मादनंधो
पिहिभारत ॥ तमंधकोयंनाम्नेतिप्रोचुस्तत्रनिवासिनः ११ अवध्योस्मीतिलोकान्ससर्वान्बाधतिभारत ॥ हरत्यपिचरत्नानिसर्वाण्यात्मबलाश्रयात् १२
वासयत्यात्मवीर्येणनिगृह्याप्सरसांगणान् ॥ सवेश्मन्यूर्जितोत्यर्थंसर्वलोकभयंकरः १३ परदारापहरणंपररत्नविलोपनम् ॥ चकारसततंमोहादंधकःपापनि
श्चयः १४ त्रैलोक्यविजयंकर्तुमुद्यतःसतुभारत ॥ सहायैरसुरैःसार्द्धंबहुभिःसर्वधर्षिभिः १५ तच्छ्रुत्वाभगवांश्छक्रःकश्यपंपितरंब्रवीत् ॥ अंधकेनेदमारब्धमी
दृशंमुनिसत्तम १६ आज्ञापयविभोकार्यमस्माकंसमनंतरम् ॥ यवीयसःकथंनामसोढव्यंस्यान्मुनेमया १७ इष्टपुत्रेप्रहर्तव्यंकथंनाममयाविभो ॥ इहात्र
भवतीकुर्यान्मन्युंमयिहतेसुते १८ देवेंद्रवचनंश्रुत्वाकश्यपोथाब्रवीन्मुनिः ॥ वारयिष्यामिदेवेंद्रसर्वथाभद्रमस्तुते १९ अंधकंवारयामासदित्यासहतुकश्य
पः ॥ त्रैलोक्यविजयाद्वीरंकृच्छ्रकृच्छ्रेणभारत २० वारितोपिसदुष्टात्माबाधत्येवदिवौकसः ॥ तैस्तैरुपायैर्दुष्टात्माप्रमथ्यचतथामरान् २१ बभंजकानने
वृक्षानुद्यानानिचदुर्मतिः ॥ उच्चैःश्रवःसुतानश्वान्बलादप्यानयद्दिवः २२ नागान्दिशागजसुतान्दिव्यानपिचभारत ॥ बलाद्धरतिदेवानांपश्यतांवरदर्पि
तः २३ देवानाप्याययंतेतुयेयज्ञैस्तपसातथा ॥ तेषांचकारविघ्नंसदुष्टात्मादेवकंटकः २४ नेजुर्यज्ञैस्त्रयोवर्णास्तेपुश्चनतपांस्यपि ॥ अंधकस्यभयाद्राज
न्यज्ञविघ्नानिकुर्वतः २५ तस्येच्छयावातिवायुरादित्यश्चतपत्युत ॥ चंद्रमावासनक्षत्रोदृश्यतेनैववापुनः २६ नव्रजंतिविमानानिविहायसिभयात्प्रभो ॥
अंधकस्यातिघोरस्यबलदृप्तस्यदुर्मतेः २७ निरोंकारवषट्कारंजगद्वीरतथाभवत् ॥ अंधकस्यातिघोरस्यभयात्कुरुकुलोद्वह २८ कुरूंस्तथोत्तरान्पापोद्रावया
मासभारत ॥ भद्राश्वान्केतुमालांश्चजंबुद्वीपांस्तथैवच २९ मानयंतिचतंदेवादानवाश्चदुरासदाः ॥ भूतानिचतथान्यानिसमर्थान्यपिसर्वथा ३०

इष्टपुत्रेमयाहतेसतिसामयिमन्युंकुर्यात् ॥ १८ ॥ १९ ॥ कृच्छ्रकृच्छ्रेणअतिकृच्छ्रेण ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ नेजुःयज्ञंनचक्रुः ॥ २५ ॥ २६ ॥ अंध
कस्यभयादितिशेषः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अश्रुप्रमार्जनंशोकापनयनम् ॥ ३५॥ ३६ ॥ ३७॥तपोधनाःहेशौनकाः ॥३८ ॥ ३९ ॥ ४० ॥ इतिवक्ष्यमाणंकार्यंकर्तव्यम् ॥४१ ॥ ४२ ॥

ऋषयोवध्यमानास्तुसमेताब्रह्मवादिनः ॥ अचिंतयन्नंधकस्यवधंधर्मभृतांवर ३१ तेषांबृहस्पतिर्मध्येधीमानिदमथाब्रवीत् ॥ नास्यरुद्रादृतेमृत्युर्विद्यते
चकथंचन ३२ तथावरेदीयमानेकश्यपेनापिशब्दितः ॥ नाहंरुद्रात्परित्रातुंशक्तइत्येवधीमतः ३३ तमुपायंचिंतयामःशर्वोयेनसनातनः ॥ जानीयात्स
र्वभूतानिपीड्यमानानिशंकरः३४विदितार्थोहिभगवानवश्यंजगतःप्रभुः॥अश्रुप्रमार्जनंदेवःकरिष्यतिसतांगतिः ३५ व्रतंहिदेवदेवस्यभवस्यजगतोगुरोः ॥
संतोऽसद्भ्योरक्षितव्याब्राह्मणास्तुविशेषतः ३६ तेवयंनारदंसर्वेप्रयामःशरणंद्विजम् ॥ उपायंवेत्स्यतेतत्रवयस्योहिभवस्यसः ३७ बृहस्पतिवचःश्रुत्वासर्वे
प्यथतपोधनाः ॥ तावद्ददृशुराकाशेप्राप्तंदेवर्षिसत्तमम् ३८ पूजयित्वायथान्यायंसत्कृत्यविधिवन्मुनिम् ॥ ॥ देवाऊचुः ॥ ॥ देवर्षेभगवन्साधोकै
लासंव्रजसत्वरम् ३९ विज्ञप्तुमर्हसेदेवमंधकस्यवधेहरम् ॥ त्राणार्थंनारदंप्रोचुस्तांस्तथेतिसचोक्तवान् ४० ऋषिष्वथप्रयातेषुतत्कार्यंनारदोमुनिः ॥ वि
चार्यमनसाविद्वानितिकार्यंसदृष्टवान् ४१ सदेवदेवंभगवान्द्रष्टुंमुनिरथाययौ ॥ मंदारवनमध्यस्थोयत्रनित्योवृषध्वजः ४२ सतत्ररजनीमेकामुषित्वामुनिस
त्तमः ॥ मंदाराणांवनेरम्येदयितःशूलपाणिनः ४३ आजगामपुनःस्वर्गंलब्ध्वानुज्ञांवृषध्वजात् ॥ मंदारपुष्पैःसुकृतांमालामाबध्यभारत ४४ ग्रथितां
सविशेषांतांसर्वगंधोत्तमोत्तमाम् ॥ संतानमाल्यदामंचतैरेवकुसुमैःकृतम् ४५ तच्चकंठेसमासज्यमहागंधंनराधिप ॥ आययावंधकोयत्रदुरात्माबलदर्पितः
४६ अंधकस्त्वथतंदृष्ट्वागंधमघ्रायचोत्तमम् ॥ संतानकानांस्रङ्मालांमहागंधांमहामुने ४७ कुत्रायंपुष्पजातिर्वाकमनीयातपोधन ॥ गंधान्वर्णान्शुभां
स्तान्हिमोःपुष्यतिमुहुर्मुहुः ॥ स्वर्गेसंतानकुसुमान्यतिवर्ततिसर्वथा ४८ कःप्रभुस्तस्यवृक्षस्यशक्यंवानयितुंमुने ॥ आचक्ष्वयद्यनुग्राह्यावयंतेदेवतातिथे
४९ तमुवाचमुनिश्रेष्ठःप्रहसन्निवभारत ॥ आदायदक्षिणेहस्तेमहतस्तपसोनिधिः ५० मंदरेपर्वतश्रेष्ठेवीरकामगमंवनम् ॥ तत्रचैवंविधंपुष्पंभोःस्रष्टिःशू
लपाणिनः ५१ नतुतत्रवनंकश्चिदच्छंदेनमहात्मनः ॥ प्रवेष्टुंलभतेतद्धिरक्षंतिप्रवरोत्तमाः ५२ नानाप्रहरणाघोरानानावेषादुरासदाः ॥ अवध्याःसर्वभू
तानांमहादेवाभिरक्षिताः ५३ नित्यंप्रक्रीडतेतत्रसोमःसप्रवरोहरः ॥ मंदारद्रुमखंडेषुसर्वात्मासर्वभावनः ५४ तपोविशेषैराराध्यहरंत्रिभुवनेश्वरम् ॥
शक्यंमंदारपुष्पाणिप्राप्तुंकश्यपवंशज ५५

॥ ४३ ॥ मंदारःसुरतरुस्तत्पुष्पैः ॥ ४४ ॥ संतानोऽपिदेवद्रुमएव ॥ ४५ ॥ ४६ ॥ स्रङ्मालापुष्पदाम ॥ ४७ ॥ इयमितिवक्तव्येऽयमितिउक्तिर्मत्तत्वात् संतानकुसुमानि अतिवर्त्ततिअभिभवति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ महात्मनोमहादेवस्य प्रवरोत्तमाःगणोत्तमाः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

१२१ स्वरितमणिरत्नानियानिचान्यानिचाप्यथ ॥ कांक्षितानिफलंतिस्मतेद्रुमाहरवल्लभाः ५६ नतत्रसूर्यःसोमोथतपत्यतुलविक्रमः ॥ स्वयंप्रभंतरुवनंतद्रोदुः
स्वविवर्जितम् ५७ तत्रगंधान्स्रवत्यन्येनीराण्यन्येमहाद्रुमाः ॥ वासांसिविविधान्यन्येसुगंधीनिमहाबल ५८ भक्ष्यंभोज्यंचपेयंचचोष्यंलेह्यंतथैवच ॥ त अ०८७
रुभ्यःस्रवतेतेभ्योविविधंमनसेप्सितम् ५९ पिपासावाबुभुक्षावाग्लानिश्चिंतापिवानघ ॥ नमंदारवनेवीरभवतीत्युपधार्यताम् ६० नतेवर्णयितुंशक्यागु
णावर्षशतैरपि ॥ गुणायेतत्रवर्द्धंतेस्वर्गाद्विद्विगुणोत्तराः ६१ अतीवहिजयेल्लोकान्समहेंद्रान्नसंशयः ॥ एकाहमपियस्तत्रवसेन्नदितिजोत्तम ६२ स्वर्गस्या
पिहितत्स्वर्गंसुखानामपितत्सुखम् ॥ बभूवजगतःसर्वमितिमेधीयतेमनः ६३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिअंधकवधेषडशीतितमोऽ
ध्यायः॥ ८६ ॥ ॥ ६ ॥ ॥ वैशंपायनउवाच ॥ ॥ अंधकोनारदवचःश्रुत्वातत्त्वेनभारत ॥ मंदरंपर्वतंगंतुंमनोदध्रेमहासुरः १ सोसुरान्सुमहाते
जाःसमानियमहाबलः ॥ जगाममंदरंक्रुद्धोमहादेवालयंतदा २ तंमहाभ्रप्रतिच्छन्नंमहौषधिसमाकुलम् ॥ नानासिद्धसमाकीर्णंमहर्षिगणसेवितम् ३ चं
दनागरुवृक्षाढ्यंसरलद्रुमसंकुलम् ॥ किन्नरोद्गीतरम्यंचबहुनागकुलाकुलम् ४ वातोद्धूतैर्वनैःफुल्लैर्नृत्यंतमिवचक्वचित् ॥ प्रस्रुतैर्धातुभिश्चित्रैर्विलिप्तमिवचक्व
चित् ५ पक्षिस्वनैःसुमधुरैर्नदंतमिवचक्वचित् ॥ हंसैःशुचिपदैःकीर्णंसंपतद्भिरितस्ततः ६ महाबलैश्चमहिषैश्चर्शर्द्धैर्दैत्यनाशनैः ॥ चंद्रांशुविमलैःसिंहैर्भू
षितंहेमसंचयम् ७ मृगराजसमाकीर्णंमृगवृंदनिषेवितम् ॥ समंदरंगिरिंप्राहरूपिणंबलदर्पितः ८ वेत्सित्वंहियथावध्योवरदानादहंपितुः ॥ ममचैववशे
सर्वंत्रैलोक्यंसचराचम् ९ प्रतियोद्धुंनमांकश्चिदिच्छत्यपिगिरेभयात् ॥ पारिजातवनंचास्तितवसानौमहागिरे ॥ सर्वकामप्रदैःपुष्पैर्भूषितंरत्नमुत्तमम् १०
तदाचक्ष्वोपभोक्ष्यामितद्वनंतवसानुजम् ॥ किंकरिष्यसिक्रुद्धस्त्वंमनोहित्वरतेमम ११ त्रातारंनानुपश्यामिमयाखल्वर्दितस्यते ॥ इत्युक्तोमंदरस्तेनत
त्रैवांतरधीयत १२ ततोंधकोतिरुषितोवरदानेनदर्पितः ॥ मुमोचनादंसुमहदिदंवचनमब्रवीत् १३ मयावित्वंयाच्यमानोयस्मान्नबहुमन्यसे ॥ अहंचूर्णीक
रोमित्वांबलंपर्वतपश्यमे १४ एवमुक्त्वागिरेःशृंगमुत्पाट्यबहुयोजनम् ॥ निष्पिपेषागिरेस्तस्यशृंगेष्वन्यत्रवीर्यवान् १५ सहतैरसुरैःसर्वैर्वरदानेनदर्पितः
तंप्रच्छन्ननदीजालंभज्यमानंमहागिरिम् १६

॥ ॥ ६ ॥ ॥ सप्ताशीतितमेध्यायेमुष्मिन्नंधकवैरिणा ॥ अंधकस्ययुविप्राणात्हृतारुद्रेणचोच्यते ॥ १ ॥ अंधकइति ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ शुचिपदैःस १२१
दःसभाशुचिस्थानेसीदंतितिष्ठंतीतिशुचिषदास्तैःशुद्धसद्मभिः शुचिपदैरित्यपिपाठः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ रत्नमुत्तमंदिव्यंश्रेष्ठम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥
१४ ॥ १५ ॥ प्रच्छन्नानिनदीनांजालानिसमूहायत्रतम् ॥ १६ ॥

सविशेषतरं विशेषतरैःपारिजातादिभिःसहितं ॥ १७ ॥ नभश्च्युतैःस्वर्गादागतैर्नदीजालैः पुराअंधकक्षोभात्पूर्वम् ॥ १८ ॥ १९ ॥ वध्यंतिवध्यंते ॥ २० ॥ २१ ॥ २२ ॥

विदित्वाभगवान्रुद्रश्चकारानुग्रहंगिरेः ॥ सविशेषतरंवीरंमत्तद्विपमृगायुतम् १७ नदीजालैर्बहुतरैराचितंचित्रकाननम् ॥ नभश्च्युतैःपुरायद्वत्तद्वदेवविराजते
१८ अथदेवप्रभावेनशृंगाण्युत्पाटितानितु ॥ क्षिप्तानिचासुरानेवघ्नंतिघोराणिभारत १९ क्षिप्ताश्चायेप्रपलायंतेशृंगाणितुमहासुराः ॥ शृंगैस्तैस्तैस्समवध्यंति
पर्वतस्यजनाधिप २० येस्वस्थास्त्वसुरास्तत्रतिष्ठंतिगिरिसानुषु ॥ शृंगैस्तेनस्समवध्यंतेमंदरस्यमहागिरेः २१ ततोंधकस्तदादृष्ट्वासेनांतांमर्दितांतथा ॥ रुषि
तःसुमहानादंनर्दित्वैवंतदाब्रवीत् २२आह्वयेतंवनंयस्ययुद्धार्थमुपतिष्ठतु ॥ किंत्वयाचलयुद्धेनहताःस्मच्छद्मनारणे २३ एवमुक्तेत्वंधकेनवृषभेणमहेश्वरः ॥ सं
प्राप्तोशूलमुद्यम्यदेवोंधकजिघांसया २४ प्रमथानांगणैर्धीमान्वृतोवैबहुलोचनः ॥ तथाभूतगणैश्चैवधीमान्भूतगणेश्वरः २५ प्रचकंपेततःकृत्स्नंत्रैलोक्यं
हर्षितेहरे ॥ सिंधवश्चप्रतिस्रोतमूहुःप्रज्वलितोदकाः २६ जग्मुर्दिशोग्निदाहाश्चसर्वेतेहरतेजसा ॥ युयुधुश्चग्रहाःसर्वेविपरीताजनाधिप २७ चेलुश्चगि
रयस्तत्रकालेकुरुकुलोद्वह ॥ प्रववर्षाथपर्जन्यःसधूमांगारवृष्टय. २८ उष्णभाश्चंद्रमाश्चासीत्सूर्यःशीतप्रभस्तथा ॥ नब्रह्मविविदुस्तत्रमुनयोब्रह्मवादिनः
२९ वडवाःसुषुवुर्गाश्चगावोश्वानपिचानघ ॥ पेतुर्वृक्षाश्चमेदिन्यामच्छिन्नाभस्मसात्कृताः ३० बाधंतेवृषभागाश्चगावश्चारुरुहुर्वृषान् ॥ राक्षसायातुधाना
श्चपिशाचाश्चापिसर्वशः ३१ विपरीतंजगद्दृष्ट्वामहादेवस्तथागतम् ॥ मुमोचभगवांश्छूलंप्रदीप्ताग्निसमप्रभम् ३२ तत्पपातरहोत्सृष्टमंधकोरसिदुर्द्धरम् ॥
भस्मसाच्चाकरोद्रौद्रमंधकंसाधुकंटकम् ३३ ततोदेगणाःसर्वेमुनयश्चतपोधनाः ॥ शंकरंतुष्टुवुश्चैवजगच्छत्रौनिबर्हिते ३४ देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातह
त्रैलोक्यंनिर्वृतंचासीन्नरेंद्रविगतज्वरम् ३५ प्रजगुर्देवगंधर्वानन्तृतुश्चाप्सरोगणाः ॥ जेपुश्चब्राह्मणावेदानीजुश्चक्रतुभिस्तदा ३६ ग्रहाःप्रकृतिमापेदुरूहुर्नद्यो
यथापुरा ॥ नजज्वालजलेवह्निराशाःसर्वाःप्रसेदिरे ३७ मंदरःपर्वतश्रेष्ठःपुनरेवरराजह ॥ श्रियापरमयाजुष्टःसर्वतेजःसमुच्छ्रयात् ३८ रेमेसोमश्चभगवा
न्पारिजातवनेहरः ॥ सुप्रचारान्सुरान्कृत्वाशक्रादीन्धर्मतःप्रभुः ३९ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिअंधकवधेसप्ताशीतितमोऽध्यायः ८७ ॥

॥ २३ ॥ २४ ॥ बहुलोचनःत्रिनेत्रः ॥ २५ ॥ सिंधवोनद्यः ॥ २६ ॥ सर्वेतेसर्वास्ताःविपरीतावक्रीभूताः ॥ २७ ॥ सधूमांगाराःवृष्टयोयेषुतेगिरयः ॥ २९ ॥ ३० ॥ ३१ ॥
॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ नजज्वालजलेवन्हिःऔर्वाग्निनासमुद्रेसत्वानांपाकऔत्पातिकोनाभूदित्यर्थः ॥ ३७ ॥ ३८ ॥ सोमःउमासहितः ॥ ३९ ॥ इति
श्रीमहाभारतेखिलेषुहरिवंशेविष्णपर्वणिटीकायांसप्ताशीतितमोऽध्यायः ८७ ॥ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अष्टाशीतितमेमुष्मिन्नध्यायेबलकृष्णयोः ॥ वर्ण्यतेचजलक्रीडाविशिष्टापिंडनारके ॥१॥ मुनेंधक श्राव्यःअवश्यंश्रोतव्यः १ निकुंभस्यत्रिदेहस्य ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ बलोबलरामः ॥ ६ ॥ ७ ॥ दैत्याधिवासंसमुद्रंनिर्जित्यस्वस्थानादवसार्यतत्रनिवेशिताः ॥ ८ ॥ वेषयोषितः वरांगनाः ॥ ९ ॥ १० ॥ चक्रवाकयोरिवययोः अन्योन्यंअनुरागस्ते



जनमेजयउवाच ॥ मुनेंधकवधःश्राव्यःश्रुतोयंखलुभोमया ॥ शांतिस्त्रयाणांलोकानांकृतादेवेनधीमता १ निकुंभस्यहतंदेहांद्वितीयंचक्रपाणिना ॥ यदर्थंचयथाचैवतद्भवान्वक्तुमर्हति २ ॥ वैशंपायनउवाच ॥ श्रद्दधानस्यराजेंद्रवक्तव्यंभवतोनघ ॥ चरितंलोकनाथस्यहरेरमिततेजसः ३ द्वारवत्यांनिवसतोविष्णोरतुलतेजसः ॥ समुद्रयात्रासंप्राप्तातीर्थेपिंडारकेनृप ४ उग्रसेनोनरपतिर्वसुदेवश्चभारत ॥ निक्षिप्तौनगराध्यक्षौशेषाःसर्वेविनिर्गताः ५ पृथग्बलःपृथग्धीमाँल्लोकनाथोजनार्दनः ॥ गोष्ठ्याःपृथक्कुमाराणांनृदेवामिततेजसाम् ६ गणिकानांसहस्राणिनिःसृतानिनराधिप ॥ कुमारैःसहवार्ष्णेयैरूपवद्भिःस्वलंकृतैः ७ दैत्याधिवासंनिर्जित्ययदुभिर्दृढविक्रमैः ॥ वेश्यानिवेशितावीरद्वारवत्यांसहस्रशः ८ सामान्यास्ताःकुमाराणांक्रीडानार्योमहात्मनाम् ॥ इच्छाभोग्यागुणैरेवराजन्यावेषयोषितः ९ स्थितिरेषाहिभैमानांकृताकृष्णेनधीमता ॥ स्त्रीनिमित्तंभवेद्वैरंमायदूनामितिप्रभो १० रेवत्याचैकयासार्धंबलोरेमेनुकूलया ॥ चक्रवाकानुरागेणयदुश्रेष्ठःप्रतापवान् ११ कादंबरीपानकलोभूषितोवनमालया ॥ चिक्रीडसागरजलेरेवत्यासहितोबलः १२ षोडशस्त्रीसहस्राणिजलेजलजलोचनः ॥ रमयामासगोविंदोविश्वरूपेणसर्वदृक् १३ अहमिष्टामयासार्द्धंजलेवसतिकेशवः ॥ इतितामेनिरेसर्वारात्रौनारायणस्त्रियः १४ सर्वाःसुरतचिह्नांग्यःसर्वाःसुरततर्पिताः ॥ मानमूहुश्चताःसर्वागोविंदेबहुमानजम् १५ अहमिष्टाहमिष्टेतिस्निग्धेपरिजनेतदा ॥ नारायणस्त्रियःसर्वामुदाशश्लाघिरेशुभाः १६ करजद्विजचिह्नानिकुचाधरगतानिताः ॥ दृष्ट्वादृष्ट्वाजहृषिरेदर्पणेकमलेक्षणाः १७ गोत्रमुद्दिश्यकृष्णस्यजगिरेकृष्णयोषितः ॥ पिबंत्यइवकृष्णस्यनयनैर्वदनांबुजम् १८ कृष्णार्पितमनोदृष्ट्यःकांतानारायणस्त्रियः ॥ मनोहरतराराजन्नभवन्नेकनिश्चयाः १९ एकार्पितमनोदृष्ट्योनेर्ष्यांताश्चक्रिरेंगनाः ॥ नारायणेनदेवेनतर्प्यमाणमनोरथाः २० शिरांसिगर्वितान्यूहुःसर्वानिरवशेषतः ॥ वाल्लभ्यंकेशवमयंवहंत्यश्चारुदर्शनाः २१ ताभिस्तुसहचिक्रीडसर्वाभिर्हरिरात्मवान् ॥ विश्वरूपेणविधिनासमुद्रेविमलेजले २२ उवाहसर्वगंधाढ्यंस्वच्छंवारिमहोदधिः ॥ तोयंविलवणंमृष्टंवासुदेवस्यशासनात् २३

न ॥ ११ ॥ कादंबरीसुरातस्याःपानेनकलःविकलः १२ विश्वरूपेणसर्वरूपात्मनायावंत्यस्त्रियस्तावद्भीरूपैरित्यर्थः ॥ १३ १४ ॥ ॥ तदेवाहाहमिति चिह्नानिनखक्षतानि ॥ १५ ॥ शश्लाघिरेआत्मानंप्रशंसिरे १६ करजाः नखाःद्विजाःदंताःतज्जानिचिह्नानि ॥ १७ ॥ गोत्रंनामजगिरेगीतंकृतवत्यः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ हृषीकेशः इंद्रियाणामीश्वरोपिकांतावशगतोभवदित्यन्वयः ॥ ३३ ॥ वंशरूपेणकुलानुरूपेणवंशोवेणौ कुलेवर्गेइतिविश्वः ॥ ३४ ॥ ३५ ॥ ३६ ॥ तेकुमाराः ॥ ३७ ॥ स्वभिनयानिशोभनःअभिनयःपदार्थस्यवाक्यार्थस्यचप्रदर्शनंयत्रतानि ॥ ३८ ॥ पंचचूडांअप्सरसं कौबेर्यः

गुल्फदघ्नंजानुदघ्नमूरुदघ्नमथापिवा ॥ नार्यस्ताःस्तनदघ्नंवाजलंसमभिकांक्षितम् २४ सिषिचुःकेशवंपत्न्योधीराइवमहोदधिम् ॥ सिषेचताश्चगोविंदोमे
घःफुल्ललताइव २५ अवलंब्यपराःकंठेहरिंहरिणलोचनाः ॥ उपगूहस्वमांवीरपतामीत्यब्रुवन्स्त्रियः २६ काश्चित्काष्ठमयैस्तेरुःप्लवैःसर्वांगशोभनाः ॥ क्रौं
चबर्हिणनागानामाकारसदृशैःस्त्रियः २७ मकराकृतिभिश्चान्यामीनाभैरपिचापराः ॥ बहुरूपाकृतिधरैःपुप्लुवुश्चापराःस्त्रियः २८ स्तनकुंभैस्तथातेरुःकुं
भैरिवतथापराः ॥ समुद्रसलिलेरम्येहर्षयंत्योजनार्दनम् २९ ररामसहरुक्मिण्याजलेतस्मिन्मुदायुतः ॥ येनैवकार्ययोगेनरमतेऽमरसत्तमः ३० तत्त
देवहिताश्चक्रुर्मुदानारायणस्त्रियः ॥ तनुवस्त्रावृतास्तन्व्योलीलयंत्यस्तथापराः ॥ चिक्रीडुर्वासुदेवस्यजलेजलजलोचनाः ३१ यस्यायस्यास्तुयोभाव
स्तांतांतेनैवकेशवः ॥ अनुप्रविश्यभावज्ञोनिनायात्मवशंवशी ३२ हृषीकेशोपिभगवान्हृषीकेशःसनातनः ॥ बभूवदेशकालेनकांतावशगतःप्रभुः ३३
कुलशीलसमोस्माकंयोग्योयमितिमेनिरे ॥ वंशरूपेणवर्तंतमंगनास्ताजनार्दनम् ३४ तदादाक्षिण्ययुक्तंतंस्मितपूर्वाभिभाषिणम् ॥ कृष्णंभार्याश्चकामि
रेभक्त्याचबहुमेनिरे ३५ पृथग्गोष्ठ्यःकुमाराणांप्रकाशंस्त्रीगणैःसह ॥ अलंचक्रुर्जलंवीराःसागरस्यगुणाकराः ३६ गीतनृत्यविधिज्ञानांतासांस्त्रीणांजने
श्वर ॥ तेजसाप्याहृतानांतेदाक्षिण्यात्तस्थिरेवशे ३७ शृण्वंतश्चारुगीतानितथास्वभिनयान्यपि ॥ तूर्याण्युत्तमनारीणांमुमुहुर्यदुपुंगवाः ३८ पंचचूडांत
तःकृष्णःकौबेर्यश्चवराप्सराः ॥ माहेंद्रीश्चानयामासविश्वरूपेणहेतुना ३९ ताःप्रोवाचप्रमेयात्मासांत्वयित्वाजगत्प्रभुः ॥ उत्थापयित्वाप्रणताःकृतांजलि
पुटास्तथा ४० क्रीडायुवत्योभैमानांप्रविशध्वमशंकिताः ॥ मत्प्रियार्थंवरारोहारमयध्वंचयादवान् ४१ दर्शयध्वंगुणान्सर्वान्नृत्यगीतैरहस्सुच ॥ तथाभि
नययोगेषुवाद्येषुविविधेषुच ४२ एवंकृतेविधास्यामिश्रेयोवामनसेप्सितं ॥ मच्छरीरसमाह्येतेसर्वेनिरवशेषतः ४३ शिरसाज्ञांतुताःसर्वाःप्रतिगृह्यहरेस्त
दा ॥ क्रीडायुवत्योविविशुर्भैमानामप्सरोवराः ४४ ताभिःप्रविष्टमात्राभिर्द्योतितःसमहार्णवः ॥ सौदामिनीभिर्नभसिघनवृंदमिवानघ ४५ ताजलेस्थ
लवत्स्थित्वाजगुश्चाप्यथवादयन् ॥ चक्रुश्चाभिनयंसम्यग्स्वर्गावासइवांगनाः ४६

कौबेरीःवराअप्सराःश्रेष्ठाअप्सरसः विश्वरूपेणजीवनियंतृत्वेनहेतुनानिमित्तेन ॥ ३९ ॥ ४० ॥ प्रविशध्वंमनोहारिण्योभवंत्यः ॥ ४१ ॥ ४२ ॥ ४३ ॥ भैमानांभीमजानांया
दवानांसमीपमितिशेषःअप्सरोवराःवराप्सरसः ॥ ४४ ॥ ४५ ॥ जलवाद्यान्यवादयन्नित्यपिपाठः ॥ ४६ ॥

॥ ४७ ॥ ४८ ॥ तान्भैमान्बहून्वातस्कंधान् बहुषुवातस्कंधेषुआवहप्रवहादिषुऊर्ध्वोर्ध्वेषुपातमार्गेषुउत्तरोत्तररमणीयेषुउत्क्षिप्यनीत्वातत्रविजह्रुरितिपूर्वेणान्वयःततश्चतेभै मास्ताःनारीर्मानयंति ॥ ४९ ॥ एतांवियतिक्रीडांकृष्णोपिचकारेत्याहकृष्णोपीति सर्वैरितिअष्टोत्तरशताधिकंग्राह्यम् ॥ ५० ॥ विस्मयंदिविक्रीडाकृतम् ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ इच्छयास्थलवज्जलेप्यधावन्इच्छयानिमज्जंत्यःमज्जंश्चेत्यर्थः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ स्वस्तिकाः शारिफलकाकाराः ॥ ५८ ॥ कैलासादिवच्छंदोय थेष्टरूपित्वंयथेष्टकारित्वंचयेषांते ॥ ५९ ॥ मसारोमरकतःगलुश्चंद्रकांतःअर्कःसूर्यकांतरत्नैर्व्यस्तैःसमस्तैर्वाचित्ररागैरंचितैरित्यर्थः चित्रभक्तिशतैःनानारूपास्तरणशतैः ॥ ६०॥

गंधैर्माल्यैश्चतादिव्यैर्वस्त्रैश्चायतलोचनाः ॥ हेलाभिर्हास्यभावैश्चजह्रुर्भैममनांसिताः ४७ कटाक्षैरिंगितैर्हास्यैःकेलिरोषैःप्रसादितैः ॥ मनोनुकूलैर्भैमानांस माजह्रुर्मनांसिताः ४८ उत्क्षिप्योत्क्षिप्यचाकाशंवातस्कंधान्बहूंश्चतान् ॥ मदिरावशगान्भैमानानयंतिवराप्सराः ४९ कृष्णोपितेषांप्रीत्यर्थंविजह्रेविय तिप्रभुः ॥ सर्वैःषोडशभिःसार्द्धंस्त्रीसहस्रैर्मुदान्वितः ५० प्रभावज्ञास्तुतेवीराःकृष्णस्यामिततेजसः ॥ नजग्मुर्विस्मयंभैमागांभीर्यंपरमास्थिताः ५१ ॥ केचिद्रैवतकंगत्वापुनरायांतिभारत ॥ गृहाण्यन्येवनान्यन्येकांक्षितान्यरिमर्दन ५२ अपेयःपेयसलिलःसागरश्चाभवत्तदा ॥ आज्ञयालोकनाथस्यवि ष्णोरतुलतेजसः ५३ अधावन्स्थलवच्चापिजलेजलजलोचनाः ॥ गृह्यहस्तेतथानार्योयुक्तामज्जंस्तथापिच ५४ भक्ष्यभोज्यानिपेयानिचोष्यंलेह्यंतथैवच बहुप्रकारंमनसाध्यातेतेषांभवत्युत ५५ अम्लानमाल्यधारिण्यस्तास्त्रियस्तानानिंदितान् ॥ रहःसुरमयांचक्रुःस्वर्गेदेवरतानुगाः ५६ नौभिर्गृहप्रकारा भिश्चिक्रीडुरपराजिताः ॥ तास्तानुलिप्तमुदिताःसायाह्नेंधकवृष्णयः ५७ आयताश्चतुरस्राश्चवृत्ताश्चस्वस्तिकास्तथा ॥ प्रासादानौषुकौरव्यविहिताविश्वक र्मणा ५८ कैलासमंदरच्छंदामेरुच्छंदास्तथैवच ॥ तथानानावयच्छंदास्तथेहामृगरूपिणः ५९ वैडूर्यतोरणैश्चित्राश्चित्राभिर्मणिभक्तिभिः ॥ मसारग ल्वर्कमयैश्चित्रभक्तिशतैरपि ६० आक्रीडगरुडच्छंदाश्चित्राःकनकरीतिभिः ॥ क्रौंचच्छंदाःशुकच्छंदागजच्छंदास्तथापरे ६१ कर्णधारैर्गृहीतास्तानावः कार्तस्वरोज्ज्वलाः ॥ सलिलंशोभयामासुःसागरस्यमहोर्मिमत् ६२ समुच्छ्रितःसितैःपोतैर्यानपात्रैस्तथैवच ॥ नौभिश्चझिल्लिकाभिश्चशुशुभेवरुणाल यः ६३ पुराण्याकाशगानीवगंधर्वाणामितस्ततः ॥ बभ्रमुःसागरजलेभैमयानानिसर्वतः ६४

आक्रीडगरुडःलीलागरुडसदृशःकनकरीतिभिःकनकधाराभिः ॥ ६१ ॥ ६२ ॥ पोतैर्जलाखेटयोग्यैःक्षुद्रनौकारूपैः यानपात्रैःसर्वसंभारसंभृताभिःसामग्रीनौकाभिः नौ भिःअतिवेगवतीभिर्दीर्घनौकाभिः झिल्लिकाभिःप्रासादाद्यंकिताभिर्नृत्यगीतादिलीलायोग्याभिरायताभिर्नौभिरितिभेदः तत्रपोताःविमानवत्संचरंति यानपात्राणिनंदनसमृद्धिमं ति नावोरथदीर्घिकादियुक्ताःझिल्लिकाःसर्वस्वर्ग्यपदार्थवत्यः ॥ ६३ ॥ इतिक्रमात्श्लोकचतुष्टयेनाहपुराणीत्यादिना ॥ ६४ ॥

६५ ॥ ६६ ॥ ६७॥ वनैषुनौस्थेष्वेव ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ इच्छतांइच्छयाबभूव ॥ ७४॥ ७५ ॥ ७६ ॥ ७७ ॥ परिच्छदस्यषोडशस्त्री
सहस्रपरिवारस्यानुरूपं ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ इतिश्रीमहाभातोखिलेषुहरिवंशेविष्णुपर्वणिटीकायांअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ छ ॥ नवाधिकेशीतितमेध्या

नंदनच्छंदयुक्तेषुयानपात्रेषुभारत ॥ नंदनप्रतिमंसर्वंविहितंविश्वकर्मणा ६५ उद्यानानिसभावृक्षादीर्घिकाःस्यंदनानिच ॥ निवेशितानिशिल्पानितादृशा
न्येवसर्वथा ६६ स्वर्गच्छंदेषुचान्येषुसमासात्स्वर्गसन्निभा ॥ नारायणाज्ञयावीरविहिताविश्वकर्मणा ६७ वनेषुरुरुवुर्हृद्यंमधुरंचैवपक्षिणः ॥ मनोहरतरं
चैवभैमानामतितेजसाम् ६८ देवलोकोद्भवाःश्वेताविलेपुःकोकिलास्तदा ॥ मधुराणिविचित्राणियदूनांकांक्षितानिच ६९ चंद्रांशुसमरूपेषुहर्म्यपृष्ठेषुब
र्हिणः॥ ननृतुर्मधुराराविणःशिखंडिगणसंवृताः ७० पताकायानपात्राणांसर्वाःपक्षिगणायुताः ॥ भ्रमरैरुपगीताश्चस्रग्दामासक्तवासिभिः ७१ नारायणाज्ञ
यावृक्षाःपुष्पाणिमुमुचुर्भृशम् ॥ ऋतवश्चारुरूपाणिविहायसिगतास्तदा ७२ ववौमनोहरोवातोरतिखेदहरःसुखः ॥ रजोभिःसर्वपुष्पाणांपृक्तश्चंदनशैत्यभृ
त् ७३ शीतोष्णमिच्छतांतत्रबभूववसुधापते ॥ वासुदेवप्रमादेनभैमानांक्रीडतांतदा ७४ नक्षुत्पिपासानग्लानिर्नचिंताशोकएवच ॥ आविवेशतदाभैमान्प्र
भावाच्चक्रपाणिनः ७५ अप्रशांतमहातूर्यागीतनृत्योपशोभिताः ॥ बभूवुःसागरक्रीडाभैमानामतितेजसाम् ७६ बहुयोजनविस्तीर्णंसमुद्रंसलिलाशयम् ॥
रुद्ध्वाचिक्रीडुरिंद्राभाभैमाःकृष्णाभिरक्षिताः ७७ परिच्छदस्यानुरूपंयानपात्रंमहात्मनः ॥ नारायणस्यदेवस्यविहितंविश्वकर्मणा ७८ रत्नानियानित्रैलो
क्येविशिष्टानिविशांपते ॥ कृष्णस्यतानिसर्वाणियानपात्रेतितेजसः ७९ पृथक्पृथङ्निवासाश्चस्त्रीणांकृष्णस्यभारत ॥ मणिवैडूर्यचित्रास्ताःकार्तस्वरवि
भूषिताः ८० सर्वर्तुकुसुमाकीर्णाःसर्वगंधाधिवासिताः ॥ यदुसिंहैःशुभैर्जुष्टाःशकुनैःस्वर्गवासिभिः ॥ ८१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णु
पर्वणिभानुमतीहरणेअष्टाशीतितमोऽध्यायः ८८ ॥ छ ॥ वैशंपायनउवाच ॥ रेमेबलश्चंदनपंकदिग्धःकादंबरीपानकलःपृथुश्रीः ॥ रक्तेक्षणोरेवतिमा
श्रयित्वाप्रलंबबाहुस्खलितःप्रपातः १ नीलांबुदाभेवसनेवसानश्चंद्रांशुगौरोमदिराविलाक्षः ॥ रराजरामोंबुदमध्यमेत्यसंपूर्णबिंबोभगवानिवेंदुः २ वामैक
कर्णामलकुंडलश्रीःस्मेरन्मनोज्ञाब्जकृतावतंसः ॥ तिर्यक्कटाक्षंप्रिययामुमोदरामोमुखंचार्वभिवीक्ष्यमाणः ३ अथाज्ञयाकंसनिकुंभशत्रोरुदाररूपोप्सरसांग
णःसः ॥ द्रष्टुंमुदारेवतिमाजगामवेलालयंस्वर्गसमानमृद्ध्या ४

येमुष्मिन्निरूप्यते ॥ छालिक्यायागमःक्रीडागानंभोज्यंमहाद्भुतम् ॥ १ ॥ अथजलक्रीडावर्णनम् रेमेबलइति कादंबरीपानकलःकदंबप्रसूतमदिरापानेनमनोहरः रेवतिमितिङ्क
स्वत्वमार्षंछंदोनुरोधात् ॥ १ ॥ २ ॥ ३ ॥ वेलालयंसागरम् ॥ ४ ॥

ताअप्सरसः तासुचकाश्चनवाद्यानुरूपंननृतु ॥ अन्याःसम्यक्सर्वभावेनजगुः ॥ ५ ॥ अभिनयेनहस्तादिचालनेनलब्धंशिक्षितंबत्हावादिएषांयदूनांअर्थयुक्तप्रयोजनवत् त्द
यंचतदनुकूलंच ॥ ६ ॥ रासंगानं ॥ ७ ॥ कंसप्रलंबादिवधंतदनुकारिनृत्यंचक्रुरित्यर्थः ॥ ८ ॥ अरिष्टधेनुकाभ्यांअरिष्टधेनुकयोः ॥ ९ ॥ १० ॥ शंखह्रदात्शंखादिनि



तांरेवतींचाप्यथवापिरामंसर्वानमस्कृत्यवरांगयष्ट्यः ॥ वाद्यानुरूपंननृतुःसुगात्र्यःसमंततोन्याजगिरेचसम्यक् ५ चक्रुस्तथैवाभिनयेनलब्धंयथावदेषांप्रिय
मर्थयुक्तम् ॥ त्द्द्यानुकूलंचबलस्यतस्यतथाज्ञयारैवतराजपुत्र्याः ६ चक्रुर्हसंत्यश्चतथैवरासंतद्देशभाषाकृतिवेषयुक्ताः ॥ सहस्ततालंललितंसलीलंव
रांगनामंगलसंभृतांग्यः ७ संकर्षणाधोक्षजनंदनानिसंकीर्तयंत्योथचमंगलानि ॥ कंसप्रलंबादिवधंचरम्यंचाणूरघातंचतथैवरंगे ८ यशोदयाचप्रथितंयशो
थदामोदरत्वंचजनार्दनस्य ॥ वधंतथारिष्टकधेनुकाभ्यांव्रजेचवासंशकुनीवधंच ९ तथाचभग्नौयमलार्जुनौतौसृष्टिंवृकाणामपिवत्सयुक्ताम् ॥ सकालियो
नागपतिर्ह्रदेचकृष्णेनदांतश्चयथादुरात्मा १० शंखह्रदादुद्धरणंचवीरपद्मोत्पलानांमधुसूदनेन ॥ गोवर्द्धनोर्थेचगवांधृतोभूद्यथाचकृष्णेनजनार्दनेन ११ कु
ब्जांयथागंधकपीषिकांचकुब्जत्वहीनांकृतवांश्चकृष्णः ॥ अवामनंवामनकंचचक्रेकृष्णोयथात्मानमजोप्यनिंद्यः १२ सौभप्रमाथंचहलायुधत्वंवधंमुरस्या
प्यथदेवशत्रोः ॥ गंधारकन्यावहनेनृपाणांरथेतथायोजनमूर्जितानाम् १३ ततःसुभद्राहरणेजयंचयुद्धेचबालाहकजंबुमाले ॥ रत्नप्रवेकंचयुधार्जितैर्यत्स
माहृतंशक्रसमक्षमासीत् १४ एतानिचान्यानिचचारुरूपाजगुःस्त्रियःप्रीतिकराणिराजन् ॥ संकर्षणाधोक्षजहर्षणानिचित्राणिचानेककथाश्रयाणि १५
कादंबरीपानमदोत्कटस्तुबलःपृथुश्रीःसचुकूर्दरामः ॥ सहस्तस्तालंमधुरंसमंचसभार्ययारेवतराजपुत्र्या १६ तंकूर्दमानंमधुसूदनश्चदृष्ट्वामहात्माचमुदान्वि
तोभूत् ॥ चुकूर्दसत्यासहितोमहात्माहर्षागमार्थंचबलस्यधीमान् १७ समुद्रयात्रार्थमथागतश्चचुकूर्दपार्थोनरलोकवीरः ॥ कृष्णेनसार्द्धंमुदितश्चुकूर्दसुभद्र
याचैववरांगयष्ट्या १८ गदश्चधीमानथसारणश्चप्रद्युम्नसांबौनृपसात्यकिश्च ॥ सात्राजितीसूनुरुदारवीर्यःसुचारुदेष्णश्चसुचारुरूपः १९ वीरौकुमारौनिश
ठोल्मुकौचरामात्मजोवीरतमौचुकूर्दतुः ॥ अक्रूरसेनापतिशंकरश्चतथापरेभैमकुलप्रधानाः २० तद्यानपात्रंववृधेतदानींकृष्णप्रभावेनजनेंद्रपुत्र ॥ आ
पूर्णमापूर्णमुदारकीर्तेचुकूर्दयद्भिर्नृपभैममुख्यैः २१ तैरासमक्तैरतिकूर्दमानैर्यदुप्रवीरैरमरप्रकाशैः ॥ हर्षान्वितंवीरजगत्तथाभूच्छेमुश्चपापानिजनेंद्रसूनो २२



धियुक्तात्तस्मादेवह्रदात् ॥ ११ ॥ १२ ॥ १३ ॥ बालाहकजंबुमालिभ्यांसहवृत्तेयुद्धेतच्चपार्श्वेप्रसिद्धम् ॥ १४ ॥ १५ ॥ कुर्दधातुरत्रगानार्थःचुकूर्दजगौ १६ ॥ १७ ॥
॥ १८ ॥ १९ ॥ २० ॥ यानपात्रंनौः ॥ २१ ॥ २२ ॥

॥ २३ ॥ हेराजपुत्रमुनिरत्रदीर्घाभावश्छांदसः हेलाविकारैःलीलानुकारैःरासप्रणेतामुनिराजपुत्रेत्यपिपाठः ॥ २४ ॥ २५ ॥२६ ॥ २७ ॥ २८ ॥ २९ ॥३० ॥ ३१ ॥ सहा
र्द्धभैमाः अर्धभैमैःसहवर्तमानाः पुत्रयोर्व्यत्याससमत्वद्योतनार्थः ॥ ३२ ॥ ३३ ॥ वेलिकातीरसंबंधिनीपत्सुखापादयोःसुखस्पर्शा यद्वस्त्वंतरमितीति ॥ ३४ ॥ ३५ ॥ पिब

देवोतिथिस्तत्रचनारदोथविप्रप्रियार्थंमुरकेशिशत्रोः ॥ चुकूर्दमध्येयदुसत्तमानांजटाकलापागलितैकदेशः २३ रामप्रणेतामुनिराजपुत्रसएवतत्राभवदप्रमेयः ॥ मध्येचगत्वासचुकूर्दभूयोहेलाविकारैःसविडंबितांगैः २४ ससत्यभामामथकेशवंचपार्थंसुभद्रांचबलंचदेवम् ॥ देवींतथारेवतराजपुत्रींसंदश्यसंदश्यजहासधीमान् २५ ताहासयामाससुधैर्ययुक्तास्तैस्तैरुपायैःपरिहासशीलः ॥ चेष्टानुकारैर्हसितानुकारैर्लीलानुकारैरपरैश्चधीमान् २६ आभाषितंकिंचिदिवोपलक्ष्यनादातिनादान्भगवान्मुमोच ॥ हसन्विहासांश्चजहासहर्षाद्धास्यागमेकृष्णविनोदनार्थम् २७ कृष्णाज्ञयासातिशयानितत्रयथानुरूपाणिददुर्युवत्यः ॥ रत्नानिवस्त्राणिचरूपवंतिजगत्प्रधानानिनृदेवसूनोः २८ माल्यानिचस्वर्गसमुद्भवानिसंतानदामान्यतिमुक्तकानि ॥ सर्वर्तुकान्यप्यनयंस्तदानींददुर्हरेरिंगितकालतज्ज्ञाः २९ रासावसानेत्वथगृह्यहस्तेमहामुनिंनारदमप्रमेयः ॥ पपातकृष्णोभगवान्समुद्रेसात्राजितींचार्जुनमेवचाथ ॥ ३० उवाचचामेयपराक्रमोथशैनेयमीषत्प्रहसन्पृथुश्रीः ॥ द्विधाकृतास्मिन्पततांशुभूत्वाक्रीडाजलेनौस्तुसहांगनाभिः ३१ सरेवतीकोस्तुबलोर्द्धनेतापुत्रामदीयाश्चसहार्द्धभैमाः ॥ भैमार्द्धमेवाथबलात्मजाश्चसत्पक्षिणःसंतुसमुद्रतोये ३२ आज्ञापयामासततःसमुद्रंकृष्णःस्मितंप्रांजलिनंप्रतीतः ॥ सुगंधतोयोभवमृष्टतोयस्तथाभवग्राहविवर्जितश्च ३३ दश्याचतेरत्नविभूषितातुसावेलिकाभूरथपत्सुखाच ॥ मनोनुकूलंचजनस्ययत्तत्प्रयच्छविज्ञास्यसिमत्प्रभावात् ३४ भवस्वपेयोप्यथचेष्टपेयोजनस्यसर्वस्यमनोनुकूलः ॥ वैडूर्यमुक्तामणिहेमचित्राभवंतुमत्स्यास्त्वयिसौम्यरूपाः ३५ बिभृस्वचत्वंकमलोत्पलानिसुगंधसुस्पर्शरसक्षमाणि ॥ षट्पादजुष्टानिमनोहराणिकीलालवर्णैश्चसमन्वितानि ३६ मैरेयमाध्वीकसुरासवानांकुंभांश्चपूर्णान्स्थपयस्वतोये ॥ जांबूनदंपाननिमित्तमेषांपात्रंपपुर्येषुददस्वभैमाः ३७ पुष्पोच्चयैर्वासितशीततोयोभवाप्रमत्तःखलुतोयराशे ॥ यथाव्यलीकंनभवेद्यदूनांसस्त्रीजनानांकुरुतत्प्रयत्नम् ३८ इतीदमुक्त्वाभगवान्समुद्रंततःप्रचिक्रीडसहार्जुनेन ॥ सिषेचपूर्वंनृपनारदंतुसात्राजितीकृष्णमुखेंगितज्ञा ३९ ततोमदावर्जितचारुदेहःपपातरामःसलिलेसलीलम् ॥ साकारमालंब्यकरंकरेणमनोहरांरैवतराजपुत्रीम् ४०

बिभृस्वबिभृह्विधारयेत्यर्थः कीलालमत्ररक्तं ॥३६ ॥ मैरेयादयोमद्यभेदाःमैरेयमत्रगौडीसुरा पैष्ट्यानिषेधात् माध्वीकसुरामधुपुष्पसंभवाआसवस्तालादिसंभवः स्वतोयेस्वजलो
परिस्थापयेत्यप्रहस्वत्वमार्षं पपुःपिबेयुः ॥ ३७ ॥ व्यलीकमन्याय्यं ॥ ३८ ॥ ३९ ॥ साकारंआकारःकामगतितंतेनसहयथास्यात्तथा ॥ ४० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ जलदर्दुरान्जलवाद्यविशेषान् ॥ ४५ ॥ कुशेशयाकोशःकमलकलिका आपीडोमुकुटं सुराणामिवचारूणिदौर्गंध्यादिरहितानिमुखानि यासांताः ॥ ४६ ॥ ४७ ॥ ४८ ॥ पक्षेएकत्रस्थितोबलंसिषेचे त्यन्वयःसचबलः ॥ ४९ ॥ ५० ॥ तेभैमानोपरेमुः क्रीडांनतत्यजुः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ विविक्तगात्राः

कृष्णात्मजायेत्वथभैममुख्यारामस्यपश्चात्पतिताःसमुद्रे ॥ विरागवस्त्राभरणाःप्रहृष्टाःक्रीडाभिरामामदिराविलाक्षाः ४१ शेषास्तुभैमाहरिमभ्युपेताः
क्रीडाभिरामानिशठोल्मुकाद्याः ॥ विचित्रवस्त्राभरणाश्चमत्ताःसंतानमाल्यावृतकंठदेशाः ४२ वीर्योपपन्नाःकृतचारुचिह्नाविलिप्तगात्राजलपात्रहस्ताः ॥
गीतानितद्देशमनोहराणिस्वरोपपन्नान्यथगायमानाः ४३ ततःप्रचक्रुर्जलवादितानिनानास्वराणिप्रियवाद्यघोषाः ॥ सहाप्सरोभिस्त्रिदिवालयाभिःकृ
ष्णाज्ञयावेशवधूशतानि ४४ आकाशगंगाजलवादनज्ञाःसदायुवत्योमदनैकचित्ताः ॥ अवादयंस्ताजलदर्दुरांश्चवाद्यानुरूपंजगिरेचहृष्टाः ४५ कुशेश
याकोशविशालनेत्राःकुशेशयापीडविभूषिताश्च ॥ कुशेशयानांरविबोधितानांजह्रुःश्रियंताःसुरवारमुख्याः ४६ स्त्रीवक्त्रचंद्रैःसकलेंदुकल्पैरराजराजंच्छ
तशःसमुद्राः ॥ यदृच्छयादेवविधानतोवानभोयथाचंद्रसहस्रकीर्णम् ४७समुद्रमेघःसरराजराजञ्छतह्रदास्त्रीप्रभयाभिरामः ॥ सौदामिनीभिन्नइवांबुनाथो
देदीप्यमानोनभसीवमेघः ४८ नारायणश्चैवसनारदश्चसिषेचपक्षेकृतचारुचिह्नः ॥ बलंसपक्षंकृतचारुचिह्नंसचैवपक्षंमधुसूदनस्य ४९ हस्तप्रमुक्तैर्जल
यंत्रकैश्चप्रहृष्टरूपाःसिषिचुस्तदानीम् ॥ रागोद्धतावारुणिपानमत्ताःसंकर्षणांधोक्षजदेवपत्न्यः ५० आरक्तनेत्राजलमुक्तिसक्ताःस्त्रीणांसमक्षंपुरुषायमाणाः ॥
तेनोपरेमुःसुचिरंचभैमामानंवहंतोमदनंमदंच ५१ अतिप्रसंगंतुविचिंत्यकृष्णस्तान्वारयामासरथांगपाणिः ॥ स्वयंनिवृत्तोचलवाद्यशब्दैःसनारदःपार्थस
हायवांश्च ५२ कृष्णेंगितज्ञाजलयुद्धसंगाद्भैमानिवृत्तादृढमानिनोपि ॥ नित्यंतथानंदकराःप्रियाणांप्रियश्चतेषांननृतुःप्रतीताः ५३ नृत्यावसानेभगवानु
पेंद्रस्तत्याजधीमानथतोयसंगान् ॥ उत्तीर्यतोयादनुकूललेपंजग्राहदत्वामुनिसत्तमाय ५४ उपेंद्रमुत्तीर्णमथाशुदृष्ट्वाभैमाहितेतत्यजुरेवतोयम् ॥ विवि
क्तगात्रास्त्वथयानभूमिंकृष्णाज्ञयातेययुरप्रमेयाः ५५ यथानुपूर्व्याचयथावयश्चयत्सन्नियोगाश्चतदोपविष्टाः ॥ अन्नानिवीराबुभुजुःप्रतीताःपपुश्चपेयानि
यथानुकूलम् ५६ मांसानिपक्वानिफलाम्लकानिचुक्रोत्तरेणाथचदाडिमेन ॥ निष्टप्तशूलान्शकलान्पशूंश्चतत्रोपजह्रुःशुचयोथसूदाः ५७ शुद्धवपुषःविभक्त

गात्राइतिपाठेचंदनाद्यनुलिप्तावयवाः ॥ ५५ ॥ यत्सन्नियोगाःयदनुशिष्टाःप्रतीताःप्रख्याताःयथानुकूलंयथाहितं ॥ ५६ ॥ फलप्रभावाअम्लिकाअम्लतायेषुतानिचुक्रोत्तरेणचुक्रताधि केनसूदाःसूपकाराःसूपाइतिवापाठःनिष्टप्तशूलान्शूलंसमारोप्यनिष्टप्तानित्यर्थः निष्टप्तशूल्यानितिवा निष्टप्तशूल्यान्आततप्तपक्कान्शकलान्खंडितान्पशून्हरिणसूकरादीन् ५७॥

१ निष्टप्तशूल्यानित्यादिटीकाग्रन्थो लिखित पुस्तके न ।

सुखिन्नशूल्यान्शूलमारोप्यखिन्नानित्यर्थः वृक्षाम्लं अम्लवेतसादि ॥ पौरोगवोक्त्यासूदोक्तक्रमेणउपजह्रुःपरिवेषणंचक्रुः ॥ ५८ ॥ पीवराणिपुष्टानि ॥ ५९ ॥ ॥ ६० ॥ मातुलिंगानिरुद्धकानि पर्णासःकुठेरकं भूस्तृणंशाकभेदः उपदंशैःपानपात्रैः ॥ ६१ ॥ कट्वांकःकटुरसः तद्युक्तकाष्ठशूलानियेषुतैः ॥ ६२ ॥ आर्द्रादीन्खाद्यविशेषान्किलादान्महिषीदुग्धसिक्तान् ॥ ६३ ॥ अपानपाः त्यक्तमद्यादिपानाः पानमित्युपलक्षणंमांसादेः ॥ ६४ ॥ आरनालान्कांजिकानिर सालानितिपाठेतुरसालान्अपरिमितघृत शर्करादिसंस्कृतान् पालवीषुकपर्दनिर्मितपात्रेषुवाबृहच्छरावेषु खादन्अखादन् ६५ ६६ ६७ षट्ग्रामाःस्थानानियेषांरागाणांतैर्यःसमाधिःचित्तैकाग्र्यंतद्यस्यांतां तेचमध्यशुद्ध

सुखिन्नशूल्यान्माहिषांश्चबालाञ्छलान्सविष्टसघृतावसिक्तान् ॥ वृक्षाम्लसौवर्चलचुक्रपूर्णान्पौरोगवोक्त्याउपजह्रुरेषाम् ५८ पौरोगवोक्त्याविधिनामृगाणां मांसानिसिद्धानिचपीवराणि ॥ नानाप्रकाराण्युपजह्रुरेषांमृष्टानिपक्वानिचचुक्रचूतैः ५९ पार्श्वानिचान्येशकलानितत्रददुःपशूनांघृतमृक्षितानि ॥ सामुद्रचूर्णैरवचूर्णितानिचूर्णेनमृष्टेनसमारिचेन ६० समूलकैर्दाडिममातुलिंगैःपर्णासहिंग्वार्द्रकभूस्तृणैश्च ॥ तदोपदंशैःसुमुखोत्तरैस्तेपानानिहृष्टाःपपुरप्रमेयाः ६१ कट्वांकशूलैरपिपक्षिभिश्चघृताम्लसौवर्चलतैलसिक्तैः ॥ मैरेयमाध्वीकसुरासवांस्तेपपुःप्रियाभिःपरिवार्यमाणाः ६२ श्वेतेनयुक्तान्नृपशोणितेनभक्ष्यान्सुगंधाँल्लवणान्वितांश्च ॥ आर्द्रान्किलादान्घृतपूर्णकांश्चनानाप्रकारानपिखंडखाद्यान् ६३ अपानपाश्चोद्धवभोजमिश्राःशाकैश्चसूपैश्चबहुप्रकारैः ॥ पेयैश्चदध्नापयसाचवीराःस्वन्नानिराजन्बुभुजुःप्रहृष्टाः ६४ तथारनालांश्चबहुप्रकारान्पपुःसुगंधानपिपालवीषु ॥ शृतंपयःशर्करयाचयुक्तंफलप्रकारांश्चबहूंश्चखादन् ६५ तृप्ताःप्रवृत्ताःपुनरेववीरास्तेभैममुख्यावनितासहायाः ॥ गीतानिरम्याणिजगुःप्रहृष्टाःकांताभिनीतानिमनोहराणि ६६ आज्ञापयामासततःसतस्यांनिशिप्रहृष्टोभगवानुपेंद्रः ॥ छालिक्यगेयंबहुसन्निधानंयदेवगांधर्वमुदाहरंति ६७ जग्राहवीणामथनारदस्तुषड्ग्रामरागादिसमाधियुक्ताम् ॥ हल्लीसकंतुस्वयमेवकृष्णःसवंशघोषंनरदेवपार्थः ६८ मृदंगवाद्यानपरांश्चवाद्यान्वराप्सरास्ताजगृहुःप्रतीताः ॥ आसारितांतेचततःप्रतीतारंभोत्थितासाभिनयार्थतज्ज्ञा ६९ तयाभिनीतेवरगात्रयष्ट्यातुतोषरामश्चजनार्दनश्च ॥ अथोर्वशीचारुविशालनेत्राहेमाचराजन्नथमिश्रकेशी ७०

भिन्नगौडमिश्रगीतरूपाः हल्लीसकंबहुभिः स्त्रीभिःसहनृत्यम् ऋल्लीसकमितिपाठेतदाख्यवाद्यविशेषम् झल्लीसकमितिपाठे निषादर्षभादिसप्तस्वरयुतंझल्लीसकंवाद्यविशेषम् जग्राहेतिविपरिणामेनक्रियासंबंधः वंशघोषेणसहयथास्यात्तथा ॥ ६८ ॥ पार्थस्तुमृदंगाद्यान्जग्राहेत्यनुषंगः अपरांश्चवाद्यान्वराप्सरसोजगृहुरितिसंबंधः आसारितांतइतिभरतोमुनिश्चतुर्विधमासारितंनृत्यविधावुपदिदेशेति ॥ प्रथमंनर्तकीप्रवेशःततश्चासारितार्थाभिनयंनाट्ये ततस्तालानुगत्यांगाहरणम् ततोदेवताचिन्हरूपेणनृत्यम् एवंचतुर्थ्वंप्यभिसारेषूक्तम् एवमेषनर्तकीप्रवेशोभरतस्यानुमतः तदंतेरंभानर्तकीउत्थिताप्रविष्टायतःसाअभिनयचतुरा ॥ ६९ ॥ अभिनीतेअभिनयेकृतेद्वितीयासारेउर्वशीउत्थिताइत्यनुषंगः ॥७०

॥ ७१ ॥ ताःरंभाद्याःपारितोषितेनपरितोषणेनतोषयामासेतिशेषः तांबूलयोगाश्चेतिपदत्रयंवाक्यं ॥ ७२ ॥ तदाजलक्रीडायामागताभिःपंचचूडाकौबेरीमाहेंद्रीभिश्चतांबूलयोगाः गर्वांकुराआहृताःवयमेताभ्योधिकाइतिस्वगुणाआविष्कृताइत्यर्थः तदेवाहफलानीत्येकश्लोकोवाक्यम् ॥ ७३ ॥ कृष्णेच्छयामानुषाणामनुग्रहायत्रिदिवात्तानभिछालिक्यंभु

तिलोत्तमाचाप्यथमेनकाचएतास्तथान्याश्चहरिप्रियार्थम् ॥ जगुस्तथैवाभिनयंचचक्रुरिष्टैश्चकामैर्मनसोनुकूलैः ७१ तावासुदेवेप्यनुरक्तचित्ताःस्वगीतनृ
त्याभिनयैरुदारैः ॥ नरेंद्रसूनोपरितोषितेनतांबूलयोगाश्चवराप्सरोभिः ७२ तदागताभिर्नृवराहृतास्तुकृष्णेप्सयामानमयास्तथैव ॥ फलानिगंधोत्तमवं
तिवीराश्छालिक्यगांधर्वमथाहृतंच ७३ कृष्णेच्छयाचत्रिदिवान्नृदेवअनुग्रहार्थंभुविमानुषाणाम् ॥ स्थितंचरम्यंहरितेजसैवप्रयोजयामाससरौक्मिणे
यः ७४ छालिक्यगांधर्वमुदारबुद्धिस्तेनैवतांबूलमथप्रयुक्तम् ॥ प्रयोजितंपंचभिरिंद्रतुल्यैश्छालिक्यमिष्टंसततंनराणाम् ७५ शुभावहंवृद्धिकरंप्रशस्तंमं
गल्यमेवाथतथायशस्यम् ॥ पुण्यंचपुष्ट्यभ्युदयावहंचनारायणस्येष्टमुदारकीर्तेः ७६ भरापहंधर्मभरावहंचदुःस्वप्ननाशंपरिकीर्त्यमानम् ॥ करोतिपापं
चतथाविहंतिशृण्वन्सुरावासगतोनरेंद्रः ७७ छालिक्यगांधर्वमुदारकीर्तिर्मेनेकिलैकंदिवसंसहस्रम् ॥ चतुर्युगानांनृपरेवतोथततःप्रवृत्ताचकुमारजातिः
७८ गांधर्वजातिश्चतथापरापिदीपाद्यथादीपशतानिराजन् ॥ विवेदकृष्णश्चसनारदश्चप्रद्युम्नमुख्यैर्नृपभैममुख्यैः ७९ विज्ञानमेतद्विपरेयथावदुद्देश
मात्राच्चजनास्तुलोके ॥ जानंतिछालिक्यगुणोदयानांतोयंनदीनामथवासमुद्रे ८० ज्ञातुंसमर्थोहिमवान्गिरिर्वाफलाग्रतोवागुणतोथवापि ॥ शक्यं
नछालिक्यमृतेतपोभिःस्थानेविधानान्यथमूर्च्छनासु; ८१ षड्ग्रामरागेषुचतत्रकार्यंतस्यैकदेशावयवेनराजन् ॥ लेशाभिधानांसुकुमारजातिंनिष्ठांसुदुःखेन
नराःप्रयांति ८२ छालिक्यगांधर्वगुणोदयेषुयेदेवगंधर्वमहर्षिसंघाः ॥ निष्ठांप्रयांतीत्यवगच्छबुद्ध्याछालिक्यमेवंमधुसूदनेन ८३ भैमोत्तमानांनरदे
वदत्तंलोकस्यचानुग्रहकाम्ययैव ॥ गतंप्रतिष्ठाममरोपगेयंबालायुवानश्चतथैववृद्धाः ८४ क्रीडंतिभैमाःप्रसवोत्सवेषुपूर्वंतुबालाःसमुदावहंति ॥ वृद्धाश्चप
श्चात्प्रतिमानयंतिस्थानेषुनित्यंप्रतिमानयंति ८५ मर्त्येषुमर्त्यान्यदवोतिवीराःस्ववंशधर्मंसमनुस्मरंतः ॥ पुरातनंधर्मविधानतज्ज्ञाःप्रीतिःप्रमाणंनवयःप्र
माणम् ८६ प्रीतिप्रमाणानिहिसौहृदानिप्रीतिंपुरस्कृत्यहितेदशार्हाः ॥ वृष्ण्यंधकाःपुत्रसुखाबभूवुर्विसर्जिताःकेशिविनाशनेन ८७

विआहृतं फलानिचदेवयोग्यानिआहृतानि ततःकिमतआहस्थितमिति प्रद्युम्नादौ ॥ ७४ ॥ पंचभिःकृष्णरामप्रद्युम्नानिरुद्धसांबैः ॥ ७५ ॥ ७६ ॥ दुःस्वप्ननाशंकरोतित थापापंचविहंतीत्यन्वयः ॥ ७७ ॥ यच्छालिक्यगांधर्वंसुरावासगतोरेवतःशृण्वन्चतुर्युगानांसहस्रंएकंदिवसंमेने ततएवकुमारजातिप्रमुखागंधर्वभेदाःप्रवृत्ताइतिवाक्यार्थः ॥ ७८ ७९ ८० स्थानेतद्युक्तं नालंइतिपाठः सुगमः ॥ ८१ ॥ लेशाभिधानांसुकुमारजातिंगायंतोनिष्ठांसमाप्तिंनरादुःखेनगच्छंतिछालिक्यस्यवार्तेत्यर्थः ८२ ८३ ८४ ८५ ८६ ८७

प्रहृष्टरूपस्यसुहृष्टरूपाविनोदिताःकेशिनिषूदनेनेत्यपिपाठः ॥ ८८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायामेकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥
अथास्मिन्नवतितमेह्यध्यायेसन्निरूप्यते ॥ भानुमत्यापहरणंनिकुंभस्यतथावधः ॥ १ ॥ तेषांक्रीडेति ॥ १ ॥ भानोर्यादवविशेषस्य ॥ २ ॥ ३ ॥ पूर्ववैरंप्रपंचयतिभ्रातुर्हीति ॥ ४ ॥ प्रस्तुतमाहभानोरेवेति भानोरेवकन्यापुरेमहानादआर्तरावः सहसाआकस्मिकःसमुपस्थितःअभ्युत्थितः कथंभूतेकन्यापुरे दुराधर्षेऽद्दस्वाधीनेनिरीश्वरेरक्षकाभावात्यदूनां क्रीडासक्तत्वात् तत्तुनातिचित्रमित्याहछिद्रज्ञइति अवसरेणेत्येनपूप्रत्ययांतं अवसरेदानवाधमोनिकुंभःछिद्रान्वेषीमाययावंचनरतोवसातितिष्ठत्येवक अरण्येद्वारकोपवनेइतिसार्द्धश्लो०

स्वर्गंगताश्चाप्सरसांसमूहाःकृत्वाप्रमाणंमधुकंसशत्रोः ॥ प्रहृष्टरूपस्यसुहृष्टरूपाबभूवहृष्टःसुरलोकसंघः ॥ ८८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिभानुमतीहरणेछालिक्यक्रीडावर्णनंनामैकोननवतितमोऽध्यायः ॥ ८९ ॥ ७ ॥ वैशंपायनउवाच ॥ तेषांक्रीडाप्रसक्तानांयदूनांपुण्यकर्मणाम् ॥ छिद्रमासाद्यदुर्बुद्धिर्दैवशत्रुर्दुरासदः १ कन्यांभानुमतींनामभानोर्दुहितरंनृप ॥ जहारात्मवधाकांक्षीनिकुंभोनामदानवः २ अंतर्हितोमोहयित्वायदूनां प्रमदाजनम् ॥ मायावीमाययाराजन्पूर्ववैरमनुस्मरन् ३ भ्रातुर्हिवज्रनाभस्यतस्यकन्याप्रभावती ॥ प्रद्युम्नेनहृतावीरवज्रनाभस्तथाहतः ४ भानोरेवतथारण्येवसत्यवसरेणहि ॥ अस्वाधीनेदुराधर्षेछिद्रज्ञोदानवाधमः ५ कन्यापुरेमहानादःसहसासमुपस्थितः ॥ तस्यांह्रियंत्यांकन्यायांरुदंत्यांसमितिंजयः ॥ ६ वसुदेवाहुकौवीरौदंशितौनिर्गतावुभौ ॥ आर्तनादमुपश्रुत्यभानोःकन्यापुरेतदा ७ नदृष्टिगोचरौतौतुददृशातेपकारिणम् ॥ तथैवदंशितौयातौयत्रकृष्णो महाबलः ८ श्रुतार्थःस्वंविमानंतदारुरोहजनार्दनः ॥ पार्थेनसहितस्तार्क्ष्येनागशत्रुमरिंदमः ९ रथीत्वमनुगच्छेतिसंदिश्यमकरध्वजम् ॥ त्वरेतिगरुडंवीरःसंदिदेशचकाश्यपम् १० वज्रंनगरमायांतंनिकुंभंरणदुर्जयम् ॥ पार्थकृष्णौमहात्मानावासेदतुररिंदमौ ११ प्रद्युम्नश्चमहातेजामायिनांप्रवरोनृप ॥ निकुंभश्चाथतान्दृष्ट्वात्रिधात्मानमथाकरोत् १२ तान्सर्वान्योधयामासनिकुंभःप्रहसन्निव ॥ बहुकंटकगुर्वीभिर्गदाभिरमरोपमः १३ सव्येनालंब्यहस्तेनकन्यांभानुमतींनृप ॥ दक्षिणेनाथहस्तेनगदयाप्राहरत्पुनः १४ कन्यार्थेनचकृष्णौवाकामोवानृपसत्तम ॥ निर्दयंप्रहरंतिस्मनिकुंभेचमहासुरे १५ समर्थास्ते महात्मानःशत्रुंहंतुंदुरासदाः ॥ निशश्वसुर्नरपतेदयाभारावपीडिताः १६ श्रेष्ठोधनुष्मतांपार्थःसर्वथाकुशलोयुधि ॥ नागोष्ट्रविधिनादैत्यंशरपंक्त्याजघानह १७

कोवाक्यं ह्रियंत्यांह्रियमाणायां ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ विमानं वाहनं तर्हिकिंसामान्यं न तार्क्ष्यमित्यादि ॥ ९ ॥ १० ॥ ११ ॥ तान्दानवान् ॥ १२ ॥ तान्कृष्णादीन् ॥ १३ ॥ भानुमतींचर्मस्थानीयां ॥ १४ ॥ १५ ॥ निशश्वसुःनिश्वासंमुमुचुः ॥ १६ ॥ नागोष्ट्रविधिनेति कथा कश्चिद्धनुर्द्धरोस्त्रलाघवंदर्शयन् अजगरवेष्टितमुष्ट्रं दृष्ट्वाअस्त्रप्रयोगविशेषादजगरमेवहंतिनतुक्रमेलकंतद्वत् ॥ १७ ॥

तेकृष्णप्रमुखाजग्मुरितिक्रियाविपरिणामेनानुषंगः ॥ १८ ॥ १९ ॥ पृष्ठतोऽव्यवहितावेवानुययतुरित्यर्थः ॥ २० ॥ २१ ॥ अरिमर्दनोपि ॥ २२ ॥ २३ ॥ २४ ॥ भैमःप्र

तेतुवैतस्तिकैर्बाणैर्विविधान्दानवान्युधि ॥ नकन्यांकलयायुक्त्याशिक्षयाचमहीपते १८ ततःसकन्ययासार्द्धंतत्रैवांतरधीयत ॥ आसुरीमाश्रितोमायान
चतांवेत्तिकश्चन १९ तंकृष्णौरौक्मिणेयश्चपृष्ठतोनुययुस्तदा ॥ हारितःशकुनोभूत्वातस्थावथमहासुरः २० तंबाणैःपुनरेवाथवीरोभूयोधनंजयः ॥ वैत
स्तिकैर्मर्मभिद्भिःकन्यांरक्षन्नताडयत् २१ सइमांपृथिवींकृत्स्नांसप्तद्वीपांमहासुरः ॥ बभ्रामानुगतश्चैवतैर्वीरैररिमर्दनः २२ गोकर्णस्योपरिष्टाच्चपर्वतस्यम
हासुरः ॥ पपातवेलांगंगायाःपुलिनेसहकन्यया २३ नदेवानासुराश्चापिलंघयंतितपोधनाः ॥ गोकर्णंतेजसागुप्तंमहादेवस्यभारत २४ एतदंतरमासा
द्यप्रद्युम्नःशीघ्रविक्रमः ॥ कन्यांभानुमतींभैमोजग्राहरणदुर्जयः २५ असुरःसोर्दितोराजन्कृष्णाभ्यांनिशितैःशरैः ॥ त्यक्त्वाथोत्तरगोकर्णंनिकुंभोदक्षिणांदि
शम् ॥ जगामपृष्ठतोयातौकृष्णौताक्ष्यर्गतौतदा २६ विवेशषट्पुरंचैवज्ञातीनामालयंतदा ॥ तत्रवीरौगुहाद्वारिकृष्णौरात्रौतदोषतुः २७ रौक्मिणे
योपिकृष्णेनसंदिष्टोद्वारकांपुरीम् ॥ अनयद्भानुतनयांप्रहृष्टेनांतरात्मना २८ नयित्वाचाययौवीरःषट्पुरंदानवाकुलम् ॥ ददर्शचगुहाद्वारिकृष्णौभी
मपराक्रमौ २९ ऊषतुर्द्वारमाक्रम्यषट्पुरस्यमहाबलौ ॥ कृष्णौप्रद्युम्नसहितौनिकुंभवधकांक्षिणौ ३० ततोनंतरमेतस्माद्बिलादतिबलस्तदा ॥ निर्जगा
मबलीयोद्धुंनिकुंभोभीमविक्रमः ३१ तस्यनिर्गच्छतस्तस्माद्बिलात्पार्थोविशांपते ॥ रुरोधसर्वतोमार्गंशरैर्गांडीवनिःसृतैः ३२ सोभिसृत्यगदांघोरामुद्य
म्यबहुकंटकाम् ॥ शिरस्यताडयत्पार्थंनिकुंभोबलिनांवरः ३३ अदृष्टेनाहतोवीरःशिरस्यथमुमोहसः ॥ गदयाभिहतेपार्थेरक्तंवमतिमुह्यति ॥ हसित्वा
सोसुरोदृप्तोरौक्मिणेयमताडयत् ३४ तंप्राङ्मुखमुखंवीरंमायावीमायिनांवरम् । अदृष्टेनाहतोवीरःशिरस्यथमुमोहसः ३५ तथागतौतुदृष्ट्वातौमुह्यमा
नौसुताडितौ ॥ अभिदुद्रावगोविंदोनिकुंभंक्रोधमूर्च्छितः ३६ कौमोदकींसमुद्यम्यगदपूर्वोद्भवोगदाम् ॥ तावन्योन्यंदुराधर्षौगर्जंतावभिपेततुः ३७ ऐ
रावतगतःशक्रःसर्वैर्देवगणैःसह ॥ ददर्शतन्महायुद्धंघोरंदेवासुरंतदा ३८ दृष्ट्वादेवान्हृषीकेशश्चित्रैर्युद्धैररिंदमः ॥ इयेषदानवंहंतुंदेवानांहितकाम्यया ३९
समंडलानिचित्राणिदर्शयामासकेशवः ॥ कौमोदकींमहाबाहुर्लीलयन्युद्धकोविदः ४० तथैवासुरमुख्योपिगदांतांबहुकंटकाम् ॥ शिक्षयाभ्रामयानोथमं
डलानिचचारह ४१ वृषभाविवगर्जंतौबृंहताविवकुंजरौ ॥ इषितांतरमासाद्यक्रुद्धौशालावृकाविव ४२

द्युम्नः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ अभिसृत्य अभिमुखं आगत्य ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ इ
येषइच्छांचकार ॥ ३९ ॥ ४० ॥ ४१ ॥ इषितावासितापुष्पवतीतियावत् ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ अवष्टभ्येतिरिपूत्कर्षंख्यापयितुंआत्मेच्छयेतिवक्ष्यमाणत्वात् ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ तंशरीरंपरित्यज्यंगतम् ॥ ५० ॥ वीरव्रतंररक्षप

आजघाननिकुंभस्तुगदयागदपूर्वजम् ॥ स्पष्टाष्टघंटयावीरनादंमुक्तातिदारुणम् ४३ तत्कालमेवकृष्णोपिभ्रामयित्वामहागदाम् ॥ निकुंभमूर्द्धनितदा पातयामासभारत ४४ अवष्टभ्यमुहूर्त्तंतुहरिःकौमोदकींगदाम् ॥ तस्थौजगद्गुरुर्धीमान्मुमोहपतितःक्षितौ ४५ हाहाभूतंजगत्सर्वंतत्कालमभवत्तदा ॥ तथागतेवासुदेवेनरदेवमहात्मनि ४६ आकाशगंगातोयेनशीतेनचसुगंधिना ॥ सिषेचामृतमिश्रेणकृष्णंदेवेश्वरःस्वयम् ४७ नूनमात्मेच्छयाकृष्णस्त थाचक्रेसुरोत्तमः ॥ कोहिशक्तोमहात्मानंयुद्धेमोहयितुंहरिम् ४८ कृष्णःप्रत्यागतप्राणश्चक्रमुद्यम्यभारत ॥ प्रतीच्छेतिदुरात्मानमुवाचरिपुनाशनः ४९ निकुंभोप्यतिमायावीउत्पपातदुरासदः ॥ शरीरंतत्परित्यज्यनतुतंवेत्तिकेशवः ५० मुमूर्षतिमृतोवायमितिमत्वाजनार्दनः ॥ ररक्षस्मरमाणोथवी रोवीरव्रतंविभो ५१ अथप्रद्युम्नकौंतेयावागतौलब्धचेतनौ ॥ स्थितौनारायणाभ्याशेनिकुंभवधनिश्चितौ ५२ प्रद्युम्नोप्यथमायावीविदितःकृष्णमब्रवी त् ॥ निकुंभस्तातनास्त्यत्रगतःक्वापिसुदुर्मतिः ५३ प्रद्युम्नेनैवमुक्तेतुतन्ननाशकलेवरम् ॥ प्रजहासाथभगवानर्जुनेनसहप्रभुः ५४ तदायुतसहस्राणि निकुंभानांजनाधिप ॥ ददृशुस्तेततोवीराःक्षितौदिविचसर्वतः ५५ सहस्राण्येवकृष्णंतुतथापार्थमरिंदम ॥ रौक्मिणेयंतथावीरंतदद्भुतमिवाभवत् ॥ ५६ पांडवस्यधनुःकेचित्केचिदस्यमहाशरान् ॥ अन्येस्यजगृहुर्हस्तावन्येपादौमहासुराः ५७ एवंग्रहायतंवीरमगमंस्तेविहायसि ॥ पार्थानामपिको ट्यस्तुगृहीतानांतदाभवन् ५८ नांतंददर्शकृष्णश्चकार्ष्णिश्चरिपुनाशनौ ॥ विच्छिद्यतौशरैर्वीरौनिकुंभंपार्थवर्जितौ ५९ एकैकस्तुद्विधाच्छिन्नोद्वेधाभव तिभारत ॥ दिव्यज्ञानस्तदाकृष्णोभगवाननुदृष्टवान् ६० निकुंभंतत्वतश्चापिददर्शमधुसूदनः ॥ स्रष्टारंसर्वमायानांहर्तारंफाल्गुनस्यच ६१ सचक्रेण शिरस्तस्यचकर्त्तासुरसूदनः ॥ पश्यतांसर्वभूतानांभूतभव्यभवोहरिः ६२ समुक्त्वाफाल्गुनंराजञ्छिन्नेशिरसिभारत ॥ पपातासुरमुख्योथछिन्नमू लइवद्रुमः ६३ अथाकाशगतंपार्थंपतमानंविहायसः ॥ कृष्णवाक्येनजग्राहकार्ष्णिर्वीर्यतिमानद ६४ निकुंभेपतितेभूमौसमाश्वास्यधनंजयम् ॥ ज गामद्वारकांदेवःपार्थकामसमन्वितः ६५ समियायदशार्होथद्वारकांमुदितोविभुः ॥ नारदंचमहात्मानंववंदेयदुनंदनः ६६ नारदोथमाहातेजाभानुंया दवमब्रवीत् ॥ भानोमाकार्षीर्मन्युंत्वंश्रूयतांभैमनंदन ६७

तितंनहतवान् ॥ ५१ ॥ ५२ ॥ विदितः कर्तरिक्तःवेत्तीत्यर्थः ॥ ५३ ॥ ननाशअदृश्यमभूत् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ मन्युंकन्यापहारजंदैन्यम् ॥ ६७ ॥

॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांनवतितमोऽध्यायः ९०

क्रीडंत्यारैवतोद्यानेदुर्वासाःकोपितोनया ॥ सशशापततोरोषान्मुनिर्दुहितरंतव ६८ अतिदुर्ल्ललितैःकन्याशत्रुहस्तंगमिष्यति ॥ सुतार्थेतेमयासार्द्धंमु
निभिःसप्रसादितः ६९ बालांव्रतवतींकन्यामनागसमिमांमुने ॥ शप्तवानसिधर्मज्ञकथंधर्मभृतांवर ॥ अनुग्रहंविधत्स्वात्रवयंविज्ञापयामहे ७० अ
स्माभिरेवमुक्तस्तुदुर्वासाभैमनंदन ॥ उवाचाधोमुखोभूत्वामुहूर्तंकृपयान्वितः ७१ यदवोचमहंवाक्यंतत्तथानतदन्यथा ॥ रिपुहस्तमवश्यंहिगमिष्यतिन
संशयः ७२ अदूषितानुधर्मेणभर्तारमुपलप्स्यति ॥ बहुपुत्राबहुधनासुभगाचभविष्यति ७३ सुगंधगंधाचसदाकुमारीचपुनःपुनः ॥ नचशोकमिमं
घोरंतन्वंगीधारयिष्यति ७४ एवंभानुमतींवीरसहदेवायदीयताम् ॥ श्रद्दधानःसशूरश्चधर्मशीलश्चपांडवः ७५ ततोभानुमतींभानुर्ददौमाद्रीसुतायवै ॥
सहदेवायधर्मात्मानारदस्यवचःस्मरन् ७६ आनीतःसहदेवश्चप्रेषितश्चक्रपाणिना ॥ विवाहेचतदावृत्तेसभार्यःसपुरींगतः ७७ इमंकृष्णस्यविजयंयःपठे
च्छृणुयादथ ॥ विजयंसर्वकृत्येषुश्रद्दधानोलभेन्नरः ७८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिभानुमतीहरणेनिकुंभवधोनामनवतित
मोऽध्यायः ९० ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ भानुमत्याप्रहरणंविजयंकेशवस्यच १ क्रीडांचसागरेदिव्यांवृष्णीनामतितेजसाम् ॥ अश्रौषं
परमाश्चर्यंमुनेधर्मभृतांवर २ वज्रनाभवधंह्युक्तंनिकुंभवधकीर्तने ॥ तन्मेकौतूहलंश्रोतुंप्रसादाद्भवतोमुने ३ ॥ वैशंपायनउवाच ॥ हंततेवर्तयिष्यामि
वज्रनाभवधंनृप ॥ विजयंचैवकामस्यसांबस्यैवचभारत ४ मेरोःसानौनरपतेतपश्चक्रेमहासुरः ॥ वज्रनाभइतिख्यातोनिश्चितःसमितिंजयः ५ तस्यतु
ष्टोमहातेजाब्रह्मलोकपितामहः ॥ वरेणच्छंदयामासतपसापरितोषितः ६ अवध्यत्वंसदेवेभ्योवव्रेदानवसत्तमः ॥ पुरंवज्रपुरंचापिसर्वरत्नमयंशुभम् ७
स्वच्छंदेनप्रवेशश्चनवायोरपिभारत ॥ अचिंतितेनकामानामुपपत्तिर्नराधिप ८ शाखानगरमुख्यानांसंवाहानांशतानिच ॥ नगरस्याप्रमेयस्यसमंताज्ज
नमेजय ९ तथातदभवत्तस्यवरदानेनभारत ॥ उवासवज्रनगरेवज्रनाभोमहासुरः १० कोटिशोवरलब्धंतमसुराःपरिवार्यते ॥ ऊषुर्वज्रपुरेराजन्सं
वाहेषुतथैवच ११ शाखानगरमुख्येषुरम्येषुचनराधिप ॥ हृष्टपुष्टप्रमुदितानृपदेवस्यशत्रवः १२ वज्रनाभोथदुष्टात्मावरदानेनदर्पितः ॥ पुरेस्यचा
त्मनश्चैवजगद्बाधितुमुद्यतः १३ महेंद्रमब्रवीद्गत्वादेवलोकंविशांपते ॥ अहमीशितुमिच्छामित्रैलोक्यंपाकशासन १४ अथवामेप्रयच्छस्वयुद्धंदेवग
णेश्वर ॥ सामान्यंहिजगत्कृत्स्नंकाश्यपानांमहात्मनाम् १५ भानुमत्यापहरणमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ शाखानगरंचतुर्दिक्षुसंवा
हानांसकाराणामुद्यानानाम् ॥ ९ ॥ १० ॥ वरलब्धंलब्धवरम् ॥ ११ ॥ १२ ॥ १३ ॥ ईशितुंपालितुंत्वंत्वधुनास्वर्गराज्यंत्यजेतिभावः ॥ १४ ॥ काश्यपानांदेवानांअदेवानांच ॥ १५ ॥

सबृहस्पतिनासार्द्धंमंत्रयित्वामहेश्वरः ॥ वज्रनाभंसुरश्रेष्ठःप्रोवाचकुरुवंशज १६ सत्रेषुदीक्षितःसौम्यःकश्यपोनःपितामुनिः ॥ तस्मिन्वृत्तेयथान्याय्यं तथासहिकरिष्यति १७ ततःसपितरंगत्वाकश्यपंदानवोऽब्रवीत् ॥ यथोक्तंदेवराजेनतमुवाचाथकश्यपः १८ सत्रेवृत्तेकरिष्यामियथान्यायंभविष्यति ॥ त्वंतुवज्रपुरेपुत्रवसगच्छसमाश्रितः १९ एवमुक्तेवज्रनाभःस्वमेवनगरंगतः ॥ महेंद्रोपिययौदेवोद्वारकांद्वारशालिनीम् २० गत्वाचांतर्हितोदेवोवासुदेव मथाब्रवीत् ॥ वज्रनाभस्यवृत्तांतंतमुवाचजनार्दनः २१ शौरेरुपस्थितोदेववाजिमेधोमहाक्रतुः॥ तस्मिन्वृत्तेवज्रनाभंपातयिष्यामिवासव २२ तत्रोपायं प्रवेशेतुचिंतयावःसतांगतेः ॥ नानिच्छयाप्रवेशोस्तितत्रवायोरपिप्रभो २३ ततोगतोदेवराजोवासुदेवेनसत्कृतः॥ वाजिमेधेचसंप्राप्तेवसुदेवस्यभारत २४ तस्मिन्यज्ञेवर्तमानेप्रवेशार्थंसुरोत्तमौ ॥ चिंतयामासतुर्वीरौदेवराजाच्युतावुभौ २५ तत्रयज्ञेवर्तमानेसुनाट्येननटस्तदा ॥ महर्षींस्तोषयामासभद्रनामे तिनामतः २६ तंवरेणमुनिश्रेष्ठाश्छंदयामासुरात्मवत् ॥ सवव्रेतुनटोभद्रोवरंदेवेश्वरोपमः २७ देवेंद्रकृष्णच्छंदेनसरस्वत्याप्रचोदितः॥ प्रणिपत्यमुनिश्रेष्ठा नश्वमेधेसमागतान् २८ ॥ नटउवाच ॥ भोज्योद्विजानांसर्वेषांभवेयंमुनिसत्तमाः ॥ सप्तद्वीपांचपृथिवींविचरेयमिमामहम् २९ प्रसिद्धाकाशगमनः शक्तुवंश्चविशेषतः ॥ अवध्यःसर्वभूतानांस्थावरायेचजंगमाः ३० यस्ययस्यचवेषेणप्रविशेयमहंखलु ॥ मृतस्यजीवतोवापिभाव्येनोत्पादितस्यवा ३१ सतूर्यस्तादृशःस्यांवैजरारोगविवर्जितः ॥ तुष्येयुर्मुनयोनित्यमन्येचममसर्वदा ३२ एवमस्त्वितिसंप्रोक्तोब्राह्मणैर्नृपतेनटः॥ सप्तद्वीपांवसुमतींपर्यटत्यमरो पमः ३३ पुराणिदानवेंद्राणामुत्तरांश्चकुरूंस्तथा ॥ भद्राश्वान्केतुमालांश्चकालाम्रद्वीपमेवच ३४ पर्वणीषुतुसर्वासुद्वारकांयदुमंडिताम्॥ आयातिवरदत्तः सलोकवीरोमहानटः ३५ ततोहंसान्धार्तराष्ट्रान्देवलोकनिवासिनः । उवाचभगवान्शक्रःसांत्वयित्वासुरेश्वरः ३६ भवंतोभ्रातरोस्माकंकाश्यपादेवपक्षि णः ॥ विमानवाहादेवानांसुकृतीनांतथैवच ३७ देवानामस्तिकर्तव्यंकार्येशत्रुवधान्वितम् ॥ तत्कर्तव्यंनमंत्रश्चभेत्तव्योवःकथंचन ३८ नकुर्वतांदेवताज्ञा मुग्रोदंडःपतेदपि ॥ सर्वत्राप्रतिषिद्धंवोगमनंहंससत्तमाः ३९

दित्यर्थः ॥ २३ २४ २५ ॥ तत्रवसुदेवयज्ञेनाट्येननृत्येन २६ ॥ २७ ॥ देवेंद्रादिभिःतस्यैःप्रेरितइत्यर्थः ॥ २८ ॥ २९ प्रकर्षेणासिद्धंआकाशेगमनंयस्यसःतादृशःभवेयमि तिशेषःशक्नुवन्शक्तिमान् ॥३०॥ भाव्येनभविष्येणरूपेणमयातुसचएवोत्पादितस्यवेषेणप्रवेष्टुंशक्नुयामित्यर्थः॥३१॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

अप्रवेश्यमितिछेदः॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंश



गत्वाऽप्रवेश्यमन्येषांवज्रनाभपुरोत्तमम् ॥ इतोंतःपुरवापीषुचरध्वमुचितंहिवः ४० तस्यास्तिकन्यारत्नंहित्रैलोक्यातिशयंशुभम् ॥ नाम्नाप्रभावतीनाम
 चंद्राभेवप्रभावती ४१ वरदानेनसालब्धामात्राकिलवरानना ॥ हैमवत्यामहादेव्याःसकाशादितिनःश्रुतम् ४२ स्वयंवराचसाकन्याबंधुभिःस्थापितास 
ती ॥ आत्मेच्छयापतिंहंसावरयिष्यतिशोभना ४३ तद्भवद्भिर्गुणावाच्याःप्रद्युम्नस्यमहात्मनः ॥ सद्भूताःकुलरूपस्यशीलस्यवयसस्तथा ४४ यदासा
रक्तभावाचवज्रनाभसुतासती ॥ तस्याःसकाशात्संदेशोनायितव्यःसमाधिना ४५ प्रद्युम्नस्यपुनस्तस्मादानयध्वंतथैवच ॥ स्वबुद्ध्याप्राप्तकालंचसंविधेयंहितं
मम ४६ नेत्रवक्त्रप्रसादश्चकर्तव्यस्तत्रसर्वथा ४७ तथातथागुणावाच्याःप्रद्युम्नस्यमहात्मनः ॥ यथायथाप्रभावत्यामनस्तत्रभवेत्स्थितम् ४८ वृत्तांतश्चा
नुदिवसंप्रदेयोममसर्वथा ॥ द्वारवत्यांचकृष्णस्यभ्रातुर्ममयवीयसः ४९ तावद्यत्नश्चकर्तव्यःप्रद्युम्नोयावदात्मवित् ॥ पर्यावर्तेद्वरारोहांवज्रनाभसुतांविभुः ५०
अवध्यास्तेतुदेवानांब्रह्मणोवरदर्पिताः ॥ देवपुत्रैर्हिहंतव्याःप्रद्युम्नप्रमुखैर्युधि ५१ नटोदत्तवरस्तस्यवेषमास्थाययादवाः ॥ प्रद्युम्नाद्यागमिष्यंतिवज्रना
भविनाशनाः ५२ एतच्चसर्वंकर्तव्यमन्यच्चसर्वमेवहि ॥ प्राप्तकालंविधातव्यमस्माकंप्रियकाम्यया ५३ प्रवेशस्तत्रदेवानांनास्तिहंसाःकथंचन ॥ वज्रनाभे
प्सितेतत्रप्रवेशःखलुसर्वथा ५४ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिएकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ वैशंपायनउवाच ॥ तेवासववचःश्रु
त्वाहंसावज्रपुरंययुः ॥ पूर्वोचितंहिगमनंतेषांतत्रजनाधिप १ तेदीर्घिकासुरम्यासुनिपेतुर्वीरपक्षिणः॥ पद्मोत्पलैरावृतासुकांचनैःस्पर्शनक्षमैः २ तेवैनदं
तोमधुरंसंस्कृतापूर्वभाषिणः ॥ पूर्वमप्यागतास्तेतुविस्मयंजनयंतिहि ३ अंतःपुरोपभोग्यासुचेरुर्वापीषुतेनृप ॥ इष्टास्तेवज्रनाभस्यत्रिविष्टपनिवासिनः
४ ॥ आलपंतःसुमधुरंधार्तराष्ट्रजनेश्वर ॥ सतानुवाचदैतेयोधार्तराष्ट्रानिदंवचः ५ त्रिविष्टपेनित्यरताभवंतश्चारुभाषिणः ॥ यदैवेहोत्सवोस्माकंभवद्भिरव
गम्यते ६ आगंतव्यंजालपादाःस्वमिदंभवतांगृहम् ॥ विस्रब्धंचप्रवेष्टव्यंत्रिविष्टपनिवासिभिः ७ तेतथोक्ताःशकुनयोवज्रनाभेनभारत ॥ तथेत्युक्त्वा
हिविविशुर्दानवेंद्रनिवेशनम् ८ चक्रुःपरिचयंतेचदेवकार्यव्यपेक्षया । मानुषालापिनस्तेतुकथाश्चक्रुःपृथग्विधाः ९ वंशबद्धाःकाश्यपानांसर्वकल्याणभा
गिनां ॥ स्त्रियोरेमुर्विशेषेणशृण्वंत्यःसंगताःकथाः १० विचरंतस्ततोहंसादद्दशुश्चारुहासिनीम् ॥ प्रभावतींवरारोहांवज्रनाभसुतांतदा ११ हंसाःपरिचि 
तांचक्रुस्तांततश्चारुहासिनीम् ॥ सखींशुचिमुखींचक्रेहंसींराजसुतातदा १२

विष्णुपर्वणिटीकायामेकनवतितमोऽध्यायः ॥ ९१ ॥ ९१ ॥ तेवासवेति
॥ १ ॥ २ ॥ संस्कृतापूर्वभाषिणः संस्कृतंअपूर्वभाषंतेतथा ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ जालपादाः भोहंसाः ॥ ७ ॥ ८ ॥ ९ ॥ काश्यपानांदानवानाम् ॥ १० ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ रतिःसुखं ॥ १६ ॥ १७ ॥ रूपंस्वभावेसौंदर्येइतिमेदिनी कुलंजनपदेगृहेइतिविश्वः १८ किमर्थमेष्यति तस्यात्रागमनंप्रसक्तमेवनास्तीत्यर्थः १९
॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अनंगंकामदेवंसांगंकृत्वापुत्रोविहितइत्यन्वयः निबर्हितःहतः ॥ २४ ॥ २५ ॥ २६ ॥ तेजसाप्रभावेन २७ ॥ २८ ॥ २९ ॥ ३० ॥ यमुद्दिश्य

सातांकदाचित्पप्रच्छवज्रनाभसुतांसखीम् ॥ विश्रंभितांपृथक्सूक्तैराख्यानकशतैर्वराम् १३ त्रैलोक्यसुंदरींवेद्मित्वामहंहिप्रभावति॥ रूपशीलगुणैर्देविकिंचि त्त्वांवक्तुमुत्सहे १४ व्यतिक्रामतितेभीरुयौवनंचारुहासिनि ॥ यदतीतंपुनर्नैतिगतंस्रोतइवांभसः १५ कामोपभोगतुल्याहिरतिर्देविनविद्यते ॥ स्त्रीणांजगति कल्याणिसत्यमेतद्ब्रवीमिते १६ स्वयंवरेचन्यस्तात्वंपित्रासर्वांगशोभने ॥ नचकांश्चिद्वरयसेदेवासुरकुलोद्भवान् १७ व्रीडितायांतिसुश्रोणिप्रत्याख्याता स्त्वयाशुभे ॥ रूपशौर्यगुणैर्युक्तान्सदृशांस्त्वंकुलस्यहि १८ आगतान्नेच्छसेदेविसदृशान्कुलरूपयोः ॥ इहैष्यतिकिमर्थंत्वांप्रद्युम्नोरुक्मिणीसुतः १९ त्रै लोक्येयस्यरूपेणसदृशोनकुलेनवा ॥ गुणैर्वाचारुसर्वांगिशौर्येणाप्यस्तिवाशुभे २० देवेषुदेवःसुश्रोणिदानवेषुचदानवः ॥ मानुषेष्वपिधर्मात्मामनुष्यः समहाबलः २१ यंसदादेविदृष्ट्वाहिस्रवंतिजघनानिहि ॥ आपीनानीवधेनूनांस्रोतांसिसरितामिव २२ नपूर्णचंद्रेणमुखंनयनेवाकुशेशयैः ॥ उत्सहेनो पमातुंहिमृगेंद्रेणाथवागतिम् २३ जगतःसारमुद्धृत्यपुत्रःसविहितःशुभे ॥ कृत्वानंगंवरेसांगंविष्णुनाप्रभविष्णुना २४ हृतेनशंबरोबाल्येयेनपापोनिब र्हितः ॥ मायाश्वसर्वाःसंप्राप्तानचशीलंविनाशितम् २५ यान्यान्गुणान्पृथुश्रोणिमनसाकल्पयिष्यसि ॥ एष्टव्यास्त्रिषुलोकेषुप्रद्युम्नेसर्वएवते २६ रुच्याव ह्निप्रतीकाशःक्षमयापृथिवीसमः ॥ तेजसासूर्यसदृशोगांभीर्येणह्रदोपमः ॥ प्रभावतीशुचिमुखींत्वितिहोवाचभामिनी २७ ॥ ॥ प्रभावत्युवाच ॥ वि ष्णुर्मानुषलोकस्थःश्रुतःसुबहुशोमया ॥ पितुःकथयतःसौम्येनारदस्यचधीमतः २८ शत्रुःकिलसदैत्यानांवर्जनीयःसदानघे ॥ कुलानिकिलदैत्यानांते नदग्धानिमानिनि २९ प्रदीप्तेनरथांगेनशार्ङ्गेणगदयातथा ॥ शाखानगरदेशेषुवसंतिकिलयेसुराः ३० इत्येतेदानवेंद्रेणसंदिश्यंतेहितंप्रति ॥ मनोरथो हिसर्वासांस्त्रीणामेवशुचिस्मिते ३१ भवेद्धिमेपतिकुलंश्रेष्ठंपितृकुलादिति ॥ यदिनामाभ्युपायःस्यात्तस्येहागमनंप्रति ३२ महाननुग्रहोमेस्यात्कुलं स्यात्पावितंचमे ॥ समर्थनांमेपृष्टात्वंप्रयच्छशुचिलापिनि ३३ प्रद्युम्नःस्याद्यथाभर्त्तासमेवृष्णिकुलोद्भवः ॥ अत्यंतवैरीदैत्यानामुद्वेजनकरोहरिः ३४ अ सुराणांस्त्रियोवृद्धाःकथयंत्योमयाश्रुताः ॥ प्रद्युम्नस्यतथाजन्मपुरस्तादपिमेश्रुतम् ३५

दानवेंद्रेणअसुराःसंदिश्यंतेतंबलवंतंप्रतिस्त्रीणांमनोरथःभवत्येव काममूढत्वात्वैरिकुलेऽप्यनुरागोभवतीतिभावः ॥ ३१ ॥ ३२ ॥ समर्थनांकार्यघटनोपायम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

१ समर्थानां वरिष्ठा त्वमिति लिखितपुस्तके तदा समर्थाः कार्यघटकाः इति टीका ।

३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ संस्तवःमदीयास्तुतिर्नविद्यते नटनिकटेये



यथा येतननिहतोबलवान्कालशंबरः ॥ हृदिमेवर्ततेनित्यंप्रद्युम्नःखलुसत्तमे ६५ हेतुःसनास्तिस्यात्तेनयथाममसमागमः ॥ दासीतवाहंसख्याहैंदूत्येत्वांच
विसर्जये ३७ पंडितासिवदोपायंममतस्यचसंगमे ॥ ततस्तांसांत्वयित्वासाप्रहसंतीदमब्रवीत् ३८ ॥ ॥ शुचिमुख्युवाच ॥ ॥ तत्रदूतीगमि
ष्यामितवाहंचारुहासिनि ॥ इमांभक्तिंतवोदारांप्रवक्ष्यामिशुचिस्मिते ३९ तथाचैवकरिष्यामियथैष्यातितवांतिकम् ॥ साक्षात्कामेनसुश्रोणिभविष्यति
सकामिनि ४० इतिमेभाषितंनित्यंस्मरेथाःशुचिलोचने ॥ कथाकुशलतांपित्रेकथयस्वायतेक्षणे ४१ ममत्वंतत्रमेदेविविहितंसम्यक्प्रपत्स्यसे ॥ इत्यु
क्त्वासातथाचक्रेयत्तत्सातामथाब्रवीत् ४२ दानवेंद्रश्चतांहंसींपप्रच्छांतःपुरेतदा ॥ प्रभावत्यासमाख्याताकथाकुशलतातव ४३ तत्त्वंशुचिमुखिब्रूहिकथां
योग्यतयावरे ॥ किंत्वयादृष्टमाश्चर्यंजगत्युत्तमपक्षिणि ४४ अदृष्टपूर्वमन्यैर्वायोग्यायोग्यमनिंदिते ॥ सोवाचवज्रनाभंतुहंसीवरनरोत्तम ४५ श्रू
यतामित्यथामंत्र्यदानवेंद्रंमहाद्युतिम् ॥ दृष्टामेशांडिलीनामसाध्वीदानवसत्तम ॥ आश्चर्यंकर्मकुर्वंतीमेरुपार्श्वेमनस्विनी ४६ सुमनाश्चैवकौशल्यासर्व
भूताहितेरता ॥ कथंचिद्वरशांडिल्याःशैलपुत्र्याःशुभासखी ४७ नटश्चैवमयादृष्टोमुनिदत्तवरःशुभः ॥ कामरूपीचभोज्यश्चत्रैलोक्येनित्यसंमतः ४८ कु
रून्यात्युत्तरान्वीरकालाम्रद्वीपमेवच ॥ भद्राश्वान्केतुमालांश्चद्वीपानन्यांस्तथानघ ४९ देवगंधर्वगेयानिनृत्यानिविविधानिच ॥ सवेत्तिदेवान्नृत्येनावि
स्मापयतिसर्वथा ॥ ॥ ५० ॥ वज्रनाभउवाच ॥ श्रुतमेतन्मयाहंसिनाचिरादिवविस्तरम् ॥ चारणानांकथयतांसिद्धानांचमहात्मनाम् ५१ कुतूहलंम
माप्यस्तिसर्वथापक्षिनंदिनि ॥ नटेदत्तवरेतस्मिन्संस्तवस्तुनविद्यते ५२ ॥ हंस्युवाच ॥ सप्तद्वीपान्विचरतिनटःसदितिजोत्तम ॥ गुणवंतंजनंश्रुत्वागु
णकार्यःससर्वथा ५३ तवचेच्छृणुयाद्वीरसद्भूतंगुणविस्तरम् ॥ नटंतदागतंविद्धिपुरंतवमहासुर ॥ ५४ ॥ वज्रनाभउवाच ॥ उपायःसृजतांहंसियेनेहस
नटःशुभे ॥ आगच्छेन्ममभद्रंतेविषयंपाक्षिनंदिनि ५५ तेहंसावज्रनाभेनकार्यहेतोर्विसर्जिताः ॥ देवेंद्रायाथकृष्णायशशंसुःसर्वमेवतत् ५६ अधोक्षजेनप्र
द्युम्नोनियुक्तस्तत्रकर्मणि ॥ प्रभावत्याश्चसंसर्गेवज्रनाभवधेतथा ५७ दैवींमायांसमाश्रित्यसंविधायहरिर्नटम् ॥ नटवेषेणभैमानांप्रेषयामासभारत ५८
प्रद्युम्नंनायकंकृत्वासांबंकृत्वाविदूषकम् ॥ पारिपार्श्वेगदंवीरमन्यान्भैमांस्तथैवच ५९ १३०

नश्रुतगुणोमामसौउपेयादित्यर्थःसंस्तवःपरिचयोवा ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७॥ नटंभद्राख्यस्यनटस्यवेषं भैमानांयादवानाम् ॥ ५८ ॥ विदूषकंउपहा
सकं पारिपार्श्वेइत्यनेनश्रुतिधरत्वंलक्ष्यं गदंश्रुतिधरंकृत्वेत्यर्थः ॥ ५९ ॥

वारमुख्यावेश्याःतत्तूर्यसदृशाःतदीयनृत्यगीतवादित्रसादृश्याः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ इतिश्रीमहाभारतेखि॰ हरिवंशेविष्णुपर्वणिटीकायांद्विनवतितमोऽध्यायः ९२

वारमुख्यानटीःकृत्वातत्तूर्यसदृशास्तदा ॥ तथैवभद्रंभद्रस्यसहायांश्वतथाविधान् ६० प्रद्युम्नविहितंरम्यंविमानंतेमहारथाः ॥ जग्मुरारुह्यकार्यार्थंदे
वानाममितौजसाम् ६१ एकैकस्यसमारूपेपुरुषाःपुरुषस्यते ॥ स्त्रीणांचसदृशाःसर्वेतेस्वरूपैर्नराधिपाः ६२ तेवज्रनगरस्याथशाखानगरमुत्तमम् ॥ ज
ग्मुर्दानवसंकीर्णंसुपुरंनामनामतः ६३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिवज्रनाभप्रद्युम्नोत्तरेप्रद्युम्नादिगमनेद्विनवतितमोऽध्यायः ९२ ॥
वैशंपायनउवाच ॥ ततःस्वपुरवासीनामसुराणांनराधिप ॥ ददावाज्ञांवज्रनाभोदीयतांगृहमुत्तमम् १ आतिथ्यंक्रियतामेषांबहुरत्नमुपायनम् ॥ वा
सांसिसविचित्राणिसुखायजनरंजनम् २ भर्तुराज्ञांसमालभ्यतथाचक्रुश्वसर्वशः ॥ पूर्वश्रुतोनटःप्राप्तःकौतूहलमजीजनत् ३ नटस्याथददुर्दैत्याःसत्कारं
परयामुदा ॥ पर्यायार्थंददुश्चापिरत्नानिसुबहून्यथ ४ ततःसननृतेतत्रवरदत्तोनटस्तथा ॥ स्वपुरेपुरवासीनांपरंहर्षंसमादधत् ५ रामायणंमहाका
व्यमुद्देश्यंनाटकीकृतम् ॥ जन्मविष्णोरमेयस्यराक्षसेंद्रवधेप्सया ६ लोमपादोदशरथऋष्यश्रृंगंमहामुनिम् ॥ शांतामप्यानयामासगणिकाभिःसहान
घ ७ रामलक्ष्मणशत्रुघ्नाभरतश्चैवभारत ॥ ऋष्यश्रृंगश्वशांताचतथारूपैर्नटैःकृताः ८ तत्कालजीविनोवृद्धादानवाविस्मयंगताः ॥ आचचक्षुश्वतेषांवैरू
पतुल्यत्वमच्युतम् ९ संस्काराभिनयौतेषांप्रस्तावानांचधारणम् ॥ दृष्ट्वासर्वेप्रवेशंचदानवाविस्मयंगताः १० तेरक्ताविस्मयंनेदुरसुराःपरयामुदा ॥ उ
त्थायोत्थायनाव्यस्यविषयेषुपुनःपुनः ११ ददुर्वस्त्राणितुष्टाश्चग्रैवेयवलयानिच ॥ हारान्मनोहरांश्चैवहेमवैडूर्यभूषितान् १२ पृथगर्थेषुदत्तेषुलोकेस्ते
तुष्टुवुर्नटाः ॥ असुरांश्वमुनींश्चैवगात्रैरभिजनैरपि १३ प्रेषितंवज्रनाभस्यशाखानगरवासिभिः ॥ नटस्यदिव्यरूपस्यनरेंद्रागमनंतदा १४ पुराश्रुतार्थो
दैत्येंद्रःप्रेषयामासभारत ॥ आनीयतांवज्रपुरंनटोसावितिहर्षितः १५ दानवेंद्रवचःश्रुत्वाशाखानगरवासिभिः ॥ नीतावज्रपुरंरम्यंनटवेषेणयादवाः १६
आवासश्वततोदत्तःसुकृतोविश्वकर्मणा ॥ एष्टव्यंयच्चतत्सर्वंदत्तंशतगुणोत्तरम् १७

ततःपूर्वश्रुतोभद्रनामानटएवात्रप्राप्तइतितेषांबुद्धिरभूदित्यर्थः ॥ १ ॥ २ ॥ ३ ॥ पर्यायार्थेवेषधारणार्थं ॥ ४ ॥ वासीनांदैर्घ्यमार्षम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अच्युतहेराज
न् ॥ ९ ॥ संस्कारः वेषधारणं अभिनयःक्रियादर्शनंप्रस्तावःक्रियाणप्रसंजनं प्रवेशंपात्राणांप्रथमदर्शनम् ॥ १० ॥ विस्मयंसविस्मयंसाश्चर्यम् ॥ ११ ॥ १२ ॥ १३ ॥
॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

१ सुपूरवासीनाम् इ० पा० ।

कालोत्सवंमहाकालरुद्रस्योत्सवंचक्रेनटद्वाराचमूवाटंसैनिकाह्वानंप्रेक्षणार्थम् ॥ १८ ॥ १९ ॥ छन्नेजालजवनिकापिहितस्थाने अतएवचक्षुर्दृश्येचक्षुःसंनिहितं दृश्यंनाट्यंयत्रतत्तथाभूते ॥ २० ॥ भैमाअपीतिसंधिरार्षः ॥ २१ ॥ घनंकांस्यतालादिकम् ससुषिरंसाछिद्रंवेणुप्रभृतिकं मुरजामर्दलाः आनकःपटहः तंत्रीतिरुद्रवीणादिकानामुपलक्षणम् एवमादीनातोद्यान्वाद्यविशेषान् ॥ २२ ॥ भैमस्त्रियःभैमैरानीतावारनार्यः ॥ २३ ॥ आगांधारमिति निषादर्षभगांधारषड्जमध्यमधैवताख्यान्सप्तस्वरान्व्याप्य ग्रामःकतिपय

अथकालोत्सवंचक्रेवज्रनाभोमहासुरः ॥ कारयामासरम्यंचचमूवाटंप्रहृष्टवान् १८ ततस्तान्परिविश्रांतान्प्रेक्षार्थायप्रचोदयत् ॥ दत्त्वारत्नानिभूरीणिवज्रनाभोमहाबलः १९ उपविष्टश्चतान्द्रष्टुंसहज्ञातिभिरात्मवान् ॥ छन्नेचांतःपुरंस्थाप्यचक्षुर्दृश्येनराधिपः २० भैमापिबद्धनेपथ्यानटवेषधरास्तथा ॥ कार्यार्थंभीमकर्माणोनृत्यार्थमुपचक्रमुः २१ ततोघनंससुषिरंमुरजानकभूषितम् ॥ तंत्रीस्वरगणैर्विद्धानातोद्यानन्ववादयन् २२ ततस्तुदेवगांधारंछालिक्यंश्रवणामृतम् ॥ भैमस्त्रियःप्रजगिरेमनःश्रोत्रसुखावहम् २३ आगांधारग्रामरागंगंगावतरणंतथा ॥ विद्धमासारितंरम्यंजगिरेस्वरसंपदा २४ लयतालसमंश्रुत्वागंगावतरणंशुभम् ॥ असुरांस्तोषयामासउत्थायोत्थायभारत ॥ २५ नांदिंचवादयामासप्रद्युम्नोगदएवच ॥ सांबश्चवीर्यसंपन्नःकार्यार्थेनटतांगतः २६ नांद्यंतेचतदाश्लोकंगंगावतरणाश्रितम् ॥ रौक्मिणेयस्तदोवाचसम्यक्स्वाभिनयान्वितम् २७ रंभाभिसारंकौबेरंनाटकंननृतुस्ततः ॥ शूरोरावणरूपेणरंभावेषंमनोवती २८ नलकूबरस्तुप्रद्युम्नःसांबस्तस्यविदूषकः ॥ कैलासोरूपितश्चापिमाययायदुनंदनैः २९ शापश्चदत्तःक्रुद्धेनरावणस्यदुरात्मनः नलकूबरेणचयथारंभाचाप्यथसांत्विता ३० एतत्प्रकरणंवीराननृतुर्यदुनंदनाः ॥ नारदस्यमुनेःकीर्तिंसर्वज्ञस्यमहात्मनः ३१ पादोद्धारेणनृत्येनतथैवाभिनयेनच ॥ तुष्टुवुर्दानवावीराभैमानाममितितेजसाम् ३२ तेददुर्वस्त्रमुख्यानिरत्नान्याभरणानिच ॥ हारांस्तरलविद्धांश्चवैडूर्यमणिभूषितान् ३३ विमानानिविचित्राणिरथांश्चाकाशगामिनः ॥ गजानाकाशगांश्चैवदिव्यनागकुलोद्भवान् ३४ चंदनानिचदिव्यानिशीतानिरसवंतिच ॥ गुरूण्यगुरुमुख्यानिगंधाढ्यानिचभारत ३५ चिंतामणीनुदारांश्चचिंतितेसर्वकामदान् ॥ प्रेक्षासुतासुबह्वीषुददंतोदानवास्तथा ३६

स्वरसंघः तेचत्रयः रागोवसंतादिः ॥ साकल्येनगांधारादयोयत्रतत्गंगावतरणंनामगीतविशेषविद्धंरागांतरमिश्रंआसारितंमूर्च्छितंजगिरेगीतंकृतवंत्यः ॥२४॥ २५ ॥ नांदिंनांदिकेश्वरमुखंचर्मकोशमयंवाद्यविशेषम् द्वादशपटहशब्दोनांदिरित्यन्ये नांदीमितिपाठेनांदींदेवद्विजादीनांशुभशंसिनींअष्टभिर्दशभिर्वाअवांतरवाक्ययुक्तांपूर्वरंगप्रधानांवाक्यावलींवादयामासपपाठेतिकेचित् ॥ २६ ॥ नांद्यंतेमंगलपद्यपाठांते ॥ २७ ॥ कूबरोनलकूबरःतत्संबंधिनंकौबेरं मनोवतीनामकाचिद्वारांगना ॥ २८ ॥ रूपितःकल्पितः ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ नृत्येनरावणशापजाह्लादप्रदर्शनेन ॥ ३२ ॥ तरलोवर्तुलोमणिः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ समागमेकालःकृतइतिसंबंधः ॥ ४० ॥ आत्मवतिआत्मभक्ते ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ संविधानंसंकेतम् ॥ ४५ ॥ कामंप्रद्युम्नं ग

धनरत्नैर्विरहिताःकृताःपुरुषसत्तम ॥ स्त्रियोदानवमुख्यानांतथैवचजनेश्वर ३७ ततोहंसीप्रभावत्याःसखीप्राहप्रभावतीम् ॥ गतास्मिद्वारकांरम्यांभैमगु
प्तामनिंदिते ३८ प्रद्युम्नश्चमयादृष्टोविविक्तेचारुलोचने ॥ अक्लिश्वकथितातस्यमयातवशुचिस्मिते ३९ तेनदृष्टेनकालश्चकृतःकमललोचने ॥ अथप्रदोष
समयेत्वयासहसमागमे ४० तदद्यरुचिरश्रोणितवप्रियसमागमः ॥ नह्यात्मवतिभाषंतिमिथ्याभैमकुलोद्भवाः ४१ ततःप्रभावतीहृष्टाहंसींतामिदमब्रवी
त् ॥ उषितासिमयावासेस्वप्तुमर्हसिसुंदरि ४२ त्वयाहंसहितावासेद्रष्टुमिच्छामिकेशविम् ॥ निःसाध्वसाभविष्यामित्वयासहविहंगमे ४३ हंसीतथेति
चोवाचसखींकमललोचनाम् ॥ आरुरोहचतद्धर्म्यंप्रभावत्याविहंगमा४४ विश्वकर्मकृतेतत्रहर्म्यपृष्ठेप्रभावती ॥ संविधानंचकाराशुप्रद्युम्नागमनक्षमम् ॥
४५ तस्मिन्कृतेसंविधानेकाममानयितुंययौ ॥ प्रभावतीमनुज्ञाप्यहंसीवायुसमागतौ ४६ नटवेषधरंकामंगत्वोवाचशुचिस्मिता ॥ अद्यभूतःसभगव
न्समयोवर्ततेनिशि ४७ तथेतिप्राहतांकामःसानिवृत्ताथपक्षिणी ॥ अभ्यागताचसाहंसीप्रभावतिमथाब्रवीत् ॥ अभ्येतिरौक्मिणेयोसावाश्वसायतलो
चने ४८ प्रद्युम्नोनीयमानंतुददर्शमाल्यमात्मवान् ॥ भ्रमरैरावृतंवीरःसुगंधमरिमर्दनः ४९ निलिल्येतत्रमाल्येतुभूत्वामधुकरस्तदा ॥ प्रभावत्यानी
यमानेविदितार्थःप्रतापवान् ५० प्रवेशितंचतन्माल्यंस्त्रीभिर्मधुकरायुतम् ॥ उपनीतंप्रभावत्यैस्त्रीभिस्तद्भ्रमरावृतम् ५१ अविदूरेचविन्यस्तंप्रभावत्याज
नाधिप ॥ भ्रमरास्तेययुःसौम्यसंध्याकालेह्युपस्थिते ५२ सभैमप्रवरोवीरस्तैःसहायैर्विहीनतः ॥ कर्णोत्पलेप्रभावत्यानिलिल्येशनकैरिव ५३ ततःप्र
भावतीहंसीमुवाचवदतांवरा ॥ उद्यतंपूर्णचंद्रंसासमीक्ष्यातिमनोहरम् ५४ सखिदह्यतिमेगात्राणिमुखंचपरिशुष्यति ॥ औत्सुक्यंहृदिचातीवकोयंव्याधिर
नैषधः ५५ दधद्विगुणमौत्सुक्यमसौपूर्णनिशाकरः ॥ नवोदितःशीतरश्मिःसख्यंहरतिचप्रियः ५६ नदृष्टपूर्वोहिमयाश्रुतमात्रेणकांक्षितः ॥ अहोधूमयतें
गानिस्त्रीस्वभावस्यधिक्खलु ५७ कल्पयामियथाबुद्ध्यायदिनाभ्येतिमेप्रियः ॥ कुमुद्वतीगतंमार्गंहागमिष्याम्यर्किंचन ॥ मदनाशीविषेणास्मिहाहाद
ष्टामनस्विनी ५८ शीतवीर्याःप्रकृत्यैवजगतोह्लादनाःसुखाः ॥ दहंतिममगात्राणिकिंनुचंद्रगभस्तयः ५९

तौगत्याम् ॥ ४६ ॥ ४७ ॥ आश्वसेतिच्छेदः ॥ ४८ ॥ ४९ ॥ प्रभावत्याप्रभावत्यर्थं नीयमानेमाल्ये ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ प्रियोपिसख्यं
हरतिअप्रियवद्भवतीत्यर्थः ॥ ५६ ॥ ५७ कुमुद्वतीगतंमार्गंजीवत्येवभर्तरियौवनेमरणम् ॥ ५८ ॥ ५९ ॥

---

१ अश्वायतलोचने इ० पा० तदा आश्विति छेदः० इ० टी०

॥ ६० ॥ कल्पयेएवकल्पयाम्येव आत्मनोमनसःस्थैर्यंकार्यमित्येतमर्थंकल्पयेनतुसिद्ध्यतीत्यर्थः ॥ ६१ ॥ ६२ ॥ ॥ इतिश्रीम० खि० वि० टीकायांत्रिनवतितमोऽ

प्रकृत्याशीतलोवायुर्नानापुष्परजोवहः ॥ दावाग्निसदृशोमेद्यदंदहीतिशुभांतनुम् ६० ततःसंकल्पयेएवस्थैर्यंकार्यमिवात्मनः॥ नावतिष्ठतिनिर्वीर्यंमनः
संकल्पधर्षितम् ६१ विमनस्कास्मिमुह्यामिवेपथुर्मेमहान्हृदि ॥ बभ्रमीतिचमेदृष्टिर्हाहायामिध्रुवंक्षयम् ६२ ॥ इतिश्रीम०खि०हरिवंशेविष्णुपर्व
णिवज्रनाभपुरेप्रद्युम्नगमनेत्रिनवतितमोऽध्यायः ॥ ९३ ॥ छ ॥ वैशंपायनउवाच ॥ आविष्टेयंमयाबालासर्वथेत्यवगम्यतु ॥ कार्ष्णिर्हृष्टेनमनसाहं
सीमिदमुवाचह १ दैत्येंद्रतनयांप्राप्तमवगच्छस्वमामिह ॥ षट्पदैःसहषट्पादोभूत्वामाल्येनिलीयहि २ विधेयोस्मिप्रभावत्यायथेष्टंमयिवर्तताम् ॥ इत्यु
क्त्वादर्शयामाससुरूपोरूपमात्मनः ३ तद्धर्म्यपृष्ठंप्रभयाद्योतितंतस्यधीमतः ॥ अभिभूताप्रभाचैवराजंश्चंद्रोद्भवाशुभा ४ प्रभावत्यास्तुतंदृष्ट्वाववृधेकामसा
गरः ॥ चंद्रस्येवोदयेप्राप्तेपर्वण्यांसरितांपतिः ५ सलज्जाधोमुखीकिंचित्किंचित्तिर्यगवेक्षिणी ॥ प्रभावतीतदातस्थौनिश्चलंकमलेक्षणा ६ करेणाधःप्रदेशे
तांचारुभूषणभूषिताम् ॥ स्पृष्ट्वोवाचवरारोहांरोमांचिततनुस्ततः ७ मनोरथशतैर्लब्धंकिंपूर्णेंदुसमप्रभम् ॥ अधोमुखंमुखंकृत्वानमांकिंचित्प्रभाषसे ८
प्रभोपमर्दंमाकार्षीर्वदनस्यवरानने ॥ साध्वसंत्यज्यतांभीरुदासःसाध्वनुगृह्यताम् ९ नकालमिवपश्यामिभीरुभीरुत्वमुत्सृज ॥ याचाम्येषोंजलिंकृत्वा
प्राप्तकालंनिबोधमे १० गांधर्वेणविवाहेनकुरुष्वानुग्रहंमम ॥ देशकालानुरूपेणरूपेणाप्रतिमासती ११ उपस्पृश्यततोभैमोमणिस्थंजातवेदसम् ॥ जुहा
वसमयेवीरःपुष्पैर्मंत्रानुदीरयन् १२ जग्राहाथकरंतस्यावराभरणभूषितम् ॥ चक्रेप्रदक्षिणंचैवतंमणिस्थंहुताशनम् १३ प्रजज्वालसतेजस्वीमानयन्नच्यु
तात्मजम् ॥ भगवान्जगतःसाक्षीशुभस्याथाशुभस्यच १४ उद्दिश्यदक्षिणांवीरोविप्राणांयदुनंदनः ॥ उवाचहंसींद्वारस्थांतिष्ठावांरक्षपक्षिणि १५ त
स्यांप्रणम्ययातायांकामस्तांचारुलोचनाम् ॥ ग्रहायदक्षिणेहस्तेनिनायशयनोत्तमम् १६ ऊरावेवोपवेश्यैनांसांत्वयित्वापुनःपुनः ॥ चुचुंबशनकैर्गंडंवा
सयन्मुखमारुतैः १७ ततोस्याश्चपपौवक्त्रपद्मंमधुकरोयथा ॥ आलिलिंगेचसुश्रोणींक्रमेणरतिकोविदः १८ अरामयद्रहस्येनांनचोद्वेजितवांस्तदा ॥
अपकृष्टंचरत्यर्थेरतिकार्यविशारदः ॥ उवाससतयासार्द्धंरमन्कृष्णसुतःप्रभुः १९ अरुणोदयकालेचययौयत्रनटालयम् ॥ अकामयाप्रभावत्याकथंचित्स
विसर्जितः २० तामेवमनसाकांतांकांतरूपांसमुद्वहन् ॥ तऊषुर्नटवेषेणकार्यार्थंभैमवंशजाः २१

ध्यायः ॥ ९३ ॥ छ ॥ आविष्टेयमिति ॥ १ ॥ अवगच्छस्वज्ञापय माल्येनिलीयप्राप्तंमाम् ॥ २ ॥ ३ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥
॥ १३ ॥ १४ ॥ आवांदंपती ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अपकृष्टंअर्थेचरतिनवोढत्वादितिभावः ॥ १९ ॥ २० ॥ २१ ॥

प्रतीक्षंतस्तदावाक्यमिंद्रकेशवयोस्तदा ॥ उद्योगंवज्रनाभस्यत्रैलोक्यविजयंप्रति २२ प्रतीक्षंतेमहात्मानोगुह्यसंरक्षणेरताः ॥ कश्यपस्यमुनेःसत्रंयाव त्तावन्नराधिप २३ देवासुराणांसर्वेषामविरोधोमहात्मनाम् ॥ त्रैलोक्यविजयार्थाययततांधर्मचारिणाम् २४ एवंकालंप्रतीक्षाणांवसतांतत्रधीमताम् ॥ संप्राप्तःप्रावृषोरम्यःसर्वभूतमनोहरः २५ अहर्निशंचवृत्तांतंप्रयच्छंतिमनोजवाः ॥ शक्रकेशवयोर्हंसाःकुमाराणांमहात्मनाम् २६ रेमेसहप्रभावत्याप्रद्युम्न श्चानुरूपया ॥ रात्रौरात्रौमहातेजाधार्तराष्ट्राभिरक्षितः २७ तैर्हिवज्रपुरंहंसैर्वसद्भिर्वासवाज्ञया ॥ व्याप्तंनृपनटांस्तांस्तुनविदुःकालमोहिताः २८ दिवा पिरौक्मिणेयस्तुप्रभावत्यानृपालये ॥ तिष्ठत्यंतर्हितोवीरोहंससंघाभिरक्षितः २९ माययास्यप्रतिच्छायादृश्यतेहिनटालये ॥ देहार्द्धेनतुकौरव्यसिषेवे सौप्रभावतीम् ३० सन्नतिंविनयंशीलंलीलांदाक्ष्यमथार्जवम् ॥ स्पृहयंत्यसुरादृष्ट्वाविद्धत्तांचमहात्मनाम् ३१ रूपंविलासंगंधंचमंजुभाषामथार्यताम् ॥ तासांयादवनारीणांस्पृहयंत्यसुरस्त्रियः ३२ वज्रनाभस्यतुभ्रातासुनाभोनामविश्रुतः ॥ दुहितृद्वयंचनृपतेस्तस्यरूपगुणान्वितम् ३३ एकाचंद्रवतीनाम्ना गुणवत्यथचापरा ॥ प्रभावत्यालयंतेतुव्रजतःखलुनित्यदा ३४ ददृशातेतुतेतत्ररतिसक्तांप्रभावतीम् ॥ परिपप्रच्छतुश्चैवविस्रंभोपगतांसतीम् ३५ सोवा चममविद्यास्तियाधीताकांक्षितंपतिम् ॥ रत्यर्थमानयत्याशुसौभाग्यंचप्रयच्छति ३६ देवंवादानवंवापिविवशंसद्यएवहि ॥ साहंरमामिकांतेनदेवपुत्रे णधीमता ३७ दृश्यतांमत्प्रभावेणप्रद्युम्नःसुप्रियोमम ॥ तेदृष्ट्वाविस्मयंयातेरूपयौवनसंपदं ३८ पुनरेवाब्रवीत्तेतुभगिन्यौचारुहासिनी ॥ प्रभावतीवरारो हाकालप्राप्तमिदंवचः ३९ देवाधर्मरतानित्यंदंभशीलामहासुराः ॥ देवास्तपसिरक्ताहिसुखेरक्तामहासुराः ४० देवाःसत्येरतानित्यमनृतेतुमहासुराः ॥ धर्म स्तपश्चसत्यंचयत्रयत्रजयोध्रुवम् ४१ देवपुत्रौवरयतांपतीविद्यांददाम्यहम् ॥ उचितौमत्प्रभावेणसद्यएवोपलप्स्यथः ४२ तांतथेत्यूचतुर्हृष्टेभगिन्यौ चारुलोचनाम् ॥ परिपप्रच्छभैमंचकार्यंतत्पतिमानिनी ४३ सपितृव्यंगदंवीरंसांबंचाथब्रवीत्तदा ॥ रूपान्वितौसुशीलौचशूरौचरणकर्माणि ४४ ॥ प्रभा वत्युवाच ॥ ॥ परितुष्टेनदत्तामेविद्यादुर्वाससापुरा ॥ परितुष्टेनसौभाग्यंसदाकन्यात्वमेवच ४५ देवदानवयक्षाणांयंध्यास्यसिसतेपतिः ॥ भविते तिमयाचैववीरोयमभिकांक्षितः ४६ गृह्णीतंतदिमांविद्यांसद्योवांप्रियसंगमः ॥ ततोजगृहतुर्हृष्टेतांविद्यांभगिनीमुखात् ४७ दध्यतुर्गदसांबौचविद्या मभ्यस्यतेशुभे ॥ तौप्रद्युम्नेनसहितौप्रविष्टौभैमनंदनौ ४८

कार्ष्णिनाप्रद्युम्नोक्तयामायया प्रच्छन्नंयथास्यात्तथाप्रविष्टौ ॥ ४९ ॥ ५० ॥ ५१ ॥ इ०वि०टी० चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ नभोनभस्यइति ॥ १ ॥ २ ॥ सदृशाःधाराः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ शिखीन्शिखिनःमयूरान् समादृतान्नृत्येएवादरयुक्तान् ॥ ७ ॥ ८ ॥ आशंकमानाःशाद्वलभूमौसारूप्यादनतिसादृश्यत्वात्संतिनसंती



प्रच्छन्नौमाययावीरौकार्ष्णिनामायिनानृप ॥ गांधर्वेणविवाहेनतावप्यरिबलार्दनौ ४९ पाणिंजगृहतुर्वीरौमंत्रपूर्वंसतांप्रियौ ॥ चंद्रवत्यागदःसांबोगुणवत्याचकैशविः ५० रेमिरेसुरकन्याभिर्वीरास्तेयदुपुंगवाः ॥ मार्गमाणास्त्वनुज्ञांतेशक्रकेशवयोस्तदा ५१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि० प्रभावतीपाणिग्रहणेचतुर्नवतितमोऽध्यायः ९४ ॥ छ ॥ वैशंपायनउवाच ॥ नभोनभस्येथनिरीक्ष्यमासिकामस्तदातोयदवृंदकीर्णाम् ॥ प्रभावतींचारुविशालनेत्रामुवाचपूर्णेंदुनिकाशवक्त्रः १ तवाननाभोवरगात्रिचंद्रोनदृश्यतेसुंदरिचारुबिंबः ॥ त्वत्केशपाशप्रतिमैर्निरुद्धोबलाहकैश्चारुनिरंतरोरु २ संदृश्यतेसुभ्रुतडिद्घनस्थात्वंहेमचार्वाभरणान्वितेव ॥ मुंचंतिधाराश्चघनानदंतस्त्वद्धारयष्टेःसदृशावरांगि ३ घनप्रदेशेषुबलाकपंक्त्यस्त्वद्दंतपंक्तिप्रतिमाविभांति ॥ निमग्नपद्मानिसरित्सुसुभ्रुनभांतितोयानिरयाकुलानि ४ अमीघनावायुवशोपयाताबलाकमालामलचारुदंताः ॥ अन्योन्यमभ्याहनितुंप्रवृत्तावनेषुनागाइवशुक्लदंताः ५ धनुस्त्रिवर्णंवरगात्रिपश्यकृतंतवापांगमिवाननस्थं ॥ विभूषयंतंगगनंघनाश्चप्रहर्षणंकामिजनस्यकांते ६ घनान्नदंतःप्रतिनर्दमानान्निरीक्ष्यसुश्रोणिशिखीन्प्रहृष्टान् ॥ समादृतानुद्धतपिच्छभारान्प्रियाभिरामानुपनृत्यमानान् ७ हर्म्येषुचान्येशशिपांडुरेषुराजंतिसुश्रोणिमयूरसंघाः ॥ मुहूर्तशोभामतिचारुरूपांदत्वापतंतोवलभीपुटेषु ८ प्रक्लिन्नपक्षास्तरुमस्तकेषुमुहूर्तचूडामणितांविधाय ॥ प्रयांतिभूमिंनवशाद्वलानामाशंकमानाधृतचारुदेहाः ९ प्रवातिधारांतरनिःसृतश्चसुखोनिलश्चंदनपंकशीतः ॥ कदंबसर्जार्जुनपुष्पभूतंसमावहन्गंधमनंगबंधुं १० रतिश्रमस्वेदविनाशहेतुर्नवोदभारानयनेचहेतुः ॥ नमारुतःस्याद्यदिचारुगात्रिनमेवकालोममवल्लभःस्यात् ११ एवंविधेषुप्रियसंगमेषुरतावसानेयदुपैतिवायुः ॥ रतिश्रमस्वेदहरःसुगंधीततःपरंकिंसुखमस्तिलोके १२ जलाप्लुतानीक्ष्यमहानदीनांसुगात्रिहंसाःपुलिनानिहृष्टाः ॥ गताःश्रमंमानसवासलुब्धाःससारसाःक्रौंचगणानुविद्धाः १३ नभांतिनद्योनसरांसिचैवहतत्विषीवायतचारुनेत्रे ॥ गतेषुहंसेष्वथसारसेषुरथांगतुल्याह्वयनेषुचैव १४ भोगैकदेशेनशुभंशयानंध्रुवंजगन्नाथमुपेंद्रमीशम् ॥ निद्राभ्युपेतावरकालतज्ज्ञाश्रियंप्रणम्योत्तरचारुरूपाम् १५ तिशंकमानाइत्यर्थः ॥ ९ ॥ पंकइवशीतःपुष्पेभ्योभूतं ॥१०॥ ११॥ १२ गताःश्रमंमानसेवासार्थंश्राम्यतोहंसायत्रत्वदृष्टाः तेनमानसाद्यप्यस्यस्थानस्याधिक्यमुक्तं ईक्ष्यवीक्ष्य ॥ १३ ॥ हतत्विषीवहतशोभेइवउपलक्षणमेतत् नद्यादीनांनद्योपिहतत्विषइत्यर्थःअथप्रावृषिइतोन्यत्रेतिशेषः १४ भोगैकदेशेनसर्पैकपार्श्वेनउपलक्षितं सप्तम्यर्थेवातृतीया निद्राश्रियंप्रणम्यईशंउपेता भगवतिनिद्रातिश्रीर्जागर्तीत्यर्थः वरकालतज्ज्ञाप्रावृषंहारिंचजानाना १५॥

॥ १६ ॥ ध्रुवंसर्वदास्रवंतिऋतवःसर्वेइतिशेषः ॥ १७ ॥ नागाइति भ्रमरैःपेपीयमानानवृक्षादीन्सुकुमारतरान्विषवक्त्राःस्पृशंतोपिग्लानिंनयंतीत्याश्चर्यमितिभावः ॥ १८ ॥ तवचारुमुखस्तनोरुकर्तृनभःवीक्ष्यअभिन्नवृष्टंकामोद्रेकात्स्विन्नमभूदितिशेषः पतिष्यंतमितिपुंस्त्वमार्षम् ॥ १९ ॥ बलाकानांमालेव आकुलंनिबिडंमाल्यदामेवतेन ॥ २० ॥ प्रवृत्तचक्रःचक्रंआज्ञा ॥ २१ ॥ पूतंनिर्मलम् अतएवपावित्रंशोधकं ॥ २२ ॥ प्लवंगमोभेकःगृहारंभासमर्थः वार्षिकेषुअष्टसुपक्षेषुगोष्ठेगोव्रजस्तद्वत्वृष्टयार्तःसन्विरौतिरावेदृष्टां

निद्रायमाणेभगवत्युपेंद्रेमेघांबराक्रांतनिशाकरोद्य ॥ पद्मामलाभःकमलायताक्षिकृष्णस्यवक्त्रानुकृतिंकरोति १६ कदंबनीपार्जुनकेतकानांस्रजोध्रुवंकृष्णमुपानयंति ॥ पुष्पाणिचान्यान्यृतवःसमस्ताःकृष्णात्प्रमादानभिकांक्षमाणाः १७ नागाश्चरंतोविषदिग्धवक्त्राःस्पृशंतिपुष्पाण्यपिपादपान्यान् ॥ पेपीयमानान्भ्रमरैर्जनानांकौतूहलंतेजनयंत्यतीव १८ तोयातिभारांबुदवृंदनद्धंनभःपतिष्यंतमिवाभिवीक्ष्य ॥ निपानगंभरिमाभिन्नवृष्टंमनोहरंचारुमुखस्तनोरु १९ बलाकमालाकुलमाल्यदाम्नानिरीक्ष्यरम्यंघनवृंदमेतत् ॥ सस्यानिभूमावभिवर्षमाणंजगद्धितार्थेविमलांगयष्टे २० जलावलंबांबुदवृंदकर्षीघनैर्घनान्योधयतीववायुः ॥ प्रवृत्तचक्रोनृपतिर्वनस्थान्गजान्गजैःस्वैरिववीर्यदृप्तान् २१ अभौममंभोविसृजंतिमेघाःपूतंपवित्रंपवनैःसुगंधि॥ हर्षावहंचातकबर्हिणानांवरांडजानांजलदप्रियाणाम् २२ प्लवंगमःषोडशपक्षशायीविरौतिगोष्ठःसहकामिनीभिः ॥ ऋचोद्विजातिःप्रियसत्यधर्मायथासुशिष्यैःपरिवार्यमाणः २३ गुणोमहांस्तोयदकालजोयंप्रबुद्धमेवस्वनभीषितायत् ॥ परिष्वजंतःपरिवर्द्धयंतिविनापिशय्यासमयंप्रियाणाम् २४ दोषोयमेकःसलिलागमस्यमांप्रत्युदारान्वयवर्णशीले ॥ नदृश्यतेयत्तववक्त्रतुल्योघनग्रहग्रस्ततनुःशशांकः २५ प्रदृश्यतेभीरुयदाशशांकोघनांतरस्थोजगतःप्रदीपः ॥ तदानुपश्यंतिजनाःप्रहृष्टाबंधुंप्रवासादिवसंन्निवृत्तम् २६ विलापसाक्षीप्रियहीनितानांसंदृश्यतेभीरुयदाशशांकः ॥ नेत्रोत्सवःप्रोषितकामुकानांदृष्ट्वैवकांतंभवतीत्यवैमि २७ नेत्रोत्सवःकांतसमागतानांदावाग्नितुल्यःप्रियहीनितानाम् ॥ तेनैवदेहेनवरांगनानांचंद्रोपितावत्प्रियविप्रियश्च २८ विनापिचंद्रेणपुरेपितुस्तेयतःप्रभाचंद्रगभस्तिगौरी ॥ गुणागुणांश्चंद्रमसोनवेद्मियतस्ततोहंप्रशशंसयिष्ये २९ अवापयोब्राह्मणराज्यमीड्योदुरापमन्यैःसुकृतैस्तपोभिः ॥ गायंतिविप्राःपवमानसंज्ञंसमागताःपर्वणिचाप्युदारम् ३०

त.ऋचोद्विजातिरिति ॥२३ ॥ प्रियाणांकाममितिशेषः ॥२४॥ मांप्रतिभातीतिशेषः ॥ २५ ॥ २६॥ इतरेषांनेत्रोत्सवोपिप्रोषितकामुकानांदृष्ट्वैवकांतंकस्यमुखस्यअंतंअवसानंभवतीति यद्वाप्रोषितकामुकानांकांतंदृष्ट्वैवनेत्रोत्सवोभवतीत्यवैमिनान्यथा ॥ २७ ॥ प्रियश्चासौविप्रियश्चेतिसमासः ॥ २८ ॥ विनापीत्यनेनवज्रपुरेगृहांतःचंद्रदर्शनंनासीदितिगम्यतेप्रशशंसयिष्येअतिशयेनकथयिष्ये स्वार्थेणिच् ॥ २९ ॥ पर्वणियज्ञे ॥ ३० ॥

यस्यबुधस्यपुरूरवाःसुतस्तस्यापितार्यश्चईड्यः स्तुत्यः प्राणाग्निः ब्रह्मणेप्राणाय जुष्टंनिर्वपामीतिमंत्रलिंगात् ब्रह्मौदनिकोग्निःगंधर्वलोकात्पुरूरवसाआनीयमानोमध्येमार्गेनिहितः
सन्नष्टः तमेवनष्टमग्निमन्विष्यन्तत्स्था नेशमीगर्भमश्वत्थमपश्यत् ततोश्वत्थादरणीआत्दृत्याग्नित्रयसाध्यंत्रेताकर्मप्रावर्तयतपुरूरवाइति तत्रौषधिवनस्पतीनामीशश्चंद्रोश्वत्थोत्पा



दनद्वारानष्टमग्निमजीजनदित्युच्यते भवात्मारुद्रेणशिरसाधृतत्वात्तस्यात्मेवात्माभवात्मा ॥ ३१ ॥ यश्चंद्रःउर्वशींपौत्रात्मनास्वयंवाचकमेकामितवान् अमृतेतिपीतस्याप्यापूरणं

पिताबुधस्योत्तरवीर्यकर्मापुरूरवायस्यसुतोनृदेवः ॥ प्राणाग्निरीड्योग्निमजीजनद्योनष्टंशमीगर्भभवंभवात्मा ३१ तथैवपश्चाच्चकमेमहात्मापुरोर्वशीम
प्सरसांवरिष्ठाम् ॥ पीतःपुरायोमृतसर्वदेहोमुनिप्रवीरैर्वरगात्रिघोरैः ३२ नृपःकुशाग्रैःपुनरेवयश्चधीमानतोग्निर्दिविपूज्यतेच ॥ आयुश्चवंशेनहुषश्चयस्ययो
देवराजत्वमवापवीरः ३३ देवातिदेवोभगवान्प्रसूतोवंशेहरिर्यत्रजगत्प्रणेता ॥ भैमःप्रवीरःसुरकार्यहेतोर्यःसुभ्रुदक्षस्यवृतःसुताभिः ३४ बभूवराजाथवसु
श्चयस्यवंशेमहात्माशशिवंशदीपः ॥ यश्चक्रवर्तित्वमवापवीरःस्वैःकर्मभिःशक्रसमप्रभावः ३५ यदुश्चराजाशशिवंशमुख्योयोवापमह्यामाधिराजभावम् ॥
भोजाःकुलेयस्यनराधिपस्यवीराःप्रसूताःसुरराजतुल्याः ३६नकूटकृद्यस्यनृपोस्तिवंशेननास्तिकोनैष्कृतिकोपिवाथ॥अश्रद्दधानोप्यथवाकदर्यःशौर्येणवा
वारिरुहाक्षिहीनः ३७ वंशेवधूस्त्वंकमलायताक्षिश्लाघ्यागुणानामतिपात्रभूता ॥ कुरुप्रणामंशिखराग्रदंतितस्यत्वमीशस्यसतांप्रियस्य ३८ नारायणाया
त्मभवायनायलोकायनायत्रिदशायनाय ॥ खगेंद्रकेतोःपुरुषोत्तमायकुरुप्रणामंश्वशुरायदेवि ३९ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिप्रद्युम्नभा
षणेपंचनवतितमोऽध्यायः ९५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ सत्रावसानेश्वमुनेकश्यपस्यातितेजसः ॥ जग्मुर्देवासुराःस्वानिस्थानान्यमितवि
क्रमाः १ वज्रनाभोपिनिर्वृत्तेसत्रेकश्यपमभ्यगात् ॥ त्रैलोक्यविजयाकांक्षीतमुवाचाथकश्यपः २ वज्रनाभनिबोधत्वंश्रोतव्यंयदिचेन्मम ॥ वसवज्रपुरे
पुत्रस्वजनेनसमावृतः ३ तपसाभ्याधिकःशक्रःशक्तश्चैवस्वभावतः ॥ ब्रम्हण्यश्चकृतज्ञश्चज्येष्ठःश्रेष्ठतमोगुणैः ४ राजाकृत्स्नस्यजगतःपात्रभूतःसतां
गतिः ॥ संप्राप्तोलोकराज्यंससर्वभूतहितेरतः ५

सूचितं घोरैरितिदेहस्यैवपानंनतुचकोरवदित्युक्तं ॥ ३२ ॥ यस्यवंशेआयुर्नृपःकुशाग्रैरेवकुशाग्रोपलक्षितक्रतुपरंपरयादिविगतोग्निः अग्निसायुज्यंप्राप्तः पूज्यतेचेतिपूर्वार्द्धार्थः १३४
यस्यवंशेनहुषश्चादिविगतः योदेवराजत्वमवापेत्यन्वयः ॥ ३३ ॥ यश्चंद्रः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ शिखराग्रदंतिशिखरंलोहितमणिविशेषः ॥ ३८ ॥ ३९ ॥ इ
तिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिपंचनवतितमोऽध्यायः ॥ ९५ ॥ सत्रावसानेइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

विहन्यसेस्त्रियसे ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

नैवशक्यस्त्वयाजेतुंवज्रनाभविहन्यसे ॥ अहिपदाव्युक्रमन्वैनचिराद्विनशिष्यासि ६ वज्रनाभश्वतद्वाक्यंनाभिनंदतिभारत ॥ कालपाशपरीतांगोमर्तु
कामइवौषधं ७ अभिवाद्यसदुर्बद्धिःकश्यपंलोकभावनं ॥ त्रैलोक्यविजयारंभेमतिंचक्रेदुरासदः ८ ज्ञातियोधान्समानीयमित्राणिसुबहूनिच ॥ प्रतस्थेस्व
र्गमेवाग्रेविजिगीषन्विशांपते ९ एतस्मिन्नंतरेदेवौकृष्णेंद्रौचमहाबलौ ॥ प्रेषयामासतुर्हंसान्वज्रनाभवधंप्रति १० समागतास्तुतच्छ्रुत्वायदुमुख्यामहाबलाः
मंत्रयित्वामहात्मानश्चिंतामापेदिरेतथा ११ वज्रनाभोद्यहंतव्यः प्रद्युम्नेनेत्यसंशयम् ॥ तयोर्दुहितरोभार्याभक्त्याताः सर्वभावनाः १२ सर्वाःसगर्भास्ता
श्चैवकिंनुकार्यमनंतरम् ॥ प्राप्तःप्रसवकालश्वतासांनातिचिरादिव १३ संमंत्रयित्वैतदर्थंहंसानूचुर्महाबलाः ॥ आख्येयमर्थवत्कृत्स्नंशक्रकेशवयोस्तदा १४
हंसैर्गत्वातदाख्यातंदेवयोस्तद्यथातथम् ॥ ताभ्यांहंसास्तुसंदिष्टानभेतव्यमितिप्रभो १५ उत्पत्स्यंतिगुणैःश्लाघ्याःपुत्रावःकामरूपिणः ॥ गर्भस्थाःसर्व
वेदांश्चसांगान्वेत्स्यंत्यनिंदिताः १६ तथाचानागतंसर्वमस्त्राणिविविधानिच ॥ सद्यएवयुवानश्चभविष्यंतिसुपंडिताः १७ एवमुक्त्वागताहंसाःपुनर्वज्रपुरं
विभो ॥ शशंसुश्चैवभैमानांशक्रकेशवभाषितं १८ प्रभावतीतदापुत्रंसुषुवेसदृशंपितुः ॥ सद्योयौवनसंप्राप्तंसर्वज्ञत्वंचभारत १९ मासमात्रेणसुषुवेदेवी
चंद्रवतीनृप ॥ चंद्रप्रभमितिख्यातंतनयंसदृशंपितुः २० सद्यश्चयौवनंप्राप्तंसर्वज्ञत्वंचभारत ॥ गुणवत्यपिपुत्रंचगुणवंतमनिंदिता २१ युवानावथसद्यस्तौ
सर्वशास्त्रार्थकोविदौ ॥ इंद्रोपेंद्रप्रसादेनसंवृत्तौयुद्धवर्धनौ २२ हर्म्यपृष्ठेवर्द्धमानादृष्टास्तेयदुनंदनाः ॥ इंद्रोपेंद्रेच्छयावीरनान्यथेत्यवधार्यताम् २३ निवेदि
ताश्चसंभ्रांतैर्दैत्यैराकाशरक्षिभिः ॥ वज्रनाभायवीरायत्रिविष्टपजयैषिणे २४ वधायसर्वेगृह्यंतांममैतेगृहधर्षकाः ॥ इत्युवाचासुरपतिर्वज्रनाभोमहासुरः
२५ ततःसैन्यंसमाज्ञप्तमसुरेंद्रेणधीमता ॥ आवारयामासदिशःसर्वाःकुरुकुलोद्वह २६ गृह्यंतामाशुवध्यंतामितिवाचस्ततस्ततः ॥ उच्चेरुरसुरेंद्रस्यशासना
द्रिशासिनः २७ तच्छ्रुत्वाव्यथितास्तेषांमातरःपुत्रवत्सलाः ॥ रुरुदुस्तारुदंत्यश्चप्रद्युम्नःप्रहसन्नब्रवीत् २८ माभैष्टजीवमानेषुस्थितेष्वस्मासुसर्वथा ॥
किंनोदैत्याःकरिष्यंतिसर्वथाभद्रमस्तुवः २९ प्रभावतीमथोवाचप्रद्युम्नोविह्वलांस्थिताम् ॥ पितातवगदापाणिःपितृव्याश्वस्थितास्तव ३० भ्रातरश्चैवतेदे
विज्ञातयश्चतथापरे ॥ एतेपूज्याश्चमान्याश्चतवार्थेखलुसर्वथा ३१ भगिन्यौपृच्छभद्रंतेकालोयंखलुदारुणः ॥ मरणंसहमानानांयुद्ध्यतांविजयोध्रुवम् ३२
दानवेंद्रादयोह्येतेयोत्स्यंतेस्मद्वधैषिणः ॥ किमत्रकार्यमस्माभिःसर्वैश्चक्रांतरस्थितैः ॥ ३३ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ चक्रांतरस्थितैःत्वदाज्ञावर्तिभिः ॥ ३३ ॥

प्रभावतीरुदंतीतुप्रद्युम्नमिदमब्रवीत् ॥ शिरस्यंजलिमाधायजानुभ्यांपतिताक्षितौ ३४ गृहाणशस्त्रमात्मानंरक्षशत्रुनिबर्हण ॥ जीवन्पुत्रांश्वदारांश्वद्रष्टासि
१३९ यदुनंदन ३५ आर्यांनृवरवैदर्भीमनिरुद्धंचमानद ॥ स्मृत्वैतन्मोक्षयात्मानंव्यसनादरिमर्दन ३६ दुर्वाससावरोदत्तोमुनिनामममधीमता ॥ वैधव्यरहिता अ०१६
हृष्टाजीवपुत्राभविष्यसि ३७ एषमेहृदयाश्वासोभवितानतदन्यथा ॥ सूर्याग्नितेजसोवाक्यंमुनेरिंद्रानुजात्मज ३८ इत्युक्त्वाथासिमादायसूपस्पृष्टामन
स्विनी ॥ प्रददौरौक्मिणेयायजयस्वेतिवरंवरा ३९ सतंजग्राहधर्मात्माप्रहृष्टेनांतरात्मना ॥ प्रणम्यशिरसादत्तंप्रिययाभक्तियुक्तया ४० चंद्रवत्यपिनि
स्त्रिंशंगदायप्रददौमुदा ॥ तदागुणवतीचैवसांबायासिंमहात्मने ४१ हंसकेतुमथोवाचप्रद्युम्नः प्रणतंप्रभुः ॥ इहैवसांबसहितोयुध्यस्वसहयादवैः ४२
आकाशेदिक्षुसर्वासुयोत्स्याम्यहमरिंदम ॥ इत्युक्त्वाथरथंचक्रेमायथामायिनांवरः ४३ सहस्त्रशिरसंनागंकृत्वासारथिमात्मवान् ॥ अनंतभोगंकौरव्यसर्वना
गोत्तमोत्तमम् ४४ सतेनरथमुख्येनहर्षयन्वैप्रभावतीम् ॥ चचारासुरसैन्येषुतृणेष्विवहुताशनः ४५ शरैराशीविषप्रख्यैरर्द्धचंद्रानुकांतिभिः ॥ भेदनैर्गाध
नैश्चैवततर्ददितिसंभवान् ४६ असुराश्वरणेमत्ताःकार्ष्णिशस्त्रैरितस्ततः ॥ जग्मुःकमलपत्राक्षंपरंनिश्चयमास्थिताः ४७ चिच्छेदबाहून्केषांचित्केयूरवलयो
ज्ज्वलान् ॥ सकुंडलानिकेषांचिच्छिरांस्यपिचचिच्छिदे ४८ क्षुरच्छिन्नैःशिरोभिश्वकायैश्वशकलैरपि ॥ असुराणांमहीकीर्णाप्रद्युम्नेनातितेजसा ४९
देवेश्वरोदेवगणैःसहितःसमितिंजयः ॥ ददर्शमुदितोयुद्धंभैमानांदितिजैःसह ५० येगदंचैवसांबंचदैत्याःसमभिदुद्रुवुः ॥ तेययुर्निधनंसर्वेयादांसीवमहोद
धौ ५१ विषमंतुतदायुद्धंदृष्ट्वादेवपतिर्हरिः ॥ गदायप्रेषयामासस्वंरथंहरिवाहनः ५२ दिदेशमातलिसुतंयंतारंचसुवर्चसम् ॥ सांबायैरावणंनागंप्रेषया
मासचेश्वरः ५३ जयंतंरौक्मिणेयस्यसहायमददद्विभुः ॥ ऐरावणमधिष्ठातुंवप्ररंसनियुक्तवान् ५४ देवपुत्राद्विजौवीरावप्रमेयपराक्रमौ ॥ अनुज्ञाप्यसु
राध्यक्षंब्रह्माणंलोकभावनम् ५५ तंमातलिसुतंचैवगजमैरावणंतदा ॥ देवःप्रेषितवाञ्छक्रोविधिज्ञोवरकर्मसु ५६ क्षीणमस्यतपोवध्योयदूनामेषदुर्मतिः
प्रविशंतितुभूतानिसर्वत्रतुयथेप्सितम् ५७ प्रद्युम्नश्चजयंतश्चप्राप्तौहर्म्यंमहाबलौ ॥ असुराञ्छरजालैर्वैविक्राम्यंतौप्रणश्यतुः ५८ गदंकार्ष्णिस्तदोवाचदु
र्वार्यंरणदुर्जयः ॥ उपेंद्रानुजशक्रेणरथोयंप्रेषितस्तव ५९

क्षमाग्रैःशरैः शरीरप्रवेशेनविदारणैःगाधनैःस्थूलाग्रैः अनुक्रांतिभिर्बाणैर्दृढप्रहारमात्रैःततर्दपीडयामास ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ हरिवाहनइंद्रः ॥ ५२
॥ ५३ ॥ प्रवरंइंद्रस्यसखायंब्राह्मणं ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

हरियुङ्मातलिसुतोयंताचायंमहाबलः ॥ प्रवराधिष्ठितश्चायंसांबस्यैरावणोगजः ६० अथोपहारोरुद्रस्यद्वारकायांमहाबलः ॥ श्वएष्यतिहृषीकेश स्तस्मिन्वृत्तेच्युतानुज ६१ तस्याज्ञयावधिष्यामोवज्रनाभंसबांधवम् ॥ अभ्युत्थानकृतंपापंत्रिविष्टपजयंप्रति ६२ करिष्यामिविधानंचनैषशक्रंसु तान्वितम् ॥ विजेष्यत्यप्रमादस्तुकर्तव्यइतिमेमतिः ६३ कलत्ररक्षणंकार्यंसर्वोपायैर्नरैर्बुधैः ॥ कलत्रधर्षणंलोकेमरणादतिरिच्यते ६४ एवंसंदिश्यभै मःसगदःसांबोमहाबलः ॥ प्रद्युम्नकोटचःससृजेमाययादिव्यरूपया ६५ तमश्वनाशयामासदैत्यस्पृष्टंदुरासदम् ॥ जहृषेदेवराजश्चतंदृष्ट्वारिपुमर्दनम् ६६ द दृशुःसर्वभूतानिकार्ष्णिंसर्वेषुशत्रुषु ॥ अंतरात्मनिवर्तंतंक्षेत्रज्ञमिवतंविदुः ६७ एवंव्यतीतारजनीरौक्मिणेयस्ययुध्यतः ॥ असुराणांत्रिभागश्चनिहतो चातितेजसा ६८ यावद्वियोधयामासकार्ष्णिर्दैत्यान्रणाजिरे ॥ संध्योपास्ताजयंतेनतावद्विष्णुपदीजले ६९ अयोधयज्जयंतश्चयावद्दैत्यान्महाबलः ॥ ता वदाकाशगंगायांभैमःसंध्यामुपास्तवान् ७० ॥ ॥ इतिश्रीम०खिलेषुहरिवंशेविष्णुपर्वणिप्रद्युम्नदैत्ययुद्धेषण्णवतितमोऽध्यायः ९६ ॥ छ ॥ वैशं पायनउवाच ॥ जगतश्चक्षुषिततोमुहूर्ताभ्युदितेरवौ ॥ प्रादुरासीद्धरिर्देवस्तार्क्ष्येणोरगशत्रुणा १ हंसवायुमनोभिश्चसुशीघ्रतरगःखगः ॥ तस्थौवियति शक्रस्यसमीपेकुरुनंदन २ समेत्यचयथान्यायंकृष्णोवासवसन्निधौ ॥ पांचजन्यंहरिर्दध्मौदैत्यानांभयवर्द्धनम् ३ तंश्रुत्वाभ्यागतस्तत्रप्रद्युम्नःपरवीरहा वज्रनाभंजहीत्युक्तःकेशवेनत्वरेतिच ४ तार्क्ष्यमारुह्यगच्छेतिपुनरेवप्रणोदितः ॥ चकारसतथावीरःप्रणिपत्यसुरोत्तमौ ५ समनोरंहसावीरस्तार्क्ष्येणाशुययौ नृप ॥ अभ्यासंवज्रनाभस्यमहाद्वंद्वस्यभारत ६ ततस्तार्क्ष्यगतोवीरस्ततर्दरणमूर्द्धनि ॥ वज्रनाभंस्थिरोभूत्वासर्वास्त्रविदर्निंदितः ७ तेनतार्क्ष्यगतेनैवग दयाकृष्णसूनुना ॥ उरस्यभ्याहतोवीरोवज्रनाभोमहात्मना ८ सतेनाभिहतोवीरोदैत्योमोहवशंगतः ॥ चक्षारचबहुशंरक्तंबभ्रामैवगतासुवत् ९ आश्वसे त्यथतंकार्ष्णिरुवाचरणदुर्जयः ॥ लब्धसंज्ञःसवीरस्तुप्रद्युम्नमिदमब्रवीत् १० साधुयादववीर्येणश्लाघ्योममरिपुर्भवान् ॥ प्रतिप्रहारकालोयंस्थिरोभवम हाबल ११ एवमुक्त्वामहानादंमुक्त्वामेघरवोपमम् ॥ गदांमुमोचवेगेनसघंटांबहुकंटकाम् १२ तयाललाटेभिहतःप्रद्युम्नोगदयानृप ॥ उद्वमन्रुधिरं भूरिमुमोहयदुनंदनः १३ तंदृष्ट्वाभगवान्कृष्णःपांचजन्यंजलोद्भवम् ॥ दध्मावाश्वासनकरंपुत्रस्यरिपुनाशनः १४

॥ १५ ॥ तस्यप्रद्युम्नस्य ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ लब्धस्यशत्रुपराजयस्यप्रशमनंदुःखापनोदनम् ॥ २३ ॥ २४ ॥ विजयस्यइंद्रपौत्रस्य ॥ २५ ॥ प्रद्युम्नस्यप्रद्युम्नपुत्रस्यरौक्मिणेयोत्रसांबस्तत्सुतस्यपरिशेषाच्चंद्रप्रभस्यगदपुत्रस्य ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ऋषिवंशेऋषिसंघसमीपेअभिषिक्ताइतिपूर्व



तंपांचजन्यशब्देनप्रयाश्वस्तंमहाबलम् ॥ दृष्ट्वाप्रमुदितालोकाविशेषेणेंद्रकेशवौ १५ तस्यचक्रंकरेयातंकृष्णच्छंदेनभारत ॥ क्षुरनेमिसहस्रारंदैत्यसंघकुलांतकम् १६ तन्मुमोचाच्युतसुतस्तस्यनाशायभारत ॥ नमस्कृत्वासुरेंद्रायकृष्णायचमहात्मने १७ वज्रनाभस्यतत्कायादुच्चकर्तशिरस्तदा ॥ नारायणसुतोन्मुक्तंदैत्यानामनुपश्यताम् १८ गदःसुनाभमवधीद्यतमानंरणाजिरे ॥ हर्म्यपृष्ठेजिघांसंतंरणदृप्तंभयानकम् १९ सांबःसमरमध्यस्थानसुरानरिमर्दनः ॥ निनायनिशितैर्बाणैःप्रेताधिपपरिग्रहम् २० निकुंभोपिहतेवीरेवज्रनाभेमहासुरे ॥ जगामषट्पुरंवीरोनारायणभयार्दितः २१ निबर्हितेदेवरिपौवज्रनाभेमहासुरे ॥ अवतीर्णौमहात्मानौहरीवज्रपुरंतदा २२ लब्धप्रशमनंचैवचक्रतुःसुरसत्तमौ ॥ सांत्वयामासतुश्चैवबालवृद्धंभयार्दितम् २३ इंद्रोपेंद्रौमहात्मानौमंत्रयित्वामहाबलौ ॥ आयत्यांचतदात्वेचबृहस्पतिमतानुगौ २४ वज्रनाभस्यतद्राज्यंचतुर्द्धाचक्रतुर्नृप । विजयस्यचतुर्भागंजयंततनयस्यवै २५ प्रद्युम्नस्यचतुर्भागंरौक्मिणेयसुतस्यच ॥ चंद्रप्रभस्यददतुश्चतुर्भागंजनेश्वर २६ कोटयश्चतस्रोग्रामाणामधिकारस्ताविशांपते ॥ शाखापुरसहस्रंचस्फीतंवज्रपुरोपमम् ॥ चतुर्द्धाचक्रतुस्तत्रसंहृष्टौशक्रकेशवौ २७ कंबलाजिनवासांसिरत्नानिविविधानिच ॥ चतुर्द्धाचक्रतुर्वीरौवीरवासवकेशवौ २८ ततोभिषिक्तास्तेवीराराजानोवासवाज्ञया ॥ देवदुंदुभिवाद्येननृपविष्णुपदीजलैः २९ स्वयंशक्रेणदेवेनकेशवेनचधीमता ॥ ऋषिवंशेमहात्मानःशक्रमाधवनंदनाः ३० विजयस्यप्रसिद्धैवगतिर्वियतिधीमतः ॥ मातृजेनगुणेनापिमाधवानांमहात्मनाम् ३१ अभिषिच्यजयंतंतुवासवोभगवान्ब्रवीत् ॥ त्वयैतेवीरसंरक्ष्याराजानःसमितिंजयाः ३२ ममवंशकरोऽत्रैकःकेशवस्यत्रयोऽनघ ॥ अवध्याःसर्वभूतानांभविष्यंतिममाज्ञया ३३ गमनागमनंचैवदिविसिद्धंभविष्यति ॥ त्रिविष्टपंद्वारकांचरम्यांभैमाभिरक्षिताम् ३४ दिशागजसुतान्नागान्हयांश्चोच्चैःश्रवोन्वयान् ॥ इच्छयैषांप्रयच्छस्वरथांस्त्वष्टृकृतानपि ३५ गजावैरावणसुतौशत्रुंजयारिपुंजयौ ॥ प्रयच्छाकाशगौवीरौसांबस्यचगदस्यच ३६ आकाशेनपुरींयातुंद्वारकांभैमरक्षिताम् ॥ आयातौचसुतौद्रष्टुंयथेष्टंभैमनंदनौ ३७ इतिसंदिश्यभगवान्देवराजःपुरंदरः ॥ जगामभगवान्स्वर्गंद्वारकामपिकेशवः ३८



स्थेनान्वयः ॥ ३० ॥ गतिःविभज्यराज्यंग्राह्यमित्यर्थः मातृजेनगुणेनअसुरदौहित्रत्वेनमाधवानांपुत्रत्रयंममचपुत्रइत्येवंचतुर्धाविभागः ॥ ३१ ॥ ब्रवीत् अब्रवीत् ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ प्रयच्छस्वेतिजयंतंप्रतिउक्तिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ प्रद्युम्नोत्तरंप्रद्युम्नस्यउत्कर्षः ॥ ४३ ॥ ॥ ४४ ॥ इतिश्रीभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांसप्तनवतितमोऽध्यायः ॥ ९७ ॥ दद

षण्मासानुषितस्तत्रगदःप्रद्युम्नएवच ॥ सांबश्चद्वारकांयातारूढेराज्येमहाबलाः ३९ अद्यापितानिराज्यानिमेरोःपार्श्वेतथोत्तरे ॥ तिष्ठंतिचजगद्यावत्स्था स्यंत्यमरसंनिभ ४० निवृत्तेमौशलेयुद्धेस्वर्गंयातेषुवृष्णिषु ॥ गदप्रद्युम्नसांबास्तेगतावज्रपुरंविभो ४१ ततःप्रोष्यपुनर्यांतिस्वर्गंस्वैःकर्मभिःशुभैः ॥ प्रसा देनचकृष्णस्यलोककर्तुर्जनेश्वर ४२ प्रद्युम्नोत्तरमेतत्तेनृदेवकथितंमया ॥ धन्यंयशस्यमायुष्यंशत्रुनाशनमेवच ४३ पुत्रपौत्राविवर्द्धंतेआरोग्यधनसंपदः ॥ य शोविपुलमाप्नोतिद्वैपायनवचोयथा ४४ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिवज्रनाभवधोनामसप्तनवतितमोऽध्यायः ९७ ॥ ७ ॥ वैशंपायन उवाच ॥ ददर्शाथपुरींकृष्णोद्वारकांगरुडेस्थितः ॥ देवसद्मप्रतीकाशांसमंतात्प्रतिनादिताम् १ मणिपर्वतयंत्राणितथाक्रीडागृहाणिच ॥ उद्यानवनमुख्या निवलभीचत्वराणिच २ संप्राप्तेतुतदाकृष्णेपुरींदेवकिनंदने ॥ विश्वकर्माणमाहूयदेवराजोब्रवीदिदम् ३ प्रियमिच्छसिचेत्कर्तुंमह्यंशिल्पमतांवर ॥ कृष्णप्रियार्थंभूयस्त्वंप्रकुरुष्वमनोहराम् ४ उद्यानशतसंबाधांद्वारकांस्वर्गसंमिताम् ॥ कुरुष्वविबुधश्रेष्ठयथाममपुरीतथा ५ यत्किंचित्त्रिषुलोकेषुरत्नभू तंप्रपश्यसि ॥ तेनसंयुज्यतांक्षिप्रंपुरीद्वारवतीत्वया ६ कृष्णोहिसुरकार्येषुसर्वेषुसततोत्थितः ॥ संग्रामान्घोररूपांश्चविगाहतिमहाबलः ॥ तामिंद्रवच नाद्गत्वाविश्वकर्मापुरींततः ७ अलंचक्रेसमंताद्वैयथेंद्रस्यामरावती ॥ तांददर्शदशार्हाणामीश्वरःपक्षिवाहनः ॥ विश्वकर्मकृतैर्दिव्यैरभिप्रायैरलंकृताम् ॥ ८ तांतदाद्वारकांदृष्ट्वाप्रभुर्नारायणोविभुः ॥ हृष्टःसर्वार्थसंपन्नःप्रवेष्टुमुपचक्रमे ९ सोपश्यद्वृक्षखंडांश्चरम्यान्दृष्टिमनोहरान् ॥ द्वारकांप्रतिदाशार्हश्चित्रिता न्विश्वकर्मणा १० पद्मखंडाकुलाभिश्चहंससेवितवारिभिः ॥ गंगासिंधुप्रकाशाभिःपरिखाभिर्वृतांपुरीम् ११ प्राकारेणार्कवर्णेनशातकौंभेनराजता ॥ च यमूर्ध्निनिविष्टेनद्यांयथैवाभ्रमालया १२ काननैर्नंदनप्रख्यैस्तथाचैत्ररथोपमैः ॥ बभौचारुपरिक्षिप्ताद्वारकाद्यौरिवांबुदैः १३ बभौरैवतकःशैलोरम्यसा नुगुहाजिरः ॥ पूर्वस्यांदिशिलक्ष्मीवान्मणिकांचनतोरणः १४ दक्षिणस्यांलताविष्टःपंचवर्णोविराजते ॥ इंद्रकेतुप्रतीकाशःपश्चिमायांतथाक्षयः १५ उ त्तरांदिशमत्यर्थंविभूषयतिवेणुमान् ॥ मंदराद्रिप्रतीकाशःपांडुरःपार्थिवर्षभ १६ चित्रकंपंचवर्णंचपांचजन्यंवनंमहत् ॥ सर्वर्तुकवनंचैवभातिरैवतकंप्रति १७ लतावेष्टितपर्यंतंमेरुप्रभवनंमहत् ॥ भातिभानुवनंचैवपुष्पकंचमहद्वनम् १८

शैति १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ खंडान्समूहान् ॥ १० ॥ ११ ॥ चयमूर्ध्निअट्टालोपरि ॥ १२ ॥ १३ ॥ मणिकांचनमयानितोरणानिब हिर्द्वाराणियस्य ॥ १४ ॥ १५ ॥ १६ ॥ चित्रकादीनिचतुर्दशवनानि ॥ १७ ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ महानदोमंदाकिनोपंचाशाद्भिर्विश्वसृजांसहस्रसंवत्सरेसत्रेपंचपंचाशतास्त्रिवृतःसंवत्सराःपंचपंचाशतःपंचदशाःपंचपंचाशतःसप्तदशाःपंचपं
चाशतएकविंशतिसंख्याकाभिःपंचाशद्भिःसहस्रसंपत्तिभिरुक्तातावत्संख्यैःतत्फलभूतैरुद्यानादिभिरितियावत्भावयंतोहर्षयंतोजनानितिशेषः ॥ २३ ॥ २४ ॥ २५ ॥ किंकिणो
किनांक्षुद्रघंटिकावतांनर्तकानाम् ॥ २६ ॥ द्वादशायतांद्वादशयोजनदोर्घांउपनिवेशाःशाखानगराणितेषांद्विराजभिर्द्विगुणायतांगुणदीर्घांच ॥ २७ ॥ अष्टेति पंचगृहपंक्तिभिश्चतस्रो
रथ्याभवंतिताश्चतस्रऊर्ध्वाश्चतस्रःतिस्रश्चतासांसंचयःषोडशतेषांमध्येषोडशचत्वराणि ॥ एकेनैवमार्गेणयुक्तांयतःपारिक्षिप्तांपरिवृतांसागरेणेत्यर्थात्एकमार्गाचासौपारिक्षिप्ताचेतिस

अक्षकैर्बीजकैश्चैवमंदारैश्चोपशोभितम् ॥ शतावर्तवनंचैवकरवीराकरंतथा १९ भातिचैत्ररथंचैवनंदनंचवनंमहत् ॥ रमणंभावनंचैववेणुमद्वैसमंततः ॥
२० वैडूर्यपत्रैर्जलजैस्तदामंदाकिनीनदी ॥ भातिपुष्करणीरम्यापूर्वस्यांदिशिभारत २१ सानवोभूषितास्तत्रकेशवस्यप्रियैषिभिः ॥ बहुभिर्देवगंधर्वै
श्चोदितैर्विश्वकर्मणा २२ महानदीद्वारवतीपंचाशद्भिर्महामुखैः ॥ प्रविष्टापुण्यसलिलाभावयंतोसमंततः २३ अप्रमेयांमहोत्सेधामगाधपरिखायु
ताम् ॥ प्राकारवरसंपन्नांसुधापांडुरलेपनाम् २४ तीक्ष्णयंत्रशतघ्नीभिर्हेमजालैश्चभूषिताम् ॥ आयसैश्चमहाचक्रैर्ददर्शद्वारकांपुरीम् २५ अष्टौरथस
हस्राणिनगरेकिंकिणीकिनाम् ॥ समुच्छ्रितपताकानियथादेवपुरेतथा २६ अष्टयोजनविस्तीर्णामचलांद्वादशायताम् ॥ द्विगुणोपनिवेशांचददर्शद्वा
रकांपुरीम् २७ अष्टमार्गमहारथ्यांमहाषोडशचत्वराम् ॥ एकमार्गपरिक्षिप्तांसाक्षादुशनसाकृताम् २८ स्त्रियोपियस्यांयुध्येरन्किमुत्रष्णिमहारथाः ॥
व्यूहानामुत्तमामार्गाःसप्तचैवमहापथाः २९ तत्रवैविहिताःसाक्षाद्विविधाविश्वकर्मणा ॥ तस्मिन्पुरवरश्रेष्ठेदाशार्हाणांयशस्विनाम् ३० वेश्मानिजहृ
षेदृष्ट्वाततोदेवकिनंदनः ॥ कांचनैर्मणिसोपानैरुपेतानिनृहर्षणैः ३१ भीमघोषमहाघोषैःप्रासादवरवत्तरैः ॥ समुच्छ्रितपताकानिपारिप्लवनानिच ॥
३२ कांचनाग्राणिभास्वंतिप्रासादशिखराणिच ॥ गृहाणिरमणीयानिमेरुकूटनिभानिच ३३ पांडुपांडुरशृंगैश्चशातकुंभपरिष्कृतैः ॥ रम्यसानुगृहैःशृंगैर्वि
चित्रैरिवपर्वतैः ३४ पंचवर्णैःसुवर्णैश्चपुष्पवृष्टिसमप्रभैः ॥ पर्जन्यतुल्यनिर्घोषैर्नानारूपैरिवाद्रिभिः ३५ दावाग्निज्वलितप्रख्यैर्निर्मितैर्विश्वकर्मणा ॥
आश्लिषद्भिरिवाकाशमतिचंद्रार्कभास्वरैः ३६ तैर्दाशार्हैर्महाभागैर्बभासेतद्वनद्रुमैः ॥ वासुदेवेंद्रपर्जन्यैर्गृहमेघैरलंकृता ३७ मासःउशनसापुरनिर्माणविदाशु

क्रेण ॥ २८ ॥ व्यूहानांसेनानिवेशविशेषाणांचक्रक्रौंचाकाराणाम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ पांडुपांडुराणिश्वेतादपिश्वेतानिअतिश्वेतैरुपेतानिगृहाणीत्यर्थः शातकुं
भपरिष्कृतैः सुवर्णधाराविचित्रितैः ॥ ३४ ॥ ३५ ॥ ३६ ॥ तैरितिसार्द्धश्लोकः तद्वनद्रुमैःतानिचित्रकादीनिचतानिवनानितद्वनानितत्संबंधिभिर्द्रुमैःबभासेपुरीतिशेषः अत्र
सहस्राक्षत्वपुष्पितत्वयोर्वृष्टिकर्तृत्वपुष्पवर्षत्वयोश्चसाम्यादिंद्रवृक्षाणामिंद्रपर्जन्यसमत्वंदाशार्हाणांकृष्णादीनांवासुदेवस्यविष्णोःसगणस्यचसमत्वमितियोग्यतयाज्ञेयम् ॥ ३७ ॥

॥ ३८ ॥ ३९ ॥ जगतिपर्वतैःकृत्रिमैः क्रीडापर्वतैः ॥ ४० ॥ कांचनंनामप्रासादंरुक्मिण्याः ॥ ४१ ॥ ४२ ॥ भोगवन्नामपांडुरंसत्यभामायाः ॥ ४३ ॥ व्यक्तसंजवनःव्यक्तंस्य ध्वंसंजवनंप्रतिक्षणमभिनवरूपत्वंयस्यसतथाविधः ॥ ४४ ॥ ४५ ॥ ४६ ॥ मेरुर्नामप्रासादोनाग्नजित्याःसत्यायाः ॥ ४७ ॥ ४८ ॥ पद्मकूलाख्योभोमायाः ॥ ४९ ॥ सूर्यप्रभोनामलक्ष्मणायाः ॥ ५० ॥ परमित्येवतन्नामकंगृहंमित्रविंदायाः ॥ ५१ ॥ ५२ ॥ ५३ ॥ सुवार्तायाःप्रासादःकेतुमान्नाम ॥ ५४ ॥ ५५ ॥ यत्रभगवान्देवान्द्विजांश्चो

ददृशेद्वारकाचारुमेघैर्द्यौरिवसंवृता ॥ साक्षाद्भगवतोवेश्मविहितंविश्वकर्मणा ३८ ददृशेवासुदेवस्यचतुर्योजनमायतम् ॥ तावदेवचविस्तीर्णमप्रमेयंमहा धनम् ३९ प्रासादवरसंपन्नंयुक्तंजगतिपर्वतैः ॥ यच्चकारमहाभागस्त्वष्टावासवनोदितः ४० प्रासादंचैवहेमाभंसर्वभूतमनोहरं ४१ मेरोरिवगिरेःशृंगमु च्छ्रितंकांचनंमहत् ॥ रुक्मिण्याःप्रवरंवासंविहितंविश्वकर्मणा ४२ सत्यभामापुनर्वेश्मयदावसतपांडुरम् ॥ विचित्रमणिसोपानंतद्विदुर्भोगवान्निति ४३ विमलादित्यवर्णाभिःपताकाभिरलंकृतं ॥ व्यक्तसंजवनोद्देशोयश्चतुर्दिङ्महाध्वजः ४४ सचप्रासादमुख्योथजांबवत्याविभूषितः ॥ प्रभयाभ्यभवत्सर्वा स्तानन्याभास्करोयथा ४५ उद्यद्भास्करवर्णाभस्तयोरंतरमाश्रितः ॥ विश्वकर्मकृतोदिव्यःकैलासशिखरोपमः ४६ जांबूनदइवादीप्तःप्रदीप्तज्वलनोयथा सागरप्रतिमोत्तिष्ठन्मेरुरित्यभिविश्रुतः ४७ तस्मिन्गांधारराजस्यदुहिताकुलशालिनी ॥ गांधारीभरतश्रेष्ठकेशवेननिवेशिता ४८ पद्मकूलइतिख्यातंप द्मवर्णंमहाप्रभम् ॥ सुभीमायामहाकूटंवासंसुरुचिरप्रभम् ४९ सूर्यप्रभस्तुप्रासादःसर्वकामगुणैर्युतः ॥ लक्ष्मणायानृपश्रेष्ठनिर्दिष्टःशार्ङ्गधन्वना ५० वैडू र्यमणिवर्णाभःप्रासादोहरितप्रभः ॥ यंविदुःसर्वभूतानिपरमित्येवभारत ५१ वासंतंमित्रविंदायादेवर्षिगणपूजितम् ॥ महिष्यावासुदेवस्यभूषणंतेषुवेश्म सु ५२ यस्तुप्रासादमुख्योत्रविहितोविश्वकर्मणा ॥ अतीवरम्यरम्योसौधिष्ठितःपर्वतोयथा ५३ सुवार्तायानिवासंतंप्रशस्तंसर्वदैवतैः॥ महिष्यावासुदेवस्य केतुमानितिविश्रुतः ५४ तत्रप्रासादमुख्योवैयंत्वष्टाविदधेस्वयम् ॥ योजनायतविष्कंभःसर्वरत्नमयःशुभः ५५ सश्रीमान्विरजानामव्यराजत्तत्रसुप्रभः ॥ उपस्थानगृहंयत्रकेशवस्यमहात्मनः ५६ तस्मिन्सुविहिताःसर्वेरुक्मदंडाःपताकिनः ॥ सदनेवासुदेवस्यमार्गसंजवनध्वजाः ५७ रत्नजालानिदिव्यानि तत्रैवचनिवेशिताः ॥ आहृत्ययदुसिंहेनवैजयंतोचलोमहान् ५८ हंसकूटस्ययच्छृंगमिंद्रद्युम्नसरःप्रति ॥ षष्टितालसमुत्सेधमर्धयोजनमायतम् ५९ स किंनरमहानागंतदप्यमिततेजसा ॥ पश्यतांसर्वभूतानामानीतंलोकविश्रुतं ६०

प्रतिष्ठतेसविरजानामप्रासादः विजयोनामइतिपाठः ॥ ५६ ॥ मार्गसंजवनध्वजाःसंगमकाध्वजाःयैर्ध्वजैश्चिन्हभूतैर्भगवद्गृहमार्गोवगम्यतइत्यर्थः ॥ ५७ ॥ वैजयंतइंद्रध्वजःइंद्र प्रासादोवा ॥ ५८ ॥ हंसकूटस्यपर्वतविशेषस्य ॥ ५९ ॥ आनीतं विश्वकर्मणेत्युत्तरात् ॥ ६० ॥

१३८ आदित्यपथगंयत्तुमेरोःशिखरमुत्तमं ॥ पुंडरीकशतैर्जुष्टंविमानैश्चहिरण्मयैः ६१ जांबूनदमयंदिव्यंत्रिषुलोकेषुविश्रुतम् ॥ तदप्युत्पाट्यकृष्णार्थमानी अ०९८
तंविश्वकर्मणा ६२ भ्राजमानमतीवाग्र्यंसर्वौषधिसमन्वितं ॥ तदिंद्रवचनात्त्वष्टाकार्यहेतोःसमानयत् ६३ पारिजातश्चतत्रैवकेशवेनाहृतःस्वयं ६४ नीय
मानेतुतत्रासीद्युद्धमद्भुतकर्मणः ॥ कृष्णस्ययेऽभ्यरक्षंस्तुदेवाःपादपमुत्तमम् ६५ पुंडरीकशतैर्जुष्टंविमानैश्चहिरण्मयैः ॥ विहितावासुदेवार्थेरत्नपुष्पफलद्रु
माः ॥ ६६ ॥ पद्मखंडजलोपेतारत्नसौगंधिकोत्पलाः ॥ मणिहेमप्लवाकीर्णाःपुष्करिण्यःसरांसिच ॥ ६७ ॥ तासांपरमकूलानिशोभयंतिमहाद्रुमाः ॥
शालास्तालाःकदंबाश्चशतशाखाश्चरोहिणाः ६८ येचहैमवतोवृक्षायेचमेरुरुहास्तथा ॥ आहृत्ययदुसिंहार्थेविहिताविश्वकर्मणा ६९ रक्तपीतारुणश्या
माःश्वेतपुष्पाश्चपादपाः ॥ सर्वर्तुफलसंपन्नास्तेषुकाननसंधिषु ७० समकूलजलोपेताःशांतशर्करवालुकाः ॥ तस्मिन्पुरवरेनद्यःप्रसन्नसलिलाह्रदाः ७१ पु
ष्पाकुलजलोपेतानानाद्रुमलताकुलाः ॥ अपराश्चाभवन्नद्योहेमशर्करवालुकाः ७२ मत्तबर्हिणसंघैश्चकोकिलैश्चसदामदैः ॥ बभूवुःपरमोपेतास्तस्यांपुर्यां
चपादपाः ७३ तत्रैवगजयूथानिपुरेगोमहिषास्तथा ॥ निवासश्चकृतस्तत्रवराहमृगपक्षिभिः ७४ पुर्यांतस्यांतुरम्यायांप्राकारोवैहिरण्मयः ॥ व्यक्तःकि
ष्कुशतोत्सेधोविहितोविश्वकर्मणा ७५ अतीवरम्यःसोथासीद्वेष्टितःपर्वतोयथा ॥ तेचतेचमहाशैलाःसरितश्चसरांसिच ॥ परिक्षिप्तानिभौमेनवनान्युपवना
निच ७६ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिद्वारकाविशेषनिर्माणंनामाष्टनवतितमोऽध्यायः ९८ ॥ ७ ॥ वैशंपायनउवाच ॥ एवमालोक
यानःसद्वारकांवृषभेक्षणः ॥ अपश्यत्स्वगृहंकृष्णःप्रासादशतशोभितम् १ मणिस्तंभसहस्राणामयुतैर्विधृतंशतैः ॥ तोरणैर्ज्वलनप्रख्यैर्मणिविद्रुमराजतैः २
तत्रतत्रप्रभासद्भिश्चित्रकांचनवेदिकैः ॥ प्रासादस्तत्रसुमहान्कृष्णोपस्थानिकोऽभवत् ३ स्फाटिकस्तंभविधृतोविस्तीर्णःसर्वकांचनः ॥ पद्माकुलजलोपेता
रक्तसौगंधिकोत्पलाः ४ मणिहेमनिभाश्चित्रारत्नसोपानभूषिताः ॥ मत्तबर्हिणजुष्टाश्चकोकिलैश्चसदामदैः ५ बभूवुःपरमोपेतावाप्यश्चविकचोत्पलाः ॥ वि
श्वकर्मकृतःशैलःप्राकारस्तस्यवेश्मनः ६ व्यक्तकिष्कुशतोत्सेधःपरिखापरिवेष्टितः ॥ तद्गृहंवृष्णिसिंहस्यनिर्मितंविश्वकर्मणा ७ महेंद्रसदृशंवेश्मसमंताद
र्धयोजनम् ॥ तत्रस्थंपांडुरंशौरिर्मूर्ध्निर्तिष्ठद्गुरुस्मतः ८

॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ किष्कुशतंहस्तशतम् ॥ ७५ ॥ भौमेनवि १३८
श्वकर्मणा ७६ ॥ इतिश्रीम०खि०वि०टी०अष्टनवतितमोऽध्यायः ॥ ९८ ॥ एवमिति ॥ १ ॥ विधृतंस्पष्टीकृतंस्तंभप्रभयैवग्रस्तांधकारमित्यर्थः ॥ २ ॥ कांचनवेदिकैस्तो
रणैः ॥ ३ ॥ ४ ॥ ५ ॥ परमोपेताअनुयज्ञायुक्ताःसंकल्पितरूपधारिण्यइत्यर्थः परमंस्यादनुज्ञायामितिमेदिनी शैलःशिलामयः ॥ ६ ॥ ७ ॥ ८ ॥

ररासप्रांतशब्दंचकार ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ईश्वराःइंद्रादयःअनुचराःयस्यईश्वरानुचरः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

प्रीतःशंखमुपाध्मासीद्द्विषतांरोमहर्षणं ॥ तस्यशंखस्यशब्देनसागरश्चुक्षुभेभृशं ॥ ररासचनभःकृत्स्नंतच्चित्रमभवत्तदा ९ पांचजन्यस्यनिर्घोषंसंश्रुत्य
कुकुरांधकाः ॥ विशोकाःसमपद्यंतगरुडस्यचदर्शनात् १० शंखचक्रगदापाणिंगरुडस्योपरिस्थितम् ॥ दृष्ट्वाजहृषिरेपौराभास्करोपमतेजसम् ११
ततस्तूर्यप्रणादश्चभेरीणांचमहास्वनाः ॥ जज्ञिरेसिंहनादाश्चसर्वेषांपुरवासिनाम् १२ ततस्तेसर्वदाशार्हाःसर्वेचकुकुरांधकाः ॥ प्रीयमाणाःसमाजग्मुरा
लोक्यमधुसूदनम् १३ वासुदेवंपुरस्कृत्यशंखतूर्यरवैःसह ॥ उग्रसेनोययौराजावसुदेवनिवेशनम् १४ आनंदिनीपर्यचरत्स्वेषुवेश्मसुदेवकी ॥ रोहिणी
चयशोदाचआहुकस्यचयाःस्त्रियः १५ ततःकृष्णःसुपर्णेनस्वंनिवेशनमभ्यगात् ॥ चचारचयथोद्देशमीश्वरानुचरोहरिः १६ अवतीर्यगृहद्वारिकृष्ण
स्तुयदुनंदनः ॥ यथार्हंपूजयामासयादवान्यादवर्षभः १७ रामाहुकगदाक्रूरप्रद्युम्नादिभिरर्चितः ॥ प्रविवेशगृहंशौरिरादायमणिपर्वतं १८ तंचशक्र
स्यदयितंपारिजातंमहाद्रुमं ॥ प्रवेशयामासगृहंप्रद्युम्नोरुक्मिणीसुतः १९ तेन्योन्यंददृशुर्वीरादेहबंधानमानुषान् ॥ पारिजातप्रभावेनततोमुमुदिरेजनाः
२० तैःस्तूयमानोगोविंदःप्रहृष्टैर्यादवर्षभैः ॥ प्रविवेशगृहंश्रीमान्विहितंविश्वकर्मणा २१ ततोंतःपुरमध्येतंसशृंगमणिपर्वतम् ॥ न्यवेशयदमेयात्मावृ
ष्णिभिःसहितोच्युतः २२ तंचदिव्यंद्रुमश्रेष्ठंपारिजातममित्रजित् ॥ अर्च्यमर्चितमव्यग्रमिष्टेदेशेन्यवेशयत् २३ अनुज्ञाप्यततोज्ञातीन्केशवःपरवीरहा
ताःस्त्रियःपूजजमाससंहृतानरकेणयाः २४ वस्त्रैराभरणैर्दिव्यैर्दासीभिर्धनसंचयैः ॥ हारैश्चंद्रांशुसंकाशैर्मणिभिश्चमहाप्रभैः २५ पूर्वमभ्यर्चिताश्चैववसुदे
वेनताःस्त्रियः ॥ देवक्यासहरोहिण्यारेवत्याचाहुकेनच २६ सत्यभामोत्तमास्त्रीणांसौभाग्येनाभवत्तदा ॥ कुटुंबस्येश्वरीत्वासीद्रुक्मिणीभीष्मकात्मजा
२७ तासांयथार्हंहर्म्याणिप्रासादशिखराणिच ॥ आदिदेशगृहान्कृष्णःपारिबर्हांश्चपुष्कलान् २८ इतिश्रीम०खि०ह०वि०द्वारकाप्रवेशनंनामनवनवति
तमोऽध्यायः ९९ ॥ छ वैशंपायनउवाच ॥ ततःसंपूज्यगरुडंवासुदेवोऽनुमान्यच ॥ सखिवच्चोपगृह्यैनमनुजज्ञेगृहंप्रति १ सोऽनुज्ञातोहिसत्कृत्यप्र
णम्यचजनार्दनम् ॥ ऊर्ध्वमाचक्रमेपक्षीयथेष्टंगगनेचरः २ सपक्षवातसंक्षुब्धंसमुद्रंमकरालयम् ॥ कृत्वावेगेनमहताययौपूर्वमहोदधिम् ३ कृत्यकालेउप
स्थास्यइत्युक्त्वागरुडेगते ॥ कृष्णोददर्शपितरंवृद्धमानकदुंदुभिम् ४ उग्रसेनंचराजानंबलदेवंचसात्यकिम् ॥ काश्यंसांदीपनिंचैवब्रह्मगार्ग्यंतथैवच ५

॥ २१ ॥ २२ ॥ २३ ॥ संहृताःदूषणंविनाआनीताः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांनवनवतितमोऽ
ध्यायः ॥ ९९ ॥ छ ॥ ततइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

रत्नप्रवेकैःरत्नोत्तमैः ॥ ६ ॥ ७ ॥ चाक्रिकोराजाज्ञाघोषकः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ विविशुःअभिनिविविशुःआसनेषुउपविष्टाः ॥ १२ ॥ १३ ॥ संमानयामा

अन्यांश्ववृद्धान्वृष्णीनांतांश्वभोजांधकांस्तथा ॥ रत्नप्रवेकैर्दाशार्हान्वीर्यलब्धैस्तथार्चयत् ६ हताब्रह्मद्विषःसर्वेजयंत्यंधकवृष्णयः ॥ रणात्प्रतिनिवृत्तोय मक्षतोमधुसूदनः ७ इतिचत्वररथ्यासुद्वारवत्यांसुपूजितः ॥ चाक्रिकोघोषयामासपुरुषोमृष्टकुंडलः ८ ततःसांदीपनिंपूर्वमभिगम्यजनार्दनः ॥ ववंदेवृ ष्णिनृपतिमाहुकंविनयान्वितः ९ तथाहिपरिपूर्णाक्षमानंदागतचेतसम् ॥ ववंदेसहरामेणपितरंवासवानुजः १० उपगम्यतथाशेषान्सत्कृत्यचयथार्ह तः ॥ सर्वेषांनामजग्राहदाशार्हाणामधोक्षजः ११ ततःसर्वाणिदिव्यानिसर्वरत्नमयानिच ॥ आसनाग्र्याणिविविशुरुपेंद्रप्रमुखास्तदा १२ ततस्तद्धनमक्ष य्यंकिंकरैर्यत्समाहृतम् ॥ तत्सभामानयामासुःपुरुषाःकृष्णशासनात् १३ ततःसंमानयामासदाशार्हांश्वयदूत्तमः ॥ सर्वान्दुंदुभिशब्देनपूजयिष्यन्जना र्दनः १४ तामासनवतींरम्यांमणिविद्रुमतोरणाम् ॥ सभांसर्वदशार्हास्तेविविशुःकृष्णशासनात् १५ ततःपुरुषसिंहैर्यायदुभिःसर्वतोवृता ॥ सर्वार्थगुण संपन्नासासभाभरतर्षभ ॥ शुशुभेऽभ्यधिकंशुभ्रासिंहैर्गिरिगुहायथा १६ रामेणसहगोविंदःकांचनंमहदासनम् ॥ उग्रसेनंपुरस्कृत्यभोजवृष्णिपुरस्कृतः १७ तत्रोपविष्टांस्तान्वीरान्यथाप्रीतिर्यथावयः ॥ समाभाष्ययदुश्रेष्ठानुवाचपुरुषोत्तमः १८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिसभाप्रवेशनंना मशततमोऽध्यायः ॥ १०० ॥ ॥ श्रीकृष्णउवाच ॥ भवतांपुण्यकीर्तीनांतपोबलसमाधिभिः ॥ अपध्यानाच्चपापात्माभौमःसनरकोहतः १ मोक्षितंबंध नाद्गुप्तंकन्यांतःपुरमुत्तमम् ॥ मणिपर्वतमुत्पाट्याशिखरंचैतदाहृतम् २ अयंधनौघःसुमहान्किंकरैराहृतोमम ॥ ईशाभवंतोद्रव्यस्यतानुक्त्वाविरराम ह ३ तच्छ्रुत्वावासुदेवस्यभोजवृष्ण्यंधकावचः ॥ जहृषुर्हृष्टरोमाणःपूजयंतोजनार्दनम् ४ ऊचुश्चैनंनृवीरास्तेकृतांजलिपुटास्ततः ॥ नैतच्चित्रंमहाबाहो त्वयिदेवकिनंदने ५ यत्कृत्वादुष्करंकर्मदेवैरपिदुरासदम् ॥ लालयेःस्वजनान्भोगैरत्नैश्वस्वयमर्जितैः ६ ततःसर्वदशार्हाणामाहुकस्यचयाःस्त्रियः ॥ प्रीयमा णाःसमाजग्मुर्वासुदेवदिदृक्षया ७ देवकीसप्तमादेव्योरोहिणीचशुभानना ॥ ददृशुःकृष्णमासीनंरामंचैवमहाभुजम् ८ तौतुपूर्वमतिक्रम्यरोहिणीमभिवा द्यच ॥ अभिवादयतांदेवींदेवकींरामकेशवौ ९ साताभ्यामृषभाक्षाभ्यांपुत्राभ्यांशुशुभेंबिका ॥ अदितिर्देवमातेवमित्रेणवरुणेनच १० ततःप्राप्तानरा ग्र्यौतुतस्याःसादुहितातदा ॥ एकानंशेतियामाहुर्नरावैकामरूपिणीम् ११

सधनानिविभज्यददावित्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ इतिश्रीम०खि०ह०वि०टी०शततमोऽध्यायः ॥ १०० ॥ भवतामिति ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ नराग्र्यौप्रति एकानंशासायोगमायादुहिता तस्याःयशोदायाः ॥ ११ ॥

क्षणःउक्तविधःसंकेतः मुहूर्त.उक्तःकालश्चताभ्यांजज्ञेआविर्बभूव ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८॥१९ ॥ २० ॥ २१ ॥ २२ ॥ २३ २४ ॥ २५ २६॥

तथाक्षणमुहूर्ताभ्यांययाजज्ञेसुरेश्वरः ॥ यत्कृतेसगणंकंसंजघानपुरुषोत्तमः १२ साकन्यावव्रृधेतत्रव्रृष्णिसद्मनिपूजिता ॥ पुत्रवत्पाल्यमानावैवासुदेवा
ज्ञयातदा १३ एकानंशेतियामाहुरुत्पन्नांमानवाभुवि ॥ योगकन्यांदुराधर्षांरक्षार्थंकेशवस्यह १४ यांवैसर्वेसुमनसःपूजयंतिस्मयादवाः ॥ देववद्दिव्य
पुरुषःकृष्णःसंरक्षितोयया १५ तांचतत्रोपसंगम्यप्रियामिवसखींस्वसाम् ॥ दक्षिणेनकराग्रेणपरिजग्राहमाधवः १६ तथैवरामोतिबलःसंपरिष्वज्यभावि
नीम् ॥ मूर्ध्न्युपाघ्रायसव्येनप्रतिजग्राहपाणिना १७ ददृशुस्ताःस्त्रियोमध्येभगिनींरामकृष्णयोः ॥ रुक्मपद्मव्यग्रकरांश्रियंपद्मालयामिव १८ तथाक्ष
तमहावृष्ट्यापुष्पैश्चविविधैःशुभैः ॥ अवकीर्यचलाजैस्ताःस्त्रियोजग्मुर्यथालयम् १९ ततस्तेयादवाःसर्वेपूजयंतोजनार्दनम् ॥ उपोपविविशुःप्रीताःप्रशंसं
तोद्भुतंकृतम् २० पूज्यमानोमहाबाहुःपौराणांरतिवर्द्धनः ॥ विरराजमहाकीर्तिर्देवैरिवसतैःसह २१ समासीनेषुसर्वेषुयादवेषुजनार्दनम् ॥ नियोगात्त्रिदशें
द्रस्यनारदोभ्यागमत्सभाम् २२ सोथसंपूजितःपूज्यःशूरैस्तैर्यदुपुंगवैः ॥ करंसंस्पृश्यसहरेर्विवेशपरमासने २३ सुखोपविष्टस्तान्वृष्णीनुपविष्टानुवाचह
संप्राप्तंशक्रवचनाज्ज्ञानीध्वंमांनरर्षभाः २४ शृणुध्वंराजशार्दूलाःकृष्णस्यास्यपराक्रमम् ॥ यानिकर्माणिकृतवान्बाल्यात्प्रभृतिकेशवः २५ उग्रसेनसुतः
कंसःसर्वान्निर्मथ्ययादवान् ॥ राज्यंजग्राहदुर्बुद्धिर्बध्वापितरमाहुकम् २६ समाश्रित्यजरासंधंश्वशुरंकुलपांसनः ॥ भोजवृष्ण्यंधकान्सर्वानवमन्यतदु
र्मतिः २७ ज्ञातिकार्येचिकीर्षुस्तुवसुदेवःप्रतापवान् ॥ उग्रसेनस्यरक्षार्थंस्वपुत्रंपर्यरक्षत २८ सगोपैःसहधर्मात्मामथुरोपवनेस्थितः ॥ अत्यद्भुतानिक
र्माणिकृतवान्मधुसूदनः २९ प्रत्यक्षंशूरसेनानांश्रूयतेमहदद्भुतम् ॥ उत्तानेनशयानेनशकटांतरचारिणा ३० राक्षसीनिहतारौद्राशकुनीवेषधारिणी ॥
पूतनानामघोरासामहाकायामहाबला ३१ विषदिग्धंस्तनंरौद्रंप्रयच्छंतीजनार्दने ॥ ददृशुर्निहतातांतेराक्षसींवनगोचराः ३२ पुनर्जातोयमित्याहुरुक्तस्त
स्मादधोक्षजः ॥ अत्यद्भुतमिदंचासीद्याच्छिशुःपुरुषोत्तमः ३३ पादांगुष्ठेनशकटंक्रीडमानोव्यलोडयत् ॥ दाम्नाचोलूखलेबद्धोविप्रकुर्वन्कुमारकम् ३४
बभंजार्जुनवृक्षौद्वौख्यातोदामोदरस्तदा ॥ कालियश्चमहानागोदुराधर्षोमहाबलः ३५ क्रीडतावासुदेवेननिर्जितोयमुनाह्रदे ॥ अक्रूरस्यसमक्षंचयन्ना
गभवनेविभुः ३६ पूज्यमानंतदानागैर्दिव्यंवपुरधारयत् ॥ शीतवातार्दितागाश्चदृष्ट्वाकृष्णेनधीमता ३७ धृतोगोवर्धनःशैलःसप्तरात्रंमहात्मना ॥ शिशु
नावासुदेवेनगवांत्राणार्थमिच्छताम् ३८

अवमन्यततेषांअवमानमकरोत् ॥ २७ ॥ २८ ॥ २९ ॥ शकटांतरचारिणाशकटनाशार्थंचेष्टमानेन ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ३८॥

॥ ३९ ॥ ४० ॥ सुनामानमित्यनेनकथांतरंसूच्यते ॥ ४१ ॥ भयंदैत्यांतरवधश्रवणजम् ॥ ४२ ॥ प्रग्रहंसहायं ॥ ४३ ॥ ४४॥ ४५॥ ४६ ॥ ४७ ॥ ४८ ॥ नंदगो

तथोक्षदुष्टोतिबलोमहाकायोनरांतकृत् ॥ गोपतिर्वासुदेवेनहतोरिष्टोमहासुरः ३९ धेनुकःसमहाकायोदानवःसुमहाबलः ॥ निहतोवासुदेवेनगवांत्राणा यदुर्मतिः ४०॰ सुनामानममित्रघ्नःसर्वसैन्यपुरस्कृतम् ॥ वृकैर्विद्रावयामासगृहीतंसमुपस्थितम् ४१ रौहिणेयेनसंगम्यवनेविचरतापुनः ॥ गोपवेषधरेणे वकंसस्यभयमाहितम् ४२ तथाव्रजगतःशौरिर्दृष्ट्वायुद्धबलंहयम् ॥ प्रग्रहंभोजराजस्यजघानपुरुषोत्तमः ४३ प्रलंबश्चमहाबाहोरौहिणेयेनधीमता ॥ दानवोमुष्टिनैकेनकंसामात्योनिपातितः ४४ एतौहिवसुदेवस्यपुत्रौसुरसुतोपमौ ॥ वव्रधातेमहावीर्यौब्रह्मगार्ग्येणसंस्कृतौ ४५ जन्मप्रभृतिचाप्येतौगा र्ग्येणपरमर्षिणा ॥ याथातथ्येनविज्ञाप्यसंस्कारप्रतिपादितौ ४६ यदात्विमौनरश्रेष्ठौस्थितौयौवनसंमुखे ॥ सिंहशावाविवोदीर्णौमत्तौहैमवतौय था ४७ ततोमनांसिगोपीनांहरमाणौमहाबलौ ॥ आस्तांगोष्ठवरौवीरौदेवपुत्रोपमद्युती ४८ एतौजयेवायुद्धेवाक्रीडासुविविधासुच ॥ नंदगोपस्यगोपा लानशेकुःप्रसमीक्षितुम् ४९ व्यूढोरस्कौमहाबाहूशालस्कंधाविवोद्गतौ ॥ श्रुत्वासौव्यथितःकंसोमंत्रिभिःसहितोऽभवत् ५० नाशकच्चयदाकंसोगृहीतुंब लकेशवौ ॥ निजग्राहततःक्रोधाद्वसुदेवंसबांधवम् ५१ सहोग्रसेनेनतदाचोरवद्गाढबंधनम् ॥ कालंमहांतमसुवत्कृच्छ्रमानकदुंदुभिः ५२ कंसस्तुपितरंब द्ध्वाशूरसेनान्शशासह ॥ जरासंधंसमाश्रित्यतथैवाहृतिभीष्मकौ[1] ५३ कस्यचित्त्वथकालस्यमथुरायांमहोत्सवम् ॥ पिनाकिनंसमुद्दिश्यचक्रेकंसोनरा धिपः ५४ तत्रमल्लाःसमाजग्मुर्नानादेश्याविशांपते ॥ नर्तनागायनाश्चैवकुशलानृत्यकर्मसु ५५ ततःकंसोमहातेजारंगवाटंमहाधनम् ॥ कुशलैःकारया मासशिल्पिभिःसाधुनिष्ठितैः ५६ तत्रमंचसहस्राणिपौरजानपदैर्जनैः ॥ समाकीर्णानिदृश्यंतेज्योतींषिगगनेयथा ५७ भोजराजःश्रियाजुष्टंरंगवाटंमहर्द्धि मत् ॥ आरुरोहततःकंसोविमानंसुकृतीयथा ५८ रंगवाटेगजंमत्तंप्रभूतायुधकल्पितम् ॥ शूरैरधिष्ठितःकंसःस्थापयामासवीर्यवान् ५९ यदाहिस महातेजारामकृष्णौसमागतौ ॥ शुश्रावपुरुषव्याघ्रौसूर्याचंद्रमसाविव ६० तदाप्रभृतियत्नोभूद्रक्षांप्रतिनराधिप ॥ नचशिश्येसुखंरात्रौरामकृष्णौविचिंतय न् ६१ श्रुत्वातुरामःकृष्णश्चतंसमाजमनुत्तमम् ॥ उभौविविशतुर्वीरौशार्दूलौगोव्रजंयथा ६२ ततःप्रवेशेसंरुद्धौरक्षिभिःपुरुषर्षभौ ॥ हत्वाकुवलयापी डंससादिनमरिंदमौ ॥ अवमृद्यदुराधर्षौरंगंविविशतुस्तदा ६३ चाणूरांध्रौविनिष्पिष्यकेशवेनबलेनच ॥ औग्रसेनिःसुदुष्टात्मासानुजोविनिपातितः ६४ यत्कृतंयद्रुसिंहेनदेवैरपिसुदुष्करम् ॥ कर्मतत्केशवादन्यःकर्तुमर्हतिकःपुमान् ६५

परस्यसुताविवितिशेषः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ शिश्येशयनंकृतवान् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

१ तथैवाहुतिभीषकौ इ० पाठान्तरम् ।

यद्विनाधिगतंपूर्वैःप्रह्लादबलिशंबरैः ॥ तदिदंप्रापितंवित्तंशौरिणाभवतांकृते ६६ एतेनमुरुमाक्रम्यदैत्यंपंचजनंतथा ॥ निष्क्रम्यशैलसंघातान्निसुंदःसग
णोहतः ६७ नरकश्चहतोभौमःकुंडलेचाहृतेशुभे ॥ प्राप्तंचदिविदेवेषुकेशवेनमहद्यशः ६८ वीतशोकभयाबाधाकृष्णबाहुबलाश्रयाः ॥ यजध्वंविविधै
र्यज्ञैर्यादवावीतमत्सराः ६९ देवानांसुमहत्कार्यंकृतंकृष्णेनधीमता ॥ प्रियमावेदयाम्येषभवतांभद्रमस्तुवः ७० यदिष्टंवोयदुश्रेष्ठाःकर्त्तास्मितदतंद्रितः ॥
भवतामस्मियूयंचममयुष्मास्वहंस्थितः ७१ इतिसंबोधयन्कृष्णमब्रवीत्पाकशासनः ॥ समांप्रेक्षीत्सुरश्रेष्ठप्रीतस्तुष्टास्तथावयम् ७२ यत्रधीःश्रीःस्थि
तातत्रयत्रश्रीस्तत्रसन्नतिः ॥ संनतिर्धीस्तथाश्रीश्चनित्यंकृष्णेमहात्मनि ७३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिनारदवाक्यंनामैकोत्तरशत
तमोऽध्यायः ॥ १०१ ॥ ॥ छ ॥ ॥ नारदउवाच ॥ सादितामौरवाःपाशानिसुंदनरकौहतौ ॥ कृतःक्षेम्यःपुनःपंथापुरंप्राग्ज्योतिषंप्रति १ शौरिणा
पृथिवीपालास्त्रासिताःस्पर्द्धिनोरणे ॥ धनुषश्चनिनादेनपांचजन्यस्वनेनच २ मेघप्रख्यैरथानीकैर्दाक्षिणात्यैःसुरक्षितं ॥ रुक्मिणंयुधिनिर्जित्यमहाबल
पराक्रमं ॥ रुक्मिणीमाजहाराशुकेशवोवृष्णिपुंगवः ३ ततःपर्जन्यघोषेणरथेनादित्यवर्चसा ॥ अवाप्यमहिषींभोजंशंखचक्रगदासिभृत् ४ जारूथ्या
माहृतिःक्राथःशिशुपालश्चनिर्जितः ॥ वक्रश्चसहसैन्येनशतधन्वाथनिर्जितः ५ इंद्रद्युम्नोहतःकोपाद्यवनश्चकशेरुमान् ॥ हतःसौभपतिःश्रीमान्शाल्वश्चदृ
ढधन्वना ६ पर्वतानांसहस्रंचचक्रेणपुरुषोत्तमः ॥ विकीर्यपुंडरीकाक्षोद्युमत्सेनंव्यपोथयत् ७ महेंद्रशिखरेचैवनिमेषांतरचारिणौ ॥ जघानपुरुषव्याघ्रो
रावणस्याभितश्चरौ ॥ ८ ॥ इरावत्यांमहाभोजावग्निसूर्यसमौयुधि ॥ गोपतिस्तालकेतुश्चनिहतौशार्ङ्गधन्वना ९ अक्षप्रपातनेचैवडिंभोहंसश्चदानवौ ॥
उभौतावपिकृष्णेनमानुगौविनिपातितौ १० दग्धावाराणसीचैवकेशवेनमहात्मना ॥ सराष्ट्रःसानुबंधश्चकाशीनामधिपोहतः ॥ ११ ॥ विजित्यचय
मंसंख्येशरैःसन्नतपर्वभिः ॥ अथेंद्रसेनिरानीतःकृष्णेनाद्भुतकर्मणा १२ सहितःसर्वयादोभिःसमरेषुमहाबलः ॥ प्राप्यलोहितकूटंचकृष्णेनवरुणोजितः ॥
१३ महेंद्रभवनेयातोदेवैर्गुप्तोमहात्मभिः ॥ अचिंतयित्वादेवेंद्रंपारिजातद्रुमोहृतः १४ पाड्यंपौड्रंकलिंगंचमात्स्यंचैवजनार्दनः ॥ जघानसहितान्सर्वा
न्वंगराजंतथैवच १५ एषचैकशतंहत्वारणेराज्ञांमहात्मनाम् ॥ गांधारीमावहद्वीरोमहिषींप्रियदर्शनाम् १६

॥ १०१ ॥ सादिता मौरवाःमुरुकृताः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ महेंद्रस्यपर्वतस्याशिखरेइरावत्यांनगर्यामितिद्वयोःसंबंधः ॥ ८ ॥ ९ ॥ अक्षप्रपातने
चक्षुर्विक्षेपमात्रेनिमित्तेसति स्थानविशेषेवा ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

जिगायजयवंतमकरोत् अंतर्भावितण्यंतोयंशब्दः ॥ १७ ॥ चक्रानुयानैःरथैःप्रह्वणेसंग्रामेइत्यर्थः अक्षराधिक्यमार्षं जिगायजितवान्अर्जुनद्वारेतिभावः ॥ १८ ॥ १९ ॥



तथागांडीवधन्वानंक्रीडंतंमधुसूदनः ॥ जिगायभरतश्रेष्ठंकुंत्याःप्रमुखतोविभुः १७ द्रोणंद्रौणिंकृतंकर्णंभीष्मंचैवसुयोधनम् ॥ चक्रानुयानैःप्रह्वणेजिगा

 यपुरुषोत्तमः १८ बभ्रोश्चप्रियमन्विच्छन्शंखचक्रगदासिभृत् ॥ सौवीरराजस्यसुतांप्रसह्याहृतवान्प्रभुः १९ पर्यस्तांपृथिवींकृत्स्नांसाश्वांसरथकुंजराम् ॥ 

वेणुदारिकृतेयलाञ्जिगायपुरुषोत्तमः २० अवाप्यतपसोवीर्यंबलमोजश्चमाधवः ॥ पूर्वदेहेजहारायंबलेस्त्रिभुवनंहरिः २१ वज्राशनिगदाखड्गैस्त्रासयद्भिश्च

दानवैः ॥ यस्यानाधिगतोमृत्युःपुरंप्राग्ज्योतिषंप्रति २२ अभिभूतश्चकृष्णेनसगणःसुमहाबलः ॥ बलेःपुत्रोमहावीर्योबाणोद्रविणवत्तरः २३ पीठंतथामहा

बाहुःकंसामात्यंजनार्दनः ॥ पैठिकंचासिलोमानंनिजघानमहाबलः २४ जृंभमैरावणंचापिविरूपंचमहायशाः ॥ जघानपुरुषव्याघ्रोदैत्यंमानुषरूपिणम्

२५ तथानागपतिंतोयेकालीयंचमहौजसं ॥ निर्जित्यपुंडरीकाक्षःप्रेषयामाससागरं २६ संजीवयामासमृतंपुत्रंसांदीपनेस्तथा ॥ निर्जित्यपुरुषव्याघ्रो

यमंवैवस्वतंहरिः २७ एवमेषमहाबाहुःशास्तातेषांदुरात्मनां ॥ देवांश्चब्राह्मणांश्चैवयेद्विषंतिसदानृप २८ निहत्यनरकंभौममाहृत्यमणिकुंडले ॥ देव

मातुर्ददौचैवप्रीत्यर्थंवज्रपाणिनः २९ एवंचदेवदैत्यानांसुराणांचमहायशाः ॥ भयाभयकरःकृष्णःसर्वलोककरोविभुः ३० संस्थाप्यधर्मान्मर्त्येषुयज्ञैरि

ष्ट्वाप्तदक्षिणैः ॥ कृत्वादेवार्थममितंस्वस्थानंप्रतिपत्स्यते ३१ कृष्णोभोगवतींरम्यामृषिकांतांमहायशाः ॥ द्वारकामात्मसात्कृत्वासमुद्रंगमयिष्यति ॥

३२ बहुरत्नसमाकीर्णांचैत्ययूपशतांकिताम् ॥ द्वारकांवरुणावासंप्रवेक्ष्यतिसकाननाम् ३३ तांसूर्यसदनप्रख्यामतज्ञःशार्ङ्गधन्वनः ॥ विसृष्टांवासुदेवेन

सागरःप्लावयिष्यति ३४ सुरासुरमनुष्येषुनासीन्नभविताक्वचित् ॥ यइमामावसेत्कश्चिदन्योवैमधुसूदनात् ३५ एवमेषदशार्हाणांविधायविधिमुत्तमम् ॥ वि

ष्णुर्नारायणःसोमःसूर्यश्चभवितास्वयम् ३६ अप्रमेयस्त्वचिंत्यश्चयथाकामचरोवशी ॥ मोदत्येषसदाभूतैर्बालःक्रीडनकैरिव ३७ नप्रमातुंमहाबाहुःश

क्योयंमधुसूदनः ॥ परंह्यपरमेतस्माद्विश्वरूपान्नविद्यते ३८ श्रुतोयमेवंशतशस्तथाशतसहस्रशः ॥ अंतोहिकर्मणामस्यदृष्टपूर्वोनकेनचित् ३९ एवमे

तानिकर्माणिशिशुमध्यगतस्तदा ॥ कृतवान्पुंडरीकाक्षःसंकर्षणसहायवान् ४० इत्युवाचपुराव्यासस्तपोवीर्येणचक्षुषा ॥ महायोगीमहाबुद्धिःसर्वप्रत्य

क्षदर्शिवान् ४१ ॥ वैशंपायनउवाच ॥ इतिसंस्तूयगोविंदंमहेंद्रवचनान्मुनिः ॥ यदुभिःपूजितःसर्वैर्नारदस्त्रिदिवंययौ ४२ 

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ देवार्थंदेवानांप्रयोजनं स्वस्थानंवैकुंठं ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ नविद्यतेपृथगितिशेषः ॥ ३८ ॥ ३९ ॥ ४० ॥ पुराव्यासःपूर्वकल्पीयोव्यासः ॥ ४१ ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ बहूनामिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

ततस्तद्वसुगोविंदोदिदेशांधकवृष्णिषु ॥ यथार्हंपुंडरीकाक्षोविधिवन्मधुसूदनः ४३ यादवश्चधनंप्राप्यविधिवद्भूरिदक्षिणैः ॥ यज्ञैरिष्ट्वामहात्मानोद्वारका
मावसत्पुरीम् ॥ ४४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिनारदवाक्यंनामद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ छ ॥ जनमेजयउवाच ॥
बहूनांस्त्रीसहस्राणामष्टौभार्याःप्रकीर्तिताः ॥ तासामपत्यान्यष्टानांभगवान्प्रब्रवीतुमे १ वैशंपायनउवाच ॥ अष्टौमहिष्यःपुत्रिण्यइतिप्राधान्यतःस्मृताः
सर्वावीरप्रजाश्चैवतास्वपत्यानिमेशृणु २ रुक्मिणिसत्यभामाचदेवीनाग्नजितीतथा ॥ सुदत्ताचतथाशैब्यालक्ष्मणाचारुहासिनी ३ मित्रविंदाचकालिं
दीजांबवत्यथपौरवी ॥ सुभीमाचतथामाद्रीरुक्मिणीतनयान्शृणु ४ प्रद्युम्नःप्रथमंजज्ञेशंबरांतकरःशुभः ॥ द्वितीयश्चारुदेष्णश्चवृष्णिसिंहोमहारथः ५
चारुभद्रश्चारुगर्भःसुदेष्णोद्रुमएवच ॥ सुषेणश्चारुदेष्णश्चचारुविंदश्चवीर्यवान् ६ चारुबाहुःकनीयांश्चकन्याचारुमतीतथा ॥ जज्ञिरेसत्यभामायांभानु
र्भीमरथस्तथा ७ रोहितोदीप्तिमांश्चैवाताम्रजाक्षोजलांतकः ॥ भानुर्भीमनिकाचैवतांम्रपर्णीजलंधमाः ८ चतस्रोजज्ञिरेतेषांस्वसारोगरुडध्वजात् ॥ जां
बवत्याःसुतोजज्ञेसांबःसमितिशोभनः ९ मित्रवान्मित्रविंदश्चमित्रवत्यपिचांगना ॥ मित्रबाहुःसुनीथश्चनाग्नजित्याःप्रजाःशृणु १० भद्रकारोभद्रविंदःक
न्याभद्रवतीतथा ॥ सुदत्तायांतुशैब्यायांसंग्रामजिदजायत ११ सत्यजित्सेनजिच्चैवतथाशूरःसपत्नजित् ॥ सुभीमायाःसुतोमाद्र्यावृकाश्वोवृकनिर्वृतिः
१२ कुमारोवृकदीप्तिश्चलक्ष्मणायाःप्रजाःशृणु ॥ गात्रवान्गात्रगुप्तश्चगात्रविंदश्चवीर्यवान् १३ जज्ञिरेगात्रवत्याचभगिन्यानुजयासह ॥ अश्रुतश्चसुतोजज्ञे
कालिंद्याःश्रुतसंमतः १४ अश्रुतंश्रुतसेनायैप्रददौमधुसूदनः ॥ तंप्रदायहृषीकेशस्तांभार्यांमुदितोब्रवीत् १५ एषवामुभयोरस्तुदायादःशाश्वतीःसमाः ॥
बृहत्यांतुगदस्याहुःशैब्यायामंगदंसुतम् १६ उत्पन्नंकुमुदंचैवश्वेतंश्वेतातथांगना ॥ अगावहःसुमित्रश्चशुचिश्चित्ररथस्तथा १७ चित्रसेनःसुदेवायाश्चि
त्राचित्रवतीतथा ॥ वनस्तंबश्चजज्ञातेसुतस्तंबवनश्चह १८ निवासनोवनस्तंबःकन्यास्तंबवतीतथा ॥ उपसन्नश्चशंकुश्चवज्रांशुःक्षिप्रएवच १९ कौशि
क्यांश्रुतसोमायांयौधिष्ठिर्यांयुधिष्ठिरः ॥ कापालीगरुडश्चैवजज्ञातेचित्रयोधिनौ २० एवमादीनिपुत्राणांसहस्राणिनिबोधमे ॥ दशायुतंसमाख्यातावा
सुदेवस्यतेसुताः २१ अयुतानितथाचाष्टौशूरारणविशारदाः ॥ जनार्दनस्यप्रसवःकीर्तितोयंतथामया २२

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ वांआवयोःकृष्णश्रुतसेनयोः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ दशायुतंलक्षं ॥ २१ ॥
अष्टौअयुतानीत्यशीतिसहस्रंचपुत्राः ॥ २२ ॥

प्रद्युम्नस्यसुतोजज्ञेवैदर्भ्यांराजसत्तम ॥ अनिरुद्धोरणेऽरुद्धोजज्ञेसमृगकेतनः २३ रेवत्यांबलदेवस्यजज्ञातेनिशठोल्मुकौ ॥ भ्रातरौदेवसंकाशावुभौपुरुष अ.१०३

१४२ सत्तमौ २४ सुतनुश्चसुताराचशौरेरास्तांपरिग्रहः ॥ पौंड्रकःकपिलश्चैववसुदेवस्यतौसुतौ २५ तारायांकपिलोजज्ञेपौंड्रश्चसुतनोःसुतः ॥ तयोर्नृपोभ

वत्पौंड्रःकपिलश्चवनंययौ २६ तुर्यांसमभवद्वीरोवसुदेवान्महाबलः ॥ जरानामनिषादानांप्रभुःसर्वधनुष्मताम् २७ काश्यांसुपार्श्वतनयंलेभेसांबात्तर स्विनम् ॥ सानुर्जज्ञेनिरुद्धस्यवज्रःसानोरजायत २८ वज्राजज्ञेप्रतिरथःसुचारुस्तस्यचात्मजः ॥ अनमित्ताच्छिनिर्जज्ञेकनिष्ठाद्वृष्णिनंदनात् २९ शिने स्तुसत्यवाक्जज्ञेसत्यकश्चमहारथः ॥ सत्यकस्यात्मजःशूरोयुयुधानस्त्वजायत ३० असंगोयुयुधानस्यमणिस्तस्याभवत्सुतः ॥ मणेर्युगंधरःपुत्रइति वंशःसमाप्यते ३१ ॥ ॥ इतिश्रीम०खिलेषुहरिवंशेविष्णुपर्वणिवृष्णिवंशानुकीर्तनेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ जनमेजयउवाच ॥ यएष भवतापूर्वंशंबरघ्नेत्युदाहृतः ॥ प्रद्युम्नःसकथंजघ्नेशंबरंतद्ब्रवीहिमे १ ॥ ॥ वैशंपायनउवाच ॥ रुक्मिण्यांवासुदेवस्यलक्ष्म्यांकामोधृतव्रतः ॥ शंब रांतकरोजज्ञेप्रद्युम्नःकामदर्शनः ॥ सनत्कुमारइतियःपुराणेपरिगीयते २ तंसप्तरात्रेसंपूर्णेनिशीथेसूतिकागृहात् ॥ जहारकृष्णस्यसुतंशिशुंवैकालशंबरः ३ विदितंतस्यकृष्णस्यदेवमायानुवर्तिनः ॥ ततोननिगृहीतःसदानवोयुद्धदुर्मदः ४ समृत्युनापरीतायुर्मायायाप्रजहारतम् ॥ दोर्भ्यामुत्क्षिप्यनगरंस्वं निनायमहासुरः ५ अनपत्यातुतस्यासीद्भार्यारूपगुणान्विता ॥ नाम्नामायावतीनाममायेवशुभदर्शना ६ ददौतंवासुदेवस्यपुत्रंपुत्रमिवात्मजम् ॥ तस्या महिष्यामायिन्यादानवःकालचोदितः ७ मायावतीतुसंदृष्ट्वासंप्रहृष्टतनूरुहा ॥ हर्षेणमहतायुक्तापुनःपुनरुदैक्षत ८ अथतस्यनिरीक्षंत्याःस्मृतिःप्रादु र्बभूवह ॥ अयंसममकांतोभूत्स्मृत्वैवंचान्वचिंतयत् ९ अयंसनाथोभर्तामेयस्यार्थेहंदिवानिशम् ॥ चिंताशोकार्णवेमग्नानविंदामिरतिंकचित् १० अयं भगवतापूर्वंदेवदेवेनशूलिना ॥ खेदितेनकृतोनंगोदृष्टोजात्यंतरेमया ११ कथमस्यस्तनंदास्येमातृभावेनजानती ॥ भर्तुर्भार्यात्वहंभूत्वावक्ष्येवापुत्रइत्यु त १२ एवंसंचिंत्यमनसाधात्र्यास्तंसासमर्पयत् ॥ रसायनप्रयोगैश्चशीघ्रमेवव्यवर्धयत् १३ धात्र्याःसकाशात्सचतांशृण्वन्रुक्मिणिनंदनः ॥ मायावती मविज्ञानान्मेनेस्वामेवमातरम् १४ साचतंवर्द्धयामासकार्ष्णिकमललोचनम् ॥ मायाश्चास्मैददौसर्वादानवीःकाममोहिता १५ १४२

कायांत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ७ ॥ यएषइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ रतिप्रतिच्छायामायावतीनामभार्यात्वमापन्नानतुरतिरित्यग्रेव्यक्तीकरिष्यति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

१६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

सयदायौवनस्थस्तुप्रद्युम्नःकामदर्शनः ॥ चिकीर्षितज्ञोनारीणांसर्वास्त्रविधिपारगः १६ तंसामायावतीकांतंकामयामासकामिनी ॥ इंगितैश्चापिवीक्षंती
प्रालोभयतसास्मिता ॥ प्रसज्जंतींतुतांदेवींबभाषेचारुहासिनीम् १७ ॥ प्रद्युम्नउवाच ॥ मातृभावंव्यतिक्रम्यकिमेवंवर्तसेन्यथा ॥ अहोदुष्टस्वभावासि
स्त्रीत्वेचपलमानसा १८ यापुत्रभावमुत्सृज्यमयिलोभात्प्रवर्तसे ॥ नतुतेहंसुतःसौम्येकोयंशीलविपर्ययः १९ तत्वमिच्छाम्यहंदेविकथितंकोन्वयंविधिः
विद्युत्संपातचपलःस्वभावःखलुयोषिताम् २० यानरेषुप्रसज्जंतेनगाग्रेषुघनाइव ॥ यदितेहंसुतःसौम्येयदिवानात्मजःशुभे २१ कथितंतत्वमिच्छामि
किमिदंतेचिकीर्षितम् ॥ एवमुक्तातुसाभीरुःकामेनव्याथितेंद्रिया २२ प्रियंप्रोवाचवचनंविविक्तेकेशवात्मजम् ॥ नत्वंममसुतःकांतनापितेशंबरः
पिता २३ रूपवानसिविक्रांतस्त्वंजात्यावृष्णिनंदनः ॥ पुत्रस्त्वंवासुदेवस्यरुक्मिण्यानंदवर्धनः २४ दिवसेसप्तमेबालोजातमात्रोपवाहितः ॥ सूति
कागारमध्यात्त्वंशिशुरुत्तानशायितः २५ ममभर्त्राहृतोसित्वंबलवीर्यप्रवर्तिना ॥ पितुस्तेवासुदेवस्यधर्षयित्वागृहंमहत् २६ पाकशासनकल्पस्य
त्द्दतस्त्वंशंबरेणह ॥ साचतेकरुणंमातात्वांबालमनुशोचती २७ अत्यर्थंतप्यतेवीरविवत्सासौरभीयथा ॥ सोपिशक्रादपिमहान्पितातेगरुडध्वजः २८
इहत्वांनाभिजानातिबालमेवोपवाहितं॥ कांतवृष्णिकुमारस्त्वंनहित्वंशंबरात्मजः२९वीरनैवंविधान्पुत्रान्दानवाजनयंतिहि॥अतोहंकामयामित्वांनहित्वं
जनितोमया ३० रूपंतेसौम्यपश्यंतीसीदामित्वद्दिदुर्बला ॥ यन्मेव्यवसितंकांतयत्तुमेत्वद्दिवर्तते ३१ तन्मेमनसिवार्ष्णेयप्रतिसंधातुमर्हसि ॥ एष
तेकथितःसर्वःसद्भावस्त्वयियोमम ३२ यथानममपुत्रस्त्वंनपुत्रःशंबरस्यच ॥ श्रुत्वैवमखिलंसर्वंमायावत्याप्रभाषितम् ३३ चक्रायुधात्मजःक्रुद्धःशंबरं
ससमाह्वयत् ॥ सर्वमायास्वभिज्ञोसौनामविश्राव्यचात्मनः ३४ अहोदानवदुष्टात्माकेशवस्यात्मजंशिशुम् ॥ हरतंनिभयश्चैवभयमद्यकरोम्यहम् ३५
कथंवैक्रोधमागच्छेद्वध्यतेवाकथंमया ॥ प्रथमंकिंकरिष्यामियेनकुप्यतिमंदधीः ३६ अस्तिचास्यध्वजंचित्रंसिंहकेतुविभूषितं ॥ तोरणंगृहमा
साद्यउच्छ्रितंमेरुशृंगवत् ३७ एतदुन्मथ्यपातिष्येभल्लेननिशितेनवै । ध्वजच्छेदंविदित्वाथशंबरोनिष्क्रमिष्यति ३८ ततोयुद्धेनहत्वाजौगंतास्मिद्वार
कांप्रति ॥ इत्युक्त्वासज्जमाचक्रेसशरंचापमोजसा ३९ चिच्छेदध्वजरत्नंतुशंबरस्यमहाभुजः ॥ तच्छ्रुत्वातुध्वजच्छेदंप्रद्युम्नेनमहात्मना ४०
क्रुद्धस्त्वाज्ञापयामासपुत्रान्वैकालशंबरः ॥ जिघांसध्वंमहावीरारौक्मिणेयंत्वरान्विताः ४१

३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

॥ ४२ ॥ ४३ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ प्रतीहारोद्वारपालःचित्रंयथारयात्तथाचित्रंआश्चर्यंशशंसाद्भुतंनामाभूतपूर्वम् ॥ ५२ ॥ ५३

नैनंवैद्रष्टुमिच्छामिममविप्रियकारकं ॥ श्रुत्वातुशंबराद्वाक्यंसुतास्तेशंबरस्यह ४२ संनद्धानिर्ययुर्हृष्टाःप्रद्युम्नवधकांक्षया ॥ चित्रसेनोतिसेनश्चविष्वक्से
नोगदस्तथा ४३ श्रुतसेनःसुषेणस्तुसोमसेनोमनस्तथा ॥ सेनानीःसैन्यहंताचसेनाहासैनिकस्तथा ४४ सेनस्कंधोतिसेनश्चसेनकोजनकःसुतः ॥ सका
लोविकलःशांतःसशांतांतकरोविभुः ४५ कुंभकेतुःसुदंष्ट्रश्चकेशिरित्येवमादयः ॥ चक्रतोमरशूलानिपट्टिशानिपरश्वधान् ४६ गृहीत्वानिर्ययुर्हृष्टामन्यु
नापरमाप्लुताः ॥ आह्वयंतममित्रंवैतस्थुःसंग्राममूर्द्धनि ४७ प्रद्युम्नस्तुमहाबाहूरथमारुह्यसत्वरम् ॥ निर्ययौचापमादायसंग्रामाभिमुखस्तदा ४८ ततः
प्रवृत्तंयुद्धंतुतुमुलंलोमहर्षणम् ॥ शंबरस्यतुपुत्राणांकेशवस्यचसूनुना ४९ ततोदेवाःसगंधर्वाःसमहोरगचारणाः ॥ देवराजंपुरस्कृत्यविमानाग्रेषुधिष्ठि
ताः ५० नारदस्तुंबुरुश्चैवहाहाहूहूश्चगायनाः ॥ अप्सरोभिःपरिवृताःसर्वेतत्रावतस्थिरे ५१ देवराजप्रतीहारोगंधर्वश्चित्रमद्भुतम् ॥ शशंसदेवराजायव
ज्रिणेतद्विचेष्टितम् ५२ शंबरस्यशतंपुत्राएकःकृष्णस्यचात्मजः॥ बहूनांयुध्यतामेषःकथंविजयमाप्नुयात् ५३ तच्छ्रुत्वाभाषितंतस्यप्रहस्यबलसूदनः ॥
उवाचवचनंचेदंशृणुयोस्यपराक्रमः ५४ कामोयंपूर्वदेहेतुहरक्रोधाग्निनाहतः ॥ रत्याप्रसादितोदेवःकामपत्न्यात्रिलोचनः ॥ परितुष्टेनदेवेनवरमस्याःप्र
दीयते ५५ विष्णुर्मानुषदेहस्तुद्वारकायांभविष्यति ॥ तस्यपुत्रत्वमस्यैवभविष्यतिनसंशयः ५६ अनंगइतिविख्यातस्त्रैलोक्येतुमहायशाः ॥ तत्रोत्प
न्नोमहातेजाःशंबरंघातयिष्यति ५७ सप्ताहेजातमात्रेतुरुक्मिण्याःक्रोडसंस्थितम् ॥ आस्थायशंबरोमायांप्रद्युम्नमपनेष्यति ५८ तद्गच्छशंबरगृहंभार्या
मायावतीभव ॥ मायारूपप्रतिच्छन्नाशंबरंमोहयिष्यसि ५९ तत्रत्वमात्मनःकांतंबालरूपंविवर्द्धय ॥ प्राप्तयौवनदेहस्तुशंबरंनिहनिष्यति ६० ततस्त्व
यासहानंगोद्वारकांवैगमिष्यति ॥ रमिष्यतित्वयासार्द्धंशैलपुत्र्यायथाह्यहम् ६१ एवमादिश्यदेवेशोजगामपुरुषोत्तमः ॥ कैलासंमेरुसंकाशंसिद्धचारण
सेवितम् ६२ कामपत्नीप्रणम्याथदेवदेवमुमापतिम् ॥ जगामशंबरगृहंकालस्यांतंप्रतीक्षती ६३ एवमेषमहाबाहुःशंबरंनिहनिष्यति ॥ सहपुत्रेणप्रद्युम्नो
हंतातस्यदुरात्मनः ६४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशंबरवधेचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रवृत्तं
युद्धंतुतुमुलंलोमहर्षणम् ॥ शंबरस्यतुपुत्राणांरुक्मिण्यानंदनस्यच १ ततःक्रुद्धामहादैत्याःशरशक्तिपरश्वधान् ॥ चक्रतोमरकुंतानिभुशुंडीर्मुशलानिच २

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ इतिश्रीम० खि० ह० वि० प० टी० चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
ततइति ॥ १ ॥ २ ॥

सर्वमस्यतेक्षिप्यतेनेनेतिसर्वास्त्रंतत्रतद्धनुश्चतस्मात् ॥ ३॥ ४ ॥ अनंगःप्रद्युम्नः ॥ ५ ॥ ६ ॥ समयुध्यतएकत्वमार्षंयुद्धंकृतवंतः ॥ ७ ॥ ८ ॥ ९ ॥ १० ११ ॥ ऋष्याः

युगपत्पातयंतिस्मप्रद्युम्नोपरिवेगिताः ॥ कार्ष्णायनिस्तुसंक्रुद्धःसर्वास्त्रधनुषश्च्युतैः ३ एकैकंपंचभिःक्रुद्धश्चिच्छेदरणमूर्द्धनि ॥ पुनरेवासुराःक्रुद्धाःसर्वेते कृतनिश्चयाः ४ ववृषुःशरजालानिप्रद्युम्नवधकांक्षया ॥ ततःप्रकुपितोनंगोधनुरादायसत्वरः ५ शंबरस्यजघानाशुदशपुत्रान्महौजसः ॥ ततोपरेणभल्लेनकु पितःकेशवात्मजः ६ चिच्छेदाशुशिरस्तस्यचित्रसेनस्यवीर्यवान् ॥ ततस्तेहतशेषास्तुसमेत्यसमयुध्यत ७ शरवर्षंविमुंचंतोह्यभ्यधावन्जिघांसितुम् ॥ ततःसंधायबाणांस्तेविमुंचंतोरणोत्सुकाः ८ क्रीडन्निवमहातेजाःशिरांस्येषामपातयत् ॥ निहत्यसमरेसर्वान्शतमुत्तमधन्विनाम् ९ प्रद्युम्नःसमराकांक्षी तस्थौसंग्राममूर्द्धनि ॥ हतंपुत्रशतंश्रुत्वाशंबरःक्रोधमादधे १० सूतंसंचोदयामासरथंमेसंप्रयोजय ॥ राज्ञोवाक्यंनिशम्याथप्रणम्यशिरसाभुवि ११ स सैन्यंनोदयामासरथंससुसमाहितम् ॥ युक्तमृष्यसहस्रेणसर्पराजसकेतनम् १२ शार्दूलचर्मसंविष्टंकिंकिणीजालमालिनम् ॥ ईहामृगगणाकीर्णंपंक्तिभ क्तिविराजितम् १३ ताराचित्रपिनद्धांगंस्वर्णकूबरभूषितम् ॥ सुपताकमहोच्छ्रायंमृगराजोग्रकेतनम् १४ सुविभक्तवरूथंचलोहेषावज्रकूबरम् ॥ मंदरो दग्रशिखरंचारुचामरभूषितम् १५ नक्षत्रमालापिहितंहेमदंडसमाहितम् ॥ विराजमानंश्रीमंतमारोहच्छंबरोरथम् १६ कांचनंचित्रसन्नाहंधनुर्गृह्यशरां स्तथा ॥ प्रस्थितःसमराकांक्षीमृत्युनापरिचोदितः १७ चतुर्भिःसचिवैःसार्द्धंसैन्येनमहतावृतः ॥ दुर्धरःकेतुमालीचशत्रुहंताप्रमर्दनः १८ एतैःपरि वृतोमात्यैर्युयुत्सुःप्रस्थितोरणे ॥ दशनागसहस्राणिरथानांद्विशतेतथा १९ हयानांचाष्टसाहस्रैःप्रयुतैश्चपदातिनाम् ॥ एतैःपरिवृतोयोधैःशंबरःप्रययौ तदा २० प्रयातस्यतुसंग्रामेउत्पाताबहवोभवन् ॥ गृध्रचक्राकुलेव्योम्निसंध्याकाराभ्रनादितम् २१ गर्जंतिपरुषंमेघाःनिर्घातश्चांबरात्पतत् ॥ शिवाविनेदु रशिवंसैन्यंसंकालयन्महत् २२ ध्वजशीर्षेपतद्गृध्रःकांक्षन्वैदानवासृजम् ॥ रथाग्रेपतितश्चास्यकबंधोभुविदृश्यते २३ वीचीकूचीतिवाशंतिशंबरस्यरथो परि ॥ स्वर्भानुग्रस्तआदित्यःपरिघैःपरिवेष्टितः २४ स्फुरतेनयनंचास्यसव्यंभयनिवेदनम् ॥ बाहुःप्रकंपतेसव्यःप्रस्खलन्रथवाजिनः २५ ध्वांक्षोमूर्ध्नि निपतितःशंबरस्यसुरारिणः ॥ ववर्षरुधिरंदेवःशर्करांगारमिश्रितम् २६ उल्कापातसहस्राणिनिपेतूरणमूर्द्धनि ॥ प्रतोदोन्यपतद्धस्तात्सारथेर्हययायिनः ॥ २७ एतानचिंतयित्वातुउत्पातान्समुपस्थितान् ॥ प्रययौशंबरःक्रुद्धःप्रद्युम्नवधकांक्षया २८

मृगविशेषास्तेषांसहस्रेण ॥ १२ ॥ पंक्तिभक्तिभिः दशाभिश्चित्रभागैःउपर्युपरिकोष्ठकैर्विराजितंशोभमानम् ॥ १३ ॥ १४ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ निर्घातःअशनिः पतत्अपतत् संकालयन्क्षपयन् ॥ २२ ॥ गृध्रःदानवासृजंदानवरक्तम् ॥ २३ ॥ वाशंतिपक्षिणइतिशेषः ॥ २४ ॥ २५ ॥ सुरारिणःदेवशत्रोः ॥ २६ ॥ २७ ॥ २८ ॥

२९ ॥ ३० ॥ असंख्यैःसंख्यातुमयोग्यैःअतिप्रसिद्धनामाभिरित्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ बिभेदाबिभिदुः ॥

भेरीमृदंगशंखानांपणवानकदुंदुभेः ॥ युगपन्नाद्यमानानांपृथिवीसमकंपत २९ तेनशब्देनमहतासंत्रस्तामृगपक्षिणः ॥ समंताद्दुद्रुवुस्तस्माद्भयविक्लवचेतसः ३० रणमध्येस्थितःकार्ष्णिश्चितयन्निधनंरिपोः ॥ सैन्यैःपरिवृतोसंख्यैर्युद्धायकृतनिश्चयः ३१ क्रुद्धःशरसहस्रेणप्रद्युम्नंसमताडयत् ॥ संप्राप्तांश्चैवतान्बाणांश्छिच्छेदकृतहस्तवत् ३२ प्रद्युम्नोधनुरादायशरवर्षमुमोचह ॥ तास्मिन्सैन्येनकोप्यस्तियोनविद्धःशरेणवै ३३ प्रद्युम्नशरपातेनतत्सैन्यंविमुखीकृतम् ॥ शंबरस्यतथाभ्याशेस्थितंसंहृत्यभीतवत् ३४ स्वबलंविद्रुतंदृष्ट्वाशंबरःक्रोधमूर्च्छितः ॥ आज्ञापयामासतदासचिवान्दानवेश्वरः ३५ गच्छध्वंमन्नियोगेनप्रहरध्वंरिपोःसुतम् ॥ नोपेक्षणीयःशत्रुर्वैवध्यतांक्षिप्रमेषवै ३६ उपेक्षितइवव्याधिःशरीरंनाशयेद्ध्रुवम् ॥ तदेषदुर्मतिःपापोवध्यतांमत्प्रियेप्सया ३७ ततस्तेसचिवाःक्रुद्धाःशिरसागृह्यशासनम् ॥ शरवर्षंविमुंचंतस्त्वरितानोदयन्रथान् ३८ तान्दृष्ट्वाधावतःसंख्येक्रुद्धोमकरकेतनः ॥ चापमुद्यम्यसंभ्रांतस्तस्थौप्रमुखतोबली ३९ दुर्द्धरंपंचविंशत्याशरैःसन्नतपर्वभिः ॥ बिभेदसुमहातेजाःकेतुमालिंत्रिषष्टिभिः ४० सप्तत्याशत्रुहंतारंद्व्यशीत्यातुप्रमर्दनम् ॥ बिभेदपरमामर्षीरुक्मिण्यानंदिवर्धनः ४१ ततस्तेसचिवाःक्रुद्धाःप्रद्युम्नंशरवृष्टिभिः ॥ एकैकशोबिभेदाजौषष्टिभिःषष्टिभिःशरैः ४२ तानप्राप्तान्शरान्बाणैश्चिच्छेदमकरध्वजः ॥ ततोर्द्धचंद्रमादायदुर्द्धरस्यससारथिम् ४३ जघानपश्यतांराज्ञांसर्वेषांसैनिकस्यवै ॥ चतुर्भिरथनाराचैःसुपर्वैःकंकतेजितैः ४४ जघानचतुरःसोश्वान्दुर्द्धरस्यरथंप्रति ॥ एकेनयोक्त्रंछत्रंचध्वजमेकेनबंधुरम् ४५ षष्ट्याचयुगचक्राक्षंचिच्छेदमकरध्वजः ॥ अथापरंशरंगृह्यकंकपत्रंसुतेजितम् ४६ मुमोचहृदयेतस्यदुर्द्धरस्यान्यजीविनः ॥ सगतासुर्गतश्रीकोगतसत्त्वोगतप्रभः ४७ निपपातरथोपस्थात्क्षीणपुण्यइवग्रहः ॥ दुर्द्धरेनिहतेशूरेदानवेदानवेश्वरः ४८ केतुमालीशरव्रातैरभिदुद्रावकृष्णजम् ॥ प्रद्युम्नमथसंक्रुद्धोभ्रुकुटीभीषणाननः ४९ कृत्वाभ्यधावत्सहसातिष्ठतिष्ठेतिचाब्रवीत् ॥ संक्रुद्धःकृष्णसूनुस्तुशरवर्षैरवाकिरत् ५० पर्वतंवारिधाराभिःप्रावृषीवयथाघनः ॥ सविद्धोदानवामात्यःप्रद्युम्नेनधनुष्मता ५१ चक्रमादायचिक्षेपप्रद्युम्नवधकांक्षया ॥ तंतुप्राप्तंसहस्रारंकृष्णचक्रसमद्युतिम् ५२ निपत्योत्पत्यसहसासर्वेषामेवपश्यतां ॥ तेनैवतस्यचिच्छेदकेतुमालेःशिरस्तदा ५३ तद्दृष्ट्वाकर्मविपुलंरौक्मिणेयस्यदेवराट् ॥ विस्मयंपरमंप्राप्तःसर्वैर्देवगणैःसह ५४ गंधर्वाप्सरसश्चैवपुष्पवर्षैरवाकिरन् ॥ केतुमालिंहतंदृष्ट्वाशत्रुहंताप्रमर्दनः ॥ महाबलसमूहेनप्रद्युम्नमथदुद्रुवे ५५ तेगदांमुशलंचक्रंप्रासतोमरसायकान् ॥ भिंदिपालान्कुठारांश्चभास्वरान्कूटमुद्गरान् ५६

४१ ॥ ४२ ॥ ४३ ॥ पर्वैरित्यदंतत्वमार्षम् ॥ ४४ ॥ ४५ ॥ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ५० ॥ ५१ ॥ ५२ ॥ ५३ ५४ ॥ ५५ ॥ ५६ ॥

---

१ संत्यज्य इ० मु० पा०।

युगपत्संक्षिपंतिस्मवधार्थंक्ष्णनंदने ॥ सोपितान्यस्त्रजालानिशस्त्रजालैरनेकधा ५७ चिच्छेदबहुधावीरोदर्शयन्पाणिलाघवम् ॥ गजान्सोभ्यहन त्क्रुद्धोगजारोहान्सहस्रशः ५८ रथान्सारथिभिःसार्द्धंहयांश्चैवममर्दह ॥ पातयंस्तान्शरव्रातैर्नाविद्धः कश्चिदीक्ष्यते ५९ एवंसर्वाणिसैन्यानिममंथ मकरध्वजः ॥ नदींप्रावर्तयद्घोरांशोणितांबुतरंगिणीम् ६० मुक्ताहारोर्मिबहुलांवसामेदोस्थिपंकिनीम् ॥ छत्रद्वीपशरावर्तांरथैःपुलिनमंडिताम् ६१ केयूरकुंडलाकूर्मांध्वजमत्स्यविभूषितां ॥ नागग्राहवतींरौद्रींमत्स्यकूर्मविभूषिताम् ६२ केशशैवलसंछन्नांश्रोणिमूत्रमृणालिकाम् ॥ नराननसुपद्मांच हंसजामरवीजिताम् ६३ शिरस्तिमिसमाकीर्णांशोणितौघप्रवर्तिनीम् ॥ नदींदुस्तरणींभीमामनंगेनप्रवर्तिताम् ६४ दुष्प्रेक्ष्यांदुर्गमांरौद्रांहीनते जःसुदुस्तराम् ॥ शस्त्रग्राहवतींघोरांयमराष्ट्रविवर्द्धनीम् ६५ तत्ररुक्मिसुतःश्रीमान्विलोडयतिधान्विनः ॥ शत्रुहंतारमाश्रित्यशरानभ्यकिरन्बहून् ६६ शत्रुहंतापुनःक्रुद्धोमुमोचशरमुत्तमम् ॥ प्रद्युम्नस्यसमासाद्यहृदयेनिपपातह ६७ सविद्धस्तेनबाणेनप्रद्युम्नोन्ऽयकंपत ॥ शक्तिंजग्राहबलवान् शत्रुहंत्रेमुमूर्षवे ६८ साक्षिप्तारौक्मिणेयेनशक्तिर्ज्वालाकुलारणे ॥ पपातहृदयंभित्त्वाशक्राशनिसमस्वना ६९ सभिन्नहृन्न्यस्तांगोमुक्तमर्मास्थि बंधनः ॥ पपातरुधिरोद्गारीशत्रुहंतामहाबलः ७० पतितंशत्रुहंतारंदृष्ट्वातस्थौप्रमर्दनः ॥ जग्राहमुशलंसोथवचनंचेदमाददे ७१ तिष्ठकिंप्राकृतै रेभिःकरिष्यसिरणप्रियः ॥ मांयोधयस्वदुर्बुद्धेततस्त्वंनभविष्यसि ७२ वृष्णिवंशकुलेजातःशत्रुरस्मत्पितातव ॥ पुत्रंहंतास्म्यहंतस्यततोसौनिहतोभवेत् ७३ मृतेनतेनदुर्बुद्धेसर्वदेवक्षयोभवेत् ॥ दैतेयादानवाःसर्वेमोदंतांहतशत्रवः ७४ हतेत्वयिममास्त्रेणत्वत्समुत्थैश्चशोणितैः ॥ शंबरस्यतुपुत्राणांकरो म्युदकसत्क्रियां ७५ अद्यसाभीष्मकसुताकरुणंविलपिष्यति ॥ निहतंत्वांचशुश्रुत्वैवयौवनस्थंगतायुषं ७६ सतेपिताचक्रधरोनिष्फलाशोभविष्य ति ॥ हतंत्वांसविदित्वाथप्राणांस्त्यक्ष्यतिमंदधीः ७७ इत्युक्त्वापरिघेणाशुताडयद्रुक्मिणीसुतम् ॥ ताडितोहिमहातेजारौक्मिणेयःप्रतापवान् ७८ दोर्भ्यामुत्क्षिप्यतस्यैवरथंमह्यांव्यचूर्णयत् ॥ सोवप्लुत्यरथात्तस्मात्पदातिरवतास्थिवान् ७९ तांगदांगृह्यसहसारौक्मिणेयमुपाद्रवत् ॥ तथैवगदयाकामः प्रमर्दनमपोथयत् ८० हतेप्रमर्दनेदैत्येदृष्ट्वासर्वेप्रदुद्रुवुः ॥ नशक्ताःप्रमुखेस्थातुंसिंहत्रासाद्गजाइव ८१ सारमेयंयथादृष्ट्वाऽविगणोवैपलायते ॥ तथासेनाविषीदंतीप्रद्युम्नस्यभयार्दिता ८२

अस्मत् अस्माकम् ॥ ७३ ॥ ७४ ॥ ७५ ॥ भीष्मसुतारुक्मिणी ॥ ७६ ॥ ७७ ॥ ताडयत् अताडयत् ॥ ७८ ॥ रथमेवोत्क्षिप्यचूर्णयत् ॥ ७९ ॥ तांप्रसिद्धांतयैवरिपुप्रयुक्तयैव ॥ ८० ॥ ८१ अवीतिच्छेदः ॥ ८२ ॥

विशोभनास्रक्चंदनपत्रलेखादिराहितासमवगूहतेदेहंसंकोचयति ॥८३॥ साध्वसैःनिर्दयकार्मुकैः रतिमिवसमरंरतिसमरं पक्षेरतिंसमरइवेतिविग्रहः ८४ इतिश्रीमहाभारतेखिलेषु



क्षतजादिग्धवस्त्रावैमुक्तकेशाविशोभना ॥ रजस्वलेवयुवतिःसेनासमवगूहते ८३ मदनशरविभिन्नासैनिकानभ्ययायाद्युवतिसदृशवेषासाध्वसैःपीड्यमा

१४५ ना ॥ रतिसमरमशक्तावीक्षितुंसोच्छ्रसंतीस्वगृहगमनकामानेच्छतेस्थातुमत्र ८४ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशंबरसैन्यभंगोनामपंचा अ.१०६

धिकशततमोऽध्यायः १०५ ॥ वैशंपायनउवाच ॥ शंबरस्तुततःक्रुद्धःसूतमाहविशांपते ॥ शत्रुप्रमुखतोवीररथंमेवाहयद्रुतम् १ यावदेनंशरैर्हन्मिममवि
प्रियकारकम् ॥ ततोभर्तृवचःश्रुत्वासूतस्तत्प्रियकारकः २ रथंसंचोदयामासचामीकरविभूषितम् ॥ तंदृष्ट्वारथमायांतंप्रद्युम्नःफुल्ललोचनः ३ संदधेचापमा
दायशरंकनकभूषितम् ॥ तेनाहनत्सुसंक्रुद्धःकोपयन्शंबरंरणे ४ हृदयेताडितस्तेनदेवशत्रुःसुविक्लवः ॥ रथशक्तिंसमाश्रित्यतस्थौसोथविचेतनः ५ सचे
तनांपुनःप्राप्यधनुरादायशंबरः ॥ विव्याधकार्ष्णिंकुपितःसप्तभिर्निशितैःशरैः ६ तानप्राप्तान्शरान्सोथसप्तभिःसमधाच्छिनत् ॥ शंबरंचजघानाथसप्तत्या
निशितैःशरैः ७ पुनःशरसहस्रेणकंकबर्हिणवाससा ॥ अहनच्छंबरंक्रोधाद्धाराभिरिवपर्वतं ८ प्रदिशोविदिशश्चैवशरधारासमावृता ॥ सादिशोविदिशश्चै
वशरधारासमावृणोत् ९ अंधकारीकृतंव्योमदिनकर्तानदृश्यते ॥ ततोंधकारमुत्सार्यवैद्युतास्त्रेणशंबरः १० प्रद्युम्नस्यरथोपस्थेशरवर्षमुमोचह ॥ तदस्त्र
जालंप्रद्युम्नःशरेणानतपर्वणा ११ चिच्छेदबहुधाराजन्दर्शयन्पाणिलाघवम् । हतेतस्मिन्महावर्षेशराणांकार्ष्णिनातदा १२ द्रुमवर्षमुमोचाथमाययाका
लशंबरः ॥ द्रुमवर्षोच्छ्रितंदृष्ट्वाप्रद्युम्नःक्रोधमूर्च्छितः १३ आग्नेयास्त्रंमुमोचाथंतेनवृक्षानन्नाशयत् ॥ भस्मीभूतेवृक्षवर्षेशिलासंघातमुत्सृजत् १४ प्र
द्युम्नस्तंतुवायव्यैःप्रोत्सारयतसंयुगे ॥ ततोमायांपरांचक्रेदेवशत्रुःप्रतापवान् १५ सिंहान्व्याघ्रान्वराहांश्चतरक्षून्वृक्षवानरान् ॥ वारणान्वारिदप्रख्यान्हया
नुष्ट्रान्विशांपते १६ मुमोचधनुरायम्यप्रद्युम्नस्यरथोपरि ॥ गंधर्वास्त्रेणचिच्छेदसर्वांस्तान्खंडशस्तदा १७ प्रद्युम्नेनतुसामायाहतातांवीक्ष्यशंबरः ॥
अन्यांमायांमुमोचाथशंबरःक्रोधमूर्च्छितः १८ गजेंद्रान्भिन्नवदनान्षष्टिहायनयौवनान् ॥ महामात्रोत्तमारूढान्कल्पितान्रणकोविदान् १९ तामापतंतीं
मायांतुकार्ष्णिःकमललोचनः ॥ सैंहींमायांसमुत्स्रष्टुंचक्रेबुद्धिंमहामनाः २० सासृष्टासिंहमायातुरौक्मिणेयेनधीमता ॥ मायानागवतीनष्टाआदित्येनेव
शर्वरी २१ निहतांहस्तिमायांतुतांसमीक्ष्यमहासुरः ॥ अन्यांसंमोहिनींमायांसोसृजद्दानवोत्तम २२ हरिवंशेविष्णुपर्वणिटीकायांपंचाधिकशततमोऽध्या १४५

यः ॥ १०५ ॥ शंबरइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ रथशक्तिरथस्योत्साहहेतुंध्वजं शक्तिरस्त्रांतरेसौर्यामुत्साहादौवलेस्त्रियामितिमेदिनी॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९॥ १० ॥
॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ वारिदप्रख्यान्मेघवत् मृज्यमानान् प्रख्याबृहत्प्रेक्षणेवुद्धाविति विश्वः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

तांदृष्ट्वामोहिनींनाममायांमयविनिर्मिताम् ॥ संज्ञास्त्रेणतुप्रद्युम्नोनाशयामासवीर्यवान् २३ शंबरस्तुततःक्रुद्धोहतयामाययातदा ॥ सैंहींमायांमहातेजाः
सोसृजद्दानवेश्वरः २४ सिंहानापततोदृष्ट्वारौक्मिणेयःप्रतापवान् ॥ अस्त्रंगांधर्वमादायशरभानसृजत्तदा ॥ तेष्टापदाबलोदग्रानखदंष्ट्रायुधारणे २५
सिंहान्विद्रावयामासुर्वायुर्जलधरानिव ॥ सिंहान्विद्रवतोदृष्ट्वामाययाष्टापदेनवै २६ शंबरश्चिंतयामासकथमेनंनिहन्मिवै ॥ अहोमूर्खस्वभावोहंयन्म
यानहतःशिशुः २७ प्राप्तयौवनदेहस्तुकृतास्त्रश्चापिदुर्मतिः ॥ तत्कथंनिहनिष्यामिशत्रुंरणशिरस्थितम् २८ मायासातिष्ठतेतीव्रापन्नगीनामभीषणा
दत्तामेदेवदेवेनहरेणासुरघातिना २९ तांसृजामिमहामायामाशीविषसमाकुलाम् ॥ तयादह्येतदुष्टात्माह्येषमायामयोबली ३० सासृष्टापन्न
गीमायाविषज्वालासमाकुला ॥ तयापन्नगमय्यातुसरथंसहवाजिनम् ३१ ससूतंसहिप्रद्युम्नंबबंधशरबंधनैः ॥ बध्यमानंतदादृष्ट्वाआत्मानंवृष्णिवंश
जः ३२ मायांसंचिंतयामाससौपर्णींसर्पनाशिनीम् ॥ साचिंतितामहामायाप्रद्युम्नेनमहात्मना ३३ सुपर्णाविचरंतिस्मसर्पानष्टामहाविषाः ॥
भग्नायांसार्पमायायांप्रशंसंतिसुरासुराः ३४ साधुवीरमहाबाहोरुक्मिण्यानंदवर्धन ॥ यस्त्वयाधर्षितामायातेनस्मपरितोषिताः ३५ हतायांसर्पमाया
यांशंबरश्चिंतयत्पुनः ॥ अस्तिमेकालदंडाभोमुद्गरोहेमभूषितः ३६ तमप्रतिहतंयुद्धेदेवदानवमानवैः ॥ पुरायोममपार्वत्यादत्तःपरमतुष्टया ३७ गृहा
णशंबरेमंत्वंमुद्गरंहेमभूषितम् ॥ मयासृष्टंस्वदेहेवैतपःपरमदुश्चरम् ३८ मायांतकरणंनामसर्वासुरविनाशनम् ॥ अनेनदानवौरौद्रौबलिनौकामरूपिणौ
३९ शुंभश्चैवनिशुंभश्चसगणौसूदितौमया ॥ प्राणसंशयमापन्नेत्वयामोक्ष्यःसशत्रवे ४० इत्युक्त्वापार्वतीदेवीतत्रैवांतरधीयत ॥ तदहंमुद्गरंश्रेष्ठंमो
चयिष्यामिशत्रवे ४१ तस्यविज्ञायचित्तंतुदेवराजोभ्यभाषत ॥ गच्छनारदशीघ्रंत्वंप्रद्युम्नस्यरथंप्रति ४२ संबोधयमहाबाहुंपूर्वजातिंचमोक्षय
वैष्णवास्त्रंप्रयच्छास्मैवधार्थंशंबरस्यच ४३ अभेद्यंकवचंचास्यप्रयच्छासुरसूदने ॥ एवमुक्तोमघवतानारदःप्रययौत्वरन् ४४ आकाशेधिष्ठितोऽ
वोचन्मकरध्वजकेतनम् ॥ कुमारपश्यमांप्राप्तंदेवगंधर्वनारदम् ॥ प्रेषितंदेवराजेनतवसंबोधनायवै ४५ स्मरत्वंपूर्वकंभावंकामदेवोसिमानद ॥ हरको
पानलादग्धस्तेनानंगइहोच्यते ४६ त्वंवृष्णिवंशजातोसिरुक्मिण्यागर्भसंभवः ॥ जातोसिकेशवेनत्वंप्रद्युम्नइतिकीर्त्यसे ४७ आहृत्यशंबरेणत्वामिहा
नीतोसिमानद ॥ सप्तरात्रेत्वसंपूर्णेसूतिकागारमध्यतः ४८ वधार्थंशंबरस्यत्वंह्रियमाणोह्युपेक्षितः केशवेनमहाबाहोदेवकार्यार्थसिद्धये ४९

४२ ॥ ४३ ॥ ४४॥ देवगंधर्वप्रियोनारदोदेवगंधर्वनारदस्तं ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

॥ ५० ॥ तवेति रतिरेवमायामयंशरीरांतरंस्वसदृशंकृत्वामायावतीसंज्ञंकृत्वादैत्यंरमयतीत्यर्थः ॥ ५१ ॥ रते.प्रीते.एतेनरतेःपातिव्रत्यभंगोनास्तीतिदर्शितम् ॥ ५२ ॥ ५३ ॥



येषामायावतीनामभार्यावैशंबरस्यतु ॥ रतिंतांविद्धिकल्याणींतवभार्यांपुरातनीम् ५० तवसंरक्षणार्थायशंबरस्यगृहेवसत् ॥ मायांशरीरजांतस्यमोह
नार्थंदुरात्मनः ५१ रतेःसंपादनार्थायप्रेषयत्यानिशंतदा ॥ एवंप्रद्युम्नबुद्ध्वैतत्रभार्याप्रतिष्ठिता ५२ हतेत्वंशंबरेवीरवैष्णवास्त्रेणसंयुगे ॥ गृह्यमायाव
तींभार्यांद्वारकांगंतुमर्हसि ५३ गृहाणवैष्णवंचास्त्रंकवचंचमहाप्रभम् ॥ शक्रेणतवसगृह्यप्रेषितंशत्रुसूदन ५४ शृणुमेह्यपरंवाक्यंक्रियतामविशं
कया ॥ अस्यदेवरिपोस्तातमुद्गरोनित्यमूर्जितः ५५ पार्वत्यांपरितुष्टायांदत्तःशत्रुनिबर्हणः ॥ अमोघश्चैवसंग्रामेदेवदानवमानवैः ५६ तदस्त्रप्रति
घातार्थंदेवींत्वंस्मर्तुमर्हसि ॥ स्तव्याचैवनमस्याचमहादेवीरणोत्सुकैः ५७ तत्रवैक्रियतांयत्नःसंग्रामेरिपुणासह ॥ इत्युक्त्वानारदोवाक्यंप्रययौयत्रवा
सवः ५८ इतिश्रीम०खिलेषुहरिवंशेविष्णुपर्वणिनारदवाक्यंनामषडधिकशततमोध्यायः ॥ १०६ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ शंबरस्तुततः
क्रुद्धोमुद्गरंतंसमाददे ॥ मुद्गरेगृह्यमाणेतुद्वादशार्काःसमुत्थिताः १ पर्वताश्चलिताःसर्वेतथैववसुधातलम् ॥ उन्मार्गाःसागरायाताःसंक्षुब्धाश्चापिदेवताः
२ गृध्रचक्राकुलंव्योमउल्कापातोबभूवह ॥ ववर्षरुधिरंदेवःपरुषंपवनोववौ ३ एवंदृष्ट्वामहोत्पातान्प्रद्युम्नःसत्वरान्वितः ॥ अवतीर्यरथाद्वीरःकृतांजलिपु
टःस्थितः ४ देवींसस्मारमनसापार्वतींशंकरप्रियाम् ॥ प्रणम्यशिरसादेवींस्तोतुंसमुपचक्रमे ५ ॥ प्रद्युम्नउवाच ॥ ओंनमःकात्यायन्यैगिरिशायैनमो
नमः ॥ नमस्त्रैलोक्यमायायैकात्यायन्यैनमोनमः ६ नमःशत्रुविनाशिन्यैनमोगौर्यैशिवप्रिये ॥ नमस्येशुंभमथनींनिशुंभमथनीमपि ७ कालरात्रिनमस्तु
भ्यंकौमार्यैचनमोनमः ॥ कांतारवासिनींदेवींनमस्यामिकृतांजलिः ८ विंध्यवासिनींदुर्गघ्नांरणदुर्गांरणप्रियाम् ॥ नमस्यामिमहादेवींजयांचविजयांतथा
९ अपराजितांनमस्येहमजितांशत्रुनाशिनीम् ॥ घंटाहस्तांनमस्यामिघंटामालाकुलांतथा १० त्रिशूलिनींनमस्यामिमहिषासुरघातिनीम् ॥ सिंहान
नांनमस्यामिसिंहप्रवरकेतनाम् ११ एकानंशांनमस्यामिगायत्रींयज्ञसत्कृताम् ॥ सावित्रींचापिविप्राणांनमस्येहंकृतांजलिः १२ रक्षमांदेविसततंसंग्रा
मेविजयंकुरु ॥ इतिकामवचस्तुष्टादुर्गासंप्रीतमानसा १३ उवाचवचनंदेवीसुप्रीतेनांतरात्मना ॥ पश्यपश्यमहाबाहोरुक्मिण्यानंदवर्द्धन १४ वरंवरयव
त्सत्वममोघंदर्शनंमम ॥ देव्यास्तुवचनंश्रुत्वारोमांचोद्गतमानसः १५ प्रणम्यशिरसादेवींविज्ञप्तुमुपचक्रमे ॥ यदित्वंदेवितुष्टासिदीयतांमेयदीप्सितं १६



॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांषडधिकशततमोऽध्यायः ॥ १०६ ॥ शंबरस्त्विति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
॥ ५ ॥ गिरीशायैगिरिशायैदैर्घ्यमार्षम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

वरंचवरदेयाचेसर्वामित्रेषुमेजयः॥ यस्त्वयामुद्गरोदत्तःशंबरस्यात्मसंभवः १७ एषमेगात्रमासाद्यमालापद्मवतीभवेत् ॥ तथास्त्वितिचसाप्युक्त्वातत्रैवांत
र्धीयत १८ प्रद्युम्नस्तुमहातेजास्तुष्टोरथमथारुहत् ॥ मुद्गरंतंगृहीत्वाचशंबरःक्रोधमूर्च्छितः १९ भ्रामयित्वासचिक्षेपप्रद्युम्नोरसिवीर्यवान् ॥ सगत्वा
मदनाभ्यासंमालाभूत्वातुपौष्करी २० प्रद्युम्नस्यचकंठेतुसमासक्ताव्यराजत ॥ नक्षत्राणांतुमालायांयथापरिवृतोविधुः २१ ततोदेवाःसगंधर्वाःसिद्धाश्च
परमर्षयः ॥ साधुसाध्वितिवाचोचुःपूजयन्केशवात्मजम् २२ मुद्गरंपुष्पभूतंतुदृष्ट्वाप्रद्युम्नसन्निधौ ॥ वैष्णवंपरमास्त्रंतुनारदेनयथाहृतं २३संदधेचापमा
नम्यइदंवचनमब्रवीत् ॥ यद्यहंरुक्मिणीपुत्रःकेशवस्यात्मजोह्यहम् २४ तेनसत्येनबाणेनजहित्वंशंबरंरणे ॥ इत्युक्त्वाचापमाकृष्यसंधायचमहाम
नाः २५ चिक्षेपशंबरस्याथदहँल्लोकत्रयंयथा ॥ सक्षिप्तोवृष्णिसिंहेनशरःक्रव्यादमोहनः२६ हृदयंशंबरस्याथभित्त्वाधरणिमागतः॥ नचास्यमांसंनस्नायु
र्नास्थिनत्वङ्गशोणितम् २७ सर्वंतद्भस्मसाद्भूतंवैष्णवास्त्रस्यतेजसा ॥ हतेदैत्येमहाकायेदानवेशंबरेधमे २८ जहृषुर्देवगंधर्वानन्तृतुश्चाप्सरोगणाः ॥ उर्व
शीमेनकारंभाविप्रचित्तिस्तिलोत्तमा २९ नन्तृतुर्हृष्टमनसोजगत्स्थावरजंगमं॥ देवराजस्तुसुप्रीतःसर्वदेवगणैःसह ॥ प्रद्युम्नंपुष्पवर्षेणतमभ्यर्च्यप्रहृष्टवत्
३० अथसमरहतेतुदैत्यराजेमधुमथनस्यसुतेनवैष्णवास्त्रैः ॥ विगतरिपुभयाःसुराश्चजग्मुर्मकरविभूषणकेतनस्तुवंतः ३१ सचसमरपरिश्रमंवहन्वैनगरमुखंप्र
विवेशरौक्मिणेयः ॥ प्रियतमइवकांतयाप्रहृष्टस्त्वरितपदंरतिदर्शनंचकार ३२ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिशंबरवधोनामसप्ताधिकश
ततमोऽध्यायः ॥ १०७ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ समाप्तमायोमायज्ञोविक्रांतःसमरेऽव्ययः ॥ अष्टम्यांनिहतोयुद्धेमायावीकालशं
बरः १ तमृक्षवंतेनगरेनिहत्यासुरसत्तमम् ॥ गृह्यमायावतींदेवीमागच्छन्नगरंपितुः २ सोंतरिक्षगतोभूत्वामायावीशीघ्रविक्रमः ॥ आजगामपुरींरम्यार
क्षितांतेजसापितुः ३ सोऽतरिक्षान्निपतितःकेशवांतःपुरेशिशुः ॥ मायावत्यासहतयारूपवानिवमन्मथः ४ तस्मिंस्तत्रावपतितेमहिष्यःकेशवस्ययाः ॥
विस्मिताश्चैवहृष्टाश्चभीताश्चैवाभवंस्ततः ५ ततस्तंकामसंकाशंकांतयासहसंगतम् ॥ प्रेक्षंत्योहृष्टवदनाःपिबंत्योनयनोत्सवम् ६ तंव्रीडितमुखंदृष्ट्वालज्ज
मानंपदेपदे ॥ अभवन्स्निग्धसंकल्पाःसर्वास्ताःकृष्णयोषितः ७ रुक्मिणीचैवतंदृष्ट्वाशोकार्तापुत्रगृद्धिनी ॥ सपत्नीशतसंकीर्णासबाष्पावाक्यमब्रवीत् ८
यादृक्स्वप्नोमयादृष्टोनिशायायौवनेगते ॥ कंसारिणाममानीयदत्तंसाहारपल्लवं ९

शशिरश्मिप्रतीकाशंमुक्तादामविभूषितम् ॥ केशवेनांकमारोप्यममकंठेन्यबध्यत १० श्यामासुचारुकेशास्त्रीशुक्लांबरविभूषिता ॥ पद्महस्तानिरीक्षंतीप्र
१४७ विष्टाममवेश्मनि ११ तयापुनरहंगृह्यस्नापितारुचिरांबुना ॥ कुशेशयमयींमालांस्त्रीसंगृह्याथपाणिना १२ ममसूर्धन्युपाघ्रायदत्तास्वच्छातयामम ॥ ए अ.१०८
वंस्वप्नान्कीर्तयंतीरुक्मिणीहृष्टमानसा १३ सखीजनवृतादेवीकुमारंवीक्ष्यतंमुहुः ॥ धन्यायाःखल्वयंपुत्रोदीर्घायुःप्रियदर्शनः १४ ईदृशःकामसंका
शोयौवनेप्रथमेस्थितः ॥ जीवपुत्रत्वयापुत्रकासौभाग्यसमन्विता १५ किमर्थंचांबुदश्यामःसभार्यस्त्वमिहागतः ॥ अस्मिन्वयसिसुव्यक्तंप्रद्युम्नोममपुत्रकः
१६ भवेद्यदिननीतःस्यात्कृतांतेनबलीयसा ॥ व्यक्तंकृष्णकुमारस्त्वंनमिथ्याममतर्कितम् १७ विज्ञातोसिमयाचिह्नैर्विनाचक्रंजनार्दनः ॥ मुखंनारा
यणस्येवकेशाःकेशांतएवच १८ ऊरूवक्षोभुजौतुल्यौहालिनःश्वशुरस्यमे ॥ कस्त्वंवृष्णिकुलंसर्वंद्योतयन्वपुषास्थितः १९ अहोनारायणस्यैवदिव्या
तेपरमातनुः ॥ एतस्मिन्नंतरेकृष्णःसहसाप्रविवेशह ॥ नारदस्यवचःश्रुत्वाशंबरस्यवधंप्रति २० सोपश्यत्तंसुतंज्येष्ठंसिद्धंमन्मथलक्षणैः ॥ स्नुषांमाया
वतींचैवहृष्टचेताजनार्दनः २१ ॥ ॥ कृष्णउवाच ॥ ॥ सोऽब्रवीत्सहसादेवींरुक्मिणींदेवतामिव ॥ अयंसदेविसंप्राप्तःसुतश्चापधरस्तव २२ अनेनशं
बरंहत्वामायायुद्धविशारदम् ॥ हतामायासुताःसर्वायाभिर्देवानबाधयत् २३ सतीचेयंशुभासाध्वीभार्यावैतनयस्यते ॥ मायावतीतिविख्याताशंबरस्यगृ
होषिता २४ माचतेशंबरस्येयंपत्नीतिभवतुव्यथा ॥ मन्मथेतुगतेनाशंगतेचानंगतांपुरा २५ कामपत्नीनिकांतैषाशंबरस्यरतिप्रिया ॥ मायारूपेणतंदैत्यं
मोहयत्यसकृच्छुभा २६ नचैषातस्यकौमारेवशेतिष्ठतिशोभना ॥ आत्ममायामयंकृत्वारूपंशंबरमाविशत् २७ पत्न्येषाममपुत्रस्यस्नुषातववरांगना ॥ लो
ककांतस्यसाहाय्यंकरिष्यतिमनोमयम् २८ प्रवेशयैनांभवनंपूज्यांज्येष्ठांस्नुषांमम ॥ चिरंप्रनष्टंचसुतंभजस्वपुनरागतम् २९ ॥ ॥ वैशंपायनउवाच ॥
श्रुत्वातुवचनंदेवीकृष्णेनोदाहृतंतदा ॥ प्रहर्षमतुलंलब्ध्वारुक्मिणीवाक्यमब्रवीत् ३० अहोधन्यतरास्मीतिवीरपुत्रसमागमात् ॥ अद्यमेसफलःकामः
पूर्णोमेद्यमनोरथः ३१ चिरप्रनष्टपुत्रस्यदर्शनंप्रिययासह ॥ आगच्छपुत्रभवनंसभार्यःप्रविवेशह ३२ ततोऽभिवाद्यचरणौगोविंदंमातरंचताम् ॥ प्रद्यु
म्नःपूजयामासहलिनंचमहाबलम् ३३ उत्थाप्यतंपरिष्वज्यमूर्ध्न्युपाघ्रायवीर्यवान् ॥ प्रद्युम्नंबलिनांश्रेष्ठंकेशवःपरवीरहा ३४ स्नुषांचोत्थाप्यतांदेवींरु १४७
क्मिणीरुक्मभूषणा ॥ परिष्वज्योपसंगृह्यस्नेहाद्गद्गदभाषिणी ३५

समेत्यभुवनंपत्न्याशचींद्रमदितिर्यथा ॥ प्रवेशयामासतदारुक्मिणीसुतमागतम् ३६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणि अष्टाधिकशतत मोध्यायः ॥ १०८ ॥ ७ ॥ वैशंपायनउ० ॥ ॥ अत्राश्चर्यात्मकंस्तोत्रमाह्निकंयजतांवर ॥ प्रद्युम्नेद्वारकांप्राप्तेहत्वातंकालशंबरम् १ बलदेवेनरक्षार्थंप्रो क्तमाह्निकमुच्यते ॥ यजस्वातुनृपश्रेष्ठसायंपूतात्मतांव्रजेत् २ कीर्तितंबलदेवेनविष्णुनाचैवकीर्तितम् ॥ धर्मकामैश्चमुनिभिर्ऋषिभिश्चापिकीर्तितम् ३ कर्हिचिद्रुक्मिणीपुत्रोहलिनासंयुतोगृहे ॥ उपविष्टःप्रणम्याथतमुवाचकृतांजलिः ४ ॥ ॥ प्रद्युम्नउवाच ॥ ॥ कृष्णानुजमहाभागरोहिणीतनयप्रभो ॥ किंचित्स्तोत्रंममब्रूहियज्जप्त्वानिर्भयोभवम् ५ ॥ ॥ श्रीबलदेवउवाच ॥ ॥ सुरासुरगुरुर्ब्रह्मापातुमांजगतःपतिः ॥ अथोंकारवषट्कारौसावित्रीविधय स्त्रयः ६ ऋचोयजूंषिसामानिच्छंदांस्याथर्वणानिच ॥ चत्वारस्त्वखिलावेदाःसरहस्याःसविस्तराः ७ पुराणमितिहासश्चखिलान्युपखिलानिच ॥ अंगा न्युपांगानितथाव्याख्यातानिचपांतुमाम् ८ पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् ॥ इंद्रियाणिमनोबुद्धिस्तथासत्त्वंरजस्तमः ९ व्यानोदानःसमा नश्चप्राणोपानश्चपंचमः ॥ वायवःसप्तचैवान्येयेष्वायत्तमिदंजगत् १० मरीचिरंगिरात्रिश्चपुलस्त्यःपुलहःक्रतुः ॥ भृगुर्वसिष्ठोभगवान्पांतुतेमांमहर्षयः ११ कश्यपाद्याश्चमुनयश्चतुर्दशदिशोदश ॥ नरनारायणौदेवौसगणौपांतुमांसदा १२ रुद्राश्चैकादशप्रोक्ताआदित्याद्वादशैवतु ॥ अष्टौचवसवोदेवाआश्वि नौद्वौप्रकीर्तितौ १३ ह्रीःश्रीर्लक्ष्मीःस्वधामेधातुष्टिःपुष्टिःस्मृतिर्धृतिः ॥ आदितिर्दितिर्दनुश्चैवसिंहिकादैत्यमातरः १४ हिमवान्हेमकूटश्चनिषधःश्वेतपर्वतः ऋषभःपारियात्रश्चविंध्योवैडूर्यपर्वतः १५ सह्योदयश्चमलयोमेरुर्मंदरदर्दुराः ॥ क्रौंचकैलासमैनाकाःपांतुमांधरणीधराः १६ शेषश्चवासुकिश्चैवविशालाक्ष श्चतक्षकः ॥ एलापत्रःशुक्लवर्णःकंबलाश्वतरावुभौ १७ हस्तिभद्रःपिटरकःकर्कोटकधनंजयौ ॥ तथापूरणकश्चैवनागश्चकरवीरकः १८ सुमनास्योदधिमुख स्तथाशृंगारपिंडकः ॥ मणिनागश्चभगवांस्त्रिषुलोकेषुविश्रुतः १९ नागराडधिकर्णश्चतथाहारिद्रकोपरः ॥ एतेचान्येचबहवोयेचान्येनानुकीर्तिताः २० भूधराःसत्यधर्माणःपातुमांभुजगेश्वराः ॥ समुद्राःपांतुचत्वारोगंगाचसरितांवरा २१ सरस्वतीचंद्रभागाशतद्रुर्देविकाशिवा ॥ द्वारावतीविपाशाचशरयूर्य मुनातथा २२ कल्माषीचरथोष्माचबाहुदाचहिरण्यदा ॥ प्लक्षाचेक्षुमतीचैवस्रवन्तीचबृहद्रथा २३

स्त्रयःअपूर्वविधिर्नियमविधिःपरिसंख्याविधिश्चेतिमीमांसकप्रसिद्धाः ॥ ६ ॥ ऋचइत्यृगाद्यभिमानिनीदेवतालक्ष्यंते ॥ ७ ॥ ८ ॥ ९ ॥ सप्तवायवः आवहःप्रवहश्चैवउद्व हःसंवहस्तथा विवहःप्रवहश्चैवतथापरिवहोनिलइत्यन्यत्रप्रोक्ताः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३

१४८ ख्याताचर्मण्वतीचैवपुण्याचैववधूसरा ॥ एताश्चान्याश्चसरितोयाश्चान्यानानुकीर्तिताः २४ उत्तरापथगामिन्यःसलिलैःस्नपयंतुमाम् ॥ वेणीगोदावरीसी अ.१०१
ताकावेरीकौंकणावती २५ कृष्णावेणामुक्तिमतीतमसापुष्पवाहिनी ॥ ताम्रपर्णीज्योतिरथाउत्पलोदुंबरावती २६ नदीवैतरणीपुण्याविदर्भानर्मदा
शुभा ॥ वितस्ताभीमरथ्याचऐलाचैवमहानदी २७ कालिंदीगोमतीपुण्यानदःशोणश्चविश्रुतः ॥ एताश्चान्याश्चवैनद्योयाश्चान्यानतुकीर्तिताः २८
दक्षिणापथवाहिन्यःसलिलैःस्नपयंतुमाम् ॥ क्षिप्राचर्मण्वतीपुण्यामहीशुभ्रवतीतथा २९ सिंधुर्वेत्रवतीचैवभोजांतावनमालिका ॥ पूर्वभद्रापराभद्राऊ
र्मिलाचरपरद्रुमा ३० ख्यातावेत्रवतीचैवचापदासीतिविश्रुता ॥ प्रस्थावतीकुंडनदीनदीपुण्यासरस्वती ३१ चित्रघ्नीचेंद्रुमालाचतथामधुमतीनदी ॥
उमागुरुनदीचैवतापीचविमलोदका ३२ विमलाविमलोदाचमत्तगंगापयस्विनी ॥ एताश्चान्याश्चवैनद्योयाश्चान्यानानुकीर्तिताः ३३ तामांसम
भिषिंचंतुपश्चिमामाश्रितादिशम् ॥ भागीरथीपुण्यजलाप्राच्यांदिशिसमाश्रिता ३४ सातुदहतुमेपापंकीर्तिताशंभुनाधृता ॥ प्रभासंचप्रयागंचनैमि
षंपुष्कराणिच ३५ गंगातीर्थंकुरुक्षेत्रंश्रीकंठंगौतमाश्रमम् ॥ रामह्रदंविनशनंरामतीर्थंतथैवच ३६ गंगाद्वारंकनखलंसोमोवैयत्रचोत्थितः ॥ कपा
लमोचनंतीर्थंजंबूमार्गंचविश्रुतम् ३७ सुवर्णबिंदुविख्यातंतथाकनकपिंगलम् ॥ दशाश्वमेधिकंचैवपुण्याश्रमविभूषितम् ३८ बदरीचैवविख्यातानर
नारायणाश्रमः ॥ विख्यातंफल्गुतीर्थंचतीर्थंचंद्रवटंतथा ३९ कोकामुखंपुण्यतमंगंगासागरमेवच ॥ मगधेषुतपोदश्चगंगोद्भेदश्चविश्रुतः ४० तीर्थान्येता
निपुण्यानिसेवितानिमहर्षिभिः ॥ सूकरंयोगमार्गंचश्वेतद्वीपंतथैवच ४१ ब्रह्मतीर्थंरामतीर्थंवाजिमेधशतोपमम् ॥ धारासंपातसंयुक्तागंगाकिल्बिष
नाशिनी ४२ गंगावैकुंठकेदारंसूकरोद्भेदनंपरम् ॥ तंशापमोचनंतीर्थंपुनंत्वेतानिकिल्बिषात् ४३ धर्मार्थकामविषयोयशःप्राप्तिःशमोदमः ॥ वरुणे
शोधनदोयमोनियमएवच ४४ कालोनयःसंनतिश्चक्रोधोमोहःक्षमाधृतिः ॥ विद्युतोभ्राण्यथौषध्यःप्रमादोन्मादविग्रहाः ४५ यक्षाःपिशाचगंधर्वाः
किन्नराःसिद्धचारणाः ॥ नक्तंचराःखेचरिणोदंष्ट्रिणःप्रियविग्रहाः ४६ लंबोदराश्चबलिनःपिंगाक्षाविश्वरूपिणः ॥ मरुतःसहपर्जन्याःकलात्रुटिलवाः
क्षणाः ४७ नक्षत्राणिग्रहाश्चैवऋतवःशिशिरादयः ॥ मासाहोरात्रयश्चैवसूर्याचंद्रमसौतथा ४८ आमोदश्चप्रमोदश्चप्रहर्षःशोकएवच ॥ रजस्तमस्तपःस १४८
त्यंशुद्धिर्बुद्धिर्धृतिःश्रुतिः ४९ रुद्राणीभद्रकालीचभद्राज्येष्ठातुवारुणी ॥ भासीचकालिकाचैवशांडिलीचेतिविश्रुता ५०

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

आर्याकुहूःसिनीवालीभीमाचित्ररथीरतिः ॥ एकानंशाचकूश्मांडीदेवीकात्यायनीचया ५१ लोहित्याजनमाताचदेवकन्यातुयाःस्मृताः ॥ गोनंदादेव
पत्नीचमांरक्षंतुसबांधवं ५२ नानाभरणवेषाश्चनानारूपांकिताननाः ॥ नानादेशविचारिण्योनानाशस्त्रोपशोभिताः ५३ मेदोमज्जाप्रियाश्चैवमद्यमांस
वसाप्रियाः ॥ मार्जारद्वीपिवक्त्राश्चगजसिंहनिभाननाः ५४ कंकवायसगृध्राणांक्रौंचतुल्याननास्तथा ॥ व्यालयज्ञोपवीताश्चचर्मप्रावरणास्तथा ५५
क्षतजोक्षितवक्त्राश्चखरभेरीसमस्वनाः ॥मत्सराःक्रोधनाश्चैवप्रासादारुचिरालयाः ५६ मत्तोन्मत्तप्रमत्ताश्चप्रहरंत्यश्चधिष्ठिताः ॥ पिंगाक्षापिंगकेशाश्चततो
न्यालूनमूर्धजाः ५७ ऊर्ध्वकेश्यःकृष्णकेश्यःश्वेतकेश्यस्तथावराः ॥ नागायुतबलाश्चैववायुवेगास्तथापराः ५८ एकहस्ताएकपादाएकाक्षाःपिंगलामताः
॥ बहुपुत्राल्पपुत्राश्चद्विपुत्राःपुत्रमंडिकाः ५९ मुखमुंडीबिडालीचपूतनागंधपूतना ॥ शीतवातोष्णवेतालीरेवतीग्रहसंज्ञिताः ६० प्रियहास्याःप्रियक्रोधाः
प्रियावासाःप्रियंवदाः ॥ सुखप्रदाश्चासुखदाः सदाद्विजजनप्रियाः ६१ नक्तंचराःसुखोदर्काःसदापर्वणिदारुणाः ॥ मातरोमातृवत्पुत्रंरक्षंतुममनित्यशः
६२ पितामहमुखोद्भूतारौद्रारुद्रांगसंभवाः ॥ कुमारस्वेदजाश्चैवज्वरावैवैष्णवादयः ६३ महाभीमामहावीर्यादर्पोद्भूतामहाबलाः ॥ क्रोधनाऽक्रोधनाःक्रूराः
सुरविग्रहकारिणः ६४ नक्तंचराःकेसरिणोदंष्ट्रिणःप्रियविग्रहाः ॥ लंबोदराजवनिनःपिंगाक्षाविश्वरूपिणः ६५ शक्त्यृष्टिशूलपरिघप्रासचर्मासिपाणयः ॥
पिनाकवज्रमुशलब्रह्मदंडायुधप्रियाः ६६ दंडिनःकुंडिनःशूराजटामुकुटधारिणः ॥ वेदवेदांगकुशलानित्ययज्ञोपवीतिनः ६७ व्यालापीडाःकुंडलिनोवीराः
केयूरधारिणः ॥ नानावसनसंवीताश्चित्रमाल्यानुलेपनाः६८ गजाश्वोष्ट्रर्क्षमार्जारसिंहव्याघ्रनिभाननाः ॥ वराहोलूकगोमायुमृगाखुमहिषाननाः ६९ वाम
नाविकटाःकुब्जाःकरालालूनमूर्धजाः ॥ सहस्रशतशश्चान्येसहस्रजटधारिणः ७० श्वेताःकैलाससंकाशाःकेचिद्दिनकरप्रभाः ॥ केचिज्जलदवर्णाभानीलांज
नचयोपमाः ७१ एकपादाद्विपादाश्चतथाद्विशिरसोपरे ॥ निर्मांसाःस्थूलजंघाश्चव्यादितास्याभयंकराः ७२ वापीतडागकूपेषुसमुद्रेषुसरित्सुच ॥
श्मशानशैलवृक्षेषुशून्यागारनिवासिनः ७३ एतेग्रहाश्चसततंरक्षंतुममसर्वतः ॥ महागणपतिर्नंदीमहाकालोमहाबलः ॥ माहेश्वरोवैष्णवश्चज्वरोलोकभ
यावहौ ७४ ग्रामणीश्चैवगोपालोभृंगरीटिर्गणेश्वरः ॥ देवश्चवामदेवश्चघंटाकर्णःकरंधमः ७५ श्वेतमोदःकपालीचजंभकःशत्रुतापनः ॥ मज्जनोन्मज्ज
नौचोभौसंतापनविलापनौ ७६

॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

निजघासोघमश्चैवस्थूणाकर्णःप्रशोषणः ॥ उल्कामालीधमधमोज्वालामालीप्रदर्शनः ७७ संघट्टनःसंकुटनःकाष्ठभूतःशिवंकरः ॥ कूश्मांडःकुंभमूर्धाचरो
चनोवैकृतोग्रहः ७८ अनिकेतःसुरारिघ्नःशिवश्चाशिवएवच ॥ क्षेमकःपिशिताशीचसुरारिर्हरिलोचनः ७९ भीमकोग्राहकश्चैवतथैवाग्रमयोग्रहः ॥ उप
ग्रहोर्यकश्चैवतथास्कंदग्रहोपरः ८० चपलोसमवेतालस्तामसःसुमहाकपिः ॥ हृदयोद्वर्तनश्चैडःकुंडाशीकंकणप्रियः ८१ हरिश्मश्रुर्गरुत्मंतोमनोमारुतरं
हसः ॥ पार्वत्यारोषसंभूताः सहस्राणिशतानिच ८२ शक्तिमंतोद्युतिमंतोब्रह्मण्याःसत्यसंगराः ॥ सर्वकामापहंतारोद्विषतांचमृधेमृधे ८३ रात्रावहनिदु
र्गेषुकीर्तिताःसकलैर्गुणैः ॥ तेषांगणानांपतयःसगणाःपांतुमांसदा ८४ नारदःपर्वतश्चैवगंधर्वाप्सरसांगणाः ॥ पितरःकारणंकार्यमाधयोव्याधयस्तदा
८५ अगस्त्योगालवोगार्ग्यःशक्तिर्धौम्यःपराशरः ॥ कृष्णात्रेयश्चभगवानसितोदेवलोबलः ८६ बृहस्पतिरुतथ्यश्चमार्कंडेयःश्रुतश्रवाः ॥ द्वैपायनोवि
दर्भश्चजैमिनिर्माठरःकठः ८७ विश्वामित्रोवसिष्ठश्चलोमशश्चमहामुनिः ॥ उत्तंकश्चैवरैभ्यश्चपौलोमश्चद्वितस्त्रितः ८८ ऋषिर्वैकालवृक्षीयोमुनिर्मेधातिथि
स्तथा ॥ सारस्वतोयवक्रीतिःकुशिकोगौतमस्तथा ८९ संवर्तऋष्यशृंगश्चस्वस्त्यात्रेयोविभांडकः ॥ ऋचीकोजमदग्निश्चतथौर्वस्तपसांनिधिः ९० भरद्वा
जःस्थूलशिराःकश्यपःपुलहःक्रतुः ॥ बृहदग्निर्हरिश्मश्रुर्विजयःकण्वएवच ९१ वैतंडीदीर्घतापाश्चवेदगाथोंशुमाञ्छिच्छवः ॥ अष्टावक्रोदधीचिश्चश्वेतकेतु
स्तथैवच ९२ उद्दालकःक्षीरपाणिःशृंगीगौरमुखस्तथा ॥ अग्निवेश्यःशमीकश्चप्रमुचुर्मुमुचुस्तथा ९३ एतेचान्येचऋषयोबहवःशंसितव्रताः ॥
मुनयःशंसितात्मानोयेचान्येनानुकीर्तिताः ९४ क्रतवःश्लाविनःशांताःशांतिंकुर्वंतुमेसदा ॥ त्रयोग्नयस्त्रयोवेदास्त्रैविद्याकौस्तुभोमणिः ९५ उच्चैःश्रवाह
यःश्रीमान्वैद्योधन्वंतरिर्हरिः ॥ अमृतंगौःसुपर्णश्चदधिगौराश्चसर्षपाः ९६ शुक्लाःसुमनसःकन्याःश्वेतच्छत्रंयवाक्षताः ॥ दूर्वाहिरण्यंगंधाश्चवालव्यजनमेवच
९७ तथाप्रतिहतंचक्रंमहोक्षश्चंदनंविषम् ॥ श्वेतोवृषःकरीमत्तःसिंहोव्याघ्रोहयोगिरिः ९८ पृथिवीचोद्धृतालाजाब्राह्मणामधुपायसम् ॥ स्वस्तिकोव
र्द्धमानश्चनद्यावर्तःप्रियंगवः ॥ श्रीफलंगोमयंमत्स्योदुंदुभिःपटहस्वनः ९९ ऋषिपत्न्यश्चकन्याश्चश्रीमद्भद्रासनंधनुः ॥ रोचनारुचकश्चैवनदीनांसंगमो
दकं १०० सुपर्णाःशतपत्राश्चचकोराजीवजीवकाः ॥ नंदीमुखोमयूरश्चबद्धमुक्तामणिध्वजाः १०१ आयुधानिप्रशस्तानिकार्यसिद्धिकराणिच ॥ पुण्यं
वैविगतक्लेशंश्रीमद्वैमंगलान्वितम् १०२

रामेणोदाहृतंपूर्वमायुःश्रीजयकांक्षिणा ॥ यइदंश्रावयेद्विद्वांस्तथैवश्रृणुयान्नरः ३ मंगलाष्टशतंस्नातोजपन्पर्वणिपर्वणि ॥ वधबंधपरिक्लेशंव्याधिशोकपराभवम् ४ नचप्राप्नोतिवैकल्पंपरत्रेहचशर्मदम् ॥ धन्यंयशस्यमायुष्यंपवित्रंवेदसंमितम् ५ श्रीमत्स्वर्ग्यंसदापुण्यमपत्यजननंशिवम् ॥ शुभंक्षेमकरंनृणां मेधाजननमुत्तमं ६ सर्वरोगप्रशमनंस्वकीर्तिकुलवर्द्धनं ॥ श्रद्दधानोदयोपेतोयःपठेदात्मवान्नरः ॥ सर्वपापविशुद्धात्मालभतेचशुभांगतिम् १०७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिबलदेवाह्निकंनामनवाधिकशततमोऽध्यायः ॥ १०९ ॥ छ ॥ वैशंपायनउवाच ॥ हृतोयदेवप्रद्युम्नःशंबरेणात्मघातिना ॥ मासेस्मिन्नेवसांबस्तुजांबवत्यामजायत १ बाल्यात्प्रभृतिरामेणशस्त्रेषुविनियोजितः ॥ रामादनंतरश्चैवमानितःसर्ववृष्णिभिः २ जातमात्रेतत:कृष्णःशुभांतामवसत्पुरीम् ॥ निहतामित्रसामंतःशक्रोद्यानंयथामरः ३ यादवींचश्रियंदृष्ट्वास्वांश्रियंद्वेष्टिवासवः ॥ जनार्दनभयाच्चैवनशांतिंलेभिरेनृपाः ४ कस्यचित्त्वथकालस्यपुरेवारणसाह्वये ॥ दुर्योधनस्ययज्ञेवैसमीयुःसर्वपार्थिवाः ५ तांश्रुत्वामाधवींलक्ष्मींसपुत्रंचजनार्दनम् ॥ पुरींद्वारवतींचैवनिविष्टांसागरांतरे ६ दूतैस्तैःकृतसंधानाःपृथिव्यांसर्वपार्थिवाः ॥ श्रियंद्रष्टुंहृषीकेशमाजग्मुःकृष्णमंदिरम् ७ दुर्योधनमुखाःसर्वेधृतराष्ट्रवशानुगाः ॥ पांडवप्रमुखाश्चैवधृष्टद्युम्नादयोनृपाः ८ पांड्याश्चोलकलिंगेशाबाह्लीकाद्राविडाःखशाः ॥ अक्षौहिणीःप्रकर्षंतोदशचाष्टौचभूमिपाः ९ आजग्मुर्यादवपुरींगोविंदभुजपालिताम् ॥ तेपर्वतंरैवतकंपरिवार्यावनीश्वराः १० विविशुर्योजनाख्यासुस्वासुस्वासुचभूमिषु ॥ ततःश्रीमान्हृषीकेशःसहयादवपुंगवैः ११ समीपंमानवेंद्राणांनिर्ययौकमलेक्षणः ॥ सतेषांनरदेवानांमध्यस्थोमधुसूदनः १२ व्यराजतयदुश्रेष्ठःशरदीवदिवाकरः ॥ सतत्रसमुदाचारंयथास्थानंयथावयः १३ कृत्वासिंहासनेकृष्णःकांचनेनिषसादह ॥ राजानोपियथास्थानंनिषेदुर्विविधेष्वथ ॥ १४ ॥ सिंहासनेषुचित्रेषुपीठेषुचनराधिपाः ॥ सयादवनरेंद्राणांसमाजःशुशुभेतदा १५ सुराणामसुराणांचसदसिब्रह्मणोयथा ॥ तेषांचित्राःकथास्तत्रप्रवृत्तास्तत्समागमे ॥ यदूनांपार्थिवानांचकेशवस्योपश्रृण्वतः १६ एतस्मिन्नंतरेवायुर्ववौमेघरवोपमः ॥ तुमुलंदुर्दिनंचासीत्सविद्युत्स्तनयित्नुमत् १७ तद्दुर्दिनतलंभित्त्वानारदःप्रत्यदृश्यत ॥ संवेष्टितजटाभारोवीणासक्तेनबाहुना १८ सपपातनरेंद्राणांमध्येसागरसंनिभः ॥ नारदोग्निशिखाकारःश्रीमान्शक्रसखोमुनिः १९

॥ १०९ ॥ हृतइति ॥ १ ॥ अनंतरः अनूनः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ योजनाख्यासुबहूनांसैनिकानांप्रधानराज्ञोकोदेशेनाऽमुकदेशोयेन स्थातव्यमित्येवंरूपासुव्यवस्थायोजनास्तदाख्यासु ॥ ११ ॥ १२ ॥ समुदाचारं वंदनादिरूपं शिष्टाचारम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अत्रकूर्मादिक्रमेण आश्चर्यत्वधन्यत्वयोःपराकाष्ठाकृष्णइतिनारदमुखात्तस्यज्ञानंदक्षिणाभिःसहेतिवासुदेवस्यप्रत्युत्तरंयेवि



१५०

तस्मिन्निपतितेभूमौनारदेमुनिपुंगवे ॥ तदद्भुतंमहामेघंव्यपाकृष्यतदुर्दिनम् २० सोवगाह्यनरेंद्राणांमध्येसागरसंनिभः ॥ आसनस्थंयदुश्रेष्ठमुवाचमुनि
रव्ययम् २१ आश्चर्यंखलुदेवानामेकस्त्वंपुरुषोत्तमः ॥ धन्यश्चासिमहाबाहोलोकेनान्योस्तिकश्चन २२ एवमुक्तःस्मितंकृत्वाप्रत्युवाचमुनिंप्रभुः ॥ आश्चर्यश्चै
वधन्यश्चदक्षिणाभिःसहेत्यहम् २३ एवमुक्तोमुनिश्रेष्ठःप्राहमध्येमहीभृताम् ॥ कृष्णपर्याप्तवाक्योस्मिगमिष्यामियथागतम् २४ तंप्रस्थितमभिप्रेक्ष्य
पार्थिवाःप्राहुरीश्वरम् ॥ गुह्यंमंत्रमजानंतोवचनंनारदेरितम् २५ आश्चर्यमित्यभिहितंधन्योसीतिचमाधव ॥ दक्षिणाभिःसहेत्येवंप्रत्युक्तेपिचनारदे २६
किमेतन्नाभिजानीमोदिव्यंमंत्रपदंमहत् ॥ यदिश्राव्यमिदंकृष्णश्रोतुमिच्छामतत्वतः २७ तानुवाचततःकृष्णःसर्वान्नृपार्थिवपुंगवान् ॥ श्रोतव्यंनारदस्त्वे
षद्विजोवःकथयिष्यति २८ ब्रूहिनारदतत्वार्थंश्रोतुकामामहीभुजः ॥ यत्त्वयाभिहितंवाक्यंमयानुप्रतिभाषितम् २९ सपीठेकांचनेशुभ्रेसूपविष्टःस्वलंकृतः ॥
प्रभावंतस्यवंद्यस्यप्रवक्तुमुपचक्रमे ३० ॥ नारदउवाच ॥ श्रूयतांभोनृपश्रेष्ठायावंतःस्थसमागताः ॥ अस्यकृष्णस्यमहतोयथापारमहंगतः ३१ अहंकदाचिद्गं
गायास्तीरेत्रिषवणातिथिः ॥ चराम्येकःक्षपापायेदृश्यमानेदिवाकरे ३२ अपश्यंगिरिकूटाभंकपालद्वयदेहिनम् ॥ क्रोशमंडलविस्तारंतावद्द्विगुणमायतम् ३३
चतुश्चरणसुश्लिष्टंक्लिन्नंचैवसपंकिलम् ॥ ममर्वाणाकृतिंकूर्मंगजचर्मचयोपमम् ३४ सोहंतंपाणिनास्पृष्ट्वाप्रोक्तवान्जलचारिणम् ॥ त्वमाश्चर्यशरीरोसिकूर्मध
न्योसिमेमतः ३५ यस्त्वमेवमभेद्याभ्यांकपालाभ्यांसमावृतः ॥ तोयेचरसिनिःशंकःकिंचिदन्यमचिंतयम् ३६ समामुवाचांबुचरःकूर्मोमानुषवत्स्वयं ॥ किमा
श्चर्यमयिमुनेधन्यश्चाहंकथंविभो ३७ गंगेयंनिम्नगाधन्याकिमाश्चर्यमतःपरं ॥ यत्राहमिवसत्वानिचरंत्ययुतशोद्विज ३८ सोहंकुतूहलाविष्टोनदींगंगामुप
स्थितः ॥ धन्यासित्वंसरिच्छ्रेष्ठेनित्यमाश्चर्यभूषिता ३९ यात्वमेवंमहादेहैःश्वापदैरुपशोभिता ॥ ह्रदिनीसागरंयासिरक्षंतीतापसालयान् ४० एवमुक्तातातोगं
गारूपिणीप्रत्यभाषत ॥ नारदंदेवगंधर्वैशक्रस्यदयितंद्विजम् ४१ मामैवंदेवगंधर्वसंग्रामकलहप्रिय ॥ नाहंधन्याद्विजश्रेष्ठनैवाश्चर्योपशोभिता ४२ तवसत्ये
निविष्टस्यवाक्यंमांप्रतिबाधते ॥ सर्वाश्चर्यकरोलोकेधन्यश्चैवार्णवोद्विज ४३ यत्राहमिवविस्तीर्णाःशतशोयांतिनिम्नगाः ॥ सोहंत्रिपथगावाक्यंश्रुत्वा
र्णवमुपस्थितः ४४ आश्चर्यंखलुलोकानांधन्यश्चासिमहार्णव ॥ येनखल्वसियोनिस्त्वमंभसांसलिलेश्वरः ४५

पुलंदक्षिणैर्यज्ञेश्वरंमांयजंतेतएवमप्याश्चर्यत्वधन्यत्वयोःविश्रांतिजानंतीति ॥ २६ ॥ २७ ॥ २८ २९ ॥ ३० ॥ ३१ ॥ ३२ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥
॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

स्थानेत्वांवारिवाहिन्यःसरितोलोकपावनाः ॥ इमाःसमभिगच्छंतिपत्न्योलोकनमस्कृताः ४६ समुद्रस्त्वेवमुक्तस्तुततोमामवदद्वचः ॥ स्वंजलौघतलं भित्वाभ्युत्थितःसवनेरितः ४७ मामैवंदेवगंधर्वनास्म्याश्चर्योद्विजर्षभ ॥ वसुधेयंमुनेधन्यायत्राहमुपरिस्थितः ४८ ऋतेतुपृथिवींलोकेकिमाश्चर्यमतः परम् ॥ सोहंसागरवाक्येनक्षितिंक्षितितलेस्थितः ४९ कौतूहलसमाविष्टोह्यब्रुवंजगतोगतिम् ॥ धरित्रिदेहिनांयोनेधन्याखल्वसिशोभने ५० आश्चर्यं चापिभूतेषुमहत्याक्षमयायुते ॥ तेनखल्वसिभूतानांधरणीमनुजारणिः ५१ क्षमात्वत्तःप्रभूताचकर्मचांबरगामिनाम् ॥ ततोभूःस्तुतिवाक्येनसामयोक्तेन तेजिता ५२ विहायसहजंधैर्यंप्रत्यक्षामांप्रभाषत ॥ देवगंधर्वमामैवंसंग्रामकलहप्रिय ५३ नास्मिधन्यानचाश्चर्यंपारक्येयंधृतिर्मम ॥ एतेधन्याद्विज श्रेष्ठपर्वताधारयंतिमाम् ५४ आश्चर्याणिचदृश्यंतेएतेलोकस्यहेतवः ॥ सोहंधरणिवाक्येनपर्वतान्समुपस्थितः ५५ धन्याभवंतोदृश्यंतेबह्वाश्चर्याश्चभूध राः ॥ कांचनस्याग्ररत्नस्यधातूनांचविशेषतः ५६ तेनखल्वाकराःसर्वेभवंतोभुविशाश्वताः ॥ तेममैतद्वचःश्रुत्वापर्वतास्तस्थुषांवराः ५७ ऊचुर्मांसांत्वयुक्ता निवचांसिवनशोभिताः ॥ ब्रह्मर्षेनवयंधन्यानाप्याश्चर्याणिसंतिनः ॥ ब्रह्माप्रजापतिर्धन्यःसर्वाश्चर्यःसुरेष्वपि ५८ सोहंप्रजापतिंगत्वासर्वप्रभवमव्ययम् ॥ तस्यवाक्यस्यपर्यायपर्याप्तमिवलक्षये ५९ सोहंपितामहंदेवंलोकयोनिंचतुर्मुखम् ॥ स्तोतुंपश्चादुपगतःप्रणतोवनताननः ६० सोहंवाक्यसमाप्त्यर्थं श्रावयेपद्मयोनिजम् ॥ आश्चर्यंभगवानेकोधन्योसिजगतोगुरुः ६१ नकिंचिदन्यत्पश्यामिभूतंयद्भवतासमम् ॥ त्वत्तःसर्वमिदंजातंजगत्स्थावरजंगमम् ६२ सदेवदानवामर्त्यालोकभूतेंद्रियात्मकाः ॥ भवंतिसर्वदेवेशदक्षासर्वमिदंजगत् ६३ तेनखल्वसिदेवानांदेवदेवःसनातनः ॥ तेषामेवासियत्स्रष्टालोका नामादिसंभवः ६४ ततोमांप्राहभगवान्ब्रम्हालोकपितामहः ॥ धन्याश्चर्याश्रितैर्वाक्यैःकिंमांनारदभाषसे ६५ आश्चर्यंपरमंवेदाधन्यावेदाश्चनारद ॥ ये लोकान्धारयंतिस्मवेदास्तत्वार्थदर्शिनः ६६ ऋक्सामयजुषांसत्यमथर्वणिचयन्मतम् ॥ तन्मयंविद्धिमांविप्रधृतोहंतैर्मयाचते ६७ पारमेष्ठ्येनवाक्येन नोदितोहंस्वयंभुवा ॥ वेदोपस्थानिकांचक्रेमतिसंस्थानविस्तराम् ६८ सोहंस्वयंभूवचनाद्वेदान्वैसमुपस्थितः ॥ अवोचंतांश्चचतुरोमंत्रप्रवचनान्वितान् ६९ धन्याभवंतःपुण्याश्चनित्यमाश्चर्यभूषिताः ॥ आधाराश्चैवविप्राणामेवमाहप्रजापतिः ७० स्वयंभुवोपीहपरंभवत्सुप्रश्नमागतम् ॥ युष्मत्परतरंना स्तिश्रुत्यावातपसापिवा ७१

॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ॥ इतिश्रीमहाभारतेखि



प्रत्यूचुस्तेततोवाक्यंवेदामामभितःस्थिताः ॥ आश्चर्याश्चैवधन्याश्चयज्ञाश्चात्मपरायणाः ७२ यज्ञार्थेचवयंसृष्टाधात्रायेनस्मनारद ॥ तदस्माकंपरोयज्ञोन वयंस्ववशेस्थिताः ७३ स्वयंभुवःपरावेदावेदानांक्रतवःपराः ॥ ततोहमब्रुवंयज्ञान्बृहद्वाग्भिःपुरस्कृतान् ७४ भोयज्ञाःपरमंतेजोयुष्मासुखलुलक्ष्यते ॥ ब्रह्मणाभिहितंवाक्यंयच्चवेदैरुदीरितम् ७५ आश्चर्यमन्यल्लोकेस्मिन्भवद्भ्योनाभिगम्यते ॥ धन्याःखलुभवंतोयेद्विजातीनांस्ववंशजाः ७६ तेपिखल्वग्रयस्तृप्तिंयुष्माभिर्यांतितर्पिताः ॥ भागैश्चत्रिदशाःसर्वेमंत्रैश्चैवमहर्षयः ७७ अग्निष्टोमादयोयज्ञाममवाक्यादनंतरम् ॥ प्रत्यूचुर्मांततोवाक्यंसर्वेयूपध्वजाःस्थिताः ७८ आश्चर्यशब्दोनास्मासुधन्यशब्दोपिवामुने ॥ आश्चर्यंपरमंविष्णुःसह्यस्माकंपरागतिः ७९ यदाज्यंवयमश्नीमोहुतमग्निषुपावनम् ॥ तत्सर्वंपुंडरीकाक्षोलोकमूर्तिःप्रयच्छति ८० सोहंविष्णोर्गतिंप्रेप्सुरिहसंपतितोभुवि ॥ दृष्टश्चायंमयाकृष्णोभवद्भिरिहसंवृतः ८१ यन्मयाभिहितोह्येषत्वमाश्चर्यं जनार्दन ॥ धन्यश्चासीतिभवतांमध्यस्थोह्यत्रपार्थिवाः ८२ प्रत्युक्तोहमनेनाद्यवाक्यस्यास्ययदुत्तरम् ॥ दक्षिणाभिःसहेत्येवंपर्याप्तंवचनंमम ८३ यज्ञानांहिगतिर्विष्णुःसर्वेषांसहदक्षिणः ॥ दक्षिणाभिःसहेत्येवंप्रश्नोममसमाप्तवान् ८४ कूर्मेणाभिहितंपूर्वंपारंपर्यादिहागतम् ॥ सदक्षिणेस्मिन्पुरुषेतद्वाक्यंप्रतिपादितम् ८५ यन्मांभवंतःपृच्छंतिवाक्यस्यास्यविनिर्णयम् ॥ तदेतत्सर्वमाख्यातंसाधयामियथागतम् ८६ नारदेतुगतेस्वर्गंसर्वेतेपृथिवीभुजः विस्मिताःस्वानिराष्ट्राणिजग्मुःसबलवाहनाः ८७ जनार्दनोपिसार्हैतोयदुभिःपावकोपमैः ॥ स्वमेवभवनंवीरोविवेशयदुनंदनः ॥ ८८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिधन्योपाख्यानंनामदशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥

॥ जनमेजयउवाच ॥ ॥ भूयएवमहाबाहोकृष्णस्यजगतांपतेः ॥ माहात्म्यंश्रोतुमिच्छामिपरमंद्विजसत्तम १ नहिमेतृप्तिरस्तीहशृण्वतस्तस्यधीमतः ॥ कर्मणामनुसंधानंपुराणस्यमहात्मनः २ ॥ ॥ वैशंपायनउवाच ॥ ॥ नांतःशक्यःप्रभावस्यवक्तुंवर्षशतैरपि ॥ गोविंदस्यमहाराजश्रूयतामिदमद्भुतम् ३ शरतल्पेशयानेनभीष्मेणपरिचोदितः ॥ गांडीवधन्वाबीभत्सुर्माहात्म्यंकेशवस्ययत् ४ राज्ञांमध्येमहाराजज्येष्ठंभ्रातरमब्रवीत् ॥ युधिष्ठिरंजितामित्रमितितच्छृणुकौरव ५

लेषुहरिवंशेविष्णुपर्वणिटीकायांदशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ छ ॥ ॥ भूयएवेतिपूर्वंधन्योपाख्यानेयज्ञानामाश्चर्यभूतःकृष्णइत्युक्तं इदानींयज्ञभोक्तुःश्वेतद्वीपपतेरपिकृष्णआश्चर्यभूतइत्युच्यतआख्यायिकामुखेन तेनकृष्णस्तुभगवान्स्वयमित्येतदुपपादितंभवति ॥ १ ॥ अनुसंधानंअनुक्रमम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

संवंधीन्संबंधिनःअवलोककःअवलोकयितुं ॥ ६॥ एकाह्नेनएकसूत्त्यावतासोमयागेन ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ ११ ॥ म्रियेत्जीवेत् ॥ १२ ॥ १३ ॥१४॥ रक्षसीति
काकूत्त्यानरक्ष्यसीत्यभिप्रायउन्नेयः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ इ०म०खि०ह०वि० टी०एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ मुहूर्तेनेति ॥ १ ॥ २ ॥

अर्जुनउवाच ॥ पुराहंद्वारकांयातःसंबंधीनवलोककः ॥ न्यवसंपूजितस्तत्रभोजवृष्ण्यंधकोत्तमैः ६ ततःकदाचिद्धर्मात्मादीक्षितोमधुसूदनः ॥ एकाहे
नमहाबाहुःशास्त्रदृष्टेनकर्मणा ७ ततोदीक्षितमासीनमभिगम्यद्विजोत्तमः ॥ कृष्णंविज्ञापयामासत्राहित्राहीतिचाब्रवीत् ८ ब्राह्मणउवाच ॥ रक्षा
धिकारोभवतःपरित्रायस्वमांविभो ॥ चतुर्थांशंहिधर्मस्यरक्षितालभतेफलं ९ वासुदेवउवाच ॥ नभेतव्यंद्विजश्रेष्ठरक्षामित्वांकुतोभयम् ॥ ब्रूहितत्वे
नभद्रंतेयद्यपिस्यात्सुदुष्करम् १० ब्राह्मणउवाच ॥ जातोजातोमहाबाहोपुत्रोमेह्रियतेनघ ॥ त्रयोत्दताश्चतुर्थंत्वंकृष्णरक्षितुमर्हसि ११ ब्राह्मण्याःसू
तिकालोद्यतत्ररक्षाविधीयताम् ॥ यथाम्रियेदपत्यंमेतथाकुरुजनार्दन १२ अर्जुनउवाच ॥ ततोमामाहगोविंदोदीक्षितोहंक्रतावितिं ॥ रक्षाचब्राम्हणे
कार्यासर्वावस्थागतैरपि १३ श्रुत्वाहमेवंकृष्णस्यवचोवोचंनराधिप ॥ मांनियोजयगोविंदरक्षिष्येहंद्विजंभयात् १४ इत्युक्तःसस्मितंकृत्वामामुवाच
जनार्दनः ॥ रक्षसीत्येवमुक्तस्तुव्रीडितोस्मिनराधिप १५ ततोमांव्रीडितंमत्वापुनराहजनार्दनः ॥ गम्यतांकौरवश्रेष्ठशक्यतेयदिरक्षितुम् १६ त्वत्पुरो
गाश्वरक्षंतुवृष्ण्यंधकमहारथाः ॥ ऋतेराममहाबाहुंप्रद्युम्नंचमहाबलं १७ ततोहंवृष्णिसैन्येनमहतापरिवारितः ॥ तमग्रतोद्विजंकृत्वाप्रयातःसहसेनया
१८ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिवासुदेवमाहात्म्येएकादशाधिकशततमोऽध्यायः १११ अर्जुनउवाच ॥ मुहूर्तेनवयंग्रामंतंप्राप्यभरतर्षभ
विश्रांतवाहनाःसर्वेनिवासायोपसंस्थिताः १ ततोग्रामस्यमध्येहंनिविष्टःकुरुनंदन ॥ समंताद्वृष्णिसैन्येनमहतापरिवारितः २ ततःशकुनयोदीप्ता
मृगाश्चक्रूरभाषिणः ॥ दीप्तायांदिशिवासंतोभयमावेदयंतिमे ३ संध्यारागोजपावर्णोभानुमांश्चैवनिष्प्रभः ॥ पपातमहतीचोल्कापृथिवीचाप्यकंपत ४
तान्समीक्ष्यमहोत्पातान्दारुणांल्लोमहर्षणान् ॥ योगमाज्ञापयंतत्रजनस्योत्सुकचेतसः ५ युयुधानपुरोगाश्चवृष्ण्यंधकमहारथाः ॥ सर्वेयुक्तरथाःसज्जाः
स्वयंचाहंतथाभवम् ६ गतेऽर्द्धरात्रसमयेब्राह्मणोभयविक्लवः ॥ उपागम्यभयादस्मानिदंवचनमब्रवीत् ७ कालोयंसमनुप्राप्तोब्राह्मण्याःप्रसवस्यमे ॥ तथा
भवंतस्तिष्ठंतुनभवेद्वंचनंयथा ८ मुहूर्तादेवचाश्रौषंकृपणंरुदितस्वनम् ॥ तस्यविप्रस्यभवनेह्रियतेऽह्रियतेतिच ९ अथाकाशेपुनर्वाचमश्रौषंबाल
कस्यवै ॥ ऊहेतिह्रियमाणस्यनचपश्यामिराक्षसम् १० ततोस्माभिस्तदातातशरवर्षैःसमंततः ॥ विष्टंभितादिशःसर्वाह्वतएवसबालकः ११

३ ॥ जपावर्णःपौंड्रपुष्पेजपामतेतिविश्वःधूसरांकुरकुसुमवत्पीतवर्णइत्यर्थः ४ ॥ योगंसेनायाःसन्नाहं ॥५ ॥ ६ ॥ ७ ॥ ८ ॥ ह्रियतेंशिशुःअह्रियतत्हृतइति ॥ ९ १० ॥ ११

ब्राह्मणोर्तस्वरंकृत्वात्दृतेतस्मिन्कुमारके ॥ वाचःसपरुषास्तीव्राःश्रावयामाससमांतदा १२ वृष्णयोहतसंकल्पास्तथाहंनष्टचेतनः ॥ मामेवंहिविशेषेण
ब्राह्मणःप्रत्यभाषत १३ रक्षिष्यामीतिचोक्तंतेनचरक्षितवानसि ॥ शृणुवाक्यमिदंशेषंयत्त्वमर्हसिदुर्मते १४ वृथात्वंस्पर्द्धसेनित्यंकृष्णेनामितबुद्धिना ॥
यदिस्यादिहगोविंदोनैतदत्यहितंभवेत् १५ यथाचतुर्थंधर्मस्यरक्षिताल्लभतेफलम् ॥ पापस्यापितथामूढभागंप्राप्नोत्यरक्षिता १६ रक्षिष्यामीतिचोक्तंतेन
चशक्तोसिरक्षितुम् ॥ मोघंगांडीवमेतत्तेमोघंवीर्यंयशश्वते १७ अकिंचिदुक्त्वातंविप्रंततोहंप्रस्थितस्तथा ॥ सहवृष्ण्यंधकसुतैर्यत्रकृष्णोमहाद्युतिः १८
ततोद्वारवतींगत्वादृष्ट्वामधुनिघातिनम् ॥ व्रीडितःशोकसंतप्तोगोविंदेनोपलक्षितः १९ सतुमांव्रीडितंदृष्ट्वाविनिंदन्कृष्णसन्निधौ ॥ मौढ्यंपश्यतमेयोहंश्र
द्दधेक्लीबकत्थनम् २० नप्रद्युम्नोनानिरुद्धोनरामोनचकेशवः ॥ यत्रशक्ताःपरित्रातुंकोन्यस्तदवनेश्वरः २१ धिग्गर्जनंवृथानादंधिगात्मश्लाघिनोधनुः ॥
दैवापसृष्टोयोमौर्ख्यादागच्छतिचदुर्मतिः २२ एवंशपतिविप्रर्षौविद्यामास्थायवैष्णवीम् ॥ ययौसंयमिनींवीरोयत्रास्तेभगवान्यमः २३ विप्रापत्य
मचक्षाणस्ततऐंद्रीमगात्पुरीम् ॥ आग्नेयींनैर्ऋतींसौम्यामुदीचींवारुणींतथा २४ रसातलंनाकपृष्ठंधिष्ण्यान्यन्यान्युदायुधः ॥ ततोऽलब्ध्वाद्विजसुतमानि
स्तीर्णप्रतिश्रवः २५ अग्निंविविक्षुःकृष्णेनप्रद्युम्नेननिषेधितः ॥ दर्शयेद्विजसूनुंतेमावज्ञात्मानमात्मना २६ कीर्तिंतएतेविपुलांस्थापयिष्यंतिमानवाः ॥
इतिसंभाष्यमांस्नेहात्समाश्वास्यचमाधवः २७ सांत्वयित्वातुतंविप्रमिदंवचनमब्रवीत् ॥ सुग्रीवंचैवशैब्यंचमेघपुष्पबलाहकौ २८ योजयाश्वानितित
दादारुकंप्रत्यभाषत ॥ आरोप्यब्राम्हणंकृष्णोह्यवरोप्यचदारुकम् २९ मामुवाचततःशौरिःसारथ्यंक्रियतामिति ॥ ततःसमास्थायरथंकृष्णोहंब्राह्मणः
सच ॥ प्रयातास्मदिशंसौम्यामुदीचींकौरवर्षभ ३० ॥ ॥ इतिश्री०हरिवंशेविष्णुपर्वणिटीकायांवासुदेवमाहात्म्येकृष्णस्यउदीचीगमनेद्वादशाधिकश
ततमोऽध्यायः ११२ ॥ ॥ ७ ॥ ॥ अर्जुनउवाच ॥ ततःपर्वतजालानिसरितश्चवनानिच ॥ अपश्यंसमतिक्रम्यसागरंवरुणालयम् १ ततोर्घमुदधिः
साक्षादुपनीयजनार्दनम् ॥ सप्रांजलिःसमुत्थायकिंकरोमीतिचाब्रवीत् २ प्रतिगृह्यसतांपूजांतमुवाचजनार्दनः ॥ रथपंथानमिच्छामित्वयादत्तंनदीपते ॥
३ अथाब्रवीत्समुद्रस्तुप्रांजलिर्गरुडध्वजम् ॥ प्रसीदभगवन्नैवमन्योप्येवंगमिष्यति ४ त्वयैवस्थापितःपूर्वमगाधोस्मिजनार्दन ॥ त्वयाप्रवर्तितेमार्गे
यास्यामिगमनीयताम् ५



तिशेषः ॥ २९ ॥ ३० ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ७ ॥ ततइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ वर्णरूपाणि वेषवंतिरूपाणि ॥ १५ ॥ प्रतिजग्राहकुशलप्रश्नादिनामानयामास ॥१६॥ विवरंगूढस्था

अन्येप्येवंगमिष्यंतिराजानोदर्पमोहिताः ॥ एवंसंचिंत्यगोविंदयत्क्षमंतत्समाचर ६ ॥ वासुदेवउवाच ॥ ब्राह्मणार्थंमदर्थंचकुरुसागरमद्वचः ॥ मद्दते
नपुमान्कश्चिदन्यस्त्वांधर्षयिष्यति ७ अथाब्रवीत्समुद्रस्तुपुनरेवजनार्दनम् ॥ अभिशापभयाद्भीतोबाढमेवंभविष्यति ८ शोषयाम्येषमार्गंतयेनत्वंकृ
ष्णयास्यसि ॥ रथेनसहमूतेनसध्वजेनतुकेशव ९ वासुदेवउवाच ॥ ॥ मयादत्तोवरःपूर्वंनशोषंयास्यसीतिह ॥ मानुषास्तेनजानीयुर्विविधान्रत्नसंच
यान् १० जलंस्तंभयसाधोत्वंततोयास्याम्यहंरथी ॥ नचकश्चित्प्रमाणंतेरत्नानांवेत्स्यतेनरः ११ सागरेणतथेत्युक्तेप्रस्थिताःस्मोजलेनवै ॥ स्तंभितेन
पथाभूमौमाणिवर्णेनभास्वता १२ ततोर्णवंसमुत्तीर्यकुरूनप्युत्तरान्वयं ॥ क्षणेनसमतिक्रांतागंधमादनमेवच १३ ततस्तुपर्वताःसप्तकेशवंसमुपस्थिताः ॥
जयंतोवैजयंतश्चनीलोरजतपर्वतः १४ महामेरुःसकैलासइंद्रकूटश्चनामतः ॥ बिभ्राणावर्णरूपाणिविविधान्यद्भुतानिच १५ ॥ उपस्थायचगोविंदंकिंकु
र्मेत्यब्रुवंस्तदा ॥ तांश्चैवप्रतिजग्राहविधिवन्मधुसूदनः १६ तानुवाचहृषीकेशःप्रणामावनतान्स्थितान् ॥ विवरंगच्छतोमेद्यरथमार्गःप्रदीयताम् १७
तेकृष्णस्यवचःश्रुत्वाप्रतिगृह्यचपर्वताः ॥ प्रददुःकामतोमार्गंगच्छतोभरतर्षभ १८ तत्रैवांतर्हिताःसर्वेतदाश्चर्यतरंमम ॥ असक्तंचरथोयातिमेघ
जालेष्विवांशुमान् १९ सप्तद्वीपान्ससिंधूंश्चसप्तसप्तगिरीनथ ॥ लोकालोकंतथातीत्यविवेशसुमहत्तमः २० ततःकदाचिद्दुःखेनरथमूहुस्तुरंगमाः ॥ पंक
भूतंहितिमिरंस्पर्शाद्विज्ञायतेनृप २१ अथपर्वतभूतंतत्तिमिरंसमपद्यत ॥ तदासाद्यमहाराजनिष्प्रयत्नाहयाःस्थिताः २२ ततश्चक्रेणगोविंदःपाटयित्वात
मस्तदा ॥ आकाशंदर्शयामासरथपंथानमुत्तमम् २३ निष्क्रम्यतमसस्तस्मादाकाशेदर्शितेतदा ॥ भविष्यामीतिसंज्ञामेभयंचविगतंमम २४ ततस्तेजः
प्रज्वलितमपश्यततदांबरे ॥ सर्वलोकंसमाविश्यस्थितंपुरुषविग्रहम् २५ तंप्रविष्टोहृषीकेशोदीप्तंतेजोनिधिंतदा ॥ रथएवस्थितश्चाहंसचब्राह्मणसत्त
मः २६ समुहूर्तात्ततःकृष्णोनिश्चक्रामतदाप्रभुः ॥ चतुरोबालकान्गृह्यब्राह्मणस्यात्मजांस्तदा २७ प्रददौब्राह्मणायाथपुत्रान्सर्वान्जनार्दनः ॥ त्रयःपूर्वं
हृताश्चेसद्योजातश्चबालकः २८ प्रहृष्टोब्राह्मणस्तत्रपुत्रान्दृष्ट्वापुनःप्रभो ॥ अहंचपरमप्रीतोविस्मितश्चाभवंतदा २९ ततोवयंपुनःसर्वेब्राह्मणस्यचतेसुताः
यथागतानिवृत्ताःस्मतथैवभरतर्षभ ३० ततःस्मद्वारकांप्राप्ताःक्षणेननृपसत्तम ॥ असंप्राप्तेऽर्द्धदिवसेविस्मितोहंपुनःपुनः ३१ सपुत्रंभोजयित्वातुद्विजंकृ
ष्णोमहायशाः ॥ धनेनवर्षयित्वाचगृहंप्रस्थापयत्तदा ३२

नम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ भवि
ष्यामिजीविष्यामीतिसंज्ञाज्ञानमभूत् ततःप्राक्मृतोहमित्येवबुद्धिरासीदितिभावः ॥ २४ ॥ २५ ॥ तंप्रसिद्धंईश्वरम् ॥ २६॥ २७ ॥ २८॥ २९ ॥ ३० ॥ ३१ ॥३२॥

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ छ ॥ ततःकृष्णइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ तच्चेतितत्प्रसिद्धंतत्जगत्कर्तृतेजः तदितिवाएतस्यमहतोभूतस्यनामभवतीतिश्रुतेस्तादित्येवाभिधम् ॥ ५ ॥ आगमनकाले ॥ ६ ॥ ७ ॥ महत्जगद्रक्षांकुरभूतंतेजःतदभिमानिचेतनेनममफलोपमस्यदर्शनार्थंतेबालाहृताः ॥ ८ ॥ समहानहमेवयच्चमहत्तेजस्तन्ममैवतेजःएतेनमहतोंकुरस्यकारणबीजोपमईश्वरःतादृशानामनेकेषामीश्वराणामाश्रयोहंफलमिवानेकेषांबीजा

इतिश्रीम०खि०ह०वि०वासुदेवमाहात्म्येब्राह्मणपुत्रानयनेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ छ ॥ अर्जुनउवाच ॥ ततःकृष्णोभोजयित्वाश
तानिसुबहूनिच ॥ विप्राणामृषिकल्पानांकृतकृत्योभवत्तदा १ ततःसहमयाभुक्त्वावृष्णिभोजैश्चसर्वदा ॥ विचित्राश्चकथादिव्याःकथयामासभारत २
ततःकथांतेतत्राहमभिगम्यजनार्दनं ॥ अपृच्छंतद्यथावृत्तंकृष्णंयद्दृष्टवानहम् ३ कथंसमुद्रःस्तब्धोदःकृतस्तुकमलेक्षण ॥ पर्वतानांचविवरंकृतंतत्कथम
च्युत ४ तमस्तच्चकथंघोरंघनंचक्रेणपाटितम् ॥ तच्चयत्परमंतेजःप्रविष्टोसिकथंचतत् ५ किमर्थंतेनतेबालास्तदाचापहृताःप्रभो ॥ यच्चतेदीर्घमध्वानंसं
क्षिप्तंतत्कथंपुनः ६ कथंचाल्पेनकालेनकृतंतत्तद्गतागतम् ॥ एतत्सर्वंयथावृत्तमाचक्ष्वममकेशव ७ वासुदेवउवाच ॥ मद्दर्शनार्थंतेबालाहृतास्तेनमहात्म
ना ॥ विप्रार्थमेष्यतेकृष्णोनागच्छेदन्यथेतिह ८ ब्रह्मतेजोमयंदिव्यंमहद्यद्दृष्टवानसि ॥ अहंसभरतश्रेष्ठमत्तेजस्तत्सनातनम् ९ प्रकृतिःसाममपराव्यक्ता
व्यक्तासनातनी ॥ यांप्रविश्यभवंतीहमुक्तायोगविदुत्तमाः १० सासांख्यानांगतिःपार्थयोगिनांचतपस्विनाम् ॥ तत्पदंपरमंब्रह्मसर्वंविभजतेजगत् ११
मामेवतद्घनंतेजोज्ञातुमर्हसिभारत ॥ समुद्रःस्तब्धतोयोहमहंस्तंभयिताजलम् १२ अहंतेपर्वताःसप्तयेदृष्टाविविधास्त्वया ॥ पंकभूतंहितिमिरंदृष्टवान
सियद्धितत् १३ अहंतमोघनीभूतमहमेवचपाटकः ॥ अहंचकालोभूतानांधर्मश्चाहंसनातनः १४ चंद्रादित्यौमहाशैलाःसरितश्चसरांसिच ॥ चतस्रश्च
दिशःसर्वाममैवात्माचतुर्विधः १५ चातुर्वर्ण्यंमत्प्रसूतंचातुराश्रम्यमेवच ॥ चातुर्विध्यस्यकर्ताहमितिबुध्यस्वभारत १६ अर्जुनउवाच ॥ भगवन्सर्वभू
तेशवेत्तुमिच्छामितेप्रभो ॥ पृच्छामित्वांप्रपन्नोहंनमस्तेपुरुषोत्तम १७ वासुदेवउवाच ॥ ब्रह्मचब्राह्मणाश्चैव तपःसत्यंचभारत ॥ उग्रंबृहत्तमंचैवमत्तस्त
द्विद्धिपांडव ॥ प्रियस्तेहंमहाबाहोप्रियोमेसिधनंजय १८

नामित्यर्थः ॥ ९ ॥ सामहत्तत्वाख्याप्रकृतिःपरा अहंकारादिभ्यःश्रेष्ठा ज्येष्ठत्वात् साचव्यक्तादृश्यांशेनव्यक्ता अव्यक्तादृगंशेनतांप्रविश्येतितत्रैवगत्वा चिज्जडयोर्विवेकःसत्वपुरुषान्यताख्यातिर्नामभवति अतस्तत्साक्षात्कारणमेवमुक्तिसाधनं विभजतेजगत्चिदंशाज्जडांशंपृथक्करोतीत्यर्थः ॥ १० ॥ ११ ॥ यथातन्ममरूपंतथान्यदपिदृश्यमित्याहमामेवेत्यादिना ॥ १२ ॥ १३ ॥ १४ ॥ चंद्रेति तेजःपृथिवीजलाकाशात्मनाचतुर्विधः एतच्चवायोरप्युपलक्षणं पंचापिभूतानिअहमेवेत्यर्थः ॥ १५ ॥ १६ ॥ तेत्वां ॥ १७ ॥ उग्रंसंसरणंनानाक्लेशकरत्वात् बृहत्तमंवैकल्यंअखंडानंदरूपत्वात् मत्तउद्भूतंब्रह्मादिमत्तःप्राप्यंरुद्रादि ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ सत्कार्यंअसत्कारणंसदसच्चेत्युभयविशेषणंकार्यंकारणगंसत्चिदंशेनअसत्दृश्यांशेनताभ्यांपरंतुसदेवतत्परंशुद्धंब्रह्माहमेव ॥ २३ ॥ २४

तेनतेकथयिष्यामिनान्यथावक्तुमुत्सहे ॥ अहंयजूंषिसामानिऋचश्चाथर्वणानिच १९ ऋषयोदेवतायज्ञामत्तेजोभरतर्षभ ॥ पृथिवीवायुराकाशमा
पोज्योतिश्चपंचमम् २० चंद्रादित्यावहोरात्रंपक्षामासास्तथर्तवः ॥ मुहूर्ताश्चकलाश्चैवक्षणाःसंवत्सरास्तथा २१ मंत्राश्चविविधाःपार्थयानिशास्त्रा
णिकानिचित् ॥ विद्याश्चवेदितव्यंचमत्तःप्रादुर्भवंतिहि २२ मन्मयंविद्धिकौंतेयक्षयंसृष्टिंचभारत ॥ सच्चासच्चममैवात्मासदसच्चैवयत्परम् २३ ॥ ॥
अर्जुनउवाच ॥ ॥ एवमुक्तोस्मिकृष्णेनप्रीयमाणेनवैतदा ॥ तथैवचमनोनित्यमभवन्मेजनार्दने २४ एतच्छ्रुतंचदृष्टंचमाहात्म्यंकेशवस्यमे ॥ यन्मांपृ
च्छसिराजेंद्रभूयांश्चातोजनार्दनः २५ ॥ ॥ वैशंपायनउवाच ॥ ॥ एतच्छ्रुत्वाकुरुश्रेष्ठोधर्मराजोयुधिष्ठिरः ॥ पूजयामासधर्मात्मागोविंदंपुरुषोत्तम
म् २६ विस्मितश्चाभवद्राजासहसर्वैःसहोदरैः ॥ राजभिश्चसमासीनैर्येतत्रासन्समागताः २७ ॥ ॥ इतिश्रीम०खि०ह०वि०वासुदेवमाहात्म्येकृष्णार्जु
नभाषणेचतुर्दशाधिकशततमोऽध्यायः ११४ ॥ ॥ जनमेजयउवाच ॥ ॥ भूयएवद्विजश्रेष्ठयदुसिंहस्यधीमतः ॥ कर्माण्यपरिमेयानिश्रोतुमिच्छा
मितत्वतः १ श्रूयंतेविविधानिस्मअद्भुतानिमहाद्युतेः ॥ असंख्येयानिदिव्यानिप्रकृतान्यपिसर्वशः २ यान्यहंविविधान्यस्यश्रुत्वाप्रीयेमहामुने ॥ प्रब्रूयाः
सर्वशस्ताततानिमेशृण्वतोनघ ३ ॥ वैशंपायनउवाच ॥ बहून्याश्चर्यभूतानिकेशवस्यमहात्मनः ॥ कथितानिमहाबाहोनांतंशक्यंहिकर्मणाम् ४ गंतुंहि
भरतश्रेष्ठविस्तरेणसमंततः ॥ अवश्यंहिमयावाच्यंलेशमात्रेणभारत ५ विष्णोरमितवीर्यस्यप्रथितोदारकर्मणः ॥ आनुपूर्व्यात्प्रवक्ष्यामिशृणुष्वैकमनान्नृ
प ६ द्वारवत्यांनिवसतायदुसिंहेनधीमता ॥ राष्ट्राणिनृपमुख्यानांक्षोभितानिमहात्मनाम् ७ यदूनामंतरप्रेप्सुर्विचक्रोदानवोहतः ॥ पुरंप्राग्ज्योतिषंग
त्वापुनस्तेनमहात्मना ८ समुद्रमध्येदुष्टात्मानरकोदानवोहतः ॥ वासवंचरणेजित्वापारिजातोऽहृतोबलात् ९ वरुणश्चैवभगवान्निर्जितोलोहितेह्रदे ॥
दंतवक्त्रश्चकारूषोनिहतोदक्षिणापथे १० शिशुपालश्चसंपूर्णेकिल्बिषैकशतेहतः ॥ गत्वाचशोणितपुरंशंकरेणाभिरक्षितः ११ बलेःसुतोमहावीर्योबाणो
बाहुसहस्रभृत् ॥ महामृधेमहाराजजित्वाजीवन्विसर्जितः १२ निर्जितःपावकश्चैवगिरिमध्येमहात्मना ॥ शाल्वश्चविजितःसंख्येसौभश्चविनिपातितः
१३ विक्षोभ्यसागरंचैवपांजचन्योवशीकृतः ॥ हयग्रीवश्चनिहतोनृपाश्चान्येमहाबलाः १४ जरासंधस्यनिधनेमोक्षिताःसर्वपार्थिवाः ॥ रथेनजित्वा
नृपतीन्गांधारतनयाहृताः १५

॥ २५ ॥ २६ ॥ २७ ॥ ॥ इ०खि०ह०वि० चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ भूयएवेति ॥ १
॥ २ ॥ ताततिवात्सल्योत्पादनायसंबोधयति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ गिरिमध्येमेरुमध्ये ॥ १३ ॥ १४ ॥ १५ ॥

भ्रष्टराज्याश्वशोकार्ताःपांडवाःपरिरक्षिताः ॥ दाहितंचवनंघोरंपुरुहूतस्यखांडवम् १६ गांडीवंचाग्निनादत्तमर्जुनायोपपादितम् ॥ दौत्यंचतत्कृतंघोरेविग्र
१५४ हेजनमेजय १७ अनेनयदुमुख्येनयदुवंशोविवर्धितः ॥ कुंत्याश्चप्रमुखेप्रोक्ताप्रतिज्ञापांडवान्प्रति १८ निवृत्तेभारतेयुद्धेप्रतिदास्यामितत्सुतान् ॥ मोक्षि अ.११६
तश्चमहातेजान्नृगःशापात्सुदारुणात् १९ यवनश्चहतःसंख्येकालइत्यभिविश्रुतः ॥ वानरौचमहावीर्यौमैंदोद्विविदएवच २० विजितौयुधिदुर्द्धर्षौजांबवां
श्चपराजितः ॥ सांदीपनेस्तथापुत्रस्तवचैवपितातथा २१ गतौवैवस्वतवशंजीवितौतस्यतेजसा ॥ संग्रामाबहवःप्राप्ताघोरानरवरक्षयाः २२ निहताश्चनृ
पाःसर्वेकृत्वातज्जयमद्भुतम् ॥ जनमेजयास्ययुद्धेषुयथातेवर्णितामया २३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिवासुदेवमाहात्म्येपंचदशा
धिकशततमोऽध्यायः ॥ ११५ ॥ छ ॥ जनमेजयउ० ॥ ॥ भूयएवमहाबाहोर्यदुसिंहस्यधीमतः ॥ कर्माण्यपरिमेयानिश्रुतानिद्विसजत्तम १ त्वत्तःश्रुत
वतांश्रेष्ठवासुदेवस्यधीमतः ॥ यत्त्वयाकथितंपूर्वंबाणंप्रतिमहासुरम् २ तदहंश्रोतुमिच्छामिविस्तरेणतपोधन ॥ कथंचदेवदेवस्यपुत्रत्वमसुरोगतः ३ यो
भिगुप्तःस्वयंब्रह्मन्शंकरेणमहात्मना ॥ सहवासंगतेनैवसगणेनगुहेनतु ४ बलेर्बलवतःपुत्रोज्येष्ठोभ्रातृशतस्ययः ॥ वृतोबाहुसहस्रेणदिव्यास्त्रशतधारि
णा ५ असंख्यैश्चमहाकायैर्महाबलशतैर्वृतः ॥ वासुदेवेनसकथंबाणःसंख्येपराजितः ६ संरब्धश्चैवयुद्धार्थीजीवन्मुक्तःकथंचसः ॥ ॥ वैशंपायनउवाच ॥
शृणुष्वावहितोराजन्कृष्णस्यामिततेजसः ७ मनुष्यलोकेबाणेनयथाभूद्विग्रहोमहान् ॥ वासुदेवेनयत्रासौरुद्रस्कंदसहायवान् ८ बलिपुत्रोरणश्लाघीजि
त्वाजीवन्विसर्जितः ॥ तथाचास्यवरोदत्तःशंकरेणमहात्मना ९ नित्यंसांनिध्यतांचैवगणापत्यंतथाक्षयम् ॥ यथाबाणस्यतद्युद्धंजीवन्मुक्तोयथाचसः १०
यथाचदेवदेवस्यपुत्रत्वंसोसुरोगतः ॥ यदर्थंचमहद्युद्धंतत्सर्वमखिलंशृणु ११ दृष्ट्वाततःकुमारस्यक्रीडतश्चमहात्मनः ॥ बलिपुत्रोमहावीर्योविस्मयंपरमंग
तः १२ तस्यबुद्धिःसमुत्पन्नातपश्चर्तुंसुदुष्करम् ॥ रुद्रस्याराधनार्थायदेवस्यस्यांयथासुतः १३ ततोग्लपयदात्मानंतपसाश्लाघ्यतेचसः ॥ देवश्चपरमंतोषं
जगामचसहोमया १४ नीलकंठःपरांप्रीतिंगत्वाचासुरमब्रवीत् ॥ वरंवरयभद्रंतेयत्तेमनसिवर्त्तते १५ अथबाणोब्रवीद्वाक्यंदेवदेवंमहेश्वरम् ॥ देव्याः
पुत्रत्वमिच्छामित्वयादत्तंत्रिलोचन १६ शंकरस्तुतथेत्युक्त्वारुद्राणीमिदमब्रवीत् ॥ कनीयान्कार्तिकेयस्यपुत्रोयंप्रतिगृह्यताम् १७ १५४

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ देवदेवस्यरुद्रस्यपुत्रत्वंगणमुख्यत्वं ॥ ११ ॥ कुमारस्यकार्तिकेयस्यक्रीडतःरुद्राराधनात्मिकांक्रीडांदृष्ट्वेतियोज्यं ॥ १२ ॥
१३ ॥ श्लाघतेअहमेवमहान्तपस्वीतिमन्यते ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

महासेनःकार्तिकेयः ॥ १८ ॥ श्रीमंतंबाणं ॥ १९ ॥ प्रशास्तेप्रशास्ति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

यत्रोत्थितोमहासेनःसोग्निजोरुधिरेपुरे ॥ तत्रोद्देशेपुरंचास्यभविष्यतिनसंशयः १८ नाम्नातच्छोणितपुरंभविष्यतिपुरोत्तमम् ॥ मयाभिगुप्तंश्रीमंतंनक
श्चित्प्रसहिष्यति १९ ततःसनिवसन्बाणःपुरेशोणितसाह्वये ॥ राज्यंप्रशासतेनित्यंक्षोभयन्सर्वदेवताः २० अवतीर्यमदोत्सिक्तोबाणोबाहुसहस्रवान् ॥
अर्चितयन्देवगणान्युद्धमाकांक्षतेसदा २१ ध्वजंचास्यददौप्रीतःकुमारोत्वग्नितेजसम् ॥ वाहनंचैवबाणस्यमयूरंदीप्ततेजसम् २२ नदेवानचगंधर्वानय
क्षानापिपन्नगाः ॥ तस्ययुद्धेव्यतिष्ठंतदेवदेवस्यतेजसा २३ त्र्यंबकेनाभिगुप्तश्चदर्पोत्सिक्तोमहासुरः ॥ भूयोमृगयतेयुद्धंशूलिनंसोभ्यगच्छत २४ सरु
द्रमभिगम्याथप्रणिपत्याभिवाद्यच ॥ बलिसूनुरिदंवाक्यंपप्रच्छवृषभध्वजम् २५ असकृन्निर्जितादेवाःससाध्याःसमरुद्गणाः ॥ मयामदबलोत्सेकात्ससै
न्येनतवाश्रयात् २६ इमंदेशंसमागम्यवसंतिस्मपुरेसुखम् ॥ तेपराजयसंत्रस्तानिराशामत्पराजये २७ नाकपृष्ठमुपागम्यनिवसंतियथासुखम् ॥ सोहं
निराशोयुद्धस्यजीवितंनाद्यकामये २८ अयुध्यतोवृथात्वेषांबाहूनांधारणंमम ॥ तद्ब्रूहिममयुद्धस्यकच्चिदागमनंभवेत् २९ नमेयुद्धंविनादेवरतिरस्ति
प्रसीदमे ॥ ततःप्रहस्यभगवानब्रवीद्वृषभध्वजः ३० भविता बाणयुद्धंवैयथातच्छृणुदानव ॥ ध्वजस्यास्ययदाभंगस्तवतातभविष्यति ॥ स्वस्थानेस्थापित
स्याथतदायुद्धंभविष्यति ३१ इत्येवमुक्तःप्रहसन्बाणस्तुबहुशोमुदा ॥ प्रसन्नवदनोभूत्वापादयोःपतितोऽब्रवीत् ॥ दिष्ट्याबाहुसहस्रस्यनवृथाधारणंमम
३२ दिष्ट्यासहस्राक्षमहंविजेतापुनराहवे ॥ आनंदेनाश्रुपूर्णाभ्यांनेत्राभ्यामारिमर्दनः ॥ पंचांजलिशतैर्देवंपूजयन्पतितोभुवि ३३ ॥ ईश्वरउवाच ॥ ॥
उत्तिष्ठोत्तिष्ठबाहूनामात्मनःस्वकुलस्यतु ॥ सदृशंप्राप्स्यसेवीरयुद्धमप्रतिमंमहत् ३४ वैशंपायनउवाच ॥ एवमुक्तस्ततोबाणस्त्र्यंबकेणमहात्मना ॥
हर्षेणात्युच्छ्रितंशीघ्रंनत्वासवृषभध्वजम् ३५ शितिकंठविसृष्टस्तुबाणःपरपुरंजयः ॥ ययौस्वभवनंतत्रयत्रध्वजगृहंमहत् ३६ तत्रोपविष्टःप्रहसन्कुंभांड
मिदमब्रवीत् ॥ प्रियमावेदयिष्यामिभवतोयन्मनोगतम् ३७ इत्येवमुक्तःप्रहसन्बाणमप्रतिमंरणे ॥ प्रोवाचराजन्किंत्वेतद्वक्तुकामोसिमत्प्रियं ३८ विस्म
योत्फुल्लनयनःप्रहर्षादिवभाषसे ॥त्वत्तःश्रोतुमिहेच्छामिवरंकिंलब्धवानसि ३९ शितिकंठप्रसादेनस्कंदगोपायनेनच ॥ कच्चित्त्रैलोक्यराज्यंतेव्यादिष्टंशूलपा
णिना ४० अस्यचक्रभयत्रस्तानिवसंतिजलाशये ॥ कच्चिच्छार्ङ्गगदापाणेःस्थितस्यपरमाहवे ४१

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ कुंभांडःस्वस्यअमात्यं ॥ ३७ ॥ ३८ ॥ ३९ ॥ स्कंदगोपायनेनस्कंदकृतेनत्राणेन ॥ ४० ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ असंसक्तांअस्खलितां ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥
वृषदंशोबिडालः जगर्जेत्यमंगलशब्दकरणंलक्ष्यते ॥ ॥ ५९ ॥ ६० स्वपक्षेचेति देवनक्षत्रेषुउदितःकृत्तिकांप्रविष्टइत्यर्थः तेनरोहिणीबाणस्यजन्मनक्षत्रंषड्विंशंभरणी

कच्चिदिंद्रस्तवभयात्पातालमुपयास्यति ॥ कच्चिद्विष्णुपरित्रासंविमोक्ष्यंतिदितेःसुताः ४२ पातालवासमुत्सृज्यकच्चित्तवबलाश्रयात् ॥ विबुधावासनिरताभविष्यंतिमहासुराः ४३ बलिर्विष्णुपराक्रांतोबद्धस्तवपितानृप ॥ सलिलौघाद्विनिष्क्रम्यकच्चिद्राज्यमवाप्स्यति ४४ दिव्यमाल्यांबरधरंदिव्यस्रग्गंधलेपनम् ॥ कच्चिद्वैरोचनिंतातद्रक्ष्यामःपितरंतव ४५ कच्चित्त्रिभिःक्रमैःपूर्वंहृताँल्लोकानिमान्प्रभो ॥ पुनःप्रत्यानयिष्यामोजित्वासर्वान्दिवौकसः ॥ ४६ स्निग्धगंभीरनिर्घोषंशंखस्वनपुरोजवम् ॥ कच्चिन्नारायणंदेवंजेष्यामःसमितिंजयम् ४७ कच्चिद्वृषध्वजस्तातप्रसादसुमुखस्तव ॥ यथातेहृदयोत्कंपःसाश्रुबिंदुःप्रवर्तते ४८ कच्चिदीश्वरतोषेणकार्तिकेयमतेनच ॥ प्राप्तवानसिसर्वेषामस्माकंराज्यसंपदम् ४९ इतिकुंभांडवचनैश्चोदितःसोसुरोत्तमः ॥ बाणोवाणीमसंसक्तांप्रोवाचवदतांवरः ५० ॥ ॥ बाणउवाच ॥ ॥ चिरात्प्रभृतिकुंभांडनयुद्धंप्राप्यतेमया ॥ ततोमयामुदाष्टष्टःशितिकंठःप्रतापवान् ५१ युद्धाभिलाषःसुमहान्देवसंजायतेमम ॥ अभिप्राप्स्याम्यहंयुद्धंमनसस्तुष्टिवर्धनम् ५२ ततोहंदेवदेवेनहरेणामित्रघातिना ॥ प्रहस्यसुचिरंकालमुक्तोस्मिवचनंप्रियम् ॥ प्राप्स्यसेसुमहद्युद्धंत्वंबाणाप्रतिमंमहत् ५३ मयूरध्वजभंगस्तेभविष्यतियदासुर ॥ तदात्वंप्राप्स्यसेयुद्धंसुमहद्दितिनंदन ५४ ततोहंपरमप्रीतोभगवंतंवृषध्वजम् ॥ प्रणम्यशिरसादेवंतवांतिकमुपागतः ५५ इत्येवमुक्तःकुंभांडःप्रोवाचनृपतिंतदा ॥ अहोनशोभनंराजन्यदेवंभाषसेवचः ५६ एवंकथयतोस्तत्रतयोरन्योन्यमुच्छ्रितः ॥ ध्वजःपपातवेगेनशक्राशनिसमाहतः ५७ तंतथापतितंदृष्ट्वासोसुरोध्वजमुत्तमम् ॥ प्रहर्षमतुलंलेभेमेनेचाहवमागतम् ५८ ततश्चकंपेवसुधाशक्राशनिसमाहता ॥ ननादांतर्हितोभूमौवृषदंशोजगर्जच ५९ देवानामपियोदेवःसोप्यवर्षतवासवः ॥ शोणितंशोणितपुरेसर्वतःपरमंततः ६० सूर्यंभित्वामहोल्काचपपातधरणीतले ॥ स्वपक्षेचोदितःसूर्योभरणींसमपीडयत् ६१ चैत्यवृक्षेषुसहस्राधाराःशतसहस्रशः ॥ शोणितस्यस्रवन्घोरानिपेतुस्तारकाभृशम् ६२ राहुरग्रसदादित्यमपर्वणिविशांपते ॥ लोकक्षयकरेकालेनिर्घातश्चापतन्महान् ६३ दक्षिणांदिशमास्थायधूमकेतुःस्थितोभवत् ॥ अनिशंचाप्यविच्छिन्नाववुर्वाताःसुदारुणाः ६४

चतस्याभिषेचनिकंनक्षत्रंविद्धंतेनदेहस्यपीडापदात्च्युतिश्चेतिदर्शितं चोदितः सूर्योभरणींसमपीडयत् ॥ ६१ ॥ ६२ ॥ राहुरिति तदैवनित्यंसमंगतिरपिराहुर्विषमगत्यासूर्यनक्षत्रमाक्रांतवानित्यर्थः आदित्यमग्रसदितितत्रैवचंद्रयोगोपिगम्यतेततश्चजन्मतःसप्तविंशेनक्षत्रेसूर्यग्रहणंचेद्बाणवत्फलंद्रष्टव्यं ॥ ६३ ॥ ६४ ॥

पारेघःपारेवेषः ॥ ६५ ॥ वक्रमितितत्रैवदुर्योगांतरमाह जन्मनक्षत्रंरोहिणी ॥ ६६ ॥ चैत्यश्चत्वरवान्नगरसूचकोवृक्षः ॥ ६७ ॥ निश्चयंममपराभवोभविष्यतीत्येवंरूपम् ॥ ६८ ॥ ६९ ॥ नशोभनंअशोभनं ॥ ७० ॥ ७१ ॥ शक्रध्वजतरोःयत्रशक्रध्वजआसज्यतेसतरुःपूर्वोक्तःचैत्यवृक्षःतस्ययथापतनंजातंतथातवपतनंभविष्यतीत्यर्थः ॥ ७२

श्वेतलोहितपर्यंतःकृष्णग्रीवस्तडिद्द्युतिः॥त्रिवर्णपरिघोभानुःसंध्यारागमथावृणोत् ६५वक्रमंगारकश्चक्रेकृत्तिकासुभयंकरः॥ बाणस्यजन्मनक्षत्रंभर्त्सयन्निवस र्वशः६६अनेकशाखश्चैत्यश्चनिपपातमहीतले ॥ अर्चितःसर्वकन्याभिर्दानवानांमहात्मनाम् ६७एवंविविधरूपाणिनिमित्तानिनिशामयन् ॥ बाणोबलमदोन्म त्तोनिश्चयंनाधिगच्छति ६८ विचेतास्त्वभवत्प्राज्ञःकुंभांडस्तत्वदर्शिवान् ॥ बाणस्यसचिवस्तत्रकीर्तयन्बहुकिल्बिषं ६९उत्पाताह्यत्रदृश्यंतेकथयंतोनशो भनं ॥ तवराज्यविनाशायभविष्यंतिनसंशयः ७० वयंचान्येचसचिवाभृत्यायेचतवानुगाः ॥ क्षयंयास्यंतिनचिरात्सर्वेपार्थिवदुर्नयात् ७१ यथाशक्रध्व जतरोःस्वदर्पात्पतनंभवेत् ॥ बलमाकांक्षतोमोहात्तथाबाणस्यनर्दतः ७२ देवदेवप्रसादात्तुत्रैलोक्यविजयंगतं ॥ उत्सेकाद्दृश्यतेनाशोयुद्धाकांक्षिननर्दह ॥ ७३ बाणःप्रीतमनास्त्वेवंपपौपानमनुत्तमम् ॥ दैत्यदानवनारीभिःसार्द्धमुत्तमविक्रमः ७४ कुंभांडश्चिंतयाविष्टोराजवेश्माभ्ययात्तदा ॥ अचिंतयच्चतत्वार्थं तैस्तैरुत्पातदर्शनैः ७५ राजाप्रमादीदुर्बुद्धिर्जितकाशीमहासुरः ॥ युद्धमेवाभिलषतेनदोषान्मन्यतेमदात् ७६ महोत्पातभयंचैवनतन्मिथ्याभविष्य ति ॥ अपीदानींभवेन्मिथ्यासर्वमुत्पातदर्शनम् ७७ इहत्वास्तेत्रिनयनःकार्तिकेयश्चवीर्यवान् ॥ तेनोत्पन्नोपिदोषोनःकच्चिद्गच्छेत्पराभवम् ७८ उत्प न्नदोषप्रभवःक्षयोयंभवितामहान् ॥ दोषाणांनभवेन्नाशइतिमेधीयतेमतिः ७९ नियतंदोषएवायंभविष्यतिनसंशयः ॥ दौरात्म्यान्नृपतेरस्यदोषभूताहि दानवाः ८० देवदानवसंघानांयःकर्ताभुवनप्रभुः ॥ भगवान्कार्तिकेयश्चकृतवाँल्लोहितेपुरे ८१ प्राणैःप्रियतरोनित्यंभविष्यतिगुहःसदा ॥ तद्विशिष्टश्चबा णोपिशिवस्यसततंप्रियः ८२ दर्पोत्सेकात्तुनाशायवरंयाचितवान्भवम् ॥ युद्धहेतोःसलुब्धस्तुसर्वथानभविष्यति ८३ यदिविष्णुपुरोगानामिंद्रादीनां दिवौकसाम् ॥ भवित्रीह्यभवत्प्राप्तिर्भवहस्तात्कृतंभवेत् ८४ एतयोश्चहिकोयुद्धंकुमारभवयोरिह ॥ शक्तोदातुंसमागम्यबाणसाहाय्यकांक्षिणोः ८५ नचदेववचोमिथ्याभविष्यतिकदाचन ॥ भविष्यतिमहद्युद्धंसर्वदैत्यविनाशनम् ८६ सएवंचिंतयाविष्टःकुंभांडस्तत्वदर्शिवान् ॥ स्वस्तिप्रणिहितांबुद्धिं चकारसमहासुरः ८७ येहिदेवैर्विरुध्यंतेपुण्यकर्मभिराहवे ॥ यथाबलिर्नियमितस्तथातेयांतिसंक्षयम् ८८

देवेतिईश्वरानुगृहीतोपिदर्पान्नश्यतीतिभावः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ उत्पन्नोदोषो दशार्ण्यस्ततः प्रभवोयस्यसतथा ॥ ७९ ॥ ८० ॥ ८१ ॥ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ स्वस्तिप्रणिहितांकल्याणाभिनिवेशनीं ॥ ८७ ॥ ८८ ॥

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ छ ॥ क्रीडेति ॥ १ ॥ २ ॥ संतानकस्यकल्पतरुविशेषस्य ॥ ३ ॥ ४ ॥
॥ ५ ॥ ६ ॥ प्रसादयामासेत्युक्तेरिदंसूच्यतेमद्भार्यारूपग्रहणेनमामपिसर्वांतर्यामिणमियंमोहयितुंप्रवृत्तेतिमहादेवस्यतस्याउपरिकियानपिकोपोजातआसीदितिततएवा

इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिबाणयुद्धेषोडशाधिकशततमोऽध्यायः ११६ वैशंपायनउवाच ॥ क्रीडाविहारोपगतःकदाचिदभवद्भवः ॥
देव्यासहनदीतीरेरम्येश्रीमतिसप्रभुः १ शतानितत्राप्सरसांचिक्रीडुश्चसमंततः ॥ सर्वर्तुकवनेरम्येगंधर्वपतयस्तथा २ कुसुमैःपारिजातस्यपुष्पैःसंतान
कस्यच ॥ गंधोद्दाममिवाकाशंनदीतीरंतुसर्वशः ३ वेणुवीणामृदंगैश्चपणवैश्चसहस्रशः ॥ वाद्यमानैःसशुश्रावगीतमप्सरसांतदा ४ सूतमागधकल्पैश्च
स्तुवन्नप्सरसांगणाः ॥ देवदेवंसुवपुषंस्रग्विणंरक्तवाससम् ५ श्रीमहेशंदेवदेवमर्चयंतिमनोरमं ॥ ततस्तुदेव्यारूपेणचित्रलेखावराप्सराः ६ भवंप्रसाद
यामासदेवीचप्राहसत्तदा ॥ प्रसादयंतीमीशानंप्रहसंत्यप्सरोगणाः ७ भवस्यपार्षदादिव्यानानारूपामहौजसः ॥ देव्याह्यनुज्ञयासर्वेक्रीडंतेतत्रतत्रह ८ ॥
अथतेपार्षदास्तत्ररहस्येसुविपश्चितः ॥ महादेवस्यरूपेणतच्चिह्नरूपमास्थिताः ९ ततोदेव्यासुरूपेणलीलयावदनेनच ॥ देवीप्रहासंमुमुचेताश्चैवाप्सरस
स्तदा ॥ ततःकिलकिलाशब्दःप्रादुर्भूतःसमंततः १० प्रहर्षमतुलंलेभेभवःप्रीतमनास्तदा ॥ बाणस्यदुहिताकन्यातत्रोषानामभामिनी ११ देवंसंक्रीडि
तंदृष्ट्वादेव्यासहनदीगतम् ॥ दीप्यमानंमहादेवंद्वादशादित्यतेजसम् १२ नानारूपंवपुःकृत्वादेव्याप्रियचिकीर्षया ॥ उषामनोरथंचक्रेपार्वत्याःसन्निधौ
तथा १३ धन्याहिभर्तृसहितारमत्येवंसमागता ॥ मनसात्वथसंकल्पमुषयाभाषितंतथा १४ विज्ञायतमभिप्रायमुषायाःपर्वतात्मजा ॥ प्राहदेवीततोवा
क्यमुषांहर्षयतीशनैः १५ उषेत्वंशीघ्रमप्येवंभर्त्रासहरमिष्यसि ॥ यथादेवोमयासार्द्धंशंकरःशत्रुनाशनः १६ एवमुक्तेतदादेव्यावाक्येचिंताविलक्षणा ॥
उषाभावंतदाचक्रेभर्त्रारंस्येकदासह १७ तदाहैमवतीवाक्यंसंप्रहस्येदमब्रवीत् ॥ उषेशृणुष्ववाक्यंमेयदासंयोगमेष्यसि १८ वैशाखेमासिहर्म्यस्थांद्वाद
श्यांत्वांदिनक्षये ॥ रमयिष्यतियःस्वप्नेसतेभर्ताभविष्यति १९ एवमुक्तादैत्यसुताकन्यागणसमावृता ॥ अपाक्रामतहर्षेणरममाणायथासुखम् २० ततः
सखीभिर्हास्यंतीहर्षेणोत्फुल्ललोचना ॥ तालिकासन्निपातैश्चह्यन्योन्यमभ्यवर्तत २१

पराधात्चित्रलेखास्वांशेनकुंभांडस्यबाणामात्यस्यकन्याजातेतिअग्रिमग्रंथाद्गम्यते प्रसादयंतींतांअप्सरोगणाःप्रहसंतिईशोपिकापटचांमियंकरोतीत्याशयेन ॥ ७ ॥ क्रीडंतेमहा
देवस्यरूपेणेतिद्वयोःसंबंधः ॥ ८ ॥ तच्चिह्नंवृषभध्वजादिचिह्नरूपंदेव्यारूपेणयुक्ताःअप्सरसोपिक्रीडंतइत्यनुषज्जते ॥ ९ ॥ ततश्चदेवीप्रहासंमुमुचेतत्रहेतुःचित्रलेखायामा
नभंगार्थसर्वाअप्सरसोदेवीरूपंजगृहुस्तस्याश्चभ्रांतिमुत्पादयितुंसर्वेपार्षदाःमहादेवरूपंजगृहुरितिप्रघट्टकार्थः ॥ १० ॥ ११ ॥ संक्रीडितम् क्रीडितं ॥ १२ ॥ नानारूपं
वपुःकृत्वासंक्रीडितमितिपूर्वेणसंबंधः ॥ १३ ॥ भाषितंसखीजनेइतिशेषः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ हास्यतीपरिहास्यमानावर्धतीवर्धमाना २१ ॥

॥ २२ ॥ २३ ॥ २४ ॥ यत्तवमनोरथंमनोरथगोचरंप्रार्थितंवस्तुतत्देव्यातवदत्तमितिसखीनांवाक्यंप्रतिपूज्यउषाप्रतीक्षतेइतिशेषः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

किन्नर्योयक्षकन्याश्चनानादैतेयकन्यकाः ॥ अप्सरोगणकन्याश्चउषायाःसखितांगताः २२ उक्ताचतत्रताभिश्चभर्तातववरानने ॥ भविष्यत्यचिरेणैवदेव्या
वचनकल्पितः २३ नहिदेव्यावचोमिथ्याभविष्यतिकदाचन ॥ रूपाभिजनसंपन्नःपतिस्तेकल्पितस्तया २४ उषासखीनांतद्वाक्यंप्रतिपूज्ययथाविधि ॥
यत्तन्मनोरथंदेव्याभावयंतीव्यवस्थिता २५ ततःक्रीडाविहारंतमनुभूयसहोमया ॥ गतेहनिततःसर्वानार्यस्ताःपरमाद्भुताः २६ ययुःस्वानालयान्सर्वादे
वीचादर्शनंगता ॥ काश्चिदश्वैस्तथायानैर्गजैरन्यास्तथारथैः २७ पुरंप्रविविशुर्हृष्टाःकाश्चिदाकाशमास्थिताः ॥ ततःप्रभृतिसादेवीकाममोहंगताविभो
२८ देव्यास्तुवचनंस्मृत्वासंस्मरंतीपतिंतदा ॥ निद्रांनभजतेरात्रौनदिवाभोजनंतथा २९ स्मरंतीपतिभावंसाविललापनृपात्मजा ॥ निंदतीशशिनंना
केसेवतीनचचंदनम् ३० साबालामोहिताराजन्कामेनपरिपीडिता ॥ उपचर्यंतितांसख्योविज्वरामपिसज्वराम् ३१ तप्यतेहृदयंतस्यालेपितंचंदनेनच ॥
कपोलेपांडिमाचिह्नंनेत्रेजलसमन्विते ३२ जृंभणंचतथास्वापोदेहेतस्याव्यवर्धत ॥ पद्मिनीकंदचूर्णानिशीतलानि[1]मुहुर्मुहुः ३३ क्षिपंतिसख्योहृदयेपीडि
तेमन्मथाग्निना ॥ व्यजनानिप्रकुर्वंतिपृच्छंतिचपुनःपुनः ३४ काव्यथाकिंशरीरंतेकिमिदंतवभामिनि ॥ किंतुभ्यंरोचतेदेवितदाख्याहिवरानने ३५ क
स्मादिदंसमुत्पन्नंदुःखसाध्यंमनोरमे ॥ त्वन्मनोनुगतंवाक्यंवदंत्येतास्तुसारिकाः ३६ शुकानीलतमाःसुभ्रुपठंतिहिपुमानिव ॥ प्रह्लादजननंवाक्यंकिमर्थंनाद्य
भाषसे ३७ तवतातोमहावीरोदेवानामपिदूर्जयः ॥ तस्याग्रेतिष्ठतेकोपिनभूमौवरवर्णिनि ३८ बलेःपुत्रोमहावीरोबाणोहिदुरतिक्रमः ॥ जित्वामरावती
कंचनगरंशोणिताह्वयम् ॥ यत्रसंतिष्ठतेदेवःशूलहस्तोमहेश्वरः ३९ पुत्रोयमितिजानीहिगिरिजांयोब्रवीद्धरः ॥ बाणंप्रतिमहादेवस्तवतातमुखेशृणु ४०
काव्यथेतिमुखेचेदंनासाग्रंचविराजते ॥ नीहारबिंदवःपद्मेराजंतेशरदागमे ४१ संपूर्णचंद्रप्रतिमंमुखंचंद्रोयथाघने ॥ नशोभतेतुविच्छायंकिमर्थंकारणंव
द ४२ श्वासान्मुंचसिबालेत्वंनरतिंयातिभावतः ॥ गृहाणभोजनंदिव्यंयत्तेमनसिवर्तते ४३ तांबूलंरोचतेपूर्वंतत्किमर्थंनगृह्यते ॥ मिष्टानियानिवस्तूनिदु
र्लभानीतरैर्जनैः ४४ गृहाणदेविउत्तिष्ठवदपीडांशरीरजाम् ॥ इतिकोलाहलंश्रुत्वाउषावेश्मसमुद्भवम् ४५ दासीभिःकीर्तितंतत्रमातुरग्रेपृथक्पृथक् ॥ राज
पुत्रीयदादेविसमायातागृहेसती ४६ जलक्रीडाविहाराच्चमूकेवपरिलक्ष्यते ॥ अतोदासीजनादेविवदामस्त्वांवयंजनाः ४७ कोमोहःकिमिदंमौनंकःस्वापो
म्लानताकथम् ॥ विचार्यभिषजोदेविदिश्यंतांकष्टशांतये ४८ शिरीषपुष्पसदृशंयच्छरीरंसुकोमलम् ॥ तत्कथंसहतेदेविव्याधिभारंवरानने ४९

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

---

१ शीतलानि सुतोयानि चंद्रानानि इतिपाठः ।

॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेवि

इतिश्रुत्वातदादेवीसत्वराहंसगामिनी ॥ प्राप्यदेशमुषायत्रकिमिदंकष्टलक्षणं ५० पल्लवाकृतिहस्तेनकोमलंतस्करंतदा ॥ स्पृष्टांगुलीरनायासंस्फोटयामासभाविनी ५१ किमस्तितवकल्याणिकाव्यथातववर्तते ॥ एतेवैद्याःसमागत्यपृच्छंतिभवतींहितव् ५२ ॥ वैद्याऊचुः ॥ ॥ जलक्रीडांगतातत्रराजपुत्रीसखीगणैः ॥ पार्वत्याःक्रीडितंतत्रजानीमःश्रमसंभवं ५३ श्रमाद्ग्लानिःसमुत्पन्नाजृंभणंचपुनःपुनः ॥ स्वापश्वजायतेतेनमाभयंकर्तुमर्हसि ५४ ॥ ॥ देव्युवाच ॥ ॥ त्वद्दयेनिहितंवैद्याश्वंदनंहिमसंयुतम् ॥ अमात्याःकिमिदंशीघ्रंकिमिदंबुद्बुदायते ५५ अतिदाहोमहान्स्वेदःपिपासानबुभुक्षते ॥ प्रलापएवकिंतस्यांशास्त्रतोब्रूतनिश्चितम् ५६ ॥ वैद्याऊचुः ॥ ॥ क्रीडाविहारेमिलिताःस्त्रीजनादेवसन्निधौ ॥ रूपेणाप्रतिमादेवीराजपुत्रीचभाविनी ५७ दृष्टिपातःकृतस्ताभिस्तेनपुत्र्यांव्यथाभवत् ॥ रक्षामंत्रैस्तथापीतैःसर्षपैस्तांकुमारिकाम् ५८ पानीयैरभिषेकेणपराशांतिर्भविष्यति ॥ इत्युक्त्वाभिषजःसर्वेनिवृत्तान्नृपवेश्मतः ५९ सूचयंतःपुनःसर्वेकामाभिप्रायजांव्यथाम् ॥ मातृपृष्टावरारोहाचिरकालमुवाचसा ६० लज्जावतीमहाभागामातरंरुदतीभृशम् ॥ मातर्नरोचतेनित्यंभाषणंनचभोजनम् ६१ नचाप्युत्सवकंमातःसदाहंत्वद्दयंशृणु ॥ इत्युक्त्वाविरराामाथत्युषानारीवरानना ६२ सर्वाभिःस्त्रीभिरारब्धमन्योन्यंमुखवीक्षणम् ॥ लज्जानुकारिनारीणांयौवनंहिभवेदिति ६३ इयंचराजकन्याहिभर्तृयोग्याकिमुच्यते ॥ पितुःप्रसादान्मातुश्वप्राप्नुयात्सदृशंवरम् ६४ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिबाणयुद्धेउषाविरहोनामसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ तत्रस्थाःपरमानार्यश्चित्रेणपरमाद्भुताः ॥ ततोहर्म्येशयानांतुवैशाखेमासिमाधिनीम् १ द्वादश्यांशुक्लपक्षस्यसखीगणवृतांतदा ॥ यथोक्तःपुरुषःस्वप्नेरमयामासतांशुभाम् २ विचेष्टमानारुदतीदेव्यावचनचोदिता ॥ सास्वप्नेरमितातेनस्त्रीभावंचापिलंभिता ॥ शोणिताक्ताप्ररुदतीसहसैवोत्थितानिशि ३ तांतथारुदतींदृष्ट्वासखीभयसमन्विता ॥ चित्रलेखावचःस्निग्धमुवाचपरमाद्भुतम् ४ उषेमाभैःकिमेवंत्वंरुदतीपरितप्यसे ॥ बलेःसुतसुताचत्वंप्रख्याताकिंभयान्विता ५ नभयंविद्यतेलोकेतवसुभ्रुविशेषतः ॥ अभयंतववामोरुपितादेवांतकोरणे ६ उत्तिष्ठोत्तिष्ठभद्रंतेविषादंमाकृथाःशुभे ॥ नैवंविधेषुवासेषुभयमस्तिवरावने ७ असकृद्देवसहितःशचीभर्तासुरेश्वरः ॥ अप्राप्तएवनगरंपित्रातेमृदितोरणे ८

ष्णुपर्वणिटीकायांसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

१ तत्रइ०पा० २ अत्रनसमापितोध्यायोलिखितपुस्तके ।

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ मह्यंमम ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ दुष्टेनकामवतामनसायत्‌विक्रियतेतदेवअशुभंवापापपुण्यंवा नत्वनिच्छाप्राप्तमित्यर्थः १८

अयंदेवसमूहस्यभयदश्चपितातव ॥ महासुरवरःश्रीमान्बलेःपुत्रोमहाबलः ९ एवंसाभिहितासख्याबाणपुत्रीयशस्विनी ॥ स्वप्नेरूपंयथादृष्टंन्यवेदयदनि
दिता १० ॥ उषोवाच ॥ एवंसंधर्षितासाध्वीकथंजीवितुमुत्सहे ११ पितरंकिंनुवक्ष्यामिदेवशत्रुमरिंदमम् ॥ एवंसंदूषणकरींवंशस्यास्यमहौजसः १२
श्रेयोहिमरणंमह्यंनमेश्रेयोद्यजीवितम् ॥ ईप्सितोवायथाकोपिपुरुषोविगतोहिमे १३ जाग्रतीवयथाचाहमवस्थेयंकृताभम ॥ निशायांजाग्रतीवाहंनीताकेन
दशामिमां ॥ कथमेवंकृतानामकन्याजीवितुमुत्सहे १४ कुलोपक्रोशनकरीकुलांगारीनिराश्रया ॥ जीवितुंनस्पृहेन्नारीसाध्वीनामग्रतःस्थिता १५ इत्येवंबाष्प
पूर्णाक्षीसखीजनवृतातदा ॥ विललापचिरंकालमुषाकमललोचना १६ अनाथवत्तांरुदतींसख्यःसर्वाविचेतसः ॥ ऊचुरश्रुपरीताक्षीमुषांसर्वाःसमागताः १७दु
ष्टेनमनसादेविशुभंवायदिवाशुभम् ॥ क्रियतेनचतेसुभ्रुकिंचिद्दुष्टंमनःशुभे १८ प्रसभंदैवसंयोगाद्यदिभुक्तासिभामिनि ॥ स्वप्नयोगेनकल्याणिव्रतलोपोनाविद्य
ते १९ व्यभिचारेणतेदेविनास्तिकश्चिद्व्यतिक्रमः ॥ नचस्वप्नकृतोदोषोमर्त्यलोकेस्तिसुंदरि २० एवंविप्रर्षयोदेविधर्मज्ञाःकथयंतिवै ॥ मनसाचैववाचाचक
र्मणाचविशेषतः ॥ दुष्टायात्रिभिरेतैस्तुपापासाप्रोच्यतेबुधैः २१ नचतेदृश्यतेभीरुमनःप्रचलितंसदा ॥ कथंत्वंदोषसंदुष्टानियताब्रह्मचारिणी २२ य
दिसुप्तासतीसाध्वीशुद्धभावामनस्विनी ॥ इमामवस्थांप्राप्तात्वंनैवधर्मोविलुप्यते २३ यस्यादुष्टंमनःपूर्वंकर्मणाचोपपादितम् ॥ तामाहुरसतींनामसती
त्वमसिभाविनि २४ कुलजारूपसंपन्नानियताब्रह्मचारिणी ॥ इमामवस्थांनीतासिकालोहिदुरतिक्रमः २५ इत्येवमुक्तांरुदतींबाष्पेणावृतलोचनाम् ॥
कुंभांडदुहितावाक्यंपरमंत्विदमब्रवीत् २६ त्यजशोकंविशालाक्षिअपापात्वंवरानने ॥ श्रुतंमेयदिदंवाक्यंयाथातथ्येनतच्छृणु २७ उषेयदुक्तादेव्या
सिभर्तारंध्यायतीतदा ॥ समीपेदेवदेवस्यस्मरभामिनितद्वचः २८ द्वादश्यांशुक्लपक्षस्यवैशाखेमासियोनिशि ॥ हर्म्येशयानांरुदतींस्त्रीत्वंसमुपनेष्यति २९
भवितासहितेभर्ताशूरःशत्रुनिबर्हणः ॥ इत्युवाचवचोहृष्टादेवीतवमनोगतम् ३० नहितद्वचनंमिथ्यापार्वत्यायदुदाहृतम् ॥ सात्वंकिमिदमत्यर्थंरोदिषींदुनि
भानने ३१ एवमुक्तातयाबालास्मृत्वादेवीवचस्ततः ॥ अभवन्नष्टशोकासाबाणपुत्रीशुभेक्षणा ३२॥उषोवाच ॥ स्मरामिभामिनिवचोदेव्याःक्रीडागतेभवे ॥
यथोक्तंसर्वमखिलंप्राप्तंहर्म्यतलेमया ३३ भर्तातुममयद्येषलोकनाथस्यभार्यया ॥ व्यादिष्टःसकथंज्ञेयस्तत्रकार्यंविधीयताम् ३४ इत्येवमुक्तेवचनेकुं
भांडदुहितापुनः ॥ व्याजहारयथान्यायमर्थतत्वविशारदा ३५ नहितस्यकुलंदेविनकीर्तिर्नापिपौरुषम् ॥ कश्चिज्जानातितत्त्वेनकिमिदंत्वंविमुह्यसे ३६

॥ १९ ॥ २० ॥ २१ ॥ प्रचलितंकामवेगवशीकृतं कथंत्वंदोषसंदुष्टा नकथमपीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥

भस्मप्रहरणोरौद्रःकालांतकयमोपमः ॥ नदन्मेघसहस्रेणतुल्योनिर्घातनिःस्वनः ७२ निःश्वसन्जृंभमाणश्चनिद्रान्विततनुर्भृशम् ॥ नेत्राभ्यामाकुलंवक्रं
मुहुःकुर्वन्भ्रमन्मुहुः ७३ संहृष्टरोमाग्लानाक्षोभग्नचित्तइवश्वसन् ॥ हलायुधमभिक्रुद्धःसाक्षेपमिदब्रवीत् ७४ किमेवंबलमत्तोसिनमांपश्यसिसंयुगे ॥ ति
ष्ठतिष्ठनमेजीवन्मोक्ष्यसेरणमूर्द्धनि ७५ इत्येवमुक्त्वाप्रहसन्हलायुधमुपाद्रवत् ॥ युगांताग्निनिभैर्घोरैर्मुष्टिभिर्जनयन्भयम् ७६ चरतस्तत्रसंग्रामेमंडला
निसहस्रशः ॥ रौहिणेयस्यशीघ्रेणनावस्थानमदृश्यत ७७ तस्यभस्मतदाक्षिप्तंज्वरेणाप्रतिमौजसा ॥ शैघ्र्याद्वक्षोनिपतितंशरीरेपर्वतोपमे ७८ तद्भस्मव
क्षसस्तस्यमेरोःशिखरमागमत् ॥ प्रदीप्तंपतितंतत्रगिरिशृंगंव्यदारयत् ७९ शेषेणचापिजज्वालभस्मनाकृष्णपूर्वजः ॥ निःश्वसन्जृंभमाणश्चनिद्रान्विततनु
र्भृशम् ८० नेत्रयोराकुलत्वंचमुहुःकुर्वन्भ्रमंस्तथा ॥ संहृष्टरोमाग्लानाक्षःक्षिप्तचित्तइवश्वसन् ८१ ततोहलधरोभग्नःकृष्णमाहविचेतनः ॥ कृष्णकृष्णम
हाबाहोप्रतीतोस्म्यभयंकुरु ८२ दह्यामिसर्वतस्तातकथंशांतिर्भवेन्मम ॥ इत्येवमुक्तेवचनेबलेनामिततेजसा ८३ प्रहस्यवचनंप्राहकृष्णःप्रहरतांवरः ॥
नभेतव्यमितीत्युक्तापरिष्वक्तोहलायुधः ८४ कृष्णेनपरमस्नेहात्ततोदाहात्प्रमुच्यत ॥ मोक्षयित्वाबलंतत्रदाहात्तुमधुसूदनः ८५ प्रोवाचपरमक्रुद्धोवासुदे
वोज्वरंतदा ॥ ॥ श्रीभगवानुवाच ॥ ॥ एह्येहिज्वरयुध्यस्वयातेशक्तिर्महामृधे ८६ यच्चतेपौरुषंसर्वंतद्दर्शयतुनोभवान् ॥ सव्येतराभ्यांबाहुभ्यामेवमुक्तो
ज्वरस्तदा ८७ चिक्षेपैनंमहद्भस्मज्वालागर्भंमहाबलः ॥ ततःप्रदीप्तगात्रस्तुमुहूर्तमभवत्प्रभुः ८८ कृष्णःप्रहरतांश्रेष्ठःशमंचाग्निर्गतस्ततः ॥ ततस्तैर्भुजगा
गारैर्बाहुभिस्तुत्रिभिस्तदा ८९ जघानकृष्णंग्रीवायांमुष्टिनैकेनचोरसि ॥ ससंप्रहारस्तुमुलस्तयोःपुरुषसिंहयोः ९० ज्वरस्यतुमहायुद्धेकृष्णस्यतुमहौज
सः ॥ पर्वतेषुपतंतीनामशनीनामिवस्वनः ९१ कृष्णज्वरभुजाघातैर्युद्धमासीत्सुदारुणम् ॥ नैवमेवंप्रहर्त्तव्यमितितत्रमहास्वनः ॥ मुहूर्तमभवद्युद्धमन्यो
न्यंतुमहात्मनोः ९२ ततोज्वरंकनकविचित्रभूषणंन्यपीडयद्भुजवलयेनसंयुगे ॥ जगत्क्षयंसमुपनयन्जगत्पतिःशरीरधृग्गगनचरंमहामृधे ९३ ॥ ॥ इति
श्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिकृष्णज्वरयुद्धेद्वाविंशत्यधिकशततमोऽध्यायः १२२ ॥ छ ॥ वैशंपायनउवाच ॥ मृतमित्यभिविज्ञायज्वरंश
त्रुनिषूदनः ॥ कृष्णोभुजबलाभ्यांतुचिक्षेपाथमहीतले १ मुक्तमात्रःसबाहुभ्यांकृष्णदेहंविवेशह ॥ अमुक्ताविग्रहंतस्यकृष्णस्याप्रतिमौजसः २ सह्याavि
ष्टस्तदातेनज्वरेणाप्रतिमौजसा ॥ कृष्णःस्खलन्निवमुहुःक्षितौगाढंव्यवर्त्तत ३

॥ ९२ ॥ ९३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांद्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ छ ॥ मृतमिति ॥ १ ॥ २ ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ त्रिधेति त्वंत्रिधाभूतंवपुः कृत्वा चतुष्पा

जृंभतेश्वसतेचैववल्गतेचपुनःपुनः ॥ रोमांचोत्थितगात्रश्चनिद्रयाचाभिभूयते ४ ततःस्थैर्यंसमालंब्यकृष्णःपरपुरंजयः ॥ विकुर्वंतिमहायोगीजृंभमाणःपुनःपुनः ५ ज्वराभिभूतमात्मानंविज्ञायपुरुषोत्तमः ॥ सोसृजज्ज्वरमन्यंतुपूर्वज्वरविनाशनम् ६ घोरंवैष्णवमत्युग्रंसर्वप्राणिभयंकरम् ॥ संसृष्टवान्सतेजस्वीतंज्वरंभीमविक्रमम् ७ ज्वरःकृष्णविसृष्टस्तुगृहीत्वातंज्वरंबलात् ॥ कृष्णायहृष्टःप्रायच्छत्तंजग्राहततोहरिः ८ ततस्तंपरमक्रुद्धोवासुदेवोमहाबलः ॥ स्वगात्रात्स्वज्वरेणैवनिष्कामयतवीर्यवान् ९ आविध्यभूतलेचैनंशतधाकर्तुमुद्यतः ॥ व्याघोषतज्वरस्तत्रभोःपरित्रातुमर्हसि १० आविध्यमानेतस्मिंस्तुकृष्णेनामिततेजसा ॥ अशरीराततोवाणीत्वंतरिक्षादभाषत ११ कृष्णकृष्णमहाबाहोयदूनांनंदिवर्धन ॥ मावधीर्ज्वरमेनंतुरक्षणीयस्त्वयानघ १२ इत्येवमुक्तेवचनेतंमुमोचहरिःस्वयम् ॥ भूतभव्यभविष्यस्यजगतःपरमोगुरुः १३ कृष्णस्यपादयोर्मूर्ध्नाशरणंसोगमज्ज्वरः ॥ एवमुक्तोहृषीकेशंज्वरोवाक्यमथाब्रवीत् १४ शृणुष्वममगोविंदविज्ञाप्यंयदुनंदन ॥ योमेमनोरथोदेवतंत्वंकुरुमहाभुज १५ अहमेकोज्वरस्तातनान्योलोकेज्वरोभवेत् ॥ त्वत्प्रसादाद्धिदेवेशवरमेनंवृणोम्यहम् १६ देवउवाच ॥ एवंभवतुभद्रंतेयथात्वंज्वरकांक्षसे ॥ वरार्थिनांवरोदेयोभवांश्चशरणंगतः १७ एकएवज्वरोलोकेभवानस्तुयथापुरा ॥ योयंमयाज्वरःसृष्टोमय्येवैषप्रलीयताम् १८ वैशंपायनउवाच ॥ एवमुक्तेतुवचनेज्वरंप्रतिमहायशाः ॥ कृष्णःप्रहरतांश्रेष्ठःपुनर्वाक्यमुवाचह १९ वासुदेवउवाच ॥ शृणुष्वज्वरसंदेशंयथालोकेचरिष्यसि ॥ सर्वजातिषुविश्रब्धंयथास्थावरजंगमे २० त्रिधाविभज्यचात्मानंमत्प्रियंयदिकांक्षसे ॥ चतुष्पादाम्भजैकेनद्वितीयेनचस्थावरान् २१ तृतीयोयश्चतेभागोमानुषेषूपपत्स्यते ॥ त्रिधाभूतंवपुःकृत्वापक्षिषुत्वंभवज्वर २२ चतुर्थोयस्तृतीयस्यभविष्यतिसतेध्रुवं ॥ एकांतरस्तृतीयस्तुसवैचातुर्थिकोज्वरः २३ मानुषेष्वभिभेदेनवसत्वंप्रविभज्यवै ॥ जातिष्वथावशेषासुनिवसत्वंशृणुष्वमे २४ वृक्षेषुकीटरूपेणतथासंकोचपत्रकः ॥ पांडुपत्रश्चविख्यातःफलेष्वातुर्यमेवच २५ अपांतुनीलिकांविद्याच्छिखोद्भेदेनबर्हिणाम् ॥ पद्मिन्यादौहिमोभूत्वापृथिव्यामपिचोषरः २६ गैरिकःपर्वतेष्वेवमत्प्रसादाद्भविष्यसि ॥ गोष्वपस्मारकोभूत्वाखोरकश्चभविष्यसि २७ एवंत्वंबहुरूपेणभविष्यसिमहीतले ॥ दर्शनात्स्पर्शनाच्चापिप्राणिनांवधमेष्यसि २८

दादिषुभवेद्यथाहृत्ययोज्यं ॥ २१ ॥ २२ ॥ तथातृतीयस्यभागस्यचतुर्थांशः सपक्षिषुध्रुवोभविष्यतीतियोजना ॥ २३ ॥ २४ ॥ आतुर्यंएकप्रदेशेजालकेनसंकोचः ॥ २५ ॥
॥ २६ ॥ अपस्मारकःभूतावेशः खोरकश्चरणरोगः ॥ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांत्रयोविंशत्यधिकशतत

ऋतेदेवमनुष्याणांनान्यस्त्वांविसहिष्यति ॥ वैशंपायनउवाच ॥ कृष्णस्यवचनंश्रुत्वाज्वरोहृष्टमनाह्यभूत् २९ प्रोवाचवचनंकिंचित्प्रणमित्वाकृतां
जलिः ॥ ज्वरउवाच ॥ सर्वजातिप्रभुत्वेनकृतोधन्योस्मिमाधव ३० भूयश्चतेवचःकर्त्तुमिच्छामिपुरुषर्षभ ॥ तदाज्ञापयगोविंदकिंकरोमिमहाभुज ३१
अहमसुरकुलप्रमाथिनात्रिपुरहरेणहरेणनिर्मितः ॥ रणशिरसिविनिर्जितस्त्वयाप्रभुरसिदेवतवास्मिकिंकरः ३२ धन्योस्म्यनुग्रहीतोस्मियत्त्वयामत्प्रियंकृ
तम् ॥ आज्ञापयप्रियंकिंतेचक्रायुधकरोम्यहम् ३३ ॥ वैशंपायनउवाच ॥ ज्वरस्यवचनंश्रुत्वावासुदेवोब्रवीद्वचः ॥ अभिसंधिंशृणुष्वाद्ययत्त्वांवक्ष्यामि
निश्चयात् ३४ ॥ श्रीभगवानुवाच ॥ महाहवेतवममचद्वयोरिमंपराक्रमंभुजबलकेवलाश्रयोः ॥ प्रणम्यमामेकमनाःपठेत्तुयःसवैभवेज्ज्वरविगतज्वरो
नरः ३४ त्रिपाद्भस्मप्रहरणस्त्रिशिरानवलोचनः ॥ समेप्रीतःसुखंदद्यात्सर्वामयपतिर्ज्वरः ३६ आद्यंतवंतःकवयःपुराणाःसूक्ष्माबृहंतोप्यनुशासितारः ॥
सर्वान्ज्वरान्घ्नंतुममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ३७ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुकृष्णेनज्वरःसाक्षान्महात्मना ॥ प्रोवाचयदुशार्दूलमेवमेतद्भ
विष्यति ३८ वरंलब्ध्वाज्वरोहृष्टःकृष्णाच्चसमयंपुनः ॥ प्रणम्यशिरसाकृष्णमपक्रांतस्ततोरणात् ३९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणि
ज्वरकृष्णसंवादोनामत्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥ छ ॥ वैशंपायनउवाय ॥ ततस्तेत्वरिताःसर्वेत्रयस्त्रयइवाग्नयः ॥ वैनतेयमथारुह्ययु
ध्यमानारणेस्थिताः १ ततःसर्वाण्यनीकानिबाणवर्षैरवाकिरन् ॥ अर्दयन्वैनतेयस्थानदंतोतिबलाद्रणे २ चक्रलांगलपातैश्चबाणवर्षैश्चपीडितम् ॥ संचु
कोपमहानीकंदानवानांदुरासदम् ३ कक्षेग्निरिवसंवृद्धःशुष्केंधनसमीरितः ॥ कृष्णबाणाग्निरुद्भूतोविवृद्धिंपरमांगतः ४ दानवानांसहस्राणितस्मिन्समर
मूर्द्धनि ॥ युगांताग्निरिवार्चिष्मान्दहमानोव्यराजत ५ तांदीप्यमानांमहतींनानाप्रहरणार्दिताम् ॥ सेनांबाणःसमासाद्यवारयन्वाक्यमब्रवीत् ६ लाववं
समुपागम्यकिमर्थंभयविक्लवाः ॥ दैत्यवंशसमुत्पन्नाःपलायध्वंमहाहवात् ७ कवचासिगदाप्रासखड्गचर्मपरश्वधान् ॥ उत्सृज्योत्सृज्यगच्छंतिकिंभवंतों
तरिक्षगाः ८ स्वजातिंचैवभावंचहरसंसर्गमेवच ॥ मानयद्भिर्नगंतव्यमेषोह्यहमवस्थितः ९ एवमुच्चरितंवाक्यंशृण्वंतस्तदचिंतयन् ॥ अपक्रामंततेसर्वे
दानवाभयमोहिताः १० प्रमाथगणशेषंतुतदनीकमतिष्ठत ॥ भग्नावशेषंयुद्धायपुनश्चक्रेमनस्तदा ११ कुंभांडोनामबाणस्यसखामात्यश्चवीर्यवान् ॥
भग्नंस्वबालमालोक्यइदंवचनमब्रवीत् १२

मोऽध्यायः ॥ १२३ ॥ ततइति ॥ १ ॥ अर्दयन् अपीडयन्अडभावआर्षः ॥ २ ॥ ३ ॥ ४ ॥ दहमानःदहन् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अचिंतयन् अचिंतयत् ॥ १० ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ गणसहस्त्रैर्वृतइतिशेषः देवस्यरथःशोभयन्दिशइतिशेषः ॥ १९ ॥ २० ॥ २१ ॥ जटिलाश्चऊर्ध्वशिरोरुहाश्चेतिद्वंद्वः ॥ २२ ॥ लग्नाः

एषबाणःस्थितोयुद्धेशंकरोयंगुहस्तथा ॥ किमर्थंबलमुत्सृज्यभवंतोयांतिमोहिताः ॥ प्राणांस्त्यक्त्वापलायंतेसर्वेदानवपुंगवाः १३ एवंकुंभांडवाक्यंते शृण्वंतोभयविह्वलाः ॥ एकांतेभयवित्रस्ताःसर्वेयांतिदिशोदश १४ भग्नंबलंततोदृष्ट्वाकृष्णेनामिततेजसा ॥ संरक्तनयनःस्थाणुर्युद्धायपर्यवर्तत १५ बाणसंरक्षणंकर्तुंरथमास्थायसुप्रभम् ॥ देवःकुमारश्चतथारथेनाग्निसमेनवै १६ नंदीश्वरसमायुक्तंरथमास्थायवीर्यवान् ॥ संदष्टोष्ठपुटोरुद्रःप्राधावतयतोहरिः ॥ १७ पिबन्निवतदाकाशंसिंहयुक्तोमहास्वनः ॥ रथोभातिवनोन्मुक्तःपौर्णमास्यांयथाशशी १८ ततोगणसहस्रैस्तुनानारूपैर्भयावहैः ॥ नदद्भिर्विविधान्नादान्रथोदेवस्यशोभयन् १९ केचित्सिंहमुखास्तत्रतथाव्याघ्रमुखाःपरे ॥ नागाश्चोष्ट्रमुखास्तत्रप्रवेपुरतिपीडिताः २० व्यालयज्ञोपवीताश्चकेचित्तत्रमहाबलाः ॥ खरोष्ट्रगजवक्त्राश्चअश्वग्रीवाश्चसंस्थिताः २१ छागमार्जारवक्त्राश्चमेषवक्त्रास्तथापरे ॥ चीरिणःशिखिनश्चान्येजटिलोर्ध्वशिरोरुहाः २२ लग्नाःपरिपतंतिस्मशंखदुंदुभिनिःस्वनैः ॥ केचित्सौम्यमुखास्तत्रदिव्यैःशस्त्रैरलंकृताः २३ नानापुष्पकृतापीडानानाप्रहरणायुधाः ॥ वामनाविकटाश्चैवसिंहव्याघ्रपरिच्छदाः २४ रुधिरार्द्रैर्महावक्त्रैर्महादंष्ट्राबलिप्रियाः ॥ देवंसंपरिवार्याथमहाशत्रुप्रमर्दनम् २५ लीलायमानास्तिष्ठंतिसंग्रामाभिमुखोन्मुखाः ॥ ततोदिव्यंरथंदृष्ट्वारुद्रस्याक्लिष्टकर्मणः २६ कृष्णोगरुडमास्थाययुयौरुद्रायसंयुगे ॥ वैनतेयस्थमास्यंतमायांतमग्रणींहरिम् २७ विव्याधकुपितोबाणैर्नाराचानांशतेनसः ॥ सशरैरर्दितस्तेनहरेणाक्लिष्टकर्मणा २८ हरिर्जग्राहकुपितोह्यस्त्रंपार्जन्यमुत्तमम् ॥ प्रचचालततोभूमिर्विष्णुरुद्रप्रपीडिता २९ नागाश्चोर्ध्वमुखास्तत्रविचेलुरभिपीडिताः ॥ पर्वताःपतितास्तत्रजलधाराभिराप्लुताः ३० केचिन्मुमुचिरेतत्रशिखराणिसमंततः ॥ दिशश्चप्रदिशश्चैवभूमिराकाशमेवच ३१ प्रदीप्तानीवदृश्यंतेस्थाणुकृष्णसमागमे ॥ समंततश्चनिर्घाताःपतंतिधरणीतले ३२ शिवाश्चैवाशिवान्नादान्नदंतेभीमदर्शनाः ॥ वासवश्चानदन्घोरंरुधिरंचाप्यवर्षत ३३ उल्काचबाणसैन्यस्यपुच्छेनावृत्यतिष्ठति ॥ प्रववौमारुतश्चापिज्योतींष्याकुलतामियुः ३४ प्रभाहीनास्तथौषध्योनचरंत्यंतरिक्षगाः ॥ एतस्मिन्नंतरेब्रह्मासर्वदेवगणैर्वृतः ३५ त्रिपुरांतकमुद्यंतंज्ञात्वारुद्रमुपागमत् ॥ गंधर्वाप्सरसश्चैवयक्षाविद्याधरास्तथा ३६ सिद्धचारणसंघाश्चपश्यंतोथदिविस्थिताः ॥ ततःपार्जन्यमस्त्रंतत्क्षिप्तंरुद्रायविष्णुना ३७

अन्योन्यसंसक्ताःभूमावितिशेषः ॥ २३ ॥ २४ ॥ २५ ॥ अभिमुखाःसादराः उन्मुखाः शत्रोरंतरिक्षस्थत्वात् अभिमुखाश्चतेउन्मुखाश्चेतिविग्रहः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ पुच्छेनपुच्छप्रदेशंइयुःईयुः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ विनिःसृतोबाणः

ययौज्वलन्नथतदायतोरुद्रोरथस्थितः ॥ ततःशतसहस्राणिशराणांनतपर्वणाम् ३८ निपेतुःसर्वतोदिग्भ्योयतोहररथःस्थितः ॥ अथाग्नेयंमहारौद्रमस्त्र
मस्त्रविदांवरः ३९ मुमोचरुषितोरुद्रस्तदद्भुतमिवाभवत् ॥ ततोविशीर्णदेहास्तेचत्वारोपिसमंततः ४० नादृश्यंतशरैश्छन्नादह्यमानाश्चवह्निना ॥ सिंह
नादंततश्चक्रुःसर्वएवासुरोत्तमाः ४१ हतोयमितिविज्ञायआग्नेयास्त्रेणवैतदा ॥ ततस्तद्विसहित्वाजोह्यस्त्रमस्त्रविदांवरः ४२ जग्राहवारुणंसोस्त्रंवासुदेवःप्र
तापवान् ॥ प्रत्युक्तेवासुदेवेनवारुणास्त्रेतितेजसि ४३ आग्नेयंप्रशमंयातमस्त्रंवारुणतेजसा ॥ तस्मिन्प्रतिहतेत्वस्त्रेवासुदेवेनसंयुगे ४४ पैशाचंराक्षसंरौ
द्रंतथैवांगिरसंभवः ॥ मुमोचास्त्राणिचत्वारियुगांताग्निनिभानिवै ४५ वायव्यमथसावित्रंवासवंमोहनंतथा ॥ अस्त्राणांवारणार्थायवासुदेवोव्यमुं
चत ४६ अस्त्रैश्चतुर्भिश्चत्वारिवारयित्वाशुमाधवः ॥ मुमोचवैष्णवंसोस्त्रंव्यादितास्यांतकोपमम् ४७ वैष्णवास्त्रेप्रयुक्तेतुसर्वएवासुरोत्तमाः ॥ भूतयक्ष
गणाश्चैवबाणानीकंचसर्वशः ४८ दिशःसर्वाःप्राद्रवंतभयमोहेनविक्लवाः ॥ प्रमाथगणभूयिष्ठेदीर्णेसैन्येमहासुरः ४९ निर्जगामततोबाणोयुद्धायाभिमुख
स्त्वरन् ॥ भीमप्रहरणैर्घोरैर्दैत्यैश्चसुमहाबलैः ॥ वृतोमहारथैर्वीरैर्वज्रीवसुरसत्तमैः ५० ॥ ॥ वैशंपायनउवाच ॥ ॥ जपैश्चहोमैश्चतथौषधीभिर्म
हात्मनःस्वस्त्ययनंप्रचक्रुः ॥ सतत्रवस्त्राणिशुभाश्चगावःफलानिपुष्पाणितथैवनिष्कान् ५१ बलेःसुतोब्राह्मणेभ्यःप्रयच्छन्विराजतेतेनतथाघनेशः ॥ स
हस्रसूर्योबहुकिंकिणीकःपरार्ध्यजांबूनदरत्नचित्रः ५२ सहस्रचंद्रायुततारकश्चरथोमहानाग्निरिवावभाति ॥ तमास्थितोदानवसंघृहीतंमहाध्वजंकार्मुकधृ
क्सबाणः ५३ उद्वर्तयिष्यन्यदुपुंगवानामतीवरौद्रंसबिभर्तिरूपम् ॥ समन्युमान्वीररथौघसंकुलोविनिर्ययौतान्प्रतिदैत्यसागरः ५४ वातप्रवृद्धस्तुतरंग
संकुलोयथार्णवोलोकविनाशनाय ॥ भीमानिसंत्रासकरैर्वपुर्भिस्तान्यग्रतोभांतिबलानितस्य ५५ महारथान्युच्छ्रितकार्मुकाणिसपर्वतानीववनानिराजन्
विनिस्सृतःसागरतोयवासादत्यद्भुतश्चाहवद्रष्टुकामः ॥ ५६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिरुद्रकृष्णयुद्धेचतुर्विंशत्यधिकशततमोऽ
ध्यायः १२४ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ अंधकारीकृतेलोकेप्रदीप्तेत्र्यंबकेतथा ॥ ननंदीनापिचरथोनरुद्रःप्रत्यदृश्यत १ द्विगुणंदी
प्तदेहस्तुरोषेणचबलेनच ॥ त्रिपुरांतकरोबाणंजग्राहसचतुर्मुखः २

सागरतोयवासात् समुद्रनिकटस्थानात्स्वस्थानात् ॥ ५६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांचतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ७ ॥
अंधकारीति ॥ १ ॥ सचतुर्मुखः ब्रह्मणासहितः सचतुर्मुखमितिपाठेबाणविशेषणंचतुर्धाशल्योपेतमित्यर्थः ॥ २ ॥

॥ ३ ॥ ४ ॥ आत्मानंरूद्ररूपिणम् ॥ ५ ॥ भूतात्माकृष्णः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ एकार्णवाभविष्येसंधिरार्षः ॥ १३ ॥ १४ ॥ १५ ॥
॥ १६ ॥ १७ ॥ ततःब्रह्मोपदेशानंतरंभगवान्रुद्रःशरीरेंतर्योगःप्रणिधानंतस्मात्ध्यानेनेत्यर्थःप्रविश्यहार्दंब्रह्मेतिशेषः ॥ १८ ॥ १९ ॥ कृष्णयोनिस्थंकृष्णस्यफलोपमस्ययो



संदधत्कार्मुकंचैवक्षेप्तुकामस्त्रिलोचनः ॥ विज्ञातोवासुदेवेनचित्तज्ञेनमहात्मना ३ जृंभणंनामसोप्यस्त्रंजग्राहपुरुषोत्तमः ॥ हरंसंजृंभयामासक्षिप्रकारीमहा
बलः ४ सशरःसधनुश्चैवहरस्तेनाशुजृंभितः ॥ संज्ञांनलेभेभगवान्विजेतासुरराक्षसाम् ॥ सशरंसधनुष्कंचदृष्ट्वात्मानंविजृम्भितम् ५ बलोन्मत्तोथबाणोसौ
शर्वंचोदयतेसकृत् ॥ ततोननादभूतात्मास्निग्धगंभीरयागिरा ६ प्रध्मापयामासतदाकृष्णःशंखंमहाबलः ॥ पांचजन्यस्यघोषेणशार्ङ्गविस्फूर्जितेनच ७
देवंविजृंभितंदृष्ट्वासर्वभूतानितत्रसुः ॥ एतस्मिन्नंतरेतत्ररुद्रस्यपार्षदारणे ८ मायायुद्धंसमाश्रित्यप्रद्युम्नंपर्यवारयन् ॥ सर्वांस्तुनिद्रावशगान्कृत्वामकरकेतु
मान् ९ दानवान्नाशयत्तत्रशरजालेनवीर्यवान् ॥ प्रमाथगणभूयिष्ठांस्तत्रतत्रमहाबलान् १० ततस्तुजृंभमाणस्यदेवस्याक्लिष्टकर्मणः ॥ ज्वालाप्रादुरभूद्व
क्त्राद्दहतीवदिशोदश ११ ततस्तुधरणीदेवीपीड्यमानामहात्मभिः ॥ ब्रह्माणंविश्वधातारंवेपमानाभ्युपागमत् १२ ॥ ॥ पृथिव्युवाच ॥ ॥ देवदेवमाहा
बाहोपीड्यामिपरमौजसा ॥ कृष्णरुद्रभराक्रांताभविष्यैकार्णवापुनः १३ अविषह्यमिमंभारंचिंतयस्वपितामह ॥ लघ्वीभूतायथादेवधारयेयंचराचरम्
१४ ततस्तुकाश्यपींदेवींप्रत्युवाचपितामहः ॥ मुहूर्तंधारयात्मानमाशुलघ्वीभविष्यसि १५ ॥ ॥ वैशंपायनउवाच ॥ ॥ दृष्ट्वातुभगवान्ब्रह्मारुद्रंव
चनमब्रवीत् ॥ सृष्टोमहासुरवधःकिंभूयःपरिरक्ष्यसे १६ नचयुद्धंमहाबाहोतवकृष्णेनरोचते ॥ नचबुध्यसिकृष्णंत्वमात्मानंतुद्विधाकृतम् १७ ततःशरी
रयोगाद्धिभगवानव्ययःप्रभुः ॥ प्रविश्यपश्यतेकृत्स्नांस्त्रींल्लोकान्सचराचरान् १८ प्रविश्ययोगंयोगात्मावरांस्ताननुचिंतयन् ॥ द्वारवत्यांयदुक्तंचतदनुस्मृ
त्यसर्वशः ॥ जगादनोत्तरंकिंचिन्निवृत्तोसौभवत्तदा १९ आत्मानंकृष्णयोनिस्थंपश्यतेह्येकयोनिजम् ॥ ततोनिःसृत्यरुद्रस्तुन्यस्तवादोभवन्मृधे २०
ब्रह्माणंचाब्रवीद्रुद्रोनयोस्त्स्थेभगवन्निति ॥ कृष्णेनसहसंग्रामेलघ्वीभवतुमेदिनी २१ ततःकृष्णोथरुद्रश्चपरिष्वज्यपरस्परम् ॥ परांप्रीतिमुपागम्यसं
ग्रामादपजग्मतुः २२ नचतौपश्यतेकेचिद्योगिनौयोगमागतौ ॥ एकौब्रह्मतथाकृत्वापश्यँल्लोकान्पितामहः २३ उवाचैतत्समुद्दिश्यमार्कंडेयंसनारदम् ॥
पार्श्वस्थंपरिपप्रच्छज्ञात्वावैदीर्घदर्शिनम् २४

निःकारणंभूमिस्थानोयंशुद्धंपरंब्रह्मकृष्णंआत्मानंचशुद्धब्रह्मैकतांगतंयुगपत्पश्यन्उभयोरेकयोनित्वमपश्यत् ततःस्वप्रत्यगात्मनासहस्वस्यविरोधासंभवात्रुद्रोमृधेयुद्धविषयेन्यस्त
वादोऽपास्तप्रतिज्ञोबभूव ॥ २० ॥ तदेवाहब्रह्माणंचेति ॥ २१ ॥ २२ ॥ तथाकृत्वारुद्रकृष्णयोर्योगंसंपाद्यपश्यन्नवतस्थेइतिशेष ॥ २३ एतद्वक्ष्यमाणंहरिरुद्रयोरभेदंउवाच २४

मंदरस्येति अत्रद्वयोःसर्वोत्तमत्वायोगादन्यतरोजीवःइतरईश्वरस्तयोश्चाभेदःप्रतिपाद्यते अन्योन्यलक्षणयोगित्वेनेतिकेचित् तत्रापिहरिणाजितोहरोजीवइत्येके हराल्लब्ध वरोहरिर्हरंजितवान्नत्वैश्वर्यादित्यन्ये मातुषनाट्यानुकारित्वेनहरमाराधयन्नपिऐश्वर्यात्तंजेतुंसमर्थःएवंकृष्णइत्यपिकश्चित् एतेषांपाखंडापसदानांमुखभंगायेयंकथाप्रवृत्ता ब्रह्मन्निति मार्कंडेयस्यनारदस्यसंबोधनम् ॥ २५ ॥ हरंचेति अत्रहरिहरयोस्तात्विकेभेदेसत्यपिनटमिवहरंहरिरूपेणापश्यदितियोजनायांब्रह्मणःभ्रांतत्वमायाति अतःकार्यव्यू हयोगिशरीरयोगिव्यवहारतोहरिहरसंज्ञयोर्देहयोर्भेदेपितदभिमानिनिभेदोनास्ति सर्वोत्तमद्वयायोगादित्यर्थः व्यावहारिकभेदवतोस्तद्देहयोरपिभेदंनापश्यमित्याह शंखेति

॥ पितामहउवाच ॥ मंदरस्यगिरेःपार्श्वेनलिन्यांभवकेशवौ ॥ रात्रौस्वप्नांतरेब्रह्मन्मयादृष्टौहराच्युतौ २५ हरंचहरिरूपेणहरिंचहररूपिणम् ॥ शंखचक्र गदापाणिंपीतांबरधरंहरं २६ त्रिशूलपट्टिशधरंव्याघ्रचर्मधरंहरिम् ॥ गरुडस्थंचापिहरंहरिंचवृषभध्वजम् २७ विस्मयोमेमहान्ब्रह्मन्दृष्ट्वातत्परमाद्भुतम् ॥ एतदाचक्ष्वभगवन्याथातथ्येनसुव्रत २८ ॥ मार्कंडेयउवाच ॥ शिवायविष्णुरूपायविष्णवेशिवरूपिणे ॥ यथांतरंनपश्यामितेनतौदिशतःशिवम् २९ अनादिमध्यनिधनमेतदक्षरमव्ययम् ॥ तदेवतेप्रवक्ष्यामिरूपंहरिहरात्मकम् ३० योविष्णुःसतुवैरुद्रोयोरुद्रःसपितामहः ॥ एकामूर्तिस्त्रयोदेवारुद्रविष्णु पितामहाः ३१ वरदालोककर्त्तारोलोकनाथाःस्वयंभुवः ॥ अर्धनारीश्वरास्तेतुव्रतंतीव्रंसमास्थिताः ३२ यथाजलेजलंक्षिप्तंजलमेवतुतद्भवेत् ॥ रुद्रंवि ष्णुःप्रविष्टस्तुतथारुद्रमयोभवेत् ३३ अग्निमग्निःप्रविष्टस्तुअग्निरेवयथाभवेत् ॥ तथाविष्णुंप्रविष्टस्तुरुद्रोविष्णुमयोभवेत् ३४ रुद्रमग्निमयंविद्याद्विष्णुःसोमा त्मकःस्मृतः ॥ अग्नीषोमात्मकंचैवजगत्स्थावरजंगमं ३५ कर्त्तारौचापहर्त्तारौस्थावरस्यचरस्यतु ॥ जगतःशुभकर्त्तारौप्रभविष्णूमहेश्वरौ ३६ कर्तृकारण कर्त्तारौकर्तृकारणकारकौ ॥ भूतभव्यभवौदेवौनारायणमहेश्वरौ ३७ एतेचैवप्रवर्षंतिभांतिवांतिसृजंतिच ॥ एतत्परतरंगुह्यंकथितंतेपितामह ३८ यश्चैनं पठतेनित्यंयश्चैनंशृणुयान्नरः ॥ प्राप्नोतिपरमंस्थानंविष्णुरुद्रप्रसादजं ३९ देवौहरिहरौस्तोष्येब्रह्मणासहसंगतौ ॥ एतौचपरमौदेवौजगतःप्रभवाप्ययौ ४० रुद्रस्यपरमोविष्णुर्विष्णोश्चपरमःशिवः ॥ एकएवद्विधाभूतोलोकेचरतिनित्यशः ४१ नविनाशंकरंविष्णुर्नविनाकेशवंशिवः ॥ तस्मादेकत्वमायातौरु द्रोपेंद्रौतुतौपुरा ॥ नमोरुद्रायकृष्णायनमःसंहतचारिणे ४२ नमःषडर्द्धनेत्रायसद्विनेत्रायवैनमः ॥ नमःपिंगलनेत्रायपद्मनेत्रायवैनमः ४३

यएवहरित्वेनप्रागवगतःसएवसद्योहरत्वेनदृष्टएवंपक्षांतरेपीत्यर्थः ॥ २६ ॥ २७ ॥ एतत्हरिहरयोरभेदंआचक्ष्वलोकेप्रकाशय ॥ २८ ॥ दिशतःदिशतां ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२॥ ३३ ॥ ३४ ॥ अग्नीषोमात्मकंभोक्तृभोज्यात्मकं ॥ ३५ ॥ ३६ ॥ कर्त्ताहिरण्यगर्भःकारणानिमहाभूतानितेषांकर्त्तारौतेषांकारकौच ॥ ३७ ॥ एतेब्रह्मविष्णु रुद्राःप्रवर्षंतिपर्जन्यरूपेण वांतिवायुरूपेण भांतिसूर्यरूपेण ॥ एतद्देवतात्रयात्मकं ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

नमःकुमारगुरवेप्रद्युम्नगुरवेमनः ॥ नमोधरणीधरायगंगाधरायवैनमः ४४ नमोमयूरपिच्छायनमःकेयूरधारिणे ॥ नमःकपालमालायवनमालायवैनमः
४५ नमस्त्रिशूलहस्तायचक्रहस्तायवैनमः ॥ नमःकनकदंडायनमस्तेब्रह्मदंडिने ४६ नमश्चर्मनिवासायनमस्तेपीतवाससे ॥ नमोस्तुलक्ष्मीपतयेउमायाः
पतयेनमः ४७ नमःखट्वांगधारायनमोमुशलधारिणे ॥ नमोभस्मांगरागायनमःकृष्णांगधारिणे ४८ नमःश्मशानवासायनमःसागरवासिने ॥ नमोवृषभ
वाहायनमोगरुडवाहिने ४९ नमस्त्वनेकरूपायबहुरूपायवैनमः ॥ नमःप्रलयकर्त्रेचनमस्त्रैलोक्यधारिणे ५० नमोस्तुसौम्यरूपायनमोभैरवरूपिणे ॥
विरूपाक्षायदेवायनमःसौम्येक्षणायच ५१ दक्षयज्ञविनाशायबलेर्नियमनायच ॥ नमःपर्वतवासायनमःसागरवासिने ५२ नमःसुररिपुघ्नायात्रिपुरघ्नाय
वैनमः ॥ नमोस्तुनरकघ्नायनमःकामांगनाशिने ५३ नमस्त्वंधकनाशायनमःकैटभनाशिने ॥ नमःसहस्रहस्तायनमोसंख्येयबाहवे ५४ नमःसहस्रशी
र्षायबहुशीर्षायवैनमः ॥ दामोदरायदेवायमुंजमेखलिनेनमः ५५ नमस्तेभगवन्विष्णोनमस्तेभगवन्शिव ॥ नमस्तेभगवतेदेवनमस्तेदेवपूजित ५६ नम
स्तेकर्मणांकर्मननमोमितपराक्रम ॥ हृषीकेशनमस्तेस्तुस्वर्णकेशनमोस्तुते ५७ इमंस्तवंयोरुद्रस्यविष्णोश्चैवमहात्मनः ॥ समेत्यऋषिभिःसर्वैस्तुतौस्तौ
तिमहर्षिभिः ५८ व्यासेनवेदविदुषानारदेनचधीमता ॥ भारद्वाजेनगर्गेणविश्वामित्रेणवैतथा ५९ अगस्त्येनपुलस्त्येनधौम्येनतुमहात्मना ॥ यइदंपठ
तेनित्यंस्तोत्रंहारिहरात्मकम् ६० अरोगोबलवांश्चैवजायतेनात्रसंशयः ॥ श्रियंचलभतेनित्यंनचस्वर्गान्निवर्तते ६१ अपुत्रोलभतेपुत्रंकन्याविंदतिस
त्पतिम् ॥ गुर्विणीश्रृणुतेयातुवरंपुत्रंप्रसूयते ६२ राक्षसाश्चपिशाचाश्चविघ्नानिचविनायकाः ॥ भयंतत्रनकुर्वंतियत्रायंपठ्यतेस्तवः ६३ इतिश्रीमहा
भारतेखिलेषुहरिवंशेविष्णुपर्वणिहरिहरात्मकस्तवोनामपंचविंशत्यधिकशततमोऽध्यायः १२५ ॥ ॥ जनमेजयउवाच ॥ ॥ अपयातेततोदेवेकृष्णेचैव
महात्मनि ॥ पुनश्चासीत्कथंयुद्धंपरेषांलोमहर्षणम् १ ॥ वैशंपायनउवाच ॥ ॥ कुंभांडसंगृहीतेतुरथेतिष्ठन्गुहस्तदा ॥ अभिदुद्रावकृष्णंचबलंप्रद्युम्नमे
वच २ ततःशरशतैरुग्रैस्तान्विव्याधरणेगुहः ॥ अमर्षरोषसंक्रुद्धःकुमारःप्रवरोनदन् ३ शरसंवृतगात्रास्तेत्रयस्त्रयइवाग्नयः ॥ शोणितौघप्लुतैर्गात्रैःप्रायुध्यं
तगुहंततः ४ ततस्तेयुद्धमार्गज्ञास्त्रयस्त्रिभिरनुत्तमैः ॥ वायव्याग्नेयपार्जन्यैर्बिभिदुर्दीप्ततेजसः ५ शैलवारुणसावित्रैस्तान्सविव्याधकोपवान् ॥ तस्यदीप्तश
रौघस्यदीप्तचापधरस्यच ६ शरौघानस्त्रमायाभिर्ग्रसंतिस्ममहात्मनः ॥ यदातदागुहःक्रुद्धःप्रज्वलन्निवतेजसा ७

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिटीकायांपंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ छ ॥ अपयातेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ लंबतेपार्वत्याएवाष्टमांशाज्जातावाणस्यमाताजी

अस्त्रंब्रह्मशिरोनामकालकल्पंदुरासदम् ॥ संदष्टौष्ठपुटःसंख्येजगृहेपावकिःप्रभुः ८ प्रयुक्तेब्रह्मशिरसिसहस्रांशुसमप्रभे ॥ उग्रेपरमदुर्धर्षेलोकक्षयकरे
तथा ९ हाहाभूतेषुसर्वेषुप्रधावत्सुसमंततः ॥ केशवःकेशिमथनश्चक्रंजग्राहवीर्यवान् १० सर्वेषामस्त्रवीर्याणांवारणंवातनंतथा ॥ चक्रमप्रतिचक्रस्यलो
केख्यातंमहात्मनः ११ अस्त्रंब्रह्मशिरस्तेननिष्प्रभंकृतमोजसा ॥ घनैरिवातपापायेसवितुर्मंडलंयथा १२ ततोनिष्प्रभतांयातेनष्टवीर्येमहौजसि ॥ तस्मि
न्ब्रह्मशिरस्यस्त्रेक्रोधसंरक्तलोचनः १३ गुहःप्रजज्वालरणेहविषेवाग्निरुल्बणः ॥ शत्रुघ्नींज्वलितांदिव्यांशक्तिंजग्राहकांचनीम् १४ तांप्रदीप्तांमहोल्का
भांयुगांताग्निसमप्रभां ॥ घंटामालाकुलांदिव्यांचिक्षेपरुषितोगुहः १५ ननादबलवच्चापिनादंशत्रुभयंकरम् ॥ साचक्षिप्तातदातेनब्रह्मण्येनमहात्मना
१६ जृंभमाणेवगगनेसंप्रदीप्तमुखीतदा ॥ आधावतमहाशक्तिःकृष्णस्यवधकांक्षिणी १७ भृशंविषण्णःशक्रोपिसर्वामरगणैर्वृतः ॥ शक्तिंप्रज्वलितांदृष्ट्वा
दग्धःकृष्णेतिचाब्रवीत् १८ तांसमीपमनुप्राप्तांमहाशक्तिंमहामृधे ॥ हुंकारेणैवनिर्भर्त्स्यपातयामासभूतले १९ पातितायांमहाशक्त्यांसाधुसाध्वितिस
र्वशः ॥ सिंहनादंततश्चक्रुःसर्वेदेवाःसवासवाः २० ततोदेवेषुनर्दत्सुवासुदेवःप्रतापवान् ॥ पुनश्चक्रंसजग्राहदैत्यांतकरणंरणे २१ व्याविध्यमानेचक्रेतुकृष्णे
नाप्रतिमौजसा ॥ कुमाररक्षणार्थायबिभ्रतीसुतनुंतदा २२ दिग्वासादेववचनात्प्रविष्टातत्रकोटवी ॥ लंबमानामहाभागाभागोदेव्यास्तथाष्टमः २३
चित्राकनकशक्तिस्तुसाचनग्नास्थितांतरे ॥ अथांतरात्कुमारस्यदेवींदृष्ट्वामहाभुजः ॥ पराङ्मुखस्ततोवाक्यमुवाचमधुसूदनः २४ ॥ ॥श्रीभगवानुवा
च ॥ ॥ अपगच्छापगच्छत्वंधिक्त्वामितिवचोब्रवीत् ॥ किमेवंकुरुषेविघ्नंनिश्चितस्यवधंप्रति २५ ॥ ॥ वैशंपायनउवाच ॥ ॥ श्रुत्वैवंवचनंतस्यको
टवीतुतदाविभो ॥ नैववासःसमाधत्तकुमारपरिरक्षणात् २६ ॥ श्रीभगवानुवाच ॥ अपवाह्यगुहंशीघ्रमपयाहिरणाजिरात् ॥ स्वस्तिह्येवंभवेदद्ययोत्स्य
तोयोत्स्यतामया २७ तांचदृष्ट्वास्थितांदेवोहरिःसंग्राममूर्द्धनि ॥ संजहारततश्चक्रंभगवान्वासवानुजः २८ एवंकृतेतुकृष्णेनदेवदेवेनधीमता ॥ अपवाह्यगु
हंदेवीहरसान्निध्यमागता २९ एतस्मिन्नंतरेचैववर्तमानेमहाभये ॥ कुमारेरक्षितेदेव्याबाणस्तंदेशमाययौ ३० अपयांतंगुहंदृष्ट्वामुक्तंकृष्णेनसंयुगात् ॥ बा
णश्चिंतयेतत्रस्वयंयोत्स्यामिमाधवम् ३१ वैशंपायनउवाच ॥ भूतयज्ञगणाश्चैवबाणानीकंचसर्वशः ॥ दिशःप्रदुद्रुवुःसर्वेभयमोहितलोचनाः ३२ प्रमा
थगणभूयिष्ठेसैन्येदीर्णेमहासुरः ॥ निर्जगामततोबाणोयुद्धायाभिमुखस्त्वरन् ३३

वपुत्रीत्वमेवइतिवक्ष्यमाणत्वात् ॥ २३ ॥ २४ ॥ २५ ॥ रक्षणात्रक्षणार्थम् ॥ २६ ॥ मयासहयोत्स्यतोयुध्यतःएवंस्वस्तिभवेत् २७ २८ २९ ३० ३१ ३२ ३३

१७३ भीमप्रहरणैर्घोरैर्दैत्यैंद्रैःसुमहारथैः ॥ महाबलैर्महावीरैर्वज्रीवसुरसत्तमैः ३४ पुरोहिताःशत्रुवधंवदंतस्तथैवचान्येश्रुतशीलवृद्धाः ॥ जपैश्चमंत्रैश्चतथौषधी अ. १२६
भिर्महात्मनःस्वस्त्ययनंप्रचक्रुः ३५ ततस्तूर्यप्रणादैश्चभेरीणांतुमहास्वनैः ॥ सिंहनादैश्चदैत्यानांबाणःकृष्णमभिद्रवत् ३६ दृष्ट्वाबाणंतुनिर्यातंयुद्धायैवव्य
वस्थितम् ॥ आरुह्यगरुडंकृष्णोबाणस्याभिमुखोययौ ३७ आयांतमथतंदृष्ट्वायदूनामृषभंरणे ॥ वैनतेयमथारूढंकृष्णमप्रतिमौजसम् ३८ अथबाणस्तु
तंदृष्ट्वाप्रमुखेप्रत्युपस्थितम् ॥ उवाचवचनंक्रुद्धोवासुदेवंतरस्विनम् ३९ ॥ बाणउवाच ॥ तिष्ठतिष्ठनमेद्यत्वंजीवन्प्रतिगमिष्यसि ॥ द्वारकांद्वारकस्थांश्च
सुहृदोद्रक्ष्यसेनच ४० सुवर्णवर्णान्वृक्षाग्रानद्यद्रक्ष्यसिमाधव ॥ मयाभिभूतःसमरेमुमूर्षुःकालनोदितः ४१ अद्यबाहुसहस्रेणकथमष्टभुजोरणे ॥ मयास
हसमागम्ययोत्स्यसेगरुडध्वज ४२ अद्यत्वंवैमयायुद्धेनिर्जितःसहबांधवः ॥ द्वारकांशोणितपुरेनिहतःसंस्मरिष्यसि ४३ नानाप्रहरणोपेतंनानांगदविभूषि
तम् ॥ अद्यबाहुसहस्रंमेकोटिभूतंनिशामय ४४ गर्जतस्तस्यवाक्यौघाजलौघाइवसिंधुतः ॥ निश्चरंतिमहाघोरावातोद्धूताइवोर्मयः ४५ रोषपर्याकुलेचै
वनेत्रेतस्यबभूवतुः ॥ जगद्दिधक्षन्निवखेमहासूर्यइवोदितः ४६ तच्छ्रुत्वानारदस्तस्यबाणस्यात्यूर्जितंवचः ॥ जहाससुमहाहासंभिंदन्निवनभस्तलम् ४७
योगपट्टमुपाश्रित्यतस्थौयुद्धदिदृक्षया ॥ कौतूहलोत्फुल्लदृशःकुर्वन्पर्यटतेमुनिः ४८ ॥ कृष्णउवाच ॥ बाणकिंगर्जसेमोहाच्छूराणांनास्तिगर्जितम् ॥ ए
ह्येहियुध्यस्वरणेकिंवृथागर्जितेनते ४९ यदियुद्धानिवचनैःसिद्ध्येयुर्दितिनंदन ॥ भवानेवजयेनित्यंबह्वबद्धंप्रजल्पसि ५० एह्येहिजयमांबाणजितोवावसुधात
ले ॥ चिरायावाङ्मुखोदीनःपतितःशेष्यसेसुरैः ५१ इत्येवमुक्त्वाबाणंतुमर्मभेदिभिराशुगैः ॥ निर्बिभेदतदाकृष्णस्तममोघैर्महाशरैः ५२ ॥ विनिर्भिन्न
स्तुकृष्णेनमार्गणैर्मर्मभेदिभिः ॥ स्मयन्बाणस्ततःकृष्णंशरवर्षैरवाकिरत् ५३ ज्वलद्भिरिवसंयुक्तंतस्मिन्युद्धेसुदारुणे ॥ ततःपरिघनिस्त्रिंशैर्गदातोमरशक्ति
भिः ५४ मुशलैःपट्टिशैश्चैवछादयामासकेशवम् ॥ सतुबाहुसहस्रेणगर्वितोदैत्यसत्तमः ५५ योधयामाससमरेद्विबाहुमथलीलया ॥ लाघवात्तस्यकृष्ण
स्यबलिसूनूरुषान्वितः ५६ ततोस्त्रंपरमंदिव्यंतपसानिर्मितंमहत् ॥ यदप्रतिहतंयुद्धेसर्वामित्रविनाशनम् ५७ ब्रह्मणाविहितंदिव्यंतन्मुमोचदितेःसुतः ॥
तस्मिन्मुक्तेदिशःसर्वास्तमःपिहितमंडलाः ५८ प्रादुरासन्सहस्राणिसुघोराणिचसर्वशः ॥ तमसासंवृतेलोकेनप्राज्ञायतकिंचन ५९ साधुसाध्वितिबाणंतुपू
जयंतिस्मदानवाः ॥ हाहाधिगितिदेवानांश्रूयतेवागुदीरिता ६० ततोस्त्रबलवेगेनसार्चिष्मत्यःसुदारुणाः ॥ घोररूपामहाघोरानिपेतुर्बाणवृष्टयः ६१ १७३

॥ ५० ॥ असुरैःसहेतिशेषः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥

नैववाताःप्रवायंतिनमेघाःसंचरंतिच ॥ अस्त्रेविसृष्टेबाणेनदह्यमानेचकेशवे ६२ ततोस्त्रंसुमहावेगंजग्राहमधुसूदनः ॥ पार्जन्यंनामभगवान्कालांतकनि
भंरणे ६३ ततोवितिमिरेलोकेशराग्निःप्रशमंगतः ॥ दानवामोघसंकल्पाःसर्वेभूवंस्तदाभृशम् ६४ दानवास्त्रंप्रशांतंतुपर्जन्यास्त्रेभिमंत्रिते ॥ ततोदेवगणाः
सर्वेनदंतिचहसंतिच ६५ हतेशस्त्रेमहाराजदैतेयःक्रोधमूर्च्छितः ॥ भूयःसंछादयामासकेशवंगरुडेस्थितम् ६६ मुशलैःपट्टिशैश्चैवच्छादयामासकेशवम्
तस्यतांतरसासर्वांबाणवृष्टिंसमुद्यताम् ६७ प्रहसन्वारयामासकेशवःशत्रुसूदनः ॥ केशवस्यतुबाणेनवर्त्तमानेमहाहवे ६८ तस्यशार्ङ्गविनिर्मुक्तैःशरैरशनि
संनिभैः ॥ तिलशस्तद्रथंचक्रेसाश्वध्वजपताकिनम् ६९ चिच्छेदकवचंकायान्मुकुटंचमहाप्रभम् ॥ कार्मुकंचमहातेजाहस्तचापंचकेशवः ७० विव्याध
चैनमुरसिनाराचेनस्मयन्निव ॥ सममर्माभिहतःसंख्येप्रमुमोहाल्पचेतनः ७१ तंदृष्ट्वामूर्च्छितंबाणंप्रहारपरिपीडितम् ॥ प्रासादवरशृंगस्थोनारदोमुनिपुंग
वः ७२ उत्थायापश्यततदाकक्ष्यास्फोटनतत्परः ॥ वादयानोनखांश्चैवदिष्ट्यादिष्ट्येतिचाब्रवीत् ७३ अहोमेसफलंजन्मजीवितंचसुजीवितम् ॥ दृष्टंमे
यदिदंचित्रंदामोदरपराक्रमम् ७४ जयबाणंमहाबाहोदैतेयंदेवकिल्बिषम् ॥ यदर्थमवतीर्णोसितत्कर्मसफलीकुरु ७५ एवंस्तुत्वातदादेवंबाणैःखंद्योतयन्
शितैः ॥ इतस्ततःसंपतद्भिर्नारदोव्यचरद्रणे ७६ प्रयुध्येतांध्वजौतत्रतावन्योन्यमभिद्रुतौ ॥ युद्धंत्वभूद्वाहनयोरुभयोर्देवदैत्ययोः ७७ गरुडस्यचसंग्रामो
मयूरस्यचधीमतः ॥ पक्षतुंडप्रहारैस्तुचरणास्यनखैस्तथा ७८ अन्योन्यंजघ्नतुःक्रुद्धौमयूरगरुडावुभौ ॥ वैनतेयस्ततःक्रुद्धोमयूरंदीप्ततेजसम् ७९
जग्राहशिरसिक्षिप्रंतुंडेनाभिपतंस्तदा ॥ उत्क्षिप्यचैवपक्षाभ्यांनिजघानमहाबलः ८० पद्भ्यांपार्श्वाभिघाताभ्यांकृत्वाघातान्यनेकशः ॥ आकृष्यचैनं
तरसाविकृष्यचमहाबलः ८१ निःसंज्ञंपातयामासगगनादिवभास्करम् ॥ मयूरेपतितेतस्मिन्पपाततिबलोभुवि ८२ बाणःसमरसंविग्नश्चिंतयन्कार्यमा
त्मनः ॥ मयातिबलमत्तेननकृतंसुहृदांवचः ८३ पश्यतांदेवदैत्यानांप्राप्तोस्म्यापदमुत्तमाम् ॥ तंदीनमनसंज्ञात्वारणेबाणंसुविक्लवम् ८४ चिंतयद्भगवान्रु
द्रोबाणरक्षणमातुरः ॥ ततोनंदींमहादेवःप्राहगंभीरयागिरा ८५ नंदिकेश्वरयाहित्वंयतोबाणोरणेस्थितः ॥ रथेनानेनदिव्येनसिंहयुक्तेनभास्वता ८६
बाणेसंयोजयाशुत्वमलंयुद्धायवानघ ॥ प्रमाथगणमध्येहंस्थास्यामिनहिमेमनः ८७ योद्धुंवितरतेह्यद्यबाणंसंरक्ष्यगम्यताम् ॥ तथेत्युक्त्वाततोनंदीरथे
नरथिनांवरः ८८ यतोबाणस्ततोगत्वाबाणमाहशनैरिदम् ॥ दैत्यामुंरथमातिष्ठशीघ्रमेहिमहाबल ८९

॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥

१७४ ततोयुध्यस्वकृष्णंवैदानवांतकरंरणे ॥ आरुरोहरथंबाणोमहादेवस्यधीमतः ९० आरूढःसतुबाणश्चतंरथंब्रह्मनिर्मितम् ॥ तंस्यंदनमधिष्ठायभवस्यामित अ.१२६
तेजसः ९१ प्रादुश्चक्रेमहारौद्रमस्त्रंसर्वास्त्रघातनम् ॥ दीप्तंब्रह्मशिरोनामबाणःक्रुद्धोतिवीर्यवान् ९२ प्रदीप्तेब्रह्मशिरसिलोकाःक्षोभमुपागमन् ॥ लोकसंरक्ष
णार्थेवैतत्सृष्टंब्रह्मयोनिना ९३ तच्चक्रेणनिहत्याशुप्राहकृष्णस्तरस्विनम् ॥ लोकेप्रख्यातयशसंबाणमप्रतिमंरणे ९४ कथितानिक्वतेतातबाणकिंनवि
कत्थसे ॥ अयमस्मिस्थितोयुद्धेयुद्ध्यस्वपुरुषोभव ॥ कार्त्तवीर्यार्जुनोनामपूर्वंबाहुसहस्रवान् ९५ महाबलःसरामेणद्विबाहुःसमरेकृतः ॥ तथातवापिद
र्पोयंबाहूनांवीर्यसंभवः ९६ एषतेदर्पशमनंकरोमिरणमूर्द्धनि ॥ यावत्तेदर्प्पशमनंकरोम्यद्यस्वबाहुना ९७ तिष्ठेदानींनमेद्यत्वंमोक्ष्यसेरणमूर्द्धनि ॥ अथ
तद्दुर्लभंदृष्ट्वायुद्धंपरमदारुणम् ९८ तत्रदेवासुरसमेयुद्धेनृत्यतिनारदः ॥ निर्जिताश्वगणाःसर्वेप्रद्युम्नेनमहात्मना ९९ निक्षिप्तवादायुद्धस्यदेवदेवंगताःपुनः ॥
सतच्चक्रंसहस्रारंनदन्मेघइवोष्णगे १०० जग्राहकृष्णस्त्वरितोबाणांतकरणंरणे ॥ तेजोयज्ज्योतिषांचैवतेजोवज्राशनेस्तथा १ सुरेशस्यचयत्तेजस्तच्चक्रे
पर्यवस्थितम् ॥ त्रेताग्नेश्चैवयत्तेजोयच्चवैब्रह्मचारिणाम् २ ऋषीणांचततोज्ञानंतच्चक्रेसमवास्थितम् ॥ पतिव्रतानांयत्तेजःप्राणाश्चमृगपक्षिणाम् ३ यच्चच
क्रधरेष्वस्तितच्चक्रेसंनिवेशितम् ॥ नागराक्षसयक्षाणांगंधर्वाप्सरसामपि ४ त्रैलोक्यस्यचयत्प्राणंसर्वंचक्रेव्यवस्थितम् ॥ तेजसातेनसंयुक्तंज्वलन्निवचभा
स्करः ५ वपुषातेजआधत्तेबाणस्यप्रमुखेस्थितम् ॥ ज्ञात्वातितेजसाचक्रंकृष्णेनाभ्युदितंरणे ६ अप्रमेयंह्यविहतंरुद्राणीचाब्रवीच्छिवम् ॥ अजेयमेतत्त्रैलो
क्येचक्रंकृष्णेनधार्यते ७ बाणंत्रायस्वदेवत्वंयावच्चक्रंनमुंचति ॥ ततउमावचःश्रुत्वादेवींलंबामथाब्रवीत् ८ गच्छैहिलंबेशीघ्रंत्वंबाणसंरक्षणंप्रति ॥ त
तोयोगंसमाधायअदृश्याहिमवत्सुता ९ कृष्णस्यैकस्यतद्रूपंदर्शयन्पार्श्वमागता ॥ चक्रोद्यतकरंदृष्ट्वाभगवंतंरणाजिरे ११० अंतर्द्धानमुपागम्यत्यज्यसावा
ससीपुनः ॥ परित्राणायबाणस्यविजयाधिष्ठिताततः ११ प्रमुखेवासुदेवस्यदिग्वासाकोटवीस्थिता ॥ तांदृष्ट्वाथपुनःप्राप्तांदेवींरुद्रस्यसंमताम् १२ लंबां
द्वितीयांतिष्ठंतींकृष्णोवचनमब्रवित् ॥ भूयःसामर्षताम्राक्षीदिग्वस्त्रावस्थितारणे १३ बाणसंरक्षणपराहन्मिबाणंनशंशयः ॥ एवमुक्तातुकृष्णेनभूयोदेव्य
ब्रवीदिदम् १४ जानेत्वांसर्वभूतानांस्रष्टारंपुरुषोत्तमम् ॥ महाभागंमहादेवमनंतंलीनमव्ययम् १५ पद्मनाभंहृषीकेशंलोकानामादिसंभवम् ॥ १७४
नार्हसेदेवहंतुंवैबाणमप्रतिमंरणे ११६

॥ १७ ॥ ११८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ भवतारक्षणार्थम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ १३१ ॥ ३२ ॥ ३३ ॥

प्रयच्छह्यभयंबाणेजीवपुत्रीत्वमेवच ॥ मयादत्तवरोह्येषभूयश्चपरिरक्ष्यते १७ नमेमिथ्यासमुद्योगंकर्तुमर्हसिमाधव ॥ एवमुक्तेतुवचनेदेव्यापरपुरंजयः ॥
११८ कृष्णःप्रभाषतेवाक्यंशृणुसत्यंतुभामिनि ॥ बाणोबाहुसहस्रेणनर्दतेदर्पमाश्रितः १९ एतेषांच्छेदनंत्वद्यकर्तव्यंनात्रसंशयः ॥ द्विबाहुनाचबाणे
नजीवपुत्रीभविष्यसि २० आसुरंदर्पमाश्रित्यनचमांसंश्रयिष्यति ॥ एवमुक्तेतुवचनेकृष्णेनाक्लिष्टकर्मणा २१ प्रोवाचदेवीबाणोयंदेवदत्तोभवेदिति ॥
अथतांकार्त्तिकेयस्यमातरंसोभिभाष्यवै २२ प्रोवाचबाणंसमरेवदतांप्रवरःप्रभुः ॥ युध्यतांयुध्यतांसंख्येभवतांकोटवीस्थिता २३ अशक्तानामिवरणे
धिग्बाणतवपौरुषम् ॥ एवमुक्त्वाततःकृष्णस्तच्चक्रंपरमात्मवान् २४ निमीलिताक्षोव्यसृजद्बाणंप्रतिमहाबलः ॥ क्षेपणाद्यस्यमुह्यंतिलोकाःसस्थाणुजंग
माः २५ क्रव्यादानिचभूतानितृप्तिंयांतिमहामृधे ॥ तमप्रतिमकर्माणंसमानंसूर्यवर्चसा २६ चक्रमुद्यम्यसमरेकोपदीप्तोगदाधरः ॥ समुष्णन्दानवंतेजःस
मरेस्वेनतेजसा २७ चिच्छेदबाहूंश्चक्रेणश्रीधरःपरमौजसा ॥ अलातचक्रवत्तूर्णंभ्राम्यमाणंरणाजिरे २८ क्षिप्तंतुवासुदेवेनबाणस्यरणमूर्द्धनि ॥ विष्णुचक्रं
भ्रमत्याशुशैघ्याद्रूपंनदृश्यते २९ तस्यबाहुसहस्रस्यपर्यायेणपुनःपुनः ॥ बाणस्यच्छेदनंचक्रेतच्चक्रंरणमूर्द्धनि ३० कृत्वाद्विबाहुंतंबाणंछिन्नशाखमिवद्रु
मम् ॥ पुनःकराग्रेकृष्णस्यचक्रंप्राप्तंसुदर्शनम् ३१ वैशंपायनउवाच ॥ कृतकृत्येतुसंप्राप्तेचक्रेदैत्यनिपातने ॥ स्रवतातेनकायेनशोणितौघपरिप्लुतः ३२
अभवत्पर्वताकारश्छिन्नबाहुर्महासुरः ॥ असृङ्मत्तश्चविविधान्नादान्मुंचन्घनोयथा ३३ तस्यनादेनमहताकेशवोरिपुसूदनः ॥ चक्रंभूयःक्षेप्तुकामोबाणना
शार्थमुद्यतः ॥ तमुपेत्यमहादेवःकुमारसहितोब्रवीत् ३४ ईश्वरउवाच ॥ कृष्णकृष्णमहाबाहोजानेत्वांपुरुषोत्तमम् ॥ मधुकैटभहंतारंदेवदेवंसनातनम् ॥
३५ लोकानांत्वंगतिर्देवत्वत्प्रसूतमिदंजगत् ॥ अजेयस्त्वंत्रिभिर्लोकैःससुरासुरपन्नगैः ३६ तस्मात्संहरदिव्यंत्वमिदंचक्रंसमुद्यतम् ॥ अनिवार्यमसंहार्यं
रणेशत्रुभयंकरम् ३७ बाणस्यास्याभयंदत्तंमयाकेशिनिषूदन ॥ तन्मेनस्याद्वृथावाक्यमतस्त्वांक्षामयाम्यहम् ३८ ॥ श्रीकृष्णउवाच ॥ जीवतांदेवबा
णोयमेतच्चक्रंनिवर्तितम् ॥ मान्यस्त्वंदेवदेवानामसुराणांचसर्वशः ३९ नमस्तेस्तुगमिष्यामियत्कार्यंतेमहेश्वर ॥ नतावत्क्रियतेतस्मान्मामनुज्ञातुमर्ह
सि ४० एवमुक्त्वामहादेवंकृष्णस्तूर्णंमहामनाः ॥ जगामतत्रयत्रास्तेप्राद्युम्निःसायकैश्चितः ४१ गतेकृष्णेततोनंदीबाणमाहवचःशुभम् ॥ गच्छबाणप्रसन्न
स्यदेवदेवस्यचाग्रतः ४२ तच्छ्रुत्वानंदिवाक्यंतुबाणोगच्छतशीघ्रगः ॥ छिन्नबाहुंततोबाणंदृष्ट्वानंदीप्रतापवान् १४३

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ यत्कार्यंबाणवधाख्यंतन्नक्रियतेइत्यन्वयः ॥ ४० ॥ ४१ ॥ ४२ ॥ १४३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ पुत्रजन्मेतिएवंनृत्यंतः पुत्रंलभंतामित्यर्थः ॥ ५२ ॥ एवंपुत्रप्राप्तिरूपंफलम् ॥ ५३ ॥ वरंवरवरंवृणु



अपवाह्यरथेनैनंयतोदेवस्ततोययौ ॥ ततोनंदीपुनर्बाणंप्रागुवाचोत्तरंवचः ४४ बाणबाणप्रनृत्यस्वश्रेयस्तवभविष्यति ॥ एषदेवोमहादेवःप्रसादसुमुखस्त

१७५ व ४५ शोणितौघप्लुतैर्गात्रैर्नंदिवाक्यप्रचोदितः ॥जीविताथींततोबाणःप्रमुखेशंकरस्यवै ४६ अनृत्यद्भयसंविग्नोदानवःसविचेतनः ॥ तंदृष्ट्वाचप्रनृत्यंतंभयो अ.१२६

द्विग्नंपुनःपुनः ४७ नंदिवाक्यप्रजवितंभक्तानुग्रहकृद्भवः ॥ करुणावशमापन्नोमहादेवोब्रवीद्वचः ४८ ॥ ईश्वरउवाच ॥ वरंवृणीष्वबाणत्वंमनसायदभी

प्ससि ॥ प्रसादसुमुखस्तेहंप्रियोसिममदानव ४९ ॥ बाणउवाच ॥ अजरश्चामरश्चैवभवेयंसततंविभो ॥ एषमेप्रथमोदेववरोस्तुयदिमन्यसे ५०

॥ देवउवाच ॥ तुल्योसिदैवतैर्बाणनमृत्युस्तवविद्यते ॥ अथापरंवृणीष्वाद्यअनुग्राह्योसिमेसदा ५१ ॥ बाणउवाच ॥ यथाहंशोणितैर्दिग्धोभृशार्तोव्रण

पीडितः ॥ भक्तानांनृत्यतांदेवपुत्रजन्मभवेद्भव ५२ ॥ श्रीहरउवाच ॥ निराहाराःक्षमावंतःसत्यार्जवसमाहिताः ॥ मद्भक्तायेपिनृत्यंतितेषामेवंभविष्य

ति ५३ तृतीयंत्वमथोबाणवरंवरमनोगतम् ॥ तद्विधास्यामितेपुत्रसफलोस्तुभवानिह ५४ ॥ बाणउवाच ॥ चक्रताडनजाघोरारुजातीव्राहिमेनव ॥

वरेणासौतृतीयेनशांतिंगच्छतुमेभव १५५ ॥ श्रीरुद्रउवाच ॥ एवंभवतुभद्रंतेनरुजाप्रभविष्यति ॥ अक्षतंतवगात्रंतुस्वस्थावस्थंभविष्यति ५६ चतुर्थं

तेवरंदद्मिवृणीष्वयदिकांक्षसि ॥ नतेहंविमुखस्तातप्रसादसुमुखोह्यहम् ५७ ॥ बाणउवाच ॥ प्रमाथगणवंश्यस्यप्रथमःस्यामहंविभो ॥ महाकालइति

ख्यातिंगच्छेयंशाश्वतीःसमाः ५८ ॥ वैशंपायनउवाच ॥ एवंभविष्यतीत्याहबाणंदेवोमहेश्वरः ॥ दिव्यरूपोक्षतोगात्रैर्नीरुजस्तुममाश्रयात् ५९ ममा

तिसर्गाद्बाणत्वंभवचैवाकुतोभयः ॥ भूयस्तेपंचमंदद्मिप्रख्यातबलपौरुषम् ॥ पुनर्वरयभद्रंतेयत्तेमनसिवर्त्तते ६० ॥ बाणउवाच ॥ वैरूप्यमंगजंयन्मे

माभूद्देवकदाचन ॥ द्विबाहुरपिमेदेहोनविरूपोभवेद्भव ६१ ॥ श्रीहरउवाच ॥ भवितासर्वमेतत्तेयथेच्छसिमहासुर ॥ भवत्स्वेवंनचादेयंभक्तानांविद्यते

मम ६२ ॥ वैशंपायनउवाच ॥ ततोब्रवीन्महादेवोबाणंस्थितमथांतिके ॥ एवंभविष्यतेसर्वंयत्त्वयासमुदाहृतम् ६३ एतावदुक्त्वाभगवांस्त्रिनेत्रोगणसं

वृतः ॥ पश्यतांसर्वभूतानांतत्रैवांतरधीयत १६४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिउषाहरणेबाणासुरवरप्रदानंनामषड्विंशत्यधिकशत

तमोऽध्यायः ॥ १२६ ॥ छ ॥ वैशंपायनउवाच ॥ एवंवरान्बहून्प्राप्यबाणःप्रीतमनाभवत् ॥ जगामसहरुद्रेणमहाकालत्वमागतः १

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ १६४ ॥ ॥ इतिश्री०भा०खि०ह०वि०टीकायांषड्विंशत्यधिकशततमोऽध्यायः ॥

॥ १२६ ॥ ॥ छ ॥ ॥ एवमिति ॥ १ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ वीर्यनिर्जितायाःविवाहोवीर्य्या

वासुदेवोपिबहुधानारदंपर्यपृच्छत ॥ क्वानिरुद्धोस्तिभगवन्संयतोनागबंधनैः २ श्रोतुमिच्छामितत्त्वेनस्नेहक्लिन्नंहिमेमनः ॥ अनिरुद्धेहृतेवीरेक्षुभिताद्वारकापुरी ३ शीघ्रंतंमोक्षयिष्यामोयदर्थंवयमागताः ॥ अद्यतंनष्टशत्रुंवैद्रष्टुमिच्छामहेवयम् ४ सप्रदेशस्तुभगवन्विदितस्तवसुव्रत ॥ एवमुक्तस्तुकृष्णेन नारदःप्रत्यभाषत ५ कन्यापुरेकुमारोसौबद्धोनागैश्चमाधव ॥ एतस्मिन्नंतरेशीघ्रंचित्रलेखाह्युपस्थिता ६ बाणस्योत्तमशर्वस्यदैत्येंद्रस्यमहात्मनः ॥ इदमंतःपुरंदेवप्रविशस्वयथासुखम् ७ ततःप्रविष्टास्तेसर्वेह्यनिरुद्धस्यमोक्षणे ॥ बलःसुपर्णःकृष्णस्तुप्रद्युम्नोनारदस्तथा ८ ततोदृष्ट्वैवगरुडंयेनिरुद्धशरीरगाः ॥ शररूपामहासर्पाविवेष्टयित्वातनुंस्थिताः ९ तेसर्वेसहसादेहात्तस्यानिःसृत्यभोगिनः ॥ क्षितिंसमभिवर्तित्वाप्रकृत्यावस्थिताःशराः १० दृष्टःस्पृष्टश्च कृष्णेनसोनिरुद्धोमहायशाः ॥ स्थितःप्रीतमनाभूत्वाप्रांजलिर्वाक्यमब्रवीत् ११ देवदेवसदायुद्धेजेतात्वमसिकेशव ॥ नशक्तःप्रमुखेस्थातुंसाक्षादपिशतक्रतुः १२ ततोमहाबलंदेवंबलभद्रंयशस्विनम् ॥ अभिवादयतेहृष्टःसोनिरुद्धोमहामनाः १३ माधवंचमहात्मानमभिवाद्यकृतांजलिः ॥ खगोत्तमंमहावीर्यंसुपर्णमभिवाद्यच १४ ततोमकरकेतुंचचित्रबाणधरंप्रभुम् ॥ पितरंसोभ्युपागम्यप्रद्युम्नमभिवादयत् १५ सखीगणवृताचैवसाचोषाभवनेस्थिता ॥ बलंचातिबलंचैववासुदेवंसुदुर्जयम् १६ असंख्यातगतिंचैवसुपर्णमभिवाद्यच ॥ पुष्पबाणधरंचैवलज्जमानाभ्यवादयत् १७ ततःशक्रस्यवचनान्नारदःपरमद्युतिः ॥ वासुदेवसमीपंसप्रहसन्पुनरागतः १८ वर्द्धापयतितंदेवंगोविंदंशत्रुसूदनम् ॥ दिष्ट्यावर्द्धसिगोविंदअनिरुद्धसमागमात् १९ ततोऽनिरुद्धसहितानारदंप्रणताःस्थिताः ॥ आशीर्भिर्वर्द्धयित्वाचदेवर्षिःकृष्णमब्रवीत् २० अनिरुद्धस्यवीर्याख्योविवाहःक्रियतांविभो ॥ जंबूलमालिकांद्रष्टुंश्रद्धाहिममजायते २१ ततःप्रहसिताःसर्वेनारदस्यवचःश्रवात् ॥ कृष्णःप्रोवाचभगवन्क्रियतामाशुमाचिरम् २२ एतस्मिन्नंतरेतातकुंभांडःसमुपस्थितः ॥ वैवाहिकांस्तुसंभारान्गृह्यकृष्णंनमस्यतु २३ ॥ कुंभांडउवाच ॥ कृष्णकृष्णमहाबाहोभवत्वमभयप्रदः ॥ शरणागतोस्मिदेवेशप्रसीदैषोंजलिस्तव २४ नारदस्यवचःश्रुत्वासर्वंप्रागेवचाच्युतः ॥ अभयंयच्छतेतस्मैकुंभांडायमहात्मने २५ कुंभांडमंत्रिणांश्रेष्ठप्रीतोस्मितवसुव्रत ॥ सुकृतंतेविजानामिराष्ट्रिकोस्तुभवानिह ॥ सुज्ञातिपक्षःससुखीनिवृत्तोस्तुभवानिह २६

ख्यःजंबूलमालिकांजंबूलंवरपक्षीयस्त्रीणांउपहासवचनंतस्यमालिकांपरंपरांद्रष्टुंश्रोतुम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ यच्छतेददातिप्रागेव ॥ २५ ॥ इहभूमौराष्ट्रिको राष्ट्राधिपतिःशिवगणेषुबाणगमनत्वात् ॥ २६ ॥

॥ २७ ॥ २८ ॥ भवत् अभवत् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अपश्यंत



राज्यंचतेमयादत्तंचिरंजीवममाश्रयात् ॥ एवंदत्वाराज्यमस्मैकुंभांडायमहात्मने २७ विवाहमकरोत्तस्यानिरुद्धस्यजनार्दनः ॥ ततस्तुभगवान्वह्निस्तत्र स्वयमुपस्थितः २८ सविवाहोनिरुद्धस्यनक्षत्रेचशुभेभवत् ॥ ततोप्सरोगणश्चैवकौतुकंकर्त्तुमुद्यतः २९ स्नातस्त्वलंकृतस्तत्रसोनिरुद्धःस्वभार्यया ॥ ततःस्निग्धैःशुभैर्वाक्यैर्गंधर्वाश्चजगुस्तदा ३० नृत्यंत्यप्सरसश्चैवविवाहमुपशोभयन् ॥ ततोनिर्वर्त्तयित्वातुविवाहंशत्रुसूदनः ३१ अनिरुद्धस्यसुप्रज्ञःसर्वैर्देवगणैर्वृतः ॥ आमंत्र्यवरदंतत्ररुद्रंदेवनमस्कृतम् ३२ चकारगमनेबुद्धिंकृष्णःपरपुरंजयः ॥ द्वारकाभिमुखंकृष्णंज्ञात्वाशत्रुनिषूदनम् ३३ कुंभांडोवचनंप्राहप्रांजलिर्मधुसूदनम् ॥ बाणस्यगावस्तिष्ठंतिहस्तेतुवरुणस्यवै ३४ यासाममृतकल्पंवैक्षीरंक्षरतिमाधव ॥ तत्पीत्वातिबलश्चैवनरोभवतिदुर्जयः ३५ कुंभांडेनैवमाख्यातेहरिःप्रीतमनास्तदा ॥ गमनायमतिंचक्रेगंतव्यमितिनिश्चयम् ३६ ततस्तुभगवान्ब्रह्मावर्धाप्यसतुकेशवम् ॥ जगामब्रह्मलोकंसद्वृतःस्वभवनालये ३७ इंद्रोमरुद्गणयुतोद्वारकाभिमुखोययौ ॥ यतःकृष्णस्ततःसर्वेगच्छंतिजयकांक्षिणः ३८ वाहनेनमयूरेणसखीभिःपरिवारिता ॥ द्वारकाभिमुखीह्यूषादेव्याप्रस्थापितायया ॥ ततोबलश्चकृष्णश्चप्रद्युम्नश्चमहाबलः ३९ आरूढवंतोगरुडमनिरुद्धश्चवीर्यवान् ॥ प्रस्थितश्चसतेजस्वीगरुडःपततांवरः ४० उन्मूलयंस्तरुगणान्कंपयंश्चापिमेदिनीम् ॥ आकुलाश्चदिशःसर्वारेणुध्वस्तमिवांबरम् ४१ गरुडेसंप्रयातेभून्मंदरश्मिर्दिवाकरः ॥ ततस्तेदीर्घमध्वानंप्रययुःपुरुषर्षभाः ४२ आरुह्यगरुडंसर्वेजित्वाबाणंमहौजसम् ॥ ततोंबरतलस्थास्तेवारुणींदिशमास्थिताः ४३ अपश्यंतमहात्मानोगावोदिव्यपयःप्रदाः ॥ वेलावनविचारिण्योनानावर्णाःसहस्रशः ४४ अवज्ञायतदारूपंकुंभांडवचनाश्रयात् ॥ कृष्णःप्रहरतांश्रेष्ठस्तत्वतोर्थविशारदः ४५ निशम्यबाणगावस्तुतासुचक्रेमनस्तदा ॥ आस्थितोगरुडंप्राहसतुलोकादिरव्ययः ४६ ॥ श्रीकृष्णउवाच ॥ वैनतेयप्रयाहित्वंयत्रबाणस्यगोधनम् ॥ यासांपीत्वाकिलक्षीरममृतत्वमवाप्नुयात् ४७ आहमांसत्यभामाचबाणगावोममानय ॥ यासांपीत्वाकिलक्षीरंनजीर्यंतिमहासुराः ४८ विजराश्चजरांत्यक्त्वाभवंतिकिलजंतवः ॥ ताआनयस्वभद्रंतेयदिधर्मोनलुप्यते ४९ अथवाकार्यलोपोवैमैवतासुमनःकृथाः ॥ इतिमामब्रवीत्सत्यभामाताश्चैताविदितामम ५० ॥ गरुडउवाच ॥ दृश्यंतेगावएतास्तादृष्ट्वामांवरुणालयम् ॥ विशंतिसहसासर्वाःकार्यमत्रविधीयताम् ५१ इत्युक्त्वाचैवगरुडःपक्षवातेनसागरम् ॥ सहसाक्षोभयित्वाचविवेशवरुणालयम् ५२ दृष्ट्वाजवेनगरुडंप्राप्तंवैवरुणालयम् ॥ वारुणाश्चगणाःसर्वेविभ्रांताःप्राचलंस्तदा ५३

दृष्टवंत.गावःगाः वेलासमुद्रतीरप्रांतस्तत्रवनंतत्रचारिण्यः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ नजीर्यंतिनजरांप्राप्नुवंति ॥ ४८ ॥ ४९ ॥ ५० ॥ कार्यंउचितं ॥ ५१ ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

ततस्तुवारुणंसैन्यमभिज्ञातुंसुदुर्जयम् ॥ प्रमुखेवासुदेवस्यनानाप्रहरणोद्यतम् ॥ तद्युद्धमभवद्धोरंवारुणैःपन्नगारिणा ५४ तेषामापततांसंख्येवारुणा
नांसहस्रशः ॥ भग्नंबलमनाधृष्यंकेशवेनमहात्मना ॥ ५५ ततस्तेप्रद्रुतायांतितमेववरुणालयम् ॥ षष्टिंरथसहस्राणिषष्टिंरथशतानिच ५६ वारुणानि
चयुद्धानिदीप्तशस्त्राणिसंयुगे ॥ तद्बलंबलिभिःशूरैर्बलदेवजनार्दनैः ५७ प्रद्युम्नेनानिरुद्धेनगरुडेनचसर्वशः ॥ शरैर्घोरैर्विविधैस्तीक्ष्णैर्वध्यमानंसमंततः ५८
ततोभग्नंबलंदृष्ट्वाकृष्णेनाक्लिष्टकर्मणा ॥ वरुणस्त्वथसंक्रुद्धोनिर्ययौयत्रकेशवः ५९ ऋषिभिर्देवगंधर्वैस्तथैवाप्सरसांगणैः ॥ संस्तूयमानोबहुधावरुणःप्रत्य
दृश्यत ६० छत्रेणध्रियमाणेनपांडुरेणवपुष्मता ॥ सलिलस्राविणाश्रेष्ठंचापमुद्यम्यधिष्ठितः ६१ अपांपतिरतिक्रुद्धःपुत्रपौत्रबलान्वितः ॥ आह्वयन्निवयु
द्धायविस्फारिमतहाधनुः ६२ सतुप्राध्मापयच्छंखंवरुणःसमधावत ॥ हरिंहरइवक्रुद्धोबाणजालैःसमावृणोत् ६३ ततःप्रध्मायजलजंपांचजन्यंजनार्दनः
बाणजालैर्दिशःसर्वास्ततश्चक्रेमहाबलः ६४ ततःशरौघैर्विमलैर्वरुणःपीडितोरणे ॥ स्मयन्निवततःकृष्णंवरुणःप्रत्ययुध्यत ६५ ततोस्त्रंवैष्णवंघोरमभिमंत्र्या
हवेस्थितः ॥ वासुदेवोब्रवीद्वाक्यंप्रमुखेतस्यधीमतः ६६ इदमस्त्रंमहाघोरंवैष्णवंशत्रुसूदनम् ॥ मयोद्यतंवधार्थंतेतिष्ठेदानींस्थिरोभव ६७ ततोस्त्रंवरुणोदे
वोह्यस्त्रंवैष्णवमुद्यतः ॥ वारुणास्त्रेणसंयोज्यविननादमहाबलः ६८ तस्यास्त्रेवितताह्यापोवरुणस्यविनिःसृताः ॥ वैष्णवास्त्रस्यशमनेदर्त्ततेसामितिंजयः
६९ आपस्तुवारुणास्तत्रक्षिप्ताक्षिप्ताज्वलंतिवै ॥ दह्यंतेवारुणास्तत्रततोऽस्त्रेज्वलितेपुनः ७० वैष्णवेतुमहावीर्येदिशोभीताविदुद्रुवुः ॥ तद्बलंज्वलितंदृष्ट्वा
वरुणःकृष्णमब्रवीत् ७१ स्मरस्वप्रकृतिंपूर्वामव्यक्तांव्यक्तलक्षणाम् ॥ तमोजहिमहाभागतमसायुह्यसेकथम् ७२ सत्वस्थोनित्यमासीस्त्वंयोगीश्वरमहा
मते ॥ पंचभूताश्रयान्दोषानहंकारंचवर्जय ७३ यायातेवैष्णवीमूर्तिस्तस्याज्येष्ठोह्यहंतव ॥ ज्येष्ठभावेनमान्यंतुकिंमांत्वंदग्धुमिच्छसि ७४ नाग्निर्वि
क्रमतेह्यग्नौत्यजकोपंयुधांवर ॥ त्वयिनप्रभविष्यामिजगतःप्रभवोह्यसि ७५ पूर्वंहियात्वयासृष्टाप्रकृतिर्विकृतात्मिका ॥ धर्मिणीबीजभावेनपूर्वंधर्मसमा
श्रिता ७६ आग्नेयंवैष्णवंसौम्यंप्रकृत्यैवेदमादितः ॥ त्वयासृष्टंजगदिदंसकथंमयिवर्तते ७७ अजेयःशाश्वतोदेवःस्वयंभूर्भूतभावनः ॥ अक्षरंचक्षरंचैवभा
वाभावौमहाद्युते ७८ रक्षमांरक्षणीयोहंत्वयानघनमोस्तुते ॥ आदिकर्त्तासिलोकानांत्वयैतद्बहुलीकृतम् ७९

॥ ७४ ॥ ७५ ॥ प्रकृतिर्माया विकृतंमहदादिकार्यंतदात्मिकाधर्मिणीपरिणामिनीपूर्वंधर्मंजायतइत्येवंरूपंत्वत्तोजन्मलभमानेत्यर्थः बीजभावेनजगत्कारणत्वेनचउपेतेतिशेषः ७६
॥ ७७ ॥ ७८ ॥ त्वयैवस्वात्मनैवबहुलीकृतंइदंदृश्यमितिशेषः ॥ ७९ ॥

 प्रकृतिःकारणंतत्वांद्वेष्टीतितादृशःप्रकृतिद्वेषीअहंन ॥ ८० ॥ विकारेषुअहंकारादिषुयाप्रकृतिःपूर्ववासनालोभद्वेषादिरूपा तस्याः विकारः स्तेयहिंसादिरूपस्तस्यशमनार्थंत्वंव 
र्तसेदुष्टनिग्रहार्थंतवावतारइत्यर्थः ॥ ८१ ॥ तेतेविकाराःक्रोधादयःविकाराणांदुष्टानांविकारायविनाशाय नतुमंदानपेक्ष्यभवान्विकुरुते सर्वात्मनस्तवयद्यपिक्वाचिदपिक्रोधोना

 विक्रीडसिमहादेवबालक्रीडनकैरिव ॥ नत्वहंप्रकृतिद्वेषीनाहंप्रकृतिदूषकः ८० प्रकृतिर्याविकारेषुवर्त्ततेपुरुषर्षभ ॥ तस्याविकारशमनेवर्त्तसेत्वंमहाद्युते 
८१ विकारोवाविकाराणांविकार ायनतेऽनघ ॥ तानधर्मविदोमंदान्भवान्विकुरुतेसदा ८२ इदंप्रकृतिजैर्दोषैस्तमसामुत्वतेयदा ॥ रजसावापिसंस्पृष्टस्तात
दामोहःप्रवर्तते ८३ परावरज्ञःसर्वज्ञऐश्वर्यविधिमास्थितः ॥ किंमोहयसिनःसर्वान्प्रजापतिरिवस्वयम् ८४ वरुणेनैवमुक्तस्तुकृष्णोलोकपरायणः ॥ भा
वज्ञःसर्वकृद्वीरस्ततःप्रीतमनात्वभूत् ८५ इत्येवमुक्तःकृष्णस्तुप्रहसन्वाक्यमब्रवीत् ॥ श्रीकृष्णउवाच ॥ ॥ गावःप्रयच्छमेवीरशांत्यर्थंभीमविक्रम
८६ इत्येवमुक्तेकृष्णेनवाक्यंवाक्यविशारदः ॥ वरुणोत्यब्रवीद्भूयःशृणुमेमधुसूदन ८७ ॥ वरुणउवाच ॥ ॥ बाणेनसार्धंसमयोमयादेवकृतःपुरा ॥ कथं
चसमयंकृत्वाकुर्यांविफलमन्यथा ८८ त्वमेववेदसर्वस्ययथासमयभेदकः ॥ चारित्रंदुष्यतेतेननचसद्भिःप्रशस्यते ८९ धर्मभागीश्वरोनित्यंवर्ज्यतेमधुसूदन ॥
नचलोकानवाप्नोतिपापःसमयभेदकः ९० प्रसीदधर्मलोपश्चमाभून्मेमधुसूदन ॥ नमांसमयभेदेनयोक्तुमर्हसिमाधव ९१ जीवन्नाहंप्रदास्यामिगावोवैवृ
षभेक्षण ॥ हत्वानयस्वमांगावएषमेसमयःपुरा ९२ एतन्मेसमाख्यातंसमयंमधुसूदन ॥ सत्यमेवमहाबाहोनमिथ्यातुसुरेश्वर ९३ यद्येवाहमनुग्राह्यो
रक्षमांमधुसूदन ॥ अथवागोषुनिर्बंधोहत्वानयमहाभुज ९४ ॥ वैशंपायनउवाच ॥ ॥ वरुणेनैवमुक्तस्तुयदूनांवंशवर्द्धनः ॥ अभेद्यंसमयंमत्वान्य
स्तवादोगवांप्रति ९५ सप्रहस्यततोवाक्यंव्याजहारार्थकोविदः ॥ तस्मान्मुक्तोसियद्येवंबाणेनसमयःकृतः ९६ प्रसृतैर्मधुरैर्वाक्यैस्तत्वार्थमधुभाषितैः
कथंपापंकरिष्यामिवरुणत्वय्यहंप्रभो ॥ गच्छमुक्तोसिवरुणसत्यसंधोसिनोभवान् ९७ त्वत्प्रियार्थंमयामुक्ताबाणगावोनसंशयः ॥ ततस्तूर्यनिनादैश्चभे
रीणांचमहास्वनैः ९८ अर्घमादायवरुणःकेशवंप्रत्यपूजयत् ॥ केशवोर्घंतदागृह्यवरुणाद्यदुनंदनः ९९ बलंचापूजयद्देवःकुशलीवसमाहितः ॥ वरुणा
याभयंदत्वावासुदेवःप्रतापवान् १०० द्वारकांप्रस्थितःशौरिःशचीपतिसहायवान् ॥ तत्रदेवाःसमरुतःससाध्याःसिद्धचारणाः ॥ १ ॥

स्तितथापिक्रोधिनएवस्वदोषात्वांक्रोधवंतंपश्यंतीत्यर्थः ॥ ८२ ॥ इदंजगत्तमसादेहात्मबुद्ध्यामोहोवैयग्र्यंइदंमेभूयादिदंमेमाभूयादित्येवंरूपः ॥ ८३ ॥ ८४ ॥ ८५ ॥ 
८६ ॥ ८७ ॥ समयोयंजीवन्नहमन्यस्मैतवगानप्रदास्यामीत्येवंरूपोनिश्चयः ॥ ८८ ॥ भेदकःनप्रशस्यतेचारित्रंचास्यदुष्यतइत्यन्वयः ॥ ८९ ॥ ९० ॥ ९१ ॥ मांहत्वागावः
गानयस्व ॥ ९२ ॥ ९३ ॥ ९४ ॥ न्यस्तवादस्त्यक्तप्रतिज्ञः ॥ ९५ ॥ ९६ ॥ नोऽस्माकंसंबंधीभवान् ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥

॥ २ ॥ यशसाकार्त्यमानेनविजयेनआशास्यमानेन ॥ ३ ॥ ४ ॥ शुभैः प्रासादैर्युक्तामितिशेषःनिशाम्यालोच्य ॥ ५ ॥ संज्ञांस्वागमनज्ञापनम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

गंधर्वाप्सरसश्चैवकिंनराश्चांतरिक्षगाः ॥ अनुगच्छंतिभूतेशंसर्वभूतादिमव्ययम् २ आदित्यावसवोरुद्राअश्विनौयक्षराक्षसाः ॥ विद्याधरगणाश्चैवयेचान्ये सिद्धचारणाः ॥ गच्छंतमनुगच्छंतियशसाविजयेनच ३ नारदश्चमहाभागःप्रस्थितोद्वारकांप्रति ॥ तुष्टोबाणजयंदृष्ट्वावरुणंचकलिप्रियः ४ कैलासशिखरप्रख्यैःप्रासादैःकंदरैःशुभैः ॥ दूरान्निशम्यमधुहाद्वारकांद्वारमालिनीम् ५ पांचजन्यस्यनिर्घोषंचक्रेचक्रगदाधरः ॥ संज्ञांप्रयच्छतेदेवोद्वारकापुरवासिनाम् ६ देवानुयाननिर्घोषंपांचजन्यस्यनिःस्वनम् ॥ श्रुत्वाद्वारवतीसर्वेप्रहर्षमतुलंगताः ७ पूर्णकुंभैश्चलाजैश्चबहुविन्यस्तविस्तरैः ॥ द्वारोपशोभितांकृत्वा सर्वांद्वारवतींपुरीम् ८ सुश्लिष्टरथ्यांसश्रीकांबहुरत्नोपशोभिताम् ॥ विप्राश्चार्घंसमादायथैवकुलनैगमाः ९ जयशब्दैश्चविविधैःपूजयंतिस्ममाधवम् ॥ वैनतेयेतमासीनंनीलांजनचयोपमम् १० ववंदिरेतदाकृष्णंश्रियापरमयायुतम् ॥ तमानुपूर्व्यावर्णाश्चपूजयंतिमहाबलम् ११ अनंतंकेशिहंतारंश्रेष्ठिपूर्वाश्चश्रेणयः ॥ ऋषिभिर्देवगंधर्वैश्चारणैश्चसमंततः १२ स्तूयतेपुंडरीकाक्षोद्वारकोपवनेस्थितः ॥ तदाश्चर्यमपश्यंतदाशार्हगणसत्तमाः १३ प्रहर्षमतुलंप्राप्ताद्दृष्ट्वाकृष्णंमहाभुजम् ॥ बाणंजित्वामहादेवमायांतंपुरुषोत्तमम् १४ द्वारकावासिनांवाचश्चरंतिबहुधातदा ॥ प्राप्तेकृष्णेमहाभागेयादवानांमहारथे १५ गत्वाचदूरमध्वानंसुपर्णोद्धृतमागतः ॥ धन्याःस्मोनुगृहीताःस्मोयेषांवैजगतःपिता १६ रक्षिताचैवगोप्ताचदीर्घबाहुर्महाभुजः ॥ वैनतेयंसमारुह्य जित्वाबाणंसुदुर्जयम् १७ प्राप्तोयंपुंडरीकाक्षोमनांस्याह्लादयन्निव ॥ एवंकथयतामेवद्वारकावासिनांतदा १८ वासुदेवगृहंदेवाविविशुस्तेमहारथाः ॥ अवतीर्यसुपर्णात्तुवासुदेवोबलस्तदा १९ प्रद्युम्नश्चानिरुद्धश्चगृहान्प्रविविशुस्तदा ॥ ततोदेवविमानानिसंचरंतितदादिवम् २० अवस्थितानिदृश्यंतनानारूपाणिसर्वशः ॥ हंसर्षभमृगैर्नागैर्वाजिसारसबर्हिणैः ॥ भास्वंतितानिदृश्यंतेविमानानिसहस्रशः २१ अथकृष्णोब्रवीद्वाक्यंकुमारांस्तान्सहस्रशः ॥ प्रद्युम्नादीन्समस्तांस्तुश्लक्ष्णंमधुरयागिरा २२ एतेरुद्रास्तथादित्यावसवोथाश्विनावपि ॥ साध्यादेवास्तथान्येचवंदध्वंचयथाक्रमम् २३ सहस्राक्षंमहाभागंदानवानांभयंकरम् ॥ वंदध्वंसहिताःशक्रंसगणंनागवाहनम् २४ सप्तर्षयामहाभागाभृग्वांगिरसमाश्रिताः ॥ ऋषयश्चमहात्मानोवंदध्वंचयथासुखम् २५ एतेचक्रधराश्चैवतानवंदतसर्वशः ॥ सागराश्चह्रदाश्चैवमत्प्रियार्थमिहागताः २६ दिशश्चविदिशश्चैववंदध्वंचयथाक्रमम् ॥ वासुकिप्रमुखाश्चैवनागावैसुमहाबलाः २७ गावश्चमत्प्रियार्थंवैवंदध्वंयथाक्रमम् ॥ ज्योतींषिसहनक्षत्रैर्यक्षराक्षसकिन्नरैः २८

॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ १५ ॥ गत्वाचदूरमित्यादिजनवाक्यम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० हंसादिभिर्युक्तानि ॥ २१ ॥ २२ २३ २४ २५ २६ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ प्राप्यतेदेवानामपिदर्शनमितिशेषः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ सात्वतोसात्वतानांएषमुख्यःसात्वतइत्यर्थः यदुनंदनंअनिरुद्धम् ॥ ३७ ॥ ३८ ॥
॥ ३९ ॥ ४० ॥ ४१ ॥ अविरसंसंमुखंयथास्यात्तथा कालोयास्यत्यविरतमितिवा ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ सहस्रशःयुगपत्निर्वमंतःसुखान्निःसारयंतःकिलकिलाश



आगतामत्प्रियार्थंवैवंदध्वंचयथाक्रमम् ॥ वासुदेववचःश्रुत्वाकुमाराःप्रणताःस्थिताः २९ यथाक्रमेणसर्वेषांदेवतानांमहात्मनाम् ॥ सर्वान्दिवौकसोदृष्ट्वा
पौराविस्मयमागताः ३० पूजार्थमथसंभारान्प्रगृह्यद्रुतमागताः ॥ अहोसुमहदाश्चर्यंवासुदेवस्यसंश्रयात् ३१ प्राप्यतेयदिहास्माभिरितिवाचश्चरंत्युत ॥
ततश्चंदनचूर्णैश्चगंधपुष्पैश्चसर्वशः ३२ किरंतिपौराःसर्वांस्तान्पूजयंतोदिवौकसः ॥ लाजैःप्रणामैर्धूपैश्चवाद्यध्वनियमैस्तथा ३३ द्वारकावासिनःसर्वेपूज
यंतिदिवौकसः ॥ आहुकंवासुदेवंचसांबंचयदुनंदनम् ३४ सात्यकिंचोल्मुकंचैवविपृथुंचमहाबलम् ॥ अक्रूरंचमहाभागंतथानिषधमेवच ३५ एतान्परि
ष्वज्यतदामूर्ध्निचाघ्रायवासवः ॥ अथशक्रोमहाभागःसमक्षंयदुमंडले ३६ स्तुवंतंकेशिहंतारंतत्रोवाचोत्तरंवचः ॥ सात्वतःसात्वतामेवसर्वेषांयदुनंदनम् ॥
३७ मोक्षयित्वारणेचैवयशसापौरुषेणच ॥ महादेवस्यमिषतोगुहस्यचमहात्मनः १३८ एषबाणंरणेजित्वाद्वारकांपुनरागतः ॥ सहस्रबाहोर्बाहूनांकृत्वा
द्वयमनुत्तमम् ३९ स्थापयित्वाद्विबाहुत्वेप्राप्तोयंस्वपुरंहरिः ॥ यदर्थंजन्मकृष्णस्यमानुषेषुमहात्मनः ४० तदप्यवसितंकार्यंनष्टशोकावयंकृताः ॥ पिब
तामधुमाध्वीकंभवतांप्रीतिपूर्वकम् ४१ कालोयास्यत्यविरसंविषयेष्वेवत्यज्यताम् ॥ बाहूनांसंश्रयात्सर्वेवयमस्यमहात्मनः ४२ प्रनष्टशोकास्स्या
मःसर्वएवयथासुखम् ॥ एवंस्तुत्वासहस्राक्षःकेशवंदानवांतकम् ४३ आपृच्छ्यतंमहाभागःसर्वदेवगणैर्वृतः ॥ ततःपुनःपरिष्वज्यकृष्णंलोकनमस्कृतम् ॥
पुरंदरोदिवंयातःसहदेवमरुद्गणैः ४४ ऋषयश्चमहात्मानोजयाशीर्भिर्महौजसम् ॥ यथागतंपुनर्यातायक्षराक्षसकिन्नराः ४५ पुरंदरेदिवंयातेपद्मनाभोमहा
बलः ॥ अपृच्छतमहाभागःसर्वान्कुशलमव्ययम् ४६ ततःकिलकिलाशब्दंनिर्वमंतःसहस्रशः ॥ गच्छंतिकौमुदींद्रष्टुंसोऽनघःप्रीयतेसदा ४७ द्वारकांप्राप्य
कृष्णस्तुरेमेयदुगणैःसह ॥ विविधान्सर्वकामार्थान्श्रियापरमयायुतः ॥ १४८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिद्वारकायांगमनेसप्त
विंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ अथाहुकोमहाबाहुःकृष्णंप्राहमहाद्युतिः ॥ हर्षादुत्फुल्लनयनःश्रूयतांयदु
नंदन १ एवंगतेनिरुद्धस्यक्रियतांमहदुत्सवः ॥ क्षेमात्प्रत्यागतंदृष्ट्वासेव्यमानाःसहासते २



ब्दंआश्चर्यंआश्चर्यमितिवदंतइत्यर्थः कौमुदीमिवकौमुदींकृष्णमुखचंद्रप्रभांसकृष्णःअनघःशुद्धःप्रीयतेतेषांभक्त्येतिभावः ॥ ४७ ॥ ४८ ॥ इतिश्रीम० खि० ह० वि० टीकायांसप्त
विंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ छ ॥ आथाहुकइति ॥ १ ॥ यतोस्मदीयाःसर्वेसेव्यमानाः अप्सराप्रभृतिभिःसहआसतेऽतोऽनिरुद्धस्यमदुत्सवःक्रीयतामितियोज्यम् २ ॥

उषापिचमहाभागासखीभिःपरिवारिता ॥ रमतेपरयाप्रीत्याचानिरुद्धेनसंगता ३ कुंभांडदुहितारामाउषायाःसखिमंडले ॥ प्रवेश्यतांमहाभागावैदर्भी
वर्द्धयत्युत ४ सांबायदीयतांरामांकुंभांडदुहिताशुभा ॥ शेषाश्चकन्यान्यस्यंतांकुमाराणांयथाक्रमम् ५ वर्त्ततेसोत्सवस्तत्रअनिरुद्धस्यवेश्मनि ॥ गृहेश्री
धन्वनश्चैवशुभस्तत्रप्रवर्त्तते ६ वादयंतिपुरेतत्रनार्योमदवशंगताः ॥ नृत्यंतेचाप्सरास्तत्रगायंतिचतथापराः ७ काश्चित्प्रमुदितास्तत्रकाश्चिदन्योन्यमब्रुव
न् ॥ नानावर्णांबरधराःक्रीडमानास्ततस्ततः ८ अभियांतिततोन्योन्यंकाश्चिन्मदवशात्स्वयम् ॥ क्रीडंतिकाश्चिदक्षैस्तुहर्षादुत्फुल्ललोचनाः ९ मायूरंर
थमारुह्यसखीभिःपरिवारिता ॥ उषासंतोषितादेव्यारुद्राण्याप्रतिगृह्यताम् १० इयंचैवकुलश्लाघ्यानाम्नोषासुंदरीवरा ॥ बाणपुत्रीतववधूःप्रतिगृह्णी
ष्वभामिनीं ११ ततःप्रतिगृहीतासास्त्रीभिराचारमंगलैः ॥ प्रवेशिताचसावेश्मअनिरुद्धस्यशोभना १२ देवकीरोहिणीचैवरुक्मिण्यथविदर्भजा ॥ दृष्ट्वा
निरुद्धंरोदंत्यःस्नेहहर्षसमन्विताः १३ रेवतीरुक्मिणीचैवगृहमुख्यंप्रवेशयत् ॥ वधूर्वर्द्धसिदिष्ट्यात्वमानिरुद्धस्यदर्शनात् १४ ततस्तूर्यप्रणादैस्तावरनार्यः
शुभाननाः ॥ क्रियामारेभिरेकर्त्तुमुषाचगृहसंस्थिता १५ ततोहर्म्यतलस्थासाव्टष्णिपुंगवसंस्थिता ॥ रमतेसर्वसदृशैरुपभोगैर्वरानना १६ चित्रलेखाचसु
श्रोणीअप्सरारूपधारिणी ॥ आपृष्ट्वाचसखीवर्गमुषांचात्रिदिवंगता १७ गतासुतासुसर्वासुसखीष्वसुरसुंदरी ॥ मायावत्यागृहंनीताप्रथमंसानिमंत्रिता
१८ सातुप्रद्युम्नगृहिणीस्नुषांदृष्ट्वासुमध्यमा ॥ वासोभिरन्नपानैश्चपूजयामाससुंदरीम् १९ ततःक्रमेणसर्वास्तावधूमूषयांदुस्त्रियः ॥ आचारमनुपश्यंत्यः
स्वधर्ममुपचक्रिरे २० ॥ ॥ वैशंपायनउवाच ॥ ॥ एतत्तेसर्वमाख्यातंमयाकुरुकुलोद्वह ॥ यथाबाणोजितःसंख्येजीवन्मुक्तश्चविष्णुना २१ द्वारका
यांततःकृष्णोरेमेयदुगणैर्वृतः ॥ अन्वशासन्महींकृत्स्नांपरयासंयुतोमुदा २२ एवमेषोवतीर्णोवैपृथिवींपृथिवीपते ॥ विष्णुर्यदुकुलश्रेष्ठोवासुदेवेतिवि
श्रुतः २३ एतैश्चकारणैःश्रीमान्वसुदेवकुलेप्रभुः ॥ जातोवृष्णिषुदेवक्यांयन्मांत्वंपरिपृच्छसि २४ निवृत्तेनारदप्रश्नेयन्मयोक्तंसमासतः ॥ श्रुतास्तेविस्त
राःसर्वेयेपूर्वंजनमेजय २५ विष्णोस्तुमाथुरेकल्पेयत्रतेसंशयोमहान् ॥ वासुदेवगतिश्चैवसामयासमुदाहृता २६ आश्चर्यंचैवनान्यद्वैकृष्णश्चाश्चर्यसंनि
धिः ॥ सर्वेष्वाश्चर्यकल्पेषुनास्त्याश्चर्यमवैष्णवम् २७

भंगादिवरुणजयांतैः ॥ २४ ॥ निवृत्तेदत्तोत्तरत्वेनसमाहितेनारदप्रकृतआश्चर्यंकोधन्यइत्येवंरूपंयेपूर्वंउ
क्ताइतिशेषः ॥ २५ ॥ यत्रकःसर्वोत्तमइत्येवंरूपेविषयेतेतवसंशयोभूत्सोर्थोमाथुरेकल्पेयदुषुभवतोऽवतारेरुद्रजयेननिर्णीतइत्यर्थः वासुदेवात्मिकागतिः परायणंवासुदेवगतिः
साप्रसिद्धा तद्विष्णोःपरमंपदं साकाष्ठासापरागतिरित्याद्यागमेषुइत्यर्थः ॥ २६ ॥ सर्वेष्विति अन्यत्राप्याश्चर्यदर्शनंविष्ण्वनुप्रवेशादेवेत्यर्थः ॥ २७ ॥

एषविष्णुःधनिनांधन्यकृत्स्वयंधन्यइत्यन्यंकरोति एषह्येवानंदयतीतिश्रुतेःधन्यानांमानुषानंदादिहिरण्यगर्भांतानामानंदिनांआनंदभावनः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥
॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ हरिवंशंश्रुतवान्यतःअतोनिर्मलोनिष्पापोऽभूत् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुह

एषधन्योहिधन्यानांधन्यकृद्धन्यभावनः ॥ देवेषुतुसदैत्येषुनास्तिधन्यतरोच्युतात् २८ आदित्यावसवोरुद्राअश्विनौमरुतस्तथा ॥ गगनंभूर्दिशश्चैवसलि
लंज्योतिरेवच २९ एषधाताविधाताचसंहर्ताचैवनित्यशः ॥ सत्यंधर्मस्तपश्चैवब्रह्माचैवपितामहः ३० अनंतश्चैवनागानांरुद्राणांशंकरःस्मृतः ॥ जंगमा
जंगमंचैवजगन्नारायणोद्भवम् ३१ एतस्माच्चजगत्सर्वंप्रसूयेतजनार्दनात् ॥ जगच्चसर्वंदेवेशेतंनमस्कुरुभारत ३२ पूज्यश्चसततंसर्वैर्देवैरेषसनातनः ॥ इ
त्युक्तंबाणयुद्धंतेमाहात्म्यंकेशवस्यतु ३३ वंशप्रतिष्ठामतुलांश्रवणादेवलप्स्यसे ॥ येचेदंधारयिष्यंतिबाणयुद्धमनुत्तमं ३४ केशवस्यचमाहात्म्यंनाधर्म
स्तान्भजिष्यति ॥ एषातेवैष्णवीचर्यामयाकार्त्स्न्येनकीर्तिता ३५ पृच्छतस्तातयज्ञेस्मिन्निवृत्तेजनमेजय ॥ आश्चर्यपर्वनिखिलंयोहीदंधारयेन्नृप ३६ सर्व
पापविनिर्मुक्तोविष्णुलोकेसगच्छति ॥ कल्यमुत्थाययोनित्यंकीर्तयेत्सुसमाहितः ३७ नतस्यदुर्लभंकिंचिदिहलोकेपरत्रच ॥ ब्राह्मणःसर्ववेदीस्यात्क्षत्रि
योविजयीभवेत् ३८ वैश्योधनसमृद्धःस्याच्छूद्रःकामानवाप्नुयात् ॥ नाशुभंप्राप्नुयात्किंचिद्दीर्घमायुर्लभेतसः ३९ ॥ सौतिरुवाच ॥ इतिपारीक्षि
तोराजावैशंपायनभाषितम् ॥ श्रुतवानचलोभूत्वाहरिवंशंद्विजोत्तमाः ४० एवंशौनकसंक्षेपाद्विस्तरेणतथैवच ॥ प्रोक्तावैसर्ववंशास्तेकिंभूयःश्रोतुमिच्छ
सि ४१ इतिश्रीमहाभारतेखिलेषुहरिवंशेविष्णुपर्वणिउषाहरणसमाप्तिर्नामाष्टाविंशत्यधिकशततमोऽध्यायः १२८ समाप्तमिदंविष्णुपर्व ॥ ॥ छ ॥

रिवंशेविष्णुपर्वणिटीकायामष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ लिखितपुस्तके अध्यायद्वयंभविष्यपर्वस्थमत्रपर्वणिलिखित्वैतत्पर्वसमाप्तिः ॥

॥ अथ श्रीमन्महाभारतेहरिवंशांतर्गतं तृतीयं भविष्यपर्व प्रारभ्यते ॥

श्रीगणेशायनमः ॥ ॥ जनमेजयस्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अन्वगच्छत् गर्भिण्येवेत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ निघृष्टौकृताचिह्नौ ॥ १२ ॥
अजःछागःतद्वत्श्यामौ समारूढौ तथैवकृष्णरूपवंतावेदवृद्धिंप्राप्तौ ॥ १३ ॥ वेमकोनामस्वर्गस्थःकश्चिदृषिः तस्यशालायांगृहे द्वीजाभ्यांकौशिकपिप्पलादाभ्याम् ॥ १४ ॥

श्रीगोपालकृष्णायनमः ॥ ॥ शौनकउवाच ॥ ॥ जनमेजयस्यकेपुत्राःपठ्यंतेलोमहर्षणे ॥ कस्मिन्प्रतिष्ठितोवंशःपांडवनांमहात्मनाम् १ एतदिच्छा
म्यहंश्रोतुंपरंकौतूहलंहिमे ॥ त्वत्तःकथयतःसर्वंवेद्म्यहंतत्परिस्फुटम् २ ॥ सौतिरुवाच ॥ ॥ पारीक्षितस्यकाश्यायांद्वौपुत्रौसंबभूवतुः ॥ चंद्रापीडश्च
नृपतिःसूर्यापीडश्चमोक्षवित् ३ चंद्रापीडस्यपुत्राणांशतमुतमधन्विनाम् ॥ जानमेजयइत्येवंक्षात्रंभुविपरिश्रुतम् ४ तेषांश्रेष्ठस्तुराजासीत्पुरेवाराणसा
ह्वये ॥ सत्यकर्णोमहाबाहुर्यज्वाविपुलदक्षिणः ५ सत्यकर्णस्यदायादःश्वेतकर्णःप्रतापवान् ॥ अपुत्रःसतुधर्मात्माप्रविवेशतपोवनम् ६ तस्माद्वनगताद्ग
र्भंयादवीप्रत्यपद्यत ॥ सुचारोर्दुहितासुभ्रूर्मानिनीभ्रातृमालिनी ७ सतुजन्मनिगर्भस्यश्वेतकर्णःप्रजेश्वरः ॥ अन्वगच्छद्व्रतंपूर्वैर्महाप्रस्थानमच्युतम् ८
सादृष्ट्वासंप्रयातंतंमानिनीपृष्ठतोऽन्वियात् ॥ पथिसासुषुवेसुभ्रूर्वनेराजीवलोचनम् ९ कुमारंतंपरित्यज्यभर्तारंचान्वगच्छत ॥ प्रतिव्रतामहाभागाद्रौप
दीवपुरापतीन् १० सतुराजकुमारोसौगिरिकुंजेरुरोदह ॥ छायार्थंतस्यमेघास्तुप्रादुरासन्समंततः ११ श्रविष्ठायाश्चपुत्रौद्वौपिप्लादश्चकौशिकः ॥ दृष्ट्वा
कृपान्वितौगृह्यतंप्रक्षालयतांजलैः ॥ निघृष्टौतस्यतौपार्श्वौशिलायांरुधिरप्लुतौ १२ अजश्यामौतुपार्श्वौतावुभावपिसमाहितौ ॥ तथैवतुसमारूढौअज
पार्श्वस्ततोऽभवत् १३ ततोऽजपार्श्वइतितौचक्रातेतस्यनामह ॥ सतुवेमकशालायांद्विजाभ्यामभिवर्धितः १४ वेमकस्यतुभार्यातमुद्वहत्पुत्रकारणात् ॥
वेमक्याःसतुपुत्रोऽभूद्ब्राह्मणौसचिवौचतौ १५ तेषांपुत्राश्चपौत्राश्चयुगपत्तुल्यजीविनः ॥ सएषपौरवोवंशःपांडवानांप्रतिष्ठितः १६ श्लोकोपिचात्रगीतो
यंनाहुषेणययातिना ॥ जरासंक्रमणेपूर्वंभृशंप्रीतेनधीमता १७ आचंद्रार्कग्रहाभूमिर्भवेदपिनसंशयः ॥ अपौरवानतुमहीभविष्यतिकदाचन १८ इतिश्री
मन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिप्रथमोऽध्यायः १ ॥ ॥ ७ ॥ ॥ शौनकउवाच ॥ ॥ उक्तोयंहरिवंशस्तेपर्वाणिनिखिलानिच ॥ यथापु
रोक्तानितथाव्यासशिष्येणधीमता १ तत्कथ्यमानममितमितिहाससमन्वितम् ॥ प्रीणात्यस्मानमृतवत्सर्वपापविनाशनम् २ सुखश्राव्यतयाधीरमनोह्ला
दयतीवनः ॥ जनमेजयस्तुनृपतिःश्रुत्वाचाख्यानमुत्तमम् ॥ सौतेकिमकरोत्पश्चात्सर्पसत्रादनंतरम् ३ ॥ ॥ सौतिरुवाच ॥ ॥ जनमेजयस्तुसनृपःश्रुत्वा
चाख्यानमुत्तमम् ॥ यदारभत्तदाख्यास्येसर्पसत्रादनंतरम् ४

॥ १५ ॥ तेषांअजपार्श्वपिप्पलादकौशिकानाम् ॥ १६ अत्रपुरुषेशविषये ॥ १७ ॥ १८ ॥ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांप्रथमोऽध्यायः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ वेदसंहिताःवेदनिबद्धाः ॥ ९ ॥ १० ॥ मेममनिमेषमात्रमपिसंवत्सरोपिनिमेषमात्रमिवगतःअपिरेवार्थे ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥
दुःसाहानांअजेयानां ॥ १५ ॥ १६ ॥ १७ ॥ आडीजलचरः पाक्षिविशेषःतद्रूपेणवसिष्ठः बकरूपेणविश्वामित्रश्च ऋषित्वाल्लज्जयाप्राकट्येनयुद्धंकर्तुमशक्तौतयोर्युद्धमाडीब

तस्मिन्सत्रेसमाप्तेथराजापारीक्षितस्तदा ॥ यष्टुंसवाजिमेधेनसंभारानुपचक्रमे ५ ऋत्विक्पुरोहिताचार्यानाहूयेदमुवाचह ॥ यक्ष्येहंवाजिमेधेनहयमुत्सृ
ज्यतामिति ६ ततोस्यविज्ञायचिकीर्षितंतदाकृष्णोमहात्मासहसाजगाम ॥ पारीक्षितंद्रष्टुमदीनसत्त्वंद्वैपायनःसर्वपरावरज्ञः ७ पारीक्षितस्तुनृपतिर्दृष्ट्वा
तमृषिमागतम् ॥ अर्घ्यपाद्यासनंदत्वापूजयामासशास्त्रतः ८ तौचोपविष्टावभितःसदस्यास्तस्यशौनक ॥ कथाबहुविधाश्चित्राश्चक्रातेवेदसंहिताः ९ततःकथां
तेनृपतिर्नोदयामासतंमुनिम् ॥ पितामहंपांडवानामात्मनःप्रपितामहम् १० महाभारतमाख्यानंबह्वर्थंश्रुतिविस्तरम् ॥ निमेषमात्रमपिमेसुखश्राव्यत
यागतम् ११ विभूतिविस्तारकरंसर्वेषांवैयशस्करम् ॥ त्वयासुविहितंब्रह्मन्शंखेक्षीरमिवाहितम् १२ अमृतेनतुतृप्तिःस्याद्यथास्वर्गसुखेनच ॥ तथातृ
प्तिंनगच्छामिश्रुत्वेमांभारतींकथाम् १३ अनुमान्यतुसर्वज्ञंपृच्छामिभगवन्नहम् ॥ हेतुःकुरूणांनाशस्यराजसूयोमतोमम १४ दुःसाहानांयथाध्वंसोराज
न्यानामुपप्लवे ॥ राजसूयंतथामन्येयुद्धार्थमुपकल्पितम् १५ राजसूयस्तुसोमेनश्रूयतेपूर्वमाहृतः ॥ तस्यांतेसुमहद्युद्धमभवत्तारकामयम् १६ आहृतो
वरुणेनाथतस्यांतेसुमहाक्रतोः ॥ देवासुरंमहायुद्धंसर्वभूतक्षयावहम् १७ हरिश्चंद्रश्चराजर्षिःक्रतुमेनमुपाहरत् ॥ तत्राप्याडीबकंनामयुद्धंक्षत्रियनाशनम्
१८ ततोनंतरमार्गेणपांडवेनातिदुस्तरः ॥ महाभारतआरंभःसंभृतोग्निरिवक्रतुः १९ तदस्यमूलंयुद्धस्यलोकक्षयकरस्यतु ॥ राजसूयोमहायज्ञःकिमर्थं
ननिवारितः २० राजसूयोत्यसंहार्योयज्ञांगैश्चदुरत्ययैः ॥ मिथ्याप्रणीतेयज्ञांगेप्रजानांसंक्षयोध्रुवः २१ भवानपिचसर्वेषांपूर्वेषांनःपितामहः ॥ अतीता
नागतज्ञश्चनाथश्चादिकरश्चनः २२ तेकथंभवतानेत्राबुद्धिमंतश्च्युतानयात् ॥ अनाथाह्यपराध्यंतेकुनेतारश्चमानवाः २३ ॥ ॥ व्यासउवाच ॥ ॥ का
लेनविपरीतास्तेतवपूर्वपितामहाः ॥ नमांभविष्यंपृच्छंतिनचापृष्टोब्रवीम्यहम् २४ सामर्थ्यंचनपश्यामिभविष्यस्यनिवर्तने ॥ परिहर्तुंनशक्याहिका
लेनविहितागतिः २५ त्वयात्विदमहंपृष्टोवक्ष्याम्यागंतुभावियत् ॥ अतश्चबलवान्कालःश्रुत्वापिनकरिष्यसि २६ नसंरंभान्नचारंभान्नवैस्थास्यसिपौ
रुषे ॥ लेखाहिकालेलिखिताःसर्वथादुरतिक्रमाः ॥ २७ ॥

कंनामतन्निमित्तम्उभयपक्षपातिनांक्षत्रियाणांनाशोवृत्तइत्यर्थः ॥ १८ ॥ महाभारतेभारतयुद्धनिमित्तंआरभ्यतइत्यारंभः ॥ १९ ॥ २० ॥ असंहार्यः सर्वांगोपेतःकर्तुमशक्यः
॥ २१ ॥ २२ ॥ नेत्रागुरुणा ॥ २३ ॥ २४ ॥ विहितागतिः विहितांगम् ॥ २५ ॥ २६ ॥ संरंभात् भयात् आरंभात् उत्साहात् पौरुषेपुरुषवंशे ॥ २७ ॥

तेनभावेनमहत्वकारणेनबुद्धिपूर्वकद्वेषादित्यर्थः ॥ २८॥ २९ ॥ ३० ॥ तस्यक्रतोःसंस्थासमाप्तिस्तदर्थंकृतमिदंभाविकालुष्यम् कालस्यइच्छयेतिशेषः ॥ ३१ ॥ तत्प्रणेयंकालाधीनम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ द्विजःपक्षी ॥ ३७ ॥ ३८ ॥ उपात्तउपसंहृतोयज्ञोऽश्वमेधः देवादिषुज्ञानरूपेणावस्थास्यति ॥ ३९ ॥ उद्भिद्यजायतइत्यौद्भिज्जःभूविलस्थोयोगीखन्यमानायांभुविप्रकटीभविष्यतीत्यर्थः ॥ ४० ॥ श्वेतग्रहमुत्पातविशेषः अंतकः प्रलयकालः ॥ ४१ ॥ बलंश्रद्धादिरूपंफलंदास्यतेक्रतुरितिशेषः संवृतंगो

अश्वमेधःक्रतुःश्रेष्ठःक्षत्रियाणांपरिश्रुतः ॥ तेनभावेनतेयज्ञंवासवोधर्षयिष्यति २८ यदितच्छक्यतेराजन्परिहर्तुंकथंचन ॥ दैवंपुरुषकारेणमायजेथाश्वतंक्रतुम् २९ नचापराधःशक्रस्यनोपाध्यायगणस्यते ॥ तववायजमानस्यकालोत्रदुरतिक्रमः ३० तस्यसंस्थाकृतमिदंकालस्यपरमेष्ठिनः ॥ यथादृष्टंप्रजासर्गंगमिष्यतियुगक्षये ३१ तथायज्ञफलानांचविक्रेतारोद्विजातयः ॥ तत्प्रणेयंनिबोधस्वत्रैलोक्यंसचराचरम् ३२ ॥ जनमेजयउवाच ॥ निवृत्तावश्वमेधस्यकिंनिमित्तंभविष्यति ॥ श्रुत्वापरिहरिष्यामिभगवन्यदिमन्यसे ३३ ॥ व्यासउवाच ॥ निमित्तंभवितातत्रब्रह्मकोपकृतंप्रभो ॥ यतेथाःपरिहर्तुंत्वमित्येतद्भद्रमस्तुते ३४ त्वयावृत्तंक्रतुंचैववाजिमेधंपरंतप ॥ क्षत्रियानाहरिष्यंतियावद्भूमिर्धरिष्यति ३५ ॥ जनमेजयउवाच ॥ निवृत्तावश्वमेधस्यब्रह्मशापाग्नितेजसा ॥ अहंनिमित्तमितिमेभयंतीव्रंतुजायते ३६ कथंह्यकीर्त्यायुज्येतसुकृतीमद्विधोजनः ॥ लोकानुत्सहतेगंतुंखंसपाशइवद्विजः ३७ यथाह्यनागतमिदंदृष्टमत्रप्रणाशनम् ॥ यद्यस्तिपुनरावृत्तिर्यज्ञस्याश्वासयस्वमाम् ३८ ॥ व्यासउवाच ॥ उपात्तयज्ञोदेवेषुब्राह्मणेषूपपत्स्यते ॥ तेजसाप्याहृतंतेजस्तेजस्येवावतिष्ठते ३९ औद्भिज्जोभविताकश्चित्सेनानीःकाश्यपोद्विजः ॥ अश्वमेधंकलियुगेपुनःप्रत्याहरिष्यति ४० तद्युगेतत्कुलीनश्चराजसूयमपिक्रतुम् ॥ आहरिष्यतिराजेंद्रश्वेतग्रहमिवांतकः ४१ यथाबलंमनुष्याणांकर्तृणांदास्यतेफलम् ॥ युगांतद्वारमृषिभिःसंवृतंविचरिष्यति ४२ तदाप्रभृतिहास्यंतिनृणांप्राणाःपुराकृतीः ॥ ननिवर्तिष्यतेलोकेवृत्तांतावर्तनेष्विह ४३ तदासूक्ष्मोमहोदर्कोदुस्तरोदानमूलवान् ॥ चातुराश्रम्यशिथिलोधर्मःप्रविचलिष्यति ४४ तदाह्यल्पेनतपसासिद्धिंप्राप्स्यंतिमानवाः ॥ धन्याधर्मंचरिष्यंतियुगांतेजनमेजय ४५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिद्वितीयोऽध्यायः २ ॥ जनमेजयउवाच ॥ आसन्नंविप्रकृष्टंवायदिकालंनविद्महे ॥ तस्माद्द्वापरसंविद्धंयुगांतंस्पृहयाम्यहम् १

पितंविचरिष्यतिजनः ॥ ४२ ॥ तदाप्रभृतियुगांतमारभ्यप्राणाइंद्रियाणिपुराकृतीः शिष्टाचारान्वर्तनेषुआचारेषुवृत्तांतः पूर्ववृत्तंननितरांवर्तिष्यते ॥ ४३ ॥ सूक्ष्मोल्पोपिधर्मः महोदर्कोमहाफलःदुस्तरोविघ्नबाहुल्यात् ॥ ४४ ॥ ४५ ॥ इतिश्रीमहाभारतेहरिवंशेभाविष्यपर्वणिटीकायांद्वितीयोऽध्यायः ॥ २ ॥ आसन्नंयदियस्मात्कालंमोक्षस्यनविद्महे तस्माद्द्वापरःधर्माधर्मसाम्यवान् संविद्धोअधर्माधिक्यात्दूषितोयेन तंयुगांतंयुगानांअंतेभवंकलिंश्रोतुंस्पृहयामि ॥ १ ॥

तत्रस्पृहाहेतुमाह प्राप्ताइति अल्पायासेनमहत्फलंभवतीतिलोभादस्माभिः कलौजन्मप्रार्थितमित्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ कांडस्पृष्टाःबाणधराःक्षत्रवृत्तयोब्राह्मणा इत्यर्थः निष्क्रियाणिपंचयज्ञहोनानि॥ ७॥ ८ ॥ ९ ॥ अकुत्सनाअनिंदा १० चेतनाधर्माधर्मस्वरूपबोधःमुक्तकेशाः विधवाः विचूलिनः सन्यासिनःप्रजास्यंतिअन्योन्यंमिथुनोभूयप्रजांजनयिष्यंति ॥ ११ ॥अट्टशूलाः अन्नविक्रयिणः शिवशूलाः वेदविक्रयिणःकेशशूलाभगविक्रयिण्यः ॥ १२ ॥ सर्वेब्रह्मवादच्छलेनकर्मभ्रष्टाभविष्यंतीत्यर्थः सर्वे

प्राप्तावयंतुतत्कालमनयाधर्मतृष्णया ॥ आदद्यात्परमंधर्मंसुखमल्पेनकर्मणा २ ॥ शौनकउवाच ॥ त्रासमुद्वेगकरणंयुगांतंसमुपस्थितम् ॥ प्रनष्टधर्मंधर्मज्ञनिमित्तैर्वक्तुमर्हसि ३ सौतिरुवाच ॥ पृष्टएवंभविष्यस्यगतिंतत्वेनचिंतयन् ॥ युगांतेसर्वभूतानांभगवानब्रवीत्तदा ४ ॥ व्यासउवाच ॥ अरक्षितारोहर्तारोबलिभागस्यपार्थिवाः ॥ युगांतेप्रभविष्यंतिस्वरक्षणपरायणाः ५ अक्षत्रियाश्वराजानोविप्राःशूद्रोपजीविनः ॥ शूद्राश्वब्राह्मणाचाराभविष्यंति युगक्षयये ६ कांडेस्पृष्टाःश्रोत्रियाश्वनिष्क्रियाणिहवींष्यथ ॥ एकपंक्त्यामशिष्यंतियुगांतेजनमेजय ७ शिल्पवंतोऽनृतपरानरामद्यामिषप्रियाः ॥ मित्रभार्याभविष्यंतियुगांतेजनमेजय ८ राजवृत्तिस्थिताश्चौराराजानश्चौरशीलिनः ॥ भृत्याश्वानिर्दिष्टभुजोभविष्यंतियुगक्षये ९ धनानिश्लाघनीयानिसतांवृत्तमपूजिजम् ॥ अकुत्सनाचपतितेभविष्यतियुगक्षये १० प्रनष्टचेतनामर्त्यामुक्तकेशाविचूलिनः ॥ ऊनषोडशवर्षाश्वप्रजास्यंतिनराःसदा ११ अट्टशूलाजनपदाःशिवशूलाश्वतुष्पथाः ॥ प्रमदाःकेशशूलाश्वभविष्यंतियुगक्षये १२ सर्वेब्रह्मवदिष्यंतिसर्वेवाजसनेयिनः ॥शूद्राभोवादिनश्चैवभविष्यंतियुगक्षये १३ तपोयज्ञफलानांचविक्रेतारोद्विजातयः ॥ ऋतवश्चभविष्यंतिविपरीतायुगक्षये १४ शुक्लदंतांजिताक्षाश्वमुंडाःकाषायवाससः ॥ शूद्राधर्मंचरिष्यंतिशाक्यबुद्धोपजीविनः १५ श्वापदप्रचुरत्वंचगवांचैवपरिक्षयः ॥ स्वादूनांविनिवृत्तिश्वविद्यादंतगतेयुगे १६ अंत्यामध्येनिवत्स्यंतिमध्याश्वांतनिवासिनः ॥ यथानिम्नंप्रजाःसर्वागमिष्यंतियुगक्षये १७ तथाद्विहायनादम्यास्तथापल्वलकर्षकाः ॥ चित्रवर्षीचमर्जन्योयुगेक्षीणेभविष्यति १८

वाजसनेयिनःशाखांतरलोपात्तेनवेदत्रयसाध्योयज्ञउत्सन्नोभविष्यतीतिभावः इदानीमेवपाश्चिमदेशेतथादर्शनात् भोइतिपूज्यवादोयेषुतेभोवादिनः ॥ १३ ॥ १४ ॥ शुक्लदंताःमांसाशनत्यागात् अन्यथारक्तदंतत्वंस्यात् अंजिताक्षाःसूक्ष्मदृष्टयः शाक्यमतंबुद्धमतं चोपजीवंतितेवेददूषकानास्तिकाइत्यर्थः ॥ १५ ॥ श्वापदाः हिंस्राःवृकव्याघ्रादयःस्वादूनांउत्तमरसादीनां ॥ १६ ॥ अंत्याःम्लेच्छाः मध्याः कुरुपंचालाःतत्रस्थाश्वम्लेच्छदेशेवासंकरिष्यंतीत्यर्थः यथेतिनीचमार्गानुसारिण्यइत्यर्थः ॥ १७ ॥ दम्याः हलशकटादिवहनयोग्याःचित्रवर्षीहलेयोजितस्यबलीवर्दस्य एकंशृंगमार्द्रंएकंशुष्कमित्येववर्षिष्यतीत्यर्थः ॥ १८ ॥

चौरयानाःमुष्णंतःयत्किंचिद्वचसनदुर्गताः दरिद्राः ॥ १९ ॥ ऊषार्कबहुलाक्षारमृत्तिकयाप्रस्वेदभूयिष्ठाबीजनाशिनीत्यर्थः नगरांतराइतिवचनांतरेषुचौरभयात् वक्रमार्गोपिनगरा श्रयोपयोगैः पांथैर्गंतव्यमित्यर्थः ॥ २० ॥ देयानिअलंकारादीनिशास्त्रतः ॥ अविभाज्यान्यपिविभजंते लोभानृताभ्यांविरोधिताः सविरोधाः ॥ २१ ॥ सौकुमार्येलावण्ये रत्नेअलंकारादौ ॥ २२ ॥ निर्विहारस्यस्रक्चंदनदिव्यास्तरणादिभोगसामग्रीविहारस्तद्रहितस्यभूतस्यरूपमात्रेणस्थितस्य ॥ २३ ॥ २४ ॥ २५ ॥ ईहयातृष्णयाअसुखिनः ॥ २६ ॥

सर्वेचौरकुलेजाताश्चौरयानाःपरस्परम् ॥ स्वल्पेनाढ्याभविष्यंतियत्किंचित्प्राप्यदुर्गताः १९ नतेधर्मंकरिष्यंतिमानवानिर्गतेयुगे ॥ ऊषार्कबहुलाभूमिः पंथानस्तस्करावृताः २० सर्वेवाणिज्यकाश्चैवभविष्यंतिकलौयुगे ॥ पितृदत्तानिदेयानिविभजंतेसुतास्तदा ॥ हरणायप्रपत्स्यंतेलोभानृतविरोधिताः २१ सौकुमार्येतथारूपेरत्नेचोपक्षयंगते ॥ भविष्यंतियुगांतेचनार्यःकेशैरलंकृताः २२ निर्विहारस्यभूतस्यगृहस्थस्यभविष्यति ॥ युगांतेसमनुप्राप्तेनान्याभा र्यासमागतिः २३ कुशीलानार्यभूयिष्ठंवृथारूपसमन्वितम् ॥ पुरुषाल्पंबहुस्त्रीकंतद्युगांतस्यलक्षणम् २४ बहुयाचनकोलोकोनदास्यतिपरस्परम् ॥ अ विचार्यगृहीष्यंतिदानंवर्णांतरात्तथा २५ राजचौराग्निदंडार्तोजनःक्षयमुपेष्यति ॥ सस्यनिष्पत्तिरफलातरुणावृद्धशीलिनः ॥ ईहयासुखिनोलोकाभविष्यं तियुगक्षये २६ वर्षासुवाताःपरुषानीचाःशर्करवर्षिणः ॥ संदिग्धःपरलोकश्चभविष्यतियुगक्षये २७ आत्मानश्चदुराचाराब्रह्मदूषणतत्पराः ॥ आत्मानं बहुमन्यंतेमन्युरेवाभ्ययाद्विजान् २८ वैश्याचाराश्चराजन्याधनधान्योपजीविनः ॥ युगापक्रमणेसर्वेभविष्यंतिद्विजातयः २९ अप्रवृत्ताःप्रपत्स्यंतेसमयाः शपथास्तथा ॥ ऋणंसविनयभ्रंशंयुगेक्षीणेभविष्यति ३० भविष्यत्यफलोहर्षःक्रोधश्चसफलोनृणाम् ॥ अजाश्चैवोपरोत्स्यंतेपयसोर्थेयुगक्षये ३१ अ शास्त्रविदुषांपुंसामेवमेवस्वभावतः ॥ अप्रमाणंवदिष्यंतिनीतिंपंडितमानिनः ३२ शास्त्रोक्तस्याप्रवक्तारोभविष्यंतियुगक्षये ॥ सर्वेसर्वंहिजानंति वृद्धाननुपसेव्यवै ३३ नकश्चिदकविर्नामयुगांतेसमुपस्थिते ॥ नक्षत्राणिनियोक्ष्यंतिविकर्मस्थाद्विजातयः ॥ चौरप्रायाश्चराजानोयुगांतेपर्युपस्थिते ३४ कुंडावृषानैकृतिकाःसुरापाब्रह्मवादिनः ॥ अश्वमेधेनयक्ष्यंतियुगांतेजनमेजय ३५ अयाज्यान्याजयिष्यंतितथाभक्ष्यस्यभक्षिणः ॥ ब्राह्मणाधनतृ ष्णार्तायुगांतेसमुपस्थिते ३६

॥ २७ ॥ २८ ॥ युगापक्रमणेधर्ममर्यादाभंगेभविष्यंतिप्रवर्तयिष्यंति ॥ २९ ॥ समयाःसांकेतिकाधर्माःसविनयभ्रंशंउत्तमेभ्योविभ्रंशोयस्यतथाभविष्यतिकिमुतनीचेभ्यः ३० ॥ ३१ ॥ स्वभावतःस्वेच्छयाशास्त्रार्थंवदिष्यंति ॥ ३२ ॥ ३३ ॥ द्विजातयः क्षत्राणिननियोक्ष्यंति धर्मइतिशेषः तत्रहेतुः चौरेति ॥ ३४ ॥ कुंडायांअमृतेजीवतिपत्यौजार जातायांवृषाः रेतः सेक्तारःकुंडावृषाः नैकृतिकाः अनधिकारिणावपिजायापतीयज्ञंकरिष्यतइत्यर्थः अभक्ष्यस्येतिच्छेदः ॥ ३५ ॥ ३६ ॥

गवेधुकः कुसुंभबीजाकारस्तृणधान्यविशेषस्तन्मयाः पिनद्धका अलंकाराः यासांताः एतच्चगुंजादेरप्युपलक्षणम् ॥ ३७ ॥ वियोगीनियथाशास्त्रंतत्तद्ग्रहसंयोगहीनानि ॥ ३८ ॥ वियोनिषुपशुषुविभिन्नवर्णेषुवा ॥ ३९ ॥ ४० ॥ अग्रंग्रासचतुष्टयं अकृतंअदत्तंअग्रंयेषांतानिअन्नानिअकृताग्राणि ॥ ४१ ॥ ४२ ॥ अरुजोमनःपीडारहितः ॥ ४३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ एवंविलुलितेकलुषीकृते ॥ १ ॥ २ ॥ शीलव्यसनंधर्मनाशं ॥ ३ ॥ निर्वेदःदेहादौवैराग्यं ॥ ४ ॥ आत्मसंबोधःविवेकोदयःएवंगत्वाधर्मशीलत्वात्चित्तशुद्धिज्ञानोत्पत्तिद्वारापरांकाष्ठांमोक्षदंज्ञानंतदैवसर्वपापनाशनात्कृतयुगम् ॥ ५ ॥ उद्देशतःलेशतःवि

भोशब्दमभिधास्यंतिनचकश्चित्पठिष्यति ॥ एकशंखास्तथानार्योगवेधुकपिनद्धकाः ३७ नक्षत्राणिवियोगीनिविपरीतादिशस्तथा ॥ संध्यारागोथदिग्दाहोभविष्यत्यवरेयुगे ३८ पितॄन्पुत्रानियोक्ष्यंतिवध्वःश्वश्रूश्वकर्मसु ॥ वियोनिषुचरिष्यंतिप्रमदासुनरास्तदा ३९ वाक्शरैस्तर्जजिष्यंतिगुरून्शिष्यास्तथैवच ॥ मुखेषुचप्रयोक्ष्यंतिप्रमत्ताश्चनरास्तदा ४० अकृताग्राणिभोक्ष्यंतिनराश्चैवाग्निहोत्रिणः ॥ भिक्षांबलिमदत्त्वाचभोक्ष्यंतिपुरुषाःस्वयम् ४१ पतीन्सुप्तान्वंचयित्वागमिष्यंतिस्त्रियोन्यतः ॥ पुरुषाश्चप्रसुप्तासुभार्यासुचपरस्त्रियम् ४२ नाव्याधितोनाप्यरुजोजनःसर्वोभ्यसूयकः ॥ नकृतिप्रतिकर्ताचकालेक्षीणेभविष्यति ४३ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणितृतीयोध्यायः ३ ॥ ॥ जनमेजयउवाच ॥ ॥ एवंविलुलितेलोकेमनुष्याकेनपालिताः ॥ निवत्स्यंतिकिमाचाराःकिमाहारविहारिणः १ किंकर्माणःकिमीहंतःकिंप्रमाणाःकिमायुषः ॥ कांचकाष्ठांसमासाद्यप्रपत्स्यंतिकृतंयुगम् २ ॥ ॥ व्यासउवाच ॥ ॥ अतऊर्ध्वंच्युतेधर्मेगुणहीनाःप्रजास्ततः ॥ शीलव्यसनमासाद्यप्राप्स्यंतेह्रासमायुषः ३ आयुर्हान्याबलग्लानिर्बलग्लान्याविवर्णता ॥ वैवर्ण्याद्व्याधिसंपीडानिर्वेदोव्याधिपीडनात् ४ निर्वेदादात्मसंबोधःसंबोधाद्धर्मशीलता ॥ एवंगत्वापरांकाष्ठांप्रपत्स्यंतिकृतंयुगम् ५ उद्देशतोधर्मशीलाःकेचिन्मध्यस्थतांगताः ॥ विमर्षशीलाःकेचित्तुहेतुवादकुतूहलाः ६ प्रत्यक्षमनुमानंचप्रमाणंचेतिनिश्चिताः ॥ प्रमाणैकंकरिष्यंतिनेतिपंडितमानिनः ७ अप्रमाणंकरिष्यंतिवेदोक्तमपरेजनाः ॥ तदामुखभगाश्चैभवविष्यंतिस्त्रियोपराः ८ नास्तिक्यपरमाश्चापिकेचिद्धर्मविलोपकाः ॥ भविष्यंतिनरामूढामंदापंडितमानिनः ९ तदात्वमात्रश्रद्धेयाःशास्त्रज्ञानबहिष्कृताः ॥ दांभिकास्तेभविष्यंतिवादशीलकुतूहलाः १०

मर्षोविवेकः हेतुवादएवनतुक्रिययाकौतूहलंयेषांतेहेतुवादकुतूहलाःवृथापंडिताः ॥ ६ ॥ निश्चिताःसौगतवैशेषिकाश्चवेदस्यपरतोपिप्रामाण्यंनेच्छंति पूर्वसतःप्रामाण्यमपरेप्रमाणैकंएकमेवप्रत्यक्षमेवप्रमाणमितिचार्वाकाःनेतीत्यस्यनान्यत्प्रमाणमित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ तदात्वमात्रं वर्तमानकालिकंदृष्टार्थमात्रेश्रद्धेयाःश्रद्धावंतःवादेशीलेचकुतूहलं आश्चर्ययेषांते धर्मवादोपिदुर्लभःकिमुततदाचरणमित्यर्थः १०

शेषधर्मपुरस्कृताः अवशिष्टोविष्णुस्मरणादिर्योधर्मस्तदनुसारेणःशुभानिदयादीनि ॥ ११ ॥ असंगुप्तोजितेंद्रियः कषायस्यकलुषस्य ॥ १२ ॥ शाश्वतींवृत्तिंभिक्षाम् अवरःक्ष त्रियादिः ॥ १३ ॥ ज्ञानंशास्त्रोयोबोधःविद्याआत्मदर्शनंतयोर्नाशने निरुपस्कृताः निष्परिग्रहाः त्यागमात्रेणस्वल्पेनापिकालेनसिद्धिंमोक्षंयास्यंतीतिकलेर्गुणः ॥ १४ ॥ १५ कर्णवेदिनःपिशुनवाक्यतत्पराः ॥ १६ ॥ अनेयाअशास्याः अनयाइतिपाठेनोतिहीनाः ॥१७॥ व्यवहारेभोजनाच्छादनादावेवउपवृत्तास्तत्पराः १८ सोपधाःछलवंतः १९ ॥



तदाविचलितेधर्मेजनाःशेषपुरस्कृताः ॥ शुभान्येवाचरिष्यंतिदानसत्यसमन्विताः ११ सर्वभक्षोह्यसंगुप्तोनिर्गुणोनिरपत्रपः ॥ भविष्यतितदालोकस्तत्क षायस्यलक्षणम् १२ विप्राणांशाश्वतींवृत्तिंयदावर्णावराजनाः ॥ प्रतिपत्स्यंतिवृत्त्यर्थंतत्कषायस्यलक्षणम् १३ कषायोपप्लवेलोकेज्ञानविद्याप्रणाशने ॥ सिद्धिंस्वल्पेनकालेनयास्यंतिनिरुपस्कृताः १४ महायुद्धंमहानादंमहावर्षंमहाभयम् ॥ भविष्यतियुगेक्षीणेतत्कषायस्यलक्षणम् १५ विप्ररूपाणिरक्षां सिराजानःकर्णवेदिनः ॥ पृथिवीमुपभोक्ष्यंतियुगांतेसमुपस्थिते १६ निःस्वाध्यायवषट्काराअनेयाश्चाभिमानिनः ॥ विप्राःक्रव्यादरूपेणसर्वभक्षावृथाव्रताः १७ मूर्खाःस्वार्थपरालुब्धाःक्षुद्राःक्षुद्रपरिच्छदाः ॥ व्यवहारोपवृत्ताश्चच्युताधर्माच्चशाश्वताव् १८ हर्तारःपररत्नानांपरदारापहारकाः ॥ कामात्मानोदुरा त्मानःसोपधाःप्रियसाहसाः१९ तेषुप्रभवमानेषुतुल्यशीलेषुसर्वतः ॥ अभाविनोभविष्यंतिमुनयोबहुरूपिणः २० उत्पन्नायेकृतयुगेप्रधानपुरुषाश्रयाः ॥ कथायोगेनतान्सर्वान्पूजयिष्यंतिमानवाः २१ तस्यचौराभविष्यंतितथाचैलापहारिणः ॥ भक्ष्यभोज्यापहाराश्चकरंडानांचहारिणः २२ चौराश्चौरस्यहर्ता रोहंताहर्तुर्भविष्यति ॥ चौरैश्चौरक्षयेचापिकृतेक्षेमंभविष्यति २३ ॥ निःसारेक्षुभितेलोकेनिष्क्रियेव्यंतरस्थिते ॥ नराःश्रयिष्यंतिवनंकरभारप्रपीडिताः २४ पितृनाज्ञापयिष्यंतिपुत्राःकर्मणिसर्वशः ॥ स्नुषाश्वश्रूस्तथाचैवयुगांतेप्रत्युपस्थिते २५ वाक्शरैरर्दयिष्यंतिगुरून्शिष्याःसमंततः ॥ यज्ञकर्मण्युप रतेरक्षांसिश्वापदानिच २६ कीटमूषकसर्पाश्चधर्षयिष्यंतिमानवान् ॥ क्षेमंसुभिक्षमारोग्यंसामर्थ्यंवापिबंधुषु ॥ उद्देशतोनरश्रेष्ठभविष्यंतियुगक्षये २७ स्वयंपालाःस्वयंचोरायुगसंभारसंभृताः ॥ मंडलैःप्रचलिष्यंतिदेशेदेशेपृथक्पृथक् २८

तेषुदुष्टेषुप्रभवमानेषुऐश्वर्यवत्सुअभाविनः विनाशभाजः बहुरूपिणः चातुराश्रम्यभाजः ॥ २० ॥ प्रधानपुरुषईश्वरस्तदाश्रयास्तद्भक्ताःकथायोगेनैवनतुतादृशाचारेण ॥ २१ करंडानंकरीषाणामितिप्रांचःस्नानसामग्रीभाजनानांवंशमयानामितिवा ॥ २२ ॥ २३ ॥ निःसारेनिर्धनेनिष्क्रियेसंध्योपासनादिहीनेव्यंतरस्थितेसर्ववर्णसाम्येनास्थिते ॥ २४ ॥ २५ ॥ २६ ॥ उद्देशतःस्वल्पतः ॥ २७ ॥ मंडलैःसंघशः ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ निम्नेषुगिरिदर्यादिषुस्थित्वाबीजानांआकृतिंग्राम्यारण्यधान्यानांस्वरूपंज्ञातुंभोक्तुंचईहंतइच्छंतःतत्रतत्प्रापणक्षमं अजैडकंपालयिष्यंति गंधारकाश्मीरादौस्थितास्तुखरोष्ट्रमितिभेदः ॥ ३६ ॥ पक्केति अद्यप्रस्थौदनंगृहीत्वाश्वःसपादगुणंदेहीतिव्यवहरंतेइत्यर्थः ॥ ३७ ॥ समूलांतरसंवृतैः मूलधनेनसहितस्यअंतरस्यकलाद्रव्यस्यसंवृतानिसंसरणानिअपलापास्तैःनिमित्तभूतैः यथाकांतैस्तनूरुहैःकलहायमानाव्यवहरंतितथोत्तमवर्णाधर्मेणापणंतआसतइतिपूर्वेणान्वयः

स्वदेशेभ्यःपरिभ्रष्टानिःसाराःसहबंधुभिः ॥ नराःसर्वेभविष्यंतितदाकालपरिक्षयात् २९ तदास्कंधेसमाधायकुमारान्विद्रुताभयात् ॥ कौशिकींप्रतरिष्यंतिनराःक्षुद्भयपीडिताः ३० अंगान्वंगान्कलिंगांश्चकाश्मीरानथमेकलान् ॥ ऋषिकांतागिरिद्रोणीःसंश्रयिष्यंतिमानवाः ३१ कृत्स्नंवाहिमवत्पार्श्वंकूलंचलवणांभसः ॥ अरण्येषुचवत्स्यंतिनराम्लेच्छगणैःसह ३२ नैवशून्यानचाशून्याभविष्यतिवसुंधरा ॥ गोप्तारश्चाप्यगोप्तारःप्रभविष्यंतिशस्त्रिणः ३३ मृगैर्मत्स्यैर्विहंगैश्चश्वापदैःसर्पकीटकैः ॥ मधुशाकफलैर्मूलैर्वर्तयिष्यंतिमानवाः ३४ चीरंपर्णंचबहुलंवल्कलान्यजिनानिच ॥ स्वयंकृतानिवत्स्यंतियथामुनिजनास्तथा ३५ बीजानामाकृतिंनिम्नेष्वीहंतःकाष्ठशंकुभिः ॥ अजैडकंखरोष्ट्रंचपालयिष्यंतियत्नतः ३६ नदींस्रोतांसिरोत्स्यंतितोयार्थेकूलमाश्रिताः ॥ पक्वान्नव्यवहारेणविपणंतःपरस्परम् ३७ तनूरुहैर्यथाजातैःसमूलांतरसंवृतैः ॥ बह्वपत्याःप्रजाहीनाःकुललक्षणवर्जिताः ३८ एवंभविष्यंतितदामनुष्याःकालकारिताः ॥ हीनाद्धीनंतदाधर्मंप्रजाःसमनुवत्स्यंति ३९ आयुस्तत्रचमर्त्यानांपरंत्रिंशद्भविष्यति ॥ दुर्बलाविषयग्लानारजसासमभिप्लुताः ४० भविष्यतितदातेषांरोगैरिंद्रियसंक्षयः ॥ आयुःप्रक्षयसंरोधाद्विषादःप्रभविष्यति ४१ शुश्रूषवोभविष्यंतिसाधूनांदर्शनेरताः ॥ सत्यंचप्रतिपत्स्यंतिव्यवहारोपसंक्षयात् ४२ भविष्यंतिचकामानामलाभाद्धर्मशीलिनः ॥ करिष्यंतिचसंकोचंस्वपक्षक्षयपीडिताः ४३ एवंशुश्रूषवोदानेसत्येप्राणाभिरक्षणे ॥ चतुष्पादःप्रवृत्तश्चधर्मःश्रेयोभिपत्स्यते ४४ तेषांलब्धानुमानानांगुणेषुपरिवर्तताम् ॥ स्वादुकिंन्वितिविज्ञायधर्मएवंवदिष्यति ४५ यथाहानिःक्रमात्प्राप्तातथावृद्धिःक्रमाद्गता ॥ प्रगृहीतेयतोधर्मेप्रपत्स्यंतिकृतंयुगम् ४६ साधुवृत्तंकृतयुगेकषायेहानिरुच्यते ॥ एकएवतुकालःसहीनवर्णोयथाशशी ४७

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ संकोचंदुराचारस्येतिशेषः ॥ ४३ ॥ एवंशुश्रूषादिपादचतुष्टयेप्रवृत्तः धर्मः यतः श्रेयः प्रशस्ततरंअहिंसादिधर्मंप्रपत्स्यते ॥ ४४ तेषांश्रेयःप्रपन्नानांलब्धानुमानानांअन्वयव्यतिरेकाभ्यांनिर्ज्ञातधर्माधर्मफलानांमध्येगुणेषुशब्दादिविषयेषुवापरिवर्तनंरमणंस्वादुकिमुतधर्मइतिसंदिह्यविज्ञायतत्त्वंनिश्चित्यएवंवक्ष्यमाणंजनोवदिष्यति ॥ ४५ ॥ तदेवाह यथेति यतःउक्तनिश्चयात् ॥ ४६ ॥ ४७ ॥

यथाशशीतिदृष्टांतंविवृणोति छन्नइति तथाकालइत्यनुकृष्यते ॥ ४८ ॥ सकलशास्त्ररहस्यंसंगृह्णाति अर्थेतिद्वाभ्यां परंब्रह्मयत् तत्अर्थवादः सत्यस्यैवार्थस्यकथनंतत्वभूतस्य
कीटभृंगन्यायेनध्यानक्रिययाभवनं तदेवचवेदार्थइत्युक्तं तमितिविधेयापेक्षंपुंस्त्वं सिद्धस्यैवालाभेदृष्टंतमाह अनिर्णिक्तमिति मलिनंपिण्यंस्वर्णपिंडं स्वर्णत्वेनाविज्ञायदरिद्रो

स्मीतिमन्यते तस्यमलापगमेतुधनवानहमितिनिश्चिनोत्येवंब्रह्मापिप्रत्यगनन्यत्वेनावधार्यते ॥ ४९ ॥ इष्टेति तपोधर्मःवर्णाश्रमयोग्यःसचइष्टवादःस्वर्गाद्यभीष्टकथनं यतस्तपः
स्थावरंअनादिअव्यभिचारिफलकृतंशास्त्रोनिश्चितम् ततश्चगुणैःदेहादिभिः कर्माभिनिर्वृत्तिः कर्मसिद्धिर्भवति कर्मणाचतथ्येनसत्येन गुणाःदेहादयइहकर्मभ्योमुक्तिर्नास्ति अतो

छन्नोहितमसासोमोयथाकलियुगेतथा ॥ पूर्णश्चतमसाहीनोयथाकृतयुगेतथा ४८ अर्थवादःपरंब्रह्मवेदार्थइतितंविदुः ॥ अनिर्णिक्तमविज्ञातंदायाद्यामि
वधार्यते ४९ इष्टवादस्तपोनामतपोहिस्थावरंकृतम् ॥ गुणैःकर्माभिनिर्वृत्तिर्गुणास्तथ्येनकर्मणा ५० आशीस्तुपुरुषंदृष्ट्वादेशकालानुवर्तिनी ॥ युगेयुगे
यथाकालमृषिभिःसमुदाहृता ५१ इहधर्मार्थकामानांदेवतानांप्रतिक्रिया ॥ आशिषश्चशुभापुण्यास्तथैवायुर्युगेयुगे ५२ यथायुगानांपरिवर्तनानिचिरंप्रवृ
त्तानिविधिस्वभावात् ॥ क्षणंनसंतिष्ठतिजीवलोकःक्षयोदयाभ्यांपरिवर्त्तमानः ५३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिचतुर्थोऽध्यायः ॥ ४ ॥
॥ सूतउवाच ॥ इत्येवमाश्वासयतोराजानंजनमेजयम् ॥ अतीतानागतंवाक्यमृषेःपरिषदाश्रुतम् १ अमृतस्येवसंवाहःप्रभाचंद्रमसोयथा ॥ अतर्पयतत
च्छ्रोत्रंमहर्षेर्वाङ्मयोरसः २ धर्मकामार्थसंयुक्तंकरुणंवीरहर्षणम् ॥ रमणीयंतदाख्यानंकृत्स्नंपरिषदाश्रुतम् ३ केचिदश्रूणिमुमुचुःश्रुत्वादध्युस्तथापरे ॥
इतिहासंतमृषिणापाणाविवनिदर्शितम् ४ सदस्यान्सोभ्यनुज्ञायकृत्वाचापिप्रदक्षिणाम् ॥ पुनर्द्रक्ष्यामइत्युक्त्वाजगामभगवानृषिः ५ अनुजग्मुस्त
दासर्वेप्रयांतमृषिसत्तमम् ॥ लोकेप्रवदतांश्रेष्ठंयेविशिष्टास्तपोधनाः ६ यातेभगवतिव्यासेतदाब्रह्मर्षिभिःसह ॥ ऋत्विजःपार्थिवाश्चैवप्रतिजग्मुर्यथाग
तम् ७ पन्नगानांसुघोराणांकृतानांवैरयातनाम् ॥ जगामरोषमुत्सृज्यराजाविषमिवोरगः ८ होत्राग्निदीप्तशिरसंपरित्रायचतक्षकम् ॥ आस्तीकोथाश्रमप
दंजगामसमहामुनिः ९ राजापिहास्तिनपुरंजगामस्वजनावृतः ॥ अन्वशासच्चमुदितस्तदाप्रमुदिताःप्रजाः १०

शरीरंब्रह्माश्रयेदित्यर्थः द्वावेतौपुष्करप्रादुर्भावस्यसूत्रभूतौश्लोकौ ॥ ५० ॥ आशीःएकस्मादेवकर्मणः फलप्राप्तिस्तत्तद्युगीयपुरुषाणांश्रद्धादितारतम्यात्तारतम्येनभवतीत्यर्थः ५१ ॥ 
इहभौमप्रतिक्रियाफलम् तथैवतारतम्येनेत्यर्थः ॥ ५२ ॥ यथेतिउत्तरार्धेतथेतिपूरणीयम् ॥ ५३ ॥ ॥ इतिश्रीहरिवंशेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ इत्येवम् ॥ १ ॥
संवाहःप्रवाहः ॥ २ ॥ आख्यानंभारतम् ॥ ३ ॥ दध्युः ध्यानंकृतवंतः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ होत्राणांसंबंधिनोधिष्ण्याग्नयस्तैर्दीप्तशिरसम् ॥ ९ ॥ १० ॥

॥ ११ ॥ संज्ञप्तंमारितंसंविवेशतत्समीपेउपविष्टा ॥ १२ ॥ मिश्रीवभूवमिथुनीबभूव ॥ १३ ॥ असंज्ञप्तःमरणप्राप्तःमअब्रवीद्राजा ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

कस्यचित्त्वथकालस्यसराजाजनमेजयः ॥ दीक्षितोवाजिमेधेनविधिवद्भूरिदक्षिणः ११ संज्ञप्तमश्वंतत्रास्यदेवीकाश्यावपुष्टमा ॥ संविवेशोपगम्याथविधिदृष्टेनकर्मणा १२ तांतुसर्वानवद्यांगींचकमेवासवस्तदा ॥ संज्ञप्तमश्वमाविश्यतयामिश्रीबभूवसः १३ तस्मिन्विकारेजनितेविदित्वातत्त्वतश्वतत् ॥ असंज्ञप्तोयमश्वस्तेध्वंसेत्यध्वर्युमब्रवीत् १४ अध्वर्युर्ज्ञानसंपन्नस्तदिंद्रस्यविचेष्टितम् ॥ कथयामासराजर्षेःशशापसपुरंदरम् १५ ॥ ॥ जनमेजय उवाच ॥ ॥ यद्यस्तिमेयज्ञफलंतपोवारक्षतःप्रजाः ॥ फलेनानेनसर्वेणब्रवीमिश्रूयतामिदम् १६ अद्यप्रभृतिदेवेंद्रमजितेंद्रियमस्थिरम् ॥ क्षत्रियावाजिमेधेननयक्ष्यंतीतिशौनक १७ ऋत्विजश्चाब्रवीत्क्रुद्धःसराजाजनमेजयः ॥ दौर्बल्यंभवतामेतद्यदयंधर्षितःक्रतुः १८ विषयेमेनवस्तव्यंगच्छध्वंसहबांधवैः ॥ इत्युक्तास्तत्यजुर्विप्रास्तंनृपंजातमन्यवः १९ अमर्षादन्वशासच्चपत्नीशालागताःस्त्रियः ॥ राजापरमधर्मज्ञस्तामसोजनमेजयः २० असतींवपुष्टमामेतांनिर्यातयतमेगृहात् ॥ ययामेचरणौमूर्ध्निपातितौरेणुगुंठितौ २१ शौंडीर्यंमेययाभग्नंयशोमानश्चदूषितः ॥ नचैनांद्रष्टुमिच्छामिपरिक्लिष्टामिवस्रजम् २२ नस्वादुसोऽश्नातिनरःसुखंस्वपितिवारहः ॥ अन्वास्तेयःप्रियांभार्यांपरेणमृदितामिह २३ पुनर्नैवोपभुंजंतिश्वावलीढंहविर्यथा ॥ एवमुच्चैःप्रभाषंतंक्रुद्धंपारीक्षितंनृपम् ॥ गंधर्वराजःप्रोवाचविश्वावसुरिदंवचः २४ ॥ विश्वावसुरुवाच ॥ त्रियज्ञशतयज्वानंवासवस्त्वांनमृष्यते ॥ अप्सरास्तेनपनीतेविहितेयंवपुष्टमा २५ रंभानामप्सरादेवीकाशिराजसुतामता ॥ सैषायोषिद्वराराजन्रत्नभूतानुभूयताम् २६ यज्ञोविवरमासाद्यविघ्नमिंद्रेणतेकृतम् ॥ यज्वाह्यसिकुरुश्रेष्ठसमृद्धयावासवोपमः २७ बिभेत्यभिभवाच्छक्रस्तवक्रतुफलैर्नृप ॥ तस्मादावर्तितश्चैवक्रतुरिंद्रेणतेविभो २८ मायैषावासवेनेहप्रयुक्ताविघ्नमिच्छता ॥ क्रतोर्विवरमासाद्यसंज्ञप्तंदृश्यवाजिनम् २९ रतमिंद्रेणरंभायांमन्यसेयांवपुष्टमाम् ॥ अथतेगुरवःशप्तास्त्रियज्ञशतयाजिनः ३० भ्रंशितस्त्वंचविप्राश्चबलादिंद्रसमादिह ॥ त्वत्तश्चैवसुदुर्धर्षास्त्रियज्ञशतयाजिनः ३१ बिभेतिहिसदात्वत्तोब्राह्मणेभ्योपिवासवः ॥ एकेनैवतदुभयंतीर्णंशक्रेणमायया ३२ सएषसमहातेजाविजिगीषुःपुरंदरः ॥ कथमन्यैरनाचीर्णंनप्तुर्दारान्विक्रमेत् ३३ ॥ विश्वावसुरुवाच ॥ यथैवहिपराबुद्धिःपरोधर्मःपरोदमः ॥ यथैवपरमैश्वर्यंकीर्तितंहरिवाहने ॥ तथैवत्वयिदुर्धर्षेत्रियज्ञशतयाजिनि ३४

॥ १९ ॥ अन्वशासत्आज्ञप्तवान् ॥ २० ॥ आज्ञामेवाहअसतीमिति ॥ २१ ॥ शौंडीर्यंमाहात्म्यम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ आवर्तितः विघ्नितः ॥ २८ ॥ २९ ॥ तेत्वया ॥ ३० ॥ ३१ ॥ ३२ ॥ नप्तुः पौत्रस्य अविक्रमेदित्यत्राविरित्युपसर्गःअइतिनिपातोवा ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ अदुष्टाःअल्पदोषाइत्यर्थः ॥ ३८ ॥ परामृष्टाप्यसंसक्तादूषिताप्यदूषितेत्यर्थः ॥ ३९ ॥ ४० ॥ इतिह० भवि० टी० पंचमोऽध्यायः ॥ ५ ॥
मिथ्याव्यतिशंकितात्मानिर्निमित्तंदूषिताचित्तः ॥ १ ॥ २ ॥ ३ ॥ विधिविहितमितिपादेऽक्षरत्रयाधिक्यमार्षम् ॥ ४ ॥ ५ ॥ ६ ॥ वटादुत्पन्नंफलंवटांतरंवर्धयतितथाव्या

मावासवंमाचगुरुमात्मानंमावपुष्टमाम् ॥ गच्छदोषेणकालोहिसर्वथादुरतिक्रमः ३५ ऐश्वर्येणाश्वमाविश्यदेवेंद्रेणासिरोषितः ॥ आनुकूल्येनदेवस्यव र्तितव्यंसुखार्थिना ३६ दुस्तरंप्रतिकूलंहिप्रतिस्रोतइवांभसः ॥ स्त्रीरत्नमुपभुंक्ष्वेमामपापांविगतज्वरः ३७ अपापास्त्यज्यमानावैत्यजेगुरपियोषितः ॥ अदुष्टास्तुस्त्रियोराजन्दिव्यास्तुसविशेषतः ३८ भानोःप्रभाशिखावह्नेर्वेदीहोत्रेतथाहुतिः ॥ परामृष्टाप्यसंसक्तानोपदुष्यंतियोषितः ३९ ग्राह्यालालयि तव्याश्चपूज्याश्चसततंबुधैः ॥ शीलवत्योनमस्कार्याःपूज्याःश्रियइवस्त्रियः ४० ॥ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपंचमोऽध्यायः ५ ॥
॥ सौतिरुवाच ॥ एवंसविश्वावसुनानुनीतःप्रसादमागम्यवपुष्टमायाः ॥ चकारमिथ्याव्यतिशंकितात्माशांतिंपरांमानवधर्मदृष्टाम् १ श्रममभिविनिव र्तमानसंसःसमभिलषज्जनमेजयोयशःस्वम् ॥ विषयमनुशशासधर्मबुद्धिर्मुदितमनारमयन्वपुष्टमांताम् २ नहिविरमतिविप्रपूजनान्नचविनिवर्ततियज्ञदा नशीलात् ॥ नविषयपरिरक्षणाच्च्युतो भून्नचपरिगर्हतितांवपुष्टमांच ३ विधिविहितमशक्यमन्यथाहियदृषिरचिंत्यतयापुराब्रवीत्सः ॥ इतिसनृपतिरा त्मवांस्तदासौतदनुविचिंत्यबभूववीतमन्युः ४ इदंमहाकाव्यमृषेर्महात्मनःपठन्नृणांपूज्यतमोभवेन्नरः ॥ प्रकृष्टमायुःसमवाप्यदुर्लभंलभेच्चसर्वज्ञफलंचके शवम् ५ शतक्रतोःकल्मषविप्रमोक्षणंपठन्निदंमुच्यतिकल्मषान्नरः ॥ तथैवकामांन्विविधान्समश्नुतेह्यवाप्तकायश्चचिरायनंदति ६ यथाहिपुष्पप्रभवंफलं द्रुमाःफलात्प्रजायंतिपुनश्चपादपाः ॥ तथामहर्षिप्रभवाइमागिरःप्रवर्द्धयंतेतमृषिंप्रवर्द्धिताः ७ पुत्रानपुत्रोलभतेसुवर्चसश्च्युतःपुनर्विंदतिचात्मनःस्थिति म् ॥ व्याधिंनचाप्नोतिचिरंसबंधनंक्रियांचपुण्यांलभतेगुणान्वितः ८ पतिमभिलभतेचसत्सुकन्याश्रवणमुपेत्यशुभामुनेस्तुवाचः ॥ जनयतिचसुतान्गुणैरुपे तान्स्वजनहितेद्विषतांप्रमर्दनंच ९ विजयतिवसुधांचराजवृत्तिर्धनमतुलंलभतेद्विषज्जयंच ॥ विपुलमपिधनंलभेच्चवैश्यःसुगतिमियाच्छ्रवणाच्चशूद्रजातिः ॥ १० पुराणमेतच्चरितंमहात्मनामधीत्यबुद्धिंलभतेचनैष्ठिकीम् ॥ विहायदुःखानिविमुक्तसंगःसवीतरागोविचरेद्वसुंधराम् ११ इत्येतदाख्यानमुदाहृतंवैप्र तिस्मरंतोद्विजमंडलेषु ॥ स्थैर्येणधैर्येणपुनःस्मरंतःसुखंभवंतोऽनुचरंतुलोकम् १२ इतिचरितमिदंमहात्मनामृषिकृतमद्भुतवीर्यकर्मणाम् ॥ कथितमिदं हिसमासविस्तरैःकिमपरमिच्छसिकिंब्रवीमिते १३

सादुत्पन्नोयंग्रंथस्तुव्यासमेववर्धयतीत्याश्चर्यमितिभावः ॥ ७ ॥ बंधनंसंसारंक्रमेणमुच्यतइत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ इच्छसिश्रोतुमितिशेषः ॥ १३ ॥

॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोर्नीलकंठस्यकृतौभारतभावदीपेहरिवंशांतर्गतभविष्यांतर्ग्रंथार्थप्रकाशटीकायांषष्ठोऽध्यायः ॥ ६ ॥
श्रीः ॥ श्रीमद्गोपालमानम्यव्याकुर्वेपुष्करोद्भवम् ॥ ख्यातश्चतुर्धरःशिक्षानयप्रणयसंयमैः ॥ १ ॥ उत्तानेषुनकोशविग्रहवलंपद्येषुयत्राश्रितंगंभीरेषुनसेतवोनविहिताःकूटाननस्फोटिताः ॥ नच्छिन्नानतमश्वराननततिर्भक्ताननाह्लादितानोदीनाश्चविभीषणानविहिताःश्रीलक्ष्मणार्यश्रितैः ॥ २ ॥ करुयंबकमृतेकालकूटाभंपुष्करोद्भवम् ॥ कंठेकर्तुंक्षमोलोकेकामजित्पुरुषोत्तमः ॥ ३ ॥ तत्रतावदिह वक्तुमर्हसिधर्मज्ञयशोनारायणात्मकमितिनतस्यशेकश्चन तस्यनाममहद्यशःतस्मिन्यशोनिहितंविश्वरूपमितिश्रुतिप्रसिद्धस्यनारायणात्मकस्ययशःशब्दितस्यवक्तव्यत्वेनोपक्रमात् अधीत्यसर्वमध्यात्मंदेवलोकेमहीयतइत्युपसंहारेणचास्यकृत्स्नस्यवाक्यसंदर्भस्यषड्विंशत्यध्यायसंमितस्यब्रह्मपरत्वंनिश्चीयते यत्त्विहजगदुद्भवादिकमुक्तंतत्फलवत्संनिधावफलंतदंगमितिन्यायेनमहावाक्यंप्रतिपाद्यब्रह्माद्वैतप्रतिपत्त्यर्थमेवयेचात्रएकार्णववदैवासुरादिशब्दास्तेपियथा अजामेकांलोहितशुक्लकृष्णां द्वासुपर्णासयुजासखाया इत्यादिश्रुतिषुमेषोशकुन्यादिवृत्तांतकथनमुखेनब्रह्मतत्त्वंनिरूपितं तथानिर्विशेषचिन्मात्रशमकामादिचेतोवृत्तिविशेषपरतयाव्याख्येयाः सलिलएकोद्रष्टाद्वैतोभवति द्वयमाह प्राजापत्यादेवाश्चासुराश्चेत्यादिश्रुतिष्वपि अनयैवभंग्याब्रह्मतत्त्वनिरूपणदर्शनात् एवंचैकार्णवादिशब्दानांसलिलादिश्रुतिसमानार्थ

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिभविष्यांतर्ग्रंथार्थप्रकाशोनामषष्ठोऽध्यायः ॥ ६ ॥

॥ जनमेजयउवाच ॥ प्रभावंपद्मनाभस्यस्वपतःसागरांभसि ॥ पुष्करेवैयथोद्भूतादेवाःसर्षिगणाःपुरा ॥ १ ॥

त्वेनतयोर्मूलमूलिभावेसंभवतिखंडप्रलयपरतयातद्व्याख्यानसत्स्वप्याकाशादिषुजलधातुमात्रस्यसद्भावसंभावात्तत्पौर्वापर्यविरोधादुपेक्ष्यम् एवंचात्र एकार्णवंविशुद्धाचित् विष्णुरव्याकृतंनभः ॥ पुष्करंद्विविधंकार्यंशनकानौसुरासुरौ ॥ अनयैवदिशाध्यात्ममाधिदैविकरूपकैः ॥ निरूपितंपुराणेषुपूर्वेष्वपिनसंशयः ॥ पुष्करंपुष्करप्रादुर्भावेतदिहदृश्यते ॥ अतस्तद्व्याख्ययासर्वपुराणंव्याकृतंभवेत् ॥ विद्याधिकारावगतावश्वमेधादिकेष्विह ॥ इंद्रवृत्रादयःशब्दाआत्ममोहपराः कृताः ॥ अत्रापिब्रह्मणस्तद्वत्पारोक्ष्येणनिरूपणं ॥ चक्रेदुर्जनचोरेभ्यस्तत्त्वरत्नंसुरक्षितुम् अनयैवदिशावेदेज्ञेयंवृत्रवधादिकम् ॥ इत्याशयेनभवान्व्याख्यत्पारोक्ष्यतत्परम् ॥ पुष्करप्रादुर्भावेध्यात्मविद्यास्वरूपेणाधिदैविकादिरूपकेणचदर्शितांयथा तिव्याकुर्मः तत्रपूर्वंभविष्ये संसारिणामत्युल्बणांगतिंश्रुत्वाअत्यंतमुद्विग्नस्तरतिशोकमात्मविदितिश्रुतेर्नान्यःपंथाविद्यतेऽयनायेतिश्रुतेश्चात्मज्ञानादन्यच्छ्रेयःसाधनमपश्यन्तदेवसविस्तरंजिज्ञासमानोजनमेजयउवाच प्रभावंपद्मनाभस्येत्यादि पद्मनाभस्यप्रभावमाख्याहीतिसंबंधः पद्मंकृत्स्नकार्यप्रपंचःसनाभौगर्भेयस्यसः मायोपाधिरीश्वरः तस्यप्रभावंसृष्ट्यादिसामर्थ्यंकथयेत्यर्थः किंभूतस्यपद्मनाभस्य सागरांभसिस्वपतः सागरवदनंतंअपारंचअंभइवांभःएकरसं महद्भूतमनंतमपारंसलिलएकोद्रष्टाद्वैतोभवतीत्यादिश्रुतिप्रसिद्धंब्रह्मनतुप्राकृतसमुद्रांभः नष्टानलानिलेलोकेनष्टाकाशमहीतले इतिवाक्यशेषेतत्कारणस्योक्तादरपिना

शेतदवस्थानायोगात् तस्मिन्सागरांभसिशुद्धंब्रह्मणिस्वपतःस्वमपीतोभवति तस्मादेनंस्वपितीत्याचक्षतइतिस्वपितिनामनिर्वचनात्ईश्वरग्रासस्तुरीयतुरीयः अव्यक्तंपुरुषेब्रह्मनि ष्कलेसंप्रलीयतइतिश्रुतिस्मृत्योरीश्वराव्यक्तशब्दितस्यमायाविनःशुद्धेलयोपलंभात्स्वंनिजंमायाततिरूपंपततिगच्छतीतिस्वपन्तस्यस्वपतइतियोगेनानिष्कलेब्रह्मणिकैवल्येसमा धीवालीयमानस्यमायाविनःप्रभावंब्रूहीतिमुख्यःप्रश्नः पुष्करेब्रह्मांडेदेवाऋषयश्चकथमुत्पन्नाइतिवा व्योमपुष्करमंबरमितिपुष्करशब्दस्यव्योमवाचित्वेनव्योमपर्यायाणांचप्रायेण खंब्रह्मअमृतंदिविपरमेव्योमन्नित्युपनिषत्स्वव्याकृताकाशेप्रसिद्धेः पुष्कराख्येतस्मिन्देवर्षयः इंद्रियप्राणाः सूत्रात्मेतियावत्कथमुत्पन्नइतिद्वितीयःप्रश्नः ॥१॥ योगंसूत्रे संशुद्धाना मधिगमोपायंआख्याहीतितृतीयःप्रश्नः॥२॥नोव्योमापरोयत् ॥ तस्मादव्यक्तमुत्पन्नं त्रिगुणंद्विजसत्तमेतिश्रुतिस्मृत्योर्विशेषणीभूतमायातिरोधानप्रादुर्भावाभ्यां सृष्टेःप्रागूर्ध्वंचतद्धे तोर्मायाविनःस्थितिकालावधिंपृच्छति कियंतमितिस्थित्वेतिशेषः शयतेतिलुडंतं शयनंकारिष्यतीत्यर्थः कियताचैवकालेनसशेतेइतिपाठेतुमहानपिकालोभोगलुब्धानांअ ल्पएवेत्यभिप्रेत्यवर्तमानसामीप्येवर्तमानवद्वेति शेतेइतिलट्प्रयुक्तः तृतीयंपृष्ट्वाचतुर्थंपृच्छतिकिमर्थमिति कालस्यसंभवोयोनिःसन् कालेकिमर्थंशेतेपरिमितकालावेवसृष्टिप्र

एतदाख्याहिनिखिलंयोगंयोगविदांपते ॥ शृण्वतस्तस्यमेकीर्तिंनतृप्तिरभिजायते २ कियंतंचैवकालंवैशयितापुरुषोत्तमः ॥ किमर्थंशयतेकालंतस्यका लस्यसंभवः ३ कियताचैवकालेनप्रबुध्यतिसुराधिपः ॥ कथमुत्थायभगवानसृजन्निखिलंजगत् ४ केप्रजापतयस्तातआसन्पूर्वंमहामुने ॥ कथंनिर्मित वांश्चैवचित्रंलोकंसनातनः ५ एवमेकार्णवेलोकेनष्टेस्थावरजंगमे ॥ नष्टेदेवासुरगणेप्रनष्टोरगराक्षसे ६ नष्टानलानिलेलोकेनष्टाकाशमहीतले ॥ केवलं गह्वरीभूतेमहाभूतविपर्यये ७

लयौकुतःकरोति प्रवाहनित्यांवासृष्टिंकुतोनकरोतीत्यर्थः कालमितिद्वितीयाऽत्यंतसंयोगे शयतइतिशपोऽलुगार्षः श्रयतइतिपाठः स्वच्छः स्वपतेइतिपाठेस्वपितीत्यर्थः आत्म नेपदंचार्षम् ॥ ३ ॥लयकालावधिंपृच्छतिकियतेति एवंकियंतमित्यादिनासार्धश्लोकेनस्वपतइतिप्रथमश्लोकपदार्थंविविच्यपृष्ट्वा यथोद्भूताइत्यपितथैवपृच्छतिसार्धेनकथमिति कूटस्थस्याद्वितीयस्यकथमुपादानत्वंयुज्येतेत्यर्थः ॥ ४ ॥ एतदेवाह सनातनः सर्वदैकरूपः कूटस्थइत्यर्थः ॥ ५ ॥ अद्वितीयत्वमाह एवमितिद्वाभ्याम् एकार्णवेशुद्धचिन्मा त्रे लोकेआत्मानमेवलोकमुपासीतेत्यात्मनिलोकशब्दस्यश्रौतप्रसिद्धेः लोकेनष्टइत्यधिकरणेसप्तम्यौ चिदात्मनिस्थावरादावदर्शनंगतेसतीत्यर्थः ॥ ६ ॥ एतेनयोगमाख्याहीति तृतीयप्रश्नेयोगशब्दार्थोविवृतः एतदेवोपसंहरतिकेवलमिति गह्वरंनैधंटुकप्रसिद्ध्याकाशंनशून्यमितितेनलक्ष्यते गह्वरमितित्रिविधभेदशून्यत्वाद्गह्वरीभूतेइत्यभूततद्भावार्थस्यच्वेः प्रयोगः शून्यतुलांदधतइत्युक्तंश्रीभागवतेवेदस्तुतौ महाभूतानिवियदादीनितेषांविपर्ययःप्रलयोयस्मिंस्तस्मिन्नेकार्णवेसतीत्यर्थः ॥ ७ ॥

१ किमर्थं च तथा शेते कश्चकालस्य संभवइति एकस्मिन् लिखितपुस्तके पाठः ।

प्रभुरिति प्रभुश्चिदात्माकांविधिंनियतिं भाग्यंस्त्रीनियतिर्विधिरितिसाहचर्याद्विधिशब्दस्यस्त्रीत्वम् प्रभुःकिमदृष्टरूपंसहायमादायआश्रित्यमहाभूतपतिर्वियदादिस्रष्टाईशःमहा तेजाइतिसमष्टिस्तैजसःसूत्रात्मामहाततिरितिअत्यंतविस्तृतोविराट्चभूत्वाआस्ते सुराःमहदाद्यास्तेषांगुरुरीशःतस्यापिश्रेष्ठइतिविभोर्विशेषणम् ॥ ८ ॥ अध्यारोपापवादाभ्यां निष्प्रपंचंप्रपंच्यतइतिन्यायमाश्रित्यहिब्रह्माद्वैतंप्रसाध्यम् तत्राध्यारोपस्यैवदुर्वचनत्वादनुपपन्नं त्वयाचअसकृत्तदेवोपपादितमतःसंशयाविष्टस्यमेनिःसंशयंज्ञानंयथास्यात्तथावक्तु मर्हसीत्याह तन्मेत्वमिति उपपन्नाययोग्याय यशोनारायणात्मकं नरोविद्यावच्छिन्नंब्रह्मतेनस्वात्मनिकल्पितं ईशसूत्रविराडंतंनारंतस्यसमूलस्यअयनंस्थानंनारायणः शुद्धंवस्तु तदात्मकंयशःवैभवविलासःईशादिघटांतःतंवक्तुमर्हसीतिसंबंधः अशेर्देवनेयुद्धेतिअशेरसुन्प्रत्ययेयुट् एतेनअनंतरोबाह्यःकृत्स्नःप्रज्ञानघनइतिश्रुतिप्रसिद्धंसबाह्याभ्यंतरंशुद्धं चिन्मात्रंनारायणरूपमितिसर्वत्रश्रुतंतदुपपत्तिपूर्वकंव्युत्पादयेतिसूचितम् ॥ ९ ॥ भूतंविद्वदृष्ट्यानित्यासिद्धप्रादुर्भावंअधिष्ठानातिरेकात्मूढदृष्ट्याभव्यंउत्पद्यमानम् श्रद्धाविद्यते येषांतेश्राद्धाः प्रज्ञाश्रद्धार्चाभ्योणइतिमत्वर्थीयोणः ॥ १० ॥ प्रष्टारंप्रोत्साहयन्वैशंपायनउवाच नारायणायेति हेअनघहेकुरुकुलर्षभ नारायणात्मकयशोज्ञानेयाभवतःस्पृहा

प्रभुर्महाभूतपतिर्महातेजामहाततिः ॥ आस्तेसुरगुरुश्रेष्ठोविधिमादायकांमुने ८ तन्मेत्वमुपपन्नायब्रह्मन्नेतदसंशयम् ॥ वक्तुमर्हसिधर्मिष्ठयशोनारायणा त्मकम् ९ प्रादुर्भावंपुरस्कृत्यभूतंभव्यंमहात्मनः ॥ श्राद्धानामुपविष्टानांभगवान्वक्तुमर्हसि १० ॥ वैशंपायनउवाच ॥ नारायणयशोज्ञानेयाभवेद्भवतः स्पृहा ॥ त्वद्वंशानघपूतस्यकार्यंकुरुकुलर्षभ ११ शृणुष्वादिपुराणेभ्योदेवताभ्योयथाश्रुति ॥ ब्राह्मणानांचवदतांश्रुतोस्माभिर्महात्मनाम् १२ तथाच तपसादृष्टोबृहस्पतिसमद्युतिः ॥ पाराशर्यस्ततःश्रीमान्गुरुर्द्वैपायनोब्रवीत् १३ तत्तेहंसंप्रवक्ष्यामियथाप्रज्ञंयथाश्रुतम् ॥ नविज्ञातुंमयाशक्यमृषिमात्रेण भारत १४ कःसमुत्सहतेज्ञातुंपरंनारायणात्मकम् ॥ विश्वात्मनोयंब्रह्मापिनवेदयतितत्त्वतः १५

भवेत्सात्वद्वंशात्वद्वंशेउचिताविभक्तधनेषुभ्रातृषुविभक्ताइतिवदुत्तरपदलोपः सास्पृहापूतस्ययज्ञाद्यनुष्ठानस्यकार्यंफलं तमेवंवेदानुवचेननब्राह्मणाविविदिषंतियज्ञेनदानेनतपसा नाशकेनेतिश्रुतेः भूतस्येतिपाठेलब्धजन्मनइदमेवकार्यंकरणीयंयद्भगवद्विचारोऽन्यथानिष्फलंजन्मेत्यर्थः ॥ ११ ॥ श्रुतिंउपनिषद्वाक्यंअनतिक्रम्येतियथाश्रुति श्रुतः पद्म नाभस्यप्रभावइतिपृष्टस्यविशेष्यस्यानुकर्षः ॥ १२ ॥ तपसापुण्येनदृष्टोमयेतिशेषः दृष्ट्वेतिपाठेतपसाध्यानेनदृष्ट्वापद्मनाभस्यप्रभावमितिपूर्ववत्पृष्टानुकर्षः ॥ १३ ॥ तत्तेहं यद्देवतादिभ्यः श्रुतंयच्चद्वैपायनेनोक्तंतद्बाहुल्यात्सर्वंबोद्धुमशक्यमित्याशयेनाह यथाप्रज्ञमिति यथाश्रुतंविज्ञातुंविशेषेणज्ञातुंमयानशक्यं ऋषिर्मंत्रद्रष्टातन्मात्रेण सोऽहंभग वतोमंत्रविदेवास्मिनात्मविदितिछांदोग्येसनत्कुमारंप्रतिवदतानारदेनेवेत्यर्थः ॥ १४ ॥ परंपुरुषंनारायणात्मकंशुद्धचिदात्मकंयंपुरुषंब्रह्मापिवेदोपिविश्वात्मनःसाकल्यात्सर्वा त्मनामुख्यवृत्त्येतियावत्नवेदयते यतोवाचोनिवर्ततइतिश्रुतेःकात्स्न्येंननवेदयतेकिंतुभागलक्षणयातुवेदयतइवेत्यर्थः ॥ १५ ॥

श्रुतंमेमयाविश्वेषांदेवानांमहार्षिणांचहूस्वत्वमार्ष यद्रहस्यंगोप्यंतत् इदंइदमेवयत्त्वयापृष्टंनारायणात्मकंयशः कीदृशानांविश्वेदेवानांतत्वतअनारोपितरूपेणसर्वदेवआत्मैवयेषां तेसर्वदेवास्तेषांसर्वंखल्विदंब्रह्मेदंसर्वंयदयमात्मेतिश्रुतेःअतएवकृपयाशिष्यान्प्रतितत्त्ववादिनांतत्त्वमेववक्तुंशीलंयेषांतेषाम् ॥१६॥ कारणंप्रवर्तकं यत्तद्दैवंदेवानांविदुषामिदंदैवंअ धिअधिकंदैवंमहाभाग्यंज्ञानाख्यं यद्देवानांदैवंतदश्ववैतदाप्तवानिति एषास्यपरमासंपादितिश्रुतेः तद्वस्तुदैवमदृष्टमितिसंज्ञितम् सर्वेषांसुखकरंभाग्यम् एतस्यैवानंदस्यान्यानिभूतानि मात्रामुपजीवंतीतिश्रुतेः ॥ १७ ॥ अध्यायशेषेणअनुवादमुखेनप्रश्नानांक्रमेणसंक्षिप्योत्तराण्याह यद्भूतमित्यादिना भूतंअनादिअनादित्वंव्यवहारेमायायामप्यस्तीत्यतउक्तं अधि भूतंसर्वेषुतेषु सद्रूपेणानुस्यूतम् अनंतमित्यर्थः जाड्यरूपेणमायापिसर्वत्रानुस्यूतेत्यतउक्तंपरमितिमहर्षिणां महर्षीणांज्ञेयतयेतिशेषः परमुत्कृष्टंजडस्यपरत्वायोगात्परत्वंमायोपा धिक्येप्यस्तीत्यतउक्तंसत्यमितिमाययाबाधितत्वेनतस्यापिबाधितत्वादसत्यत्वंसत्यमप्यचिद्रूपंचेत्तत्राहदेवदृष्टंदेवश्चक्षुरादिप्रत्यक्षंतस्यापिदृष्टंप्रत्यक्षं नदृष्टेर्द्रष्टारंपश्येप्राणस्यप्राणमुत चक्षुषश्चक्षुरित्यादिश्रुतेः ज्ञानमात्रस्वरूपमित्यर्थः वेदंसत्यंज्ञानमनंतंब्रह्मेत्यादि विदंतितेवेदाविदोविदुः एतेनसागरांभोरूपंशुद्धमुक्तं १८ अस्यतटस्थलक्षणमाह यइति कर्ताबियदादेः

श्रुतंमेविश्वदेवानांयद्रहस्यंमहर्षिणाम् ॥ तदिदंसर्वदेवानांतत्त्वतस्तत्त्ववादिनाम् १६ तदध्यात्मविदांचिंत्यंकारणंचैवकर्मिणाम् ॥ अधिदैवंचयद्दैवंतद्दैव मितिसंज्ञितम् १७ यद्भूतमाधिभूतंचयत्परंचमहर्षिणाम् ॥ यत्सत्यंदेवदृष्टंचयत्तद्वेदविदोविदुः १८ यःकर्ताकारकोबुद्धिर्मनःक्षेत्रज्ञएवच ॥ प्रधानंपुरुषः शास्ताएकस्तदाभिशब्द्यते १९ कालःकालंस्वपयतिद्रष्टास्वाधीनएवच ॥ प्राणःपंचविधश्चैवध्रुवमक्षयएवच २० उच्यतेविविधैर्भावैस्तस्यैवानघतत्परैः ॥ सएवभगवान्सर्वंकरोतिविकरोतिच २१ योऽस्मान्कारयतेकर्मतेनास्मव्याकुलीकृताः ॥ यजामहेतमेवेशंतमेवेच्छामनिर्वृताः २२

कारकोहिरण्यगर्भद्वाराभौतिकस्य बुद्धिर्मनः इतिमहदहंकाररूपत्वमुक्तम् क्षेत्रज्ञइति साक्षिमात्रेणद्रष्टृत्वं एतेनपद्मनाभप्रभावउक्तः उक्तेर्थे भोक्ताभोग्यंप्रेरितारंच मत्वासर्वंप्रोक्तंत्रिवि धंब्रह्मएतदितिश्रुतिंप्रमाणयन्योगमाह प्रधानमिति प्रधानंजडम् पुरुषोजीवः शास्ताईशः एतात्रितयंएकएवपरमात्मेति ॥ १९ ॥ तृतीयंप्रश्नोत्तरंकियंतमित्यादिनासार्धश्लोके न ईश्वरस्यकालाधीनत्वंचोदितंतन्निराचष्टेऽर्धेन कालइति कालंस्वपयतिस्वापयति कालस्यापिकालइत्यर्थः अतएवस्वाधीनोनतुकालाधीनः कथमुत्थायेत्यादिनासार्धेनकार्यसृष्टिः पृष्टातत्रोत्तरमाह प्राणइत्यादिनासार्धद्वयेन ॥ २० ॥ हेअनघ यत् ध्रुवंअविनाशिअतएवअक्षयः ह्रासशून्यः सएवप्राणवृत्तिभेदेनपंचविधः तत्परैःप्राणोपास्तिपरैः विविधैर्भावैः प्राणादिकार्यभेदैर्हेतुभिरुच्यते सएवचसर्वंवियदादिकरोत्युत्पादयतिकिमुपादानांतरमपेक्ष्य नेत्याह विकरोतिचमाययैवात्मानंपरिणमयतीत्यर्थः ॥ २१ ॥ योस्मान्कर्मकारय तेएषह्येवसाधुकर्मकारयतीत्यादिश्रुतेः तेनैवचवयंव्याकुलीकृताः विधिनिषेधगहनेपातिताःसंतःआस्मआस्महे अनुदात्तत्वलक्षणमात्मनेपदमनित्यंचाक्षिङोङित्करणात्ज्ञाप कात् तेनआसउपवेशनेअस्मात्परस्मैपदेपिआस्मेतिसाधु यतस्तेनव्याकुलीकृताः अतस्तमेवयजामहेयज्ञैःइच्छाम प्रार्थनायांलोडुत्तमबहुवचनं निर्वृता शांताःसंतः ॥ २२ ॥

सर्वंचिन्मात्रमेवेत्याहद्वाभ्यां योवक्तेति वक्तावाचःप्रवर्तकःवक्तव्योऽर्थः अहंवक्तृत्वाभिमानोजीवः यत्इदंशृणुतश्रवणक्रिया यत्श्रेयोमोक्षःयच्चान्यत्स्वर्गादिप्रवृत्तनानाविकल्परूपं ॥ २३ ॥ कथाःभूतार्थवादाःगह्वराःरहस्यप्रतिपादकाः विश्वंपाल्यंविश्वपतिःपालकः देवाःकरणानिसर्वंतत्नारायणात्मकमितिवःयुष्मान्प्रतिब्रवीमीतिसंबंधः ॥ २४ ॥ एतदेवोपसंहरति यत्सत्यमिति सत्यानृतेलौकिके आदिमंआदौभवंकारणंक्षरंचकार्यंतदुभयात्मकंभूतंअतीतंमिथश्चभवतिपरस्परजनकंबीजांकुरादि भविष्यमनागतं चरंपारिणामि अचरंकूटस्थंवारिष्ठःनारायणःवरीयान्ईशःवरःसमष्टिजीवःअपरोव्यष्टिजीवःकल्पितानेतानपेक्ष्यवरिष्ठत्वंशुद्धस्यप्रभोरितिभावः ॥ २५ ॥ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांपुष्करप्रादुर्भावप्रकाशेसप्तमोऽध्यायः ॥७॥ ज्ञानसाधवैराग्यसिद्धयेपुत्तिकादिवत् ॥ ब्रह्मादेःक्षयितांवक्तुंयुगमानमिहोच्यते १ चत्वारीतितावच्छतीचतुःशतीद्विगुणाअष्टौशतानियुगसंध्या तस्यांपूर्वोत्तरयुगयोर्धर्मामिश्रीभवंतीत्यर्थः एतानिदेवमानेनअष्टशताधिकानिचत्वारिसहस्राणि सौरमानेनसाष्टाविंशतिसहस्रीसप्तदशलक्षीवत्सराणांभवति सावनमानेन तुप्रत्यब्दंपंचदिनानिपंचदशघटिकाएकत्रिंशत्पलानित्रिंशदक्षराणिचवर्धंते तान्यपिएकराशौसंवत्सरत्रयस्पृशिगुरौलुप्तसंवत्सरैर्हीयंते ॥ १ ॥ तत्रेति धर्मपादाःतपःशौचंदयास

**योवक्तायश्चवक्तव्योयश्चाहंतद्ब्रवीमिवः ॥ इदंशृणुतयच्छ्रेयोयच्चान्यत्परिजल्पथ २३ याःकथाश्चैववर्तंतेश्रुतयोवोथगह्वराः ॥ विश्वंविश्वपतिर्देवाःसर्वंनारायणात्मकम् २४॥यत्स्यत्स्यंयदनृतमादिमक्षरंवैयद्भूतंभवतिमिथश्चयद्भविष्यम् ॥ यत्किंचिच्चरमचराव्ययंत्रिलोकेतत्सर्वंपुरुषवरःप्रभुर्वरिष्ठः २५॥ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपुष्करप्रादुर्भावेसप्तमोऽध्यायः ७ ॥ ॥ ८ ॥ वैशंपायनउवाच ॥ ॥ चत्वार्याहुःसहस्राणिवर्षाणांतुकृतंयुगम् ॥ तस्यतावच्छतीसंध्याद्विगुणाजनमेजय १ तत्रधर्मश्चतुष्पादोह्यधर्मःपादविग्रहः ॥ स्वधर्मनिरताःसंतोयजंतेचैवमानवाः २ स्थिताधर्मपराविप्राराजवृत्तेःस्थितानृपाः ॥ कृष्यामभिरतावैश्याःशूद्राःशुश्रूषवस्तथा ३ सदासत्यंतपश्चैवधर्मश्चैवविवर्धते ॥ सद्भिराचरितंयच्चक्रियतेख्यायतेचयत् ४**

त्यंतैर्विग्रहोविरोधोस्मयसंगमदानृतपादवतोयस्यसपादविग्रहोऽधर्मः धर्मेणनिरुद्धपादइत्यर्थः यद्वा सर्वंयुगंचतुष्पादमपिसंध्यांशेउत्तरयुगधर्मसंक्रमात्पंचपादंभवतीतिध्येयं तेनाधर्मःपादविग्रहः द्वाभ्यामधर्मपादाभ्यांत्रिभिर्धर्मोव्यवस्थितइत्यादिग्रंथोऋज्वर्थएव एवमपिसंध्यायांपादार्धस्यैवसंक्रमात्सर्वंयुगंसार्धचतुष्पादंस्यात्इदमपियुगंतत्संध्ययोःकालबहुत्वाल्पत्वाभ्यांनयुक्तं पादाधिक्योक्तेःपुराणांतरविरोधादध्यात्मप्रकरणाच्चैवमिहतोप्रतिमः फलाभिसंधिनारहितोहिंसाशून्योधर्मःकृतम् तत्सहितस्त्रेता दंभेनकृतोद्वापरम् धर्मलोपः कलिःतत्रआद्येफलेच्छाभावेपिकृतोधर्मः तद्यथा आम्रेफलार्थंनिर्मितेच्छायागंधइत्यनूत्पद्येते एवंधर्मंचर्यमाणमर्थाअनूत्पद्यंतइत्यापस्तंबोक्तेः फलंददात्येवतत्रचहीनसंपत्पुरुषोबहुसंपदमन्यंदृष्ट्वास्वस्यानैश्वर्यमन्वानोदुःखभाग्भवतीति कृतेप्यधर्मरूपंदुःखमस्तीत्युक्तंकृतेप्यधर्मःपादविग्रहइतिकृत्स्नधर्माधर्मनिर्मूलनक्षमंतत्वज्ञानमेवसंपादनीयमित्याशयेन २ ॥ ३ ॥ ख्यायतेउपदिश्यतेऽन्येभ्यः ॥ ४ ॥

॥५॥ त्रीणीतिषट्शताधिकत्रिसाहस्त्रींत्रेतायुगमानम् एवमुत्तरत्रापिज्ञेयम् ॥६॥७॥ धर्मलौल्येनधर्मफलस्पृहया अतएवचातुर्वर्ण्यस्यचतुर्वर्णधर्मस्यवैकृत्यात्वैकल्यात् ॥८॥९॥ ॥१०॥११॥१२ ॥ द्वापरेयुगपर्ययेद्वापरांतेकलिसांकर्याद्व्रतादित्यज्यतइत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ मन्वंतरमिति एतावताकालेनैकोमनुर्नपश्य तीत्यर्थः ॥ १९ ॥ अत्रमानमाह त्रय्यामिति तद्यथेहकर्मचितोलोकःक्षीयते एवमेवामुत्रपुण्यचितोलोकःक्षीयतइत्यादौवेदेपिजनस्यस्थावरादिब्रह्मांतस्यक्षयित्वंदृश्यतइत्यर्थःन

एतत्कृतयुगेवृत्तंसर्वेषामेवभारत ॥ प्राणिनांधर्मबुद्धीनामपिचेन्नीचयोनिनाम् ५ त्रीणिवर्षसहस्राणित्रेतायुगमिहोच्यते ॥ तस्यतावच्छतीसंध्याद्विगुणा परिकीर्तिता ६ द्वाभ्यामधर्मःपादाभ्यांत्रिभिर्धर्मोव्यवस्थितः ॥ तत्रसत्यंचसत्त्वंचकृतेसर्वंप्रवर्तते ७ त्रेतायांविकृतिंयांतिवर्णालौल्येनसंयुताः ॥ चातुर्व र्ण्यस्यवैकृत्याद्यांतिदौर्बल्यमाश्रिताः ८ एषत्रेतायुगविधिर्विहितोदेवनिर्मितः ॥ द्वापरस्यापियाचेष्टातामपिश्रोतुमर्हसि ९ द्वापरंद्वेसहस्रंतुवर्षाणांकुरुस त्तम ॥ तस्यतावच्छतीसंध्याद्विगुणापरिकीर्तिता १० तत्राप्यर्थपराविप्राज्ञानिनोरजसावृताः ॥ शठानैष्कृतिकाःक्षुद्राजायंतेकुरुपुंगव ११ द्वाभ्यांधर्मः स्थितःपद्भ्यामधर्मस्त्रिभिरुत्थितः ॥ विपर्ययंशनैर्यांतिकृतेयेधर्मसेतवः १२ ब्राह्मण्यभावानश्यंतितथास्तिक्यंविशीर्यते ॥ व्रतोपवासास्त्यज्यंतेद्वापरेयुग पर्यये १३ तथावर्षसहस्रंतुवर्षाणांद्विशतेतथा ॥ संध्ययासहसंख्यातंक्रूरंकलियुगंस्मृतम् १४ तत्राधर्मश्चतुष्पादःस्याद्धर्मःपादविग्रहः ॥ कामनिष्ठास्तम श्छन्नाजायंतेतत्रमानवाः १५ नैवोपवासकृत्कश्चिन्नचसाधुर्नसत्यवाक् ॥ आस्तिकोब्रह्मवक्तावानरोभवतिवैतदा १६ अहंकारगृहीताश्चप्रक्षीणस्नेहबांध वाः ॥ विप्राःशूद्रसमाचाराःशूद्रास्त्वाचारलक्षणाः १७ दूषकास्त्वाश्रमाणांचवर्णानांचैवसंकराः ॥ अगम्येष्वभिरंस्यंतेवर्तंत्येवंकलौयुगे १८ एवंद्वादश साहस्रंतदेकंयुगमुच्यते ॥ तदेकसप्ततिगुणंमन्वंतरमिहोच्यते १९ त्रय्यांचैवनसंदेहोयुगांतेजनमेजय ॥ दिव्यंद्वादशसाहस्रंयुगंतुकवयोविदुः ॥ एतत्सह स्रपर्यंततदहोब्राह्ममुच्यते २० ततोहनिगतेतस्मिन्सर्वेषामेवदेहिनाम् ॥ शरीरनिर्वृतिंदृष्ट्वालोकःसंहारबुद्धिमान् २१ देवतानांचसर्वेषांब्राह्मणानांमहीपते दैत्यानांमानवानांचयक्षगंधर्वरक्षसाम् २२ देवर्षीणांब्रह्मर्षीणांतथाराजर्षिणामपि ॥ किन्नराणामप्सरसांभुजंगानांतथैवच २३ पर्वतानांनदीनांचपशूनां चैवभारत ॥ तिर्यग्योनिगतानांचसत्त्वानांमृगपक्षिणाम् २४ महाभूतपतिर्देवःपंचभूतानिभूतकृत् ॥ जगत्संहरणार्थायकुरुतेवैशसंमहत् २५

संदेहः यत्कृतकंतदनित्यमितिव्याप्तेरित्यर्थः ॥ २० ॥ शरीरनिर्वृतिं शरीरसुखासक्तिम् ॥२१॥ ब्रह्मणोवेदस्यवेधसोवा ब्राह्मणानांमहीपतेइतिपाठःब्रह्मलोकस्थानांदहराद्युपास्य ब्रह्मविदाम् ॥२२॥२३॥२४॥ भौतिकसंहारमुक्त्वाभूतसंहारमपिनिश्चाययति महाभूतपतिरितिपंचभूतानिवियदादीनिजगद्भौतिकंचसंहरणार्थायैवकुरुतेनपुरुषार्थाय मश कादिवत्सववस्तुनाशायैवजायतेनकश्चित्किंचित्कस्यचित्सुखमस्तीत्यर्थःअतएवमहद्वैशसंबीभत्समेतदितिशेषः ॥ २५ ॥

॥ वैशसत्वमेवाह ॥ भूत्वेति दिनावसानेहिभगवान्सूर्योभूत्वालोकानांचक्षुरादीनिमुष्णातिततोवायुर्भूत्वाप्राणान्मुष्णाति ततोवह्निर्भूत्वाशुष्ककर्पूरकल्पांस्तान्निःशेषीकरोति ततोमेघोभूत्वावृष्ट्याचैकार्णवंसंपद्यतेएवंभूलयेसतिजलादीन्यपिब्राह्मलयेस्वस्वयोनौलीयंतइतिबोध्यम् नष्टाकाशइत्याकाशांतनाशस्योपक्रांतत्वात् ॥ २६ ॥ इतिश्रीह०भवि० टीकायांअष्टमोऽध्यायः ॥ ८ ॥ सर्वंद्दश्यंविनाशीतिज्ञात्वानाशविवर्जितं ॥ पदंनेतुंविनेयान्हितृतीयोयोगउच्यते ॥ १ ॥ भूत्वेति योगीनारायणःशुद्धचिन्मात्रएवसन् विभावसुः वह्निरिवासंगोपिसप्तमूर्तिःमहदहंकारपंचतन्मात्राशरीरोभूत्वाप्रदीप्ताभिश्चैतन्योद्दीपिताभिर्गभस्तिभीरश्मिरूपाभिस्तत्तदाकारवृत्तिभिःप्रकाशितान्सागरान्समुद्रवदनंतान्रूपादीन् विषयान्संशोषयतिस्वस्मिन्प्रविलापयति ॥ १ ॥ विराट्प्रविलापनमुक्त्वासूत्रात्मनस्तदाहपीत्वेति नदीकूपसद्दशान्मानसान्कामान्संशोषयतीत्यनुषज्यते तद्वत्पर्वतानांपर्वततुल्यानांकामक्रोधादीनांसलिलंसामर्थ्यंरश्मिभिःप्रत्यक्प्रवणैश्चेतःपरिणामैःपीत्वाविलाप्य ॥ २ ॥ एवंमहींस्थूलसूक्ष्मशरीरद्वयरूपांसहस्रशोभित्त्वासर्वथाविलाप्यरसायास्तस्याएवतलमधिष्ठानकारणं

भूत्वासूर्यश्चक्षुषीचाददानोभूत्वावायुःसंहरन्प्राणिजातम् ॥ भूत्वावह्निर्दह्यतेसर्वलोकान्मेघोभूत्वाभूयएवाभ्यवर्षत् २६ ॥ इतिश्रीम०ह०भवि०पुष्करप्रादुर्भावेप्रश्नोत्तरंनामाष्टमोऽध्यायः ॥ ८ ॥ वैशंपायनउवाच ॥ ॥ भूत्वानारायणोयोगीसप्तमूर्तिर्विभावसुः ॥ गभस्तिभिःप्रदीप्ताभिःसंशोषयतिसागरान् १ पीत्वार्णवांश्चसर्वान्सनदीकूपांश्चसर्वशः ॥ पर्वतानांचसलिलंसर्वंपीत्वाचरश्मिभिः २ भित्त्वासहस्रशश्चैवमहींनीत्वारसातलम् ॥ रसातलजलंकृत्स्नंपिबतेरसमुत्तमम् ३ अप्सुस्रजन्क्लेदमन्यद्ददातिप्राणिनांध्रुवम् ॥ तत्सर्वमरविंदाक्षआदत्तेपुरुषोत्तमः ४ वायुश्चबलवान्भूत्वासविधूयाखिलंजगत् ॥ प्राणोदयंसुराणांचवायुनाकुरुतेहरिः ॥ ततोदेवगणानांचसर्वेषामेवदेहिनाम् ५

ब्रह्मतत्प्रतितांनीत्वातत्रत्यमापिजलंअपहतपाप्मत्वादिसंकल्पांतंगुणजातंउत्तमंमानुषानंदादिभ्यउत्कृष्टतमंपिबतेसंशोषयति ॥ ३ ॥ अप्सुकारणेब्रह्मणिस्थितंक्लेदंमनसो मृदूकरणंआनंदंअन्यत्कार्यंसृजन्स्रक्ष्यन्प्राणिषुध्रुवंददाति यत्सुखंकार्योपाधिष्वनिदधातिजीवनायतदपिवृत्तिरूपत्वात्संहरतीत्यर्थः तदेवस्पष्टीकरोतितत्सर्वमिति ॥ ४ ॥ एवमुत्तमाधिकारिणांमनोमात्रसाधनंयोगमभिधायमध्यमानांवायुनिरोधपूर्वकंतमेवाह वायुश्चेतिसयोगीबलवान्मूलाधारादिसर्वचक्रभेदनसमर्थोभूत्वाअखिलंजगत्पादादिजानुपर्यंतंभूस्थानमित्यादिनातंत्रोक्तदिशाभावनयास्वशरीरमात्रीकृतंविधूय अधोधस्तनस्यउपर्युपरितनेप्रविलापनप्रकारेणनिरस्य प्राणोदयंप्राणानांपंचानांसुराणामिंद्रियाणांचउदयंउत्क्रूर्ध्वंसहस्रारेभ्रूमध्येवाअपनयनंगमनंहरिर्योगीवायुनाविजितेनकुरुते एतदेवविस्तरेणाह ततइत्यादिना देवगणानांचसंघर्षजःपावकःनिखिलान्लोकानदहदितिषष्ठेनान्वयःततोयोगप्रवृत्त्यनंतरंदेवानामग्न्यादीनांचदेहिनांजीवांतराणांएतेनमदन्योमुमुक्षुर्नास्तीत्यपियोगिनाचिंतनीयम् अन्यथाभेदस्याविलयान्मुक्त्यसिद्ध्यापत्तिःस्यात् ॥ ५ ॥

येचान्येचेति यतोद्भवाःयतइंद्रियाण्येषांविषयाणामुद्भवस्तेयतोद्भवाःसंधिराषः तान्यैवेंद्रियाणितदुद्भूतांश्चाहपूयमिति पूयंगंधाख्योविषयः रसादिसाहचर्याद्घ्राणमिंद्रियंशरीरंस्थू
लंच एतेगुणाःगुणकार्यभूताःपृथिवीमाश्रिताः ॥ ६ ॥ रसश्चार्द्रःरसनेंद्रियम् क्लेदःपृथिव्यवयवांतःप्रवेशेनतस्याःशिथिलीकरणम् विपाकोविकृतिःओदनादिरूपा ॥ ७ ॥ श
१० ब्दःश्रोत्रंछिद्रदानंचाकाशंसंश्रिता गुणाइत्यपिद्रष्टव्यम् तएतेसर्वेपिपरमेष्ठिनंसूत्रात्मानंवरेण्यंअवश्यंउपास्यतयावरणीयंहृषीकेशंहृषीकाणामिंद्रियाणांईशितारंसम्यगाश्रिताः
॥ ८ ॥ ततस्तंसंप्राप्यभगवतांतर्यामिणाकर्त्रातत्रसूत्रेमिलिताःसंतःरश्मिभिःसूक्ष्माभिर्वृत्तिभिः परिवारिताश्चैतेदेवगणेंद्रियगणादयःवायुनाकरणेनकृष्यमाणाः रूपेतिलुप्तशेषंपदं
रूपादयःअन्योऽन्यस्यएकीभावेनाश्रयात् ॥ ९ ॥ तेषांरूपादीनांसंघर्षजश्चासौउद्भूतश्चयःपावकोजगत्कारणाद्वैतवस्तुप्रकाशाग्निर्निखिलाँल्लोकान्तत्तत्कर्मफलभूतानदहत्कर्म
णामेवदाहात् ॥ १० ॥ स्वरूपेणापिलोकदाहमाह सपर्वतानित्यादिना ॥ ११ ॥ आश्रयणीयानिदहराद्युपास्यरूपाणिसर्वेषांमनोमात्रत्वात्तद्दाहेनदाहइतिभावः असतो

खेचेंद्रियगणाःसर्वेयेचान्येचयतोद्भवाः ॥ पूयंघ्राणंशरीरंचपृथिवीमाश्रितागुणाः ६ जिह्वारसश्चक्लेदश्चसंश्रिताःसलिलंगुणाः ॥ रूपंचक्षुर्विपाकश्चज्योतिरे
वाश्रितागुणाः ७ स्पर्शःप्राणश्चचेष्टाचपवनंसंश्रितागुणाः ॥ परमेष्ठिनंवरेण्यंचहृषीकेशंसमाश्रिताः ८ ततोभगवतातत्ररश्मिभिःपरिवारिताः ॥ वायुना
कृष्यमाणाश्चरूपान्योऽन्यसमाश्रयात् ९ तेषांसंघर्षजोद्भूतःपावकःशतधाज्वलन् ॥ अदहन्निखिलाँल्लोकानुग्रःसंवर्तकोनलः १० सपर्वतांस्तरून्गुल्माल्ल
तावल्लीस्तृणानिच ॥ विमानानिचदिव्यानिपुराणिविविधानिच ११ आश्रमांश्चतथापुण्यान्दिव्यान्यायतनानिच ॥ यानिचाश्रयणीयानितानिसर्वाणिसो
दहत् १२ भस्मीभूतांस्ततःसर्वाँल्लोकाँल्लोकगुरुर्हरिः ॥ भूयोनिर्वापयामासजलयुक्तेनकर्मणा १३ सहस्रदृङ्महातेजाभूत्वाकृष्णोमहाघनः ॥ दिव्यतोये
नहविषातर्पयामासमेदिनीम् १४ ततःक्षीरनिकाशेनस्वादुनापरमांभसा ॥ शिवनपुण्येनमहीनिर्वाणमगमत्परम् १५

धिमनोसृजतमनःप्रजापतिमसृजतप्रजापतिःप्रजाअसृजतत्द्वाइदंमनस्येवपरमंप्रतिष्ठितंयदिदंकिंचेतिश्रुतेः ॥ १२ ॥ एवंसमाधौसकारणस्यकार्यस्यप्रलयमुक्त्वाव्युत्थानेतदुत्पत्ति
माहचतुर्भिः भस्मीभूतानित्यादिभिः हरिर्योगीनिर्वापयामास भोक्तृभोग्यंकल्पितवान्केनकर्मणा भोगायारब्धेनसंचितक्रियमाणयोर्दाहाश्लेषस्यतदाधिगमउत्तरपूर्वाघयोरश्ले
षाविनित्यायसिद्धत्वात् जलयुक्तेनकारणीभूताविद्यासंस्कारशेषेण भूयश्चांतेविश्वमायानिवृत्तिरितिज्ञानेपियावद्देहपातंमायालेशानुवृत्तेर्दर्शनात् ॥ १३ ॥ विषयभेदात्सहस्रंदृष्ट
योयस्यससहस्रदृक् महातेजाःपरंज्योतिरूपःकृष्णःकर्षकःसंहर्ताभूत्वामहाघनइवजगदंकुरस्रष्टापिभवति तदेवाह दिव्येनतोयेनचिच्चंद्रमंडलात्प्रसृतेनभावनामृतेनहविषाविशुद्धे
नतर्पयामासमेदिनींशरीरम् व्युत्थानेआदौशरीरंचेतनयाव्याप्तमित्यर्थः ॥ १४ ॥ क्षीरंसत्त्वंस्वच्छत्वात्तन्निकाशेनचित्तसत्त्वाकारेणपरमांभसाचैतन्यामृतेन महीशरीरद्वयंनिर्वा १०
णंशांतिअगमत्योगिनोहिस्थूलशरीरंनिर्वातिनतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरमितिश्रुतेः सूक्ष्ममपिनिर्वातितत्रकोमोहःशोकएकत्वमनुपश्यतइतिश्रुतेश्च ॥ १५॥

अस्यदृष्ट्याबाह्यमपिसर्वंचिन्मात्रमेवेत्याह तेनगाइति येपूर्वंपरमार्थत्वेनगृहीतास्तेनगाः पर्वतवृक्षादयःजलसंछन्नाश्वितावगुंठिताः किंच सर्वतोंतर्बहिश्चपयसाश्वितएवधराः धर्तारः सैंधवघनवच्चिद्घनाएवेत्यर्थः तदेवाह एकार्णवजलाभूत्वेति अतएवसर्वसत्त्वविवर्जिताः सर्वस्यवियदादेःसत्त्वंसत्तातद्रहिताः ब्रह्मसत्तैवसर्वत्रानुस्यूतानवियदादिषुपृथक्सत्तास्तीत्य र्थः जगत्पश्यन्नपिद्विचंद्रवद्बाधितत्वेनैवपश्यतीतिभावः ॥ १६ ॥ योगस्यमुख्यंफलंशुद्धात्मदर्शनमाहत्रिभिः महाभूतानोति तंयोगिनंसूक्ष्मेशुद्धेवस्तुनिस्थितमितिशेषःकीदृशेसू क्ष्मेनष्टाअदर्शनंगताअर्कादयोयस्मिन्नष्टार्कपवनाकाशे अतएवमहाभूतानितंप्रविष्टानितत्रैवलीनानीत्यर्थः ॥ १७ ॥ एवमुक्तप्रकारेणसंशोषयित्वाविषयेषुप्रविभक्तंप्रज्ञानंप्रत्याहृत्यपी त्वानिर्विशेषेप्रविलाप्य किमपीतिवाङ्मनसातीतत्वंसूचितम् ॥ १८ ॥ तदेवाहएकार्णवेतियोगंदुःखसंयोगवियोगंउपागतःप्राप्तः अयुतानांअपृथक्भूतानांरज्ज्वादिभ्यइवोरगादीनां आत्मन्यध्यस्तानांवियदादीनांसहस्राणिवृत्तिभेदादनंतानिएकार्णवेंभसिशुद्धेब्रह्मणिगतानिप्राप्तानिविलीनानीत्यर्थः नायंमृदिघटस्येवानिवृत्तिरूपोलयः किंतु रज्ज्वामहेरिवेति

तेनगाजलसंछन्नापयसःसर्वतोधराः ॥ एकार्णवजलाभूत्वासर्वसत्त्वविवर्जिताः १६ महाभूतान्यपिचतंप्रविष्टान्यमितौजसम् ॥ नष्टार्कपवनाकाशेसूक्ष्मेज नविवर्जिते १७ संशोषयित्वापीत्वाचवसत्येकःसनातनः ॥ पौराणंरूपमास्थायकिमप्यमितबुद्धिमान् १८ एकार्णवजलेह्यासीद्योगीयोगमुपागतः ॥ अ युतानांसहस्राणिगतान्येकार्णवेंभसि ॥ नचैनंकश्चिदव्यक्तंव्यक्तंवेदितुमर्हति १९ ॥ जनमेजयउवाच ॥ एकार्णवविधिःकोयंयश्चैवपरिकीर्तितः ॥ कए षपुरुषोनामकिंयोगःकश्चयोगवान् २० ॥ वैशंपायनउवाच ॥ एतावंतमसौकालमेकार्णवविधिंप्रति ॥ करिष्यतीमंभगवानितिकश्चिन्नबुध्यते २१ नवै मातानचद्रष्टानज्ञातानैवपार्श्वगः ॥ ततोवज्ञायतेकश्चिद्दतेतंदेवमीश्वरम् २२

भावः नचैनमितिव्यक्तमितिक्रियाविशेषणम् बुद्धिवृत्तेरपिलीनत्वादेनंप्रत्यंचंनकश्चिज्जानातीत्यर्थः ॥ १९ ॥ संक्षेपेणश्रुतंयोगंविस्तरेणश्रोतुमिच्छुर्जनमेजयउवाच एकार्णववि धिरिति विधिरवधिः दैनंदिनादिप्रलयवदात्यंतिकप्रलयस्यापिकश्चित्कालावधिरस्तीतिप्रश्नः सतितस्मिन्स्वतएवकैवल्यंसेत्स्यति किंसाधनानुष्ठानैः संशोषदाहपानादिभिरितिभा वःयएषइतिपूर्वोक्तंज्ञानसाध्यंप्रलयंपरामृशति नप्राकृतंदैनंदिनंवा एकएवपुरुष एकार्णवोनाम किंयोगः किंरूपोयंयोगोजतुकाष्ठवत्सलिलसैंधववियव्यवद्रज्जूरगवद्वा कश्चयोगवा न्जीवः संबंधिनः संबंधस्यचयोगाख्यस्यकिंस्वरूपमितिप्रश्नत्रयंपूर्वेणसहचतुष्टयम् ॥ २० ॥ क्रमेणोत्तराणिवैशंपायनउवाच एतावंतमिति इमंएकार्णवविधिंएकार्णवनियतिं एतावंतंकालंप्रतिप्रतीक्ष्यकरिष्यतिभगवानितिकश्चिन्नबुध्यते इतरवज्ज्ञानैकसाध्यस्यमहाप्रलयस्यकालावधिर्नास्त्यतःसाधनमनुष्ठेयमेवेत्यर्थः ॥ २१ ॥ एकएवपुरुषोनामेत्य स्योत्तरमाह नमाताप्रमाताअहंकारशून्यत्वात्साक्ष्यभावाच्च नद्रष्टासाक्षीवृत्तेरपिविलयान्नज्ञाताचरमांतःकरणवृत्त्याब्रह्मविद्याख्ययाप्रत्यंचंविषयीकुर्वन् अतएवनपार्श्वगोनतटस्थः

प्रत्यगात्मरूपत्वात् ॥ किंरूपोयोगइत्यस्योत्तरमाह ततइति ततस्तस्यामवस्थायांयथाजतुकाष्ठसंयोगेषुत्रयमपिपृथग्दृश्यते यथावाजलसैंधवरसौएकलोलीभूतौपृथक्त्वेनानुमी येतेतथानतत्रतमृतेऽन्यत्ज्ञायतेरज्ज्वामिवसर्पबाधेतदतिरिक्तमित्यर्थः ॥ २२ ॥ कश्चयोगवानित्यस्योत्तरमाह नभइति यःप्रभुर्महामुनिंशशासशयनमरोचयदितियत्त दोरध्याहारेणयोज्यम् नभआदिरूपंदेहेंद्रियादिसंघातंप्रकाशयन् स्वचैतन्येनव्याप्नुवन्ततएवव्यापनाद्धेतोः प्रजापतिंप्रजायतइतिप्रजाउपाधिस्तस्याः पतिंअध्यक्षत्वा भिमानिनंभुवनचरंचक्षुरादिद्वारासुरेश्वरंइंद्रियाणांप्रवृत्तिनिवृत्त्योः स्वतंत्रं एवंविधंजीवंसंतंवस्तुवृत्तेनपितामहंकार्यस्यपिताकारणंतस्यपिताशुद्धचैतन्यंअतएवश्रुतिनिलयं श्रुत्यै कगम्यमपिमहामुनिंमुमुक्षुजीवरूपेणमहांतंमननशीलंशशासशसुहिंसायांस्वस्वरूपेप्रविलापितवान् यःसभूः भवत्यस्मादितिभूः ईशःशयनंईशतानिरोधंअरोचयत् शुद्धएवोपा ध्यभिमानाद्बद्धःसन्योगवान्योगाधिकारीभवतीत्यर्थः ॥ २३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ यज्ञ

नभःक्षितिपवनमथप्रकाशयन्प्रजापतिंभुवनचरंसुरेश्वरम् ॥ पितामहंश्रुतिनिलयंमहामुनिंशशासभूःशयनमरोचयत्प्रभुः २३ इतिश्रीमन्महाभारतेखिले षुहरिवंशेभविष्यपर्वणिपुष्करप्रादुर्भावेनवमोऽध्यायः ९ ॥ वैशंपायनउवाच ॥ एवमेकार्णवीभूतेशेतेलोकेमहाद्युतिः ॥ प्रच्छाद्यसलिलंसर्वंहरिर्नारायणः प्रभुः १ महतोरजसोमध्येमहार्णवसमस्यवै ॥ विरजस्कोमहाबाहुरक्षरंब्रह्मयंविदुः २ आत्मरूपप्रकाशेनतपसासंवृतःप्रभुः ॥ त्रिकमास्थायकालंतुततः सुष्वापसोऽव्ययः ३ पुरुषोयज्ञइत्येवंयत्परंपरिकीर्तितम् ॥ यच्चान्यत्पुरुषाख्यंस्यात्सर्वंतत्पुरुषोत्तमः ४

रूपकतोयोगमुक्त्वातुर्येनिगद्यते ॥ मार्कंडेयसमाधिश्चतद्विघ्नेषुनिदर्शनम् ॥ एवमिति लोकेशुद्धचिदात्मनिमहाद्युतिर्महायशाःईशःसलिलकार्यंजगत्प्रच्छाद्यउपसंहृत्यशेतेशुद्धचि न्मात्ररूपेणावतिष्ठतइत्यर्थः ॥ १ ॥ एतदुपपादयितुंब्रह्मणएवबंधप्रसक्तिमाह महतइत्यादिना रजसःरजोगुणात्कार्यकर्मफलभूतस्यदेहेंद्रियादेर्मध्येदुर्लंघ्यत्वान्महार्णवसमस्य विरजस्कोदेहादिधर्मास्पर्शीमहांतौबाहूइवबाहूअक्षरब्रह्माख्यौप्रणवतत्त्वमसिवाक्यरूपौउपास्तिक्रियाप्रत्यक्त्वसाक्षात्काराभ्यांजगदुद्धारक्षमौविद्येतेयस्यतथा ॥ २ ॥ आत्मेति यंपरंब्रह्मविदुःसःसमुद्रःपरमात्मासुष्वापस्वरूपंविस्मृतवानितिसंबंधः तत्रहेतुः तपसाआलोचनेनमनोरथात्मकेनसंवृतःतिरोहितासंगरूपः कीदृशेनतपसा आत्मरूपप्रकाशेनचै तन्याभासेन अतएवत्रिकंभूतभविष्यद्वर्तमानरूपेणत्रिविधंकालंआस्थायअधिष्ठायसुष्वाप ॥ ३ ॥ एवंप्रभोरेवबंधप्रसक्तिंप्रदर्श्यतन्निवृत्त्युपायंयोगंयज्ञरूपकेणविधित्सुस्तत्प्राप्यं वस्त्वाह पुरुषोयज्ञइतिपुरुषइवपुरुषः शिरःपाण्यादिरूपकः यज्ञोयोगयज्ञप्राप्याः यत्पुरुषाख्यंपरंकीर्तितंसउत्तमःपुरुषइत्यादिश्रुतिषुयच्चान्यद्धियदादिपुरुषेणाचिदात्मनैवख्या यतेप्रकाश्यते तत्सर्वंपुरुषोत्तमः चिन्मात्रमेवतत्राध्यस्तस्यान्यस्यतदनन्यत्वादित्यर्थः ॥ ४ ॥

एवंप्राप्यमुक्त्वाप्रापकमाह येचेतियज्ञपरब्रह्मनिष्ठाः विप्राइवविप्राःरागादिशून्याःऋत्विजाः ऋतौकालात्मनिपरस्मिन्यजंतेसंगतिंकुर्वतेऋत्विजास्तपआदयः यजेःसंगतिकरणार्थात् आत्मदेहात्चित्पुरुषात्पुराभूताःअनादौसंसारेपूर्वसिद्धाः यज्ञेभ्यःयज्ञार्थमेवभूताःनपश्वादिसाधारणविषयभोगार्थंयथैतत्तथाश्रूयतांमत्तइतिशेषः ॥ ५ ॥ योगयज्ञाहर्नृत्विजःप्रस्तौतिब्राह्मणमिति अत्रकाठकेविश्वसृजांसत्रेब्रह्मब्रह्माभवत्स्वयंअमृतमेभ्यउदगायदिति ब्रह्मामृतशब्दाभ्यांवेदतदर्थौउच्येते तत्रपरममितिविशेषणादुपनिषदेवब्रह्मतत्साध्यावृत्तिरमृतसाधनत्वादमृतम् तेउभेब्रह्मोद्गातृशब्दाभ्यामिहोक्ते वक्त्रप्रभवत्वेनचतयोरंतरंगत्वमुक्तं होत्रध्वर्युसत्यꣳहहोतैषामासीत्प्राणोअध्वर्युरभवदितिश्रुत्युक्तौसत्यप्राणौताभ्यांसत्योक्तिप्राणजयौवक्त्रजावपितदुपकारकेतयाकिंचिद्बहिरंगौ एवमुत्तरत्रअक्षरयोजनास्पष्टा ब्रह्मादिचतुष्टयंवक्त्रादसृजदित्युक्त्वाब्राह्मणाछंदस्यादिचतुष्कंबाहुभ्यामसृजदित्याह बाहुभ्यामित्यादिसपादश्लोकएकंवाक्यम् ॥ ६ ॥ ब्राह्मणत्वाद्ब्रह्मवेदस्तदध्येतृत्वात्ब्राह्मणोब्राह्मणाच्छंसीनामसंप्रस्तारंप्रस्तोतारंतान्मित्रंवरुणंमैत्रावरुणसंज्ञंप्रशस्तारं प्रतिष्ठातारंप्रतिप्रस्थातारंएतैः अशꣳसब्रह्मणस्तेजःभूतꣳहप्रस्तोतैषामासीत्ऋतमेषांप्रशास्तासीत् अपानोविद्वानावृत्तःप्रतिप्रातिष्ठदध्वरइतिश्रुत्युक्तास्तेतेजोभूतऋतापानाख्योधीवलपूर्वस्मृतिस्वधर्माचरणजयानुकूलापानाख्यमूलबंधाविहिताज्ञेयाः ॥ ७ ॥ उदरादिति प्रतिहर्तृपोतृछावाकेनेष्टशब्दैःभविष्यत्प्रतिचाहरत अपचितिः

**येचयज्ञपराविप्राऋत्विजाइतिसांज्ञिताः ॥ आत्मदेहात्पुराभूतायज्ञेभ्यःश्रूयतांतदा ५ ब्रह्माणंपरमंवक्त्रादुद्गातारंचसामगं ॥ होतारमथचाध्वर्युंबाहुभ्यामसृजत्प्रभुः ६ ब्राह्मणोब्राह्मणत्वाच्चसंप्रस्तारंचसर्वशः ॥ तन्मित्रंवरुणंसृष्ट्वाप्रतिष्ठातारमेवच ७ उदरात्प्रतिहर्त्तारंपोतारंचैवभारत ॥ अच्छावाकमनोरूभ्यांनेष्टारंचैवभारत ८ पाणिभ्यामथचाग्नीध्रंसुब्रह्मण्यंचयज्ञियम् ॥ ग्रावाणमथबाहुभ्यामुन्नेतारंचयज्ञियम् ९**

पोत्रियामयजत् अच्छावाकोभवद्यशः नेष्ट्रीयामयजत्त्विषिरितिश्रुत्युक्तेषुभविष्यत्भाव्यनुसंधानंअपचितिर्देवतातिथिपूजनंयशःयशस्करमितिवदान्यत्वादित्विषिस्तपस्तेजः ॥ ८ ॥ तथाआग्नीध्रसुब्रह्मण्याग्रावशब्दोक्तग्रावस्तदुन्नेतृशब्दैःआग्नीध्राद्विदुषीसत्यंश्रद्धाहैवायजत्स्वयंवागेषांतुब्रह्मण्यासीत्ओजोभ्यष्टौद्ग्रवुंणःऊर्जानमुदवहदितिश्रुत्युक्तेषुविदुषीशास्त्रार्थोपबृंहिंकाऊहापोहकौशलवतीश्रद्धावाक् स्वाध्यायप्रवचने ओजइंद्रियजयेशौर्यंऊर्कयोगांगानामूर्जितिरित्येतेग्राह्याः ॥ यज्ञेहि ब्रह्मा ॥ १ ॥ उद्गाता ॥ २ ॥ होता ॥ ३ ॥ अध्वर्युः ॥ ४ ॥ ब्राह्मणाच्छंसी ॥ ५ ॥ प्रस्तोता ॥ ६ ॥ मैत्रावरुणः ॥ ७ ॥ प्रतिप्रस्थाता ॥ ८ ॥ प्रतिहर्ता ॥ ९ ॥ पोता ॥ १० ॥ अच्छावाकः ॥ ११ ॥ नेष्टा ॥ १२ ॥ आग्नीध्रः ॥ १३ ॥ सुब्रह्मण्या ॥ १४ ॥ ग्रावस्तोता ॥ १५ ॥ उन्नेता ॥ १६ ॥ एतेऋत्विजःएतेयोगे यथाक्रमं प्रणवः ॥ १ ॥ तदर्थभावनं ॥ २ ॥ सत्योक्तिः ॥ ३ ॥ प्राणजयः ॥ ४ ॥ धीतैक्ष्ण्यं ॥ ५ ॥ पूर्वस्मृतिः ॥ ६ ॥ आचारः ॥ ७ ॥ अपानजयः ॥ ८ ॥ भाविदुःखचिंता ॥ ९ ॥ ईशपूजा ॥ १० ॥ दानं ॥ ११ ॥ योगोत्साहः ॥ १२ ॥ सात्विकीश्रद्धा ॥ १३ ॥ वेदांतश्रवणं ॥ १४ ॥ इंद्रियशौर्यं ॥ १५ ॥ योगांगानामूर्जिती ॥ १६ ॥ श्च लक्ष्यंते ॥ ९ ॥

एवमितिएतानुपनिषदादीन्सर्वयज्ञानांचत्वारःसबीजयोगाःपंचमोनिर्बीजश्चवक्ष्यमाणास्तेषांसर्वेषांयोगयज्ञानांप्रवक्तृन्प्रापकान्जगतावित्यस्मात्तृच् ॥ १० ॥ तदेषइति सएष ऋत्विक्स्रष्टाभगवान्वेदमयोवेदप्रधानोत्रेदैकगम्यःनावेदविन्मनुतेतंबृहंतमितिश्रुतेःपुरुषःपरमात्मायज्ञेनयोगेनसम्यक्मितः प्रमितोपरोक्षीकृतः यज्ञसंमितःवेदाश्चतन्मयाःतस्यैवप्र तिपादकाःक्रियाश्चतन्मयास्तत्प्रापकाइत्यनुषज्ययोज्यम् ॥ ११ ॥ एवमुक्तःसाधनकालविशिष्टोयोगीयदाएकार्णवेचिन्मात्रेस्वापितिप्रविष्टुंयततेतदाश्चर्यंअभूत्भवति तत्रविश्वरूपद र्शनातीतानागतादिदर्शनंचेत्यादिश्रूयतेवेदसर्वंहपश्यःपश्यतियच्चान्यदिच्छन्नलभतेतदत्रगत्वाविंदतइत्यादौ अत्राख्यायिकामाह तद्यथावृत्तमित्यादिना ॥ १२ ॥ जीर्णःसर्वोपा धिप्रहाणेनप्रविलीनः मार्कंडेयंस्तौतिसार्द्धद्वयेनबह्विति ॥ १३ ॥ इतिवक्ष्यमाणप्रकारेणतीर्थनिमित्तमेवसर्वतीर्थदर्शीनदक्षिणाद्यर्थमित्यर्थः आश्रमानित्यादीनांसमाश्रितइत्यने नसंबंधः ॥ १४ ॥ १५ ॥ एवंचिन्मात्रेलीनोपिमार्कंडेयःपुनर्विनाप्युत्थानसंकल्पसुप्तवत्समाधेर्व्युदतिष्ठदित्याह मार्कंडेयइति वक्त्रात्स्वलयस्थानात् ॥ १६ ॥ एवंव्युत्थितो

एवमेवैषभगवान्षोडशैतान्जगत्पतिः ॥ प्रवक्तृन्सर्वयज्ञानामृत्विजोसृजदुत्तमान् १० तदेषवैवेदमयःपुरुषोयज्ञसंमितः ॥ वेदाश्चतन्मयाःसर्वेसांगोपनि षदक्रियाः ११ स्वपित्येकार्णवेचैवयदाश्चर्यमभूत्तदा ॥ श्रूयतेतद्यथावृत्तंमार्कंडेयोयदन्वभूत् १२ जीर्णोभगवतस्तस्यकुक्षावेवमहामुनिः ॥ बहुवर्षसह स्रायुस्तस्यैववरतेजसा १३ इतितीर्थप्रसंगेनपृथिवीतीर्थगोचरः ॥ आश्रमानपिपुण्यांश्चतीर्थान्यायतनानिच १४ देशान्राष्ट्राणिचित्राणिपुराणिविविधा निच ॥ जपहोमरतःक्षांतस्तपोघोरंसमाश्रितः १५ मार्कंडेयस्ततस्तस्यशनैर्वक्त्राद्विनिःसृतः ॥ निष्क्रामंतंनचात्मानंजानातिदेवमायया १६ निष्क्रांतस्त स्यवदनादेकार्णवमथोगतः ॥ सर्वतस्तमसाच्छन्नंमार्कंडेयोनिरीक्ष्यते १७ तस्योत्पन्नंभयंतीव्रंसंशयश्चात्मजीविते ॥ देवदर्शनसंहृष्टोविस्मयंचागमत्परम् १८ संचिंतयतिमध्यस्थोमार्कंडेयोतिशंकितः ॥ किंस्विद्धवेदियंचिंतामोहःस्वप्नोनुभूयते १९ व्यक्तमन्यतमोभावोह्येतेषांभवितामम ॥ नहीदृशमसंक्लिष्ट मयुक्तंसत्यमर्हति २०

पिअथोपुनःएकार्णवंचिन्मात्रंगतःप्रवेष्टुंप्रयत्नंकृतवान् तंचतमसाअज्ञानेनावरणविक्षेपशक्तिमताआच्छन्नंनिरीक्ष्यते अयंभावःचित्तसत्त्वंतत्त्वेप्रणिवित्सदापितत्त्वस्यतमसापिहित त्वात्तत्रविक्षेपरूपमैश्वर्यमेवावेक्षितवान्रज्वामिवसर्पमिति ॥ १७ ॥ भयंद्वैतदर्शनजंद्वितीयाद्वैभयंभवतीतिश्रुतेः आत्मजीवितेस्वरूपस्थैर्येकिंनिर्विशेषमेवस्वरूपंनित्यमुतस विशेषमितिसंशयश्चोत्पन्नः संशयच्छेदंविवेकबलेनैवकृतवानित्याहदेवेतिदेवदर्शनंशुद्धसाक्षात्कारः तेनसंहृष्टः प्राप्तानंदः विस्मयंपरंचागमत् कारणाभावेप्याकस्मिकीमंतःसृ ष्टिंदृष्ट्वेतिभावः ॥ १८ ॥ विवेकमेवाहसंचिंतयतीति मध्यस्थः निर्विशेषसविशेषान्यतरनिर्णयहीनःचिंतामनोरथःमोहइंद्रजालादिजोभ्रमःस्वप्नःप्रसिद्धः ॥ १९ ॥ एतेषामन्यतमोयंभा वोमनोविकारोनवस्तुतत्त्वमित्यर्थः तस्यैवासंभवमाह नहीति सत्यंपारमार्थिकंअयुक्तंअसंगिअसंक्लिष्टंअविद्यादिसंक्लेशशून्यंसत्ईदृशंमनोरथादिरूपंभवितुमर्हति ॥ २० ॥

१२

तत्रहेतुमाह नष्टेति महाभूतानांनाशेपिभासमानस्यचिंतादिष्वन्यतमत्वस्यैवसंभवात्कतमोलोकोयमितिचिंतितवान् ॥ २१ ॥ सएवंतत्त्वनिश्चयाभावात्संदेहनिवृत्तिंकामयमानः
स्वाराध्यांकारणोपाध्याभिमानिनींदेवतामपश्यत् तयाचप्रतिबोधितःकृतकृत्योबभूवेत्याह अपश्यदित्यादिना तोयाढ्यामितिकृष्णत्वंसूचितं महार्णवेपरमानंदे ॥ २२ ॥ जाग्रंत
मित्यार्षोनुम् ॥ २३ ॥ पुनःपूर्ववच्चिन्मात्रत्वंप्राप्तइत्याहसदेवमिति ॥ २४ ॥ सएवंभूतश्चिन्मात्रत्वमेवात्मतत्वंद्वैतंतुस्वप्नमात्रमितिसंप्रज्ञातमेवनिश्चितवानित्याहसप्रविष्टइति
॥ २५ ॥ सतथैवेति यथाव्युत्थानेतथैवसंप्रज्ञातेघटनादिकंकृतवानित्यर्थः ॥ २६ ॥ देवकुक्षिस्थान्हार्दाकाशस्थान्ईक्षतेसइतिशेषः ॥ २७ ॥ २८ ॥ २९ ॥ तत्त्वनिश्चय
स्यदुःसंपादकत्वंवक्तुंपुनर्मार्कंडेयस्यमोहमाहततःकदाचिदिति वक्त्रान्निःसृतःसमाधेर्व्युत्थितः न्यग्रोधशाखायांन्यक्नीचैःरोहतीतिन्यग्रोधःस्थूलःसंसारवृक्षःऊर्ध्वमूलमधःशाखमि

नष्टचंद्रार्कपवनेछन्नपर्वतभूतले ॥ कतमस्यादयंलोकइतिचिंताव्यवस्थितः २१ अपश्यच्चापिपुरुषंशयानंपर्वतोपमम् ॥ तोयाढ्यमिवजीमूतंमध्येमग्नंम
हार्णवे २२ तपंतमिवतेजोभिर्भास्वंतमिववर्चसा ॥ जाग्रंतमिवगांभयिाच्छ्वसंतामिवपन्नगम् २३ सदेवंप्रष्टुमायातिकोभवानितिविस्मयात् ॥ तथैववचश
नैर्भूयोमुनिःकुक्षिंप्रवेशितः २४ सप्रविष्टःपुनःकुक्षौमार्कंडेयःसुनिश्चितः ॥ तथैवचरतेभूयोविजानन्स्वप्नदर्शनम् २५ सतथैवयथापूर्वंपृथिवीमटतेपुनः ॥
पुण्यतीर्थानिपूतानिनिरीक्षाद्दिविभूतले २६ क्रतुभिर्यजमानांश्चसमाप्तवरदक्षिणेः ॥ पश्यतेदेवकुक्षिस्थान्याज्ञियाञ्छतशोद्विजान् २७ सद्वृत्तमाश्रिताःसर्वेव
र्णाब्राह्मणपूर्वकाः ॥ चत्वारश्चाश्रमाःसम्यग्यथोद्दिष्टपदानुगाः २८ वर्षाणांशतसाहस्र्यंमार्कंडेयोमहामुनिः ॥ विचरन्पृथिवींकृत्स्नांनचकुक्ष्यंतमैक्षत २९
ततःकदाचिदथवैपुनर्वक्त्राद्विनिःसृतः ॥ सुप्तंन्यग्रोधशाखायांबालमेकंनिरीक्षते ३० यथाचैकार्णवजलेनीहारेणवृतांतरे ॥ अव्यक्तभीषणेलोकेसर्वभूतविव
र्जिते ३१ सभूयोविस्मयाविष्टःकौतूहलसमन्वितः ॥ बालमादित्यसंकाशंनशक्तोत्युपसर्पितुम् ३२ सोचिंतयदथैकांतेस्थित्वासलिलसन्निधौ ॥
पूर्वदृष्टमिदंनेतिशंकितादेवमायया ३३ अगाधेसलिलस्तब्धेमार्कंडेयःप्लवन्मुनिः ॥ नशांतिंलभतेतत्रश्रमात्संत्रस्तविक्लवः ३४ तथैवभगवान्हंसोगतोयोगे
नबालताम् ॥ बभाषेमेघतुल्येनस्वरेणपुरुषोत्तमः ३५

त्युक्तेः तस्यांशाखायांएकदेशेसुप्तंअनाविष्कृतैश्वर्यंशांतंबालंस्वाराध्यमीशंचिंतयतेकस्मिन्सति ॥ ३० ॥ यथाचेतिस्रष्टाचेत्यर्थः एकार्णवजलेशुद्धज्ञानसामर्थ्येनीहारेणाज्ञाने
नपूर्ववत्तिरोहितेसतितथालोकेपिभूतविवर्जितेचतुर्विधेभूतग्रामशून्ये अतएवाव्यक्तेभीषणेचाद्वितीयाभावात्तस्मादेकाकीविभेतीत्यविद्यावस्थायामेकाकिनंप्रतिभयजनकेसतिभगवा
न्गुर्वादिरूपेणाविर्भूयभक्ताननुगृह्णातीत्याहसभूयइत्यादिना ॥ ३१ ॥ विस्मयाविष्टः समाधौकृत्स्नस्यव्यावहारिकस्यतीर्थक्षेत्रादेर्दर्शनंव्युत्थानेचतद्दर्शनमितिविस्मयाविष्टःदि
व्यैकाकिबालदर्शनाच्चकौतूहलसमन्वितः ॥ ३२ ॥ सोचिंतयादित्यादिःस्पष्टार्थोग्रंथः ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ कइतितपःपरिभवन्नितिशेषः ॥ ३९ ॥ ४० ॥ एवंवयस्तपोभ्यांवृद्धमन्यंऐक्यात्मंबुबोधयिषयातस्यगर्वतावदपनेष्यन् श्रीभगवानुवाच अहंतेजनकइ
त्यादि नोपसर्प्पतिभगवान् मामितिशेषः ॥ ४१ ॥ अंगिराःहिरण्यगर्भ.एतंनुएवांगिरसंमन्यंतेंगानांहिरसस्तेनेतिश्रुत्याविश्वपितारितैजसेंगिरःशब्दवृत्तेर्दर्शितत्वात् ॥ ४२ ॥
घोरशिरसंनाम्नामार्कंडेयइतितुमृकंडोरपत्यत्वान्नाम ॥ ४३ ॥ तत्रआवयोर्जन्यजनकभावेसंबंधेसति योममात्मकोमदभिन्नोनभूतःसोन्योचेतनत्वात् एकार्णवगतंयोगधर्मिणंमां
द्रष्टुंनोत्सहतइतियोजना ॥ अयंभावःजडाजडौद्वौपदार्थौतत्रजडोनाजडंद्रष्टुमिष्टेनाप्यजडोजडादन्यंतस्यापिदृश्यत्वेनजडत्वापत्तेरतआवयोरैकात्म्यंनिश्चितमिति ॥ ४४ ॥

श्रीभगवानुवाच ॥ ॥ माभैर्वत्सनभेतव्यमिहैवायाहिचांतिकम् ॥ मार्कंडेयमुनेधीरबालस्त्वंश्रमपीडितः ३६ ॥ मार्कंडेयउवाच ॥ कोमांनाम्नाकीर्तय
यतेतपःपरिभवन्मम ॥ बहुवर्षसहस्रायुर्द्धर्षयंश्चैवमेवयः ३७ नह्येषुसमुदाचारोदेवेष्वपिसमाहितः ॥ मांब्रह्मापिसविश्वेशोदीर्घायुरितिभाषते ३८ क
स्तपोघोरशिरसोममाद्यत्यक्तजीवितः ॥ मार्कंडेयेतिमांप्रोक्त्वामृत्युमीक्षितुमिच्छति ३९ ॥ वैशंपायनउवाच ॥ एवमाभाषतेक्रोधान्मार्कंडेयोमहामुनिः
अथैनंभगवान्भूयोबभाषेतत्परायणम् ४० ॥ श्रीभगवानुवाच ॥ ॥ अहंतेजनकोवत्सहृषीकेशःपितागुरुः ॥ आयुःप्रदातापौराणःकिमर्थंनोपसर्पसे
४१ मांपुत्रकामःप्रथमंपितातेह्यंगिरामुनिः ॥ पूर्वमाराधयामासतपस्तीव्रमुपाश्रितः ४२ ततस्त्वांघोरशिरसंदहनोपमतेजसम् ॥ दत्तवानहमात्मेष्टंमह
र्षिममितायुषम् ४३ तत्रनोत्सहतेचान्योयोनभूत्योममात्मकः ॥ द्रष्टुमेकार्णवगतंक्रीडंतंयोगधर्मिणम् ४४ ॥ वैशंपायनउवाच ॥ ॥ ततःप्रसन्नवदनो
विस्मयोत्फुल्ललोचनः ॥ मूर्ध्निबद्धांजलिपुटोमार्कंडेयोमहातपाः ४५ नामगोत्रेततःश्रुत्वादीर्घायुर्लोकपूजितः ॥ अथाकरोन्नमस्कारंप्रणतःशिरसाप्रभुम्
४६ ॥ मार्कंडेयउवाच ॥ इच्छेहंतत्वतोमायामिमांज्ञातुंतवानघ ॥ यदेकार्णवमध्यस्थःशेषेत्वंबालरूपवान् ४७ किंसंज्ञःकश्चभगवाँल्लोकेविज्ञायसे
नघ ॥ तर्कयेत्वांमहाभूतंनभूतमिहातिष्ठति ४८ ॥ श्रीभगवानुवाच ॥ अहंनारायणोब्रह्मासंभवःसर्वदेहिनाम् ॥ सर्वभूतोद्भवकरःसर्वभूतविनाश
नः ४९ अहमैंद्रेपदेशक्रऋतूनामपिवत्सरः ॥ अहंयुगेयुगाक्षश्चयुगस्यावर्त्तएवच ५० अहंसर्वाणिसत्त्वानिदैवतान्यखिलानिच ॥ भुजगानामहंशेषस्ता
र्क्ष्योहंसर्वपक्षिणाम् ५१ अहंसहस्रशीर्षाद्योर्यःपदैरभिसंवृतः ॥ आदित्योयज्ञपुरुषोदेवोयज्ञमयोमखः ॥ अहमग्निर्हव्यवाहोयादसांपतिरव्ययः ५२

इदमेवऐकात्म्यंविस्तरेणवक्तुंप्रश्नमवतारयाति ततइत्यादि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ मायायास्तत्वंश्रीभगवानुवाच अहंनारायणइति योयमस्मत्प्रलयविषयः नाराय
णेनाराख्यकृत्स्नप्रपंचलयाधिष्ठानमुपाधिस्पर्शशून्यंतदेवमाययाअन्यथाभाति तत्वंतज्ज्ञानान्मायानिवृत्तिस्तदज्ञानाद्रज्जूरगवद्ब्रह्मादिरूपेणमायैवभातीत्यर्थः ॥ ४९ ॥ ऐकात्म्य
ग्रहणासमर्थानांउपास्त्यर्थंविभूतीराह अहमैंद्रेपदेइत्यादिनासार्द्धत्रयेण ॥ ५० ॥ ५१ ॥ ५२ ॥

यदिति तपसास्वधर्मानुष्ठानेनभावितात्मनांशुद्धचेतसांमध्येबहुषुजन्मसुनिरुद्धात्मानिरुद्धचेताब्राह्मणोब्रह्मवित् यतिःसंन्यासीयदुच्यतेब्रह्मविद्ब्रह्मैवभवतीतिशास्त्रेयद्रूपत्वेनोच्य तेतद्ब्रह्माहंमाययाअनारोपितंरूपमहमितिपूर्वेणसंबंधः ॥५३॥५४॥ ५५॥ ५६॥ ऋतंश्रुत्युक्तानुष्ठानंकर्मादीनां सत्यं तत्प्राप्यंब्रह्म ॥ ५७॥ सांख्यंवेदांतविचारः योगश्चित्तवृत्ति निरोधः विद्याधिपोविद्याप्रदाता ॥ ५८॥५९॥ सागरोलवणोदकः समुद्रः स्वादूदकादिः ॥ ६०॥६१॥ तत्सर्वंमामकंस्मृतंस्वरूपमितिशेषः ॥ ६२॥ ६३॥ ममधर्मेप्सुःऐ श्वर्येप्सुःकुक्षौचरनिर्विकल्पंसमाधिमनुतिष्ठसुखीसंसारदुःखशून्यः॥ ६४॥ ब्रह्मादीन्प्रतिस्वस्यतटस्थकारणत्वंमाभूत्किंतुअभिन्ननिमित्तोपादानत्वरूपंकारणत्वमेवेत्याह ममब्र ह्माशरीरस्थइतिकनकेकुंडलवत्सर्वइदंमय्येवोतंप्रोतंचेतिभावः ६५ एकाक्षरोअकारःअकारोवैसर्वावागितिश्रुतेः अक्षरःप्रणवः त्रिपदागायत्री ॥ ६६॥ सर्ववेदांतप्रसिद्धंमहामु

यत्पृथिव्यांद्विजेंद्राणांतदसाभावितात्मनाम् ॥ बहुजन्मनिरुद्धात्माब्राह्मणोयतिरुच्यते ५३ ज्ञानवान्दृष्टविश्वात्मायोगिनांयोगवित्तमः ॥ कृतांतःसर्वभू तानांविश्वेषांकालसंज्ञितः ५४ अहंकर्मक्रियाजीवःसर्वेषांधर्मदर्शनः ॥ निष्क्रियःसर्वभूतेषुस्वात्मज्योतिःसनातनः ५५ प्रधानंपुरुषोदेवोहमाद्यस्त्वक्षयो व्ययः ॥ अहंधर्मस्तपश्चाहंसर्वाश्रमनिवासिनाम् ५६ अहंहयशिरोदेवःक्षीरोदेयोमहार्णवे ॥ ऋतंसत्यंचपरममहमेकःप्रजापतिः ५७ अहंसांख्यमहंयो गमहंतत्परमंपदम् ॥ अहमिज्योभवश्चाहमहंविद्याधिपःस्मृतः ५८ अहंज्योतिरहंवायुरहंभूमिरहंनभः ॥ अहमापःसमुद्राश्चनक्षत्राणिदिशोदश ॥ अहं वर्षमहंसोमःपर्जन्योहमहंरविः ५९ क्षीरोदःसागरश्चाहंसमुद्रोवडवामुखः ॥ वह्निःसंवर्तकोभूत्वापिबंस्तोयमहंरविः ६० अहंपुराणंपरमंतथैवेहपरायणम् ॥ भविष्यंचैवसर्वत्रभाविष्येसर्वसंभवः ६१ यत्किंचित्पश्यसेचैवयच्छृणोषिचकिंचन ॥ यच्चानुभवसेलोकेतत्सर्वंमामकंस्मृतम् ६२ विश्वंसृष्टंमयापूर्वंसृजे यंचाद्यपश्यमाम् ॥ युगेयुगेचस्रक्ष्यामिमार्कंडेयाऽखिलंजगत् ६३ तदेतदखिलंसर्वंमार्कंडेयावधारय ॥ शुश्रूषुर्ममधर्मेप्सुःकुक्षौचरसुखीभव ६४ ममब्र ह्माशरीरस्थोदेवाश्चऋषिभिःसह ॥ व्यक्तमव्यक्तयोगंमामवगच्छापराजितम् ६५ अहमेवाक्षरोमंत्रस्त्र्यक्षरश्चैवसर्वशः ॥ त्रिपदश्चैवपरमस्त्रिवर्गार्थनिदर्शनः ६६ ॥ वैशंपायनउवाच ॥ एवमेतत्पुराणेषुवेदांतेचमहामुनिः ॥ वक्त्रंव्याहृतवानाशुमार्कंडेयंमहामुनिम् ६७ प्रवेशयामासततोजठरंविश्वरूपधृक् ॥ ततो भगवतःकुक्षिंप्रविष्टोमुनिसत्तमः ॥ ररामसुखमासाद्यशुश्रूषुर्हंसमव्ययम् ६८ तदक्षरंविविधमथाश्रितोवपुर्महार्णवेव्यपगतचंद्रभास्करे ॥ शनैश्चरन्प्रभुर पिहंससंज्ञितोसृजज्जगद्विसृजतिकालपर्यये ६९ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिदशमोऽध्यायः ॥ १० ॥ निर्व्यासोवबंधेत्याहवैशंपायनःएवामि

ति आहृतवान् आनीतवान् मार्कंडेयंमुखेप्रक्षेप्तुमितिशेषः ॥ ६७॥ हंसंपरमात्मानंशुश्रूषुः निर्विकल्पकेनसमाधिनाआराधयितुमिच्छुः॥ ६८॥ अध्यायार्थमुपसंहरतितदक्ष रमिति हंससंज्ञितस्तदक्षरंअविनाशिब्रह्म कीदृशःविविधंवपुराश्रितः सन्नपिमहार्णवेचिन्मात्रावस्थायांचंद्रभास्करशब्दिततत्कारणमनश्चक्षुर्वर्जिते कार्यकारणप्रपंचशून्येइत्यर्थः श नैःभूमिजयक्रमेणचरन्कालपर्ययेअविद्यालेशवशात्समाधिसुखविच्छेदकालेजगदसृजत् महाभूतमयंविसृजतिविविधभौतिकंसृजति ६९ इ०ह०भ०टी०दशमोऽध्यायः॥ १०॥

ब्रह्मैवब्रह्मविदितिविस्पष्टयितुमापवात् ॥ पंचमेथाहमादीनांजन्मसंक्षिप्यवर्ण्यते ॥ १ ॥ आपवइति सविभुर्हसाख्यआपवोवसिष्ठाख्योब्रह्मर्षिर्भूत्वातपोयोगाख्यंकारयामास कृतवान् रामोराज्यमचीकरदितिवत्स्वार्थेणिच् आत्मनः स्वस्यकुंभसंभवदेहं आत्मनासमष्टयभिमानिनाच्छादयित्वास्थूलदेहतादात्म्यंत्यक्त्वेत्यर्थः वसिष्ठस्यहिकुंभाज्जन्मस्मर्यतेमित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसंदृष्ट्वासतोवरेकुंभेरेतोपतत्ततोगस्त्यवसिष्ठौजायेतामिति ॥ १ ॥ ततोदेहाच्छादनान्महात्माईश्वरःसन् अतएवातिबलोऽनंतशक्तिः लोकस्यभौतिकस्यतदुपादानभूतानामपिपंचसंख्यानांभूतानांवियदादीनांचसर्जनेमतिंव्यचिंतयत् विश्वभूतोविश्वात्मा एतेनसऐक्षतइमाँल्लोकानुसृजाइतिश्रुतेरर्थोदर्शितः ॥ ॥ २ ॥ तस्यैवंचिंतयतस्तत्रतदानिराकाशेतोयमयेचिन्मयेसूक्ष्मेदुर्लक्षेगह्वरेदुराधिगमेवस्तुनिजगतिलीनेसातितपसाईक्षणवलेनभावितःसंवर्द्धितःआत्माऽहंकारोयेनसभावितात्मातस्य ॥ ३ ॥ ईषदिति सःभावितात्मासालिलेचिदात्मनिअधिष्ठानेस्थितोध्यस्तःसन्नर्णवंपरंतत्त्वंईषत्संक्षोभयामास शुद्धापाचितिः समष्टिरहंकारेणईश्वरोस्मीतिभावि

॥ वैशंपायनउवाच ॥ आपवःसविभुर्भूत्वाकारयामासवैतपः ॥ छादयित्वात्मनोदेहमात्मनाकुंभसंभवः १ ततोमहात्माऽतिबलोमतिंलोकस्यसर्जने ॥ महतांपंचभूतानांविश्वभूतोव्यचिंतयत् २ तस्यचिंतयतस्तत्रतपसाभावितात्मनः ॥ निराकाशेतोयमयेसूक्ष्मेजगतिगह्वरे ३ ईषत्संक्षोभयामाससोर्णवंसलिलेस्थितः ॥ सोनंतरोर्मिणासूक्ष्ममथच्छिद्रमभूत्तदा ४ तत्रशब्दगतिर्भूत्वामारुतद्रवसंभवः ॥ सलब्ध्वांतरमक्षोभ्योव्यवर्द्धतसमीरणः ५ विवर्द्धताबलवतातेनसंक्षोभितोर्णवः ॥ अन्योन्यवेगाभिहताममंथुश्चोर्मयोभृशम् ६ महार्णवस्यक्षुब्धस्यतस्मिन्नंभसिमथ्यति ॥ कृष्णवर्त्मासमभवत्प्रभुर्वैश्वानरोर्चिमान् ७

तवतोमित्यर्थः सईश्वरोनंतरेणद्वितीयेनऊर्मिणासंकल्पेनसूक्ष्मंइंद्रियाग्राह्यंछिद्रमाकाशाख्यंस्वयमभूत्तदा ॥ ४ ॥ तत्रेति तत्रछिद्रेसोनंतरोर्मिणाशब्दगतिरभूदित्यनूषज्ययोज्य सईश्वरःपुनः संकल्पांतरेणतस्मिन्नाकाशेशब्दरूपेणगतिः परिस्पंदःतत्प्रदत्वेअभूदित्यर्थः किंकृत्वामारुतद्रवसंभवोभूत्वावायुवेगेनैवशब्दगतिरूपेणसंभवः प्रादुर्भावोयस्य सः वाय्वनुग्रहादेवसंयोगविभागहेतुर्गतिर्जायते तावेवचशब्दाविर्भावेकारणमित्यर्थः ननुक्वतदावायुरित्यतआह सइति ईश्वरःअंतरंछिद्रंलब्ध्वालब्धैवअक्षोभ्योपिसन्समीरणोभूत्वाव्यवर्द्धत आकाशादनंतरमेवउत्पन्नोवायुःशब्दगत्योर्निमित्तत्वंप्रापेत्यर्थः ॥ ५ ॥ विवर्द्धतेति आर्षस्तङ्‌भावःअर्णवश्चिदात्मातेनवायुनाकथंसंक्षोभितइत्यतआहान्योन्येति इदानींहिचिदहंकाराकाशवायवःसंति तत्रचित्ताहंकारस्यजाड्यंअभिहितं इतरेणतस्याः शुद्धत्वंहतं एवमहंकारव्यंजनेनवायोर्निःस्पंदत्वंहतंवायुनाप्यहंकारतरोर्निःस्पंदत्वंहतमित्यन्योन्याभिघातात्तेऊर्मयःसंकल्पभेदाः ममंथुर्व्याकुलीचक्रुरर्णवमितिप्रकरणात्विपरिणामेनानुषज्ययोज्यं ॥ ६ ॥ मथ्यतिमथ्यमाने अर्चिमान् अर्चिष्मान् ॥ ७ ॥

१४

रूपवतातेजसानीरूपस्यचिदात्मनोरूपत्वमपादानेनअत्यंतंकालुष्यंसंपादितमित्याह तत्रेति तेजःशुद्धंवस्तुनास्तीत्येवाकरोदित्यर्थः क्षयादिति उक्तक्रमेणजलनिधेःपरमेश्वरस्य क्षयादैश्वर्याद्यच्छिद्रमभवत्पूर्वोक्तंतदेवनभोनिःसृतमिति ॥ ८ ॥ आत्मनआकाशःसंभूतइत्यादिश्रौतवादोवस्तुसएवाकाशइत्यर्थः जलसृष्टिमाह आत्मेति तेजोद्भवाइति संधिरार्षः आत्मतेजोद्भवाइतिश्लोकार्द्धंक्षयाज्जलनिधेरित्यस्मात्पूर्वंबोध्यंतेजोजलयोर्मध्येनभःसृष्टेरन्वयात् आकाशमिति आकाशंईश्वरः छिद्रसंभूतंछिद्रभूताकाशेवायुरूपेणसंभूतंआविर्भूतमेववायुः तथापिआकाशाद्वायुरितिवेदवादऔपचारिकः मूलकारणमेवअंत्यात्कार्याग्घटइवतत्तद्रूपेणभातिनात्रसृष्टिक्रमविवक्षास्तिगगनद्रुमेइवांकुरादीनामिति भावः ॥ ९ ॥ आज्येतिआज्यमिवद्रवत्वादाज्यंजलंतस्यसंघर्षणंदृढतराश्लेषः पृथिवीतियावत् तद्यदपांशरआसीत्समहन्यतसापृथिव्यभवदितिश्रुतेः करकादिवद्दृढत्वंप्राप्ताआपएव पृथिवी आज्यसंघर्षणंतस्यामुद्भूतंआविर्भूतंजाठरंपावकंआज्यसंभवंपरंपरयाजलोद्भूतंपार्थिवमग्निंभोक्तारमितियावत् शब्दादिगुणवंतिमहाभूतानिभोग्यानिभोक्तारंचजीवं

**तत्रसंशोषयामासपावकःसलिलंबहु ॥ क्षयाज्जलनिधेश्छिद्रमभवंनिःसृतंनभः ८ आत्मतेजोद्भवाःपुण्याआपोमृतरसोपमाः ॥ आकाशंछिद्रसंभूतंवायुराकाशसंभवः ९ आज्यसंघर्षणोद्भूतंपावकंचाज्यसंभवम् ॥ दृष्ट्वाप्रीतियुतोदेवोमहाभूतादिभावनः १० दृष्ट्वाभूतानिभगवाँल्लोकसृष्ट्यर्थतत्त्ववित् ॥ ब्रह्मणोजन्मसहितंबहुरूपोविचिन्वति ११ चतुर्युगादिसंख्यांतेसहस्रयुगपर्यये ॥ यत्पृथिव्यांद्विजेंद्राणांतपसाभावितात्मनाम् १२ बहुजन्मविशुद्धात्माब्राह्मणोयतिरुत्तमः ॥ ज्ञानवान्दृष्टविश्वात्मायोगिनांयोगवित्तमः १३ तंयोगवंतंविज्ञेयंसंपूर्णैश्वर्यविक्रमम् ॥ देवोब्रह्मणिविश्वेचनियोजयतियोगवित् १४**

दृष्ट्वामहाभूतानांआदिभूतंअहंकारंमहाभूतादीन्भावयतिआत्मत्वेनकल्पयतीतिमहाभूतादिभावनोहंकारादिस्रष्टादेवःईश्वरःप्रीतियुतोभवत् अतःभौतिकान्हिरण्यगर्भादीन्स्रक्ष्यामीति ॥ १० ॥ तदेवाह दृष्ट्वेति लोकस्यसृष्टिःतस्याअर्थःप्रयोजनंतत्त्वंचलोकादेर्वेत्ताइतिलोकसृष्ट्यर्थतत्त्ववित् सईश्वरःब्रह्मणोजन्मविचिन्वतीतिचिंतयतिविचिन्वतीतिवर्तमानापदेशेनप्रवाहनित्योयमर्थइतिसूचितं प्रतिकल्पंसंकल्पमात्रेणब्रह्माणंसृजतीत्यर्थः कीदृशंजन्माहितंभौतिकस्रष्टृत्वाद्ब्रह्मणस्तज्जन्मईश्वरस्यहिसृष्टिबाहुल्यमिच्छतोहितकरं कीदृशः बहुरूपः जीवेशः शुद्धरूपः ॥ ११ ॥ ब्राह्मणजन्मकालमाहचतुर्युगेति अनेनदिनप्रमाणेनवर्षशतमुन्नेयम् ॥ १२ ॥ उत्पादितस्यब्रह्मणःपूर्वरूपमाह द्वाभ्यांयत्पृथिव्यामिति यत्यःपृथिव्यांपूर्वस्मिन्कल्पेभूमौयःद्विजेंद्राणांमध्येउत्तमः निरतिशयभावनावान्ब्रह्मणोविश्वरूपस्यउपासकोब्राह्मणः ॥ १३ ॥ अतएवदृष्टविश्वात्मासाक्षात्कृतसूत्रात्मभावः तंविज्ञेयंसर्वैरुपास्यं यतः संपूर्णैश्वर्यविक्रमंदेवोविश्वेशः ब्रह्मणिविश्वेचवेदजगतोःसंतत्यविच्छेदेविषयेनियोजयतिसूत्रोपासकानांमध्येयत्रभावनोत्कर्षविश्रांतिः सोग्रिमकल्पेब्रह्माभवतीत्यर्थः ॥ १४ ॥

ततइतिततोब्रह्मणोनियोगानंतरंमहातोयेस्वस्वरूपेनिर्विशेषेहरिरच्युतोभवतिसृष्टिविक्षेपराहित्यात् एषपावकिश्चनियुक्तस्तैजसोब्रह्माहविषःप्राणिकर्मवशाद्धेतोः स्वयंकर्मोपरमेवि
विधंक्रीडंश्चसर्वप्राणिकर्मोद्भवेएवंप्रकारेणब्रह्मांडाधिपतिर्भूत्वामोदतइत्यर्थः ॥ १५ ॥ ब्रह्मणःसदनभूतंब्रह्मांडरूपंपद्ममुखारिंसिंहावलोकनेनहरिंविशिनष्टिपद्ममिति तदाब्रह्मज
न्मकालेपद्ममेवस्तौतिनाभ्युद्भवमिति अधोनिष्ट्यावितस्त्यांतेनाभ्यामुपरितिष्ठति ज्वालमालाकुलंभातिविश्वस्यायतनंमहदितिश्रुतिप्रसिद्धैवात्रनाभिर्ग्राह्या आपवाख्यवसिष्ठसमा
धेःप्रस्तुतत्वात् सहस्रेतिसहस्रंअनंतानिपात्राणिभोगभूमयः प्राणिभ्रमरायस्मिन्तत्तत्विरजःरजोरेणुःपार्थिवाप्यादिरेणुस्तद्रहितंभास्कराभंसर्वतःप्रद्योतमानं हिरण्मयंमनोह
रणशीलंदिव्यवस्त्रादिरत्नौघमयं ॥ १६ ॥ हुतेति वह्निज्वालावद्दीप्यमानाः शिखाइवशिखाः उज्ज्वलास्तेषांप्रभायस्मिन् तदासमाधिकालेसुगंधिनंरम्याविषयास्वादयुक्तंपुं
स्त्वमार्ष कमलंकस्यब्रह्मणोमलंआविद्यकंरूपंविराजते ॥ यद्वाकंब्रह्मैवअलंअत्यर्थम्विविधरूपेणराजते आत्मनआपवस्यतनूरुहंतन्वाहार्दाकाशेनाभावेवारोहतीत्येवंरूपंतनूरुहंचत

ततस्तस्मिन्महातोयेहविषोहरिरच्युतः ॥ स्वपन्क्रीडंश्चविविधंमोदतेचैषपावकिः १५ पद्मंनाभ्युद्भवंचैकंसमुत्पादितवांस्तदा ॥ सहस्रपत्रंविरजोभास्क
राभंहिरण्मयम् १६ हुताशनंज्वलितशिखोज्ज्वलत्प्रभंसुगंधिनंशरदमलार्कतेजसम् ॥ विराजतेकमलमुदारवर्चसंमहात्मनस्तनुरुहचारुदर्शनम् १७ ॥ इ
तिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकादशोऽध्यायः ११ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ अथयोगविदांश्रेष्ठंसर्वभूतमनोमयम् ॥
स्रष्टारंसर्वभूतानांब्रह्माणंसर्वतोमुखम् १ तस्मिन्हिरण्मयेपद्मेबहुयोजनविस्तृते ॥ सर्वतेजोगुणमयेपार्थिवैर्लक्षणैर्युते २ तच्चपद्मंपुराणज्ञाःपृथ्वीरूहमुत्त
मम् ॥ नारायणांगसंभूतंप्रवदंतिमहर्षयः ३ यातुपद्मासनादेवीपृथिवींतांप्रचक्षते ॥ येगर्भसारांकुरतस्तान्दिव्यान्पर्वतान्विदुः ४ हिमवंतंचमेरुंचनीलंनि
षधमेवच ॥ कैलासंमुंजवंतंचयथाद्रिंगंधमादनम् ५

चारुदर्शनंचेतिसमासः ॥ १७ ॥ इतिश्रीम०खि०ह०भावि०टीकायामेकादशोऽध्यायः ॥ ११ ॥ लेशतोपिनभेदोस्तिबाह्याभ्यंतरविश्वयोः ॥ इतिवक्तुंमुनिःप्राहषष्ठेनाभ्यं
ब्जसंपदम् ॥ १ ॥ अथेति ॥ ब्रह्माणंतस्मिन्पद्मेआपवोयोजयतीतिव्यवहितकर्तृक्रियानुषंगेणश्लोकद्वयंसंबंधनीयंसर्वभूतमनोमयंजलाकाशवत्प्रातिव्यक्तिपरिसमाप्तंसूत्रात्मान
मित्यर्थः सर्वतोमुखमितिसर्वतः पाणिपादतत्वादेरुपलक्षणम् ॥ १ ॥ तेजांसिसूर्यादीनि गुणाःगंधादयः पार्थिवेमनोमयेपिसर्वस्थूलभूमलक्षणैर्युक्ते ॥ २ ॥ पृथिवीरुहं
च यच्छरीरंसापृथिवीतिश्रुतेःपृथिवीशरीरंतस्यांरोहतीतिदेहांतस्थमित्यर्थः अत्रहेतुः नारायणांगसंभूतंअंतर्याम्यंगोद्भूतमंतरेवास्तीतिभावः ॥ ३ ॥ पार्थिवैर्लक्षणैर्युतइतियदुक्तं
तत्रकापृथिवीकानिचतल्लक्षणानीत्यतआह यात्वितिपद्मशब्देनतत्स्थानंशरीरंतस्यासनंयत्रसापृथिवीप्रसिद्धैव येगर्भेपाषाणमयत्वात्साराद्दृढाःसंतःअंकुरवदुच्छूनास्तान्प्रथमार्थे
तसिः विशेषणंतुपिंडब्रह्मांडयोरैक्यविवक्षायां पिंडेपिकठिनांशोऽस्थ्यादिःपर्वतत्वेनज्ञेयइत्येवमर्थः ॥ ४ ॥ ५ ॥

॥ ६ ॥ युताश्वेतेअद्रयश्चेतिसमासः ॥ ७ ॥ यज्ञियंदेशमिच्छंतितेयाज्ञियाः यत्रचक्रिरेयज्ञंजंबुद्वीपमेवकर्मभूमिरित्यर्थः ॥८॥ यज्ञस्येत्युपास्थितसंबध्यतेतथाहिअग्नौप्रास्ताहुतिःसम्य गादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतियज्ञोद्भवत्वंतोयस्यस्मरंति तीर्थशतान्यपांगोभ्रूभंगोयासांताः दिव्यानद्योगंगाद्याः ब्रह्मांडभित्त्वामेरूपरिपतित्वाचतुर्दि क्षुप्रस्थिताः ॥ ९॥ १० ॥ ११॥ १२ ॥ उत्उत्कृष्टं अंकदुःखंयत्रतदुदकेत्यभिसंज्ञितम् १३ ॥ पद्मस्यमेरुकर्णिकावतोभूपद्मस्यअंतेसमंततःप्रांतेकुशंकुःपृथिवीशेतेस्मिन्निति कुशंजलं ॥ १४ ॥ ऋषेरितिव्यावहारिकत्वादयंमहापुष्करसंभवःयोयंयोगिहृदयदर्पणेप्रादुर्भावः सतस्मादेवसंस्काररूपेणहृदयेस्थितात्स्थूलाद्धेतोःनाम्नापुष्करसंभवइत्युच्यते प्रतिबिंब

पुण्यंत्रिशिखरंचैवकांतंमंदरमेवच ॥ उदयंकंदरंचैवविंध्यमस्तंचपर्वतम् ६ एतेदेवगणानांचसिद्धानांचमहात्मनाम् ॥ आश्रमाःपुण्यशीलानांसर्वकामयु ताद्रयः ७ एतेषामितरोदेशोजंबुद्वीपइतिस्मृतः ॥ जंबुद्वीपस्यसंख्यानंयाज्ञियायत्रचक्रिरे ८ गर्भाद्यत्स्रवतेतोयंदेवामृतरसोपमम् ॥ दीव्यत्तीर्थशतापांग्य स्तादिव्याःसरितःस्मृताः ९ यान्येतानितुपद्मस्यकेसराणिसमंततः ॥ असंख्याताःपृथिव्यांतुविश्वेतेधातुपर्वताः १० यानिपद्मस्यपत्राणिभूरीण्यूर्ध्वं नराधिप ॥ तेदुर्गमाःशैलचिताम्लेच्छदेशाविकल्पिताः ११ यान्यधःपद्मपत्राणिवासार्थेतानिभागशः ॥ दैत्यानामुरगाणांचपातालंतन्महात्मनाम् १२ तेषामधोगतंयत्तदुदकेत्यभिसंज्ञितं ॥ महापातककर्माणोमज्जंतेयत्रमानवाः १३ पद्मस्यांतेकुशंयत्तदेकार्णवजलंमहत् ॥ प्रोक्तास्तेदिक्षुसंघाताश्च त्वारोजलसागराः १४ ऋषेर्नारायणस्यायंमहापुष्करसंभवः ॥ प्रादुर्भावोप्ययंतस्मान्नाम्नापुष्करसंभवः १५ एतस्मात्कारणात्तज्ज्ञैःपुराणैःपरमर्षिभिः ॥ यज्ञियैर्वेददृष्टार्थैर्यज्ञेपद्मचितीकृतः १६ एवंभगवतापद्मोविश्वस्यपरमोविधिः ॥ पर्वतानांनदीनांचदेवतानांचनिर्मितः १७ विभुस्तथैवाप्रतिमप्रभावःप्रभा करोवैभगवान्महात्मा ॥ स्वयंस्वयंभूःशयनेसृजत्तदाजगन्मयंपद्मनिधिंमहार्णवे १८ इतिश्रीम०खि०ह०भ०पुष्करप्रादुर्भावेद्वादशोऽध्यायः १२

चैत्रोयमितिव्यवहारस्यबाधादर्शनादेकनामत्वंद्वयोर्युक्तमितिभावः ॥ १५ ॥ व्यवहारमुक्त्वावस्तुतत्त्वमाह एतस्मादिति एतस्मात् अव्यवहितात् प्रकारणवतःयोगिकल्पितात्त त्पुष्करसंभवात् महापुष्करसंभवस्यबीजभूतात् यज्ञियैः कर्मयोगयज्ञार्हैः पद्मचितीपद्मरूपकेणचितंचयनंइष्टकाभिरितिवदस्यास्तीतिपद्मचितीस्थूलः पुष्करप्रादुर्भावः कृतो विहितःयतोवेददृष्टार्थैरतःकृतः वेदेलोकेचसूक्ष्मस्यैवस्थूलत्वंदृष्टंनस्थूलस्यसूक्ष्मत्वंनहिबीजंवटोभवतीतिवटोपिसमासहस्रेणबीजीकर्तुंशक्योतोमानसादेवपुष्करात् स्थूलस्यो त्पत्तिर्युक्तेतिभावः॥ १६ ॥ एवमिति परमोव्यावहारिकः ॥ १७ ॥ विभुरिति तथैवपरमस्तथैवशयनेस्थूलदेहविस्मरणेपद्मानांनिधिंअनंतानिपद्मानीत्यर्थः महार्णवेपरमात्म नि ॥ १८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांद्वादशोऽध्यायः ॥ १२ ॥

सप्तमेलयविक्षेपौविघ्नौतामसराजसौ ॥ सत्वेनविष्णुनाक्षेप्यौमधुकैटभरूपकौ ॥ १ ॥ चतुर्युगादिःकृतंसात्विकोयोगधर्मः तत्रापिसंभूतौअधर्मपादस्यसत्त्वोक्तेःसहस्रयुगपर्यये
अमिताविद्यारात्रिक्षयसमये चित्तसत्वंहितत्वेप्रणिधीयमानंदैनंदिनलयाभ्यासात्तमसःप्राबल्येसतिलीयतेसलयोत्रमधुनामा ॥ १ ॥ तथारजःप्राबल्येसतिक्षणिकसत्वोत्कर्षात्तस्य



॥ वैशंपायनउवाच ॥ चतुर्युगादिसंभूतौसहस्रयुगपर्यये ॥ विघ्नस्तमसिसंभूतोमधुर्नाममहासुरः १ तस्यैवचसहायोन्योभूतोरजसिकैटभः ॥ तौरजस्त
मसाविष्टौसंभूतौकामरूपिणौ २ एकार्णवजलंसर्वंक्षोभयंतौमहासुरौ ॥ कृष्णरक्तांबरधरौश्वेतदीप्तोग्रदंष्ट्रिणौ ३ उभौमदकटोदग्रौकेयूरवलयोज्ज्वलौ ॥
महाविकृतताम्राक्षौपीनोरस्कौमहाभुजौ ४ महच्छिरःसंहननौजंगमाविवपर्वतौ ॥ नीलमेघाभ्रसंकाशावादित्यप्रतिमाननौ ५ विद्युदंभोदताम्राभ्यांकरा
भ्यामतिभीषणौ ॥ पादसंचारवेगाभ्यामुत्क्षिपंताविवार्णवम् ६ कंपयंताविवहरिंशयानमरिसूदनम् ॥ तौतत्रविहरंतौस्मपुष्करेविश्वतोमुखम् ७ पश्यतां
दीप्तवपुषंयोगिनांश्रेष्ठमुत्तमम् ॥ नारायणसमाज्ञप्तंसृजंतमखिलाःप्रजाः ॥ दैवतानिचविश्वानिमानसांश्चसुतानृषीन् ८ ततस्तावूचतुस्तत्रब्रह्माणमसुरोत्त
मौ ॥ दृप्तौयुयुत्सकौक्रुद्धौरोषसंरक्तलोचनौ ९ कस्त्वंपुरुषमध्यस्थःसितोष्णीषश्चतुर्मुखः ॥ आवामगणयन्मोहादासेत्वंविगतज्वरः १० एह्यावयोर्बाहुयुद्धं
प्रयच्छकमलोद्भव ॥ आवाभ्यामतिवीराभ्यांनशक्यंस्थातुमाहवे ११ कस्त्वंकश्चोद्भवस्तुभ्यंकेनवासीहचोदितः ॥ कःस्रष्टाकश्चवैगोप्ताकेननाम्नाभिधी
यते १२ ॥ ब्रह्मोवाच ॥ यःकइत्युच्यतेलोकेह्यविज्ञातःसहस्रशः ॥ तत्संभवंयोगवतांकिंमांनाभ्यवगच्छथः १३ मधुकैटभावूचतुः ॥ नावयोःपरमंलोके
किंचिदस्तिमहामते ॥ आवांछादयताविश्वंतमसारजसातथा १४ रजस्तमोमयावावांयतीनांदुःखलक्षणौ ॥ छलकौधर्मशीलानांदुस्तरौसर्वदेहिनाम्
१५ आवाभ्यांमुह्यतेलोकउच्छ्रिताभ्यांयुगेयुगे ॥ आवामर्थश्चकामश्चयज्ञाःसर्वपरिग्रहाः १६ सुखंयत्रमुदोयत्रयत्रश्रीःसन्निवृत्तयः ॥ एषांयत्कांक्षितंचै
वतत्तदावांविचिंतय १७ ॥ ब्रह्मोवाच ॥ यत्तद्योगवतांश्रेष्ठंयच्चसर्वंमयार्चितम् ॥ तत्समाधायगुणवान्सत्वजोस्मिप्रतिष्ठितः १८ यत्परंयोगयुक्तानामक्ष
रंसत्वमेवच ॥ रजसस्तमसश्चैवयत्स्रष्टाजीवसंभवः १९ यतोभूतानिजायंतेसात्विकानीतराणिच ॥ सएवयुक्तःसमरेवशीवांशमयिष्यति २० ॥ वैशं
पायनउवाच ॥ ॥ ततःशयानंश्रीमंतंबहुयोजनविस्तृतम् ॥ पद्मनाभंहृषीकेशंप्रणम्योवाचतावुभौ २१

पिक्षणंतत्वलाभेपुनःसंसारप्रवणंभवतिसविक्षेपोनामविघ्नोत्रकैटभोनामयोयंसत्वाविविक्तश्चिद्धातुः सजीवोब्रह्मानामतस्यहिंसासंसारसंकटेपातनंविष्णुः सत्वंतच्छरीरेसत्वे
एवतयोर्नाशः अग्रिमकल्पेप्युत्थानंतत्रमधुकैटभयोः विष्णुपुत्रत्वंरजस्तमसोः सत्वंप्रत्युपसर्जनत्वम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥
॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ इतिश्रीम०ह०भवि०टीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ भ्वादिसंज्ञंविराडादित्रयंयुक्त्यनुभूतितः ॥ विमुच्यसुस्थिताद्ब्रह्मोऽभ्युत्थानेस्त्विष्टिरष्टमे ॥ १ ॥ स्थित्वेति अत्रयथास्फटिकेजपाकुसुमसान्निध्याद्रक्तत्वाध्यासःतत्रैवस्फटिकांशप्रमोषेपद्मरागत्वाध्यासःतत्रैवनिशिचंद्रिकायामिंद्रनीलतत्वाध्यासः एवंशुद्धायांचितिमायोपाधिसान्निध्यादीश्वरत्वाध्यासः तत्रैवमायाबलतारतम्यात्सूत्रात्मविराड्त्वाध्यासौस्तः अतएवशास्त्रेप्रणवमात्राणामकारोकारमकारार्द्धमात्राणांप्रातिलोम्येनार्थाअविद्योपाधिनाजीवेनस्थूलदेहासंगेनक्रमात्पूर्वस्योत्तरोत्तरत्रप्रविलापनेनसाक्षात्कर्तव्याः अर्धमात्रायांस्वरूपमात्रप्रतिष्ठआत्मनिभवतिद्वैतादर्शनात् सोयमात्माआवरणविक्षेपशक्तिमत्याअविद्यायाआश्रयस्तत्रावरणांशेनशुद्धरूपतिरोधानंविक्षेपांशेनईशादिस्थूलदेहांतानां प्रतिभासस्तत्रापिईशादिषुउत्तरस्यपूर्वपूर्वमात्रवृत्तिरि

जानीवस्त्वांविश्वयोनिमेकंपुरुषसत्तमम् ॥ तवोपासनहेत्वर्थमिदंनौविद्धिकारणम् २२ अमोघदर्शनंसत्यंयतस्त्वांविदुरीश्वरम् ॥ ततस्त्वामभितोदेवकांक्षावःप्रातिर्वाक्षितुम् २३ तदिच्छावोवरंदत्तंत्वयाह्यावामरिंदम ॥ अमोघंदर्शनंदेवनमस्तेस्त्वजितंजय २४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कानिच्छतोद्भुतंब्रूतवरानसुरसत्तमौ ॥ दत्तायुषौमयाभूयस्त्वहोजीवितुमिच्छथः २५ तस्माद्यदेषवांयत्नस्तत्प्राकृतमहाबलौ ॥ वध्यौभवंतौतुस्यातांताविल्येवाब्रवीद्धरिः उभावपिमहात्मानावूर्जितौक्षतवर्जितौ २६ ॥ मधुकैटभावूचतुः ॥ यस्मिन्नकश्चिन्मृतवांस्तस्मिन्देशेविभोवधम् ॥ इच्छावःपुत्रतांयातुंतवचैवसुराधिप २७ श्रीभगवानुवाच ॥ ॥ बाढंसुतौमेप्रवरौभविष्येकल्पसंभवे ॥ भविष्यथोनसंदेहःसत्यमेतद्ब्रवीमिवाम् २८ ॥ वैशंपायनउवाच ॥ ॥ वरंप्रदायाथमहासुराभ्यांसनातनोविश्ववरोत्तमोविभुः ॥ रजस्तमोभ्यांभवभावनोपमौममंथतावूरुतलेसुरारिहा २९ ॥ इ०म०हरिवंशेभ०मधुकैटभवरप्रदानंनामत्रयोदशोऽध्यायः १३ ॥ ॥ वैशंपायनउवाच ॥ ॥ स्थित्वातस्मिंस्तुकमलेब्रह्माब्रह्मविदांवरः ॥ ऊर्ध्वबाहुर्महाबाहुस्तपोघोरंसमाश्रितः १

तिवस्तुस्थितिः तत्रावरणांशस्यसांख्यनामाविचारोविरोधीविक्षेपांशस्यतुयोगेनैवनिवृत्तिःसोपाधिकभ्रमस्यउपाधिनिवृत्तिमंतरेणपरोक्षज्ञानमात्रेणनाशायोगात्एवंचयोगिनःस्थूलदेहासंगेविराड्भावः स्फटिकेइंद्रनीलत्वाध्यासस्थानीयोभूतानामादिचिदचिद्ग्रंथिरूपतयाब्रह्मसंज्ञस्यमनःकल्पितःपुत्रःसांख्ययोगाभ्यांप्रतिबोधितःसन्निवर्त्तते ततःचंद्रिकानिवृत्तौस्फटिकेपद्मरागत्वाध्यासोपमः सूत्रात्मा तस्यैवब्रह्मणोमानसःपुत्रोभुवोनामातथैवसांख्ययोगाभ्यांप्रतिबोधितःसन्निवर्त्तते तद्वत्स्फटिकेलौहित्याध्यासोपमोब्रह्मणोमानसःपुत्रईशोपिभूर्भुवर्नामापूर्ववत्प्रतिबोधान्निवर्त्ततेततःशुद्धाचितिरेवावशिष्यते सोयमर्थोत्रब्रह्मनारायणकपिलभूर्भुवायादिदैविकवृत्तांतरूपकेणनिरूप्यतेएकविंशत्याश्लोकैः ततःपरंनरराम ततोब्रह्मेत्यादिनाऽध्यायशेषेणचिदात्मैवसन्योगीचिदात्मकमेवसर्वंजगत्स्वाष्टिसमयेसृजतीत्युच्यते अक्षरयोजनातुएवंज्ञेया कमलेमानसेब्रह्मांडे उर्ध्वंप्रणवाख्यंब्रह्मबाहुरिवबाहुरालंबनंयस्यसऊर्ध्वबाहुःतपोयोगंघोरं सर्वप्रविलयरूपत्वात् ॥ १ ॥

भाभिश्चिदीप्तिभिःतमोनुदःअज्ञानध्वंसीसर्वधर्मस्थोयोगधर्मस्थः ॥ २ ॥ ३ ॥ नारायणकपिलौयोगसांख्यशास्त्रयोरधिष्ठातारौदेवतेवतयोःसांख्याचार्योमतिमान्उपपत्तिप्रधानः ॥ ४ ॥ देवर्षिभिरिति ब्रह्मविदांवरौब्रह्मब्रह्माणंप्रतिऊचतुरित्युत्तरेणान्वयः विचारांश्चित्तनिग्रहश्चक्षेत्रतत्परौपुरुषैकत्वानेकत्वप्रकृतिमिथ्यात्वामिथ्यात्ववादितयापरस्यविरोधिनावपियोगमाहात्म्यादेवयोगिनमुपातिष्ठंतइतिभावः ॥ ५ ॥ द्वावपिस्वस्वमतेविरुद्धांशमपहायाविरुद्धांशेऐकमत्यंगतौतंत्रेणऊचतुः ॥ ६ ॥ बहुत्वादितितत्रयोगाचार्यवाक्यबहुत्वाद्दृढपादश्चेति लोकगुरुःअविद्यादिभिःपरामृष्टानांलोकानांगुरुःगुरुतरत्वात्वरःश्रेष्ठइतितटस्थेश्वरोपन्यासःसचबहुत्वात्लोकानामितिसमासांतर्गतमपिबुद्ध्यानिष्कृष्यते बंधमोक्षव्यवस्थायाआवश्यकत्वेनजीवानांबहुत्वान्ननियंतासेनापतिवत्तटस्थोवश्यमेष्टव्यइत्यर्थः दृढपादश्चपद्यंतेगम्यंतेभोगायैस्तेपादाविषयेंद्रियबुद्धयःदृढाःरज्जूरगादिवद्बाधायोग्याः किंतुवृत्तिनिरोधनहेयाएवव्यवहारानंत्यात्सत्या पादायस्यसदृढपादःतेनविषयादेः सत्यत्वेनप्रकृतेरपिसत्यत्वमुक्तंसांख्याचार्यवचनंतुविश्वात्माजगतःस्थितिरितिलोकगुरुर्विश्वात्मेतिसंबंधःविश्वंचेतनंसर्वंआत्मास्वरूपंयस्यसतथा ब्रह्मसमुद्रेजगज्जीवेश्वरतरंगाःकोटिशउत्पद्यंतइतिभावःकथंतर्हिबंधमोक्षादिव्यवहारःऐकात्म्येएकमुक्त्यापत्तेरित्यतआहजगतःस्थितिरितिजलचंद्रवदौपाधिकभेदानपिबंधमोक्षव्यवस्थोपपत्तेःपरस्यापिनिर्विशेषचिन्मात्ररूपाणांलक्षणभेदाभावेनभेदस्यवक्तुमशक्यत्वादेकएवात्मेतिवक्तुंयुक्तंतथाबहूनामलुप्तदृशांविभूनांपुंसांसान्निहितंजगत्कथंकस्यचिद्दृश्यमदृश्यंचरज्जूरगतुल्यतामंतरेणस्यादितिप्रकृतिसत्यत्वमप्ययुक्तंस्वप्नादिवदसत्यादपिचरमधातुविसर्गांतव्यवहारोपपत्तेरितिभावः उभयंसंमतंवाक्यंग्रामणीःसर्वलोकानामिति आस्तांमतभेदः समुक्तौशिष्यमाणस्त्वेकलएवकेवलोनिर्विशेषःसएवमुख्यइत्यर्थः ब्रह्माब्रह्मवित्वरोवरणीयोन्यत्सर्वंबुद्ध्यादिकंहेयमित्यर्थः ॥ ७ ॥ सर्वलोकानामित्युक्तंतत्रलोकस्वरूपमाह तयोरिति व्याहृतयोव्याहृतीःइमान् प्रत्यक्षान्विश्वतैजसप्राज्ञान्अत्रप्रमाणमाह यथेति ब्राह्मणीब्रह्मप्रतिप्रादिकाभूरित्येवऋग्वेदादजायतेत्युपक्रम्यतेभ्योभितप्तेभ्यस्त्रयोवर्णाअजायंताकारउकारोमकारइतिश्रुतेर्व्याहृतिसारस्यप्रणवस्यविश्वाद्यात्मकत्वात्भूरादिशब्दैर्विश्वाद्याएवज्ञेयाःअत्रसांख्यशब्देनौपनिषदएवग्राह्योनतुनिरीश्वरःततश्चतस्यवाचकःप्रणवइतिवदतोयोगाचार्यस्यापिओमित्येतदक्षरमिदंसर्वमितिश्रौतःप्रणवार्थऐकात्म्य[illegible]ोअभिमतइतितयोरविरोधइतिभावः ॥ ८ ॥

ज्वलन्निवचतेजस्वीभाभिःस्वाभिस्तमोनुदः ॥ बभासेसर्वधर्मस्थःसहस्रांशुरिवांशुमान् २ अथान्यद्रूपमास्थायशंभुर्नारायणोव्ययः ॥ द्विधाकृत्वात्मनात्मानमचिंत्यात्मासनातनः ३ आजगाममहातेजायोगाचार्योमहायशाः ॥ सांख्याचार्यश्चमतिमान्कपिलोब्राह्मणोवरः ४ देवर्षिभिस्तुतावेतौब्रह्मब्रह्मविदांवरौ ॥ उभावपिमहात्मानावूर्जितौक्षेत्रतत्परौ ५ तौप्राप्तावूचतुस्तत्रब्रह्माणममितौजसम् ॥ परावरविशेषज्ञौपूजितौपरमर्षिभिः ६ बहुत्वाद्दृढपादश्चविश्वात्माजगतःस्थितिः ॥ ग्रामणीःसर्वलोकानांब्रह्मालोकगुरुर्वरः ७ तयोस्तद्वचनंश्रुत्वातिस्रोव्याहृतयोजपन् ॥ त्रीनिमान्कृतवाँल्लोकान्यथाहब्राह्मणीश्रुतिः ८

तत्रते पुलोकेपुस्त्रष्टव्येषुततोभूसंज्ञात्वैश्वानरात्पूर्वंवागतःसूक्ष्मंकारणंवापश्चादागतः स्थूलंव्यष्टिशरीरंप्रतीतिः ततोगतागतः तत्रभूसंज्ञकेस्थितः मानसमितिकल्पितत्वमुक्तं अतए वअव्ययंरज्जूरगवदनुत्पन्नत्वादेवनाशरहितं ॥ ९ ॥ सोत्पन्नइतिपादपूरणार्थःसुलोपःअग्रेस्थितः ॥ १० ॥ वदतेअभिमंत्रयते भासनोपसंभाषेत्यादिनातङ् ॥ ११ ॥ समान सोभूः मनःप्रधानात्मात्पितुरप्यन्यः कोमहानस्तीतिसंशयंसमुपस्थितः प्राप्तः कुर्मिकरोमि ॥ १२ ॥ यदिति सत्यंत्रैकालिकबाधरहितंअक्षरंअपरिणामि अष्टादशनिधंअष्टचद शचनिधाःपाशामतभेदेनयस्यतत्अष्टादशनिधंविधमितिपाठेअष्टादशबंधप्रकारं विधिमितिपाठेतैर्विधीयतेनियोज्यतइत्यर्थः निधाः पाशाः पाशावैनिधाइतिश्रुतेः सांख्यमतेअष्टौ निधाःकर्मेंद्रियाणिपंच १ ज्ञानेंद्रियाणिपंच २ मनआदिचतुष्कं ३ प्राणपंचकं ४ वियदादिपंचकं ५ कामः ६ कर्म ७ अविद्याचतैः पुर्यष्टकम् एतदेवाविद्यातिरिक्तप्रकृ ति पुरुषाधिकेश्वरसहितंदशकंयोगानांबंधकंयद्यप्येतेषांप्राणादिपंचकसामान्यकारणवृत्तितस्तथापिसामान्यविशेषभेदेनैवतस्यपृथक्त्वंज्ञेयं स्वंस्वंमतमुपन्यस्यपरमार्थमाहतुःय

तत्रभूसंज्ञकंचैवसमुत्पादितवान्प्रभुः ॥ ततोग्रेतद्गतस्नेहोब्रह्मामानसमव्ययम् ९ सोत्पन्नस्त्वग्रेब्रह्माणमुवाचमानसःसुतः ॥ करोमिकिंतेसाहाय्यंब्रवीतुभग वानिति १० ॥ ॥ ब्रह्मोवाच ॥ ॥ यएषकापिलोनामब्रह्मानारायणस्तथा ॥ वदतेवरदस्त्वांतुतत्कुरुष्वमहामते ११ ॥ ॥ वैशंपायनउवाच ॥ ब्रह्म णोक्तोतदाभूयःसंशयंसमुपस्थितः ॥ शुश्रूषुरस्मियुवयोःकिंकुर्मीतिकृतांजलिः १२ परमेश्वरावूचतुः ॥ ॥ यत्सत्यमक्षरंब्रह्मह्यष्टादशनिधंस्मृतम् ॥ यत्स त्यममृतंचैवपरंतत्समनुस्मर १३ ॥ वैशंपायनउवाच ॥ ॥ एतद्वचोनिशम्याथसययौदिशमुत्तराम् ॥ गत्वाचतत्रब्रह्मत्वमगमज्ज्ञानचक्षुषा १४ ततो ब्रह्माभुवंनामद्वितीयमसृजत्प्रभुः ॥ तंकल्पयित्वामनसामनसैवमहामनाः १५ ततःसोप्यब्रवीद्वाक्यंकिंकुर्वेतिपितामहम् ॥ पितामहसमाज्ञप्तोब्रह्माणंस मुपस्थितः १६ ब्रह्मभ्यांसहितःसोथभूयोभागवतींगतः ॥ प्राप्तश्चपरमंस्थानंसतयोःपार्श्वमागतः १७ तस्मिन्नपिगतेपुत्रंतृतीयमसृजत्प्रभुः ॥ मोक्षोपाये तिकुशलंभूर्भुवंनामतंविभुः १८

दिति सत्मूर्त्ततेजोन्नरूपम् यत्वाय्वाकाशा द्यव्याकृतंअमृतंप्रविलापनीयतयामृतयोरधिष्ठानंचयत्परंवस्तुसर्वविशेषशून्यंचिदेकरसंस्मरचिंतयाहमस्मीतिविद्धीत्यर्थः ॥ १३ ॥ उत्तरांदिशंपरांकाष्ठांचिदेकरसाख्या ॥ १४ ॥ ततइति भुवंसूत्रात्मानं महामनाः महांतिसर्वसृष्टिसमर्थानिमनांसिअवांतरोपाधिभूतानियस्यसमहामनाःअविद्योपाधिरीश्वरः मनसामनसैवेतिवीप्सायांद्विवचनंसर्वमनः भुवनां मानंस्त्रष्टुंसमर्थमित्यर्थः ॥ १५ ॥ ततः सः मनसः सुतः पितामहंमनसःपितरंमहांतंजीवंब्रह्माणंब्रह्माणौसांख्ययोगाचार्यौ ॥ १६ ॥ ब्रह्मभ्यामिति सतयोः पार्श्वमुपाग तःसन्ब्रह्मभ्यांसहितोभागवतींपूर्वोक्तांपरांकाष्ठांगतः योगविचारयोरपितस्यांकाष्ठायांलयोभवतीतिभावः ॥ १७ ॥ तस्मिन्नितिविराट्सूत्रयोरपिजनकत्वान्मोक्षोपायेतिकुशलं भूर्भुवंनामईश्वरंशुद्धसत्वोपाधिम् ॥ १८ ॥

तद्धर्मतयोःपूर्वयोर्धर्मपराकाष्ठानुसारित्वंईशोपिसांख्ययोगसंपत्त्यापरस्यांकाष्ठायां पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरितिश्रुतिप्रसिद्धायांप्रलयंगतइत्यर्थः ईश्वरग्रासस्तुरीयतुरी
यइतितापनीयेईश्वरग्रासस्यापिस्पष्टश्रवणात् एवमुक्तेनप्रकारेणत्रयोप्येतेमनसः पुत्राभूरादयः शंभोर्महात्मनः शंभुनामहात्मनासांख्ययोगाचार्यरूपिणाउक्ताउपदिष्टाः एकंसांख्यं
चयोगंचयःपश्यतिसपश्यतीतितयोर्वस्तुतत्वापेक्षयाएकत्वादेकवचनशब्दत्वम् ॥ १९ ॥ ततःकिमतआहतानिति यथादाह्यंदग्ध्वावह्निःस्वयोनौउपशाम्यति एवंसांख्ययोगाख्यंज्ञानं
प्रविलाप्यभूरादित्रयंप्रविलाप्यस्वयमपिब्रह्मणिलीनमित्यर्थः॥ २०॥ वेघलयात् घोरंवृत्तिलयात्घोरतरम् तयोर्निर्विकल्पंसमाधिंप्राप्तमित्यर्थः ॥ २१ ॥ ततोव्युत्थानमाह नररामे



जाससादसतद्धर्मतयोरेवागमद्गतिं ॥ एवंपुत्रास्त्रयोप्येतेउक्ताःशंभोर्महात्मनः १९ तानगृहीत्वासुतांस्तस्यप्रययौस्वांगतिंतथा ॥ नारायणोथभगवान्कपि
लश्चयतीश्वरः २० यंकालंतौगतौमुक्तौब्रह्मातत्कालमेवतु ॥ तेपेघोरतरंभूयःसतपःसंशितव्रतः २१ नररामततोब्रह्माप्रभुरेकस्तपश्चरन् ॥ शरीरार्द्धमथोभार्यां
समुत्पादितवाञ्छुभाम् २२ तपसातेजसाचैववर्चसानियमेनच ॥ सदृशीमात्मनोभार्यांसमर्थांलोकसर्जने २३ तयासहततस्तत्ररेमेब्रह्मातपोमयः ॥ सृजत्प्र
जापतीन्सर्वान्सागरान्सरितस्तथा २४ ततोमृजद्वैत्रिपदांगायत्रींवेदमातरम् ॥ अकरोच्चैवचत्वारोवेदान्गायत्रिसंभवान् २५ आत्मार्थेचासृजत्पुत्राँल्लो
ककर्तॄन्पितामहः ॥ विश्वेप्रजानांपतयोयेभ्योलोकाविनिःसृताः २६ विश्वेशंप्रथमंनाममहातपसमात्मजं ॥ सर्वाश्रमतमंपुण्यंनाम्नाधर्मंससृष्टवान् २७
दक्षंमरीचिंमित्रंचपुलस्त्यंपुलहंक्रतुम् ॥ वसिष्ठंगौतमंचैवभृगुमंगिरसंमनुं २८ अथर्वभूताइत्येतेख्यातांब्रह्ममहर्षयः ॥ त्रयोदशसुतानांतुयेवंशावैमहर्षि
णां २९ अदितिर्दितिर्दनुःकालाह्यनायुःसिंहिकामुनिः ॥ प्राधाचसुरसाक्रोधाविनताकद्रुरेवच ३० दक्षस्यैतादुहितरःकन्याद्वादशभारत ॥ नक्षत्राणिच
भद्रंतेसप्तविंशतिरूर्जिताः ३१ मरीचेःकश्यपःपुत्रस्तपसानिर्मितःप्रभुः ॥ तस्मैकन्याद्वादशेमादक्षस्ताअन्वमन्यत ३२ नक्षत्राख्यानिसोमायवसवेदत्तवानृ
षिः ॥ रोहिण्यादीनिसर्वाणिपुण्यानिजनमेजय ३३ लक्ष्मीःकीर्तिस्तथासाध्याविश्वाकामानुगाशुभा ॥ देवीमरुत्वतीचैवब्रह्मणानिर्मितापुरा ३४ एताः
पंचवरिष्ठावैसुरश्रेष्ठायभारत ॥ दत्ताधर्मायभद्रंतेब्रह्मणादृष्टधर्मणा ३५ यारूपार्द्धमयीपत्नीब्रह्मणःकामरूपिणी ॥ सुरभिःसातुगौर्भूत्वाब्रह्माणंसमुपस्थि
ता ३६ ततस्तामगमद्ब्रह्मामैथुनेलोकपूजितः ॥ लोकसर्जनहेतुज्ञोगवामर्थायभारत ३७

ति शरीरार्द्धमिति शुद्धेचिदात्मन्येवभोक्तृभोग्यरूपंप्रपंचंकल्पितवानित्यर्थः ॥ २२ ॥ अस्ययोगैश्वर्यमाहतपसेतिसएकधाभवतिप्रदीपवदावेशइतिश्रुतिन्यायाभ्यांसौभर्यादिव
तुल्यप्रभावाएवयोगिनांकल्पितादेहाइतिभार्यायास्तुल्यप्रभावत्वंपरयायुक्तमितिभावः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥
॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

जज्ञेचैकादशसुतान्विपुलान्धर्मसंहितान् ॥ रक्तसंध्याभ्रसदृशान्दहनोपमतेजसः ३८ तेरुदंतोद्रवंतश्चभगवंतंपितामहम् ॥ रोदनाद्रावणाच्चैवततोरुद्राइति
स्मृताः ३९ निर्ऋतिश्चैवसर्पश्चतृतीयोह्यजएकपात् ॥ मृगव्याधःपिनाकीचदहनोऽथेश्वरश्चवै ४० अहिर्बुध्न्यश्चभगवान्कपालीचापराजितः ॥ सेनानी
श्चमहातेजारुद्राएकादशस्मृताः ४१ तस्यामेवसुरभ्यांतुजज्ञेगोवृषभस्तथा ॥ आकृष्टाश्चतथामाषाःसिकताःप्रश्रयोऽक्षताः ४२ अजाश्चैवैकवंशाश्चतथैवा
मृतमुत्तमम् ॥ ओषध्यःप्रवरायाश्चसुरभ्यांताःसमुत्थिताः ४३ धर्माल्लक्ष्म्युद्भवःकामःसाध्यासाध्यान्व्यजायत ॥ च्यवनंप्रभवंचैवमीशानंसुरभींतथा ४४ अ
रुंधत्यारुणींचैवविश्वावसुबलध्रुवौ ॥ महिषंचतनूजंचविज्ञातमनसावपि ४५ मत्सरंचविभूतिंचसर्वाःसुरभिसूनवः ॥ सुपर्वतंविषंनागंसाध्यालोकनम
स्कृता ४६ वासघानुगतादेवीजनयामासवैसुतान् ॥ धरंवैप्रथमंदेवंद्वितीयंध्रुवमव्ययम् ४७ विश्वावसुंतृतीयंचचतुर्थंसोममीश्वरम् ॥ पंचमंपर्वतंचैवयोगें
द्रंतदनंतरम् ४८ सप्तमंचततोवायुमष्टमंनिर्ऋतिंवसुम् ॥ धर्मस्यापत्यमित्येवंसुरभ्यांसमजायत ४९ विश्वेदेवास्तुविश्वायांधर्माज्जाताइतिश्रुतिः ॥ दक्ष
यज्ञोमहाबाहुर्वसुश्चसुतएवच ॥ सुधर्माचमहाबाहुःशंखपाद्मंमहाबलः ५० उक्तैश्चैवमहाबाहुर्वपुष्मांश्चतथैवच ॥ चाक्षुषस्यमनोरेतेतथानंतंमहीरणौ
५१ विश्वावसुसुपर्वाणौविष्टरश्चमहायशाः ॥ रुरुश्चऋषिपुत्रोवैभास्करप्रतिमद्युतिः ५२ विश्वेदेवान्देवमाताविश्वेशान्जनयत्सुतान् ॥ मरुत्वतीमरुत्वंतो
देवानजनयच्छुभान् ५३ अग्निश्चक्षुर्हविर्ज्योतिःसावित्रोमित्रएवच ॥ अमरंशरवृष्टिंचसंक्षयंचमहाभुजम् ५४ विरजंचैवशुक्रंचविश्वावसुविभावसू ॥ अश्मं
तंचित्ररश्मिंचतथानिष्कुपितंनृपम् ५५ नहुषंचाहुतिंचैवचारित्रंबहुपन्नगम् ॥ बृहंतंचबृहद्रूपंतथैवपरतापनम् ॥ मरुत्वत्यांपुराधर्माज्जज्ञेपुत्रद्वयंशुभम्
५६ अदित्यांजज्ञिरेराजन्नादित्याःकश्यपादथ ॥ इंद्रोविष्णुर्भगस्त्वष्टावरुणोंशोर्यमारविः ५७ पूषामित्रश्चवरदोमनुःपर्जन्यएवच ॥ इत्येतेद्वादशादित्या
वरिष्ठास्त्रिदिवौकसः ५८ आदित्यस्यसरस्वत्यांजज्ञेपुत्रद्वयंशुभम् ॥ रूपश्रेष्ठंबलश्रेष्ठंत्रिदिवेरूपिणांवरम् ५९ दनुस्तुदानवान्जज्ञेदितिर्दैत्यान्व्यजायत ॥
कालानुकालकेयांश्चह्यसुरान्राक्षसांस्तथा ६० अनायुषायास्तनयाव्याधयश्चाधयस्तथा ॥ सिंहिकाग्रहमाताचगंधर्वजननीमुनिः ६१ प्रबोधाप्सरसांमाता
सुरसायांसरीसृपाः ॥ क्रोधायाःसर्वभूतानिपिशाचाश्चैवभारत ६२ तथायक्षगणाश्चैवगुह्यकाश्चविशांपते ॥ चतुष्पदानिसर्वाणिऋतेगावस्तुसौरभाः ६३

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

---

१ विधानमनवावपीति पाठ एकस्मिँल्लिखितपुस्तके । २ दक्षश्चैवमहाबाहुरितिएकस्मिँल्लिखितपुस्तके । ३ उत्तमहरिणौ इ०पा० ।

॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ यत्सूचितंप्राक्श्लोकाभ्यांरहस्यंसांख्ययोगयोः ॥ तद्विस्त
रार्थेनवमेनृपतेःप्रश्नईर्यते ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ब्रह्मणोह्नइति अहःशब्दःक्रतुवाचीब्रह्मसंबंधीक्रतुर्ज्ञानयज्ञइतियावत् स
१९ म्यक्क्षिप्यतेक्षेप्यंयेनतंसंक्षेपंसुसंग्रहंचाविस्तरं ॥ १२ ॥ ॥ इतिश्रीमहाभा०हरिवंशेभविष्यपर्वणिटीकायांपंचदशोऽध्यायः ॥ १५ ॥ छ ॥ सांख्ययोगात्मकोब्रह्मयज्ञोथदशमेमु अ०१५

अरुणोगरुडश्चैवविनतायांव्यजायत ॥ महीधरान्त्सर्पनागान्देवीकद्रूर्व्यजायत ६४ एवंविवृद्धिमगमान्विश्वेलोकाःपरस्परम् ॥ तदापौष्करकेराजन्प्रादुर्भा
वेमहात्मनः ६५ पुराणंपौष्करेचैवमयाद्वैपायनाच्छ्रुतम् ॥ कथितंतेनपूर्वेणयस्त्क्तंपरमर्षिभिः ६६ यश्चेदमग्र्यंप्रथमंपुराणंसदाप्रमत्तःपठतेमहात्मा ॥
अवाप्यकामानिहवीतशोकःपरत्रसस्वर्गफलानिभुंक्ते ६७ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिचतुर्दशोऽध्यायः १४ ॥ ॥ छ ॥ ॥ जनमेज
यउवाच ॥ ॥ श्रुतंनःपरमंब्रह्मन्त्स्ववंशचरितंमहत् ॥ दिव्यमन्योन्यसंभूतंमानितंबहुभिर्गुणैः १ छंदोभिर्वृत्तसंजातैःसमासैश्चसविस्तरैः ॥ लघुभिर्मधु
राभाषैर्ग्रथितंपदविग्रहैः २ त्रिवर्गेणाभिसंपन्नंधर्मेणार्थेनभोगिनाम् ॥ कामेनबहुरूपेणशरीरांतर्गतेनच ३ ब्राह्मणानांप्रभावैश्चयोधानांचपराक्रमैः ॥ वै
रनिर्यातनैश्चैवप्रतिज्ञानांचपारगैः ४ रिपुस्तवसुसंपन्नैर्नानुबंधःप्रचोदितः ॥ वंशयोर्निर्विनाशायनृपेणद्विजविग्रहात् ५ येचतस्मिन्महारौद्रेसंग्रामेनिहतानृ
पाः ॥ तेषांसर्वाणिराष्ट्राणिपुत्राःसर्वेप्रपेदिरे ॥ कौरवःप्रथितोराजाभगवच्छासनानुगः ६ धर्मश्चबहुधाप्रोक्तस्त्रयाणांवर्णसंपदाम् ॥ शूराणामपिविख्यातः
स्वर्गहेतुर्द्विजर्षभ ७ अनुग्रहार्थंभूतानांनोत्सेकायकथंचन ॥ चतुर्णांवर्णसंज्ञानांपृथक्पृथगनेकधा ८ गर्भवासंपतंतश्चभूतानांसंप्रबोधितः ॥ पृच्छतांदेवसं
चारोक्षीणेपुण्येचकर्मणि ९ दानेयश्चापिसंयोगःसचापिबहुधाकृतः ॥ द्वाभ्यांसंयोगविहितोमधुवाग्वचनंतयोः १० नतच्छक्यंमयाख्यातुंभारताध्यय
नंमहत् ॥ एकाहेनमहान्ब्रह्मन्नपिदिव्येनचक्षुषा ११ ब्रह्मणोह्नस्तुविस्तारंसंक्षेपंचसुसंग्रहम् ॥ श्रोतुमिच्छामिभगवन्महत्कौतूहलंहिमे १२ इतिश्रीम
हाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपंचदशोध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ शृणुष्वैकमनाराजन्पंचेंद्रियसमाहितः ॥ कथांकथ
यतोराजन्निर्विकारेणचेतसा १ ब्रह्मसंबंधसंबद्धमबद्धंकर्मभिर्नृप ॥ पुरस्ताद्ब्रह्मसंपन्नंब्रह्मणोयददक्षिणम् २

१९

निः ॥ साख्यंब्रह्मविचाराख्यंप्रस्तौतिक्षिप्रसिद्धिदम् ॥ १ ॥ शृणुष्वेति ॥ १ ॥ ब्रह्मसंबंधसंबद्धंवेदमूलकत्वेनसंबद्धंतादशमपिकर्मव्यावृत्तमित्याहबद्धमिति ब्रह्मैकविषयइत्य
र्थः यद्ब्रह्मणोब्रह्मविदःपुरस्तादेवसंपन्नंप्राक्सिद्धंप्रत्यग्रूपकत्वात्अदक्षिणंनकर्मप्राप्यंनतत्रदक्षिणायंतीतिश्रुतेः तत्शृणुइत्यनुषज्यते ॥ २ ॥

तदेवाह अव्यक्तंयत्तन्नामतोऽर्थतश्चकारणंजगद्धेतुःसदसदात्मकंमूर्तामूर्तरूपंनित्यंअविनाशिसांख्यप्रसिद्धंतत्तन्निष्कलःपुरुषःनिर्विशेषचिन्मात्रादात्मनोनातिरिच्यतेतत्रैवाध्यस्तामि
त्यर्थः तस्मात्पुरुषादात्मयोनिजःआत्मैवयोनिर्ज्ञापकोयस्यनाहंजानामीत्यनुभूतिसिद्धंअज्ञानंतस्माज्जातोहंकारःअहमितिप्रथमोध्यासःसंबभूव ॥ ३ ॥ दिव्यःशुद्धसत्वमयत्वात्
सर्वेषांभूतानांवियदादीनांपतिःजन्मनाशयोःस्वतंत्रःविभुर्व्यापकःअचिंत्यःसत्वेनाऽसत्वेनवाऽलोचयितुमशक्यःअतएवअव्ययःरज्जूरगवदुत्पन्नत्वान्नव्येतीतियुगानांतत्तद्युगधर्मा
णांशमकामदंभाचाराणांप्रभवः अहंकारादेवतेउत्पन्नाइत्यर्थःअव्ययोनित्योमूढानाम् ॥ ४ ॥ अचिंत्यत्वंविभुत्वंचविवृणोति अभूतः कालत्रयेपिनसिद्धःयस्मात्अजातःअनुत्प
न्नः एवंभूतोपिसर्वत्रसमतांगतःसन्सद्रूपोनाप्यसद्रूपइतिचेत्किंरूपइत्यतआह तत् अव्यक्तात्परंनारायणविदोविदुस्तदेवसइतियोजनासमुद्रतरंगवत् अहंकारश्चिन्मात्ररूपए
वेत्यर्थः ॥ ५ ॥ अस्यविश्वरूपत्वमाह सर्वतइतिलिंगव्यत्ययआर्षः ॥ ६ ॥ ननुसमुद्रेपिवाय्वाद्यभिघातंविनातरंगोनोत्पद्यतेकथंचिन्मात्रेऽद्वितीयेद्वितीयमज्ञानंसंबध्यतेयतअ
हंकारोत्पत्तिरित्याशंक्याह असतइति तत्राहंकारेअसतःकारणस्यसतःकार्यस्यचकारणंकल्पकंअविद्यास्ति अहंकारेस्थित्वैवचिदात्मन्यविद्याकल्प्यते नतुचिदात्मानितत्संबंधोयु

अव्यक्तंकारणंयत्तन्नित्यंसदसदात्मकं ॥ निष्कलःपुरुषस्तस्मात्संबभूवात्मयोनिजः ३ दिव्योदिव्येनवपुषासर्वभूतपतिर्विभुः ॥ अचिंत्यश्चाव्ययश्चैवयुगानांप्र
भवोव्ययः ४ अभूतश्चाप्यजातश्चसर्वत्रसमतांगतः ॥ अव्यक्तात्परमंयत्तन्नारायणविदोविदुः ५ सर्वतःपाणिपादंतंसर्वतोक्षिशिरोमुखम् ॥ सर्वतःश्रुतिमल्लो
केसर्वमावृत्यतिष्ठति ६ असतश्चसतश्चैवविज्ञेयंतत्रकारणं ॥ अव्यक्तोव्यक्तरूपस्थश्चरन्नपिनदृश्यते ७ विकारपुरुषोव्यक्तोह्यरूपीरूपमाश्रितः ॥ चरत्य
चिंत्यःसर्वेषुगूढोग्निरिवदारुषु ८ भूतभव्योद्भवोनाथःपरमेष्ठीप्रजापतिः ॥ प्रभुःसर्वस्यलोकस्यनामचास्येतितत्त्वतः ९

ज्यतइत्यर्थः यदाहुर्वृद्धाः अस्याविद्येत्वविद्यायामेवासित्वाप्रकल्प्यते ॥ ब्रह्मद्वारात्वविद्येयंनकथंचनयुज्यतइति कुतश्चिदात्मन्यविद्यानास्तीत्यतआह अव्यक्तइतिनिर्विकल्पत्वा
त्तस्येत्यर्थः तर्हितत्सत्वेकिंमानमतआह व्यक्तरूपस्थश्चरन्निति मातृमानप्रमेयेष्वचिदात्मत्वेनदृश्येष्वनुस्यूततयाचरन्नपिदृश्यतेनचादृश्यत्वादेवतदसिद्धिः मात्रादिःस्वेतरभास्यो
दृश्यत्वात्संमतवदितिन्यायेनतत्सिद्धेरितिभावः ॥ ७ ॥ एतदेवाह विकारेति विकारपुरुषोमात्रादिव्यक्तः तंरूपंरूपवंतंदृश्यंअरूपीचिदात्माआश्रितःसन्चरतिदृश्यंप्रकाशयति
शेषंस्पष्टं दारुष्वग्निरिवमात्रादिषुपृथगदृष्टोप्यात्मध्याननिर्मथनात्स्वाश्रयग्रासादाविर्भवतीतिभावः ॥ ८ ॥ प्रासंगिकआत्मतत्वनिरूपणंसमाप्यअध्यारोपापवादाभ्यांनिष्प्रपंचं
प्रपंच्यतइतिन्यायेनतत्प्रतिपत्त्युपायभूतंतस्मात्संबभूवात्मयोनिजइतिप्रक्रांतमध्यारोपमनुसरति भूतेति नामचास्यास्तीतिशेषः सोहमित्यग्रेव्याहरत्ततोऽहंनामाऽभवदितिश्रुति
प्रसिद्धंवक्ष्यमाणंइति तत्त्वतः ईदृग्रूपस्यषष्ठ्यर्थेतसिः ॥ ९ ॥

ईदग्रूपत्वमेवविशदयतिअपदादिति । अपद्यतेप्रमाणतोगम्यतेइत्यपदमज्ञानंतस्मात्पदः पद्यतेइतिपदोहंकारोजातः नहिशुक्तौरजतस्येवतत्कारणस्याज्ञानस्यग्रहोस्तिनारायणेउद्ध
वोयस्यतस्माच्छुद्धेप्यनादिकालमारभ्याध्यस्तादित्यर्थःअन्यथामुक्तानामपिपुनर्बाधापत्तिःस्यात् ननुसतःपदस्यकथमसतोऽपदाज्जनिः कथमसतःसंजायेतेतितदसंभवच्छ्रुतेरित्य
तआह अहंकारोप्यपदएवसन्ब्रह्मयोगेनअधिष्ठानसत्तानुवेधेनव्यक्तिपदत्वंप्राप्तः अत्रहेतुः कामतः अनादिरागादिवासनावशात्भ्रमतत्संस्कारधारानुवृत्तिरितिभावः ॥ १० ॥ ब्र
ह्मेति तंपदाख्यमहंनामपुरुषंब्रह्मभावेस्थितंविद्धि ज्ञानमप्रतिघंयद्वैराग्यंचजगत्पतेः ऐश्वर्यंचैवधर्मश्चसहासिद्धंचतुष्टयमितिस्मृतेः ब्रह्मिष्ठंजानीहि अतएवसः ब्रह्मेतिशब्दंल
ब्धवान्प्रभुत्वादिमांश्च ॥ ११ ॥ अहंत्वितिसहोवाचात्मनोनामेतिशेषहेतुःउदाहृतः श्रुतिप्रसिद्धेःसोहंनामाभवदित्यर्थः सहोवाचप्रजाःस्रक्ष्यामीतिपूर्वानुषंगेणपूरणीयम् सवै
नैवमेतेतस्मादेकाकीनरमतेइत्यादिश्रुतेरात्मज्ञोपिसोऽधिकारपरतंत्रतयासृष्ट्यादिपरोबभूवेत्यर्थः ॥ १२ ॥ एतदेवाहस्वभावादिति स्वस्मिन्नहमर्थेभवतीतिस्वभावः पूर्ववासना

अपदात्तुपदोजातस्तस्मान्नारायणोभवत् ॥ अव्यक्तोव्यक्तिमापन्नोब्रह्मयोगेनकामतः १० ब्रह्मभावेचतंविद्धिसशब्दंलब्धवान्प्रभुः ॥ प्रभुःसर्वस्यलोकस्य स्थावरस्येतरस्यच ११ अहंत्वितिसहोवाचप्रजास्स्रक्ष्यामिभारत ॥ प्रभवःसर्वभूतानांयस्यतंतुरिमाःप्रजाः १२ स्वभावाज्जायतेसर्वंस्वभावाच्चतथाभवत् अहंकारःस्वभावाच्चतथासर्वमिदंजगत् १३ सर्वव्यापीनिरालंबोह्यग्राह्योथजयोध्रुवः ॥ एवंब्रह्ममयोज्योतिर्ब्रह्मशब्देनशब्दितः १४ अव्यक्तोव्यक्तिमापन्नः पंचभिःक्रतुलक्षणैः ॥ धारयन्ब्रह्मणोव्यक्तंविविधंचिंतितंत्वरन् १५ अथमूर्तिंसमाधायस्वभावाद्ब्रह्मचोदितः ॥ ससर्जसलिलंब्रह्मायेनसर्वमिदंततम् १६ वायुंपूर्वमथोदृष्ट्वायोधातुर्धातृसत्तमः ॥ धारणाद्धातृशब्दंचलभतेलोकसंज्ञितं १७ तदेतद्वायुसंभूतंकृत्स्नंजगदभूत्पुरा ॥ एतद्देवैरतिक्रांतंपूर्वमेवसरस्वति १८

अहमितिवासनापिस्वभावादेवेत्याहाहंकारइति ॥ १३ ॥ सर्वव्यापीसमष्ट्यभिमानित्वात्निरालंबः असंगत्वज्ञानात् अतएवाग्राह्यः अनभिभाव्योज्ञानेनजयोजयवान् ध्रुवःध्रु
वंज्योतिरिवालिप्तः ॥ १४ ॥ सब्रह्मशब्दितःस्वरूपेणाव्यक्तोपिपंचभिर्भूतसूक्ष्मैः क्रतुलक्षणैःसंकल्पमात्रभावैःउपाधिभिर्व्यक्तिंपुरुषाकृतिंआपन्नःब्रह्मणोवेदात्व्यक्तंसर्वंभौति
कंविविधंचिंतितंसंकल्पमात्रेत्थंत्वरन्धारयन् पोषयितुंसमनसावाचंमिथुनंसमभवदितिश्रुतेर्वेदोक्तप्रकारेणसर्वंस्रष्टुंमूर्तिमादायसलिलंससर्जेतिसंबंधः ॥ १५ ॥ अथेति येनस
र्वमिदंततंतेनब्रह्मणास्वभावेनचचोदितः ॥ १६ ॥ वायुमिति पूर्वंसलिलसृष्टेःप्राक् धातुरीश्वरस्यवशगानांधातॄणांमरीच्यादीनांमध्येसत्तमःलोकसंज्ञितंलोकैःसंकेतितं प्रसिद्ध
मित्यर्थः ॥ १७ ॥ तदेतदिति वायोःस्थूलादग्न्यादिक्रमेणसंभूतंएतज्जगत्पार्थिवमाप्यंचतैजसैर्देवैःशमादिमद्भिरतिक्रांतम् उत्तरोत्तरमुत्कृष्टमेवपदंतेधिरोहंतिनमनुष्यत्वंयांती
त्यर्थः सरस्वतिसमुद्रेस्थितमितिशेषः ॥ १८ ॥

पृथिवीशब्दंपृथिवीशब्दार्थंभुवंलोकावस्थानार्थमिच्छतातोयंसामुद्रंपृथक्त्वंघनत्वाच्चधर्मभेदात् गमितंप्रापितम् तदेतन्निखिलेनलोकेनोपलभ्यतेभूजलयोः पृथक्त्वम् ॥ १९॥
फलत्वात्कार्यत्वात्सलिलेस्वकारणेसीदमानाविशीर्यमाणासलिलोद्भवोजलोद्भूतभूदेवताख्यःपुरुषोव्याजहार वचनव्यत्ययआर्षः ॥ २० ॥ ऊर्ध्वइति गंभीरेतोयविवरेमूर्तेः
काठिन्यात्विक्षोभितमंतरंयथास्यात्तथासंसीदामीतिसंबंधः लोष्टपिंडवद्विशीर्णाभवामीत्यर्थः ॥ २१ ॥ ततोमूर्तिमतीपृथ्वीविषयैषिणीस्थानैषिणीसर्वत्रसंभूताजातायथायोगेनय
थोक्तेनयोगेनवीशीर्यमाणत्वेनहेतुनास्थैर्यार्थिनीसतीसर्वदिगभिमुखंमामुद्धरस्वेत्याक्रोशंकृतवतीत्यर्थः ॥ २२ ॥ श्रुत्वाचेति हरिरितिशेषः ॥ २३ ॥ उद्धृत्येति हरिरवतारकार्यंकृ
त्वातिरोभूतइत्यर्थः ॥ २४ ॥ येनभूरुद्धृतातस्यरूपमाह यत्तदिति ॥ २५ ॥ धात्रातेनैवईश्वरेणाद्यापिपृथिवीधार्यतेशेषकूर्मादिरूपेणेत्याह अद्यापीति मनसामनोमयेन ॥ २६
एवंधृतापिधराशुष्कतटाकतलवद्विदीर्णाभूदित्याहभित्त्वेति समुद्भवंभूमिजनकंतोयंइदमेवाविवरंमेरुमूलप्रवेशस्थानामितिवक्ष्यति ॥ २७ ॥ एवमतितापात्सूर्यमंडलाज्जलमयंसो

पृथक्त्वंगमितंतोयंपृथिवीशब्दमिच्छता ॥ घनत्वाच्चद्रवत्वाच्चनिखिलेनोपलभ्यते १९ फलत्वात्सीदमानाचसलिलेसलिलोद्भवः ॥ व्याजहारशुभांवा
णींसमंतात्पूरयन्निव २० ऊर्ध्वोहंस्थातुमिच्छामिसंसीदाम्युद्धरस्वमाम् ॥ गंभीरेतोयविवरेमूर्तिविक्षोभितांतरम् २१ ततोमूर्त्तिधरादेवीसर्वभूतप्ररोहिणी
यथायोगेनसंभूतासर्वत्रविषयैषिणी २२ श्रुत्वाचगदितंतस्यागिरंतांचसुभाषिताम् ॥ वराहरूपमास्थायनिपपातमहार्णवे २३ उद्धृत्यसोवनिंतोयात्कृत्वा
कर्मसुदुष्करम् ॥ समाधौप्रलयंगत्वाप्रलीनोनचदृश्यते २४ यत्तद्ब्रह्ममयंज्योतिराकाशमितिसंज्ञितम् ॥ तत्रब्रह्मासमुद्भूतःसर्वभूतपितामहः २५ अद्या
पिमनसाधात्राधार्यतेसर्वयोगिना ॥ ज्ञानयोगेनसूक्ष्मेणप्रजानांहितकाम्यया २६ भित्त्वातुपृथिवीमध्यमुपयातिसमुद्भवं ॥ तपनस्तूर्ध्वमातिष्ठन्नरश्मिभिः
सहसन्निव २७ तस्यमंडलमध्यात्तुनिःसृतंसोममंडलं ॥ ससनातनजोब्रह्मासौम्यंसोमत्वमन्वगात् २८ सोममंडलपर्यंतात्पवनःसमजायत ॥ तदक्षरमयं
ज्योतिस्तेजोभिरभिवर्द्धयन् २९ सतुयोगमयाज्ज्ञानात्स्वभावाद्ब्रह्मसंभवात् ॥ सृजतेपुरुषंदिव्यंब्रह्मयोनिंसनातनं ३०

ममंडलमभूदित्याह
तस्येति ससोममंडलाभिमानीसनातनः परमात्माब्रह्माब्राह्मणवर्णः ब्रह्मब्राह्मणआत्मनेतिश्रुतेः आद्यत्वाच्चब्राह्मणानांराजा सोमोस्माकंब्राह्मणानांराजेतिश्रुतेः सोमत्वम्
उमाब्रह्मविद्यातयासहितःसोमः तस्यभावःसौम्यम् सउत्पन्नमात्रोब्रह्मविस्त्वंअन्वगादित्यर्थः ॥ २८ ॥ सोमेति सोमस्योक्तरूपस्यमंडलपर्यंतान्मुखप्रदेशात्पवनोनिश्वासः सम
जायत तत्सनिश्वासः अक्षरमयंवर्णात्मकंवेदरूपंज्योतिःसर्वार्थप्रकाशकंजातमितिशेषः निश्वसितमेतद्यदृग्वेदइत्यादिश्रुतेः ॥ २९ ॥ सतुसूर्यमंडलांतानामाधिदैविकानामर्था
नांस्रष्टासोमाख्यादीश्वराद्वेदंप्राप्ययोगमयात्ज्ञानात्जन्मांतरीययोगप्रभावोद्भुतप्रकाशात् वेदंतेजोभिः स्वबुद्धिबलेनवर्द्धयन्नुपबृंहयन्वेदार्थालोचनपूर्वकंस्वभावात्पूर्ववासनारू
पाद्ब्रह्मसंभवाद्ब्रह्मसत्त्वयोद्बोधिताद्दिव्यंद्योतमानमतएवब्रह्मयोनिंवेदस्यास्पदभूतंसनातनंपूर्वकल्पकृतसंस्थानंपुरुषंशिरःपाण्यादिमंतंअध्यात्मिकंसृजतेइतिश्लोकद्वयसंबंधः ॥३०॥

अस्यशरीरस्यपंचभूतमयत्वंअथयच्छोहितंश्लेष्मोरतस्ताआपइत्यादिश्रुत्युदितंदर्शयतिद्वाभ्यां भवत् अड भावआर्षःअभवदित्यर्थः ॥ ३१ ॥ पुरुषात्ईश्वरात्प्राप्तःपुरुषोभावः चैत न्यंकर्तृएनंदेहंवायुनाकरणेनस्पंदयतेचालयतेसंघातात् एवंपंचानांभूतानांसंघातंप्राप्यतत्रज्योतिसंभवः ज्योतिषांइंद्रियाणांजाठरस्यचसंभवउद्भवोभवति अग्निर्वाक्भूत्वामुखं प्राविशदित्यादिश्रुतेः अतएवमहान्कृत्स्नस्यब्रह्मांडस्यात्रप्रवेशात् योगिल्हदयदर्पणेतदभिव्यज्यतइत्यर्थः ज्योतिसंभवइतिसलोपआर्षः ॥ ३२ ॥ भूतात्माजीवः समेपांचभू तिकत्वात्नतिर्यगादितारतम्यरहितेतस्मिंस्तस्मिन्त्सर्वस्मिन्नास्तिसनातनोऽनादिकालमारभ्येत्यर्थः गुहायांबुद्धौनिहितंज्ञानंसत्यंज्ञामनंतंब्रह्मयोवेदनिहितंगुहायामितिश्रुतिप्रसिद्धम् किंतत्ज्ञानमित्यतआह यज्ज्ञःयस्यज्ञोज्ञातायज्ज्ञः सनातनईश्वरः यस्यज्ञानस्यज्ञाताईश्वरोभवतीत्यर्थः एतेनपरमेव्योमन्सोश्नुतेसर्वान्कामान्त्सहेतिश्रुत्यर्थोदर्शितः ॥ ३३ ॥ यःसना तनःसएवजीवइत्याह तपनस्येतितपनस्यप्रकाशकस्य अग्निरिवाग्निर्भोक्तादेहिनांदेहाभिमानिनांमूढानांदृष्ट्यायोभोक्तासएवतत्त्वदृष्ट्याईश्वरइत्यर्थः तस्यानैश्वर्यंसंततादेहाध्यासादि

द्रवंयत्सलिलंतस्यघनंयत्पृथिवीभवत् ॥ छिद्रंयच्चतदाकाशंज्योतिर्यच्चक्षुरेवतत् ३१ वायुनास्पंदतेचैनंसंघाताज्ज्योतिसंभवः ॥ पुरुषात्पुरुषोभावःपंचभू तमयोमहान् ३२ भूतात्मावैसमेतस्मिंस्तस्मिन्देहःसनातनः ॥ गुहायांनिहितंज्ञानंयोगाद्यज्ज्ञःसनातनः ३३ तपनस्यैवतद्रूपंयोग्निर्वसतिदेहिनाम् ॥ शरीरेनित्यशोयुक्तेधातुभिःसहसंगतः ३४ स्वभावात्क्षयमायांतिस्वभावाद्वयमेतिच ॥ स्वभावाद्विंदतेशांतिंस्वभावाच्चनविंदति ३५ इंद्रियैरतिमूढात्मा मोहितोब्रह्मणःपदे ॥ संभवंनिधनंचैवकर्मभिःप्रतिपद्यते ३६ यावत्तद्ब्रह्मविषयंनोपयातीहतत्त्वतः ॥ तावत्संसारमाप्नोतिसंभवांश्चपुनःपुनः ३७ इंद्रियै र्व्यतिरिक्तोवैयदाभवतियोगवित् ॥ तदाब्रह्मत्वमापन्नःप्रलयाग्रेप्रतिष्ठति ३८ प्रतिषिद्धममुंलोकंब्रह्मवान्त्सभवत्युत ॥ नचरागव्ययैर्यातिनचसज्जातिकर्हि चित् ३९ आगतिंत्वंगतिंचैवनिधनंसंभवंतथा ॥ भूतेभ्योवेत्तिसर्वज्ञःपरांसिद्धिमुपागतः ४० आत्मनोगतयश्चैवतथाविषयगोचरे ॥ पुरस्तात्कर्मनिर्वृत्तेःपदे ब्रह्माप्रतिष्ठितः ४१

त्याहशरीरइति धातुभिः पंचभूतैः देहयोगाद्दासोपीतिन्यायेनदेहाभिमानात्परस्यापिज्ञानैश्वर्यतिरोभावइत्यर्थः ॥ ३४ ॥ योयंधातुभिः सह संगतःस्वभावात्पूर्वसंस्कारात्क्षयंऐश्वर्यभयंअनैश्वर्यंचाप्नोतिशांतिसद्भावाभावाभ्यामित्याहस्वभावादिति॥३५॥ इंद्रियकिंकरस्यकर्मबंधोस्ति ॥ ३६ ॥ यावत्ज्ञानेन ब्रह्माख्यं आनंदरूपंविषयंनाप्नोतितेनचसंभवाख्यांजन्ममालांप्राप्नोतीत्याहद्वाभ्याम् ॥ ३७ ॥ एवमशांतस्यदुःखमुक्त्वाशांतस्यानंदावाप्तिमाहइंद्रियैरिति योगबलेनइंद्रियैर्व्यतिरिक्तः प्रलयाग्रेइंद्रियादिषुस्वरूपानंदेप्रतिष्ठांप्राप्नोतीत्यर्थः ॥ ३८ ॥ प्रतीति अमुंसविकल्पानंदाख्यंलोकंप्रतिषिद्धंकृत्वाब्रह्मवान्निर्विकल्पपदभाक्योगफलंरागादिजयंसर्वज्ञत्वंचा हसार्द्धाभ्यांरागव्ययैरितिरागव्ययैरागादिकृतैरपचयैः ॥ ३९ ॥ आगतिंगर्भेप्रवेशंगातिंगर्भान्निर्गमनंनिधनंमरणम् भूतेभ्योदृष्टेभ्योवेत्तिनतुस्वयमागत्यादीन्प्राप्नोतीत्यर्थः ॥ ४० ॥ आत्मनइति गतयोमुक्त्युपायास्तान्जानीते तथाविषयगोचरं अतीतानागतादिविषयंपुरस्तात्कर्मनिर्वृत्तेःभाविनिकर्मफलानि पदेपरस्यांकाष्ठायांब्रह्मब्रह्मवित् ॥ ४१ ॥

चित्तग्रंथीन्चित्तंबध्नतःकामादीन् यातनाःसुखदुःखसाक्षात्काराः तत्स्मरणानि प्रलोभेन प्रबलेनलोभेनभिद्यमानाः अनेकशाखाःवासनावलीर्निरुंध्यात् वायुभिन्नमर्णवमिवयाः पुरुषंक्षोभयंतीत्यर्थः ॥ ४२ ॥ पच्यतइति एवंवासनादिरोधंकुर्वतःपरेभ्यःकामादिभ्यःनीलंमलिनंहृदयंबुद्धिःपच्यतेविशुद्धाभवति इंगालइवाग्निनासितभस्मशेषः केनचपच्यते ज्ञानचक्षुषा चष्टेनेनेतिचक्षुस्तेजः ज्ञानाग्निनेत्यर्थःकिंतज्ज्ञानमतआह ब्रह्मप्रोक्तंवेदप्रोक्तंयेनज्ञानेनइहजीवत्येवदेहेआत्माजीवः तद्यथाहिनिलयिनिवल्मीकेमृतापत्यस्ताशयीतैवमे वायमशरीरः सचक्षुरचक्षुरिवसमानाअमानाइवेत्यादिश्रुतिभ्यःसर्वबंधनिर्मुक्तोभवतीत्यर्थः ॥ ४३ ॥ किंचसृजेदिति परंहार्दाकाशस्थं पारिपक्वयोगीतुतेजोमूर्त्तिःसूक्ष्मभूतमयश रीरः स्वप्नाभिमानीवइहलोकंव्यावहारिकमपिलोकमविद्धमच्छिद्रंसाकल्येनविश्वामित्रादिवत्सम्यक्सृजेत् भूतानामुत्पन्नत्वाद्भौतिकसर्गविषयमेवयोगिनः सामर्थ्यमितिज्ञे यंशास्त्रांतरन्यायेजगद्व्यापारवर्जमित्युक्तेः ॥ ४४ ॥ तिर्यगिति नियमोपमैः नियम्यतेनिगृह्यतेऽनेनेतिव्युत्पत्तेर्नियमोनिगडःतत्तुल्यैः तानिकर्माणि अपिशब्दात्तिर्यग्यो

चित्तग्रंथींश्चमनसारुंध्यात्पूर्वांश्चयातनाः ॥ भिद्यमानाःप्रलोभेनवायुभिन्नमिवार्णवम् ४२ पच्यतेहृदयंनीलंपरेभ्योज्ञानचक्षुषा ॥ ब्रह्मप्रोक्तमिवात्मावै विमुक्तोदेहबंधनात् ४३ सृजेदपिपरंलोकंसंहरेदपिविद्यया ॥ तेजोमूर्तिरिवाविद्धमिहलोकंचसंसृजेत् ४४ तिर्यग्योनीगतांश्चैवकर्मभिर्नियमोपमैः ॥ ता न्यपिप्रतिमुच्येतब्रह्मयुक्तेनचेतसा ४५ अक्षरंचक्षरंचैवयोगकर्माभिविद्यते ॥ नक्षरंविद्यतेतत्रयद्ब्रह्मकर्मभिर्ध्रुवम् ४६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरि वंशेभ०षोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ पृथिव्यांयत्कृतंछिद्रंतपनेनविवर्द्धता ॥ तस्मिन्न्यस्तोथमैनाकःस्वभावविहितोच लः १ पर्वभिःपर्वतत्वंचलभतेनामसंज्ञितम् ॥ अचलादचलत्वंचस्वभावान्मेरुरेवसः २

निगतान्जीवान्प्रतिमुच्येतप्रतिमोचयेत्संकल्पासिद्धत्वात्ब्रह्मयुक्तेनब्रह्मणियोजितेन ॥ ४५ ॥ अक्षरमिति योगकर्मयोगाख्यंकर्मअक्षरंमोक्षंक्षरंभोगंचअभिव्याप्यविद्यते योगे एवकृत्स्नंकर्मफलमप्यंतर्भूतमित्यर्थः एवंसर्वंतदभिसमैतियत्किंचप्रजाःसाधुकुर्वंतीतिश्रुतेः नन्वेवंमोक्षेपिक्षरस्यान्वयःस्यात्तेनमुक्तेर्निविशेषत्वंभज्यतेत्याशंक्याह नेति यत् ध्रुवं ब्रह्मतत्रकर्मभिरुपलक्षितंक्षरंनविद्यते इतियोजना प्रारब्धकर्मणावष्टब्धेदेहेसत्येवयोगिनिक्षरस्यान्वयोनविदेहकैवल्यावस्थायामितिभावः ॥ ४६ ॥ इतिश्रीहरिवंशेभविष्यपर्व णिटीकायांषोडशोध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ एकादशेकर्मफलपरिच्छेदाययोगभूः ॥ वर्णिताथाक्षरप्राप्त्यैयोगश्चोक्तोयथाविधि ॥ ॥ १ ॥ सोमोत्पत्तिप्रसक्तानुप्रसक्तंसंक्षेपेणअंतरालंयोगंअभिधायप्रकृतमध्यारोपमनुसरन्भित्त्वापृथिवीमध्यमित्यादिपूर्वमुक्तंभूमेःसच्छिद्रत्त्वमनूद्यतत्रच्छिद्रेमेरुमूलंनिहितमि त्याह पृथिव्यामिति मीनंहिंसितंअकंदुःखंयैस्तेमीनाकाः नित्यसुखिनोदेवास्तेषामयंमैनाकःमीञ्हिंसायां अस्मात्फेनमीनाविवितिनिष्ठातस्यनत्त्वंनिपात्यतेस्वभावेनसंस्कारेण पूर्वोक्तसलिलादिवद्विहितः अतएवाचलःचित्तवतास्वभावस्यपरिवर्तयितुमशक्यत्वात् ॥ १ ॥ एवंनिर्दुःखत्वंतस्योक्त्वासुखप्रदत्वमप्याह पर्वभिरिति पर्वाणिपूरयंतिकामा

नितिचिंतामणिकामधेनुकल्पद्रुमादीनिविद्यंतेस्मिन्नितिपर्वतःसंज्ञितंसंकेतितंयोगरूढंपंकजादिपदवदित्यर्थः अचलात्‌अचलनात्‌ एवंविधोपिस्वभावात्कल्पनामात्रत्वान्मेरुहरि वमितएवनतत्रात्यंतिकोदुःखनिवृत्तिःसुखप्राप्तिर्वास्तीत्यर्थः उक्तहेतोरेवप्रक्षेपमप्यएवेतिवार्थः माङ्मानेमीत्रप्रक्षेपेऽस्माद्वामायोरुरेच्चेतिवामियिभ्यांहरितिवानिष्पन्नस्यमेरुशब्दस्यो कार्थत्वात्‌ ॥ २ ॥ तस्येति व्यक्तःशिरःपाण्यादिमान्‌ ज्योतिसंभवेत्युक्तार्थं तेनैवव्यक्तेनैववस्तुवृत्त्यापरमात्मनासता ॥ ३ ॥ इदमेवाह यत्तदिति शिरसोंतरसहस्रारेवेदांतग र्भेवापुरुषसूक्तप्रतिपाद्योविग्रहःसंस्थानंयस्यतत्पुरुषविग्रहम्‌ ॥ ४ ॥ वदनादिति तस्यवदनात्‌ निष्क्रांतंचतुर्वेदनंविद्धोतिशेषः द्विजोत्तमैःसहनिष्क्रांतंद्विजानांउत्तमाः मुखा दिंद्रश्चाग्निश्च॰ब्राह्मणोस्यमुखमासीत्‌ आसन्यंप्राणमूचुरितिईश्वरमुखजत्वेनश्रुतिप्रसिद्धास्तैःसहेत्यर्थः ॥ ५ ॥ तेषुब्राह्मणान्स्तौतिवक्त्रमिति तस्येत्यनुवर्त्ततेतस्यवक्त्रंब्रह्मवेदः समुद्भूतोनिश्वसितरूपेणयस्मात्तथाब्रह्मातस्यवेदस्यधारकोब्राह्मणः सब्राह्मणानांब्रह्मोद्भवानामग्न्यादीनांमध्येमुख्यः ब्रह्मब्राह्मणआत्मनेतिश्रुतेरर्थमाहतदेवेति भावत्वंपूज्यतम

तस्यपृष्ठेसुविस्तीर्णेनगस्यसुमहर्द्धिमान ॥ तस्मिंस्तुपुरुषोव्यक्तोवसतिज्योतिसंभवः ॥ विहितश्चस्वभावेनतेनैवपरमात्मना ३ यत्तद्ब्रह्ममयंतेजोनिहितं शिरसोंतरे ॥ तस्यज्योतिर्मयंरूपंदीप्तंपुरुषविग्रहम्‌ ४ वदनादभिनिष्क्रांतंज्वलंतमिवतेजसा ॥ चतुर्भिर्वेदनैर्युक्तंचतुर्भिश्चद्विजोत्तमैः ५ वक्त्रंब्रह्मसमुद्भू तंब्रह्माब्राह्मणपुंगवः ॥ तदेवतन्महाभूतंपुनर्भावत्वमागतम्‌ ६ उद्धृताष्टथिवींदेवीपुस्तात्सलिलाशयात्‌ ॥ ब्रह्मत्वंब्रह्मणःस्थानादलोकोलोकतांगतः ७ पदसंधौब्रह्मलोकंशृंगंमेरोस्तदाभवत्‌ ॥ उच्छ्रितंयोजनशतंसहस्रशतमेवच ८ एवमेवचविस्तारंचतुर्भिर्गुणितंगुणैः ॥ अथवानैवसंख्यातुंशक्यंभूतेनके नचित्‌ ॥ समाःसहस्रंबहुभिरपिदिव्येनतेजसा ९ चतुर्भिःपार्श्वविस्तारैःशिलाभिरभिसंवृतैः ॥ नगस्ययस्यराजेंद्रविस्तारैःशतयोजनैः १० कोटिकोटी शतगुणैर्गुणितब्रह्मवादिभिः॥ योगयुक्तैःसदासिद्धैर्नित्यंब्रह्मपरायणैः ११ मरुद्भिःसहदेवेंद्रैरुद्रैर्वसुभिरेवच ॥ आदित्यैर्विश्वसहितैररक्षवसुधाधिपान्‌ १२

त्वंब्राह्मणत्वमितियावत्‌ भावःपूज्यतमोलोकेइत्यनेकार्थमंजरी ॥६॥ तदेवेत्युक्तांक्तिन्महद्भूतमित्यतआह उद्धृतेति येनेतिशेषः ब्रह्मणःस्थानंमेरुपृष्ठंप्राप्यतदेवंब्रह्मत्वंचतुर्मुखत्वं गतंएवमेवलोकोपिधरोद्धर्त्तालोकतांव्यक्ततांगतः ॥ ७ ॥ पदेति पदयोःसंधौ मेरोःशृंगंब्रह्मलोकं ब्रह्मपरंवस्तुलोक्यतेसाक्षात्क्रियतेयत्रस्थितैस्तद्ब्रह्मलोकंक्रममुक्तिस्थानमित्यर्थः मेरोःकल्पनामात्रशरीरत्वान्मेरुमरीचिकाह्लादगांभीर्यस्यवनेयत्ताप्रमाणमस्तीत्याहसार्द्धेन उच्छ्रितमिति तेजसाज्ञानेन॥८॥९ ॥ उच्छ्रायविस्तारयोरिवपरिधेरप्यनियममाह चतुर्भि रितिशिलाभिरुपष्टंभकशैलस्थानीयैर्धर्मज्ञानवैराग्यैश्वर्यैरभितःसंवृतैःपार्श्वानांविस्तारैः ॥ १० ॥ पूर्वोक्तपरिणामैश्चतुर्भिर्गुणितैश्चतुष्कोणोमेरुर्भवतीतिवौद्धपक्षमुपाक्षिप्यमानसत्त्वात्‌ परिमाणनियमोनास्तीत्याह सार्द्धेन नगस्येतिगुणितंपरिमाणमितिशेषः ब्रह्मविद्भिर्मायायाअनंतत्वादानंत्येननिश्चितमित्यर्थः ॥ ११ ॥ मरुद्भिरित्यादिचत्रिभिःकालापकं भगवा न्विष्णुनासहतेनब्राह्मेणवपुषावसुधाधिपान्पृथिवींचररक्षेतिसंबंधःशुद्धचिदात्मामायोपाधिनारूपेणप्रकृतेनमेर्वेधिपतेर्ब्रह्मण श्चरूपेणशरीराभिमानिनोजीवान्‌ शरीरंचराक्षितवान्‌

भोगमोक्षप्रदकर्मज्ञानोपदेशेनेत्यर्थः किंभूतां पृथिवींमरुदादिभिस्तत्रावयवदेवतादिभिः    विवस्वद्वरुणाभ्यांतद्दैवत्यतेजोजलाभ्यांचसंघातंगमिताम् लिंगात्मविशिष्टांतेजोबन्नात्मि कामित्यर्थः किंभूतेनब्राह्मेणवपुषाब्रह्मनिर्विशेषरूपंप्राप्तेनप्राप्तवता ॥ १२ ॥ १३ ॥ किंतद्ब्रह्मेत्यतआह यत्तदिति नकेवलंवेदपारगैरपिबहुभिर्नियमैःकर्तृभिः प्राप्तैरनुगतैः हृटाकृष्टानयेषांनियमाः अपितुदासभूतास्तादृशैर्ब्राह्मणैरित्यर्थः ॥ १४ ॥ १५ ॥ एवमिति एवंअन्योन्याश्रयेणएतेत्रयोलोक्यंतइतिलोकाः पृथिवीमरुदादिविष्णुशब्दिताः वि राट्सूत्रांतर्यामिणः ब्राह्मेहनिब्रह्मप्रापकेयोगयज्ञेसमाहिताः तत्रस्थत्वात्तत्रैवानुभूयंतइत्यर्थः तत्रैवाहनिअव्यक्तंब्रह्मचयत्प्रतिष्ठितंअनुभूयतेयोगिभिः तत्प्राणेप्राणाख्येउपाधावप्यह मितिजीवरूपेणव्यक्तंसत्प्रतिष्ठितंशुद्धंब्रह्मैवसंसरतीत्यर्थः ॥ १६ ॥ अस्यमुक्त्युपायमुपदिशन्रक्षणमेवाध्यायशेषेणाहब्रह्मणइति ब्रह्मणईश्वरस्यप्रभावेननिश्वसितमात्रेणवेदे नप्रचोदितंयत्नियतंनित्यंकर्मअकरणात्प्रत्यवायजनकंएतद्धितमित्युत्तरेणसंबंधः    शश्वत्निरंतरंअच्छलवादिनांभावेनशुद्धचेतसाप्रवर्त्तमानंक्रियमाणंकर्मयेषांवाचापिच्छलंकदा चिदपिनास्तिकिमुतकर्मणा तैःकृतंवेदोक्तंकर्महितमित्यर्थः ॥ १७ ॥ आसक्तिंनिषेद्धुंकर्मफलस्येयत्तामाह यदेकमिति यत्पदंदिष्टत्वंगमितंकर्मजसुकृतफलत्वंप्रापितंतत्ब्रह्मणःपा

ररक्षपृथिवींचैवभगवान्विष्णुनासह ॥ विवस्वद्वरुणाभ्यांचसंघातंगमितांनृप १३ तेनब्राह्मेणवपुषाब्रह्मप्राप्तेनभारत ॥ यत्तद्विष्णुमयंतेजःसर्वत्रसमतांग तम् १४ यत्तद्ब्रह्मेतिवैप्रोक्तंब्राह्मणैर्वेदपारगैः ॥ नियमैर्बहुभिःप्राप्तैःसत्यव्रतपरायणैः १५ एवमेतेत्रयोलोकाब्राह्मेहनिसमाहिताः ॥ अहनिब्रह्म चाव्यक्तंव्यक्तंप्राणेप्रतिष्ठितम् १६ ब्रह्मणोनियतंकर्मप्रभावेनप्रचोदितम् ॥ प्रवर्त्तमानंभावेनशश्वदच्छलवादिनाम् १७ एतद्धितमितिप्रोक्तंब्राह्मणैर्वेदपा रगैः ॥ यदेकंब्रह्मणःपादंदिष्टत्वंगमितंपदम् १८ बहुत्वाद्विप्रभावानांविश्वशब्दःप्रयुज्यते ॥ ब्राह्मणैर्ब्रह्मभूतात्मासत्यव्रतपरायणैः १९ विश्वरूपंम नोरूपंबुद्धिरूपंचमानयन् ॥ एवंद्वंद्वंसभगवान्प्रथमंमिथुनंसृजत् २० सएवभगवान्विश्वोदेव्यासहसनातनः ॥ विधायविपुलान्भोगान्ब्रह्माचरातिसानुगः २१

दंलेशमात्रंप्राहुः श्रुतयः पादोस्यविश्वाभूतानीत्याद्याइत्यर्थः ॥ १८ ॥ बहुत्वादिति यस्यपादोविश्वंतद्ब्रह्मभूतात्मानित्यासिद्धआत्मानतुकर्मप्राप्यइतिभावः एवंविधोपिविप्रा णांब्राह्मणानांभावाश्चित्तवृत्तयस्तासांबहुत्वात्ब्राह्मणैर्विश्वेइंद्रमित्रवरुणादयःशब्दाःयस्मिन्वाचकत्वेनप्रतिष्ठिताइतिसविश्वशब्दः यज्ञेषुप्रकर्षेणयुज्यतेविनियुज्यतेतैस्तैः शब्दैरि त्यर्थः तथाचश्रुतिः तद्यदिमादहुरमुंयजेत्येतस्यैवसाविसृष्टिः एकंसद्विप्राबहुधावदंतीत्यादिकातस्मात्फलस्यतुच्छत्वान्निष्कामैरेवकर्मभिः परमात्माआराधनोयोमुमुक्षुभिरितिभा वः ॥ १९ ॥ एवंयष्टव्यदेवतारूपंब्रह्मैवेत्युक्त्वायजमानरूपमपितदेवेत्याहद्वाभ्यां विश्वरूपं स्थूलंमनोरूपंसूक्ष्मंद्वयमपिबुद्धिमात्ररूपमितिमानयन्जानन् एवंउक्तक्रमेणजान न् द्वंद्वंस्त्रीपुंसात्मकंसृजत्असृजत्अडभावआर्षः ॥ २० ॥ यत्सृष्टंमिथुनंतदपिस्रष्टुरेवनटस्येवरूपांतरमित्याह सएवेति विधायवेदेनप्रकाश्यआचरति भोगार्थकर्माणिकरोति अनुगैः कश्यपादिभिः सहितः सानुगः ॥ २१ ॥

 हविःस्वरूपमपिब्रह्मैवेत्याह सएषइतियोनित्यमकिंचनपर्थैषिणाम् ॥ निर्वाणपदगंतृणांब्रह्मविदांवरोब्रम्हसएषः ॥ २२ ॥ सोमात्उमाब्रह्मविद्यातयासाहितात्नित्यमलुप्त 
ज्ञानशक्तेः परमेश्वरात्सोमःचंद्रःऔषधीशःसमुत्पन्नः किंभूतात्सोमात्धारास्वर्गात्च्युतजलधारातदेवविग्रहोमूर्त्तिर्यस्यतस्मात् ययाधारया ॥ २३ ॥ स्वभावतः निसर्गेणैवकर्म
 महेश्वरस्यभूताधिपत्यप्रदानरूपंकृत्वानादंनदति पुनःपुनर्गर्जतिनादमितिणमुलंतंनादित्वानादित्वेत्यर्थः अतःसानदीत्युच्यते ॥ २४ ॥ संभाव्यंमहीकृत्यअभिभूयाभित्त्वामार्गरो 
धकान्पर्वतानितिशेषः यतोगगनात्गांगताअतोगंगाभूदितिभावः सप्तधागोदावरीरूपेणसाहिसमुद्रसंगमेसप्तधाभूतेतिसिद्धं ॥ २५ ॥ सहस्रधाजाह्नवीरूपेणइदमपिप्रसिद्धं
बहुधाविभूतिभेदेनगंगाभगवतोनदीत्यादितत्तत्तीर्थमाहात्म्यप्रसंगेगंगायाअनेकधाभावदर्शनात् एवमोषधीशोत्पत्तिप्रसंगात्गंगायास्तत्कारणेश्वरात्मत्वमुक्त्वाचंद्रोत्पत्तिप्रयोजन
माह इममिति इमंलोकंऔषधीनामाप्यायनेनअमुंचलोकं प्रथमांपिबतेवह्निर्द्वितीयांपिबतेरविरित्यादिशास्त्रोक्तप्रकारेणचभावयन्वर्द्धयन्क्षरसंभवंआविद्याप्रभवम् ॥ २६ ॥ ततः

सएषभगवान्ब्रह्मानित्यंब्रह्मविदांवरः ॥ निर्वाणभयगंतृणामकिंचनपर्थैषिणाम् २२ सोमात्सोमःसमुत्पन्नोधारासलिलविग्रहात् ॥ ययाभिषिक्तोभूताना
माधिपत्येमहेश्वरः २३ अभिषिच्यचभूतेशंकृत्वाकर्मस्वभावतः ॥ नदतिस्मतदानादंतेनसाह्युच्यतेनदी २४ साब्रह्मलोकंसंभाव्यअभिभूयसहस्रधा ॥
गांगताग्गनाद्देवीसप्तधाप्रससारच २५ सहस्रधाचराजेंद्रबहुधाचपुनःपुनः ॥ इमंलोकममुंचैवभावयनक्षरसंभवम् २६ ततोभूतानिरोहंतिमहाभूतफ
लानिच ॥ ततःसर्वक्रियारंभाःप्रवर्त्ततेमनीषिणाम् २७ चतुर्भिर्वदनैस्तस्यमुखपद्माद्विनिःसृता ॥ तदाक्षरमयीसिद्धिर्दिशत्वंसमुपागता २८ त
स्यज्ञानमयंपुण्यंचतुष्पादंसनातनम् ॥ पतित्वेनाभवद्देवोब्रह्माचात्रपितामहः २९ पादाधर्मस्यचत्वारोयैरिदंधार्यतेजगत् ॥ ब्रह्मचर्येणव्यक्तेनगृह
स्थेनचपावने ३०

अस्यलोकस्यसंवर्द्धनात्उद्भूतैर्बीजैःभूतानिजरायुजादीनिरोहंतिवर्द्धते महाभूतानिपृथिव्यप्तेजांसितेषांफलानितेजोवन्नात्मकानिव्रीह्यादीनिसर्वस्यआत्मकत्वात् ततोव्रीह्यादि
भ्योमनुष्यादिभ्यश्चयथायोग्यंसर्वक्रियारंभाःप्रवर्तंते मनीषिणांकामजेतृणाम् ॥ २७ ॥ मंत्रोपिब्रह्मैवेत्याह चतुर्भिरितिवदनैरिववदनैर्वेदैः इत्थंभावेतृतीया तस्येश्वरस्यमुखप
द्माद्वेदरूपेणविनिःसृता अक्षरंब्रह्मतन्मयीयत्प्राप्तिप्रधानासिद्धिर्वेदाख्यादिशत्वंउपदेशत्वंदिशअतिसर्जनेइगुपधलक्षणःकः ॥ २८ ॥ ऋत्विग्यजमानावपिब्रह्मैवेत्याह तस्येति
ज्ञानमयंचिन्मयंपुण्यंपुण्यकारणंयज्ञं चतुष्पादंचत्वारऋत्विजोब्रह्मोद्गातृहोत्रध्वर्यवःपादायस्यतंसनातनंअनादिंतस्यपतित्वेनब्रह्माब्रह्मणःकर्मरूपस्यअनुष्ठाताएतत्सर्वंपितामहःशुद्धं 
ब्रह्मैव ॥ २९ ॥ धर्मपादरूपाश्चत्वारआश्रमाअपिब्रह्मैवेत्याह पादाइतिद्वाभ्यां व्यक्तेनस्वाध्यायरूपेणव्यानरूपेणव्यक्तनएकःपादःगृहस्थेनगृहस्थाश्रमेणपावनेगृहेस्थिते
नचद्वितीयःपादः समासैकदेशस्यापिगृहस्थविशेषणंपावनेइतिआर्षत्वात् ॥ ३० ॥

गुरुभावेनतपोभारगौरवेणचवानप्रस्थाश्रमेणतृतीयःपादः वाक्येनतत्वमस्यादिना कीदृशेनगुह्यगामिनाआत्मतत्वप्रतिपादकेन तथानगामिनानगमचलंकूटस्थंब्रह्मसंन्यासाद्ब्रह्मणःस्थानमितिस्मृतेर्मेरुपृष्ठंवातत्प्रति आगमयतिगमयतीतिनगामितेन नगामिना कूटस्थवस्तुप्रापकेणविचारध्यानाभ्यांवस्तुप्रतिप्रत्यर्थेनवाक्येनचतुर्थःपादोधर्मस्यभवतीत्यर्थः स्वर्गोभोगापवर्गाख्यंसुखं ॥ ३१ ॥ एवंयष्टव्यदेवतादिचातुराश्रम्यांतानांब्रह्मत्वंभावनार्थमुक्तं इदानींतुर्याश्रमयोगंप्रस्तोष्यन्तुर्याश्रमधर्ममेवस्तौतिद्वाभ्यां न्यायादिति न्यायात्वेदांतन्यायोद्बलितश्रवणमननात्मकविचाराधिगमात् गुह्यधर्मोयोगःतेनचमंडलेब्रह्मांडगोलेसोमःचंद्राधिष्ठेयंमनःविवर्द्धति आध्यात्मिकपरिच्छेदाभिमानंत्यक्त्वासमष्ट्यभिमानंधत्तेइत्यर्थः एवंब्रह्मणोवेदादेवप्रमाणभूतात्ब्रह्मचरणेब्रह्मचर्यायोगस्तस्मात्शाश्वताअपिवेदाः वर्ततिनिवर्ततेगच्छंतिबाध्यंतेइत्यर्थः अत्रपितापितेत्यादिलोकाअलोकावेदाअवेदाइतिश्रुतेःवेदस्यापिबोधात्प्रागेवप्रामाण्यंसतितुबोधेबाधएवेत्यर्थः वर्त्ततिनैघंटुकेगत्यर्थेपूपपद्यते॥ ३२ ॥ किंचवाक्येनपूर्वोक्तोगुह्येत्यादिविशेषणेनयुक्तान्गृहस्थानपिअ

गुरुआवेनवाक्येनगुह्यगामिनगामिना ॥ इत्येतेधर्मपादाःस्युःस्वर्गहेतोःप्रचोदिताः ३१ न्यायाद्धर्मेणगुह्येनसोमोवर्धतिमंडले ॥ ब्रह्मणोब्रह्मचरणाद्वेदावर्तंतिशाश्वताः ३२ गृहस्थानभिवाक्येनतृप्यंतीपितरस्तथा ॥ ऋषयोपिचधर्मेणनगस्याशिरसिस्थिताः ३३ नगस्यतस्यसंपश्यमेरोःशिखरमुत्तमम् ॥ पद्भ्यांसंपीडयन्वृषणाव्रृषिभिस्तैर्विचार्यते ३४ ग्रीवांनिगृह्यपृष्ठंचविनाम्यप्रहसन्निव ॥ नाभिदेशेकरौन्यस्यसर्वशोंगानिसंक्षिपन् ३५

भिलक्ष्यपित्रादयस्तृप्यंतिधर्मेणयोगेननगस्यमेरोः एतेनयोगधर्मेगृहस्थादेरप्यधिकारोस्तीतिदर्शितम् तथाचस्मृतिःन्यायागतधनस्तत्वज्ञाननिष्ठोऽतिथिप्रियः श्राद्धकृत्सत्यवादीचगृहस्थोपिविमुच्यते सह्याश्रमैर्विजिज्ञास्यःसर्वैरप्येवमेवतु द्रष्टव्यस्त्वथश्रोतव्योमंतव्यश्चोपपत्तिभिरित्यादिका ॥ ३३ ॥ तदेवंयतेर्गृहस्थस्यचयथोक्तस्वाश्रमधर्माननुतिष्ठतः अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाख्यायमाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानाख्यानियमाश्चस्वभावसिद्धाश्चैतानुक्त्वाआसनादीनियोगांगानिविधित्सुः प्रथमंमेरुशिखराख्यब्रह्मलोकएवजेतव्यइत्याहनगस्येति उत्तमंक्रममुक्तिस्थानत्वात्आसनंविधत्तेसार्द्धेनपद्भ्यामिति यतःमरोः शिखरंतैःब्रह्मचर्याद्याश्रमधर्मसंपन्नैर्ऋषिभिर्विचार्यतेतत्प्रप्स्येतियोजनाकिंकुर्वन्वृषणौपद्भ्यांसंपीड्य मेढ्रादुपरिविन्यस्यसव्यंगुल्फंतथोपरि गुल्फांतरंचविन्यस्यसिद्धासनमिदंभवेदित्युक्तलक्षणेसिद्धासनेस्थित्वेत्यर्थः ॥ ३४ ॥ ग्रीवांनिगृह्यजत्रुसंधौचुबुकंसंयोज्येत्यर्थः पृष्ठंविनाम्ययथावक्षईषदुन्नतंस्यात्तथाविनामयेत्पृष्ठं प्रहसन्निवेत्यस्यदंतैर्दंतान्नस्पृशेदित्यर्थः नाभिदेशेकरौन्यस्येत्यंजलिमुद्रांवामोपरिदक्षिणंहस्तंकृत्वेत्यर्थः संक्षिपन्निगृण्हन् ॥ ३५ ॥

आसनजयिनः परकृतिसरूपार्थवादमुखेनसफलंप्राणायाममाहमूर्ध्नीति योगेश्वरस्ययोगात्पितामहः मनसाविष्णुंअसृजत् किंकृत्वामनसामूर्ध्निब्रह्मसमुत्क्षिप्येतियोजना मनोरोधोहियोगः सचप्राणरोधाधीनइतिप्राणरोधोयोगेश्वरः तस्ययोगादभ्यासात् पितामहोधिकारीमनसामनःप्रधानेनप्राणेनब्रह्मस्वात्मानंजीवंप्राणोपाधिंमूर्ध्निभ्रूघ्राणमध्येसमुत्क्षिप्यसंगम्यमनसासंकल्पेनविष्णुंविश्वरूपंअसृजत् एवंचोक्तरीत्याभ्रूघ्राणमध्यंप्राप्यजीवस्यऐश्वर्याविर्भावहेतुः प्राणायामोवश्यंकर्तव्यइत्यर्थः ॥ ३६ ॥ प्रत्याहारमाहात्म्यमाह व्यतिरिक्तइति व्यतिरिक्तानिविषयेभ्योव्यावृत्तानिइंद्रियाणियस्यसः कृतप्रत्याहारोयोगीसन्निहितमपिशब्दादिकमगृण्हन् सर्वात्मनापरिच्छेदाभिमाननिवृत्तौविष्णुर्व्यापकएवभवति अयमत्रक्रमः यथाघटोदरगतादीपप्रभाघटमात्रीभवतासैवघटाच्छिद्राद्बहिर्गताकियंतंभवनोदरगतंविषयंव्याप्नोति सर्वात्मनाघटाद्बहिर्गतासतीकृत्स्नंभवनोदरंव्याप्नोति एवंजीवचैतन्यंदेहांतर्गतंसत्तन्मात्रंव्याप्नोतिइंद्रियद्वाराबहिर्गतंसत्तंतंविषयंव्याप्नोतिसर्वात्मनादेहाद्बहिर्गतासतीकृत्स्नंदृश्यंव्याप्नोति अतएवतस्यामवस्थायांसार्वज्ञ्यंयोगिनांभवतीति

मूर्ध्निब्रह्मसमुत्क्षिप्यमनसापिपितामहः ॥ असृजन्मनसाविष्णुंयोगाद्योगेश्वरस्यच ३६ व्यतिरिक्तेंद्रियोविष्णुर्बिंबाद्बिंबमिवोद्धृतः ॥ तेजोमूर्तिधरोदेवोनगसींदुरिवोदितः ३७ रराजब्रह्मयोगेनसहस्रांशुरिवापरः ॥ विराजन्नभसोमध्येप्रभाभिरतुलंप्रभुः ३८ नोपलभ्यतिमूढानांप्रत्यक्षंब्रह्मशाश्वतम् ॥ ललाटमध्येतिष्ठंतंद्विधाभूतंक्रियांप्रति ३९ ज्योतिश्चक्षुषिसंबद्धंबिंबंभास्करसोमयोः ॥ बुद्ध्यापूर्वंतुपश्यंतिअध्यात्मविषयेरताः ४० ब्राह्मणावेदविद्वांसःसत्यव्रतपरायणाः ॥ नेतरेजातुपश्यंतिअध्यात्मंनावबुध्यते ४१

स्पष्टम् बिंबादितिमूषोद्धृताप्रतिमावत्स्वरूपेणाविर्भवतीत्यर्थःतेजोमूर्तिःचैतन्यज्योतिः ॥ ३७ ॥ एतमेवस्तौतिरराजेति ब्रह्मयोगेनदेहादितादात्म्याध्यासकृतयाब्रह्मभावव्यावृत्त्याविराजन् विराजमाननभसोहार्दाकाशस्यप्रभाभिश्चैतन्यंज्योतिःप्रकाशैः बहुवचनंसमाधिप्रयोगभेदाभिप्रायंनिर्विशेषचिन्मात्रमपिप्रत्याहारबलेनैवज्ञेयमित्यर्थः ॥ ३८ ॥ आक्रोशपूर्वकंदेशबंधश्चित्तस्यधारणेतिप्रोक्तलक्षणांधारणामाहनोपेति उपलभ्यतिप्राप्नोति ललाटमध्येभ्रूघ्राणसंधौतिष्ठंतंविष्णुंक्रियांनियमनक्रियांप्रतिसमुद्दिश्यद्विधाभूतंनियम्यनियामकरूपेणेत्यर्थः ॥ ३९ ॥ धारणायाः प्रदेशमुक्त्वाविषयमाह ज्योतिरिति भास्करसोमयोः तद्देवतयोरिडापिंगलयोर्मध्येबिंबभूतंज्योतिर्धारणाविषयइत्यर्थः किंभूतंबिंबंचक्षुषिसंबद्धं चक्षुरिंद्रियेप्रतिबिंबितंयत्कृतंचक्षुषिरूपप्रकाशनसमर्थंतस्मिन्चिज्ज्योतिषिभ्रूघ्राणमध्यस्थेचित्तं[illegible]मित्यर्थः बुद्ध्येति पूर्वंअध्यात्मविषयेरताःसंतःपश्चात्बुद्ध्यातंविषयंपश्यंतीतियोजना आत्मनिशरीरेयोगधारणाविषयः तत्ररताः पुनःपुण्येनतदेवचिंतयंतः एतेनात्रप्रत्ययैकताध्यानमित्युपलक्षणंध्यानमुक्तम् ॥ ४० ॥ ब्राह्मणाइतिनावबुध्यतेइतरैरितिशेषः अध्यात्मंअध्यात्मशास्त्रमपिनावबुध्यतेदूरेस्वरूपबोधइतिभावः ॥ ४१ ॥

इतरेकेतानाह हिंसायोगैरितिद्वाभ्यां योभुविभूतेशोभूतानांनिग्रहानुग्रहसमर्थोयोगएैश्वर्यकृतंमोहंप्राप्तेनचेतसाअयोगात्मा नयोगेआत्माचित्तंयस्यसयोगंप्राप्यस्वरूपानंदात्च्यु तमनस्कः तंभूतयः ऐश्वर्याणिसर्वप्राणचरैः सर्वप्राणभक्षकैर्हिंसायोगैराभिभवंतीतिशेषः ॥ ४२ ॥ किंकृत्वामोहयंतीत्यतआह कर्मभिरिति सर्वप्राणिवधैषिणांनराणामन्यैः कुत्सितैःकर्मभिर्योगसंबंधंआधायप्रसंजयित्वा केषुनिमित्तेषुसत्सु स्वेषुस्वार्जितेषुमात्रेषुमीयंतेतेमात्राः भोग्याः विषयाः दृष्टोदृप्यतिदृप्तोधर्ममतिक्रामतीत्यापस्तंबोक्तेर्योगर्द्धिषुन संतोषःकार्यः किंतुविघ्नवृद्ध्यातास्त्यक्तव्याएवेतिभावः ॥ ४३ ॥ समाहितेति यस्मादेवंयोगेविघ्नाःसंतितस्मात्ब्रह्मन्ब्रह्मणिसमाहितमनाःसम्यङ्निहितमनाभवेत् मोक्षस्यप्राप्तं प्राप्तिः भावेक्तःमोक्षप्राप्त्यर्थमित्यर्थः किंकृत्वाचंद्रमंडलंमनःचंद्रमामनोभूत्वेतिश्रुतेः तस्यसंस्थानंईशादिरूपंतत्परित्यज्येत्यर्थः संस्थानादितिल्यब्लोपेपंचमी ज्योतिर्द्योतमानंतेज श्चैतन्यंहृदयायतनंप्रविश्य ॥ ४४ ॥ क्षिप्रविघ्नशंकयाऐश्वर्यास्वादमकुर्वन् गायत्र्याःगायत्रीवाइदंसर्वंभूतमितिश्रुतिप्रसिद्धगायत्र्याख्यसगुणब्रह्मणोपिनयनंनयनवत्प्रकाशकं

हिंसायोगैरयोगात्मासर्वप्राणचरैर्नृप ॥ भूतयोभुविभूतेशोमोहप्राप्तेनचेतसा ४२ कर्मभिःकुत्सितैरन्यैःसर्वप्राणिवधैषिणाम् ॥ नराणांयोगमाधायस्वे षुमात्रेषुभारत ४३ समाहितमनाब्रह्मन्मोक्षप्राप्तेनहेतुना ॥ चंद्रमंडलसंस्थानाज्ज्योतिश्चांद्रंमहत्तदा ४४ प्रविश्यहृदयंक्षिप्रंगायत्र्यानयनांतरे ॥ गर्भ स्यसंभवोयश्चचतुर्धापुरुषात्मकः ४५ ब्रह्मतेजोमयोयुक्तःशाश्वतोथध्रुवोव्ययः ॥ नचेंद्रियगुणैर्युक्तोयुक्तस्तेजोगुणेनच ४६ चंद्रांशुविमलप्रख्योभ्राजिष्णु र्वर्णसंस्थितः ॥ नेत्राभ्यांजनयद्देवोऋग्वेदंयजुषासह ४७ सामवेदंचजिह्वाग्रादथर्वाणंचमूर्द्धतः ॥ जातमात्रास्तुतेवेदाःक्षेत्रंविंदंतितत्त्वतः ४८ तेनवेदत्व मापन्नायस्माद्विंदंतितत्पदम् ॥ तेसृजंतितदावेदाब्रह्मपूर्वंसनातनम् ४९

शुद्धंज्योतिः तस्यांतरेमध्येआसीदितिशेषः अंतरस्वरूपमाह गर्भस्येति अव्यक्तस्यसंभवउत्पत्तिःयइतिविधेयापेक्षंपुंस्त्वंचतुर्द्धाअकारोकारमकारार्द्धमात्रार्धत्वेन ॥ ४५ ॥ चतु र्द्धाभूतमेवपुरुषंस्तौतिब्रह्मेतिसार्द्धेन ब्रह्मनिरतिशयोत्कृष्टंतेजश्चैतन्यंतन्मयंतद्रूपः अव्यक्तः इंद्रियाद्यगोचरः शाश्वतोनित्यः ध्रुवःकूटस्थःअतएवअव्ययः अपचयशून्यः इंद्रि यग्राह्यैः रूपादिगुणैर्नचयुक्तः तेजोगुणेनमनोगुणेनदुःखादिनायुक्तोमनस्तादात्म्याध्यासात्चंद्रेत्याह्लादकत्वंभ्राजिष्णुरितिसद्रूपेणस्फुरमाणत्वम् वर्णेषुलोहितशुक्लकृष्णेषुतेजो बन्नेषुदेहाकारपरिणतेषुस्थितआविर्भूतः ॥ ४६ ॥ अस्यचतस्रोमूर्तीराह नेत्राभ्यांऋग्यजुर्वेदौक्रमेणविश्वतैजसौत्रिपुटीरूपेणद्वयत्वान्नेत्राभ्यामिवोत्पन्नौ ॥ ४७ ॥ सामवेदः प्राज्ञः शब्दमात्रगम्यत्वाजिह्वाग्रादेवोत्पन्नः एतेभ्योविलक्षणस्तुर्यईश्वरोंतर्यामीयोगैकगम्यत्वादर्वाग्दृशामगोचरत्वात्शुद्धसत्वमयत्वाच्चमूर्धतएवोत्पन्नःआविर्भूतमात्राएतेस्वंस्व क्षेत्रंप्रकाश्यमुपाधिंविंदंतिलभंते तस्मादेतेवेदाउच्यंतइत्याहजातमात्राइति ॥ ४८ ॥ तुर्यातीतस्त्वेतेष्वनुस्यूतइत्याहतेनेति ॥ ४९ ॥

चत्वारोप्येतेशुद्धस्योपाधितांगत्वास्तैःस्वैर्गुणैर्विशिष्टेनरूपेणपुरुषंविश्वादिरूपंकुर्वंतीत्यर्थः एवंचतुर्विधंभ्रूघ्राणमध्यस्थस्यधारणाविषयस्यब्रह्मणोरूपमुपन्यस्यदेहावयवतारतम्येन तत्रतत्रधारणायास्तारतम्यंसूचयतिअथर्वेत्यादिनासार्द्धद्वयेन तुर्यधारणाऽतिमुख्यत्वाच्छीर्षतुल्याविश्वधारणाबाह्यत्वात्ग्रीवादितुल्या ॥ ५० ॥ ५१ ॥ प्राज्ञधारणांतर्मुखत्वाद्धृदयतुल्या तैजसधारणासंसारमोक्षोभयव्यापित्वाच्छीर्षादिचरणांतरूपा यस्तुएतैर्दिव्यैरूपैराभातिसपुरुषः अमरात्अक्षरात्तुर्यात्पदात् उपलक्षणात्संभूतः एकीभावेनाधिगतोभवतीत्यर्थः ॥ ५२ ॥ अत्रद्विविधोयोगः सबीजोनिर्बीजश्च आद्यश्चतुर्द्धावितर्कविचारानंदस्मितरूपः तत्रबाह्योप्रतिमादौचित्तंयदासन्नियम्यतेतदासवितर्कःसोत्रऋक्शब्देनोक्तः यदातुस्वप्नेइवांतःप्रज्ञैर्मनोमात्रकल्पितेप्रतिमादौतदासविचारः सोत्रयजुःशब्दितः यदात्वेनंपरित्यज्यतुर्यंप्रविविक्षुर्मध्येलीयते सप्रकृतिलीनोत्रसामशब्देनोक्तः अयंचलयरूपत्वादयोगः तुर्यंप्राप्तोपियदासर्वैश्वर्यसार्वज्ञादिप्रावण्यंतदासानंदः यदातुतमपहायअस्मीत्येतावन्मात्रेणावस्थानंतदासस्मितः तदुभयमत्राथर्वशब्देनोच्यतइति विस्तरस्तु

पुरुषंदिव्यरूपाभंस्वैःस्वैर्भावैर्मनोभवैः ॥ अथर्वणस्तुयोयोगःशीर्षंयज्ञस्यतत्स्मृतं ५० ग्रीवाबाह्वंतरंचैवऋग्भागस्समवेत्ततः ॥ हृदयंचैवपार्श्वेचसाम
भागस्तुनिर्मितः ५१ बस्तिशीर्षंकटीदेशंजंघोरुचरणैःसह ॥ एवमेषयजुर्भागःसंघातोयज्ञकल्पितः ॥ पुरुषोदिव्यरूपाभःसंभूतोह्यमरात्पदात् ५२ स
हिवेदमयोयज्ञःसर्वभूतसुखावहः ॥ उभयोर्लोकयोस्तातहिंसावर्ज्यःसनातनः ५३ योगारंभंकर्मसाध्यंब्रह्मचर्येसनातनम् ॥ प्रभवःसर्वभूतानांयोविंदतिस
वेदवित् ५४ ससिद्धःप्रोच्यतेलोकेसिद्धिरेवनसंशयः ॥ निर्मुक्तैःसर्वकर्मभ्योमुनिभिर्वेदपारगैः ५५ वैष्णवेयज्ञमित्येवंब्रुवंतेवेदपारगाः ॥ ब्राह्मणानियम
श्रांतावेदोपनिषदेपदे ॥ ५६ ॥ जनमेजयउवाच ॥ चेतसस्तूपलंभंहिमनोग्राह्यस्यकामतः ॥ कारणंश्रोतुमिच्छामियथात्वंमन्यसेमुने ५७ ॥ वैशंपा
यनउवाच ॥ नह्यस्यकारणंकिंचिद्बाह्यंभवतिभारत ॥ अंतर्गतंकारणंतुशारीरंमानसंनृप ५८

वेदस्तुतिटीकायांस्पष्टीकृतोस्मद्गुरुभिरित्युपरम्यते ॥ ५३ ॥ योगमुक्त्वातद्विदंस्तौति योगारंभमिति इदंब्रह्मचर्यंयोविंदतिसवेदवित् यएतत्सर्वभूतानांप्रभवःतत्प्रापकत्वात् योगोहिप्रभवाप्ययावितिश्रुतेःकीदृशंतत् योगेनैवारभ्यतेनतुशुष्कविचारेणकर्ममनःसंयमस्तेनसाध्यम् ॥ ५४ ॥ ५५ ॥ वैष्णवमिति विष्णुःशुद्धंवस्तुतत्प्रापकंवैष्णवंतस्मिन् वेदस्यउपनिषत्ब्रह्मविद्यातयाधिगम्यवेदोपनिषदेपदेस्वाराज्येनिमित्तेसतिब्राह्मणाः ब्रह्मविदःनियमेमनोनिग्रहेश्रांतास्तेब्रुवते अत्यंतंदुष्करमनोजयसाध्योयमित्यर्थः ॥ ५६ ॥ प्रसंगात्समाधौप्रलीनस्यचेतसःकुतःपुनरुपलंभइत्याशंकतेचेतसइति कामतइच्छयामनोग्राह्यस्यस्वेनैवस्वयंदग्धेंधनानलवदुपशमितुंयोग्यस्य ॥ ५७ ॥ शारीरेणकृतंशारीरंधर्माधर्मरूपं मानसंमनसिभवतीतिमानसंशरीरकृतंकर्ममनसिसंस्काररूपेणस्थितंमनसउद्बोधकमित्यर्थः ॥ ५८ ॥

अस्यैवप्राबल्यमाह येनेति येनचैतन्येनसर्वज्ञायतेतदात्मत्वादवेद्यमपिशास्त्राचार्योपदेशमनुलक्षणयावेद्यंभवत्येवतथापिकर्मणानवेत्तुंशक्यमतःकर्मैवबलवत्प्रतिबंधकमित्यर्थः ॥ ५९ ॥ तस्यचनिवृत्तिरपिसत्कर्मणैवेत्याह ब्राह्मणेनेत्यादिभिश्चतुर्भिः ब्राह्मणेनवेदाध्यायिनाविनीतेनविद्यामदहीनेनसदाब्रह्मनिषेविणाब्रह्मयज्ञादिपरेण सदाशास्त्राचार्याभ्यां आत्मानात्मनोर्विदिततत्त्वेनसिद्धिहेतोर्मोक्षार्थंभवितव्यमितिशेषः ॥ ६० ॥ ब्रह्मकर्मणाब्रह्मण्यर्पितेनकर्मणानियतःशमादिमान् ॥ ६१ ॥ गुरुस्तत्त्वज्ञोभूत्वामोक्षकर्माणिप्रोक्ता न्यासनादिधारणांतानिकारयेत्कुर्यात् विनीतोयोगप्राप्तिगर्वहीनः ब्रह्मभावेननतुसेव्यसेवकभावेन अथयोन्यांदेवतामुपास्तेयोसावन्योहमस्मीतिनसवेदयथापशुरेवंसदेवानामि तितन्निंदाश्रुतेः ॥ ६२ ॥ मनसैवेदमाप्तव्यं दृश्यतेत्वग्र्ययाबुद्ध्येत्यादिश्रुतेः वैष्णवंउत्तमंपदंशुद्धंब्रह्ममनोवृत्त्यैववेद्यमित्यर्थःध्यायन्नेवनशुष्कंविवेकंकुर्वन् मनसोहिप्रसादेनहं तिकर्मशुभाशुभं प्रसन्नात्मात्मनिस्थित्वासुखमक्षय्यमश्नुतइतिश्रुतेर्मनोजयएवकर्मनिर्मूलनेहेतुरित्यर्थः ॥ ६३ ॥ गच्छतेकर्मव्यतिहारेतङ्यथायथायंब्रह्माभिमुखोभवतितथा

येनवेद्यंविदुर्मर्त्याब्राह्मणाःसंशितव्रताः ॥ अवेद्यमपिवेद्यंचशक्यंवेत्तुंनकर्मणा ५९ ब्राह्मणेनविनीतेनसदाब्रह्मनिषेविणा ॥ सदाविदिततत्त्वेनसिद्धिहेतो र्महीपते ६० सदाचैवशुचिर्भूत्वानियतोब्रह्मकर्मणा ॥ उपतिष्ठेतसगुरुंबद्धांजलिपुटोद्विजः ६१ सायंप्रातश्चतत्त्वज्ञोमोक्षकर्माणिकारयेत् ॥ विनीतोब्रह्म भावेनसमाहितमतिर्मुनिः ६२ संप्रपद्येतमनसावैष्णवंपदमुत्तमम् ॥ ध्यायन्नेवप्रसीदेतसमाहितमतिर्द्विजः ६३ गच्छतेपरमंब्रह्मनिर्विकारेणचेतसा ॥ अपुनर्भवभावज्ञोनिर्ममोभावबंधनात् ६४ तदेवाक्षरमित्याहुर्यत्तद्ब्रह्मसनातनम् ॥ तर्हितत्कर्मयोगेनविद्यायोगेनदर्शितम् ६५ ब्राह्मणानांविनी तानांवैष्णवेपदसंचये ॥ सर्वद्रव्यातिरिक्तानांकामयोगविगर्हिणाम् ६६ अपुनर्भाविनांलोकाःकर्मयोगप्रतिष्ठिताः ॥ अनादानेनमनसाराजन्कर्माणि कर्माणि ६७ आदानाद्बध्यतेजंतुर्निरादानात्प्रमुच्यते ॥ ब्राह्मणेभ्यःक्रियावाप्तिर्जेतोःपूर्वाज्जनाधिप ६८

तथैनंब्रह्माप्यभिमुखंभवति यथोक्तंवृद्धैःयावद्यावन्निरस्यायंदेहादीन्प्रत्यगंचति तावत्तावत्तदर्थोपित्वमर्थंप्रविविक्षतीति ॥ ६४ ॥ तदेवेति जीवरूपेणनित्यंवृद्धिह्रासभाक्त्वेनस मानमपिब्रह्मतर्हितदेवंअक्षरंह्रासादिरहितंप्राहुर्यदैवकर्मयोगादिनादर्शितंभवतीति ॥ ६५ ॥ केषांतदक्षरंविदितमतआह ब्राह्मणानामिति पदसंचयेपदनिश्चयेनिमित्तं सर्वद्रव्ये भ्योतिरिक्तानांत्यागवतां कर्मयोगंस्त्र्यादिसंगंविगर्हयंतितेषां ॥ ६६ ॥ अपुनरिति कथंकर्मयोगेषुपुनर्भवराहित्यंप्रतिष्ठितमतआह अनादानेनेति फलस्येतिशेषःकर्मणीतिद्विरु क्तिर्वीप्सार्थासर्वस्मादपिकर्मण.फलाकांक्षांनकुर्यात् यथोक्तंभगवता यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति ॥ ६७ ॥ आदानादिति तत्रानादानंतत्संगत्यापूर्वजन्मसंस्काराच्चभवतितेनक्रियाणामवाप्तिःप्राप्तिर्भवति अन्यथाक्षुद्रफलोपधानेनव्यर्थंकर्मगच्छतीत्यर्थः ॥ ६८ ॥

अनादानस्यैवमहाफलत्वमाहमुक्तइति तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनेतिश्रुतेर्विविदिषोत्पादनद्वाराकर्मैवमोक्षहेतुरित्यर्थः ॥ ६९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ योगोपसर्गावर्ण्यंतेऽथत्रिभिःप्रश्नपूर्वकम् ॥ तत्रापिद्वादशेयेगमार्गेयोचिह्न तांगताः ॥ १ ॥ पूर्वत्रहिंसायोगैरित्यनेनयोगोपसर्गाःसूचिताःआसनादिधारणांतानिचयोगांगानिउक्तानि अवशिष्टंयोगस्वरूपंध्येयंब्रह्मयोगसिद्धयश्चतदेतच्चतुष्टयंजिज्ञासमानो जनमेजयउवाच उपसर्गंचेति ॥ १ ॥ शृण्विति ब्रह्मादीनांयोगिनामनेकधाजायमानंयोगोपसर्गादिकंयथापृच्छासितथामेधायुक्तेनमनसाशृणु ॥ २ ॥ पंचेति पंचसिद्धयोदूरश्रवणाद्यास्तासांगुणान्शब्दादीन्पंचेंद्रियेषुनिवसंतीतिपंचेंद्रियैरेवकल्पितानित्यर्थः तान्त्यक्त्वायोगयुक्तेनमनसाब्रह्मणःपश्यतोब्रह्मदर्शिनः ॥ ३ ॥ ब्रह्मणोब्राह्मणस्यब्रह्मैवयज्ञोब्रह्मयज्ञोब्रह्मैवतंचिंतयानस्यअनैश्वर्यात्परवैराग्यबलाभावात् निरुध्यतेनेनतन्निरोधनंउपसर्गजातंप्रवर्त्ततिप्रवर्त्तते ॥ ४ ॥ अपरवैराग्येणइंद्रियादिनिरोधस्यसद्भावेपि

मुक्तश्चेंद्रियबंधेनप्राप्तश्चपरमंपदम् ॥ नभूयःपुनरायातिमानुषंदेहविग्रहम् ६९ ॥ ॥ इतिश्रीमहाभारतेखि०हरि०भविष्यपर्वणिसप्तदशोऽध्यायः ॥ १७ ॥ ॥ जनमेजयउवाच ॥ उपसर्गंचयोगंचध्यातव्यंचैवयत्पदम् ॥ नभूयःपुनरायातिमानुषंदेहविग्रहम् १ ॥ वैशंपायनउवाच ॥ शृणुविस्तरतःसर्वंयथापृच्छसिमेधया ॥ उपपन्नेनमनसाब्रह्मादीनामनेकधा २ पंचसिद्धिगुणांस्त्यक्त्वापश्यतोब्रह्मणोनृप ॥ योगयुक्तेनमनसापंचेंद्रियनिवासिनः ३ ब्रह्मणश्चिंतयानस्यब्रह्मयज्ञंसनातनम् ॥ बहुरूपमनैश्वर्यात्प्रवर्त्ततिनिरोधनम् ४ पंचेंद्रियस्यग्रामस्यनवद्वारस्यभारत ॥ कामक्रोधस्यलोभस्यसन्निरुद्धस्यमेधया ५ तेजसामूर्ध्निचाधायधूमोदोधूयतेमहान् ॥ नीललोहितवर्णाभैःपीतैःश्वेतैश्चधातुभिः ६ मांजिष्ठरागवर्णाभैःकपोतसदृशैस्तथा ॥ शुद्धवैडूर्यवर्णाभैःपद्मवर्णदलप्रभैः ७ स्फाटिकैर्मणिवर्णाभैर्नागेंद्रसदृशैस्तथा ॥ इंद्रगोपकवर्णाभैश्चंद्रांशुसलिलप्रभैः ८ बहुवर्णैःसुधूम्रैर्वैरिंद्रायुधसमप्रभैः ॥ संपतद्भिश्चयुगपन्मेवैरिवसमागमे ९

परवैराग्याभावात्योगोनिरुध्यतइत्याह पंचेति पंचेंद्रियप्रधानस्यग्रामस्यदेहेंद्रियप्राणसंघातस्यकामसहितस्यक्रोधस्यमेधयासन्निरुद्धस्यसद्भावेपीतिशेषः ॥ ५ ॥ तानेवविघ्नानाहतेजसेति मूर्ध्निभ्रूघ्राणमध्येनिहितेनतेजसा चक्षुःप्रणिधानेनआधायचित्तंसंयोज्यस्थितस्ययोगिनः मूर्ध्नीतिहृदयपुंडरीकादेरप्युपलक्षणम् यत्रकुत्रचिदाधारेगुरूक्तयुक्त्याचित्तं प्रणिधित्संतोयोगिनःधूमादिकंगोचरीभवतियच्चमनोमर्कटेननिरोधक्षुब्धेननाडीमार्गशाखाश्चंक्रमतानुभूयते तच्चयोगसिद्धिचिह्नं तथाचश्रुतिः तस्मिन्शुक्लमुतनीलमाहुः पिंगलं हरितंलोहितंच एषपंथाब्राह्मणानामुचितस्तेनेतिब्रह्मवित्पुण्यकृत्तेजसश्चेतिनीहारधूमार्कानलानिलानांखद्योतविद्युत्स्फटिकशशीनांएतानिरूपाणिपुरःसराणिब्रह्मण्यभिव्यक्तिकराणियोगेइतिचधातुभिःतुल्यवर्णइतिशेषः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

निरुध्यंतइतिगाढत्वंदर्शितम् एवंरजःसत्त्वतमःप्रधानासुनाडीषुसंचरच्चित्तंपार्थिवैर्धूमादिरूपैरुपतंभातीत्युक्तंतदेवकिंचित्सत्त्वाधिकाः नाडीःप्राप्यआभास्वरंशुक्लरूपेणगाढतमोवद्ध
नोभवतितदेतन्मेघधारादिरूपकेणाह तेइति निर्वेमुः वर्षितवंतः वसुधातलेदेहांतरेचनबाहिः ॥ १० ॥ अतएवाग्नेर्विशेषणंमानसइति ॥ ११ ॥ १२ ॥ एवमग्रेपितेजोजलादेर्मिश्री
भावःसंकीर्णगुणवन्नाडीसंचाराद्बोध्यः यावंत्यइति अर्च्यःअर्चिषः ईकारांतत्वमार्षं ॥ १३ ॥ वर्णाभ्यांजलाग्निवर्णाभ्यांश्वेतलोहिताभ्यांइत्थंभावेतृतीया तद्रूपेणपरिणतस्यचित्तस्य
सत्त्वोत्कर्षेसतिनिरूपोवायुरूपआकारोभवतिदिव्याःभित्त्यादिस्वप्रतिघातात्सिद्धाः अनादयः तेचतेगुणाःशब्दतन्मात्रादयः तेभ्यउत्पन्नःसवायुर्नतुस्थूलइत्यर्थःसूक्ष्मःप्राणःसूत्रा
मातस्यविवर्द्धनः प्रकाशकः ॥ १४ ॥ वेगेति सइतिच्छेदः हप्रसिद्धं तैरेवअग्निनासंघातोदृढसंश्लेषोयेषांतैःभूजलैःधातुभिःसंगतःसन्प्राणगोचरः प्राणशब्दवाच्यःसूत्रात्माभ

**निरुध्यंतइवाकाशेपक्षवद्भिरिवाद्रिभिः ॥ तेधूमवर्णाःसंघाताघनाःसलिलधारिणः ॥ निर्वेमुश्चैवतोयौघान्विविशुर्वसुधातले १० मूर्ध्निचैवमहानग्निर्मा**
**नसोधूयतेप्रभुः ॥ युक्तःपरमयोगेनशतशोर्चिभिरावृतः ११ तस्यार्चैर्विस्फुलिंगानांसहस्राणिशतानिच ॥ विसम्रुःसर्वगात्रेभ्योज्वलन्निवयुगाग्नयः ॥**
**१२ यावंत्योवर्षधारास्तुतावंत्योर्चोनलस्यच ॥ समेयुर्वारिधाराभिर्विपुलेवसुधातले १३ वर्णाभ्यांयुज्यमानस्यवायुर्दोधूयतेमहान् ॥ दिव्यसिद्धगुणोद्भूतः**
**सूक्ष्मप्राणविवर्द्धनः १४ वेगवान्भीमनिर्घोषोबलवान्प्राणगोचरः ॥ तैरेवचाग्निसंघातैर्धातुभिःसहसंगतः १५ सहस्रशोथशतशोमूर्तिंकृत्वापृथग्विधाम् ॥**
**अग्निर्वायुर्जलंभूमिर्धातवोब्रह्मचोदिताः १६ समवायत्वमापन्नाबीजभूतामहीपते ॥ संघातंब्रह्मवेगेनधातवोगमितानृप १७ यद्ब्रह्मचक्षुषोर्मध्येसमूक्ष्मःपुरु**
**षोविराट् ॥ तयोरन्यान्बहून्त्सूक्ष्मान्त्ससृजेपुरुषोत्तमः १८ सएवभगवान्विष्णुर्व्यक्ताव्यक्तःसनातनः ॥ आधारःसर्वविद्यानांप्रलयेप्रलयांतकृत् १९ तंमू**
**र्ध्निधातुभिर्नद्धंविशंतिब्रह्मचोदिताः ॥ तेंतरापुरुषाःसर्वेज्ञातारःसुखदुःखयोः २० अथचेष्टितुमारब्धामूर्तयोब्रह्मसंमिताः ॥ भित्त्वाचधरणींदेवींप्राप**
**द्यंतदिशोदश २१**

वतीत्यर्थः वेगवान्मनसोपिजनकत्वात् भीमनिर्घोषः स्थूलाकाशस्यापिजनकत्वात्
बलवान्ब्रह्मांडभेदनसामर्थ्यत्वात् ॥ १५ ॥ सहस्रशइतिधातवोमूर्तिंकृत्वास्थिताइतिशेषः ॥ १६ ॥ मूर्तिकरणप्रकारमाह समवायेति ब्रह्मवेगेनचिदनुप्रवेशेनसंघातंगमिताः
धातवःसमवायत्वंएककार्यकारणत्वंआपन्नागतवंतः ॥ १७ ॥ यदितियद्ब्रह्मधारणाविषयःतदेवसूक्ष्मःतदेवचाविराट् तयोः सूक्ष्मविराजोःततोन्यान्तत्तुल्यान्ब्रह्मीभूतयोगीसृष्टवा
नित्यर्थः ॥ १८ ॥ सएवयोग्योभगवान्अतस्तस्यसूत्रादिस्रष्टृत्वंयुक्तमित्यर्थः ॥ १९ ॥ तमितितंयोगिनंमूर्ध्निधातुभिर्नद्धंभ्रूघ्राणमध्येसूत्रात्मत्वेनस्थितंब्रह्मचोदिताईशप्रेरिताइ
तरसुखादिभोक्तारोजीवाःप्रविशंति सएवसर्वजीवसमष्टिरित्यर्थः ॥ २० ॥ अथेति सूत्रात्मभाव्यसाक्षात्कारानंतरंइदमेवकुतइत्यतआह धरणींभित्त्वास्थूलदेहंविहायब्रह्मसं
मिताईशसाम्यंप्राप्तामूर्तयः सूत्रविभूतयः चेष्टितुमारब्धाश्चेद्दशदिशःप्रपद्यंते अस्यामवस्थायांयोगीसर्वात्मनःसर्वविद्भवतीतिभावः ॥ २१ ॥

इते॥ति यते॥विद्वान्सर्वात्माइतिहेतोः एतेपार्थिवाः पृथुभ्योभूतेभ्योजातत्वात् व्यावहारिकार्थाब्रह्मणायोगिनैवनिर्मिताः व्युत्थानेसंप्रज्ञानेचतत्रैवचलयंयांतिसुप्तौसमाधौचभू मित्वंस्वोपादानत्वंपार्थिवोघटइवनाशेपृथिवीत्वमितिरूपकेणोक्तं ॥ २२ ॥ कर्मक्षयाद्विमुच्यंतइत्यनुषज्यतेकर्मक्षयाभावेपुनःपुनरुद्भवंतीत्यर्थः ॥ २३ ॥ कर्मभ्योमुक्ताःक्वयांतीत्य तआह तामेवेति कर्मगोचरास्तुक्षरात्कर्मणः हेतोः धूमक्षयं धूमादिमार्गगम्यस्थानंपुनरावृत्तिफलंयांति तेपियदिअग्निगर्भाअग्निहोत्रादिप्रधानाः तपःकृच्छ्रचांद्रायणादितन्मयावाभ वतिनान्यथा ॥ २४ ॥ येनकर्मणाभावाभावसदसद्रूपसंसारःप्रवर्त्तते यथातंतुरिवअच्छिन्नस्तेधूमक्षयमेवयांतीतिपूर्वेणान्वयः अच्छिन्नत्वमेवाहद्वाभ्याम् धूमादिति धूमादिमार्गेणपि तृलोकंगताःकर्मक्षयेततश्च्युताःसंतःआकाशादिक्रमेणधूमत्वंप्राप्यमेघाभूत्वावर्षधाराभिःपृथिव्यामन्नभूतारेतस्त्वंप्राप्यपुनर्भवंतीत्यर्थः ॥ २५ ॥ जलात् जलंप्राप्यसंभूतासंयुक्ता फलंव्रीह्यादि जगत्येवपृथिव्येवेतितस्यचेतनत्वंनिरस्यति ॥ २६ ॥ फलादुत्पन्नोरसोरेतः तन्मयंब्रह्मचैतन्यंगर्भःब्रह्मद्वारैवदेहादेश्चैतन्यंनचेतनांतरसद्भावकृतम् नान्योतो॥स्तिद्र

इत्येतेपार्थिवाःसर्वेऋषयोब्रह्मनिर्मिताः ॥ तत्रैवप्रलयंयाताभूमित्वमुपयांतिच २२ कर्मक्षयाद्विमुच्यंतेधातुभिःकर्मबंधनैः ॥ कर्मक्षयाद्विमुक्तत्वादिंद्रिया णांचबंधनात् २३ तामेवप्रकृतिंयांतिअज्ञतांकर्मगोचरैः ॥ क्षराद्धूमक्षयंचैवअग्निगर्भास्तपोमयाः २४ येनतंतुरिवाच्छिन्नोभावाभावःप्रवर्तते ॥ धूमादभ्रा स्तुसंभूताअभ्रात्तोयंसुनिर्मलम् २५ जगतीजलात्तुसंभूताजगत्येवचयत्फलम् ॥ फलाद्रसस्तुसंजज्ञेरसात्प्राणस्तुदेहिनाम् २६ रसश्चतन्मयोजज्ञेयत्तद्ब्रह्म सनातनम् ॥ प्रधानंब्रह्मचोद्दिष्टंबहुभिःकारणांतरैः ॥ ब्राह्मणैस्तपसिश्रांतैःसत्यव्रतपरायणैः २७ अव्यक्ताद्व्यक्तिमापन्नंस्वेनभावेनभारत ॥ अंतस्थंसर्व भूतेषुचरंतंविद्ययासह २८ कर्मकर्तेतिराजेंद्रविषयस्थमनेकधा ॥ नोपलभ्येतचक्षुर्भ्यांतपसादग्धकिल्बिषैः २९ उपलभ्येतचक्षुर्भ्यांज्ञानिभिर्ब्रह्मवादिभिः निःसृतस्तुभ्रुवोर्मध्यान्मेघमुक्तइवांशुमान् ३० चरद्भिःपक्षिवल्लोकेनिर्द्वंद्वैर्निष्परिग्रहैः ॥ योगधर्मेणकौरव्यध्रुवमासाद्यतेफलम् ३१

ष्टेतिचेतनांतरनिषेधात् अतएवब्रह्मैवप्रधानमित्याहप्रधानमितिकारणांतरैर्युक्त्यंतरैःयदिनिर्विशेषाश्चेतनाःबहवःस्युःतर्हिवैधर्म्याभावात्तेषांभेदासिद्धिः यदिसविशेषास्तर्हिस्वाश्रयना शमंतरेणविशेषानाशान्मुक्तिसिद्धिरित्यादिभिः ॥ २७ ॥ कथंतर्हिनिर्विशेषस्यापिसंसारित्वमतआह अव्यक्तादिति अव्यक्तात्मायातः स्वेनभावेनअनादिसंस्कारेण विद्ययाब्रह्माकार चित्तवृत्त्यासहचरंतंप्रकाशमानम् ॥ २८ ॥ कस्तर्हिकर्त्ताभोक्तेत्यतआह कर्मेति कर्मदृश्यंकर्तासाभासाहंकारःइदंद्वयमपिविषयस्थमेवनत्वविषयचिदात्मस्थंकर्त्तुरप्याभासरूप त्वेनदृश्यत्वात् अनेकधाभासमानमपिचक्षुर्भ्यांनोपलभ्यते मायानगरमिववीतचक्षुः पटलैरधिकारिभिः ॥ २९ ॥ ज्ञानिभिस्तुतदेवोपलक्ष्यतेकर्माद्यात्मनाकनकमिवकुंडलाद्यात्मना तथाचवृद्धवचनं सकलवाङ्मनसातिगताचितिःसकलवाङ्मनसव्यवहारभागिति यद्वा चक्षुर्भ्यांभ्रुवोर्मध्येयोजिताभ्यांतरमात्रानिःसृतमाविर्भूतंब्रह्मोपलभ्यतइतियोजना ॥ ॥ ३० ॥ पक्षिवदित्यसंगत्वंसूचितम् ॥ ३१ ॥

प्रादुरिति भूतस्य भूतजातस्य प्रादुर्भावं उत्पत्तिं क्षयं ऐश्वर्यं कुर्वद्रूपतां निधनं नाशं संक्षये प्रलये भवे सृष्टौ ब्रह्मा ब्रह्मवित् ॥ ३२ ॥ जगज्जन्मादिहेतुत्वेन योगिन ऐश्वर्यमुक्त्वा कर्मफलवि
भाजकत्वेनापि तदाह कर्मण इति योगज्ञो भूतेभ्यो कर्मणो योगादेः सुखभाजकत्वं विभजत इति शेषः धर्मस्याप्यायनेन लोकस्याविनाशायेति योज्यं अस्यैव प्रीत्यै धर्मः क्रियते अनेनैव
प्रीतेन लोको रक्ष्यत इत्यर्थः ॥ ३३ ॥ युगमिति कालमानमविवक्षितं हिंसाशून्ययोगज धर्म एव चतुष्पात् ब्रह्मप्रापकं युगं समयः यदैवईदृग्धर्मप्रवणं चित्तं तदैव कृतं प्रवृत्तमिति
ज्ञेयमिति भावः ॥ ३४ ॥ अनेकैरेवंविधैः कृतैः प्रलयांतकृत् कालस्याप्यंतकर्त्ता संहारो महाप्रलयो मुक्त्याख्यो भवति यथोक्तं अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति तदाहि लोकानां
स्वरूपं सूक्ष्मं भवति सत्तामात्रमवशिष्यते तदैव निर्विकारं अचेतनं च चैतन्याभावात् यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यविद्यावस्थायां चेतना मुक्ता यत्र त्वस्य सर्वमात्मैवाभूत्तत्के
न कं पश्येदिति कैवल्ये द्रष्टृदृश्ययोर्लोपोपेत निर्विशेषचिन्मात्रावशेषश्रुतेः ॥ ३५ ॥ कारणैः सत्त्वादिभिर्गुणैः निर्मितं जगदित्यन्वयः तच्च सूक्ष्मं ब्रह्म संपद्यते प्रलयमापन्नं सत् ॥ ३६ ॥

प्रादुर्भावं क्षयं चैव भूतस्य निधनं तथा ॥ विधत्ते शतशो ब्रह्मा संक्षये च भवे तदा ३२ कर्मणः कर्मयोगज्ञो भूतेभ्यो नात्र संशयः ॥ अविनाशाय लोकस्य धर्मस्या
प्यायनेन च ३३ युगं द्वादशसाहस्रं सहस्रयुगसंहितम् ॥ एतद्ब्रह्मयुगं नाम युगानां प्रथमं युगम् ३४ सहस्रयुगयोरंते संहारः प्रलयांतकृत् ॥ सूक्ष्मं भवति लो
कानां निर्विकारमचेतनम् ३५ तथा प्रलयमापन्नं जगत्सर्वं सनातनम् ॥ ब्रह्म संपद्यते सूक्ष्मं निमित्तं कारणैर्गुणैः ३६ इतिश्रीम० खि० ह० भविष्यपर्वणि अष्टाद
शोध्यायः १८ ॥ छ ॥ ॥ जनमेजय उवाच ॥ प्राग्वंशं श्रोतुमिच्छामि विस्तरेण महामुने ॥ आद्ययोर्युगयोर्ब्रह्मन्ब्रह्मप्राप्तस्य सर्वशः १ ॥ वैशंपायन उवाच ॥
शृणु विस्तरशः सर्वं यन्मां पृच्छसि मेधया ॥ उपपन्नेन मनसा दैवप्रत्ययसाधिना २ ऋद्धिप्राप्तस्तु भगवान्योगात्मा ब्रह्मसंभवः ॥ भूतानां बहुलत्वं च चकारे
श्वरः प्रभुः ३ स्थितो ब्रह्मासने ब्रह्मा विक्षिप्तः सहसा प्रभुः ॥ अचलेनैव भावेन स्थाणुभूतेन भारत ४

॥ इतिश्रीमहाभारते हरिवंशे भविष्यपर्वणि टीकायां अष्टादशोऽध्यायः ॥ १८ ॥ युगधर्मा युगैर्ज्ञेया ब्राह्म्ये प्रोक्तं कृते कृतम् ॥ कृतं त्रेता द्वापरं च मुनिर्वक्ति त्रयोदशे ॥ १ ॥ प्राग्वं
शमिति यद्यपि सर्वो योगी सत्त्वोत्कर्षे च मुक्तो भवति तथापि पूर्वं मधुकैटभाख्यायिकया योगिनस्तमोरजोभ्यामपि अभिभूयंत इत्यस्य दर्शितत्वात् यथा स्वप्नं भयं मोहं विषादं मदमेव चेत्यु
क्तानां स्वप्नादीनां लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहेत्युक्तानां लोभादीनां च तमोरजः कार्याणां योगेपि संभवात् शुद्धसत्त्वमयेपि योगे धूमादेर्विघ्नस्य दर्शितत्वे इतरत्र तस्य कैमुत्येन सिद्ध
त्वाच्च पृच्छति प्राग्वंशमिति कृतस्योक्तत्वात् कलेर्वर्तमानत्वात् आद्ययोः त्रेताद्वापारयो रजस्तमसोः प्राक् पराभूतं वंशकार्यसंततिं श्रोतुमिच्छामि ब्रह्मप्राप्तस्य सगुणब्रह्मविदः ॥ १ ॥
शृण्विति दैवप्रत्ययसाधिना दिव्यज्ञानसाधनशीलेन ॥ २ ॥ योगात्मा योगैकनिष्ठचित्तः ब्रह्मरूपेण संभव आविर्भावो यस्य स ब्रह्मसंभवः चकारेति भूतार्थो न विवक्षितः करोतीत्यर्थः ॥
॥ ३ ॥ उक्तेर्थे हेतुमाह स्थित इति यतः अचलेनैव भावेन ब्रह्मासने ब्रह्मस्वरूपे धिष्ठाने स्थितोपि सहसा क्षिप्तो रजसेति शेषः अतो भूतानां बहुलत्वं करोतीति संबंधः ॥ ४ ॥

रक्तश्चेति सचविक्षिप्तोमोक्षस्यविषयवत्प्रतिबंधकेपदेज्ञानमयेमनोरथमात्रेरक्तश्चभवतियस्मात्भवंतिउत्पद्यंतेप्रभवंतिस्वकार्यसामर्थ्यवंतिसौभारिशरीरादिवत्अतस्तत्ररक्तत्वंघटतइति भावः ॥ ५ ॥ एतच्चैश्वर्यंअप्रार्थितमपिप्रवर्ततेइत्याह ब्रह्मयज्ञमिति यज्ञंसदावेदात्मकंवेदसर्वस्वरूपंब्रह्माख्यंयज्ञंविष्णुंयजते आराधयतियोगाद्योगेनतस्यब्रह्मणोब्रह्मभावंप्राप्त स्यतस्मात्स्वयंप्रवृत्तमैश्वर्यंमुमुक्षुणानिरोद्धव्यमितिश्लोकद्वयभावः ॥ ६ ॥ एतच्चैश्वर्यंपरोपकारेनियोजनीयंनस्वार्थमित्याह ततइति ब्रह्मणाब्राह्मणेनयुंजानेनेतिसंबंधः ॥ ७ ॥ तदे ति निर्विकारेणरजस्तमोविकारशून्येनकर्मणाप्रत्याहारादिनायुंजानोभवतितदाआकाशमव्याकृतमैश्वर्यंप्रवर्ततेनतुव्याकृतंविक्षेपकं ॥ ८ ॥ ततोपिकिमित्यतआह तदेतिसार्धेन व्योमसच्छिद्रूपंअंतरिक्षमपितदानिर्मलंनिरवद्यंशुद्धंब्रह्मप्राप्तंभवति तदेवविशिनष्टि संहारइतिसर्वेषांषष्ठचंतानांसंहारोलयस्थानंध्रुवंकूटस्थमितिप्रतिपद्यंतिप्रतिपद्यंतेजानंतिवेत्तारःवेद

रक्तश्चमोक्षविषयेसचज्ञानमयेपदे ॥ यस्मात्पदसहस्राणिप्रभवंतिभवंतिच ५ ब्रह्मयज्ञंतुयजतेयोगाद्वेदात्मकंसदा ॥ ब्रह्मणोविपुलंज्ञानमैश्वर्यंचप्रवर्तते ६ ततःप्रथममैश्वर्यंयुंजानेनप्रवर्तितम् ॥ ब्रह्मणाब्रह्मभूतेनभूतानांहितमिच्छता ७ तदात्वाकाशमैश्वर्यंयुंजानस्यप्रवर्तते ॥ ब्रह्मणोब्रह्मभूतस्यनिर्विका रेणकर्मणा ८ तदांतरिक्षंसंप्राप्तंनिर्मलंब्रह्मचाव्ययम् ॥ संहारःसर्वभूतानांनराणांब्रह्मवादिनाम् ॥ ध्रुवमैश्वर्ययोगानांप्रतिपद्यंतिदेहिनः ९ आकाशैश्व र्यभूतेनसंयुगेब्रह्मवादिना ॥ प्रवर्त्तमानमैश्वर्यंवायुभूतंकरोतिच ॥ विकारैर्बहुभिःप्राप्तैःसंपताद्भिर्महाबलैः १० एतैर्विकारैःसंवृत्तैर्निरुद्धैश्चसमंततः ॥ ध्रुवमै श्वर्यमापन्नःसिद्धोभवतिब्राह्मणः ११ शरीरादभिनिष्क्रम्यआकाशेनप्रधावति ॥ निरालंबोनिरालंबानालंब्यमनसाततः १२ ऐश्वर्यभूतोभूतात्माचरन्दि विनदृश्यते ॥ चक्षुर्भिर्बहुभिर्लोकैःपुरंदरसमैरपि १३ ओंकारंयेत्वधीयंतेमनसाब्रह्मसत्तमाः ॥ विभक्ताःसर्वकर्मभ्यस्तेयंपश्यंतिसाधवः १४ एतद्धिपरमं ब्रह्मब्राम्हणानांमनीषिणाम् ॥ अंतश्चरतिभूतानांविद्धिचेतनयासह १५

लोचनेनेतिशेषः देहिनःजीवस्य ॥ ९ ॥ सकामस्तुयोगीवाय्वादिरूपेणभवतीत्याह आकाशेति संयुगेयोगयज्ञेयान्येवसंग्रामनामानितानियज्ञनामानीतिनैघंटुकप्रसिद्धेः वादो र्थवादःस्तावकोस्यास्तीतिवादीतेनवादिनाआकाशैश्वर्यंअव्याकृतैश्वर्यंतद्भावंप्राप्तेनआकाशैश्वर्यभूतेनप्रवर्तमानं ब्रह्मकर्तृऐश्वर्यंवायुभूतंकरोतिब्रह्मैश्वर्यवत्त्वाव्योमसंविदाप्रवर्तमानो योगीयोगकालेस्वात्मानंवाय्वादिरूपंकरोतीत्यर्थः विकारैः तेजआदिभिः सहेत्यध्याहारः ॥ १० ॥ संवृत्तैर्निष्पन्नैरपिविकारैर्निरुद्धैःध्रुवमैश्वर्यंपूर्वोक्तंनिर्मलंब्रह्म ॥ ११ ॥ वि कारनिरोधेतुकवचवत्स्थूलशरीरत्यागेनआकाशगमनसदृशत्वंचाप्नोतीत्याहद्वाभ्यां शरीरादिति निरालंबान्व्याघ्रादीन् मनसेतिस्वप्रसादृश्यत्वंदर्शितम् ॥ १२ ॥ १३ ॥ ओ मिति यंयोगिनंतेसाधवःपश्यंतीतियोजना येओंकारवाच्यंव्यस्तसमस्तरूपं अउम् ओमित्येवंभूतंविराट्सूत्रांतर्यामिशब्दस्वरूपंपूर्वस्योत्तरत्रप्रविलापनेनअधीयंतेप्राप्नुवंति श विकरणस्यगत्यर्थस्यइङोरूपं ॥ १४ ॥ एतत्प्रणवाख्यंब्रह्मतत्प्रापकत्वात् चेतनयाचिदभावविशिष्टवृत्त्या ॥ १५ ॥

ओंकारमेवस्तौतिएषइतिद्वाभ्याम् एषओंइतिशब्दः महानादः सर्ववर्णानामभिव्यंजकः पुराणोनित्यःब्रह्मणः संभवएकीभावोयेनालंबितेनसतथाएतद्वैसत्यकामपरंचापरंचब्र ह्मयदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीतिश्रुतेः अयमेवपरापश्यंतीसंज्ञकशुद्धशबलब्रह्मात्मासन्वायुभूतोमध्यमारूपः अक्षरंअक्षरत्वंप्राप्तः मातृकामयवैखरीरूपोभव तीत्याहुर्ब्राह्मणाः ॥ १६ ॥ अरूपीरूपरहितोप्ययंप्रणवः रूपेणवैखर्यात्मकत्वेनसंपन्नःतत्रहेतुः धातुभिःसहसंगतः अन्नमयंहिसौम्यमनःआपोमयःप्राणःतेजोमयीवागितिश्रु तेः मनःकायाग्निमाहंतिसप्रेरयतिमारुतंइत्यादिशिक्षोक्तप्रकारेणतेजोबलयोगाच्छब्दोत्पत्तिदर्शनात् अयमेवोपाधेःसौक्ष्म्याज्जीवरूपेणसूक्ष्मतरत्वाच्चांतर्यामिरूपेणांतर्देहांतःस्थि त्वाचरतिविषयान्भुंक्ते यतःकामकारइच्छा तत्करःस्वतंत्रेच्छः वशीअसंगः ॥ १७॥ एतदिति एतत्प्रणवात्मकंब्रह्मपूर्वंशास्त्राचार्योपदेशमनुचिंतयित्वावेदात्मकंश्रुतिसारभूतंयज्ञं योगंचिंतयंतोभावयंतः मनसासंकल्पेनस्वोपाधिरूपेणआसमंतात्आपूरयन्निवपूर्णीकृतवंतइवव्यापकत्वंप्राप्ताइवेत्यर्थः इवशब्दोव्याप्त्याभावसूचकः तेनभित्तिचित्तवद्व्यापकत्व

एषशब्दोमहानादःपुराणोब्रह्मसंभवः ॥ वायुभूतोक्षरंप्राप्तोवदंत्येवंद्विजातयः १६ अरूपीरूपसंपन्नोधातुभिःसहसंगतः ॥ अंतश्चरतिभूतेषुकामकारकरो वशी १७ एतत्पूर्वमनुध्यायमनसापूरयन्निव ॥ वेदात्मकंतदायज्ञंचिंतयंतोमनीषिणः १८ ब्राम्हणाःशुचयोदांतायशोयुंजस्तदन्वयाः ॥ ब्रम्हलोकंकांक्ष माणावैष्णवंपदमुत्तमम् १९ पदहेतोःक्रियाःसर्वाःकुर्वंतिविगतज्वराः ॥ नह्येतेप्रसवादानेभवमिच्छंतिभारत २० त्रिभिर्माल्योपहारैश्चप्रतिभावैश्चवैद्विजः यजंतिपरमात्मानंविष्णुंसत्वपराक्रमम् २१ यजनंविक्रमंचैवब्रह्मपूर्वाःप्रचक्रिरे ॥ ब्रह्मापिवैष्णवंतेजोवेदोक्तैर्वचनैर्नृप २२ ब्राह्मणैर्ब्रह्मविद्भिश्चब्रह्मज्ञैर्ब्रह्म वादिभिः ॥ शुचिभिःकर्मनिर्मुक्तैःसत्यव्रतपरायणैः २३ धातुभिर्मोक्षकालेचमहात्मासंप्रदृश्यते ॥ तदेवपरमंब्रह्मवैष्णवंपरमाद्भुतम् २४

मपिनास्त्येवेत्यर्थः ॥ १८ ॥ यशोब्रह्मतेनसहयुंजंतेऐक्यंप्राप्नुवंतियशोयुंजः समासोपिछांदसोनुम्यतःतदन्वयाःब्रह्मप्रसूताः सैंधवखिल्यवत्सोपादानएवलीयंतेइत्यर्थः ब्रह्मा ख्यंलोकम् ॥ १९ ॥ पदेति प्रसवादानेजन्मग्रहणनिमित्तंभवंजन्मएतेनहीच्छंति किंतुज्ञानार्थमेव ॥ २० ॥ त्रिभिर्माल्योपहारैर्माल्यवद्भिश्चतैजसप्राज्ञानांउपहारैःसमर्पणै र्विलापनैरितियावत्प्रतिभावैः प्रतिभासमात्रैः माल्यैरितिसमासैकदेशस्यापित्रिविशेषणम् ॥ २१ ॥ ब्रह्मपूर्वाः वेदप्रमाणमेवपूर्वंमुख्यंयेषांतेयजनंयोगंविक्रमंयोगैश्वर्यंचचक्रिरेय स्मात्ब्रह्माब्रह्मवित्वैष्णवंतेजः ब्रह्मैव तत्रप्रमाणं वेदोक्तैरिति ब्रह्मैवसन्ब्रह्माप्येतीत्यादिभिः ॥ २२ ॥ ब्राह्मणैर्यथोक्तविशेषणैः ॥ २३ ॥ धातुभिस्तेजोबलात्मकैः शरीरद्वये नमोक्षकालेयःपरमात्मासंप्रदृश्यते तदेवरसात्मकं रसोवैसइतिश्रुतेः परमानंदात्मकंऐश्वर्यंसैषास्यपरमासंपदित्यादिश्रुत्यापरमत्वेनस्तुतंविकारांतेविकाराणांपूर्वोक्तानांराज सानांवाय्वादिरूपाणामंतेविलयेसतिप्रकर्षेणदृश्यतेयोगिभिः एवंलोभप्रदृत्त्यादिजनकानांराजसविकाराणामंतेपुनःसत्वोत्कर्षादात्मदर्शनमुक्तम् इदानींतामसान्भयादीन्योग विघ्नान्विकारान्प्रस्तौतिघोररूपाइत्यादिना ॥ २४ ॥

॥ २५ ॥ विकाराव्यथयंतीत्युक्तंतांव्यथामेवाहपंचभिः संच्छाद्येत्यादिभिः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ एतैर्विकारैरितिव्याख्यातार्थःश्लोकः ॥ ३१ ॥ रसात्मकमितिजिह्वाग्रशब्देनतत्साध्योरसास्वादोलक्ष्यते ततोनेकविधमैश्वर्यंभवति ॥ ३२ ॥ धात्वर्थंशरीरभोगाद्यर्थंसर्वभूतानामैश्वर्यमितिपूर्वेणान्वयः ॥ ३३ ॥ तैजसैश्वर्यप्रयुक्तान्विघ्नानाह तेजसइति ब्राह्मणस्यब्रह्मविदःकारणेमोक्षसाधनेयोगेस्वस्थः स्वस्थस्येतिआत्मनइत्यस्यविशेषणंस्वशब्दपूर्वात्तिष्ठतेःक्विप्ङसिआतोधातोरित्यालोपःसोमपावत् ॥

रसात्मकंतदैश्वर्यंविकारांतेप्रदृश्यते ॥ घोररूपाविकारास्तेव्यथयंतिमहात्मनः २५ संच्छाद्यातीवतोयेनक्षुभ्यमाणोविचेतनः ॥ ऊर्मिभिश्छाद्यतेचैवशीतोष्णाभिर्विकारतः २६ महार्णवगतश्चैवदृश्यतेनचसज्जते ॥ मग्नश्चैवमहानद्याःसलिलेनैवसीदति २७ सीदमानश्चसलिलेसशीतेपात्यतेबलात् ॥ आसनाच्छादनाच्चैवमुच्यमानोविचेतनः २८ श्वभ्रेप्रपद्यमानश्चतोयेनपरिषिच्यते ॥ शुक्लवर्णेनबहुनास्रोतसामूर्ध्निसर्वशः २९ ऊर्ध्वंज्योतिरवेक्षंश्चशुक्लैःपीतैश्चबाध्यते ॥ वारिपूर्णैःसुगंभीरैर्विद्युद्भिरिवभासितैः ३० एतैर्विकारैःसंवृत्तैर्निरुद्धश्चैवसर्वशः ॥ ध्रुवमैश्वर्यमासाद्यसिद्धोभवतिब्राह्मणः ३१ रसात्मकंतदैश्वर्यंजिह्वाग्रादभिनिःसृतम् ॥ सहस्रधारंविततंमेघत्वंसमुपागतं ३२ रसांश्चविविधान्योगान्संसिद्धःसृजतेप्रभुः ॥ धात्वर्थंसर्वभूतानांयोगप्राप्तेनहेतुना ३३ तेजसोरूपमैश्वर्यंविकारैःसहवर्द्धते ॥ आत्मनोविघ्नजननंस्वस्थोब्राह्मणकारणे ३४ उग्ररूपैर्विरूपैश्चहन्यतेदंडपाणिभिः ॥ घोररूपैःसुगंभीरैःपिंगाक्षैर्नरविग्रहैः ३५ नेत्रंसमुद्धरन्भीमंजिह्वाग्रंचास्यविंदति ॥ नदंतियुगपन्नादंजृंभमाणाःपुनःपुनः ३६ पुनरेवतदाभूत्वाबहुरूपास्तदाभवन् ॥ नृत्यमानाःप्रगायंतितर्पयंतोविशेषतः ३७ स्त्रीभूताश्चततःसर्वेयुंजानाश्चावलंबिरे ॥ कंठेषुबहुरूपत्वाद्विघ्नैश्चैवप्रलोभयन् ३८ मधुरैरभिधानैश्चव्याहरंतिनभीतवत् ॥ पतंतियुगपत्सर्वेपादयोर्मूर्धभिर्युताः ३९ प्रसादंकांक्षमाणाश्चयोगस्यांतरविघ्नतः ॥ बहुप्रकारंकथयन्नृत्यंतिचतरंतिच ४० एतैर्विकारैःसंवृत्तैर्निरुद्धश्चैवसर्वशः ध्रुवमैश्वर्यमासाद्यसिद्धोभवतिब्राह्मणः ४१ तदर्चिषइवाग्नेयाआदित्यस्येवरश्मयः ॥ तेजोरूपकमैश्वर्यंजनितास्तेजर्बिंदवः ४२ ज्योतींषिचैवसंवृत्ताआकाशेगुणसंवृताः ॥ चरंतिलोकेसततंसूर्याचंद्रमसोर्गतिम् ४३ चंद्रसूर्यात्मकंदिव्यंज्योतिःसघनमुत्तमम् ॥ एतद्विभ्राजतेलोकेकालचक्रंध्रुवंवरम् ४४ अर्धमासाश्चमासाश्चऋतुसंवत्सराण्यथ ॥ क्षणालवामुहूर्ताश्चकलाःकाष्ठास्तथैवच ४५

॥ ३४ ॥ ३५ ॥ जिह्वाग्रंविंदतिअवयवशोभिनत्तीत्यर्थः विदिअवयवेस्यरूपं ॥ ३६ ॥ ३७ ॥ प्रलोभयन् अडभावश्छांदसःलोभयंतीत्यर्थः ॥ ३८ ॥ ३९ ॥ तरंतिचयोगिनं जयंतिचेत्यर्थः ॥ ४० ॥ एतैरितिव्याख्यातं ॥ ४१ ॥ तदर्चिषइति तत्तत्रतेजोरूपाअपितएवजलबिंदवोभवंति ॥ ४२ ॥ गुणैःसत्त्वादिभिःसंवृत्ताःयोगिनःज्योतींषिसंवृत्ताःभवंति ॥ ४३ ॥ चंद्रसूर्यात्मत्वंप्राप्यसघनंसमेघमंडलंकालचक्रंध्रुवंअभिलक्ष्यचरन्सएवभवतिसएवकालस्यप्रवर्तकोभवतीत्यर्थः ॥ ४४ ॥ अर्धमासादिरूपश्चायमेवभवतीत्याहार्धेति ॥ ४५ ॥

॥ ४६ ॥ अथेति विकाराः रजस्तमोमयास्तेषांग्रहःस्वीकारस्तत्संभवम् ॥ ४७ ॥ अलोभाच्छिद्यतेऐश्वर्यमितिशेषःवेपमानोविघ्नात्भीतस्तुअनुकीर्त्यतेवाच्योनिंद्योभवतीत्यर्थः ॥ ४७ ॥ संक्षेपात् समवरुध्यतइत्यक्षराधिक्यमार्षं ॥ ४९ ॥ ५० ॥ ५१ ॥ एभिःभौमैः ॥ ५२ ॥ ततइति विकारतोनिर्मुक्तस्यपार्थिवमैश्वर्यमाविर्भवति ॥ ५३ ॥ समाधौसंजातेविकारेचप्रलयंगतेसातेदिव्यगंधादेसंविदोभवंततियाहसार्धेन दिव्यपुरुषैःमुक्तैःसहभिद्यतेयावद्देहपातंऊर्ध्वंतुनभिद्यते कैवल्येऐकात्म्यप्राप्ते ॥ ५४ ॥ अंतःगच्छन्सुकृतिनामंतःकरणमपिप्रविशतियतःप्रधानात्माप्रधानजयीक्षरन्निवप्रधानवत्परिमाणप्रमाणइतिसर्वांतःकरणरूपोभवतीत्यर्थः॥ ५५ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायामेकोनविंशोध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ चतुर्दशेपृथक्भूतधारणाभीतिदायतः ॥ अतःसूत्रेमनोधार्यमभयायेतिवर्ण्यते ॥ १ ॥ ततइति यतोभेददर्शनमयीएकैकभूतधारणाक्षुद्रफलदायोगविघ्नकरीचपूर्वोक्तरूपेण ततोहेतोःअन्यांतद्विपरीतांअहमेवेदंसर्वोस्मीतिमन्यते सएवास्यपरमोलोकइतिश्रुतिप्रसिद्धांसमष्टिधारणांगत्वाप्राप्यत

अहोरात्रप्रमाणंचनिमिषोन्मेषणंतथा ॥ ताराणांगतयश्चैवग्रहाणांचविशेषतः ४६ अथपार्थिवमैश्वर्यंविकारग्रहसंभवम् ॥ योगयुक्तास्त्वभिग्रस्तायांत्यंतेह्यचलासनात् ४७ अलोभाच्छिद्यतेसद्योवेपमानोनुकीर्त्यते ॥ सीदतेवसुधामध्येभिद्यमानःपुनःपुनः ४८ भूतानांबहुरूपैश्चअन्यैश्चतलवासिभिः ॥ विषयैर्युज्यतेक्षिप्रंसंक्षेपात्समवरुध्यते ४९ ततःपार्थिवमैश्वर्यंसेवमानश्चसर्वतः ॥ मूर्तिमद्भिश्चबहुधाधातुभिःसचहन्यते ५० शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकधा ॥ असिभिःपात्यतेचैवक्षुरधारैःसहस्रशः ५१ भिद्यतेचैवबाणाग्रैःसुतीक्ष्णैर्मर्मभेदिभिः ॥ एभिर्विकारैर्निर्वृत्तैर्निरुद्धैश्चैवसर्वशः ५२ ध्रुवमैश्वर्यमापन्नःसिद्धोभवतिब्राह्मणः ॥ ततःपार्थिवमैश्वर्यंनिर्मुक्तस्यविकारतः ५३ प्रादुर्भवतिसंजातेसमाधौप्रलयंगते ॥ दिव्यंगंधंसमाघ्रायदिव्यार्थांस्ताञ्छृणोतिच ५४ दिव्यरूपैश्चपुरुषैश्छिद्यतेनचभिद्यते ॥ गच्छन्सुकृतिनांचातःप्रधानात्माक्षरन्निव ५५ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततोन्यांधारणांगत्वामनसासपितामहः ॥ ब्रह्मकर्मसमारंभंनिर्मुक्तेनांतरात्मना १

तोव्यापकःसर्वात्माभवतीतिशेषः पितामहःउक्तरीत्याशुद्धचिन्मात्ररूपोपिसन्मनसाउपाधिनैवसार्वात्म्यंगतः नतुस्वतः कीदृशेनमनसा ब्रह्मकर्मब्रह्मप्रापकंकर्मउक्तविधंआसनादिधारणांतं समारंभंसम्यगारभ्यआरंभमितिणमुलंतं निर्मुक्तेनबाह्यरूपादिभ्यःव्यावृत्तेनअतएवांतरात्मनाअंतरेवहार्दाकाशादौआत्मास्वरूपमस्यास्तिनत्वाहिश्चक्षुरादिद्वारारूपादौ इदमत्रतत्त्वं इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥ मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसइत्यादिस्मृतिभ्यः सर्वेभ्यः सूक्ष्मतमःपरमात्मा अर्थास्तुइंद्रियेभ्यः सूक्ष्माअपितैर्गृहीताःसंतोलोचनोत्तेजनेनपुस्तकाक्षरवत्स्थूलाएवावभासंतेतथाआत्माऽनतिरिक्ताअप्यतिरिक्तद्वावभासंतेस्वकरइवदर्पणेनबालस्य अन्यथायोगिनःसमाधौसार्वज्ञंनस्यात् सर्वस्यस्वरूपादन्यत्वेनकस्मिन्नुभगवतोविज्ञातेसर्वमिदंविज्ञातंभवतीत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञाश्रुतेरुपरोधश्चस्यात् योगिनांसार्वज्ञस्यसर्वसंमतत्वाच्चनतदपलापः कर्तुंशक्यः

तस्मादिंद्रियाणामुपसंहारेअर्थानांस्थूलत्वमनात्मत्वंचापगच्छतीतियुक्तमुक्तमभ्यधारणांगत्वाततोव्याप्तोभवतीति सूक्ष्मत्वंचात्रकालिकपरिमाणरहितं तथाहिकनकादेःकुंडलादि धर्मपरिणामःस्वरूपाविनाशेपिरूपांतरापत्तिरूपः तथाकुंडलाद्युत्पत्तेःप्रागूर्ध्वंचानागतत्वातीतत्वरूपौउत्पन्नौवर्तमानस्वरूपश्चेतित्रेधालक्षणपरिणामः स्वरूपप्रच्यवासिद्धिरूपः तथाउत्पन्नस्यनूतनत्वपुराणत्वाद्यवस्थापरिणामःस्वरूपोपचयापचयलक्षणः एतौद्वावपिकालाधीनावेव अतएवसूक्ष्मेउक्तरूपेसर्वंसर्वत्रसर्वदासर्वावस्थमस्तीति तदव स्थानांयोगिनांतस्यापरोक्षमितिप्रसिद्धं अतःसमष्टिसूक्ष्मे चित्तधारणाश्रेयस्करीधारणांतरेषुभेददृष्टिगर्भितेषुभयादिदर्शनात्यन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिततएवास्माकंभयं विहायकस्माद्भयंभविष्यंतद्वितीयाद्वैभयंभवतीतिश्रुतेरस्यांतदर्शनाच्च ॥१॥ अस्याःफलमाह सर्वांगधारणांसर्वअंगेष्वेवास्यास्तिससर्वांगःसूत्रात्माप्रहसन्निवमौढ्यमाहात्म्येनाविस्मया त्मनसेत्यस्यावस्यासूत्रात्मतायाःसृज्यस्यचकल्पितत्वमुक्तम् ब्रह्मणिसूत्रेयोगऐक्यंब्रह्मयोगस्तेन ॥ २ ॥ चक्षुषेति अत्रअंगविशेषोनविवक्षितः सर्वस्यांगस्यसर्वात्मत्वेनसर्वोरप

सर्वांगधारणांकृत्वामनसाप्रहसन्निव ॥ ब्रह्मयोगेनचब्रह्मासृजतेमनसाप्रजाः २ चक्षुषारूपसंपन्नाह्यप्सरासृजतेप्रभुः ॥ नासिकाग्राच्चगंधर्वान्सुचित्रांबर वाससः ३ तुंबुरुप्रमुखान्सर्वाञ्छतशोथसहस्रशः ॥ नृत्यवादित्रकुशलान्कुशलान्सामगीतिषु ४ ब्रह्मयोगेनयोगज्ञःस्वयंभूर्भगवान्प्रभुः ॥ चारुनेत्रांसु केशांतांसुभ्रूंचारुनिभाननां ५ पद्मेनशतपत्रेणचारुणासुविराजिताम् ॥ स्वक्षांशुचिगिरंसेव्यांब्राह्मींमूर्तिमतींश्रियम् ६ ससृजेमनसाब्रह्मासम्यक्प्रोक्ते नचेतसा ॥ भावयोगेनभूतात्मासर्वप्राणभृतान्नृप ७ चक्षुषोरूपसंपन्नासृजत्सोप्सरसःप्रभुः ॥ नासिकाग्राच्चगंधर्वान्सुवासःसुप्रवादितान् ८ गानप्रभाषंसं चक्रेगंधर्वाणामशेषतः ॥ अन्येषांचैवविप्राणांगानंब्रह्मप्रभाषितम् ९ पद्भ्यांसृजतिभूतानिगतिमंतिध्रुवाणिच ॥ नरकिन्नरयक्षांश्चपिशाचोरगराक्षसान् १० गजान्सिंहांश्चव्याघ्रांश्चमृगांश्चैवसहस्रशः ॥ तृणजातींश्चबहुधाभावहेतोश्चतुष्पदान् ११ येतुहस्तान्निखादंतिकर्मप्राप्तेनहेतुना ॥ हस्तेभ्यःकर्मससृजे मंतव्यंमनसातथा १२

त्तिहेतुत्वौचित्यात् अप्सराइतिआकारांतत्वमार्षंअप्सरासुचयामेधेतिदर्शनाद्वा ॥ ३ ॥ ४ ॥ ५ ॥ स्वक्षांदिव्यलोचनरूपांशुचिगिरं निष्कलंकांवेदवाणींसाहिश्रीब्रह्मविदां ऋचःसामानियजूंषिसाहिश्रीरमृतासतामितिश्रुतेः ॥ ६ ॥ ससृजेतिसृष्टिरत्रसंप्रदायप्रवृत्तिमात्रंनत्वभिनवोत्पत्तिः वाचाविरूपनित्ययेतिवेदस्यनित्यत्वश्रवणात् अतएवप्रोक्तेनेति विशेषणंईश्वरप्रोक्तेनेत्यर्थः योवैवेदांश्चप्राहिणोतितस्मैइतिसिद्धप्रधानश्रवणात् अस्यैवसर्वेश्वरत्वात् जीवानामाशयानुरोधेनायंसृजतिनस्वस्यभोगार्थमित्याह भावेति ॥ ७ ॥ ॥ ८ ॥ गानंप्रभाष्यतेव्युत्पाद्यतेनेनेतिगानप्रभाषंगांधर्वशास्त्रं तथाब्रह्मणिवेदेप्रभाषितंगानंसामाख्यंचक्षुषइतिश्लोकद्वयंपूर्वोक्तस्यैवविवरणं ॥ ९ ॥ १० ॥ ११ ॥ येतुहस्तात् हस्तेआदायल्यब्लोपेधिकरणेपंचमी हस्तेतिपाठेविश्वाभूतानीतिवद्विभक्तेः पूर्वरूपमार्षं निखादंतिभक्षयंति कर्मप्राप्तेनकर्मलब्धेनहेतुनाकारणेनअदृष्टेन ॥ १२ ॥

वायुनाप्राणादिरूपेणविसर्गंविविधंप्राणनादिकार्यंसृष्टिंससृजेइतिपूर्वेणान्वयः एवंराजसींसृष्टिंकुर्वतः कथंमुक्तिः स्यादित्याकुलमाश्वासयतिपंचेंद्रियाणांसमाधिनिरोधस्तेनहेतुना आनंदंपरमात्मानंउपलक्ष्यतेनतस्थेस्थितंलीलयासृष्टिंकुर्वन्नपिब्रह्मसामीप्यंप्राप्तत्वान्मुक्तएवेत्यर्थः ॥ १३ ॥ गावः गाः प्रथमाद्वितीयार्थे वेषैरेवनटवत्नतुपरिणामैः यदवोचंमूलकारणमेवांत्यात्कार्यान्नटइवतत्तद्रूपेणभातीतितदितएवोत्थितम् ॥ १४ ॥ व्यतिषिक्तानिश्रितानिषट्इंद्रियाणियस्यसव्यतिषिक्तषडिंद्रियस्तम् ॥ अस्माकंहिशब्दादयः श्रोत्रादीनांप्रतिनियताः विषयाः सर्वात्म्यकालेतुसर्वमिंद्रियंसर्वविषयग्राहकंभवति यथोक्तंवासिष्ठे सर्वात्मनितुयत्रैवछायातत्रैवचातपः ॥ नसंभवतिचेत्तस्सकथंसर्वात्मतामियादिति ॥ १५ ॥ तमंगिरसंभ्रुवोंतरात् ॥ १६ ॥ भृगुंललाटमध्यात् नारदंसनत्कुमारंचमूर्ध्नः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तत्रेतिस्थानानिआदित्यादीनांध्रुवप्रभृती

वायुनासविसर्गंचभूतानांसुखमिच्छता ॥ उपतस्थेतदानंदंपंचेंद्रियसमाधिना १३ हृदयादसृजद्गावोबाहुभ्यांपक्षिणस्तथा ॥ अन्यानिचैवसत्त्वानितैस्तैर्वेषैःपृथग्विधैः १४ ऋषिंत्वंगिरसंचैवमुनिंज्वलिततेजसम् ॥ ब्रह्मवंशकरंदिव्यंव्यतिषिक्तषडिंद्रियम् १५ भ्रुवोंतरादजनयद्योगाद्योगेश्वरःप्रभुः ॥ ब्रह्मवंशकरंदिव्यंभृगुंपरमधार्मिकं १६ ललाटमध्यादसृजन्नारदंप्रियविग्रहम् ॥ सनत्कुमारंमूर्ध्नश्चमहायोगीपितामहः १७ अभिषिक्तंतुसोमंचयौवराज्येपितामहः ब्राह्मणानांचराजानंशाश्वतंरजनीश्वरम् ८ तपसामहतायुक्तोग्रहैःसहनिशाकरः ॥ चचारनभसोमध्येप्रभाभिर्भासयन्जगत् १९ सगात्रैर्भगवान्योगान्मनसासिद्धिमागतः ॥ ससृजेत्सर्वभूतानिस्थावराणिचराणिच २० तत्रस्थानानिभूतानांयोगांश्चैवपृथग्विधान् ॥ निधत्तेशतशोब्रह्मासर्वभूतापितामहः २१ एषब्रह्ममयोयज्ञोयोगःसांख्यश्चतत्त्वतः ॥ विज्ञानंचस्वभावंचक्षेत्रंक्षेत्रज्ञमेवच २२

नि योगान्अहोरात्रादिनिवर्त्तनाद्यधिकान् ॥ २१ ॥ एषआत्मोपादानकसृष्ट्यादिप्रपंचेनआसनध्यानसमाधिविधानेनचप्रपंचितोब्रह्मप्रापकत्वाद्ब्रह्ममयोयंज्ञानयज्ञउक्तइतिशेषः अयमेवयोगोयोगप्राप्यः सांख्यनामावेदांतजन्यंज्ञानमप्ययमेव ननुउक्तोऽनयोर्विरोधः पुरुषैकत्वानेकत्वप्रकृतिमिथ्यात्वामिथ्यात्वरूपइतिचेन्न योगैरपिगुणानांपरमंरूपंनदृष्टिपथमिच्छति यत्तुदृष्टिपथप्राप्तंतन्मायैवतुच्छकमितिदृश्यस्यभेदप्रकृत्यादेस्तुच्छत्वाभ्युपगमात् अत्यल्पमिदमुच्यते वेदबाह्याअपिविज्ञानवादिचार्वाकादयोपिनानेनसिद्धांतेनाविरुध्यंतेसर्वेषांमोक्षस्यैकरूपत्वादित्याह विज्ञानंविज्ञानवादिनांसिद्धांतः स्वभावंस्वभाववादिनांचार्वाकाणांसिद्धांतः क्षेत्रंप्रकृतिः क्षेत्रज्ञःपुरुषः निरीश्वरसांख्यसिद्धांतोप्ययमेवेत्यर्थः ॥ २२ ॥

एकत्वंचपृथक्त्वंचेतिज्ञानाज्ञानसमयभेदेनवाजगन्मिथोभिन्नमभिन्नमीश्वरादितिकापालिकमतेनवाएतज्ज्ञेयम् संभवोनिधनंचयोगएव एषब्रह्ममयोयज्ञःअज्ञातश्चेज्जन्मप्रदःज्ञात
श्चेज्जन्महंतेत्यर्थः योगोहिप्रभवाप्ययाविितिस्मृतेः कालविदांकालाख्यईश्वरोप्ययमेवतत्प्रकाशकत्वात् कालस्यक्षयोयस्मिन्सतिभवतितादृशंविशिष्टंअनुभवपर्यवसायिज्ञानं
विज्ञानंआत्मानुभवोप्ययमेवज्ञेयइतिसर्वत्रसंबंधनीयं एतेनसर्वतंत्रसिद्धांतानांमुक्तावैकरूप्यंदर्शितम् तथाचवीतहव्यसमाधिंप्रकृत्यबृहद्वासिष्ठेदर्शितं यच्छून्यवादिनांशून्यंय
द्ब्रह्मब्रह्मवादिनां विज्ञानमात्रंविज्ञानविदांयदमलंपदं ॥ पुरुषःसांख्यदृष्टीनामीश्वरोयोगवादिनाम् ॥ शिवःशैवमतस्थानांकालःकालैकवादिनाम् ॥ आत्मात्मनस्तद्विदुषांनैरात्म्यं
तादृशात्मनां ॥ मध्यंमाध्यमिकानांचसर्वंसुसमचेतसां ॥ यत्सर्वशास्त्रसिद्धांतोयत्सर्वहृदयानुगं ॥ यत्सर्वंसर्वगंसर्वंयत्तत्सत्तदसौस्थितइत्यंतेन पाद्मेमाघमाहात्म्येपि भूतयोगजचैत
न्यंचार्वाकास्त्वामुपासते ॥ सौगताब्रुवतेतर्कैस्त्वांबुद्धिंबोधलक्षणं ॥ शरीरपरिणामंत्वांमन्यंतेजिनदेवताः ॥ ध्यायंतिपुरुषंसांख्यास्त्वामेवप्रकृतेःपरम् ॥ जन्मादिरहितंपूर्णंसाच्चि
दानंदलक्षणम् ॥ त्वामौपनिषदाब्रह्मचिंतयंत्यनिशंविभो इत्यादि तस्माद्योयमुक्तोयोगयज्ञःसएवसर्वतंत्रसिद्धांतइतिसर्वंरमणीयम् समाप्ताब्रह्मविद्या अतःपरंधर्मचर्चाभविष्य

एकत्वंचपृथक्त्वंचसंभवोनिधनंतथा ॥ कालःकालक्षयश्चैवज्ञेयोविज्ञानमेवच २३॥ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिविंशोऽध्यायः ॥२०॥
जनमेजयउवाच ॥ ॥ श्रुतंब्रह्मयुगंब्रह्मन्युगानांप्रथमंयुगम् ॥ क्षत्रस्यापियुगंब्रह्मञ्छ्रोतुमिच्छाम्यहंप्रभो १ ससंक्षेपंसविस्तारंनियमैर्बहुभिश्चितम् ॥
उपायज्ञैश्चकथितंक्रतुभिश्चैवशोभितम् २ ॥ वैशंपायनउवाच ॥ ॥ एतत्तेकथयिष्यामियज्ञकर्मभिरर्चितम् ॥ दानधर्मैश्चविविधैःप्रजाभिरुपशोभितम् ३

ति ॥ परैरदर्शितःपंथाःपौर्वापर्यबलान्मया ॥ यथाकथंचिदुन्नीतःपंडिताःशोधयंतुतम् ॥ २३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांविंशोऽध्यायः ॥ २० ॥
जीवन्मुक्त्यैब्रह्मतत्त्वंचतुर्दशभिरीरितम् अथद्वादशभिर्धर्मंब्रवीतिक्रममुक्तये ॥ १ ॥ तत्रपंचदशेब्रह्मज्ञानहीनामहत्तमैः ॥ कर्मभिर्ब्रह्मलोकादप्यावर्ततइतीर्यते ॥ २ ॥ श्रुत
मिति ब्रह्मयुगंब्रह्मप्राप्तिहेतुत्वात्प्रथमंयुगंकृतंयत्रसर्वधर्मफलांतर्भावः यथाकृतायविजितायाधनेयाःसंयंत्येवमेवैनंसर्वंतदभिसमैतियत्किंचप्रजाःसाधुकुर्वंतीतिकृतायनिदर्शनेनश्रु
त्याप्रोक्तः क्षत्रस्यधर्मस्यतदेतत्क्षत्रस्यक्षत्रंयद्धर्मइतिधर्मस्यमुख्यक्षत्रत्वश्रवणात् युगंयुज्यतेअनेनतद्युगंस्वर्गादिफलप्रदत्वलक्षणमाहात्म्यम् श्रोतुमिच्छामि ॥ १ ॥ एतदेववि
शिनष्टिसंक्षेपमिति ॥ २ ॥ एतदिति एतत् धर्मस्यमाहात्म्यम् यज्ञकर्मभिःयज्ञात्मकमेवकर्मयेषांनतूपास्त्याद्यात्मकंतेयज्ञकर्माणःकर्मठाःतैरर्चितंपूजितंदानधर्मैः उच्चादिविदाक्षि
णावंतोअस्थुर्येअश्वदाःसहतेसूर्येण हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुरित्यितिश्रुतेर्दानजप्रभावैः प्रजाभिः यस्मिन्जातएतामिष्टिंनिर्वपतिपूतएवसतेजस्स्वन्नाद
इंद्रियावीपशुमान्भवतिपुत्रकामाद्याप्याख्यापयेरन्लभंतेहपुत्रानितिजातेष्टिशौनःशेपाख्यायनफलैः प्रजाभिरुपशोभितम् ॥ ३ ॥

तेइति तेब्राह्मणावृत्तसंपन्नाज्ञानसिद्धाःसमाहिताभवंतीतियोजना केते येअंगुष्ठमात्राइत्यल्पप्रमाणत्वेनउत्क्रांत्यादियोग्याः अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलादित्यारण्यकोक्तेः न तुयएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवतीतिश्रुतिप्रसिद्धविद्याफलसर्वात्म्यभाजः तेयज्ञकर्माणःविशिष्टधर्मेणसूर्यरश्मिभिरादत्ताःसूर्यमंडलंभित्वाब्रह्मलोकंगताअपीत्यर्थः मोक्षप्राप्ते नमोक्षप्रत्यासन्नेनविधिनायथाशास्त्रं ४ प्रवृत्तेयज्ञादौअप्रवृत्तेशमादौ ब्रह्मपरायणाःवेदैकशरणाः परायणस्यब्रह्मणःकर्मणिषष्ठी संगम्यईश्वरप्रीतिमुद्दिश्यवेदोक्तकर्मपराइत्यर्थः॥ ५॥ श्रीवृताः श्रियाऋचःसामानियजूंषिसाहिश्रीरमृतासतामितिश्रुत्यावृताःब्रह्मज्ञानेनपरोक्षज्ञानेन॥ ६ ॥ पद्मासनायुपुरवधिब्रह्मलोकेस्थित्वापूर्वस्मिन्कल्पेयेलयंगतास्तेऽग्रिमकल्पे उक्तविशेषणविशिष्टा ब्राह्मणाभवंति॥ ७॥ व्यतिरिक्तेति तेषांब्राह्मणानांमध्येयोयोगात्मासन्व्यतिरिक्तेंद्रियोदेहेंद्रियासंगेनस्वप्नेइवांतःप्रज्ञोभूत्वाचतुर्भुजादिलक्षणंविष्णुआत्मत्वे

तंगुष्ठमात्रानुनयआदत्ताःसूर्यरश्मिभिः ॥ मोक्षप्राप्तेनविधिनानिराबाधेनकर्मणा ४ प्रवृत्तेचाप्रवृत्तेचनित्यंब्रह्मपरायणाः ॥ परायणस्यसंगम्यब्रह्मण स्तुमहीपते ५ श्रीवृताःपावनाश्चैवब्राह्मणाश्चमहीपते ॥ चरितंब्रह्मचर्याश्चब्रम्हज्ञानावबोधिताः ६ पूर्णेयुगसहस्रांतेप्रभावेप्रलयंगताः ॥ ब्राह्मणावित्तसं पन्नाज्ञानसिद्धाःसमाहिताः ७ व्यतिरिक्तेंद्रियोविष्णुर्योगात्माब्रह्मसंभवः ॥ दक्षःप्रजापतिर्भूत्वासृजतेविपुलाःप्रजाः ८ अक्षराद्ब्राह्मणाःसौम्याःक्षरात्क्षत्रि यबांधवाः ॥ वैश्याविकारतश्चैवशूद्राधूमविकारतः ९ श्वेतलोहितकैर्वर्णैःपीतैर्नीलैश्चब्राह्मणाः ॥ अभिनिर्वर्तितावर्णाश्चितयानेनविष्णुना १० ततोवर्ण त्वमापन्नाःप्रजालोकेचतुर्विधाः ॥ ब्राह्मणाःक्षत्रियवैश्याःशूद्राश्चैवमहीपते ११ एकलिंगाःपृथग्धर्माद्विपदाःपरमाद्भुताः ॥ यातनायाभिसंपन्नागतिज्ञाः सर्वकर्मसु १२ त्रयाणांवर्णजातानांवेदप्रोक्ताःक्रियाःस्मृताः ॥ तेनब्राह्मणयोगेनवैष्णवेनमहीपते १३

नाभिमन्यते सोपिभेददर्शीसमष्ट्युपास्तिराहित्यात् ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे परस्यांतेकृतात्मानःप्रविशंतिपरंपदमितिस्मृत्युक्तक्रममुक्त्यनधिकारादस्मिन्कल्पेब्रह्मपुत्रो दक्षोभूत्वाप्रजाःसृजते ॥ ८ ॥ अक्षरंशुद्धसत्त्वमयत्वान्निष्कामोधर्मः श्वेतःसुधावत् क्षरंसत्वरजोमयत्वादुभयमिश्रोधर्मः रक्तःतदुभयसंघातवत् विकारोरजोमयत्वात्सकामोधर्मःपी तोहरिद्रावत् धूमः तमोमयत्वाद्विधर्मःकृष्णः धूमवत् ॥ ९ ॥ १० ॥ ततइतिततोगुणवर्णोपचारात् ॥ ११ ॥ एकलिंगाः तुल्याकृतयः यातनायकर्मफलभोगायसंपन्नास्तेनते नवर्णेन ॥ १२ ॥ येनकारणेनत्रयाणामेववेदप्रोक्ताःक्रियाःस्मृतास्तेनकारणेन वःयुष्माकंत्रयाणांब्राह्मणक्षत्रियविशामेववैष्णवेनयोगेनब्रह्मास्तिविष्णुभक्त्यावेदोस्तीतित्रैवर्णिकत्वं भगवत्कृपैकलभ्यमित्यर्थः ॥ १३ ॥

प्रज्ञयेति तेजसाऐश्वर्येणज्ञानैश्वर्ययोगात् प्राचेतसोदक्षःप्रभुर्विष्णुरेव यस्मात्पूर्वोक्तव्यतिरिक्तषडिंद्रियतादिविशिष्टस्तस्मात् तथाचबहुप्रजानिर्ऋतिमाविवेशेतिश्रुतेः बहुप्रजात्वा
द्दक्षःसंसार्येवस्यादितिनशंकनीयमितिभावः कीदृशोदक्षःकर्मणामंतरंगतः अधिकारप्रदकर्मपाशावगुंठितःसृष्टिंकरोतिनतुतस्याज्ञानमस्तीत्यर्थः एतेनजीवन्मुक्तानामपिकर्मपाशा
नुवृत्तिर्दर्शिता ॥ १४ ॥ प्रकृतांसृष्टिमनुसरति ततइति निर्माणंशिल्पंत्रैवर्णिकसेवाकरणंवातदर्थमेवसंभूताः संस्कारंउपनयनंब्रह्मवेदः ॥ १५ ॥ १६ ॥ असंस्कृतंसंस्काराभा
वस्तेनहेतुनावेदप्रोक्तेनधर्मेणनोपयुंजतीतिपूर्वश्लोकगतक्रिययान्वयः ॥ १७ ॥ ततोन्येब्रह्मणोवेदस्ययोनयः स्थानभूताब्राह्मणाइत्यर्थः ॥ १८ ॥ दक्षिणाःसमर्थाःभोपुत्राःअहंभ
वतांमुखात्धात्र्याः युष्मच्छरीरजनित्र्याःअंतंसिद्धांतंश्रोतुमिच्छामि अतोमह्यंधात्र्यंतंकथयतेतिभावः यतोहंबलोबलवानस्मिधात्र्याअंतंज्ञातुंसमर्थोस्मितस्माद्भवद्भिरपिमादृशै

प्रज्ञयातेजसायोगात्तस्मात्प्राचेतसःप्रभुः ॥ विष्णुरेवमहायोगीकर्मणामंतरंगतः १४ ततोनिर्माणसंभूताशूद्राःकर्मविवर्जिताः ॥ तस्मान्नार्हंतिसंस्कारंन
ह्यत्रब्रह्मविद्यते १५ यथाग्नौधूमसंघातोह्यरण्यामथ्यमानया ॥ प्रादुर्भूतोविसर्पन्वैनोपयुंजतिकर्मणि १६ एवंशूद्राविसर्पंतोभुविकात्स्न्येंनजन्मना ॥ ना
संस्कृतेनधर्मेणवेदप्रोक्तेनकर्मणा १७ ततोन्येदक्षपुत्राश्चसंभूताब्रह्मयोनयः ॥ बलवंतोमहोत्साहामहावीर्यामहौजसः १८ पित्राप्रोक्तामहात्मानोदक्षिणा
यज्ञकर्मणा ॥ अंतमिच्छाम्यहंश्रोतुंधात्र्याःपुत्राबलोह्यहम् १९ ततोविधास्येतत्त्वज्ञःप्रजानांविपुलंबलम् ॥ विपुलत्वाद्धिक्षेत्राणांममापिविपुलाःप्र
जाः २० नतेषांदर्शयद्देवीचक्षुषारूपमात्मनः ॥ प्रजापतिसुतानांवैविपुलासारमिच्छताम् २१ आत्मनोभावनिर्वृत्तेभावेकृतयुगेतदा ॥ जनित्रीसर्वभूता
नामंडजानुद्भिजांस्तथा २२

र्भवितव्यमितिभावः ॥ १९ ॥ ततइति युष्मत्तोधात्र्यंतंश्रुत्वाभवदीयबलाबलतत्त्वंज्ञात्वाबलत्वपक्षेभवतांविपुलंविधास्ये तवकुतएतावद्बलमित्यतआह क्षेत्रवैपुल्याद्बलवैपुल्यंअ
न्यथाल्पमितिमशकमतंगजशरीरेदृष्टं एवंबह्वीःप्रजाःसृजतोबहुलंममबलमस्ति तस्माद्धात्र्याःस्वरूपंज्ञात्वासृष्टौप्रवर्तितव्यं अन्यथासृष्टिसंगेनदुष्यत्येवेतिभावः ॥ २० ॥ विपुला
याःमायायाःसारमिच्छतां तेषांदक्षपुत्राणांदेवीधात्रीआत्मनोरूपंचक्षुषाप्रमाणज्ञानेननदर्शयत् नदर्शितवती अडभावआर्षः नहिमायाप्रमाणेनपरीक्षितुंशक्यातमइवदीपेन अ
निरीक्ष्यमाणैवतेषांमायाबाधिताभूदितिभावः ॥ २१ ॥ आत्मनइतितेषांप्रजापतिसुतानांकृतयुगेभावेविशुद्धसत्वमयेभावेधात्र्यवलोकनेजातेसतिमात्राप्रमात्राचेतनेनप्रचोदिता
सतीधात्रीसर्वभूतानांजनित्रीअभूत् तथाअंडजान्स्वेदजांश्चजनितवतीतिपरिणामेनयोज्यम् ॥ २२ ॥

सम्यग्वेदनंसंवेदः तस्यापिघटादिवृत्तेरपिजननोधात्र्येवाभवत् तथाकर्मभोगिनांकर्मफलभोगशीलानांजंतूनांअणुतांसूक्ष्मत्वंतनुतांविस्तृततां तनुविस्तारेऽस्मादौणादिकउः अणु नासाहचर्यात् विस्तृततांजनितवतीतिपूर्ववत् कीदृशेकृतयुगेभावेआत्मनोभावनिर्वृत्ते आत्मनःप्रतिचयोभावःस्वभावःतेननिर्वृत्तेनिष्पन्ने विदुषांस्वभावसिद्धएवकृतयुगधर्मइत्यर्थः यथोक्तंविष्णुधर्मोत्तरे ज्ञानवैराग्यमैश्वर्यंधर्मश्चमनुजेश्वर आत्मनोब्रह्मभूतस्यनित्यमेवचतुष्टयमिति तस्मात्सर्वेषामुत्कृष्टज्ञानकर्मणामवश्यंभाविनीमुक्तिर्नत्ववरोहसंभावनापि ॥ २३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ छ ॥ सन्निवृत्तेःप्रवृत्त्याख्यधर्मस्यफलमीरितम् ॥ प्रवृत्तिमात्रनिष्ठानांत्रेतांशेस्थितिरीर्यते ॥ १ ॥ साध्वहमिति पूर्वप्रवृत्तेचनिवृत्तेचनित्यंब्रह्मपरायणमित्युक्तलक्षणस्यधर्मस्यफलंश्रुतं इदानींत्रेतायांकेवलप्रवृत्त्यात्मकेयज्ञादिरूपेधर्मेयत्साधुसमीचीनं

संवेदजननीधात्रीचेतिमात्राप्रचोदिता ॥ अणुतांतनुतांचैवजंतूनांकर्मभोगिनाम् २३ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकविंशोऽध्यायः २१ ॥ छ ॥ जनमेजयउवाच ॥ ॥ साध्वहंश्रोतुमिच्छामित्रेतायांब्राह्मणोत्तम ॥ यज्ज्ञात्वासर्वविद्यानांपरंपश्येयमव्ययम् १ वैशंपायनउवाच ॥ दक्षस्तु पुनरालंब्यस्त्रीभावंपुरुषोत्तमः ॥ योगाद्योगेश्वरात्मानंविषण्णोगिरिमूर्द्धनि २ सुजानुःपीनजघनासुभ्रूःपद्मनिभानना ॥ रक्तांतनयनाकांतासर्वभूतमनोरमा ३ दक्षःप्राचेतसस्तस्यांकन्यायांजनयत्प्रभुः ॥ देहार्धयोगविधिनाकन्याःपद्मनिभाननाः ४ दक्षःपुरुषरूपेणस्त्रीरूपमपहायवै ॥ दर्शनेसर्वभूतानांकांतःकांततरोभवत् ५ ताःकन्याःप्रददौदक्षःस्वयंप्राचेतसःप्रभुः ॥ ब्रह्मदेयेनविधिनाब्रह्मप्राप्तेनभारत ६ प्रददौदशधर्मायकश्यपायत्रयोदश ॥ सप्तविंशतिसोमायपत्नीहेतोःसमाहितः ७ दक्षोदत्त्वाथताःकन्याब्रह्मक्षेत्रंप्रपद्यच ॥ ब्रह्मणाध्युषितंपुण्यंसमाहितमनामुनिः ८ तप्यमानोमृगैःसार्द्धंचचारवसुधांनृप तृणमूलफलैर्वृद्धोवृद्धश्चतपसासकृत् ९

तदेवाहंश्रोतुमिच्छामि येनसाधुनाआचरितेनविद्यानांसांख्ययोगादीनांपरंतात्पर्यप्रतिपाद्यंअव्ययंब्रह्मपश्येयंविविदिषाव्युत्पत्तिद्वारेत्यर्थः ॥ १ ॥ अस्योत्तरंप्रकृतिसरूपार्थवादमुखेनैवाह दक्षस्त्विति दक्षःदेहार्धयोगविधिनास्त्रीभावंआलंब्येतितृतीयेनान्वयः सइममेवात्मानंद्वेधापातयत्ततःपतिश्चपत्नीचाभवतांतस्मादिदमर्धयुगुलमिवस्वइतिश्रुतेः कीदृशंस्त्रीभावं योगेश्वरस्यदक्षस्येवात्मानंआत्मभूतं ॥ २ ॥ ३ ॥ कन्याःजनयत् अजनयत्अडभावआर्षः ॥ ४ ॥ दक्षइतिस्त्रीरूपंअपहायपुरुषरूपेणस्थितइतिशेषः ॥ ५ ॥ ब्रह्मदेयेनब्राह्मणानांदातुंयोग्येनविधिनाअलंकृत्यकन्यामुदकपूर्वांदद्यादेषब्राह्मोविवाहइतिस्मृत्युक्तेनब्राह्मेणविधिनेत्यर्थः ॥ ६ ॥ ७ ॥ ब्रह्मक्षेत्रंप्रयागंअध्यात्मिकं ॥ ८ ॥ तप्यमानइति एतावतात्रेताधर्मस्वरूपंदारसंग्रहमपत्योत्पादनम् अपत्यसंविभागोवनंप्रतिगमनंचकेवलंप्रवृत्तिधर्मैरतस्यकर्तव्यमितिदक्षाख्यायिकामुखेनदर्शितामितितात्पर्यंदर्शितम् ॥ ९ ॥

मृगास्तुतस्यतपसेत्यनुषज्यतेमोदंतिमोदंते अहिंसाप्रधानत्वात्तपसइतिभावः ब्राह्मणास्तुतस्यतपसःफलंअहिंसाप्रतिष्ठायांतत्सन्निधौ वैरत्यागइतियोगशास्त्रोक्तंदृष्ट्वामोदंते दीक्षिताःइत्यादीनिब्राह्मणानांविशेषणानि ॥ १० ॥ संग्रामःयोगेनचित्तजयः तस्यकालेशरीरादीनांपतिः यथेष्टंप्रविलापनपरिग्रहसमर्थः अतएवसर्वज्ञत्वात् कर्मणांसिद्धिंफलप्राप्तिंस्वर्गनरकादिगत्यागतिरूपांपश्यतिलक्ष्यतेसालक्षणातांपरिमेयामित्यर्थः ॥ ११ ॥ एवंदक्षाख्यायिकयापत्नीमपास्यवनंप्रतिगच्छेदित्युक्त्वासपत्नीकस्यापितदाह पुराकल्पसरूपार्थवादमुखेन दानेति ॥ १२ ॥ स्तोत्रंवेदाध्ययनं यस्मैनूनमभिद्यवेवाचाविरूपनित्ययाकृष्णेचोदस्वसुष्टुतिमंत्रवर्णात् तेनसंसिद्धाः शुद्धसत्त्वाः जनित्रंप्रथमंपदंब्रह्मतस्मिन्विषयेब्रह्मणाप्रणवेनइहअस्मिन्नेवजीवदेहेअध्युषिताअधिवासनिष्ठांप्रापितास्तेनायंदेहोब्रह्मक्षेत्रमित्युच्यते वेदेब्रह्मोपलब्धिस्थानत्वात् ॥१३॥ यतिभिरुच्यतेइतिसंबंधः ॥ १४

मृगास्तुतस्यमोदंतिफलंमोदंतिब्राह्मणाः ॥ दीक्षिताःपुण्यकर्माणस्तपसादग्धकिल्बिषाः १० संग्रामकालेकालज्ञःशरीरादिपतिर्मुनिः ॥ कर्मयज्ञकृतांतत्रसिद्धिंपश्यतिलक्षणाम् ११ दानमानप्रवीराश्चनिरुद्वेगानिरामिषाः ॥ मृगैःसहजरांयांतिसपत्नीकाःसुपुत्रिणः १२ ब्राह्मणास्तोत्रसंसिद्धाजनित्रेप्रथमेपदे ॥ ब्रह्मणाध्युषितत्वाच्चब्रह्मक्षेत्रमिहोच्यते १३ यतिभिःकर्मभिर्मुक्तैर्जितक्रोधैर्जितेंद्रियैः ॥ चरद्भिर्वसुधांविप्रैरकिंचनपथैषिभिः १४ याप्रजापूर्वमारूढामानसीब्रह्मचारिणी ॥ सैवैषाव्यक्तिमापन्नास्वभावदुरतिक्रमा १५ अव्यक्ताव्यक्तमापन्नास्वभावाद्दुरतिक्रमा ॥ व्यक्ताव्यक्तगतिश्चैषाकालधर्मान्महीपते १६ स्थावराजंगमाश्चैवस्थूलसूक्ष्माश्चभारत ॥ कालयोगेनकालज्ञाभवंतिनभवंतिच १७ एताश्चैताःप्रजाःसर्वादक्षकन्यासुजज्ञिरे ॥ कश्यपेनाव्ययेनेहसंयुक्ताःकालधर्मणा १८ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ नागाश्चानेकशिरसःसाध्यावैपन्नगास्तथा १९ गंधर्वाःकिंनरायक्षाःसुपर्णाश्चतथापरे ॥ गरुत्मान्त्सहयक्षैश्चकिन्नराश्चसुवाससः २० गावःपशुगणैःसार्द्धंनराश्चवसुधाधिप ॥ चराचराश्चवसुधाधर्ताश्चधराधराः २१ गजाःसिंहाश्चव्याघ्राश्चहयाःपक्षधरास्तथा ॥ खड्गाविषाणिनश्चैववृषभाश्चमृगास्तथा २२

एवंसपत्नीकानामपिवनस्थानांयोगजांसिद्धिरस्तीत्युक्त्वायोगफलमाह याप्रजेति सर्वेसर्वात्मकत्वात्हार्दाकाशाख्यंब्रह्म तदारूढामानसीमनोमात्रकल्पिताब्रह्मचारिणीब्रह्मरूपेणैवगम्यमानासमाधिकालेदृष्टा सैवएषालोकदृश्याबहिष्ठास्वभावेनसंस्कारेणप्रारब्धबलेनदुरतिक्रमाअतिक्रमितुमशक्यासमाधौब्रह्मभावंगतस्यापिप्रारब्धकर्मवशात्पुनःसंसारभाविनमवश्यंभावीत्यर्थः ॥ १५ ॥ अव्यक्तेति स्वभावादेवसमाधावव्यक्तंरूपमापन्नाप्रजाभवतिव्युत्थाने तत्रहेतुः कालधर्मोव्युत्थानसमाधिकालभेदलक्षणाद्धर्मात्प्रजाव्यक्ताव्यक्तरूपाभवति ॥ १६ ॥ एषागतिःप्राणिमात्रसाधारणेत्याह स्थावरेति यतःस्थावराणामपियोगज्ञत्वंसंभवतितस्मात्तदर्थयतितव्यमितिभावः ॥ १७ ॥ एवंप्रसंगादपत्नीकसपत्नीकयोगाधिकारमुक्त्वाप्रकृतांसृष्टिमनुसरतिएताश्चेत्यादिभिः सार्द्धषड्भिःकश्यपेननिमित्तेन अव्ययेनस्वभावेन कालःधर्मोयस्यतेन ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ धातांयथापूर्वमकल्पयदितिश्रुतेः पूर्वोक्तमपिसर्वसर्वेषुकल्पेषुसमाननामरूपाधिकारमेवप्रतिपत्तव्यमित्याहतेषांरूपैरिति मुनयइतिसृज्यमात्रोपलक्षणम् धर्मक्षेत्रेधर्मप्रसवभूमौभारतेवर्षे ॥ २४ ॥ क्षेत्रज्ञाःआत्मनिष्ठास्तुमानसेमनःकल्पितेबाह्येआभ्यंतरेवापूर्वोक्तदिशाऽऽविर्भवंति यत्रेतिमानसेइत्यस्यविशेषणम् २५ गृहस्थादीनामप्युक्तविधयोगयर्मातुष्ठायिनांमुक्तिरस्तीत्याहत्रिभिः येचेति २६ २७ शिलंकणिशादानंउंच्छंकणशआदानं दिविचराः हार्द्दाकाशचराः चरितव्रताःयस्माद्भवंतितस्मद्व्रातचर्यैवमुख्यानाश्रमविशेषोमोक्षहेतुरितिभावः अतएवयाज्ञवल्क्योगृहस्थस्यापिमोक्षमाह न्यायागतधनस्तत्त्वज्ञाननिष्ठोतिथिप्रियः ॥ श्राद्धकृत्सत्यवादीचगृहस्थोपिविमुच्यतइति ॥ २८ ॥ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ ७ ॥ ॥ शुचर्याव्रतचर्योत्थेत्यूचेसप्तदशेव्रतम् ॥ प्राणयज्ञंहविर्यज्ञसंज्ञंचित्तजयावहम् ॥ ॥ १ ॥ पूर्वाध्यायांतेसर्वेत्वेतेदिविचराभवंतिव्रतचारिणइत्युक्तंतत्रमनोजयाख्यंव्रतंएकादशेप्रोक्तमेवोत्तमाधिकारिणांमध्यमाधमानांतुचित्तजयायात्मविविदिषोत्पादनाय

चतुर्विषाणानागेंद्रापद्माभावर्णतःशुभाः ॥ सर्वलक्षणसंपन्नाःप्राणिनःकामरूपिणः २३ तेषांरूपैस्तथागात्रैस्तै शीलैस्तैःपराक्रमैः ॥ मुनयःपुनरुद्भूताधर्मक्षेत्रेसनातने २४ क्षेत्रज्ञामानसेलोकेधर्मिणोवेदगोचराः ॥ यत्रोद्भूताःसुराःसर्वेदिविलोकेप्रतिष्ठिताः २५ येचान्येतपसासिद्धागृहस्थामनुजाधिप ॥ ब्रह्मचर्येणसंसिद्धाःपरिचर्यांगतागुरोः २६ येचयोगगतिंप्राप्ताःसिद्धिहेतोर्महीपते ॥ क्लेशाधिकैःकर्मजन्यैर्वृत्तिंलप्स्यंतिवैद्विजाः २७ शिलोंच्छवृत्तयःख्याताःसपत्नीकादृढव्रताः ॥ सर्वेत्वेतेदिविचराभवंतिचरितव्रताः २८॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिद्वाविंशतितमोऽध्यायः २२ ॥ वैशंपायनउवाच ॥ ॥ पितामहंपुरस्कृत्यमेरुपृष्ठेसमाहिताः ॥ जटाजिनधराविप्रास्त्यक्तक्रोधाजितेंद्रियाः १ पर्वतांतरसंसिद्धेबहुपादपसंवृते ॥ धातुसंरंजितशिलेसमेनिस्तृणकंटके २

चतृतीयाध्यायेसूचितंव्रतद्वयंप्राणरोधाख्यंहविर्यज्ञाख्यंचतदिहद्वयमभिधीयते तयोराद्यमपियज्ञरूपकेणैवविवक्षन्वैशंपायनउवाच पितामहंपुरस्कृत्येत्यादिश्लोकत्रयोक्तविशेषणाः व्रतहितेरताः दिविब्रह्मणिचराः संचारिणोभवंतीतिपूर्वेणान्वयः अत्रयोगचिंतामणौसांख्ययोगे चक्रमध्येस्थितानाड्यस्तिस्रस्तिस्रोत्रदेवताः ॥ इडाचवैष्णवीनाडीपिंगलाब्रह्मदेवता ॥ ऐश्वरीसासुषुम्णास्यान्मेरुमध्येव्यवस्थिता ॥ नाडीमध्यगताग्रंथित्रययुक्तात्रिवेणिका ॥ उत्तरेवहतेगंगायमुनादक्षिणेस्मृता ॥ सरस्वतीपश्चिमायामासांसंगःसदांतरइत्युक्तेर्मेरुर्नासिकातस्याःपृष्ठंभ्रूघ्राणमध्यं तस्मिन्समाहिताः समाधिंगताः किंकृत्वापितामहंकार्यस्यपिताकारणंतस्यपिताशुद्धंब्रह्मतत्पुरस्कृत्यतत्प्राप्तिमादृत्य ॥ १ ॥ पर्वतेति पर्वतांतरसंसिद्धेपर्वतानांपर्ववतामस्थ्नांनासावंशकपालास्थ्नांरंतरेसंसिद्धंनित्यसिद्धंतन्नाशेप्यविनाशिहार्द्दाकाशंप्रकृत्यनवधेनास्यहन्यतेइतिश्रुतेर्देहनाशेपिआत्मोपलब्धिचक्राणामनाशावगमात् बहुपादपसंकुले बहुपादोनानायोगिगमनसाधनधर्माधर्मवानहंकारः तंपातीतितदुपाधिःप्राणोवायुस्तेनसंकुले धातु

संरंजिताशिलेधातवोवातपित्तकफाः मनःशिलादिधातुसरूपानाडीमार्गावा तैःसंकुलाशिलाइवशिलाअस्थिरूपायस्मिन् समेसमस्यब्रह्मणउपलब्धिस्थानेतृणंबाहिष्ठत्वाज्जरारोगा दिदुःखकंटकः अंतस्थत्वाच्छोकादिदुःखंदेहद्वयधर्मरहितामित्यर्थः ॥ २ ॥ त्रयाणामिति त्रयोयेब्रह्मवेदयंतितेषांत्रयाणांब्रह्मवेदानांइडापिंगलासुषुम्णारूपाणांजीवोपाधिभूतप्राण मार्गाणांसंबंधिनः पंचस्वराःस्वर्यतेगम्यतेब्रह्मयैस्तेस्वराः प्राणस्यवृत्तिभेदाः प्राणापानसमानव्यानोदानास्तैर्विराजितेपंचानामपिवायूनामेकीभावःस्थानेइत्यर्थःमंत्रयज्ञपरानित्यंमं त्राः प्राणादीनांतुरेफादिप्रभृतीनिबीजानितेषांयज्ञोजपः तत्पराः नित्यंव्रतेवायुजयेहिते आनंदरूपेआत्मनिचरताः अत्रपंचानामपिप्राणादीनांस्थानवर्णबीजांतानिनकुलीशयोग पारायणेप्रोक्तानिवर्त्ततइतिउक्तानिविशेषणानिमेरुपृष्ठेयुज्यंते तानिच प्राणोघ्राणाग्रहृन्नाभिपादांगुष्ठांतसंस्थितःनीलःसौंकाररेफादिबीजेनविनियोजितः ॥ १ ॥ कृष्णोऽपानःकृकाटि स्थःपृष्ठपृष्ठांतपार्ष्णिगः ॥ सतारकसकारांतबीजेनविनियोजितः ॥ २ ॥ शक्रचापनिभोव्यानस्त्वगिंद्रियनिकेतनः ॥ तारकोपेतपांतश्चबीजतेजोविराजितः ॥ ३ ॥ मूर्धस्थोम ध्यताल्वग्रकंठहृद्यनलाश्रयः ॥ उदानोह्यरुणच्छायस्तारकाक्रांतयांतयुक् ॥ ४ ॥ श्वेतःसमानोहृन्नाभिःसर्वसंधिनिकेतनः ॥ प्रणवाक्रांतलांतेनबीजेनात्यंतमुज्ज्वलइति ॥५॥ तत्रायंनिकृष्टोर्थःमेरुपृष्ठाख्यभ्रूघ्राण मध्योपलक्षितेब्रह्मणिसर्वकारणेनित्यसिद्धेजीवोपाधिनानेकवर्णबीजवतानानावर्णनाडीत्रयसंचारिणायुतेबाह्याभ्यंतरदुःखशून्येक्रोधादिजाये

**त्रयाणांब्रह्मवेदानांपंचस्वरविराजिते॥ मंत्रयज्ञपरानित्यंनित्यंव्रतहतेरताः ३ एकएवाग्निमाधायसर्वेब्राह्मणपुंगवाः ॥ बिभिदुर्मंत्रविषयैःसुसमाहितमानसाः ४ त्रिधाप्रणीतोज्वलनोमुनिभिर्वेदपारगैः॥ अतस्तेतत्त्वमापन्नायदेकस्त्रिविधःकृतः ५ एकएवमहानग्निर्हविषासंप्रवर्तते॥ स्वधाकारेणमंत्रज्ञमंत्राणांकार्यसिद्धये ६**

नोनिर्ममाः प्राणजयद्वाराचित्तवृत्तिमेकाग्रांकुर्वंतिनिरोधाभ्यासेनानिर्विशेषंब्रह्मप्रतिपत्तुमिति ॥ ३ ॥ एकमेवप्राणाग्निंआधायआलंब्यमंत्रविषयैः मंत्राः उदाहृताःरेफादि मुख्याः तेषांप्रतिपाद्याविषयाः प्राणनाद्याः प्रवृत्तिविशेषाः तैरुपाधिभिर्बिभिदुःपंचधाप्राणापानादिप्रकारेणाविभिन्नंचक्रुः यथोक्तंतत्रैव कौष्ठ्योवायुःप्राणनादिकर्मभेदाद्यथा क्रमम् ॥ प्राणोपानसमानादिनामांतरमुपागतइति ॥ ४ ॥ त्रिधेतिज्वलनःप्राणाग्निःत्रिधापूरककुंभकरेचकरूपेप्रणीतोनाडीमार्गैःसंचारितअतःप्रणयनात्तेतत्वंप्राप्ताः पूरकाद्यभ्या सेनैवआत्मतत्त्वंअधिगम्यंतइतिभावः ॥ ५ ॥ एकएवेति एकएवप्राणाग्निःप्राणायामाभ्यासिनःहविषा आदेयानिचवक्ष्यामिक्षिप्रंयोगस्यसिद्धये ॥ क्षीरंघृतंचमिष्टान्नंमिताहार श्चशस्यतइतिदत्तात्रेयोदितेनसम्यङ्निषेवितेनमहान्भूत्वासम्यक्योगिनोविक्षेपमकुर्वन्प्रवर्त्ततेआरोहावरोहमार्गयोर्यथेष्टंसंचरति अयमर्थः नासिकांतोबाहिरंतश्चद्वादशद्वादशांगु लमानेनप्रमाणःसंचरन्तूलपिंडवत्घनीभूतःकुंभकाभ्यासेनतूलपिंडामिवशिथिलावयवसंयोगंकुर्यात् ततश्चबहिरंतश्चषट्त्रिंशत्षट्त्रिंशदंगुलमानेनपरमाप्राणस्यगतिर्भवति सत दासूक्ष्मोपिपुरोडाशवन्मथितोमहानित्युच्यते एवंभूतस्यप्राणाग्नेः पार्ष्णिभागेनसंपीडचयोनिमाकुंचयेदृढं ॥ अपानमूर्ध्वमाकृष्यमूलबंधोयमुच्यतइत्यादिनाहठोक्तप्रकारेणवायो रारोहःप्रसिद्धः भ्रुवोर्मध्येप्राणमाविश्येतिशास्त्रप्रसिद्धएव अवरोहोपियोगिनायाज्ञवल्क्येनोक्तः संपूर्यकुंभवद्वायुमंगुष्ठान्मूर्ध्निमध्यतः ॥ धारयत्यनिलंबुद्ध्याप्राणायामःप्रचोदितः ॥

व्योमरंध्रात्समाकृष्यललाटेधारयेत्पुनः ॥ ललाटाद्वायुमाकृष्यभ्रुवोर्मध्येनिरोधयेत् ॥ नेत्रात्प्राणंसमाकृष्यनासामूलेनिरोधयेत् ॥ नासामूलात्तुजिह्वायामूलेप्राणंनिरोधयेत् ॥ कंठकूपात्तुहन्मध्येहन्मध्यान्नाभिमध्यमे ॥ नाभिमध्यात्पुनर्मेढ्रेमेढ्राद्वन्ह्यालयेततः ॥ देहमध्याद्गुदेगार्गिगुदाद्वैऊरुमूलके ॥ ऊरुमूलात्तयोर्मध्येतस्माज्जान्वोर्निरोधयेत् ॥ वस्ति मूलेततस्तस्माज्जंघयोर्मध्यमेतथा ॥ जंघांततःसमाकृष्यवायुंगुल्फेनिरोधयेत् ॥ स्थानात्स्थानेसमाकृष्ययस्त्वेवंधारयेद्धिया ॥ सर्वपापविशुद्धात्माजीवेदाचंद्रतारकं ॥ एतत्तुयो गसिद्ध्यर्थमगस्त्येनापिकीर्तितमिति ॥ स्वधेतिस्वस्मिन्शरीरेधानंनिधानंदेहेवायोर्धारणेतियावत् तस्याःकारणेकारणेन हेमंत्रज्ञराजन् मंत्राणांपूर्वोक्तानांरेफादिप्रभृतीनांप्रकाशत्वे नसंबंधिकार्यंतत्तद्भूतजयःतत्सिद्धयेग्निःसंप्रवर्त्ततइत्यर्थः तत्रधारणासिद्धयश्चोक्तायोगिनायाज्ञवल्क्येन यमादिगुणयुक्तस्यमनसःस्थितिरात्मनि ॥ धारणेत्युच्यतेसद्भिःशास्त्रतात्पर्यवे दिनाव्योमांशेमारुतांशेचधारणांकुर्वतःशुभां ॥ त्रिदोषजनितारोगाविनश्यंतिनसंशयइत्यंतेनग्रंथेनदर्शिताः तत्रपादादिजान्वंतंजान्वादिपादांतंपादादिहृदयांतंनतोभ्रूमध्यांतं ततोमूर्द्धांतंचक्रमेणभूम्यंवुतेजोवाय्वाकाशस्थानानिब्रह्मविष्णुरुद्रेश्वरसदाशिवाधिष्ठितानिलवरयहबीजयुतानि तेषुतेषुपंचपंचघटिकापर्यंतंमनोधारयंस्तत्तद्भूतजयोभवति तथाप रमात्मन्येवप्रणवेनादांतेधारणामुख्या तथातेजोबन्नेषुधारणांकुर्वतःक्रमात्वातपित्तश्लेष्मजारोगानश्यंतीतिज्ञेयं विस्तरभयात्तुनप्रपंचितम् ॥ ६ ॥ एवंत्रिधाप्रणीतइत्यादिनापूरक

**स्वयंचदक्षसंप्राप्तोभगवान्भूतसत्कृतः ॥ ब्रह्माब्राह्मणनिर्मातासर्वभूतपितामहः ॥ ७ ॥**
**दंडीचर्मीशरीखड्गीशिखीपद्मनिभाननः ॥ अभवन्नयस्तसंतापोजितक्रोधोजितेंद्रियः ॥ ८ ॥**

कुंभकरेचकाभ्यासेनविपुलीकृतोहविष्याशनाभ्यासमाहिम्नावशीकृतोयत्रकुत्रचिद्वारितःप्राणाग्निस्तत्तद्धारणाफलंप्रसूतेइत्युक्तं तत्रप्रसूणवेनपरमात्मन्येवधारितस्यप्राणस्यफलमुच्य ते स्वयमिति दक्षतेसर्वस्मिन्कार्येसंनह्यतीतिदक्षःसूत्रात्मातद्रूपेणसंप्राप्तोभवतिभगवान्सर्वैश्वर्यसंपन्नः भूतंनित्यसिद्धंचतत्सच्चकारणंतेनकृतःनिर्मितः आत्मानमरणिंकृत्वाप्रणवंचो त्तरारणिम् ॥ ध्याननिर्मथनाभ्यासात्पाशंदहतिपंडितइतिस्मृतेः प्रणवेनात्मनिचेतोयुंजतःप्रथमंउकारार्थभूतसूत्रात्मसाक्षात्कारोभवतीत्यर्थः सएवंभूतोदक्षोमुख्योब्राह्मणइतिब्रह्मा ब्राह्मणस्यचतुर्मुखस्यनिर्माता अतएवसर्वेषांभूतानामस्मदादीनांपितामहः ॥ ७ ॥ कोयंदक्षइत्याशंक्ययःपूरकादिनाराधितःप्राणाग्निःसएवायमित्याह दंडीति योयंपूर्वपूरकका लेनासिकानलिकयापूर्यमाणत्वाद्दंडाकारमिवप्राप्तइतिदंडीजातः सएवकुंभकावस्थायांचर्मवद्धि ततइतिचर्मीवरूपेणसंवृतःसएवपुनःरेचकावस्थायांदंडरूपात्सूक्ष्मरूपेणशर कांडाकारत्वंपूर्ववत्प्राप्तः सएवसएषखड्गवत्तीक्ष्णधारः संसारवृक्षच्छेदनसमर्थःशिखीप्राणाग्निःपद्मनिभाननइत्यनेनदक्षरूपेणप्रसन्नइतिलक्ष्यते अभवत्प्रसन्नभावेनन्यस्त संतापोजितक्रोधोजितेंद्रियश्चस्वभावतोभवत् तत्रस्वाभाविकंवैराग्याद्याविर्भूतंनहठात्कृष्टमित्यर्थः यथोक्तंवृद्धैःउत्पन्नात्मप्रबोधस्यह्यद्वेष्टत्वादयोगुणाः ॥ भवंत्ययत्नतः सिद्धानतुसाधकरूपिणइति ॥ ८ ॥

यजतइति ब्रह्मादक्षःपुष्करेआत्मतीर्थेमेधयाशास्त्राचार्योपदेशप्राप्तयाधीवृत्त्यासहसंगतोयजतेतंन्निष्ठोभवति यस्यामवस्थायांइंद्रआत्मदर्शितेनप्रोक्तानिसामानिअहमन्नमहमन्नइ
त्यादीनितैत्तिरीयप्रसिद्धानि इदमदर्शमितितस्मादिंद्रोनामैदांदिंद्रोहवेनामतामिदंसंतमिंद्रइत्याचक्षतपरोक्षेणपरोक्षप्रियाइवाहिदेवाइत्यैतरेयकेचइंद्रशब्दस्यआत्मदर्शानिप्रवृत्तिनि
मित्तंदर्शितम् ॥ ९॥ ससमाहितोयोगीपूर्वसंस्कारात्समाधेरप्रच्युतयेतत्रयज्ञमेवकाल्पितवानित्याह घृतमितिमखेवाह्ययज्ञेन्यस्तंदेवतोद्देशेनत्यक्तम् परमकंअभौतिकत्वाच्छ्रेष्ठंकल्पितं
मनसैवनकर्मतः ब्रह्मणःसूत्रात्मनःपदेस्थाने समाध्यवस्थायामित्यर्थः ॥ १० ॥ निर्मथ्येति अग्नेःपरमेश्वरस्यातिरोधानस्थानभूतारणिरिवारणिराविद्यातांनिर्मथ्याविनाश्यशमीगर्भसमु
त्थितम् शंसुखंईयतेगम्यतेनेनेतिशमी देहः शमीवृक्षतुल्योवातस्यगर्भेसम्यगुत्थितम्आविर्भूतं प्रथमंकारणंब्रह्मरूपमन्यमकल्पितमग्निअंतर्यामिणंप्रवर्त्तयत्प्रकर्षेणवर्तयत् अडभा
वआर्षः शरीरेनित्याविर्भूतमपिदेहाद्यभिमानवशात्तिरोहितैश्वर्येसंतंदेहाभिमानत्यागात्स्वेनेश्वरेणरूपेणाविर्बभूवेत्यर्थः ब्रह्माब्रह्मवित्तस्मिन्सूत्रात्मनि ॥ ११ ॥ ननुयथासो
मयागेअरण्यामग्निमंथनंक्रियतेयथावाचातुर्मास्येषुतद्वदिहापितावत्काल्पनिकएवायंनिर्मथ्योग्निरस्तु किंसूत्रादन्यस्यकारणाग्नेः कल्पनेनेत्याशंक्याह नह्यल्पामिति य
थायज्ञकर्मणिवाह्येअग्निर्निर्मथ्यहोम्यत्वेनविहितःअमृताहुतिरग्न्याहुतिःसैषास्वर्ग्याहुतिर्यदग्न्याहुतिरिति प्रीतिपूर्वकंमानसेयज्ञेतथात्रअग्न्याख्यंअल्पंबाह्यंद्रव्यंविहितंनहि

**जयतेपुष्करेब्रह्मामेधयासहसंगतः ॥ इंद्रप्रोक्तानिसामानिगीयंतेब्रह्मवादिभिः ९ घृतंक्षीरंयवाव्रीहिःसर्वंपरमकंहविः ॥ वेदप्रोक्तंमखेन्यस्तंकाल्पितंब्रम्हणः
पदे १० निर्मथ्यारणिमाग्नेयींशमीगर्भसमुत्थिताम् ॥ सब्रह्माप्रथमंतस्मिन्नाग्निमन्यंप्रवर्त्तयत् ११ नह्यल्पंविहितंद्रव्यंयथाग्निर्यज्ञकर्मणि ॥ प्रवर्तयेद्विभा
गैर्वाहुतद्रव्यमयंबलम् १२ फलानितैःप्रयुक्तानिहवींषिविततेध्वरे ॥ प्रयुंजंतेप्रयोगज्ञामुनयोब्रह्मवादिनः १३**

योगिनाइत्थंयज्ञाश्चिंतनीयइतिविधिरस्तिकिंतुयाज्ञियसंस्कारदाढर्याद्योगेपिताद्दशाःसंकल्पाभवंति अतएवश्रुतिः सयदिपितृलोककामोभवति संकल्पादेवास्यपितरःसमुत्ति
ष्ठंतीति चिरपरिचितानांपित्रादीनामेवयोगेनसंप्रज्ञातावस्थायामुत्थानमाह परिपक्वयोगिविषयंतुअदृष्टाश्रुतवस्तुदर्शनंसमाधावतिप्राकृतकर्मणोत्रानधिकारादन्योग्निरत्रप्रकृतसूत्रादां
तरईश्वरएवग्राह्यःयत्अल्पंद्रव्यंउतआज्यपयःप्रभृतिअग्नौत्यागपूर्वकंप्रक्षिप्तंतद्विकारभूतंस्वर्गेदिव्यदेहादितस्यबलंअत्रविभागैर्यथोच्चनीचस्थानंप्रवर्त्तयेन्नत्विहतथेत्यर्थः अल्पद्रव्य
साध्येषुहियज्ञेषुवित्तव्ययस्वरूपश्रद्धातारतम्येनफलतारतम्यमस्ति आत्मयज्ञेतुनायंविभागःसर्वेषांकैवल्यरूपस्यफलस्यैकरूपत्वादितिभावः ॥ १२ ॥ तर्हिकिमर्थंसंप्रज्ञातंहावि
रादिकल्पनमुक्तमतआहफलानीति विततेऽध्वरेयोगयज्ञेहवींषियानिविहितानितैर्हविर्भिःफलानिचप्रयुक्तानिभवंति तंयथायथोपासतेतथातथाप्रेत्यभवतीतिश्रुतेः यादृग्गुणविशि
ष्टमात्मानंचिंतयतितादृक्फलभागीब्रह्मलोकेभवतियेतुब्रह्मवादिनंअत्रैवब्रह्मसाक्षात्कारवंतस्तेषांतानिफलानिअणिमाद्यैश्वर्याणिअत्रैवनिग्रहानुग्रहप्रयोगज्ञाःप्रयुंजंतेप्रकाशयंति त
थाचकाम्यमेवहविरादिकल्पनंनतात्विकमितिभावः ॥ १३ ॥

योगफलमेवभंग्यंतरेणा षण्मासानिति बृहस्पतिःदेवाचार्यःपरयाब्रह्मसंपदा एषास्यपरमासंपादितिश्रुतिः  निर्विशेषावस्थयाब्रह्मसंबंधिनियज्ञेयोगेविततेसतिषण्मासान्अत्यंत संयोगेद्वितीया मासषट्कंआदरनैरंतर्यदीर्घकालैःसम्यगभ्यस्तेसातिचतुरोवेदान्बभाषेचतुर्भिर्वेदैःसहसंवादंकृतवान् वेदान्लब्धवानित्यर्थः षण्मासादेवयोगसिद्धिर्भवतीतिभावः तथाचमैत्रायणीयश्रुतिःषड्भिर्मासैस्तुयुक्तस्यनित्ययुक्तस्यदेहिनः ॥ आनंदःपरमोगुह्यःसम्यग्योगःप्रवर्त्ततइति ॥ १४ ॥ सलब्धवेदोबृहस्पतिर्वेदसंप्रदायंशिष्येषुप्रवर्त्तितवानित्याह शिक्षेतिसःसरस्वत्याःकर्मणिषष्ठी सरस्वतींप्रभाषतेसर्वेभ्योवेदमध्यापयतीत्यर्थः सानुशिखरंवेदशिरउपनिषादितियावत्स्वारेतंस्वर्गतिः तत्साधनंकर्मताभ्यांरामाभिरामातस्याः ब्रह्म कर्मकांडाभ्यांरमणीयेत्यर्थः ॥१५॥ तेनवेदोपदेशेनब्राह्मणानिकर्मचोदनवाक्यानितैःशिक्षतेइतिब्राह्मणःशब्दःतेनप्रवृत्तिप्रधानेनेत्यर्थः  ब्रह्मप्रोक्तेनवेदोदितेनमार्गेणाविरच्यमानः समखःयाज्ञिकप्रसिद्धोयज्ञःब्रह्मलोकइवआध्यात्मिकयोगयज्ञइवविभाति ॥१६॥ मखमेवस्तौति पदंविष्णुरजोब्रह्मेत्यत.प्राक्तनेनसंदर्भेण मखइति ब्रह्मशब्दैर्वेदशब्दैःअनामयैः

षण्मासांश्चतुरोवेदान्संबभाषेबृहस्पतिः ॥ ब्रह्मणोविततेयज्ञेपरयाब्रह्मसंपदा १४ शिक्षाक्षरसमेतायामधुरायाःसमंततः ॥ सानुस्वारेतरामायाःसरस्वत्याःप्रभाषते १५ तेनब्राह्मणशब्देनब्रह्मप्रोक्तेनभारत ॥ विभातिममखोव्यक्तंब्रह्मलोकइवापरः १६ मखोब्रह्ममुखोत्तीर्णोब्रह्मशब्दैरनामयैः ॥ प्रयोगैःसंप्रयुक्तस्यजल्पन्निवविवर्द्धते १७ समिद्भिःसोमकलशैःपात्रैश्चैवबर्हिःखलैः ॥ यवैर्व्रीहिभिराज्यैश्चपूर्णैश्चजलभाजनैः १८ कर्मप्राप्तैश्चपशुभिःकर्मभिश्चापरान्वितैः ॥ गोभिःपयस्विनीभिश्चपरिवंशैश्चकोमलैः १९ ब्रह्मवृद्धोवयोवृद्धस्तपोवृद्धश्चभारत ॥ ब्रह्मज्ञानमयोदेवोविद्ययासहसंगतः २० मानसैश्चक्रियामूर्तिर्येचभूताःस्वयंनृप ॥ ब्रह्माजुहोतितांस्तस्मान्मरुद्भिःसहितस्तदा २१ तेजोमूर्तिधरैरूपैर्नचतत्कर्मणास्पृशत् ॥ वेदप्रोक्तेनविधिनासर्वप्राणभृतांवर २२

अप्रामाण्यशंकाशून्यैः प्रयोगैः यथाश्रुतंविनियुक्तैःमंत्रैः संप्रयुक्तस्यसादरस्ययजमानस्यमखोजल्पन्निवविवर्द्धते ॥ १७ ॥ सोमकलशैः सोमधारणार्थैः ग्रहचमसैः पात्रैः स्रुक्स्रुवादिभिः जलभाजनैः वसतिवर्यैकनार्थैर्भाजनैः ॥ १८ ॥ कर्मेति कर्मयज्ञार्थंवर्धतइत्यनुषज्यते प्राप्तैर्वसुभिः कनकादिभिः कर्मभिरिष्टचादिभिः परान्वितैः परस्मिन् ब्रह्मणिसमर्पितैः वत्सैश्चपरिप्राप्तैरितिसंबंधः छंदसिपरेपिव्यवहिताश्चेतिधातूपसर्गयोः आर्षःसंबंधः कोमलैः बालैः ॥ १९ ॥ ब्रह्मणावेदघोषेणवृद्धः वयसादक्षिणयावृद्धः यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मानितिश्रुतेः पुष्कलदक्षिणावानित्यर्थः तपसाज्ञानेनवृद्धः ब्रह्मज्ञानमयस्तत्प्रधानस्तदर्थइत्यर्थः  विद्ययाकर्मांगावबद्धउद्गीथाद्युपासनया ॥ २० ॥ मानसैरिति मन.कल्पितैःसमिदादिभिः क्रियामूर्तिर्यज्ञात्माब्रह्मा येचपदार्थाअन्येतस्माद्ब्रह्मणः स्वयंभूता विनापिकल्पनास्वभावादेवात्मन्यध्यस्तास्तान्घृतादीन्जुहोति ॥ २१ तेजोमूर्तिधरैः चिन्मयैः रूपैर्द्रव्यदेवतादिभिर्योगरूपैरुपेतंतद्ब्रह्मणोयजनंसर्वप्राणभृतांकर्मणानअस्पृशत्नस्पर्शप्रापसर्वाधिकःसयज्ञइत्यर्थः ॥ २२ ॥

शम्याः गर्भेउत्पन्नोयोऽश्वत्थस्तस्मादुद्भवोयस्यास्ताम् ॥२३॥ अनुसराःसहायाश्रमसाध्वर्य्वादयःतत्सहिताः ॥ २४॥२५॥ दिवौकसैः छांदसंअकारांतत्वम् ॥२६॥ गतैरागतै श्रमहीयतेक्रतुरित्यपकृष्यते मनुष्यलोकेतुसुतरांमहीयतइतिभावः ॥ २७ ॥ त्रिभिरेव ॥ २८ ॥ सामानिस्तोत्राणिवचनानिशास्त्राणि ॥ २९ ॥ श्रोत्रवादिभिः श्रुतमात्रानुसारिभिर्मनोभिः संकल्पैः ॥ ३० ॥ होताब्रह्माचबृहस्पतिरेवमूर्तिभेदंप्रकल्प्याभूदित्यर्थः ३१ ॥ विष्णोःपूजांविष्ण्वर्पणंप्रयुज्यकृत्वाक्रतुमहिम्नायजमानोदित्यागर्भेजातइतिशेषः क्रतुभिर्देवत्वंप्राप्यामित्यर्थः ॥ ३२ ॥ एवंकर्मफलंदेवताभावंसुखबहुलमुक्त्वासुखदुःखस्पर्शशून्यं तेहवैशरीरस्यसतः प्रियाप्रिययोरपहतिरस्यशरीरंवावसंतंनाप्रियाप्रियेस्पृशतइतिश्रुतिप्रसिद्धंशरीरताल्क्षणंमोक्षं विष्णुपदमाह पदमिति .पदंविष्णुरितिसामानाधिकरण्येनतद्विष्णोःपरमंपदमितिषष्ठीराहोःशिरइतिवदौपचारिकभेदपरेतिदर्शितं अजोन

निर्मथ्यारणिमाग्नेयींशमीगर्भसमुत्थिताम् ॥ क्रतुनायजतेपूर्णमग्निष्टोमेनसप्रभुः २३ सदस्यैस्तत्सदोव्यक्तंशुशुभेयज्ञकर्मणि ॥ जल्पंतिमधुरावाचःसानुसाराःक्रियास्तथा २४ कर्मभिश्चतपोयुक्तैर्वेदवेदांगपारगैः ॥ सूर्येंदुसदृशैराजन्विरराजमहाक्रतुः २५ ब्रह्मघोषेणमहताब्रह्मावासइवापरः ॥ वसुधामिवसंप्राप्तैःसर्वैरेवदिवौकसैः २६ वेदवेदांगविद्भिश्चविनीतैर्ब्रह्मवादिभिः ॥ गतागतैस्तपःश्रांतैःस्वर्गलोकेमहीयते २७ ज्वलद्भिरिवविप्रैस्तैस्त्रिभिरेवाध्वरेग्निभिः ॥ ब्रह्मलोकइवाभातिब्रह्मणःसमहाक्रतुः २८ इंद्रप्रोक्तानिसामानिगायंतिब्रह्मवादिनः ॥ वचनानिप्रयुक्तानियजूंषिविततेऽध्वरे २९ तपःशांताब्रह्मपराःसत्यव्रतसमाहिताः ॥ आययुर्मुनयःसर्वेमनोभिःश्रोत्रवादिभिः ३० होताचैवाभवद्राजन्ब्रह्मत्वेचबृहस्पतिः ॥ सर्वधर्मविदांश्रेष्ठःपुराणोब्रह्मसंभवः ३१ यजमानश्चयज्ञांतेविष्णोःपूजांप्रयुज्यच ॥ आदित्याःपश्चिमेगर्भेतपसासंवृतेनृप ३२ पदंविष्णुरजोब्रह्मानिर्द्वंद्वंनिष्परिग्रहम् ॥ यतःपदसहस्राणिभविष्यंत्युद्भवंतिच ३३ अवंध्यंचाप्रमेयंचव्यतिरिक्तंचकर्मभिः ॥ आत्मापियस्यमुनयोभवंतिनिष्परिग्रहाः ३४ परिग्रहाश्चविषयादोषप्राप्तामहीपते ॥ दोषाश्चयुगपत्सर्वेछादयंतिमनोबलात् ३५

जायतेब्रह्मादिवदित्यजोकर्मप्राप्यः ब्रह्माब्रह्मवित्विष्ण्वाख्यंनिर्द्वंद्वंकर्मप्राप्यंपदमेतीत्यर्थः निष्परिग्रहंनिर्गतज्ञानतत्कार्यं पदमेवस्तौति यतइतिइंद्रादिपदसहस्राणीत्यर्थः ॥३३॥ अवंध्यंसर्वकर्मफलगर्भितं अवध्यमितिपाठेत्वविनाशि इतरत्रतुविनाशीत्यर्थः अजइत्यस्यव्याख्यानंव्यतिरिक्तमिति आत्मापिआत्मैवयस्यमुनयोभवंतीतिपदंत्रिष्णोरभेदोव्याख्यातः ॥ ३४ ॥ परिग्रहाः परितोगृह्णंतिबध्नंतीतिपरिग्रहाः विषयारूपादयः दोषप्राप्तारागादिदोषेणैवकल्पिताः तथाचाक्षपादाचार्यप्रणीतं न्यायोपबृंहितंसूत्रंदोषनिमित्तंरूपादयोविषयाः संकल्पकृताइति बलात्पूर्वसंस्कारबलात्मनश्छादयंति अतोत्यंतावहितेनदोषानिग्राह्याइतिभावः ॥ ३५ ॥

ननुरूपादिदर्शनंदेहवतामपरिहार्यंतत्कथंनिष्परिग्रहत्वंसेत्स्यतीत्याशंक्यअहंममेत्यविद्यैवपरिग्रहोनदर्शनमात्रमित्याह इंद्रियेति चरंतोपिनिष्परिग्रहाएवभवंतिमुनयइतिशेषःऐंद्रजा
लिक्यांसंपदितत्त्वविदिवनसज्जतइतिभावः शुभंवेदबोधितंधर्ममपिअविद्यालक्षणंपरिग्रहंबंधकमेवविदुरतोनिर्द्वंद्वमेवविष्णुपदंश्रेयइतिभावः ॥३६॥ विद्येति रागादिभिरितिशेषः क
दानच्छाद्यतइत्यतआह यदिति ब्रह्मवादिभिर्यदियदामुनिशब्देनमुनित्वप्रतिपादकशब्देनतत्त्वमसिवाक्योपदेशेनप्रणवोपदेशेनवागृह्यतेऽनुगृह्यतेतदातदर्थमननाज्ज्ञाततत्त्वोनरा
गादिभिश्छाद्यतइत्यर्थः ॥ ३७ ॥ प्रासंगिकंविद्याफलादिकंसमाप्यप्रकृतंकर्मफलमनुसरति वेदेति सतांलोकानांजनानांस्थानंयद्दिवितदेवकर्मठवृद्धैर्लोकइत्युच्यतइत्यर्थ ॥ ३८॥
स्थानमेवविशिनष्टि यत्रेत्यर्द्धेन कर्मप्राप्तोदितेकर्मभिःप्राप्तेअधिकारिभिश्चभुंक्ष्वैतत्पदमित्युदितेमोदते ॥३९॥ यज्ञेति शैलंदिव्यंदेहंपित्र्यंवागांधर्ववादैववाप्राजापत्यंवाब्राह्मंवेतिश्रु
तिप्रसिद्धंकर्मफलभूतंद्विजं द्विजेभ्यःत्रैवर्णिकेभ्योयजमानेभ्यः प्रभुर्यज्ञफलदातामहाविष्णुःदेवानांभूतपालकत्वाद्दययेति ॥ ४० ॥ तंशैलमिति शैलंसर्वगात्राणीतिसामानाधिकर

इंद्रियग्रामविषयेचरंतोनिष्परिग्रहाः ॥ परिग्रहंशुभंधर्ममविद्यालक्षणंविदुः ३६ विद्यालक्षणसंयोगान्नमनश्छाद्यतेनृप ॥ यदिचेन्मुनिशब्देनगृह्यतेब्रह्म
वादिभिः ३७ वेदविद्याव्रतस्नातैर्नियतैःकुरुसत्तम ॥ दिविलोकाःसतांस्थानंलोकानांलोकउच्यते ३८ यत्रदेवाहव्यपुष्टानक्षयंयांतिभारत ॥ यजमानश्चभोगैः
स्वैःकर्मप्राप्तोदितेपदे ॥ मोदतेसहपत्नीभिर्विज्वरोवसुधाधिप ३९ यज्ञावसानेशैलेंद्रंद्विजेभ्यःप्रददौप्रभुः ॥ दययासर्वभूतानांनिर्मलेनांतरात्मना ४० तंशै
लंसर्वगात्राणिपरस्परविशेषिणः ॥ नशेकुःप्रविभागार्थंभेत्तुंसर्वोद्यमैरपि ४१ ततस्तेब्राह्मणगणानिषेदुर्वसुधातले ॥ श्रमेणाभिहताःसर्वेविवर्णवदनानृप
४२ सुपार्श्वोगिरिमुख्यस्तुवाग्भिर्मधुरभाषिताः ॥ अब्रवीत्प्रणतःसर्वाञ्छिरसातान्द्विजोत्तमान् ४३ नहिशक्योबलाद्भेत्तुंयुष्माभिरसुसंगिभिः ॥ अपिव
र्षशतैर्दिव्यैःपरस्परविरोधिभिः ४४

ण्यं वेदाःप्रमाणमितिवत् सर्वगात्रात्मकक्षेत्ररूपंशैलंपरस्परविशेषिणोभेददृष्ट्यामिथोब्राह्मणत्वक्षात्रियत्वादिजात्यभिमानेनविशेषवंतःभेत्तुंआत्मनोव्यतिरेकेणनिश्चेतुंनशेकुः सर्वो
द्यमैःकृत्स्नैरपिकर्मभिःकिमर्थंभेदनं प्रविभागार्थं प्रकर्षेणविद्यादिभ्यआत्यंतिकव्यतिरेकस्तदर्थंमोक्षार्थमित्यर्थः क्रतुकोटयापिमोक्षोनलभ्यतइत्याशयः ॥ ४१ ॥ ततइति देव
ताभावेष्युच्चनीचभावदर्शनक्षोभेणश्रांतास्तेनिषेदुःवसुधातलेपुनःसंसारंप्रापुरित्यर्थः विवर्णवदनाःस्वर्गेभृशंदुःखेन ॥ ४२ ॥ सुपार्श्वइति शोभनंपार्श्वोपलक्षितंसामीप्यंयस्यस
सुपार्श्वःसद्गुरुः गिरिमुख्यःगिरतिहवैद्विषंतंपाप्मानमितिश्रौतनिर्वचनात् पापच्छेतॄणांमुख्यः समूलाविद्योच्छेदकत्वात् प्रणतःशांतःतान्प्रतिशिरसावेदांतवाक्येनओमापोज्योती
रसोमृतंब्रह्मभूर्भुवःस्वरोमिति अनेनवाय्वादीनांब्रह्मभावप्रतिपादकेनअब्रवीत् ॥ ४३ ॥ नहीति अयंदेहाभिमानशैलःबलात्हठेनयुक्त्याविनाभेत्तुंनहिशक्यःतत्रहेतुः असुसं
गिभिः असुषुइंद्रियेषुसंगशीलैःदेहेंद्रियादिष्वात्मधीमद्भिः ॥ ४४ ॥

भेदनेउपायमाह ॥ एकीभूताःसमाहिताः समाधिमंतोयदिसमाधौऐकात्म्यंप्राप्ताअत्रह्येतेसर्वएकंभवतीतिश्रुतिप्रसिद्धंहितत् अविरोधेनसर्वभूताभयदानेननिर्वृताःशांताःयदिभ विष्यथतर्ह्येवैनंविभजिष्यथ समाधिरेवदेहाहंधीभेदकइत्यर्थः ॥४५॥ बलमितिबलंस्वभावजयसामर्थ्यं रागस्तत्सहचरोद्वेषः ताभ्यांवर्द्धतेच्छिद्यतेचौरादिकस्यवृद्धेह्यकिंचिद्भूयब्रह्म ब्रह्मनिष्ठावर्द्धतिवर्द्धते आर्षस्तङभावः ॥ ४६ ॥ यदाहमिति अहंगुहाशयैश्चोद्यमानःएनंशैलंभेदयिष्यामि युष्मान्भेदनेनियोक्ष्यामि तदेवभेत्स्यथेतिअध्याहा त्यश्लोकद्वयंयोज्यं अहंगुरुः गुहायांबुद्धौशेरतेतेसंस्काररास्तैः स्वर्गभिन्नैःस्वर्गात्पृथक्भूतैः ऐहिकामुष्मिकभोगविरक्तैः एतएवशिलाशितैः स्फटिकशिलावदत्यच्छैर्धातवोदे हारंभकाणितेजोबन्नानितैस्तत्कार्याणिवाक्प्राणमनांसि अन्नमयंहिसौम्यमनःआपोमयःप्राणस्तेजोमयोवागितिश्रुतेः तेषांवागादीनांविसर्पणेनप्रवृत्तिलिंगेनेत्यर्थः शिखरैरिवो च्छ्रितैरिंद्रियैरनुपातिभिःखलेकपोतन्यायेनतत्त्वेनपतनशीलैः ॥ ४७ ॥ पार्श्वशब्देनसमपिस्थारुच्यादयस्तान्येवविवराणिचित्ताहिप्रवेशाविलानितैर्विशीर्णैः तथानागैः

एकीभूतायदासर्वेभविष्यथसमाहिताः ॥ अविरोधेनयुगपद्विभजिष्यथनिर्वृताः ४५ बलंहिरागद्वेषाभ्यांवर्द्धतेब्रह्मसत्तमाः ॥ विमुक्तंरागदोषाभ्यांब्रह्म वर्द्धतिशाश्वतम् ४६ यदाहंभेदयिष्यामिस्वर्गभिन्नैःशिलाशितैः ॥ धातुभिश्चविसर्पद्भिःशिखरैश्चानुपातिभिः ४७ विशीर्णैःपार्श्वविवरैर्नागैश्चगलितैर्भु वि ॥ बहुभिर्व्यालरूपैश्चचोद्यमानोगुहाशयैः ४८ प्रतिगृह्यचतद्वाक्यंशैलेंद्रस्यसुभाषितम् ॥ तूष्णींबभूवुस्तेसर्वेतदाब्राह्मणसत्तमाः ४९ इतिश्रीमहाभा रतेखिलेषुहरिवंशेभविष्यपर्वणित्रयोविंशतितमोध्यायः ॥ २३ ॥ ७ ॥ वैशंपायनउवाच ॥ ॥ बलिर्होमाश्चवर्द्धंतेअहन्यहनिभारत ॥ द्विजानांतपसा ढ्यानांगृहधर्मेषुतिष्ठताम् १ देवाताचर्याश्चपूज्यंतेतदाप्रभृतिभारत ॥ तेषांब्रह्मविदांराजन्पृथिव्यांब्रह्मवादिभिः २ तत्रैवब्रह्मसदनेसमेनिस्तृणकंटके ॥ प्राज्येधनतृणेदेशेपुण्येपर्वतरोधसि ३

श्वेतसर्पतुल्यैः शास्त्रादिव्यसनैः व्यालैः कृष्णसर्पतुल्यैः कामादिव्यसनैश्चविशीर्णैश्चोद्यमानःप्रेर्यमाणः एतैर्गुणैःप्रीतोगुरुर्यदादेहाद्यध्यासमपनिनीषेत्तदैवतन्नाशोनान्य थेत्यर्थः ॥ ४८ ॥ तूष्णींबभूवुःवैराग्याद्यभावादात्मनः देहात्पृथक्करणव्यापारान्निवृत्ताइत्यर्थः ॥ ४९ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांत्रयोविंशतितमोऽ ध्यायः ॥ २३ ॥ अष्टादशेवपुर्भेत्तुमशक्तेःकर्मभूतले ॥ कर्तव्यंब्रह्मसदनेचित्तशुद्ध्यर्थमीर्यते ॥ १ ॥ बलिरिति तेषांशैलभेदासमर्थानांब्रह्मविदांकर्मविदांब्रह्मवादिभिस्तादृशैः ऋत्विग्भिःसार्धंपृथिव्यांबल्यादिकंवर्द्धते तथादेवताविष्णुः अर्च्यागुर्वादयः तेचपूज्यंतेतदाप्रभृतिशैलेंद्रवचनप्रतिग्रहप्रभृतीतिद्वयोःसंबंधः ॥ १ ॥ २ ॥ तत्रैवपृथिव्यामेवब्रह्मस दनेअविमुक्तंवैकुरुक्षेत्रंदेवानादेवयजनंसर्वेषांभूतानांब्रह्मसदनमितिश्रुतिप्रसिद्धेवाराणस्याख्येअविमुक्तेतत्रैवेतिविशेषणम् आध्यात्मिकभ्रूघ्राणसंध्याख्यब्रह्मसदनानिवृत्त्यर्थंतदुपास्य नधिकारिणामेवप्रस्तुतत्वात्क्षेत्रमेवात्रब्रह्मसदनशब्दार्थः पर्वतस्यविंध्यस्यरोधःसमीपे ॥ ३ ॥

भगवतःक्रियांप्राणिनांगत्यागतिरूपां तपोर्थिनः तपआलोचने अत्रहिजंतोःप्राणेषुक्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतीतिश्रुतिप्रसिद्धमोक्षहेतुतत्त्वज्ञानार्थिनइत्यर्थः ॥४॥ दानप्राप्तेन शुद्धिं प्राप्तेनदैप् शोधनेऽस्यल्युडंतस्यरूपं दानमिति यतयइति संन्यासिनांग्रहणंचोप्यर्थोयतयोपिहिकांक्षंतिवासमित्यनुषज्यते तेषामपि अविमुक्तेप्रतिष्टानांविहारोनैवविद्यतइतिकाशीतोऽन्यत्रगमननिषेधात् विकांक्षिणोविशेषेणकंक्षाइच्छातद्वंतःइहवस्तुमित्यर्थः ॥ ५ ॥ वानप्रस्थाअपिएतदेवकांक्षंतीत्याह वन्यैरितिद्वाभ्यां एतेपीहवासंकांक्षंतीत्यनुषज्यते ॥६॥ दैवयुक्तेनअयाचितोपरिस्थितेनकर्मणायाञ्चादिनायुक्ताःवृत्त्यर्थमितिशेषः ॥७॥ ब्रह्मचर्यब्रह्मनिष्टांअनेनआश्रमक्रमेण ॥८॥ आचरितंसंस्कारम् ॥९॥ नेति अवेदविद्वान्गृहधर्मंनआगच्छेत्कृत्स्नंवेदमप्राप्यगार्हस्थ्यंनकुर्यादित्यर्थः नचत्यागेनपरिव्राजेनगच्छेतम्रियेत एतच्चमनुनाप्युक्तं अनधीत्यद्विजोवेदाननुत्पाद्यसुतानपि ॥अनिष्ट्वाशक्तितोयज्ञैर्मोक्षमिच्छन्व्रजत्यधइति एतच्चाविरक्तविषयं ब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वायदहरेवविरजेत्तदहरेवप्रव्रजेदितिश्रुतिविरोधात् ॥१०॥ नापिवेदग्रहणात्

वासंयत्रप्रकुर्वंतिदृष्ट्वाभगवतःक्रियाम् ॥ तपोर्थिनोमहाभागाब्रह्मचर्यव्रतेस्थिताः ४ गृहस्थधर्मनिरतादानप्राप्तेनचेतसा ॥ यतयश्चापिकांक्षंतिधर्मेणेहविकांक्षिणः ५ वन्यैःकर्मफलैश्चैवरताब्राह्मणपुंगवाः ॥ अग्निहोत्रव्रतस्नाताजितक्रोधाःसमाहिताः ६ दैवयुक्तेनवायुक्ताःकर्मणाब्रह्मसत्तमाः ॥ चीरवल्कलसंवीतानियतानियतेंद्रियाः ७ चरंतोब्रह्मचर्यंचव्रतमास्थायदारुणम् ॥ अनेनविधिनाराजन्क्रमप्राप्तेनसर्वशः ८ क्रमाद्येवेदसंस्कारंपुण्यंप्राप्ताःसनातनम् ॥ पूर्वैराचरितंराजन्मुनिभिर्ब्रह्मवादिभिः ९ नावेदविद्वान्नागच्छेन्नापिरौद्रंव्रतंचरेत् ॥ नचत्यागेनगच्छेतगृहधर्मंनचत्यजेत् १० नैवंगच्छेतदुःस्थानमप्राप्तेवेदसंचयम् ॥ ऋचश्चसंचयःपूर्वाःसामगानांचभारत ११ येचापिपुत्रिणोनस्युःश्रुत्वापिप्राप्नुयुःफलम् ॥ ब्राह्मणास्तपसाश्रांतागुरोश्चपरिचर्यया १२ यस्यनैवश्रुतंब्रह्मनगृहीतंविशांपते ॥ कामंतंधार्मिकोराजाशूद्रकर्माणिकारयेत् १३ अथवानैवविद्येतयब्रह्मनाद्रियेद्विजः ॥ द्वाभ्यांतुश्रोत्रविषयेमनःपूर्वंसमाहितम् १४

प्राक्संन्यसेदित्याह नैवमिति दुःस्थितंस्थानंअनिकेतत्वमित्यर्थः वेदसंचयस्यापीयत्तामाह ऋचइति बह्वृचानांसामगानांचाध्वर्युवेदिनामप्यृचएवसंचयः साम्नांयजुषांचाप्यृक्ष्वेदांतर्भावइत्यर्थः ॥११॥ येचेति पुत्रिणोनस्युः गार्हस्थ्यंनचक्रुरित्यर्थः श्रुत्वावेदांतानितिशेषः फलंज्ञानम् ॥१२॥ यस्येति श्रुतंकर्मब्रह्मणोःश्रवणं नगृहीतंनानुष्ठितं यस्यश्रवणमनुष्ठानंचनास्तितंशूद्रतुल्यंराजाशूद्रकर्माणिकारयेत् ॥१३॥ अथवेति अथवेतिपक्षांतरे यत्ब्राह्मणःसन्ब्रह्मवेदंनाद्रियेतइतियत्तन्नैवविद्यतेसर्वोपिब्राह्मणोवेदवानेवअन्यथाब्राह्मणत्वमेवतत्रनास्तीतिभावः तेनतस्यशूद्रसमीकरणंराज्ञामप्रसक्तमेव द्वाभ्यांब्रह्मचारिगृहस्थाभ्यांश्रोत्रविषयेश्राव्येधर्मेब्रह्मणिचपूर्वमध्ययनाध्यापनकालेएवमनःसमाहितंकृतंतस्मान्नब्राह्मणस्यावहेलनाराज्ञाकर्तव्येतिभावः ॥ १४ ॥

उपसंहरति एवमितियस्मादेवंतस्मात् भूतिंविद्याभूतिंअपरोक्षज्ञानसंपदं ॥ १५ ॥ ॥ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांचतुर्विंशतितमोध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ ॥ एकोनविंशेश्रौतोपियज्ञःकामादिविघ्नितः ॥ तेनेशभक्तिरेवैकातमोहंत्रीनिगद्यते ॥ १ ॥ तेत्विति द्वयोःसंबंधःतेनारदादयोवैदिकमेवकर्मश्रेयस्करंतदकरणेराजदंडश्चेतिजानंतःगोब्राह्मणाः गौर्वाक्वेदप्रधानाइत्यर्थः नागाःनास्तिआगोविध्यपराधोयेषुतेनागाःरजःप्रकृतिभावाः समासांतश्चटच्आर्षः चंद्रादित्याभ्यांकालोलक्ष्यते दर्शपूर्णमासौपुरस्कृत्येत्यर्थः ब्राह्मणान्ब्रह्मप्रभावान्देवानृषींश्चपूजयन्अपूजयन्अडभावआर्षः वसुभिःहविर्दक्षिणाभिःब्रह्मसंभवैरितिब्रह्मेवब्रह्मणार्चितवंतइत्यर्थः ॥ १ ॥ क्रमप्राप्तंब्राह्मणपूजायाःक्रमेणपितामहंब्रह्माणमपिअपूजयन् कुत्र यज्ञेपुत्रयज्ञेपुत्रपूजयापितुराल्हादोभवतीतितद्वत् ॥ २ ॥ पंचेंद्रियाणिनिवासयंतिनिश्चलीकुर्वंतितैः ॥ ३ ॥ पंचभिरिंद्रियैःसमाहितैरेकाग्रैःयज्ञंदृष्ट्वाब्रह्मापिदिष्ट्याभाग्येनएवंविधाभवतांयज्ञेप्रवृत्तिरितिस्तव्यमिदंकर्मेत्यर्थः ॥ ४ ॥ ५ ॥ भवान्यक्ष्यतेयक्षाःसुराश्चयक्ष्यंतेप्रतिगुणैःस्वस्वगुणाःसात्विकराजसता

एवंसर्वेंद्रियारंभान्वेदपूर्वान्समाचरेत् ॥ ब्राह्मणोभूतसंपन्नोयइच्छेद्भूतिमात्मनः १५ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिचतुर्विंशतितमोऽध्यायः २४ ॥ ध ॥ वैशंपायनउवाच ॥ तेतुगोब्राह्मणानागाश्चंद्रादित्यपुरस्कृताः ॥ ब्राह्मणान्पूजयन्देवान्वसुभिर्ब्रह्मसंभवैः १ नारदप्रमुखाश्चैव गंधर्वाऋषयोनृप ॥ कुर्वंतिसततंयज्ञंक्रमप्राप्तंपितामहम् २ वचोभिर्मधुराभाषैःपंचेंद्रियनिवासिभिः ॥ सर्वभूतप्रियकरैःसर्वभूतहितैषिभिः ३ स्तूयमानश्चयज्ञांतेपंचेंद्रियसमाहितैः ॥ प्रोवाचभगवान्ब्रह्मादिष्ट्यादिष्ट्येतिभारत ४ ततःकश्यपमाभाष्यप्रोवाचभगवान्प्रभुः ॥ भवानपिसुतैःसार्द्धंयक्ष्यतेवसुधातले ५ क्रतुभिःपरमप्राप्तैःसंपूर्णवरदक्षिणैः ॥ यक्षासुराश्चतेसर्वेयथाप्रतिगुणैःप्रभो ६ वयंयक्षामहेपूर्वंपूर्वंयक्षामहेवयम् ॥ एवमन्योन्यसंरंभाद्विवदंतेबलदर्पिताः ७ दैतेयाश्चाप्यदैतेयाःपरस्परजयैषिणः ॥ युद्धायैवप्रतिष्ठंतिप्रगृह्यविपुलैर्भुजौ ८ निवार्यमाणाऋषिभिस्तपसादग्धकिल्बिषैः ॥ अन्यैश्चविविधैर्विप्रैर्वेदवेदांगपारगैः ९ निवार्यमाणायुद्ध्यंतेवृषभाइवगोकुले ॥ प्रयुद्धायुद्धसंक्रांताःसर्वेप्राणजयैषिणः १०

मसावा प्रतिगुणास्तैःस्वस्वाभिप्रायेणेत्यर्थः ॥ ६ ॥ एवंक्रतौप्रवृत्तेआध्यात्मिकाः देवासुराः शमकामादयोमिथःस्पर्धमानाआसन्तेषुशमादिभिस्तत्तदिंद्रियकर्मणास्तोत्रपाठादिनासुरान्जेष्यामइत्यध्यवसितैः सुरैर्वागादिमनोतानिसर्वाणींद्रियाणिपापविद्धानिकृतानिअतएवतेषांशुभाशुभविषयप्रकाशकत्वमविशेषेणदृश्यते ततःप्राणाख्यंसूत्रात्मानंदेवाः आश्रितवंतस्तेनसर्वेकामादयोनिहताइत्ययमर्थोद्वयमाह प्राजापत्यादेवाश्चासुराश्चतत्रकानीयसाएवदेवाज्यायसोसुरास्तएषुलोकेष्वस्पर्द्धंतेत्यादिनाबृहदारण्यकेदर्शितस्तमुपबृंहयतिवयमिति ॥ ७ ॥ ८ ॥ विप्रैर्निरोद्धुमशक्याः द्विविधाः अपिवृत्तयइत्यर्थः ॥ ९ ॥ प्रयुद्धाः प्रकृष्टंयुद्धंयेषांते ततोयज्ञंविहायप्राणोपास्तौप्रवृत्तेष्वपितेषुसर्वेप्राणजयैषिणःअभूवन् सर्वशुभाशुभेंद्रियवृत्तिरूपाः सुरासुराः प्राणंसूत्रात्मानंजेतुमेषितवंतः तावतैवसर्वेपिनष्टाः पाषाणंप्राप्येवपांसुपिंडाः ॥ १० ॥

ततइति परवान्सेंद्रियवृत्तिसमूहं कृत्वाकर्तिरवाच्छिरवारुंधंति मनइतिशेषः शब्देनशाब्दज्ञानजेनाविवेकेन ॥ ११ ॥ बाहुभिर्वातुल्यैर्वैराग्यादिभिःतत्रापिपूर्वोक्तोरजस्तमोरूपो विघ्नउपस्थितइत्याह चचालेतिवसुधायोगभूमिः सत्वापत्याख्यारोचिभिःविषयवासनाज्वालाभिः ॥ १२ ॥ पर्वताः पर्वततुल्याः आसनबंधादयः ॥ १३ ॥ नद्योनद्यः मातरिश्वनाप्राणवायुनासूक्ष्मभावादुत्थितोवभूवेत्यर्थः ततइति एवंविक्षिप्तंचित्तंपुनर्विरोध्यमानंसत्रमधुनामानंलयंप्राप्नोति सचसत्वाख्येनविष्णुनाप्रतिहंतव्यइत्यर्थः ॥ १४ ॥ युगांतः संसारांतः ॥ १५ ॥ बलंनिद्रातंद्राजाड्यकषायांगमर्दादि ॥ १६ ॥ ॥ इतिश्रीमहाभारतेखिलेपुहरिवंशेभविष्यपर्वणिटीकायांपंचविंशतितमोऽध्यायः ॥ २५ तमसादेहनिगडेक्षिप्तमात्मानमुत्तमः ॥ उद्धरेत्सत्वसामर्थ्यादितिविशेनिरूप्यते ॥ १ ॥ मधुः आसुरोभावः मोहः पाशैर्वासनामयैः महेंद्रंआत्मानंपर्वतांतरेदेहमध्ये ॥ १ ॥

पश्यतांसर्वभूतानांमृत्योर्विषयमागताः ॥ ततःशब्देनमहतापरंकृत्वामहाबलाः ११ रुंधंतिबाहुभिःक्रुद्धाःसपक्षाइवपक्षिणः ॥ चचालवसुधाचैवपादाक्रांताचरोचिभिः १२ नौर्यथापुरुषाक्रांतानिषीदतिमहाजले ॥ पर्वताश्चविशीर्यंतेनर्द्दमानागजाइव १३ चुक्षुभुश्चमहानद्यस्ताडितामातरिश्वना ॥ ततःसमभवद्युद्धंमधोर्विष्णोश्चभारत १४ युगांतकरणंघोरंसर्वप्राणिभयंकरम् ॥ प्रममाथबलंविष्णुःसमग्रंबलपौरुषम् १५ वह्नेरिवबलंदीप्तंशमयत्यंवुनायथा ॥ तथाप्रशामितंतेनभगवत्यपकारिणा १६ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ॥ बलवान्सतुदैतेयोमधुर्भीमपराक्रमः ॥ बबंधपाशैर्निशितैर्महेंद्रंपर्वतांतरे १ तंवैप्रह्लादवचनाल्लक्षणज्ञश्चभारत ॥ ऐश्वर्यमैंद्रमाकांक्षन्भविष्यंबुद्धिसंक्षयात् २ बद्धेंद्रंसहसामध्येपाशैर्मर्मविवर्जितैः ॥ आयसैर्बहुभिश्चित्रैर्बलवद्भिर्विदारणैः ३ विष्णुमेवाग्रणीरुद्रमाह्वयद्युद्धकोविदः ॥ मध्येगणानांसर्वेषांकालस्यवशमागतः ४ द्वैधीभूताःकाश्यपेयामधोर्वशमुपागताः ॥ युद्धार्थमभ्यधावंतंप्रगृह्यविपुलागदाः ५ गंधर्वाःकिन्नराश्चैववाद्येगीतेचकोविदाः ॥ प्रनृत्यंतिप्रगायंतिप्रहसंतिचसर्वशः ६ तंत्रीभिःसुप्रयुक्ताभिर्मधुराभिःस्वभावतः ॥ मनोमधोर्विधुन्वंतियुध्यमानस्यरागिणः ७ मधोर्बलार्थंमधुनोनियोगात्पद्मयोनिनः ॥ एतान्विकारान्कुर्वंतिगंधर्वाःसत्यवादिनः ८

तामिति सतंबबंधेतिपूर्वेणान्वयः प्रह्लादवचनात् प्रह्लादोप्रहर्षः तदनुसारित्वाद्विषादाख्यस्यलयस्येतिभावः लक्षणंचयोगिनः पूर्णसत्वराहित्यंतदभिज्ञश्चमोहः इंद्रस्यात्मनोबुद्धिसंक्षयाद्भविष्यंद्वैतादर्शनरूपमैश्वर्यमाकांक्षन्सुषुप्तौनिर्विकल्पावस्थासदृशायांपातयिष्यन्नित्यर्थः ॥ २ ॥ बद्धेति युग्मंमर्मविवर्जितैः भेदस्थानरहितैरभेद्यैरित्यर्थः अतएवआयसैरिवदृढैःविदारणैःअंतर्दुःखदैः ॥ ३ ॥ ४ ॥ द्वैधीभूताइतिप्रोक्तंद्वयेनाहप्रजोत्पत्त्यायथेमाह गंधर्वादयोरजःप्रधानामधोर्मोहस्यमनोधुन्वंतिविस्फारयंति ॥ ५ ॥ ६ ॥ ॥ ७ ॥ मधुनस्तमसःपद्मस्ययोनिर्ब्रह्मैवेत्यर्थः राजस्यापिप्रकृतिस्तमोमूलिकैवेतिभावः ॥ ८ ॥

तत्रेति प्राणदन्मधुस्तत्रगांधर्वेमनोदधावितिशेषः ॥ ९ ॥ आक्षिप्यआसमंतात्विषयेपुक्षिप्त्वास्वस्यापसरणेनसत्त्वंप्रयेतप्रगच्छीतितिरोबभूवेत्यर्थः ॥ १० ॥ ऋषयोमंत्रास्तत्तज्ज्ञानानि पितामहंपरमात्मानंअंतरधीयतअंतर्हिताबभूवुःएकवचनमार्षं ॥ ११॥ विष्णुमित्यादिनाविष्णुदैत्यरूपकेणविवेकमोहयोर्युद्धमाहएकादशभिः॥ १२ ॥ १३ ॥१४॥ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ शुश्रुवुरिति अथभूतानिपुष्करेताःस्तुतीःशुश्रुवुःयाःश्रुतयःविष्णुसंयुक्ताःपरयावर्णसंपदाउपलक्षिताश्चसत्यपराक्रमेभगवति विषयेसत्याः अबाधितार्थास्ताःशुश्रुवुरितियत्तच्छब्दाध्याहारेणयोज्यम् ॥ २३ ॥ शरीरमितिअनात्मनिदेहादावात्माभिमानोविद्याख्योमोहः तन्नाशाया

तत्रशक्तोहिगांधर्वेतस्मिञ्च्छब्देमधुर्मनः ॥ दानवाश्चासुराश्चैवप्रत्यक्षंयांतिप्राणदन् ९ मधोश्चमनआक्षिप्यपश्यन्योगेनचक्षुषा ॥ मंदरंप्रयतेविष्णुर्गूढोग्निरिवदारुषु १० ऋषयोदीप्तमनसंकिंचिद्व्यथितमानसाः ॥ पितामहंपुरस्कृत्यक्षणेनांतरधीयत ११ विष्णुंसोभ्यहनत्क्रुद्धोमधुर्मधुनिभेक्षणः ॥ भुजेनशंखदेशांतेनचकंपेपदात्पदम् १२ विष्णुश्चाभ्यहनद्दैत्यंकराग्रेणस्तनांतरे ॥ सपपातमहींतूर्णंजानुभ्यांरुधिरंवमन् १३ नचैनंपतितंहंतिविष्णुर्युद्धविशारदः ॥ बाहुयुद्धेहिसमयंमत्त्वाचिंत्यपराक्रमः १४ इंद्रध्वजइवोत्तिष्ठन्जानुभ्यांसमहीतलात् ॥ मधूरोषपरीतात्मानिर्दहन्निवचक्षुषा १५ परुषाभिस्ततोवाग्भिरन्योन्यमभिगर्जतुः ॥ समीयतुर्बाहुयुद्धेपरस्परवधैषिणौ १६ उभौतौबाहुबलिनावुभौयुद्धविशारदौ ॥ उभौचतपसाशांतावुभौसत्यपराक्रमौ १७ दृढप्रहारिणौवीरावन्योन्यंविचकर्षतुः ॥ शैलेंद्राविवयुद्ध्यंतौपक्षैःपाषाणसन्निभैः १८ विकर्षंतावमंतौचअन्योन्यंवसुधातले ॥ गजाविवविषाणाग्रैर्नखाग्रैश्वविचेरतुः १९ ततोव्रणमुखैश्चैवसुस्रावरुधिरंबहु ॥ ग्रीष्मांतेधातुसंसृष्टंशैलेभ्यइवकांचनम् २० संसिक्तौरुधिरौघैश्वस्रवद्भिःसमरंजितौ ॥ अथोद्यतैःपदाग्रैश्चतौव्यदारयतांमहीम् २१ अभिहत्यतुतौवीरौपरस्परमनेकधा ॥ पतंगाविवयुध्येतांपक्षाभ्यांमांसगृद्धिनौ २२ शुश्रुवुश्चांतरिक्षेथसर्वभूतानिपुष्करे ॥ सिद्धानांवदनोन्मुक्ताःपरयावर्णसंपदा २३ स्तुतयोविष्णुसंयुक्ताःसत्याःसत्यपराक्रमे ॥ शरीरंधातुसंयुक्तंसंयुक्तंचेतनेनच २४ तद्ब्रह्मइंद्रियैर्युक्तंतेजोभूतंसनातनम् ॥ ध्रुवंतिष्ठंतिभूतास्तेसूक्ष्मेप्रलयतांगते २५

त्मानात्मनोर्विवेकायस्थूलात्विविनक्तिधातवस्तेजोवन्नानितेषांसंयुक्तंसंयोगः शरीरंतत्रमलपिंडतुल्येचैतन्यंनसंभावितमिति ततःपृथग्भूतेनचेतनेनान्वितमितिवक्तव्यम् तच्चचेतनंब्रह्मैवतेजोभूतंचिन्मात्रंइंद्रियैर्युक्तंजीवइतिशेषः ॥ २४ ॥ एवंजीवस्यब्रह्मभावमुक्त्वादेहस्यापितमाहध्रुवमिति तेदेहारंभकाःभूतेसूक्ष्मेकारणेध्रुवंनिश्चितंतिष्ठंति प्रलयतांप्रलयाधिष्ठानतांगते पुनश्चसूक्ष्ममेवानेकधाबहुरूपंभूत्वापुनश्चोद्भवते अयंभावः शुद्धंप्रत्यदृङ्मात्रमेवानिर्वचनीयंमायामनइंद्रियादिभिःसूक्ष्मस्थूलस्थूलतरैः शबलपरागृदृश्यरूपेणमुकुरैर्मुखमिवत्रेधावभातितत्रांतस्योपाधेः पूर्वस्मिन्लयेलोचनोत्तेजनाक्षरन्यायेनस्थूलतरंस्थूलरूपेणैवावशिष्यते एवंस्थूलमपिसूक्ष्मरूपेणतदपिमायापगमेचिन्मात्रेणेतियुक्तेसर्वस्यब्रह्ममात्रत्वमिति ॥ २५ ॥ ३९

प्रबोध्येतित्रिलोकेषुकारणसूक्ष्मस्थूलरूपेषुभूतानांभावंस्वरूपंप्रबोध्यतानेवलोकान्स्वरूपचैतन्येनाभिव्याप्यवशीअसंगआत्माचरतेभुंक्ते कर्मव्यतिहारेतङ् लोकात्मानौपरस्परं भुंजातेपालयतइत्यर्थः ॥२६॥ मानसीमितिसार्धश्लोकंएकंवाक्यं ॥ २७॥ ईश्वरःसूक्ष्मेणरूपेणआत्मानंधारयन्चरतेइतिपूर्वेणान्वयः किंकृत्वा बहुभिः कारणांतरैः दुष्टनिग्रहसाधुसंरक्षणादिभिःनिमित्तैःमानसींतनुंशेषकूर्मादिरूपमास्थायकीदृशईश्वरः योगात्मा कीदृशमात्मानं शेषनागरूपं दिवंधरःद्युलोकस्यधर्त्ता ब्रह्मवेदंभूतंचतुर्विधं परंचपंचविधं भूतंधार्यंधारकश्चात्मैवेत्यर्थः ॥ २८ ॥ ब्राह्मेणवेदमयेनरूपेणविप्रानधिष्ठायवसति सर्वत्रभगवानितिशेषः शेषंस्पष्टं॥ २९ ॥ गाःअधिष्ठायक्षीरप्रदानेनवःयुष्मान्पानियज्ञेषुअश्वान् यज्ञियद्रव्याणिअधिष्ठायप्रोक्षणैःफलामृतसेवकैश्चवःपाति पितरःपितॄन्ऊष्मणाश्रप्यमाणहविर्बाष्पेण ऊष्मभागाहिपितरइतिश्रुतेः ॥ ३० ॥ यत्सप्तान्नानिमेधयातपसाजनयत्पिताएकमस्यसाधारणंद्वेदेवानभाजयत्त्रीण्यात्मनेऽकुरुतपितृभ्यएकंप्रायच्छदितिसप्तान्नंब्राह्मणार्थंसंगृह्णाति चतुर्भिरिति धातुभिः दर्शपूर्णमासपिंडापितृयज्ञसाधारणांतैःत्रिभि

पुनश्चोद्भवतेसूक्ष्मंबहुरूपमनेकधा ॥ प्रबोध्यभावंभूतानांत्रिषुलोकेषुकामदः २६ सुरूपोबहुरूपांस्तांल्लोकान्संचरतेवशी ॥ मानसींतनुमास्थायबहुभिः कारणांतरैः २७ योगात्माधारयन्नुर्वीनागात्मानंदिवंधरः ॥ ब्रह्मभूतंपरंचैवसूक्ष्मेणात्मानमीश्वरः २८ ब्राह्मेणविप्रान्वसतियुद्धेनैवचक्षत्रियान् ॥ प्रदानकर्मणविश्याञ्छूद्रान्परिचरेणच २९ गावःक्षीरप्रदानेनअश्वान्यज्ञेषुप्रोक्षणैः ॥ पितरश्चोष्मणावेदहविर्भागेनदेवताः ३० चतुर्भिर्व्यतिरिक्तांगैस्त्रिभिरन्यैश्चधातुभिः ॥ सप्तभिःपितृभिर्नित्यैस्त्रीँल्लोकान्परिरक्षति ३१ चंद्रसूर्यात्मकंनित्यंतद्रूपनिहतात्मकं ॥ प्रकाशंचाप्रकाशंचनिगूढंस्वेनतेजसा ३२ त्रयस्तुपितरोनित्यंवर्द्धयंतिदिवाकरं ॥ चतुर्भिःपितृभिश्चैवचंद्रोवर्धतिमंडले ३३ त्रयःपितृगणानित्यंपिंडान्पश्चाददंतिते ॥ चत्वारोन्येपितृगणाःसिद्धाः पंचकआददे ३४ त्वमेवपंचतान्धर्मास्त्वमेवापंचतान्विभो ॥ सनातनमयोदिव्यःशाश्वतोब्रह्मसंभवः ३५

र्मनोवाक्प्राणैःएवंसप्तभिरन्यैः पितृभिःसहत्रीँल्लोकान्परिरक्षति किंभूतैःसप्तभिःनित्यैःअकरणेप्रत्यवायकरैः ॥ ३१ ॥ चंद्रेति एतत्सप्तकंचंद्रसूर्यात्मकंयथात्मकंयथायोगंप्रकाशं अर्चिरादिमार्गरूपंअप्रकाशंधूमादिमार्गरूपंनिहितः संकटेपातितआत्मायेनतत्स्वेनतेजसाचित्प्रकाशेननिगूढंव्याप्तंचसप्तकं ॥ ३२ ॥ एतदेवविभजंते त्रयोमनोवाक्प्राणाःपितरइत्यनेनस्पष्टभेदमेषामाह निगृहीताएतेनावृत्तिफलंअर्चिरादिमार्गेवर्द्धयंतिअन्योन्यमित्यर्थः ॥ ३३ ॥ एतदेवाह त्रयइतितेपूर्वोक्तास्त्रयः पितृगणानित्यंनियमेनपश्चात्फलभोगांते पिंडान्स्थूलसूक्ष्मकारणदेहान् अदंतिसंहरंतिमनोवाचंप्राणंतान्यात्मनेकुरुतइतिश्रुतेः उपासीनाः मनोवाक्प्राणाः अवश्यंक्रमेणआत्मनोमुक्त्यैभवंतीत्यर्थः अन्येपितृगणास्तु उक्तादर्शादयःसिद्धाःशरीराकारपरिणताःपंचविषयादयोभवंति केतेयान्कःप्रजापतिर्यजमानः आददेआत्मत्वेनस्वीकृतवान् दर्शादिफलंदेहांतरप्राप्तिरेवनित्येत्यर्थः ॥ ॥ ३४ ॥ त्वमेवपंचतान्वियदादीन्धर्मान्कनकमिवकुंडलादीन् ॥ ३५ ॥

तस्मादिति आदीयतेन्यैरग्न्यादिभिःस्वप्रथनायेत्यादित्यःसूर्यवत्प्रकाशकः ॥ ३६ ॥ प्रकारांतरेणादित्यपदार्थमाहयदिति आदानादादित्यइत्यर्थः आदत्सीतिपरस्मैपदंआदा तुः स्वर्गामिफलाभावात् ॥ ३७ ॥ पक्षसंधौपूर्णिमायांअमावास्यां अमावास्यायां ॥ ३८ ॥ हेतूनांस्वर्गादिसाधनानांकर्मणांअविकारायतमेवाहमाभूदिति काललोपेनधर्ममैव कल्यंमाभूदित्यर्थः॥ ३९ ॥ वनस्पतीतिऔषधीर्वनस्पतींश्चदर्शेवसुधांचपृथिवींचंद्ररूपेणप्रतिपद्यतेबालभावायपुनरुत्पत्तये ॥ ४० ॥ भूतानामतीतानांभाविनांअनागतानांचअर्थेगु ह्यर्थेयत्किंचिद्वसुतत्सर्वंत्वन्मयमेव ॥ ४१ ॥ त्वमेवेति देवयज्ञंदेवयज्ञाद्यात्मकं कर्मविशेषणत्वात्क्लीवत्वम् ॥ ४२ ॥ द्विविधइति चंद्रसूर्यपदयोर्विवरणंचंद्रमाइति ॥ ४३ ॥ त्वमेवेति वसुधायुक्तोभौमप्राणिरूपेणचरसिविषयान्सेवसेसीमयामर्यादयानियमेन वसुधायुक्तत्वमेवाहएकीकृत्येतिगणानइंद्रियादीन्संक्षिप्यदेहमात्ररूपेणअमुत्रसंभवइत्यगोचरत्वंदर्शितं

तस्मात्तत्तेजआदत्तेअग्निर्वायुश्वसर्वशः ॥ अतस्त्वंकर्मणातेनआदित्यःसमपद्यत ३६ यदश्नासिजगत्सर्वैरश्मिभिःप्रदहन्निव ॥ युगांतकालेसंप्राप्तेपरांसिद्धि मुपागतः ३७ पक्षसंधावमावास्यांलोकंचरसिमानुषम् ॥ ऋषिभिःसहगुह्यात्मासूर्येंदुवसुसंभवैः ३८ सफलंकर्मकुर्वाणंयजतांपुष्टिवर्धनम् ॥ हेतूनामवि कारायमाभूत्कर्मविपर्ययः ३९ वनस्पत्योषधीश्चैवयुगपत्प्रतिपद्यसे॥ बालभावायवसुधांपक्षेपक्षेजनिस्तव ४० भूतानांभुविभूतेशभाव्यर्थेवसुधातले॥ वसुयद्भुविकिंचिच्चसर्वंतत्त्वमयंविभो ४१ त्वमेवविविधंधर्मंशाश्वतंवसुधातले ॥ देवयज्ञंमंत्रवाक्यमात्मयज्ञंसमानुषम् ४२ द्विविधःस्वर्गमार्गश्चसूर्यश्चंद्रश्च निर्मलः ॥ चंद्रमाःपितृयानश्चदेवयानश्चभास्करः ४३ त्वमेववसुधायुक्तोविश्वंचरसिसीमया ॥ एकीकृत्यगणान्सर्वान्संक्षिप्यामुत्रसंभवः ४४ एकस्त्वम सिसंभूतःपुराणपुरुषोविराट् ॥ अक्षयश्चाप्रमेयश्चकर्मकारकरोवशी ४५ मूर्तस्तेजसिसंभूतोवायुःपर्येतिखेचरः ॥ सप्तभीरूपसंस्थानैर्नित्यमावृत्यतिष्ठ ति ४६ साधनेचापिनिर्माणेसंहारेप्रलयेतथा ॥ धाताधारणकालेचदिशश्चक्षुषिधारिणि ४७ सेव्यमानोमुनिगणैर्नित्यंविगतकिल्बिषैः ॥ कर्मभिःसत्यमा पन्नैःसमरागैर्जितेंद्रियैः ४८ स्तूयमानैश्चविबुधैःसिद्धैर्मुनिवरैस्तथा ॥ सस्मारविपुलंदेहंहरिर्हयशिरोमहान् ४९ कृत्वावेदमयंरूपंसर्वदेवमयंवपुः ॥ शिरो मध्येमहादेवोब्रह्मातुहृदयेस्थितः ५० आदित्यारश्मयोवालाश्चक्षुषीशशिभास्करौ ॥ जंघेतुवसवःसाध्याःसर्वसंधिषुदेवताः ५१

॥ ४४ ॥ कर्मकारोलीला ॥ ४५ ॥ तेजसिरूपात्मनासंभूतः अतएवमूर्त्तश्चक्षुर्ग्राह्यः सप्तभिर्महदहंकारपंचतन्मात्राख्यैः ॥ ४६ ॥ साधनेशमादिसाधनकालेजीवरूपेणत्व मेवासिनिर्वाणेशुद्धरूपेण संहारेदैनंदिनलयेप्रलयेब्राह्मलयेचरुद्ररूपेणधातापालयिताविष्णुरूपेण दिशोवर्णाश्रममर्यादातुत्वमेवासिधारिणिपोषकेचक्षुषिइंद्रियेचचिद्रूपेणप्रवर्त्त कस्त्वेनत्वमेवासि ॥ ४७ ॥ सत्यंब्रह्मसमरागैः शत्रौमित्रेचतुल्यप्रीतिभिःसर्वस्यात्मत्वात्तेषांद्वेषोनास्त्येवातएवजितेंद्रियैः नित्यतृप्तत्वात् ॥ ४८ ॥ एवंमधुविष्णुसंज्ञयोर्मोहत्रिवे कयोर्युध्यतोः सतोः मधुनाबद्धोमहेंद्राख्योजीवःस्तुतिव्याजेनसिद्धैः सद्गुरुभिर्बोधितोहरिः स्वीयंविपुलंसर्वात्मकंदेहंसस्मारयत्हयशिरःसंज्ञम् ॥ ४९ ॥ ५० ॥ ५१ ॥

सत्यावेदवाणीसैवास्यसरस्वतीदेवीवाग्देवता ॥ ५२ ॥ एवंविश्वरूपाविर्भावेनअसुरंमोहंपीडयामासमोहयामास ॥ ५३ ॥ मधोरिति त्वगसृङ्मांसमज्जास्थिमेदशुक्राख्यैर्धातुभिःरचितवपुष्ट्वेनरूपितेमोहेमेदोमात्रमवशिष्टंयदज्ञानलेशामितिप्रसिद्धंतेनअंबुपूर्णापृथिवीशरीरंसमदृश्यत यथाप्रमदाप्रकृष्टमदायुवतीघनावक्षोजभारेणकठिनाशुक्लांबरवतीमनोनंदिनीतथामधुमोहस्यवपुरभिनवमिवभातीत्यर्थःतथाचश्रुतिः ब्रह्मविदइवसौम्यतेसुखंभातीतिदर्शयति ॥ ५४ ॥ असुरस्यमोहस्यसंबंधितयासहैवपूर्यमाणमेवस्त्रवतीतिसहस्रंमुद्गलंशरीरंतेन विभिदास्नेहनेअस्यरूपंमेदिनीतिस्निग्धेत्यर्थः अज्ञानलेशानुवृत्तेर्विद्वत्सुपरोद्धरिणकारुणिकत्त्वमायातंनचेत्ज्ञानसमकालमेवदेहपातःस्यादितिभावः ५५॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांषड्विंशतितमोऽध्यायः ॥ २६ ॥ ७ ॥ सत्वेननिहतेमोहेगुरुशास्त्रादिकंजगत् ॥ हार्देब्रह्मणिपश्यंतीत्येकविंशेसमीर्यते ॥ १ ॥ म

जिह्वावैश्वानरोदेवःसत्यादेवीसरस्वती ॥ मरुतोवरुणश्चैवजानुदेशेव्यवस्थिताः ५२ एवंकृत्वातथारूपंसुराणामद्भुतंमहत् ॥ असुरंपीडयामासक्रोधाद्रक्तांतलोचनः ५३ मधोर्मेदोंबुपूर्णाचपृथिवीसमदृश्यत ॥ प्रमदेववनाचैवशुक्लांशुकनिवासिनी ५४ मेदिनीत्येवशब्दश्चलब्धःपृथ्व्यानरोत्तम ॥ नामासुरसहस्रेणधरण्यांसंप्रतिष्ठितम् ५५ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिषड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ ॥ मधोर्निपतनंदृष्ट्वासर्वभूतानिपुष्करे ॥ प्रहृष्टानिप्रगायंतिप्रनृत्यंतिचसर्वशः १ सुपार्श्वोगिरिमुख्यस्तुकांचनैःशिखरोत्तमैः ॥ बहुधातुविचित्रैश्चखंलिखन्निवचाबभौ २ गिरयश्चाभिशोभंतेधातुभिःसमरंजिताः ॥ प्रांशुभिःशिखराग्रैश्चसविद्युतइवांबुदाः ३ पक्षवातोद्धतोरेणुश्चूर्णैःसांजनवालुकैः ॥ छादयन्पर्वताग्राणिमहामेघइवाबभौ ४ मेघसंश्लिष्टशिखराःपक्षविक्षिप्तपादपाः ॥ कांचनोद्भेदबहुलाःखेतिष्ठंतीवपर्वताः ५ पक्षवंतःसशिखराहेमधातुभिरंजिताः ॥ पवनेनसमुद्धूतास्त्रासयंतिविहंगमान् ६ कांचनाःपर्वताःसर्वेस्फाटिकैर्मणिभिश्चिताः ॥ सूर्यकांतैश्चबहुभिश्चंद्रकांतैश्चनिर्मलाः ७ हिमवांश्चमहाशैलःश्वेतैर्धातुभिराचितः ॥ कांचनैःशिखराग्रैश्चसूर्यपादप्रकाशितैः ८ मणिभिश्चप्रकाशद्भिःपक्षांतरविनिःसृतैः ॥ ताम्रपुष्पैश्चशिखरैर्दीप्यमानैःस्वतेजसा ९

धोरिति पुष्करेपरमव्योमाख्येकारणेब्रह्मणि व्योमपुष्करमंबरमित्यमरः सर्वभूतानामितितुल्यवद्देवर्षिमनुष्याणांप्रनृत्यंतीतिवर्त्तमानापदेशेनेदानींतत्प्राप्तानामस्मादादीनांचपुष्करप्रवेशेधिकारोदर्शितः ॥ १ ॥ तथाचश्रुतम् तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणांतथामनुष्याणांतदिदमप्येतर्हियएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवतीतिसुपार्श्वव्याख्यानरीत्यागुरुः मेर्वाख्योगिरिरेववा ब्रह्माणमीशंकमलासनस्थमितिव्यवहितस्यापिब्रह्मलोकादेर्विश्वरूपात्मनिदर्शनस्यशास्त्रप्रसिद्धत्वात् ॥ २ ॥ समंसर्वत्ररंजिताः ॥ ३ ॥ ॥ ४ ॥ खेहार्दाकाशेतिष्ठन्निवेतीवशब्दोमानसत्वद्योतनार्थः ॥ ५ ॥ त्रासयंतिपर्वताः ॥ ६ ॥ ७ ॥ ८ ॥ पक्षाणांअंतरंअंतरालंततोविनिःसृतैर्मणिभिः ॥ ९ ॥

॥ १० ॥ तोरणैर्निरालंबैरस्तंभैस्तोरणैरिवप्रांशुभिःपादपैः सौक्ष्म्याददृष्टदंडैरुपरिपरिणाहवद्भिश्चेत्यर्थः ॥ ११ ॥ १२ ॥ मदनायतेमदनवद्रसोसोद्दीपकोभवति ॥ १३ ॥ आदित्येति युग्मंयथानीलांबुदश्यामोविष्णुर्मेघैः पृथिव्यांतोयंवर्षति एवंमेरुपृष्ठाख्येभ्रूव्राणमध्येसर्वेपर्वताःनीलांजनचयोपमैः आदित्येनआभास्यमानैः स्वप्रभातोयंनिर्वेमुःउद्गीर्णवंतइत्यर्थः ॥ १४ ॥ १५ ॥ कीदृशैःशृंगैः शिलाभिरिति १६ ॥ १७ ॥ नागाः गजाः कनकसंभूतैरलंकारैः ॥ १८ ॥ १९ ॥ वेलेवतोयंतटाभिघातोच्छलद्बिंदुरूपम् ॥ २० ॥ २१ ॥ सत्त्वोत्कर्षवशाद्योगिनोभोगभूमयोमधुमत्यादयः दिव्यविषयवत्यउपतिष्ठंतइत्याहविष्णुरिति ॥ २२ ॥ २३ ॥ सापिस्वप्रकल्पामधुमतीभूमिः नेह नानास्तिकिंचनेतिश्रुत्याप्रबोधितस्ययोगिनोहार्दाकाशेविलीनेत्यर्थः ऋषिभिर्योगिभिः अनुचरिताः आज्ञप्ताअनुसृत्याविसृष्टेत्यर्थः ॥ २४ ॥ एवंयोगोपसर्गेषुविलीनेषुब्रह्मविद्यासंज्ञाअहंब्रह्मास्मीतिवाक्यजन्यावरमांतःकरणवृत्तिरुदेतीत्याह धात्रीति मूलप्रकृतिः कपिलंत्रिगुणात्मत्त्वान्मिश्रवर्णंतेनरूपेण गौःगच्छत्यधिगच्छत्यात्मवत्त्वामितिगौःविद्यातृत्तिर्भूत्वापयः ब्रह्मक्षरतेप्रकाशयति मधुरंआनंदमात्रत्वात्यज्ञेयोगेविशेषेणततेप्रथितेसति ब्रह्मणोवाक्यंअहंब्रह्मास्मीति तेनचोदिताप्रेरिताएवंविधागौः ॥ २५ ॥

मंदरश्चोग्रशिखरःस्फाटिकैर्मणिभिश्चितः ॥ वज्रगर्भोनिरालंबैःस्वर्गोपमइवाबभौ १० सहस्रशृंगःकैलासःशिलाधातुविभूषितः ॥ तोरणैश्चैवनिबिडैः प्रांशुभिश्चैवपादपैः ११ प्रवादयद्भिर्गंधर्वैःकिन्नरैश्चप्रगायिभिः ॥ देवकन्यांगरागैश्चप्रक्रीडाद्रिरिवाबभौ १२ मधुरैर्वाद्यगीतैश्चनृत्यैश्चाभिनयोद्गतैः ॥ शृंगारैःसांगहारैश्चकैलासोमदनायते १३ आदित्याभासिभिःशृंगैर्भिन्नांजनचयोपमैः ॥ विंध्योनीलांबुदश्यामोविभिन्नइवतोयदः १४ धात्वर्थंसर्वभूतानां मेरुपृष्ठेमहाबले ॥ निर्वेमुर्विमलंतोयंमेघजालैरिवोत्तमैः १५ शिलाभिर्बहुचित्राभिर्धातुभिर्बहुरूपिभिः ॥ प्रस्रवद्भिर्गुहाद्वारैःसलिलंस्फटिकप्रभम् १६ ग्रीष्मांतेवायुसंगूढाघनाइवसविद्युतः ॥ चित्रैःपुष्पैस्तरुगणाःशोभंतइवभूषिताः १७ नागाःकनकसंभूतैर्विचित्रैरिवभूषिताः ॥ विहंगमाभिर्लीनाश्चलतास्तरुसमाश्रिताः १८ विलंबंत्यःसपुष्पाश्चनृत्यंतेवायुघट्टिताः ॥ पवनेनसमुद्भूतामहतामाधवेहनि १९ मुमुचुःपुष्पसंघातंतोयंवेलेववर्षति ॥ बलवद्भिश्चविपुलैःशाखास्कंधावरोहिभिः २० पादपैर्वर्णबहुलैर्ध्रियतेचवसुधरा ॥ मधुप्रियामधुकरामधुमत्ताविहंगमाः ॥ घोषयंतीवगायंतःकामस्यागमसंभवम् २१ विष्णुर्मधोर्निहंताचचकारमधुवाहिनीम् ॥ नदींप्रस्रवनिर्भेदांसुतीर्थांबहुलोदकाम् २२ अंगारवर्णसिकतांमधुतीर्थांमनोरमाम् ॥ विमलैरंबुभिःपूर्णांपुष्पसंचयवाहिनीम् २३ विवेशपुष्करंसातुब्रह्मणोवाक्यनोदिता ॥ ऋषिभिश्चानुचरिताब्रह्मतंत्रनिषेविभिः २४ धात्रीकपिलरूपेणगौर्भूत्वाक्षरतेपयः ॥ मधुरंविततेयज्ञेब्रम्हणोवाक्यचोदिता २५

वृत्तावपिप्रलीनानांशुद्धंचिन्मात्रमेवावशिष्यतइत्याह शिरश्चेति शीर्यतइतिशिरः उत्तमांगवच्छ्रेष्ठापिप्रतिक्षणपरिणामिगुणकार्यत्वादपक्षयवतीवृत्तिः पृथिवीजडासतीभूतंकूटस्थं
वस्तुसंधातुंसमर्थापिमहीस्वोपादानंजलंप्रतिप्राप्तवत्गतवतीततोयोगीशुद्धंलोकंआत्मानंभजतेनिर्विकल्पेनसमाधिनेत्यर्थः ॥ २६ ॥ ननुसर्वधर्मशून्यंनिर्विकल्पकंचेच्छून्यमेव
तत्स्यादित्याशंक्याह सरस्वत्याइति सरस्वत्याः अस्तीत्येवोपलब्धव्यइतिवेदवाचः सकाशात्समुद्भूतं सत्वेनप्रकटीभूतं तमोनुदंअज्ञानविरोधितयाज्ञानमात्रं ब्रह्मक्षेत्रेभ्रूप्रा
णमध्येसमुद्भूतंमरुतीर्थंमरुमरीचिकोदकतुल्यंज्ञेयं अतिक्रम्यपुष्करेषुपुंभेदाद्बहुवचनं त्रयाणांमिथुनत्वेतदेकैकस्यपृथक्पृथगितिशुद्धेशजगतांमध्येईशजगतोः प्रतिपुरुषंपृथक्त्वे
नदर्शनात्पुष्करानेकत्वंयुक्तं मायाशबलेपरमेव्योम्निविसर्पति योवेदनिहितंगुहायांपरमेव्योमन्नितिव्योम्नस्तदाश्रयत्वश्रुतेः॥ २७॥ ननुकुतोज्ञेयस्यमरुतीर्थतुल्यत्वमतआह सुचा
र्विति आजामायाकनकवर्णाभंदिव्यरूपंब्रह्मरूपेणरूप्यतइतिव्युत्पत्त्याद्दश्येनाहंकारादिनाच्छादयत्छादितवती अडभावआर्षः जवनिकाच्छादकस्यसत्यत्वंमाभूदतःछाद्यं
विशिनष्टि तपोयुक्तेनचेतसा रूपमितिआलोचनवताचेतसैवयद्रूप्यतेसाक्षात्क्रियतइतिरूपंसाक्षात्कर्तव्यंभवति भुजंगाच्छादितारज्जुरालोचनेनैवसाक्षात्क्रियते ननुराज
दारवज्जवनिकारूपस्यकस्यचिद्वस्तुनोपसारणेनतस्मात् ज्ञानमात्रनाश्यत्वेनरज्जूरगवदजामृषैव कीदृशीअजा सुचारुरूपा सुचारूणिरूपाणिलोहितशुक्लवर्णानितेजोबन्नाख्या

शिरश्चपृथिवीभूतंसंधातुंप्राप्तवान्महीम् ॥ शुद्धंचभजतेलोकंशाश्वतंपरमाद्भुतम् २६ सरस्वत्याःसमुद्भूतंब्रह्मक्षेत्रेतमोनुदम् ॥ मरुतीर्थमतिक्रम्यपुष्करेषुवि
सर्पति २७ सुचारुरूपाधर्मज्ञाअजारूपेणछादयन् ॥ रूपंकनकवर्णाभंतपोयुक्तेनतेजसा २८ अजगंधकृतोन्मुक्तःसंभूतःपर्वतोमहान् ॥ गुरुद्वारगुणप्राणः
शाश्वतःसिद्धसेवितः २९ वेदिकाभिःसुचित्राभिःकांचनाभिर्विराजितः ॥ पुष्कराणिपरीतानित्वष्टाविपुलदक्षिण ३०

नियस्याःसा तथा कुतःसाच्छादयतिवस्तुतत्वमतआह धर्मज्ञेति अदृष्टवशादध्यासोभवतीत्यर्थः ॥ २८ ॥ नन्वालोचनेनैवमायाजवनिकापगमोयत्क्रीयेतेत्येतदेवकुत
इत्याशंक्याहअजेति यस्मादयंमहान्पर्वतइवाभेद्योऽहमितितृतीयेनान्वयः अहं अहंकारादिःसंसारःसंभूतः सम्यक्स्थूलरूपेउद्भूततयादृश्यमानोपि अजगंधकृतोन्मुक्तोस्ति
अजेसन्मात्रेतस्यगंधोलेशःतेनपूर्वंकृतःपश्चादुन्मुक्तः अहंकारादिर्हिजाग्रदादौसन्निवदृश्यतेनतुसुप्त्यादौ अतोस्यदुःखादिधर्मिणोनात्मरूपत्वंकिंतुनित्याविर्भूतंस्वाधिष्ठानेएव
कादाचित्कप्रतीतिविषयत्वेनरज्जूरगवन्मृषात्वमेवास्येतिभावः ॥ अयमहंकारपर्वतः गुरुद्वारःगुणप्राणश्चगुरूपदेशादेवास्यतत्वमधिगम्यते गुणैरेवात्रिभिरयंजीवातेतस्मा
द्गुरुमाराध्यगुणत्रयंत्यक्तव्यमित्यर्थः शाश्वतोनादिः सिद्धसेवितः सिद्धैरपिसेवितः किमुतमूढैः ॥ २९ ॥ ननुसुषुप्त्यादौमनःसंयोगाभावात्संसारोअहमर्थेनप्रकाशते
नचतावतास्यानात्मत्वंभवति नहित्यक्तवास्यस्तक्षाऽतक्षाभवतीत्याशंक्याह वेदिकाभिरिति तस्यत्रयअवस्थास्त्रयःस्वप्नाइतिश्रुतेःसंसारिणः तिसृभिरेवक्रीडास्थानभूता
भिर्वेदिकाभिरिवजाग्रत्स्वप्नसुषुप्त्याख्याभिःपरस्परवैलक्षण्यात्विचित्राभिरवस्थाभिर्विराजितोदृश्यते तथापि अवस्थानांवैचित्र्यादवस्थांतरगतस्यदुःखादेरवस्थांतरेदर्शनाभावा

दसंगोपियक्षइवपरशरीरसंचारीतत्तदेहाभिमानात्तदातदादुःखंप्राप्नोतितस्मात्तत्तदवस्थाभिमानकृतएवास्यसंसारोनस्वाभाविकइत्यर्थः नन्वभिमंतृत्वमपितात्विकमस्त्वित्याशंक्य दृश्यत्वान्नेत्याह पुष्काराणीति अहंकाराद्युत्थानकारणानिमूलाज्ञानानित्वष्ट्रेवत्वष्ट्राविचित्रजगन्निर्माणशिल्पिनाईश्वरेणपरीतानिव्याप्तानिनतुसइतरैरित्यर्थः नहिचित्प्रकाश्यांचे त्स्वभावत्वंभजतइतिभावः हेविपुलदक्षिण ॥ ३० ॥ उत्तरार्द्धमेवविवृणोति महामेरोरिति धातुभिर्महाभूतैः शरीराकारपरिणतैः वृतोव्याप्तोहंकारःरूपेणाद्भुतदर्शनःअनिर्वच नीयोपियाप्रसिद्धाचेतनातयाभिसंपन्नोभवति नत्वयंस्वयंचेतनोयेनाभिमंतृत्वादिस्वभावआत्मेत्यवसीयेतेतिभावः ॥ ३१ ॥ इदानींशास्त्रदृष्टब्रह्मभावानिवेशेनाहंमनुरभवंसूर्यश्चे तिवामदेववत् अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्त्ततइतिभगवानिवाहंकारादेशेनैवतत्त्वंनिरूपयति करिष्यामीति अहमपिअहमेवएतत्एवंधर्मचारिणंदेहंमनसासंकल्पमात्रेणकरिष्या मिकरोमि नकेवलंदेहमात्रं अपितुलोकेबहुविधंरूपंदृश्यं तदपिमनसैवकरिष्यामि तथापार्थिवींपृथिवीशरीरंतत्संबंधांचेतनांबहुरूपांकरिष्यामिस्वदेहादिचेतनाचेतनंसर्वंमत्संक ल्पमात्रोत्थंमत्तोनान्यइत्यर्थः इदंसर्वंयदयमात्मेतिश्रुतेरितिभावः ॥ ३२ ॥ सर्वात्म्यमुक्त्वासार्वज्ञमप्याह धातून्पृथिव्यादीन्लक्षयंत्यतैस्तानिधातुलक्षणानींद्रियाणितैःपंचभिः

महामेरोर्यथारूपंपंचभिधातुभिर्वृतः॥ चेतनायाभिसंपन्नोरूपेणाद्भुतदर्शनः३१करिष्याम्यहमप्येतन्मनसाधर्मचारिणम्॥रूपंबहुविधंलोकेपार्थिवींचेतनां तथा३२त्रींश्चलोकान्प्रपद्येयंपंचभिर्धातुलक्षणैः॥षष्ठेनचससर्जेयंमनसाधर्मचारिणीम् ३३संगेषुभावमोहाभ्यांपश्यंतिचसमृद्धयः॥ विमुक्ताःसर्वसंगेभ्योधा रयंतिपरिग्रहान् ३४ नचविंदेतमांकश्चिन्मनसाकामरूपिणम् ॥पंचधातुनिबद्धश्चनानाभाषितचोदनाः ३५ येचविष्णुमधीयंतेबहुधाकामविग्रहैः ॥ ते मांपश्येयुरव्यक्तंतपसादग्धकिल्बिषाः ३६

त्रीन्लोकान्प्रपद्येयंजानीयां अनात्मभूतदृश्यज्ञानमुक्त्वात्मज्ञत्वमप्याह षष्ठेनमनसाचधर्मचारिणींआत्मसदृशीमसंगांचिदाकारांवृत्तिंसर्जेयंसृजेयंविद्याऽविद्यारूपोप्यहमेवसः सोहंविद्याप्रदातापीत्यर्थः ॥ ३३ ॥ येदीयमानायांविद्यायामधिकारिणस्तानाह संगेष्विति येसमृद्धयःसम्यक्पुष्कलाऋद्धिःऐश्वर्यंयेषांतेसमृद्धयःपुरुषाः संगेषुऋ द्धीनांयोगेषुभावमोहाभ्यांइत्थंभावेतृतीया संकल्पमात्रत्वेनभ्रमत्वेनचऋद्धिःपश्यंति एतेनविषयदोषदर्शनमुक्तं अतएवविमुक्ताःसर्वसंगेभ्यइतिवैराग्यमुक्तं परिगृह्यतेविषयाः यैस्तेपरिग्रहाः बुद्धींद्रियमनःप्राणाःतान्धारयंतिनिगृह्णंतिएतेनाभ्यासोदर्शितः एवंत्रयवंतोविद्याधिकारिणइत्यर्थः ॥ ३४ ॥ नचेति यस्मात्पंचधातुमयेनदेहेननिबद्धःना नाभाषितंअपामसोमममृताअभूमेतिनानार्थवादिकफलप्रेरिताःप्रायेणसर्वेतस्मात्मांकश्चिन्नविंदेतेतियोजना ॥ ३५ ॥ येचेति कामविग्रहैःइच्छागृहीतैःरामकृष्णादिविग्रहै रुपलक्षितंविष्णुंयेअधीयंतेप्रणवाद्युच्चारणेनस्मरंतितेव्यक्तद्वाराव्यक्तंमांपश्येयुः अयमर्थः पूर्वोक्तरीत्यास्फाटिकेरक्तत्वपद्मरागत्ववत्चिन्मात्रईशेसूक्ष्मस्थूलान्यध्यस्तानितत्रस्थूले श्रीगोपालप्रतिमादौप्रणिधीयमानंचक्षुःप्रथमंप्रतिमायाजाड्यतिरोधानेनचेतनत्वंगृह्णाति रज्जूरगइवनिहितमुरगातिरोधानेनरज्जुं अतएवभक्ताःस्वाराध्यैःसहव्यवहरंतीति

बहुलमुपाख्यायते चेतनमूर्त्तावपिप्रणिहितंचक्षुस्तस्यास्तात्विकंवैश्वरूप्यमेवगृह्णाति यदपश्यद्यशोदाकृष्णमुखेर्जुनोवाश्रीकृष्णाविग्रहे अस्यामवस्थायांयोगीदेहासंगात्स्वयमेव विश्वरूपोभूत्वासार्वज्ञंप्राप्नोति तदेतद्वितर्कजंप्रत्यक्षमभिप्रेत्योक्तंयोगभाष्येभगवताबादरायणेन तदेतत्परंप्रत्यक्षंतच्चश्रुतानुमानयोर्बीजमिति विश्वरूपेपिप्रणिधीयमानंमनःतस्य तत्त्वंसन्मात्रंगृह्णदस्मितामात्रमवशिष्यते तस्मिन्नपिलीनेयोगीस्वरूपानंदेप्रतियुक्तमुक्तकामविग्रहद्वाराव्यक्तंपश्येयुरिति ॥ ३६ ॥ मांनिर्गुणंअभिरोहेयुरुक्तसोपानक्रमेण ॥ ३७ ॥ मेरुपृष्ठेभ्रूमध्ये पर्वतःसमष्टचहंकारः कदायुद्धेयुरविद्ययासहप्राणत्यागेषुइंद्रियेषुत्यक्तेषुस्वस्मिन्प्रविलापितेषुसत्सु ॥३८॥ वनंहेयमितिशेषः योगोपसर्गत्वात्तद्भोगस्य ॥ ३९ ॥ ॥ ४० ॥ कामैःक्रमेयुःइच्छयाविषयान्प्राप्नुयुःइहलोकंचपरलोकंचसंपतेयुः॥४१॥ गौरीति यदाउक्तविधंप्रभावंतपःसकाशाद्वृत्तांनिष्पन्नंसमाहृताः योगिनोदर्शयंतितदाविद्ययाशास्त्राचार्योपदेशजज्ञानेननिष्पन्नागौरीपराब्रह्मविद्यात्रिलोकेषुसिद्धाव्याख्याता सत्यसंकल्पत्वाद्याविर्भावएवविद्यासिद्धिस्तावकइत्यर्थः ॥४२॥ षण्णामिति ज्ञानंवृत्तिःतस्याआभि

येचमामभिरोहेयुर्नराधर्मपथेस्थिताः ॥ तेपिस्वर्गजितःसंतःपश्येयुर्मांगतक्लमाः ३७ यश्चैवपर्वतःप्रांशुर्मेरुपृष्ठेव्यवस्थितः ॥ एतमारुह्ययुद्धेयुःप्राणत्यागेषु निर्मलाः ३८ अप्सरोभिःसमागम्यविचरेयुर्मनोजवाः ॥ नंदनंवनमारुह्यकाम्यकंचमहद्वनम् ३९ इमांविद्यांसमास्थायमद्भक्ताःपुष्करेष्विह ॥ शरीरंक्षपयिष्यंतिव्रतैर्बहुविधैःकृतैः ४० सिद्धिंप्राप्यक्रमेयुस्तेकामैर्बहुविधैर्नराः॥ इमंलोकममुंचैवसंपतेयुर्यथासुखम् ४१ गौरीसिद्धेतिव्याख्यातात्रिषुलोकेषुविद्यया॥ प्रभावंतपसावृत्तंदर्शयंतिसमाहिताः ४२ षण्णांज्ञानाभिसंधीनामभिज्ञानापसासंग्रहाः ॥ भवेयुस्तेनिरारंभाधातुनिर्मुक्तबंधनाः ४३ सहस्रगुणमप्यत्रदत्वा दानफलादिव ॥ अविमानेनविप्राणांमनःशुद्धेनकर्मणा ४४ सर्वत्रैवाप्रमेयेणअत्यंतंफलमाप्नुयुः ॥ अमुष्मिँल्लोकेधर्मज्ञाः सहसर्वकुलोद्भवैः ॥ ४५ येषामिहचसान्निध्यंयज्ञेब्राह्मणसंकुले ॥ तेभूयोयजमानाद्याअभिषिच्यपुनःपुनः ४६

मुख्येनसमित्येकीभावेनावधानंयेषुतेज्ञानाभिसंधयः संयमस्थानानिमूलाधारादीनिवा कर्मांगंवाह्यमाभ्यंतरंचद्वेभगवन्मूर्तिरूपेप्रतीकेविराट्सुत्रांतर्यामित्रयंचेतिषट्तेषांअभिज्ञानंसाकल्येनानुभवःतस्मात्हेतोःससंग्रहाःकामाभावात् अक्षीणयोगैश्वर्याअतएवनिरारंभाः धातुरूपंनिर्मुक्तंबंधनंयैस्तेतथा ॥ ४३ ॥ मुक्तबंधत्वंदानेनैवभवतीतिलौकिकदृष्टांतेनाह सहस्रमिति यथात्रकश्चिदपराधीसहस्रगुणमपिराज्ञेकरंदत्वादानफलाद्राजप्रीतेर्मुच्यते एवंविप्राणामवमानेनसन्मानेनमनःशुद्धेनकामरहितेनमनसाशुद्धेनदानकर्मणा ॥४४॥ अप्रमेयेणासंकुचितेनअत्यंतंफलंआत्यंतिकदुःखपरिहारंपरमेश्वरप्रीतेःब्रह्मलोकेपूर्वजैःसहप्राप्नुयुरितिश्लोकद्वयार्थः ॥ ४५ ॥ येषांयजमानऋत्विजांसान्निध्ययज्ञांगदेवतादौचित्तैकाग्र्यंतेपि पुनःपुनरप्यभिषिच्यबहुयज्ञावभृथंप्राप्यपूर्वोक्तंफलमाप्नुयुरित्यर्थः ॥ ४६ ॥

तथेतियथादानयज्ञयोःसंपदंमन्यसेतथा चेत्तांपूर्वोक्तांगौरींब्रह्मविद्यासंपदंतपोधनेसमीपेऽग्रेस्थितां चेन्मन्यसे राजन्निति शेषः तर्हितन्मामातंनैवमंतव्यंलयेत्यर्थः कीदृशींगौरींभूतानामनुग्रहायमनसाधर्मचारिणीं बाह्येनदानयज्ञादिनासाध्याबाह्यासंपत् परिमिताइयंतुमानसात्वादनंतेतिभावः ॥ ४७ ॥ किमर्थंतर्हिदानादिकंकर्तव्यमतआह सत्यइति एषआत्मागौरीलभ्यःसत्योऽबाधितः अविद्येपुंसिपरोदूरीभूतः भविताधर्मादपिआविर्भविष्यत्येवचित्तशुद्ध्यादिद्वारायस्माद्धर्मचारिणाधर्माचरणशीलेनानिष्कामेनेत्यर्थः आचरितो धर्मः अफलोनविद्यतेतस्माद्विद्यार्थधर्मोनुष्ठेयएवविविदिषंतियज्ञेनेत्यादिश्रुतेरितिभावः ॥ ४८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांसप्तविंशतितमोध्यायः ॥ २७ ॥ छ ॥ द्वाविंशेपरमैश्वर्यंविष्णवाद्यायोगगोचरात् ॥ प्रापुरित्युच्यतेसम्यग्योगश्रद्धाविवृद्धये ॥ १ ॥ दिशमिति उत्तरांदिशंपरांकाष्ठांमोक्षाख्यांधातुनिचयेशरीरेपर्वतरोधासि नासामूलेभ्रुवोःसंधौ ॥ १ ॥ विष्णुरिति पुष्करेहार्दाकाशेएकपादेनविश्वतैजसप्राज्ञतुरीयैश्चतुष्पादंब्रह्मतत्राद्यश्चतुष्टयानुगतःपरेक्रमाच्चिह्नैकैः एकपादेनतु

तथातांमन्यसेगौरींमनसाधर्मचारिणीम् ॥ अनुग्रहायभूतानांतन्ममाग्रेतपोधने ४७ सत्यएषपरोविद्येभवितानात्रसंशयः ॥ नाफलोविद्यतेधर्मश्चरितो धर्मचारिणा ४८ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिसप्तविंशतितमोऽध्यायः ॥ २७ ॥ छ ॥ वैशंपायनउवाच ॥ ॥ दिशंजिगमिषुर्दिव्यामुत्तरांसत्यसाधनः ॥ तथासधातुनिचयेपुण्येपर्वतरोधसि १ विष्णुःपरमधर्मात्माएकपादेनतिष्ठति ॥ दशवर्षसहस्राणिपुष्करेपुष्करेक्षणः २ आत्मन्यात्मानमाधायतपसाब्रह्मसंभवः ॥ घटतेकर्मणोग्रेणलोकमुत्थानकारणात् ३ भासुरोभस्मनाच्छाद्यगात्राणिस्वयमात्मनः ॥ अष्टौवर्षसहस्राणिसहस्रंचतपोधनः ४ तेजसातेनज्योतींषिविभाव्यब्राह्मणर्षभः ॥ तिष्ठतेनभसोमध्येयोगात्मामावयन्जगत् ५ सोमोविषयमाक्षिप्यमनसाधारयन्मनः ॥ युक्तःपरमधर्मात्माब्राह्मींसिद्धिमुपागतः ६ संप्रदृश्यतसर्वत्रादिविभुव्यंतरेतथा ॥ ज्योतिष्णुकर्मकुर्वाणोबहुरूपःससंपदा ७ महेश्वरोतिगूढात्मावृषरूपेणतिष्ठति ॥ उद्धृत्यदक्षिणंपादंवायुभक्षःसमाहितः ८ अष्टौवर्षसहस्राणिसहस्रशतमेवच ॥ महायोगीमहादेवोनियमाद्ब्रह्मसंभवः ९

रीयेणतुर्यात्मनानिर्विकल्पकेन ॥ २ ॥ आत्मनीति आत्मनिशुद्धेआत्मानंमायोपाधिंशरीरंआधायप्रविलाप्यलोकं शिक्षयितुमितिशेषः उत्सीदेयुरिमेलोकानकुर्यांकर्मचेदहमिति भगवद्वचनात् उत्थानकारणान्मोक्षहेतोः ॥ ३ ॥ भासुरःसोमः सिद्धिमुपागतइतितृतीयेनान्वयःअष्टौसहस्रंचेतिनवसहस्राणि ॥ ४ ॥ तेनप्रसिद्धेनजोतींषिग्रहताराद्दीनि विभाव्यअभिभाव्यतिष्ठतेप्रकाशतेप्रकाशनस्थेयाख्ययोश्चेतितङ्विपर्ययंबंधकंशब्दादि ॥ ५ ॥ आक्षिप्याधिकृत्यचेत्यर्थःयुक्तोयोगवान् मुक्तइनिवा ॥ ६ ॥ प्रदृश्यतप्रादृश्यत ज्योतिष्णु कर्मप्रकाशनक्रियां बहुरूपत्वंनानारसास्वौषधिष्वनुप्रवेशेननानारसत्वं सोमोभूत्वारसात्मकइतिसोमस्यरसात्मकत्वस्मृतेः ७ बलीवर्दरूपकेणधर्मात्मानंमहेश्वरंरूपयति उद्धृत्यधर्मस्यअहिंसागर्भौजपादिरूपौनिष्कामसकामौदक्षिणौपादौ हिंसागर्भौयज्ञादिरूपौसकामानिष्कामौउत्तरौ तेषुनिष्कामजपादिरूपंपादंपुरस्कृत्येत्यर्थः ८ सैकशतंनवसहस्रंवर्षाणि ९

योगजधर्मादेवविश्वाहितामितिद्योतयन् वृषरूपाच्छंकरान्मेघोत्पत्तिमाह गोपतेःइंद्रियनिग्राहकस्यअंतेघनीभूतःनिपीडिततूलपिंडवत्कठिनीभूतः तंफेनीभूतंपवनंसमुद्गारैःमुखाद्बहिःनिर्गिरन्निगीर्णवान्गोपतिः ॥ १० ॥ प्राणेनउद्गारवायुनापररूपांतरं निर्यासःवृक्षमदःपार्थिवःपाषाणादिवच्छुष्कः ॥ ११ ॥ सफेनश्चर्मकोशाकारोवारिजलंआविश्यचगृहीत्वाचचार वसुधापृथ्वीरसातलंअधोभागोयस्यतत्वसुधातलंअंतरिक्षंतस्मिन् ॥ १२ ॥ पवनःवारिणासहसहितंफेनमुत्क्षिप्यनिरालंबेगगनेनिरालंबःआश्रयांतरशून्यःअप्राणिआपोजलानिबिभ्रतीत्यप्राणिमेघसंज्ञांसमपद्यत ॥१३॥ आत्मनंपयोरूपंस्वेनैवरूपेणघट्टिताःघनत्वंप्राप्ताःकरकावत् तेनीलमेघाःसंतोअरुणेनारुणसारथिनासूर्येणघनीभूतंजलंद्रावयताप्रख्यायंतेमेघत्वंनसेचनकर्तृत्वेनीलमेघारुणप्रख्याः ॥ १४ ॥ ब्राह्मींमूर्तिंब्राह्मणशरीरंसमाधायकृत्वा ॥ १५ ॥ तपस्तप्यत्अतप्यत् सार्द्धश्लोकोवाक्यं ॥ १६ ॥

**आथवायुर्घनीभूतोअंतेचरतिगोपतेः ॥ फेनीभूतंसमुद्गारैःपवनंनिर्गिरन्मुखात् १० सनिष्क्रांतस्ततोवक्त्रात्प्राणेनपरमात्मवान् ॥ निर्यासभूतोपतितोनैवार्द्रोनैवपार्थिवः ११ सफेनोवारिणाविश्यचचारवसुधातले ॥ नैवार्द्रोनैवशुष्कांगोवायुसंघातमागतः १२ तत्कालफेनमुत्क्षिप्यपवनःसहवारिणा ॥ निरालंबेनिरालंबस्त्वप्राणिसमपद्यत १३ तेक्षिपंतिपयोभूमावात्मानंस्वेनघट्टिताः ॥ नीलमेघारुणप्रख्यानैवार्द्रानैवपार्थिवाः १४ ब्राह्मींमूर्तिंसमाधायवायुःसर्वत्रगोवशी ॥ समाःसहस्रंसंपूर्णंचचारविपुलंतपः १५ वह्निर्बहुजटीभूत्वाचीरवल्कलवासभृत् ॥ तपस्तप्यदनाहारोमौनमास्थायपौष्करे १६ वर्षाणांचसहस्राणित्रीणिचैकंचयत्नतः ॥ तस्याग्नेस्तेजःसंभूतोमहानग्निःप्रवर्त्तते १७ स्वर्गप्रकाशंकृत्वाचस्वर्गवासीतमोनुदः ॥ दिविभूतप्रकाशाख्यस्तपसाब्रह्मसंभवः १८ तत्तमोभुविराजेंद्रमानुषेषुप्रतिष्ठितम् ॥ भास्करस्तेजसंहारस्ततोभवतिसत्तमः १९ मर्त्यानांसर्वभूतानांतेजआक्षिप्यवर्तते ॥ नतुयोगबलेराजन्ब्राह्मणस्यविशेषतः २० तत्तमोनाशयेद्रात्रौनाप्यहोभविताद्वयम् ॥ पुष्पमित्रोमहातेजायक्षःसर्वत्रगोवशी ॥ तपश्चरतिधर्मात्माषुष्करेषुसमाहितः २१**

तस्यतपस्यतोग्नेःतेजसःसमुद्भूतोग्निःस्वर्गप्रकाशकृतकर्मोपयोगीगार्हपत्यादिः स्वर्गवासीचक्षुरनुग्राहीसूर्यादिः ॥ १७ ॥ वर्गवासीत्येतद्विवृणोति दिवीति ब्रह्माग्निः ब्राह्मणरूपोग्निः ॥ १८ ॥ तत्तमइति यःस्वर्गप्रकाशकृदग्निरुक्तस्तस्यतमोधूमःतदुपलक्षितोधूमादिमार्गःमानुषेषुवर्णाश्रमाभिमानिषुप्रतिष्ठितम् तेजसामग्न्यादीनांसंहर्ता भास्करस्तुततःपूर्वात्वह्नेःसत्तमउत्कृष्टतमोभवतिगार्हपत्याद्याराधकाःपुनरावर्त्तंते सूर्यमंडलांतस्थपुरुषाराधकास्तुनेतिभावः ॥ १९ ॥ भास्करंस्तौतिमर्त्यानामितिसार्धेन योगबलेसातितुतेजआक्षिप्यवर्त्तते अन्यस्यापिब्राह्मणस्यतुसुतरांनेत्यर्थः ॥ २० ॥ तत्तमइति सउक्तगुणोभास्करःतत्पूर्वोक्तंतमःरात्रौनाशयन् रात्रावपिमृतस्यधूमादिगतिंआराधितःसन्नाशयति किंतुसौरीमेवगतिंयोगिनेप्रयच्छतीत्यर्थः तथारात्रौवर्त्तमानस्यदिवापिमृतस्याहोर्चिरादिमार्गोनभविता कीदृशंअहः अद्वयंअद्वयपदप्रापकंउपासकस्यदिवारात्रौमृतस्यार्चिरादिगतिरेवभवतिनान्याएवंकर्मिणोपिदिवापिमृतस्यधूमादिगतिरेवनित्येतिभावः पुष्पमित्रोनामयक्षोभाविकुबेरः ॥ २१ ॥

कायव्यूहेनतिष्ठतेप्रकाशतइत्यर्थः पूर्ववत्तङ् ॥ २२ ॥ जानुभ्यांपतितोभूमावित्यनेननमस्कारप्रियस्यसूर्यस्याराधनंसूचितम् तत्फलंचसूर्यसंयमाद्भुवनज्ञानमितियोगेःसूचितं तदाह ज्योतिःसूर्यमंडलंतत्रयन्नभः मध्येनभइवावभाति तत्रदर्पणोदरसरूपेनियोजितैःनेत्रैरनिमिषैः जगन्निखिलंपश्यति ॥ २३ ॥ एतदेवोपपादयतिद्वाभ्यां नेत्राणीति मध्यंदिनकरेदिनकरमंडलमध्ये सहिदिनकरःपरिवेषइवरश्मिवान्मध्येत्वादर्शतलतुल्यइत्यर्थः तत्रतस्मिंश्चनेत्रांतैः प्राप्तेलब्धेसतिसूर्यप्रभामिश्रितैर्नेत्रैःसहतेप्रसिद्धारश्मयोमंड लमयूखास्ततोभिनिःसृताः सर्वत्रउपर्यधस्तिर्यङ्निर्गताःसंतःतस्यधारणावतः शतशोथसहस्रशोनेत्राणिभवंतिसैतैरनेकैर्नेत्रैः विद्वाद्भिर्ऋत्विग्भिः यज्ञेपावकइवरराजसूर्यमंडलंप्रा प्यमूर्च्छिताःचक्षूरश्मयःसूर्यरश्मिभिरेवसार्द्धंभुवनंव्याप्यप्रकाशयंतीतिभावः ॥ २४ ॥ २५ ॥ सइतिसपुष्यमित्रः भाविकुवेरः विस्फुलिंगवद्भास्वरैःनेत्रांतैर्द्वारभूतैरादि

महेंद्रशिखराद्वारायावंत्योयांतिमेदिनीम् ॥ तावत्स्वरूपमास्थयतिष्ठतेनिखिलाःसमाः २२ जानुभ्यांपतितोभूमौज्योतिर्नभसिपश्यति ॥ समाःसहस्रंनि खिलंनेत्रैरनिमिषैर्जगत् २३ नेत्राणिबहुधातस्यनेत्रांतैराभिनिःसृताः ॥ मध्यंदिनकरेप्राप्तेरश्मिवान्त्सपरिग्रहे २४ तेरश्मयःप्रभानेत्रैःशतशोथसह स्रशः ॥ रराजतेजःसंयोगाद्विद्वद्भिरिवपावकः २५ सविस्फुलिंगैर्नेत्रांतैरादित्यमनुवर्त्तते ॥ कर्मणोंतेयुगांतेवाजगतोबहुरूपिणः २६ बहुतापःपुनर्भूत्वाविे षण्णोवसुधातले ॥ समाराश्मिषुसंपूर्णस्तपस्तेपेसुदारुणम् २७ निगृहीतेंद्रियोभूत्वाअप्सरोभिर्ललामह ॥ मेरोःशिखरमासाद्यकामंकामेननिर्वमन् २८ तपःकामःसयक्षस्तुकुबेरोनरवाहनः ॥ विष्णुरेवतपोध्यक्षस्तेजसोंतेविजृंभति २९ नहिकश्चित्पुमानस्तियएवंतपआचरेत् ॥ त्रिषुलोकेषुराजेंद्रऋतेविष्णुं सनातनम् ३० वासुकिर्बहुशीर्षस्तुनागेंद्रोमौनमास्थितः ॥ तपआचरतेसम्यङ्निधायमनसामनः ३१ शेषःसत्यधृतिर्नागोबलवान्ब्रह्मसंभवः ॥ वृक्ष मारुह्यधर्मात्माअवाक्शीर्षोवलंबते ३२ चिह्वाभिर्लेलिहानाभिर्गात्रजंविषमुत्सृजन् ॥ समाःसहस्रसंपूर्णंनिराहारस्तपोधनः ३३ कालकूटंविषंतद्धिसु महत्समपद्यत ॥ येनलोकोद्यभिग्रस्तोनसुखंविंदतेनृप ३४ सर्वत्रानुगतंतीक्ष्णंभुजंगेषुमहीपते ॥ जंगमंस्थावरंचैवसर्वत्रानुगतंविषम् ३५

त्यंप्राप्नोति कदा कर्मणोंतेदेहारंभककर्मक्षयेधारणाबलेनचिरंजीवीभूत्वाजगतोयुगांतेजगत्प्रलयकालेवा ॥ २६ ॥ बह्विति सःयुगांतेआदित्यंप्राप्नोति रश्मिषुसंपूर्णोनेत्रद्वारा जलतैलन्यायेनकृत्स्नमादित्यमयूखजालंव्याप्यस्थितः अतएवबहुतापः विवृद्धतपःप्रभावः समाःसहस्रंसंपूर्णमितिवापाठः ॥ २७ ॥ फलमाहनिगृहीतेति ललामरलयो रभेदात्ररामरेमे निर्वमन्भोगेनैवकामंउत्सृजन् अतिभोगेनरसाभवंतीतिभावः ॥२८॥ यस्तपःकामोयक्षःसकुवेरोभूदित्यर्थःतेजसोन्तेतपसोंते ॥ २९ ॥ नहीति विष्णोरेवांशः कुबेरइतिभावः ॥ ३० ॥ वासुकिरिति मनोनिधायब्रह्मणीतिशेषः ॥ ३१ ॥ शेषइति वृक्षमारुह्यतत्रपुच्छमासज्यधूमपानंचकारेत्यर्थः ॥ ३२ ॥ एतद्वितामसंतपोलोकोद्वे जकमित्याहत्रिभिः जिह्वाभिरिति ॥ ३३ ॥ ३४ ॥ स्थावरंवत्सनाभसोमलक्षारादि ॥ ३५ ॥

परस्परेति ॥ परस्परप्राणग्राहिक्रोधरूपेणतामसंतपःपरिणमतइतिभावः ॥ ३६ ॥ अथहिंसकविषोत्पत्त्यनंतरंतत्प्रतीकारायअहिंसकंविषघ्नंमंत्रंब्रह्माक्षरंवेदवर्णमयंब्रह्मासृजते स्म ॥ ३७ ॥ तमेवमंत्रमाहश्लोकद्वयेन गरुत्मानिति गरुत्मान्सलिलंमहींचममजीवनभूतंद्वंद्वंपात्वितिशेषः यद्वाब्रह्मप्रणवः अहिंसकमक्षरं अमृतबीबीजमित्यर्थः गरुत्मा नितियथापाठं विततैर्दीर्घैः पक्षैः स्वरैःयुक्तेनवंबीजेनेत्यर्थः नखाग्रैः पंचांगैः तथाचायंप्रयोगः ओम् वां गरुत्मान्हृदयायनमः अंगुष्ठयोः ओम्वींगरुत्मान्शिरसेस्वाहा तर्जन्योः ओम्वूंगरुत्मान्शिखायैवषट् मध्यमयोः ओम्वैंगरुत्मान्कवचायहुं अनामिकयोः ओम्वौंगरुत्मान्नेत्रयायवौषट् कनिष्ठयोः ओम्वःगरुत्मान्अस्त्रायफट् करतलकरपृष्ठयोः एवंहृदयादिमूलमंत्रमाह सलिलंवंबीजं समासहस्रंसमासः समसहस्रंहकारसहस्रंहकारसकाररेफानांकूटंतेवर्णाः संपूर्णंचरमः स्वरः चूलाशिखातस्याअग्रंवषट् पदंतेनअवलं वनशीलेन पल्लवेनचमंत्रः वषडितिपंचाक्षरः अस्यऋषिर्ब्रह्मा गात्रीच्छंदः गरुत्मान्देवता वंबीजं हःशक्तिःलंकीलकं विषनाशनेविनियोगः पर्णभारैरितिध्यानश्लोकः पक्षभा

परस्परविरुद्धेनहिंसायुक्तेनभारत ॥ नाशयत्यात्मनोंगानितेनतीक्ष्णेनभारत ३६ अथब्रह्मामहाभागोभूतानांहितकाम्यया ॥ मंत्रंविसृजतेराजन्ब्रह्माक्षरमहिंसकम् ३७ गरुत्मान्विततैःपक्षैर्नखाग्रैःसलिलंमहीम् ॥ समासहस्रंसंपूर्णंचूलाग्रेणावलंबिना ३८ पर्णभारैश्चविकचैर्विस्तीर्णैर्वसुधातले ॥ रराजवसुधाचैवपर्णैर्बहुविचित्रितैः ३९ येनवृत्तेनजीवेयुःसर्वभूतानिभारत ॥ इहलोकेमनुष्येंद्रदेवलोकेचभारत ॥ द्यौरिवाचितनक्षत्रामहीतलविसर्पिभिः ४० हिमवान्हिमसंपातेभवत्येकंचरोवशी ॥ पुष्करांभसिधर्मात्मामत्स्योल्लिखितमूर्द्धजः ४१ अथसुतलमाक्राम्यपृथिवीप्रांशुदेहिनी ॥ तपश्चरतिधर्मात्माबाहुमुद्यम्यदक्षिणम् ४२ साग्रंवर्षसहस्रंचशतमेकंचसुव्रत ॥ तपश्चरतिसंयोगाद्वायुभक्षोसमाहितः ४३

रैः कृत्स्नांपृथिवींद्यांचव्याप्यस्थितामित्यर्थःविततैः पक्षैः नखाग्रैःअवलंविनाचूलाग्रेणच कीदृशं सांविततैःपक्षैरित्यारभ्यसहस्रंसंपूर्णं बाह्याभ्यंतरज्योतिर्भिः सूर्यवागादिभि तत्प्र काश्यंतद्व्याप्यस्थितामित्यर्थः॥३८॥ एतदेवाह पर्णभारैरिति यः वसुब्रह्मधीयतेतस्मिन्इतिवसुधाशरीरं तस्यतलेगर्भेविकचैर्विकाशिभिर्विस्तीर्णैः सर्वतोविप्रकीर्णैः पर्णभारैः पक्षैरिव पक्षैरिंद्रियैस्तेषांभारैःकार्यसमूहैः रराजयोगिनांदृष्टयेतिभावः यस्यचपर्णैस्तैरेवपक्षैर्बहुविचित्रितैर्विषयभेदात् वसुधाशरीरंचरराज यौतः शरीरेसर्वात्मरूपेणराजतेशरीरंचयेनरा जतेसइत्यर्थः ॥ ३९ ॥ मंत्रजपफलमाहयेनेतियेनमंत्रेणवृत्तेनसृष्टेनआवृत्तेनआवर्तितेन येनचमंत्रेणनिर्विषामहीशरीरंतलविसर्पिभिरिंद्रियाद्यैः आचितनक्षत्रा द्यौरिवरराजेत्यनु षंगः सार्द्धश्लोकोवाक्यम् ॥ ४० ॥ हिमवानिति पुष्करांभसिमायाशवलस्याश्रयभूतेनिर्विशेषचैतन्ये मत्स्योल्लिखितमूर्धजः मत्स्यइवमत्स्यःसंसारनद्यांजागृत्स्वप्नाख्यकूल द्वयसंचारीजीवःतेनउल्लिखितंसंश्लिष्टंमूर्धजंसहस्रारंयेनसः जीवात्मानंसहस्रारेनिधायनिर्विशेषचिन्मात्रत्वंप्राप्तइत्यर्थः ॥ ४१ ॥ अथेतिसुतलंमूलाधारंदक्षिणबाहूद्यमनेनदाना दिकंबहुकृत्वेतिलक्ष्यते तेनविनाचित्तशुद्ध्यभावाद्योगेप्रवृत्त्यनुपपत्तेः ॥ ४२ ॥ संयोगात्समीचीनाद्योगात् ॥ ४३ ॥

एतदेवविवृणोति ब्रह्मणासहयोगोयेनानिमित्तेनसब्रह्मयोगःप्रणवःतस्यसंयोगात् येनप्रणवेनवाच्यवाचकयोरभेदादीश्वरेणब्रह्मयोनिनाब्रह्मोपलब्धिस्थानेन पृथ्वीशरीरंधार्यते ध्रियते ॥ ४४॥ विषयैषिणाजीवरूपेणविषयाभिलाषिणा तस्यवास्तवंरूपमाह योसाविति योविष्णुस्तेनपृथिवीधार्यतइतिपूर्वेणान्वयः ॥४५॥ दिनेविद्यायांनिषण्णःउपविष्टःविदैकलभ्यइत्यर्थः रात्रावविद्यायांस्थिरोयस्मात् धर्मात्मापुण्यादिमान्इदमपिकुतः कामकारकरोलीलावशःलोकवत्तुलीलाकैवल्यमितिन्यायेनभगवतःसृष्टौप्रवृत्तिर्लीलयैवेत्यर्थः ॥ ४६ ॥ तदेवंब्राह्मणंएवंविधंप्रदर्श्यमुक्त्युपायमाह तस्येति तस्यविष्णोःयःसउद्यतः भक्तानुद्धर्त्तुमुद्गतःपाणिरिवपाणिर्धर्मःसपृथिव्यासमोविधारकत्वाद्रात्रौअविद्यायांतपनःप्रकाशकोविवेकप्रदोधर्मएवभवति मंडलंराष्ट्रंविपुलंनभोहार्द्दंब्रह्मभोगापवर्गावपिधर्मप्राप्यावेवेत्यर्थः ॥ ४७ ॥ सइति धर्मःचंद्रस्यमनसोविषयंबंधकंरागादिकषायंशमयामासनाशयतीत्यर्थः ग्रहादीनांक्षुद्रतारातुल्यानांचक्षुरादीनांगतयोगतीः शमयति शमंदमंचधर्मः ॥ ४८ ॥ प्रसंगाद्धर्मस्यमुक्त्युपायत्वमुक्त्वाप्रकृतंपृथिव्यांकृतंयोगमनुसरति तांच्छायामिति

समाधियोगात्संगाद्वाब्रह्मयोगस्यभारत ॥ येनेयंपृथिवीराजन्धार्यतेब्रह्मयोनिना ४४ अनाद्यंतेननित्येनसर्वत्रविषयैषिणा ॥ योसौविष्णुरगाधात्मापर
मात्मानिराकृतिः ४५ दिनेनिषण्णोभवतिरात्रौभवतिवैस्थिरः ॥ सत्यसंधःसधर्मात्माकामकारकरोभवेत् ४६ तस्ययःसोद्यतःपाणिःपृथिव्यांपृथिवीसमः ॥
रात्रौसतपनोभवतिमंडलंविपुलंनभः ४७ सचंद्रविषयंराजञ्छमयामासरुंधति ॥ ग्रहाणांगतयश्चैवताराणांचविशेषतः ४८ तांछायामाक्षिपन्सोमात्स्रवद्भि
र्मंडलेनवै ॥ पृथिव्यांदक्षिणोहस्तोमहायोगीमाहामनाः ४९ सैषाछायाशशीभूताशशिमंडलमाविशत् ॥ अलिंगापृथिवीलिंगादद्भुतादक्षयादिवि ॥
५० अंगांगान्युपगृह्यैवतपश्चरतिनिश्चयात् ॥ प्रोक्ष्यपादौतुसतलौपृथिवीतपसिस्थिता ५१

सपृथिव्यांदक्षिणोहस्तोधर्मः महायोगीमहान्योगीयेनभवतिसतथामहत् ज्ञानोत्पत्तिक्षमंमनोयेनसतथायोगदः चित्तशुद्धिदश्चभवतीत्यर्थः किंकुर्वन्सोमात्स्रवद्भिः पूर्वोक्तैःसप्तधासहस्रधानेकधाच भूतैःमंडलेनचसोमस्यधारणाविषयीकृतेनतांच्छायांरात्रिशब्दोक्तामविद्यामाक्षिपन्शिथिलीकुर्वन् गंगासेवनंचंद्रमंडलेधारणाचक्रमेणाविद्यां नाशयतइत्यर्थः ॥ ४९ ॥ महायोगीमहामनाइत्येतत्संक्षेपेणविवृणोति सैषेति साएषाअविद्यारात्रिरूपाछायाअलिंगानिर्वचनीयत्वेनतत्ववेदकप्रमाणशून्यापृथिवीलिंगात्भूमिविग्रहंप्राप्यशशीभूतावृत्त्यैकाग्र्येणचंद्रीभूतासतीचंद्रमंडलमाविशत् अंतेचंद्रतादात्म्यंप्राप्येत्यर्थः कुत्रदिविआकाशेनतुमानसेपृथिवीलिंगात्कीदृशात् अद्भुतात् अनिर्वाच्यात् कीदृशीछायाअक्षयामिथ्यात्वादेवापचयशून्यमरीचिकाह्रदवत् ॥ ५० ॥ पृथिव्याःशशीभवनप्रकारमाह अंगांगानीति सर्वांगान्युपसंहृत्येत्यर्थः प्रोक्ष्येत्यनेनतीर्थस्नानादिकमपिकृत्वेतिलक्ष्यते ॥ ५१ ॥

एवंजलघनीभावरूपचंद्रीभूता पृथ्वीपुनःसूर्याधारणाभ्यासाद्गंगात्वमापन्नेत्याहचतुर्भिः सूर्यार्चिभिरिति सूर्यार्चिभिःपीयमानात्ज्जलात्महीआक्षिप्यतेतिसंबंधः वह्निनाक पूरशिलेवार्काशुभिःशोष्यमाणापृथ्वीस्वसमीपंनीतासूर्यभावंप्राप्तेत्यर्थः तत्रदृष्टांतः महीमिति युगांतेप्रलयकालेविष्णुतेजसांबुवसनासजलांमहींस्ववशेकृतामिवतांपृथक्नपश्यामइतिभावः ॥ ५२ ॥ रराजेति साभूः सूर्यारश्मिभिर्व्यतिषिक्तामिश्रितासतीमहानदीरूपेणबभूवेत्यर्थः ॥ ५३ ॥ रश्मितेजसाभिसंभवाःअभितएकीभावास्तैर्हेतुभिरादित्येनग्रस्तासतीचक्षुरग्राह्याभूत् ॥ ५४ ॥ सैवार्करश्मिमार्गेणोत्तीर्णाखेजलात्मनाधावतीत्यर्थः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ सैषेति साएशालोकानांधारणेरतापृथ्वी सुतपाशोभनंतपःकुर्वतीपूर्वंचंद्रविहिताचंद्ररूपेणनिष्पन्नापश्चाद्गंगात्वंप्राप्तापुष्करेणपरमात्मनासमाहिताएकीभूतासतीफलंअर्थात्तपसःलेभेसार्वात्म्यंपावनत्वंचप्राप्तवतीत्यर्थः ॥५९॥ एषैवसार्वात्म्यात्वाग्देवतादिभावंप्राप्तेत्याह सरस्वतीत्यादिभिः तदासरस्वतीऋषिभिःशिक्षयाग्रथितान्चतुरोवेदान्व्यक्तैःस्वरैरधीतेइतित्रयाणांश्लोकानांसंबंधः सालोकधात्री

सूर्यार्चिभिःपीयमानादाक्षिप्यतमहीतले ॥ महीमिवांबुवसनांयुगांतेविष्णुतेजसा ५२ रराजसूर्यरश्मिभिर्व्यतिषिक्तामहानदी ॥ स्फटिकेवशुभ्रासैषाकांचनैर्धातुभिर्वृता ५३ आदित्येनसमादत्तारश्मितेजोभिसंभवैः ॥ मंडलांतर्गतादेवीचक्षुषानोपलभ्यते ५४ रश्मिभिःपुनरुत्तीर्णाततोयोगेनधावति ॥ आकाशगंगासंवृत्ताविपुलैरंबुविग्रहैः ५५ शीतच्छायैश्चतरुभिर्लताभिश्चसुगंधिभिः ॥ पद्मखंडैश्चविविधैःशुशुभेदिव्यगंधिभिः ५६ कांचनापीडजघनास्फाटिकांतरमेखला ॥ पद्मरेणुसितापीताचक्रवाकावतंसिका ५७ नीलगर्भसुकेशांतापुष्पसंचयसंकुला ॥ शोभतेविप्रसर्पंतीप्रमदेवविभूषिता ५८ सैषागंगाफलंलेभेपुष्करेणसमाहिता ॥ सुतपाचंद्रविहितालोकानांधारणेरता ५९ सरस्वतीस्वरैर्व्यक्तैरधीतेब्रह्मवादिनी ॥ पृष्ठात्प्रयाताशैलेंद्रेमंदरेमंदगामिनी ६० ऋङ्मयांश्चतुरोवेदान्पादैश्चतुर्भिरावृतान् ॥ यजुर्भिःसामभिश्चैवग्रथितान्छिक्षयातदा ६१

गंगात्वंप्राप्यपुष्करेणसख्यकालेसरस्वतीभूत्वाव्यक्तैःस्वरैःअकारोकारमकारैर्वादिनीसविशेषब्रह्मवदनशीलाअधीतेप्राप्नोतिकिंब्रह्मविराट्सूत्रेशरूपमित्यर्थः कीदृशीसरस्वतीपृष्ठात् मंदरेप्रयातापृष्ठंभ्रूघ्राणमध्यस्थंकारणंब्रह्ममेरुपृष्ठाख्यंसर्वेंद्रियदेवतावासभूतंततोमंदराख्यंअर्वाचीनंस्थूलप्रपंचंवैखरीभावंप्रयातेत्यर्थः यथोक्तंमंत्रशास्त्रेयोगपटले हेमरूपोभ्रुवोर्मध्येमेरुस्तिष्ठतिपर्वतः ॥ तस्याभितोमहीपार्श्वेपंचाशच्छतयोजना ॥ लवणेक्षुसुरासर्पिर्दधिक्षीरजलात्मभिः सिंधुभिःसप्तभिर्द्वीपैस्तत्संख्यैर्द्विगुणोत्तरैः मंदरःपारियात्रश्चेत्यादि ॥ ६० ॥ ऋङ्मयानीति चतुरोवेदानकारोकारमकारार्द्धमात्राख्यान्प्रत्येकंचतुर्भिःपादैरावृतान्अतएवऋङ्मयान् यजुर्भिःसामभिश्चग्रथितान्तुरीयस्यसर्वत्रसंततत्वादनुक्तिः अयमर्थः अकाराद्यर्थाविश्वतैजसप्राज्ञतुरीयाः प्रत्येकंविश्वादिचतुष्टयात्मकास्तापनीयेप्रसिद्धाःतेषामाद्योविश्वविश्वःअंत्यस्तुरीयतुरीयः यंप्रकृत्यतत्रैवोक्तंईश्वरग्रासस्तुरीयतुरीय इतितेनयुक्तमुक्तंऋङ्मयानित्यादि विस्तरभयात्तुनतदिहप्रपंचितम् ॥ ६१ ॥

कीदृशैर्ऋषिर्ऋभिःसुपार्श्वस्यस्थूलशरीराख्यगिरेःपादेएकदेशेभ्रूघ्राणमध्यादौ यद्वा सुपार्श्वस्यगुरोःपादेचरणे परितोदीयतेवित्तंब्रह्माख्यंयेषांतैःपरिदायैःसुपारणैःसुष्ठुशोभनं शिष्यान्पारयंतीतिसुपारणाः परोद्धारसमर्थास्तैः ॥ ६२ ॥ इदंसरस्वत्यास्तत्त्वंस्पष्टतरमपिदुर्ग्रहमित्याह निःस्वनमिति सर्वभूतानिइमंनिःस्वनंनादंब्रह्माख्यंनियमैरपिनशृण्वते यस्मादतींद्रियंतत्सत्त्वेकिंमानमतआह मंदराग्रेस्थूलप्रपंचस्यअग्रेप्रथमंअतिस्थूलत्वात् कृत्स्नंजगत्विसर्पंतंव्याप्नुवंतंयोयंवैखरीशब्दःसएवायंतथापिसूक्ष्मत्वाद्दुर्ग्राह्यइत्यर्थः तथाचश्रुतिः चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणःगुहात्रीणिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंतीति ॥ ६३ ॥ विरामेति विरमयत्यस्मिन्निति विरामस्तुरीयः तस्यापिनियमेनिग्रहेतुरीयाख्येषोडशेप्राप्तेसतिवाक्तुष्णींभूता यतोवाचोनिवर्तंतइतितस्यवागविषयत्वात् अत्रहेतुमाह सत्येति यासत्यवादिनीब्रह्मप्रतिपादिका सानियमात्नैववाचमीरयेत् वाचोदितंतदनृतमितिस्मृतेः तञ्हावचनेनैवप्रोवाचेतितञ्हद्वितीयेवातृतीयेवावचनेनप्रोवाचब्रूमःखलुत्वंतुनविजानास्युपशांतोयमात्मेतिश्रुते

ऋषिभिर्ज्वलनप्रख्यैस्तपसादग्धकिल्बिषैः ॥ सुपार्श्वस्यगिरेःपादेपरिदायैःसुपारणैः ६२ निःस्वनंसर्वभूतानिनियमैश्चनशृण्वते ॥ मंदराग्रेविसर्पंतंजगत्कृत्स्नमतींद्रियम् ६३ विरामनियमेप्राप्तेतूष्णींभूताबभूवह ॥ नवाचमीरयेद्देवीनियमात्सत्यवादिनी ६४ अथभूतानिसर्वाणितूष्णींभूतानिसर्वशः ॥ नशेकुरभिधानार्थंव्याहर्तुंवदनैर्बलात् ६५ विभज्ययोगंमनसासर्वभूतेष्वनुग्रहम् ॥ सरस्वतीतीरयुताव्याजहारमहास्वनम् ६६ सरस्वत्यासमायुक्तांशिक्षांगृह्णंतिदेहिनः ॥ तस्मिन्नेवाथतेसर्वेगानंगायंतिशिक्षया ६७ आदित्यावसवोरुद्रामरुतश्चाश्विभिःसह ॥ जटिलाचीरवसनामुंजमेखलधारिणः ६८ गंधर्वाःकिन्नराश्चैवसनागाःसहचांभसः ॥ तपश्चरंतिसहिताःपुष्करेषुमनीषिणः ६९ अपिकीटपतंगैश्चसहसर्वैःसरीसृपैः ॥ शोषयंतिशरीराणितपसोग्रेणयत्नतः ७०

श्च ॥ ६४ ॥ अथसुप्तौसमाधौवातुर्यंप्राप्यनंतरम् ॥ ६५ ॥ कथंतर्ह्यवचनीयस्यापिप्रतिपत्तिरित्यतआह विभज्येति योगंऐकात्म्यंमनसाउपाधिनाविभज्यबिंबप्रतिबिंबभेदेनद्विधाकृत्वासर्वभूतेष्वज्ञानग्रस्तेष्वनुग्रहंतत्त्वकथनेनकर्तुंसरस्वतीतीरयुतातीरमिवतीरंतटस्थंब्रह्मशाखाचंद्रन्यायेनोपलक्षणीभूतंतेनयुतासतीलक्षणयाचंद्रमिवशुद्धंव्याजहारमहास्वनेतिबहुप्रमाणोवष्टंभमुक्तार्थेसूचयति साक्षाद्वक्तुमसमर्थापिवाक् लक्षणयाब्रह्मप्रतिपादयिष्यत्येवेतिभावः ॥ ६६ ॥ तावतैवलोकशिक्षापिभवतीत्याह सरस्वत्येति तस्मिन्नेवशब्दगम्येशबलेपदेस्थित्वागायंति एतमानंदमयमात्मानुपसंक्रम्यएतत्सामगायन्नास्तेहावु अहमन्नमहमन्नमित्यादि ॥ ६७ ॥ केगायंतितानेवाहादित्याइति ॥ ६८ ॥ अंभासिभवआंभसोवरुणः ॥ ६९ ॥ अपीति कीटादीनामपियोग्यदेहप्राप्त्यातपस्यधिकारोस्तीत्यर्थः ॥ ७० ॥

एवंशरीररूपापृथिवीयोगबलाज्जलादिभावेनपरिणम्य शब्दाद्याकारेणसर्वलोकहितायभवतीत्युक्तं तथाशरीराभिमानीचशब्दस्यैवचरमंरूपंपराख्यमित्युक्तंएवंवाच्यवाचकयोरभेदात्सर्वाद्वैतसिद्धिःमनउपाधिकोभेदव्यवहारइत्यपिसमाहितं तत्रैवंसतिजीवादन्यईश्वरोनास्तीतिप्राप्तं तन्निषेद्धुंईशादन्यएवजीवोनास्तीत्याह विष्णुरिति विष्णुःपरमात्माविष्णुत्वंव्यापकत्वंप्राप्तोपिदेहांतरस्यचतुर्भुजस्यविसृष्टंविशेषणविसर्जनंतद्वानत् व्यापकेनरूपेणपालयितुमशक्यश्चतुर्भुजंविग्रहंयज्ञादिभोक्तारंसर्वभूतनियंतारंच।।श्रितवानित्यर्थः तेनचतान्आदित्यादीन्रक्षति रज्जूरगवत्अधिष्ठानाधिकमध्यस्तंनास्तिआध्यस्तात्तुजीवादधिकोधिष्ठानभूतईश्वरोस्तीतिभावः ॥ ७१ ॥ एतदेवाहपुष्करेइति पुष्करे सर्वकार्यात्मकेजगतिविष्णुरेवनरनारायणादिरूपोभूत्वारमतेतपआदिलीलांकरोतिलोकशिक्षायै ॥ ७२ ॥ लीलामेवाहसोग्निरिति सविष्णुःमनःकल्पितोग्निर्गार्हपत्यादिरूपो भूत्वापृथिव्यभिमानिनंपार्थिवदेहमात्मनइच्छतिपृथिवीवाचरन्वापुरुषः पृथिवीतिव्युत्पत्तेःदेहिनंतापयन्कनकवन्निर्दोषंकुर्वन् अग्निहोत्रादीनांततश्चतेनपृथिव्यापुरुषेणसमंदशयोजनंब्रह्मांडमंडलंधावतितस्मैफलंददातु प्राज्ञेनात्मनासंपरिष्वक्तउत्सर्जन्यातीतिजीवस्यलोकांतरगमनेतस्साहित्यश्रुतेःस्वयमेवकर्मतदंगरूपोभूत्वाजीवेभ्यस्तल्लोकंगतिंप्रयच्छतीत्यर्थः

विष्णुर्विष्णुत्वमापन्नोदेहांतरविसृष्टवान् ॥ संरक्षतिमहायोगीसर्वांस्तान्सहचारिणः ७१ पुष्करेरमतेविष्णुर्विष्णुरेवद्विधाकृतः ॥ दीप्यमानःस्वतेजोभिर्विधू
मइवपावकः ७२ सोग्निर्मनःसमुद्भूतःपृथिवींतापयन्निव ॥ प्रधावतिसमंतेनमंडलंदशयोजनम् ७३ विरराजार्चिभिर्दीप्तैःपृष्ठतश्चावलंबिभिः ॥ विशीर्णपा
र्थिवभवैर्मयूखैरिवदीपितः ७४ तस्याग्नेर्विस्फुलिंगानांनशेकुर्लंघनेरताः ॥ विप्रकीर्णस्यवसुधामर्यादामिवभास्करम् ७५ सोग्निर्दीप्यविभज्यांशून्वि
धूमइवपावकः ॥ ऋत्विग्भिर्ज्वलनप्रख्यैर्विक्रीयतइवाध्वरे ७६ सोग्निर्धूमागतस्तत्रतिष्ठतेविपुलंतदा ॥ यावद्विष्णुःक्रमप्राप्तोनियमस्यसमापनात् ७७
रक्षांकृत्वास्थितंविद्याद्विष्णुर्विष्णुपराक्रमः ॥ भूत्वाशतशरीरांवैनागोबालाहकोभवत् ७८

॥ ७३ ॥ विरराजेति पृष्ठतः चात्सर्वतःविशीर्णोनाशितः पार्थिवैःपृथिव्याअपत्यंपार्थिवैर्देहात्मवादीतस्यभवःसामर्थ्यंयैस्तैः मोहसामर्थ्यमहद्भिरित्यर्थःतैर्मयूखैर्दीपितोग्निर्विरराजेति ॥ ७४ ॥तस्येति अग्नेर्विष्णुरूपस्य रताःविषयासक्ताःयथाभास्करंलंघयितुंनसमर्थाःतथाविस्फुलिंगानांब्रह्मादिरूपाणांलंघनेनशेकुः कीदृशंभास्करं वसुधामर्यादांपृथिव्याःपरिच्छेत्तारं भूचरैर्भुवःपरिच्छेत्तालंघयितुमशक्यइत्यर्थः ॥ ७५ ॥ सोग्निःदीप्यविपुलंप्रकाशंकृत्वाअंशून्रश्मीन्विभज्यद्रव्यदेवतादिरूपेणानेकधाकृत्वास्थितःसन्ऋत्विग्भिर्विक्रीयतेविविधंक्रीयतेसोमक्रयिभिः सोमरूपःसन्क्रीयते ॥७६॥ सोग्निःतत्रअध्वरेतिष्ठतेद्रव्यदेवतादिरूपेणप्रकाशते यावत्नियमस्यक्रतोःसमापनंतावत्धूमागतोधूमप्राप्तोनिर्धूमइत्यर्थःसएवचाग्निः फलरूपेणयावद्विष्णुक्रमंपृथिव्यंतरिक्षद्युपर्यंतंप्राप्तोगतःविष्णुरेवलोकहितार्थंसर्वक्रतुतदंगतत्फलरूपोभूदित्यर्थः७७रक्षामिति तमेवरक्षांकृत्वास्थितंविष्णुंनविद्यात्नकोपिजानाति सतुविष्णुर्व्यापीतादृग्विभवश्चयोगेनशतशरीरोभूत्वाबलाहकेभेवेतिष्ठतीतिबालाहकोनागऐरावतोमेघानांभेत्ताभवत् यज्ञफलंवृष्टिरूपमप्ययमेवेत्यर्थः ७८

तमितितंविष्णुंअग्निंजाठरंअतएवात्मसंसृष्टंदेहांतस्थंअहंवैश्वानरोभूत्वेत्यादिस्मृतेर्महामतिंदिव्यज्ञानप्रदंनागोवारिणाववर्षेत्युत्तरेणसंबंधः ॥ ७९ ॥ दहनंजाठरंवारिणावारिजे नान्नादिनाफलभोक्ताजीवोप्ययमेवेत्यर्थः ॥ ८० ॥ ततइति भोक्तृत्वादेवकर्तृत्वाधिकारीसन्पुष्करेसमष्टिब्रह्मणिआत्मानंव्यष्टयभिमानिनंसंहृत्यप्रविलाप्यतपस्तप्यते बलंवैराग्यं ॥ ८१ ॥ पादगात्राणिपादादीनिगात्राणिपूर्वोक्तरीत्याधोधस्तनमुपर्युपरितनेसंहृत्यमूर्ध्निसहस्रारे अचलंपरमशिवाख्यम् ॥ ८२ ॥ एषइति नोपधानविकल्पितःनिरुपाधिःस्वभावसिद्धइत्यर्थः ॥ ८३ ॥ अत्रापियोगोपसर्गाउपस्थिताःपरिहर्तव्याइत्याह अथेत्यादिना दैत्याःकामादयःहता पूर्वयोगारंभात्प्राक्निर्जिताः अपितत्रसमाधिकालेउ

त मग्निमात्मसंसृष्टंलेलिहानंमहामतिम् ॥ प्रतिप्रवृत्तंतेजोभिर्भूतानांहितकाम्यया ७९ वारिणासुखशीतेनप्राणिनांप्राणवर्द्धनः ॥ न्यषिंचद्दहनंतत्रनागो बालाहकस्तदा ८० ततःसिद्धगणैर्जुष्टःपुष्करेतप्यतेतपः ॥ संहृत्यमनसात्मानंमहायोगीमहाबलः ८१ पादगात्राणिसंहृत्यमनोमूर्ध्निविधारयन् ॥ अ चलंस्थानमासाद्यतूष्णींभूतोबभूवह ८२ एषधर्मोहिधर्माणांनोपधानविकल्पितः ॥ हितःसर्वेषुभूतेषुइहचामुत्रचोभयोः ८३ अथदैत्याहतास्तत्रसमागम्यो द्यतायुधाः ॥ मायाप्राप्तैर्बहुविधैर्नगरैरभिसंवृताः ८४ अग्निंदैत्याःपर्वताग्रैरभिघ्नंतिपरंतप ॥ ज्वलंतंज्वलनप्रख्यामहाकायामहाबलाः ८५ मेधीभूताश्च मायाभिर्वर्षंतिबलदर्पिताः ॥ तस्मिन्नेवाभिसंघातेससंघातंमहाबलम् ८६ तेशैलास्त्वर्चिषादग्धाःशतशोथसहस्रशः ॥ युगांतेप्रभुरादित्यःप्रजाइवदधिक्षति ८७ नशेकुरग्निंदैत्यास्तेमायाभिर्मुखमुद्यतम् ॥ आदित्यइवदीप्यंतेनभःसूर्योदयेयथा ८८ विहितैरुद्यमैःसर्वैर्दैत्याभग्नपराक्रमाः ॥ गंधमादनमासाद्यनिषण्णानगमूर्द्धनि ८९ सचाग्निर्विष्णवेर्लोकैर्विद्युद्भिःसहसंगतः ॥ अंतरिक्षचरान्दैत्यान्निर्दहन्विचरन्दिवि ९० नागोबालाहकश्चैवमेवसंघातमागतः ॥ मुमोचसलिलंभूमौपर्जन्यइववृष्टिमान् ९१ मंत्रैःसंचोदितोनागोद्विजेभ्योवदनोद्गतैः ॥ मुमोचतोयसंघातंमानयन्विप्र जंजनम् ९२ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिअष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥

द्यतानिआयुधानिअस्त्रादीनियैस्ते नगरैः शरीरैः ॥ ८४ ॥ अग्निंयोगिनंदैत्याःपर्वताग्रैः दिव्यवनितादिशरीरैः प्रदर्शितैःज्वलंतंचिन्मात्रंज्वलनप्रख्याःचिन्मात्राएवनतुभौतिकाःमानसाइत्यर्थः ॥ ८५ ॥ मेधीभूताइत्यादयःस्पष्टार्थाःश्लोकाः ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ नागइति एवंयोगोपसर्गान्जित्वास्थितंयोगिनंपूर्वोक्तोयज्ञादिफलरूपोधर्मोवृष्ट्यादिद्वारेणयातीत्यर्थः ॥ ९१ ॥ नागोवृष्ट्यधिष्ठात्रीदेवताद्विजेभ्योवदनद्वाराउक्तैर्मंत्रैःप्रेरितःसन्विप्रजंजनंब्राह्मणसंततिभूतलोकं विगतप्रजंवा नैष्ठिकम् ॥ ९२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांअष्टाविंशतितमोऽध्यायः ॥ २८ ॥

योगविघ्नविघातायकर्माण्येवाचरेदिति त्रयोविंशेपुराकल्पमुखेनैतत्प्रसाध्यते ॥ १ ॥ ततः अचलंस्थानमासाद्यतूष्णींभूतोवभूवहेतिप्राप्तप्राप्यस्ययोगिनस्तूष्णींभावउक्तस्तेनप्र योजनाभावात्सर्वप्रवृत्तिशून्योयोगीस्यादितिमन्वानोजनमेजयउवाच संयुज्येति तपसायोगेन ॥१॥ प्रारब्धकर्मवेगेनतूष्णींभावोह्यथापियोगीपूर्ववासनाकर्मण्येवयज्ञादीनिक रोतीतिपुरासरूपार्थवादमुखेनदर्शयन्वैशंपायनउवाच अथेति दीक्षामपरिच्छेदप्राप्तिलक्षणांरूपांतरापत्तिम् विष्णुमयाः ब्रह्ममयाः अग्निमित्युपलक्षणं सर्वमपिद्रव्यंयाज्ञियंपुष्क राख्यंजगत्कारणमयमेवेतिसूचयतिब्रह्मार्पणंब्रह्महविरितिगीतोक्तदृष्ट्यासिद्धाः कर्माणिचक्रुरित्यर्थः जुहुवुरित्यग्रिमेणसंबंधः ॥ २ ॥ मंत्रैःप्रकाशितंप्रयोगकालेपिस्मारितंपूतंच

॥ जनमेजयउवाच ॥ संयुज्यतपसादेवाःकिमकुर्वंस्ततःपरम् ॥ नहिताद्दृश्यतेलोकेतपसायन्नलभ्यते १ ॥ वैशंपायनउवाच ॥ अथदीक्षांसमास्थायसर्वे विष्णुमयागणाः ॥ पुष्करादग्निमुद्धृत्यप्रणीयचयथाविधि २ जुहुवुर्मंत्रविधिनाब्राह्मणामंत्रचोदिताः ॥ हविषामंत्रपूतेनयथावैविधिरेवच ३ सचाग्निर्विधि वत्तत्रवर्द्धतेब्रह्मतेजसा ॥ तेजोभिर्बहुलीभूतःप्रभुःपुरुषविग्रहः ४ ब्रह्मदंडइतिख्यातोवपुषानिर्दहन्निव ॥ दिव्यरूपप्रहरणोह्यसिचर्मधनुर्धरः ५ सगदो लांगलीचक्रीशरीचर्मीपरश्वधी ॥ शूलीवज्रीखड्गपाणिःशक्तिमान्वरकार्मुकः ६ विष्णुश्चक्रधरःखड्गीमुसलीलांगलायुधः ॥ नरोलांगलमालंब्यमुसलंचम हाबलः ७ वज्रमिंद्रस्तपोयोगाच्छतपर्वाणमाक्षिपत् ॥ रुद्रःशूलंपिनाकंचमनसाधारयद्भुवि ८ मृत्युर्दंडंपाशमापःकालःशक्तिमगृह्णत ॥ जग्राहपरशुंत्वष्टा कुबेरश्चपरश्वधम् ९ निर्विकारैःसमायुक्ताःशतशोथसहस्रशः ॥ विश्वकर्माचत्वष्टाचचक्रातेह्यायुधंबहु १० इंद्रायाग्निरथंप्रादात्सूर्यायचप्रतापिने ॥ परमा त्माददौकृष्णोरुद्रायचमहात्मने ११ छंदोभिरेवत्वष्टाचसचकाराथवाहिनीम् ॥ विश्वकर्माविमानानिचकारबहुभिःक्रमैः १२ शरीरांशंसमुद्धृत्यविष्णुः सत्यपराक्रमः ॥ पुष्करात्पर्वणिघनात्पृतनार्थंप्रवर्तयन् १३ द्यांचैवसर्वऋक्षाणांवाचावैसमकल्पयत् ॥ ययासपूज्यःसंग्रामेशत्रून्निर्बिभिदेरणे १४ सतंदं डंसमुच्चितंनिर्विकारंसमाहितं ॥ ब्रह्माजग्राहविधिनाअंतर्धानगतःप्रभुः १५

॥ ३ ॥ सचेतिचतुर्भिरष्टयोगध्यानं ॥ ४ ॥ असिचर्मणीखड्गखेटकेधनुश्चधारयन् ॥ ५ ॥ ६ ॥ अस्यादिखड्गांतैःषोडशभिरायुधैः षोडशभुजोनारायणः लांगलमुस लायुधोनरः ॥ ७ ॥ योगबलप्राप्तानिवज्रादीनींद्रादिभिरुत्कर्षकारणान्याहवज्रमिति ॥ ८ ॥ आपःवरुणः ॥ ९ ॥ विश्वकर्मात्वष्टुरेवमूर्तिभेदः ॥ १० ॥ विष्णुरपिइंद्राय सूर्यायरुद्रायचरथंप्रादात् सर्वयोगप्रभातकल्पितम् ॥ ११ ॥ छंदोभिर्वेदैःप्रदर्शितरीत्या ॥ १२ ॥ घनादव्ययात्पुष्कराख्यात्शरीरांशंसमुद्धृत्यपृतनाशब्दार्थसेनां ॥ १३ ॥ सूर्यस्यऋक्षाणांचस्थित्यैद्यामकल्पयत् ययादिवापूज्यःइंद्रः ॥ १४ ॥ सइतिप्रसिद्धोब्रह्मरूपोविष्णुःतंअसुरेषुइंद्रेणसमाहितंनिपातितंदंडंउचितंनिर्विकारंयथास्यात्तथाजग्राह अनुमेनेतान्प्रतिअंतर्धानंचगतवान् ॥ १५ ॥

॥ १४ ॥ दितेःपुत्राआपितपसाशिक्षयाचयुक्ताअपिविकारैःकामादिभिः ॥ १७ ॥ अप्रधृष्याःसमपद्यतसंपन्नाःएकत्वमार्षम् ॥ १८ ॥ तोदितेःपुत्राःगुहाःगुह्यानिसूत्राधात्मकानि
स्वरूपाणिविहायरथेसभांडोपस्करेइतिभोग्यवस्तुसहितमध्येनिषण्णाःसंतः मंदरस्यस्थूलकार्यस्यपादेएकदेशेविचेरुः पृथ्व्याउर्ध्वगतिंनलेभिरेइत्यर्थः ॥ १९ ॥ तमसःका
र्यंआसुरंबलंसंहृत्यविष्णुरेवबलिष्टइत्यर्थः आसुरंकर्मक्षययुक्तमितिभावः ॥ २० ॥ भूयइतिआसेदुरसुराः ब्राह्मणैःसुरैश्चसार्द्धंतदपितमःकार्यत्वान्नश्वरमितिसात्विकएवधर्मोमुमु
क्षुभिःआदृतव्यइतिभावः ॥ २१ ॥ इतिहरिवंशेभविष्यपर्वणिटीकायामेकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ प्रापुर्योगफलंमोक्षंसात्विकानतुतामसाः ॥ तुल्यश्रमा

स्वैःप्रभावैश्चविधिनासोऽस्त्रग्रामंचतुर्विधम् ॥ ऐंद्रमाग्नेयवायव्यंरौद्रंरौद्रेणवर्चसा १६ एभिर्विकारैःसंयुक्तादितेःपुत्रामहाबलाः ॥ तपसाशिक्षयाचैवस्वास्त्रैः
प्रहरणैरपि १७ बलेनचतुरंगेणवीर्येणसुसमाहिताः ॥ अप्रधृष्यारणेसर्वेसमपद्यतवैतदा १८ तेविहायगुहामध्येसभांडोपस्करेरथे ॥ मंदरस्यगिरेःपादे
विचेरुर्वसुधातले १९ चतुरंगंबलंसर्वंसंहृत्यतमसःप्रभुः ॥ विष्णुरेवमहायोगःचचारवसुधातले २० भूयोऽन्यत्तपआसेदुश्चरंतोब्राह्मणैःसह ॥ तैश्चस
र्वैःसुरगणैश्चर्मचीरनिवासिभिः २१ ॥ ॥ इतिश्रीह०खि०भविष्यपर्वणिएकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ छ ॥ जनमेजयउवाच ॥ ॥ ब्रह्मन्नखि
लेवर्तमानेनिर्मर्यादेमहाग्रहे ॥ अविनाशेचभूतानांकथमासन्प्रजास्तदा १ वैशंपायनउवाच ॥ अभ्यषिंचत्पृथुंवैन्यंपुराराज्येप्रजापतिः ॥ राज्यायऋषि
भिःसार्द्धंप्रजाधर्मपरायणः २ एषनोपरमोराजासानुरागादजायत ॥ त्रेतायांसंप्रवृत्तायामन्योन्यमनुजल्पिरे ३ एषनोवृत्तिदाताचविप्राणांचप्रवर्तिता ॥
निर्मातासर्वभूतानांसत्यप्राप्तेनकर्मणा ४ एतस्मिन्नंतरेदेवागंधमादनसानुषु ॥ बहुभिर्नियमैःश्रांतानिषण्णागिरिसानुषु ५ अथगंधंसमासाद्यसमंताद्देवमा
नवाः ॥ माधवेसमयंप्राप्तेतेनगंधेनदर्पिताः ६ पुष्पमात्रस्ययद्वीर्यंमारुतेनविसर्पितम् ॥ मनोग्राहिसुखंसर्वंपार्थिवंगंधमुत्तमम् ७ तेदैत्यास्तेनगंधेनकिं
चिद्विस्मयमागताः ॥ प्रसन्नमनसोभूत्वापरंसौख्यमुपागताः ८

अपीत्येतच्चतुर्विंशोभिधीयते ॥ १ ॥ मनःसिंधुर्मतिःशैलःशमकामौसुरासुरौ ॥ अभ्यासोमंथनंमुक्तिःसुधाद्यात्राहरूपकैः ॥ २ ॥ एवंतामसस्यजनस्यपुनःपुनःसंसारप्राप्तिंश्रुत्वा
दययातेषांगतिंजिज्ञासमानोजनमेजयउवाच ब्रह्मन्निति खिलेअयःशंकुतुल्येमहाग्रहेमहत्यज्ञानेहृदयशल्येसति अविनाशेनिर्मोक्षेचकथंदुःखपरंपरामग्नाआसन्निति ॥ १ ॥
प्रश्नस्योत्तरंराज्ञास्वधर्मेस्थापिताःप्रजाःक्रमेणचित्तशुद्धिंप्राप्यमुच्यंतइतिविविक्षुर्वैशंपायनउवाच अभ्यषिंचत्राज्येराज्यभावेराज्यायराजकर्मणेप्रजानांधर्मएवपालनीयतयाप
रायणंयस्यसतथा ॥ २ ॥ ३ ॥ सत्यप्राप्तेनपरमेश्वरेर्पितेनईश्वरानुग्रहेणेत्यर्थः ॥ ४ ॥ स्वधर्मस्थास्वपिप्रजासुयेविष्णुभक्तास्तएवमुक्तिभाजोनान्येयोगशतेनापीत्यमृतमंथना
ख्यायिकामुखेनाह एतस्मिन्नित्यादिना ॥ ५ ॥ गंधंकटकूपेक्षुत्पिपासानिवृत्तिरितिकिंचित्क्षुद्रधारणाफलं माधवेवसंते ॥ ६ ॥ ७ ॥ ८ ॥

॥ ९ ॥ कर्मबुद्धयः धारणोत्थानिज्ञानानिशुभानिमुक्त्यर्थानिअशुभानिभोगार्थाः बुद्धिप्राणेनबुद्धिबलेन ॥ १० ॥ तस्मादिति यस्मात्योगफलमतिश्रेष्ठमित्यनुमानेननिश्चितंत स्मात्पयोअमृतसाधनंज्ञानंमध्येसमुद्रतुल्येदेहाभ्यंतरेओषधोःओषधीसंभवंदेहंनिक्षिप्यमंदरेणविवेकेनसाधयामहे ॥ ११ ॥ एतदेवविशदयति समुद्रमिति सोमजंजलंअमृतंतच्चामृ तंपीत्वासम्यगास्वाद्यकामरूपिणोभविष्यामइतिशेषः सहिताःसर्वेप्रस्थिताअविद्यानाशार्थंउद्युक्ताः ॥ १२ ॥ विष्णुरिति आराधितोविष्णुरेवास्माकंअग्रणीर्योगमार्गेततोभविष्यातिता वताचदिवंवसुधांचभोक्ष्यामःशत्रुभिःकामादिभिःसहस्थिताः अपिसत्यसंकल्पाःसत्यकामाश्चभविष्यामइत्यर्थः ॥ १३ ॥ मूलंपित्रादयःपत्रंभार्यादयःशाखाःभ्रात्रादयःपुष्पादिकं अपत्यादितैःसहिताःसर्वेग्रहान्ऐकात्म्यग्रहंसुधामोक्षंचगृह्णीमः वसुधातलेइत्यनेनगत्यपेक्षतांवारयति अत्रैवेत्यर्थः तथाचश्रुतिः नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेब्रह्मैवसन्ब्र

ऊचुश्चसहिताःसर्वेतेनगंधेनदर्पिताः ॥ पुष्पमात्रस्ययद्वीर्यंकिंतस्यफलतोभवेत् ९ अनुमानेनविज्ञेयाविविधाःकर्मबुद्धयः ॥ शुभाश्चैवाशुभाश्चैवबुद्धि प्राणेनदेहिनाम् १० तस्माद्वयंपयोमध्येऔषध्योनिर्मथामहे ॥ मंदरेणविशालेनबलिनाकामरूपिणा ११ समुद्रमभिसंरभ्यान्मथ्नीमःसोमजंजलम् ॥ पीत्वाचसहिताःसर्वेप्रस्थिताःकामरूपिणः १२ विष्णुरेवाग्रणीस्तेषांभविष्यतिमहाबलः ॥ दिवंचवसुधांचैवभोक्ष्यामःसहशत्रुभिः १३ समूलपत्रशा खाश्चसपुष्पाःफलशालिनः ॥ सर्वेग्रहांश्चगृह्णीमःसुधांचवसुधातले १४ उद्धृत्यगिरिपादेभ्योगंधमादनसानुजान् ॥ प्रभाष्यवचनंदैत्यामंदरस्यप्रकंपने १५ समुद्धर्तुंप्रधावंतःकंपयंतिस्ममेदिनीम् ॥ निश्चयेनमहावीर्याबाहुभिःपरिणाहिभिः १६ नशक्नुस्तेसमुद्धर्तुंशैलेंद्रंदनुवंशजाः ॥ निपेतुर्जानुभिर्धृष्टाविपु लेपर्वतांतरे १७ समाधायात्मनात्मानंतपसादग्धकिल्बिषाः ॥ पितामहंप्रपद्यंतेशिरोभिःकामरूपिभिः १८ तेषांमनोभिलषितंब्रह्मासर्वत्रगोवशी ॥ ज्ञात्वाबहुविधैर्वाक्यैर्व्याजहारसरस्वतीम् १९ अशरीरांशरीरस्थःपरयावर्णसंपदा ॥ सर्वलोकपतिर्ब्रह्मालोकानांहितकाम्यया २०

ह्माप्येतीति ॥ १४ ॥ देवाःमंदरस्यप्रकंपनेवचनंवचःप्रभाष्यसंकेतंकृत्वागिरिपादेभ्यःगंमादनसानुजान्उद्धृत्येतियोजना गुरुशिष्यसंकेतपूर्वकंदेहस्यप्रविलापनेविषयेउपदेशंप्राप्य ब्रह्मांडांतर्गततत्तद्विषयेषुनिमग्नावासनाश्चोद्धृत्य ॥ १५ ॥ समुद्धर्तुंमंदररूपंदेहमुन्मूलयितुंपरिणाहिभिर्विशालैर्बाहुभिरिवबाहुभिः प्राणायामाद्यैः प्रधावंतोमेदिनींकृत्स्नंब्रह्मांडं कंपयंतितदपिप्रविलापयितुंयतंतेइत्यर्थः कथापक्षेऋजुरेवार्थः ॥ १६ ॥ नशक्नुःनशेकुः प्रथमप्रयोगे हतोद्यमाबभूवुरित्यर्थः ॥ १७ ॥ समाधायेतिपितामहंईश्वरंशिरोभिःप्रपद्यंते शरणंगताइत्यर्थः कामरूपिभिर्दिव्यैः तथाचयोगोईश्वरंप्रणिधानफलमामनंतिततःप्रत्यक्चेतनाधिगमोप्यंतरायाभावश्चेति ॥ १८ ॥ तेषामितियुग्मं अशरीरांसरस्वतींप्रणवरूपां नतुदेवतां शरीरस्थोंतर्यामीपरयावैखर्यादित्रिकात्परयानिर्गुणयासहबहुविधैःओमित्येतक्षरमिदंसर्वमित्याद्यैकात्म्यप्रतिपादकैर्वाक्यैर्व्याजहारउपदिदेश ॥ १९ ॥ २० ॥

व्याहृतमेवाह आदित्यैरितित्रिभिः आदित्याद्यैः प्राणाद्यभिमानिभिः ॥ २१ ॥ समेत्यमनसिएकीभावंप्राप्यगिरेःशरीराख्यउद्धरितुंः उद्धर्त्तुंमूलतउच्छेत्तुंशक्यः धातुभिर्वातादिभिः समंसर्वत्ररंजितः ॥ २२ ॥ तेसुरासुरगणाः सर्वेमनुष्यादयोपिगिरिंसमुत्पाट्यहिमवतोरसंसारं देहिनांभोग्यंश्रेयस्त्वेनाभिमतं वोरुधोवीरुद्रूपेणवासनासंततिरूपेण पश्यंतिदेहासंगशून्याः हार्दाकाशे कोदृश्योवीरुधः हस्तारूढाःकरतलामलकवदित्यर्थः ॥ २३ ॥ एतदिति दैतेयाअप्येतच्छ्रुत्वाश्रुतार्थानुष्ठानेप्रवृत्ताइतिभावः ॥ २४ ॥ तथाभूताश्चयेयत्रभ्रूघ्राणमध्यादौचक्रेपुष्करस्यकृत्स्नकार्यस्यविन्यस्तंविन्यासोवस्थानंतत्रस्थस्यलवणांभसआक्रोडभूतावभूवुः वैराग्याभावात् पूर्वोक्तैर्विघ्नैरभिभूतत्वात्ः सलिलेनइत स्ततोदोलायमानावभूवुरित्यर्थः ॥ २५ ॥ सुरासुरेति लवणांभसःजलंअमृतंसमपद्यतइतिद्वयोर्योजना सहिताःभूत्वेतिशेषः पुष्करंसनालविलसत्कमलसादृश्यान्मंथनदंडःपुष्क रंतत्स्थानेदेहंकृत्वामनःसमुद्रेवासनौषधीः संहृत्य तत्रतंदेहंनिक्षिप्यवासुकिंसर्पाकारांकुंडलिनींनेत्रंयोगमार्गनयनक्षमंसहायंकृत्वाकुंडलिनोमूलंबंधेनोद्बोध्येत्यर्थः ॥ २६ ॥

आदित्यैर्वसुभिश्चैवरुद्रैश्चसमरुद्गणैः ॥ देवैर्यक्षैःसगंधर्वैःकिन्नरैश्चप्रगायिभिः २१ समेत्यसहितैःसर्वैःशक्यउद्धरितुंगिरिः ॥ अमृतार्थेमहातेजाधातुभिःसम रंजितः २२ सुरासुरगणाःसर्वेसमुत्पाव्यमहागिरिम् ॥ हस्तारूढाःप्रपश्यंतिवीरुधोहिमवद्रसम् २३ एतच्छ्रुत्वाचवचनंसर्वेषामंतिकेतदा ॥ दैतेयाबाहु बलिनोमनोभिर्वाग्भिरेवच २४ विक्रीडभूताबहुधाबभूवुर्लवणांभसः ॥ यत्रपुष्करविन्यस्तःसहितैर्देवदानवैः २५ सुरासुरगणाःसर्वेसहितालवणांभसः ॥ मंदरंपुष्करंकृत्वानेत्रंवासुकिमेवच २६ समाःसहस्रंमथितंजलमौषधिभिःसह ॥ क्षीरभूतंसमायोगादमृतंसमपद्यत २७ तज्जह्रुरसुराःपूर्वमाक्रांतालोभ मन्युना ॥ धन्वंतरिस्तथामद्यंश्रीर्देवीकौस्तुभोमणिः २८ शशांकोविमलश्चापिसमुत्तस्थुःसमंततः ॥ उच्चैःश्रवाहयोरम्यःपीयूषंतदनंतरम् २९ पश्चाद्देवा स्तदादातुंउद्यताराहुमब्रुवन् ॥ नतुकेचित्पिबंतिस्मदैत्यानैवचदानवाः ३०

एतावत्कृत्वापिसहस्रंसमाइत्यनेकजन्मसाध्यत्वंमथनस्यदर्शितं अथवा वासुकिवत्श्वेतंशुद्धसत्त्वमयंधर्मंवासहायंकृत्वामथितंजलंमनःक्षीरीभूतंविशुद्धसत्त्वमयंभूतंसत्मायाया याऐकात्म्यवृत्तेर्योगादमृतंशुद्धचिन्मयमुक्तरूपंबभूवेत्यर्थः ॥ २७ ॥ तदित्यर्द्धं असुरायोगोपसर्गाः जितोपसर्गस्यषट्योगसिद्धयोभवंतीत्याह धन्वंतरीति अत्रधन्वंतरिशब्देन लघुत्वमारोग्यमलोलुपत्वंवर्णप्रसादंस्वरसौष्ठवंचेतिस्मृतिप्रसिद्धालघुत्वादयोलक्ष्यंते मद्यशब्देनमधुमत्यादयोयोगिचित्तोन्मादकाःभूमयोयोगशास्त्रप्रसिद्धालक्ष्यंते श्रीर्देवीति ऋगादिरूपवेदविद्यास्फूर्तिर्लक्ष्यते कौस्तुभवद्देहस्यभास्वरत्वम् ॥ २८ ॥ शशांकवदद्वेष्टृत्वादिगुणैरितरह्लादकत्वं उच्चैःश्रवइतिदूरश्रवणंदूरेदर्शनादिमत्त्वंचलक्ष्यतेपारिजाता दिनाप्यन्यत्रदृष्टेनशुभगंधादिमत्त्वंद्रष्टव्यं तेषामनंतरंपीयूषंनिर्विशेषकैवल्यंएतेषुमद्यमसुरान्प्रतिगतंअन्यत्सुरान्प्रतीतिपुराणांतरात्द्रष्टव्यम् ॥ २९ ॥ अथराहोराख्यायिकामुखे नकपटविद्यार्थिनोविनाशमाह पश्चादिति कथापक्षेतुस्पष्टएवार्थः ॥ राहुमब्रुवन्राहुमुद्दिश्यपरस्परंविचारितवंतः नात्विति अयंतुपिबतीतिभावः ॥ ३० ॥

राहोःकंशिरइत्यर्थः अनिर्मुक्तइतिसार्द्धश्लोकएकवाक्यं ॥ ३१ ॥ तदिति तदमृतंज्ञानं पितृभिर्देवैर्मुनिभिश्चकारादन्यैश्चगंधर्वादिभिरधिकारिभिःअनिर्मुक्तंनित्यसेवितंइंद्रह
स्तात्प्रतर्दनादिशिष्योपशिष्यपरंपरयापृथिवीजहार पृथिव्यांमानुषाअपितद्ग्रहणेधिकारिणइत्यर्थः अंकगताशिष्यत्वंप्राप्ता ब्रह्मवाक्यंवेदवाक्यंतत्त्वमस्यादितेनचोदिताप्रबोधि
ता ॥ ३२ ॥ इतिश्रीमहा०खि०हरिवंशेभविष्यपर्वणिटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ ॥ पंचविंशेकूटशिष्योप्येतिकालेनसाधुताम् ॥ इतितद्दर्शयन्नाहहिरण्यक
शिपोःक्रतुम् ॥ १ ॥ लक्ष्मीवान्माद्यतीत्यस्यवित्तंहरतिकेशवः ॥ दययैवेतिवक्तुंचतद्विभ्रंशोपिवर्ण्यते ॥ २ ॥ निहतेइति मोक्षान्निरस्तादैत्याःकिंचक्रुरितिप्रश्नस्यराज्यंचक्रुरित्युक्ते

चिच्छेदाथहरिःसंख्येराहोश्चक्रेणकंतदा ॥ अनिर्मुक्तंपितृगणैर्मुनिभिश्चसनातनैः ३१ तदिंद्रहस्तादमृतंजहारपृथिवीस्वयम् ॥ जगामांकगतादेवीब्रह्मवा
क्यप्रचोदिता ३२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणित्रिंशोऽध्यायः ३० ॥ जनमेजयउवाच ॥ निहतेदैत्यसंघातेविष्णोश्चातिपराक्रमे
दैतेयादानवेयाश्चकिमिच्छंतिपराक्रमात् १ ॥ वैशंपायनउवाच ॥ दानवाराज्यमिच्छंतिपराक्रम्यमहाबलाः ॥ तपइच्छंतिसहितादेवाःसत्यपराक्रमाः २
॥ जनमेजयउवाच ॥ कथंकालस्यमहतोहिरण्यकशिपुस्तदा ॥ यजतेब्रह्मणःक्षेत्रेप्राप्तैश्वर्यःसकामदः ३ वैशंपायनउवाच ॥ यजेद्बहुसुवर्णेनराजसूयेनपा
र्थिवः ॥ क्रतुनादानवश्रेष्ठोवसुधायांमहाफलः ४ गंगायमुनयोर्मध्येयदभूद्विपुलंतपः ॥ समेयुस्तत्रसहितायजमानेमहासुरे ५ ब्राह्मणावेदविद्वांसो
महाव्रतपरायणाः ॥ यतयश्चापरेसिद्धायोगधर्मेणभारत ६ मुनयोवालखिल्याश्चधन्याधर्मेणशोभिताः ॥ बहवोहिद्विजामुख्यानित्याधर्मपरायणाः ७
ऋषयश्चमहाभागाविप्रैःपूज्याःसहस्रशः ॥ विपुलैरत्रविभवैर्ह्रियमाणैस्ततस्ततः ८ शुक्रस्तुसहपुत्रेणदैत्यंयाजयतेप्रभुः ॥ हिरण्यकशिपुंमध्येगणानांप्रभवः
प्रभुः ९ हिरण्यकशिपुश्चैवव्याजहारसरस्वतीम् ॥ कामाद्वरंददातीतितद्वैसंप्रतिपद्यताम् १० विष्णुर्वामनरूपेणभिक्षांतांप्रतिगृह्णति ॥ हिरण्यकशिपोर्ह
स्ताद्विपदेपदमेवच ११ ततःक्रमितुमारेभेविष्णुःसत्यपराक्रमः ॥ त्रीँल्लोकान्मुनिभिःक्रांतैर्दिव्यंवपुरधारयन् १२

तेषांपुनर्मोक्षोस्तिनवेतिपृष्टेउत्तरं तेषामपियोगोस्तीति ॥ १ ॥ २ ॥ ब्रह्मक्षेत्रंभ्रूघ्राणमध्यं तदेव गंगायमुनयोर्मध्यं ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ हिरण्यकशिपुरितिआ
ख्यायिकायाअविवक्षितत्वात्तेनशब्देनबलिरेवग्राह्यः तस्यहियस्यानुग्रहमिच्छामितस्यवित्तंहराम्यहमितिप्रतिजानताहरिणाकृपयाऐश्वर्यभ्रंशःकृतःसःअर्थएवात्रविवक्षितःताम
सैरप्याराधितईश्वरःकालेनैश्वर्यपाशंछिनत्तीतिहरिभक्त्युत्कर्षःप्रदृश्यते व्याजहारवामनंप्रतीत्यपकृष्यते ॥ १० ॥ प्रतिगृण्हतिप्रतिगृण्हातिद्वेपदेपदंचेतित्रीणिपदानि ॥ ११ ॥
मुनिभिःप्रार्थ्यानितिशेषः क्रांतैःक्रमणैःपदविन्यासैःक्रमितुमारेभेक्रांतवानित्यर्थः ॥ १२ ॥

एवमैश्वर्यमदेविष्णुनानाशितेदरिद्रस्यइतरेमदाः स्वयमेवनष्टाभवंति ततोबलिंऐंद्रेपदेतुरीयतुरीयेप्रत्यगात्मनिकालांतरेदेवाअभ्यषिंचन्इत्याख्यायिकामनुसृत्यदर्शयति हृतराज्ये
त्यादिना॥१३॥१४॥लोकानामधिपेआधिपत्येसुरादेवाः बलिमितिशेषः ॥ १५ ॥ सबलिःतान्सुरान् ब्रह्मावेदस्तदमृतंबलिनादत्तंहविःतेनबलिकृतेनसंवृतइंद्रःसार्द्धश्लोकः
॥ १६ ॥ सत्यसंकल्पेनब्रह्मविदाबलिनाब्रह्मबुद्ध्याभाविताद्देवादयस्तादृशाएवभवंतीतिब्रह्मवित्सर्वोपकारीतिततइत्यादिश्लोकद्वयार्थः ॥ १७ ॥ १८ ॥ सर्वैरिति प्रकर्षेण
हरंतिविषयान्प्रतिइतिप्रहरणानिइंद्रियाणिवह्निसंभवैर्ब्रह्मतः उत्पन्नैश्चिन्मयैरित्यर्थः मंदराग्रेदेहशैलस्याग्रेस्थितैःसंयुक्ताःत्रयोलोकाःपरांनिर्वृतिंसुखंप्राप्ताइतिपूर्वेणान्वयः॥१९॥
इतिश्रीमहाभारतेहरिवंशेभाविष्यपर्वणिटीकायांएकत्रिंशोऽध्यायः ॥ ३१ ॥ षड्विंशेद्रोहिणंदक्षंशंभुर्दंडेनचसत्पथे॥न्यवेशयत्किियंतस्तुबलौभक्तेप्यनुग्रहः॥ १ ॥ ईश्वरद्रोहिणा

हृतराज्याश्चदैतेयाःपातालविवरंययुः ॥ ससैन्यगणसंबद्धाःसप्रासाःसासितोमराः १३ सयंत्रलगुडाश्चैवसपताकारथध्वजाः ॥ सचर्मवर्मकोशाश्वसायु
धाःसपरश्वधाः १४ तथेंद्रविष्णुसहिताःसद्यस्तेभ्युत्थितागणाः ॥ अभ्यषिंचत्प्रमुदितालोकानामधिपेसुराः १५ सताम्त्स्वधामृतेनाशुपितृत्वेसमतर्प
यत् ॥ ब्रह्मातदमृतंदिव्यंमहेंद्रायप्रयच्छति॥ अक्षयश्चाव्ययश्चैवसंवृतस्तेनकर्मणा १६ ततःशंखमुपाध्मासीद्द्विषतांलोमहर्षणम् ॥ पितामहकरोद्भूतंजनि
तृप्रथमेपदे १७ तंश्रुत्वाशंखशब्दंतुत्रयोलोकाःसमाहिताः॥ निर्वृत्तिपरमांप्राप्ताइंद्रनाथमवाप्यच १८ सर्वैःप्रहरणैश्चैवसंयुक्तावह्निसंभवैः ॥ मंदराग्रेषुवि
हितैर्ज्वलद्भिरिवपावकैः १९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकत्रिंशोऽध्यायः ३१ ॥ वैशंपायनउवाच ॥ ततोमहतिवृत्तांतेस्थि
तेराज्येमहोदये ॥ देवतानांमनुष्याणांसहवासोभवत्तदा १ एकतःसमधीयंतिसहिताःप्ररुदंतिच ॥ स्वयंचभागंगृह्णंतियज्ञकर्मणिभारत २ प्राचेतसं
ततोदक्षंदीक्षित्वावैबृहस्पतिः ॥ वाजिमेधायभगवानृषिभिःपरिवारितः ३ तस्मिन्मातामहेयज्ञेदक्षस्याविदितात्मनः ॥ शामित्रमकरोद्रुद्रोभागार्थेसहनं
दिना ४ रुद्रस्यैवहितद्रूपंद्विधाभूतंतदीप्सया ॥ जातःपरमधर्मात्मानंदीपुरुषविग्रहः ५ तेनयोगेनराजेंद्रयत्तद्ब्रह्मसनातनम् ॥ विहितंसत्यवचनैस्तेनैवप
रमात्मना ६ स्वरूपैश्चाप्यरूपैश्चविरूपाक्षैर्घटोदरैः ॥ ऊर्ध्वनेत्रैर्महाकायैर्विकटैर्वामनैस्तथा ७

प्येषःकृतोधर्मोमहाफलः ॥ इतिसंदर्शयन्नाहषड्विंशेदक्षनिग्रहम् ॥ २ ॥ ततइति ततःसर्वेषांनिवृत्तिप्राप्त्यनंतरं देवामनुष्याश्चब्रह्मवित्त्वेनतारतम्याभावात्सहैववासंचक्रुरित्यर्थः
॥ १ ॥ समधीयंतिआत्मचर्यांकुर्वंतिप्ररुदंतिचप्रेम्णास्वयंदेवाः भागंमनुष्यैर्दत्तम् ॥ २ ॥ एवंसर्वेषुविद्वत्सुसत्सुविद्वान्दक्षःप्रचेतसःपुत्रोबृहस्पतिर्नानुगृह्यतेस्मेत्याह प्राचेतस ९०
मिति ॥ ३ ॥ मातामहे मातामहीये दक्षदुहितॄणामेवसर्वेलोकाःसंतानं अतःसर्वेषांमातामहःअविदितात्मनः शून्यस्य शामित्रंदक्षस्यैवपशुभूतस्यहिंसनम् ॥ ४ ॥ ५ ॥ सत्य
वचनैर्वेदवाक्यैःविहितंप्रकाशितं तेनैवरुद्रेणैव ॥ ६ ॥ ७ ॥

॥ ८ ॥ ९ ॥ १० ॥ सपिनाकोदेवःअंतकइवउग्रायुधधरःसन्रराज ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ रसनांतावलंबिभिः रसनायाःअंतंगजशुंडावत्प्रांतंअवलंबंतेतादृग्रूपैः
स्थितान्भक्षयंति ॥ १५ ॥ मुमुचुःउच्चिक्षिपुः पशवःपशून् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ महामखोमूर्त्तोभूत्वामहानादांश्चुक्रोश ॥ २१ ॥ २२ ॥ धनुरिति वि

शिखिभिर्जटिभिश्चैवत्र्यक्षैश्चशंकुकर्णिभिः ॥ चीरिभिश्चर्मिभिश्चैवकूटमुद्गरपाणिभिः ८ सघंटाधारिभिश्चैवमुंजमेखलधारिभिः ॥ सहस्तकटकैश्चैवस्वर्ण
कुंडलधारिभिः ९ सडिंडिमैःसभेरीकैःसमृदंगैःसवेणुभिः ॥ एतैःपरिवृतोदेवोमखंतंसमुपारुजत् १० सशंखमरुजैश्चापिसतालफलपाणिभिः ॥ उग्रायु
धधरोदेवःसपिनाकइवांतकः ११ विरराजार्चिभिर्दीप्तैर्मखेमखवतांवरः ॥ कालाग्निरिवदीप्तार्चिर्जगद्दग्धुमिवोद्यतः १२ नंदीपिनाकपाणिश्चजग्राहतुर्मखमुत्तमम्
युगांतइवकालाग्निःक्षिप्रंदग्धुमिवोद्यतः १३ यूपमुत्क्षिप्ययावंतिनिशाचरगणास्तथा ॥ त्रासयन्मुनिसंघांश्चचीरचर्मनिवासिनः १४ हवींष्यन्ये
पिबंत्येवजिह्वाभिस्ताम्रलोचनाः ॥ भक्षयंतिपशूनन्येरसनांतावलंबिभिः १५ मुमुचुश्चापरेयूपान्पशवःप्रहरंतिच ॥ वह्निमन्येप्रसिंचंतिवारिभिःप्रशमा
यच १६ सोममन्येजहुःकेचिन्नेत्रैस्ताम्रजपोपमैः ॥ दर्भान्केचिद्विलुंपंतिहस्तैःपद्मदलप्रभैः १७ बभंजिरेचयूपाग्रान्कलशांश्चापिचिक्षिपुः ॥ चिच्छिदुः
कांचनान्वृक्षाञ्छोभार्थमुपकल्पितान् १८ बिभिदुश्चैवबाणैस्तेमुमुचुश्चहिरण्मयान् ॥ लुलुपुश्चैवपात्राणिममंथुश्चारणीमपि १९ अरुजंश्चैवप्रा
ग्वंशंलुलुपुश्चसमाहिताः ॥ चखादिरेपुरोडाशान्नखाग्रैश्चाववर्त्तिरे २० एवंदिवाचरात्रौचभिद्यमानोमहामखः ॥ चुक्रोशचमहानादान्भिद्यमानइ
वार्णवः २१ धनुःसशरमादायपूर्वदत्तंस्वयंभुवा ॥ कृतंकीचकवेणुभ्यांसमरेसुमहारथः २२ प्रतिगृह्यमहादेवःसशरैःसमयोजयत् ॥ धनु
र्विगृह्यजानुभ्यांजघानसमहाक्रतुम् २३ सविद्धस्तेनबाणेनखंसमुत्पतितःक्रतुः ॥ मृगोभूत्वानर्दमानोब्रह्माणमुपधावति २४ शरेणाभिहतप्राणंनलेभेप्रश
मंभुवि ॥ शरणार्थीह्ययंप्राप्तःशरेणांतर्गतेनच २५ तमुवाचमृगंब्रह्माशुभंसानुनयंवचः ॥ स्वरेणोत्तमवीर्येणगंभीरेणसुभाषिणा ॥ एवंरूपोनभसित्वंभ
विष्यसिमहामृगः २६ विजितश्चत्रिपर्वेणशरेणानतपर्वणा ॥ तिष्ठन्नक्षत्रशिरसिसहरुद्रेणनित्यशः २७ सोमेनसहसंयुक्तोह्यक्षयेणाव्ययेनच ॥ दिविसं
चारभूतोवैताराभिःसहसंगतः २८ ज्योतिर्भूतोज्योतिषांत्वंध्रुवश्चैवमहाध्रुवः ॥ यच्चैतद्रुधिरंदिव्यंक्षतजादभिनिःसृतम् २९ नभस्युत्पतितंचैवप्रवेगेन
प्रधावतः ॥ क्षतजंबहुवर्णंचक्षेत्रंमंडलसंज्ञितम् ॥ निमित्तभूतंभूतानांवर्षेवर्षप्रदंतथा ३०

गृह्यविनम्यजानुभ्यांस्थितइतिशेषः ॥ २३ ॥ २४ ॥ अंतर्गतेनशरेणतुद्यमानः ॥ २५ ॥ समृगरूपीयज्ञोमृगशीर्षसंज्ञंसोमदैवत्यंनक्षत्रमभवदितिद्वाभ्यामाहएवमिति ॥ २६ ॥
॥ २७ ॥ संचारभूतःप्राप्तसंचारः ॥ २८ ॥ २९ ॥ यच्चैतदित्यादिभिस्त्रिभिरिंद्रधनुषउत्पत्तिमाह वर्षेवर्षाकालेवर्षप्रदंवृष्टिप्रदानेचिह्नंइंद्रायुधंइंद्रधनुरितिलोकेप्रसिद्धम् ॥ ३० ॥

॥ ३१ ॥ इंद्रायुधमेववर्णयति चक्षुषोइतित्रिभिःमनुष्यस्येभेमानुषे अवैक्षतअवेक्षतांमनसासंप्रकल्पितमितिकृत्स्नस्यापिप्रस्तुतार्थस्यविशेषणम् ॥ ३२ ॥ एतत्सर्वंस्वप्रवृत्तांतव त्कथ्यमानंरात्रौअविद्यायांदेहादिष्वात्माभिमानरूपायांसत्यांनप्रदृश्यतइत्याह नत्विति अविद्यानिवृत्तौतुहार्दाकाशेसब्रह्मणिशुद्धब्रह्मोपलब्धिस्थाने संज्ञितंवागालंबनत्वेनावि द्यमानं दिनस्यैवाग्रेअविद्यारात्रेरपगमेकार्यंसर्वंघटादिकंसदाअतीतागतव्यवहिताद्यवस्थायामपिप्रकर्षेणशब्दानुमानजसामान्यविषयज्ञानात् प्रकर्षेणविशेषार्थस्वरूपेणदृश्य तेयतस्तत्कार्यंमहदेवब्रह्मैवास्ति नहिब्रह्मणेऽतीतादित्वंसंभाव्यतइतिहार्दाकाशाख्येकार्यदर्शनंयुक्तंइतिभावः ॥ ३३ ॥ भूमाविति इयमविद्यारात्रिः भूमौशरीरेसत्येवोत्थितान हितदभावेसत्यासंभवोऽस्तिरज्ज्वभावेइवसर्पस्यदेहाभावेतुआकाशेशून्येलीयतेकालत्रयेपिबाधिताभवतीत्यर्थः यस्मादेवंतस्मात्प्रचेतसःसंबंधिनोदक्षाः शतशश्चसमंसर्वात्म

सुखंदुःखंचभूतानांदर्शनेसंप्रवर्त्तते ॥ इंद्रियश्रवणाच्चैवनभसींद्रायुधोभवत् ३१ चक्षुषीमानुषेराजन्विस्मयात्समवैक्षत ॥ अद्भुतंबहुचित्रंचमनसासंप्रक ल्पितम् ३२ नतुरात्रौप्रदृश्येतखेसब्रह्मणिसंज्ञितम् ॥ दिनस्यैवसदात्वग्रेमहत्कार्यंप्रदृश्यते ३३ भूमावेवसमुत्तिष्ठेदाकाशेतुविलीयते ॥ शतशश्चसमंस र्वेप्रधावंतिप्रचेतसः ३४ भयाद्रुद्रस्यमहतोधन्विनोबाणपाणयः ॥ नंदीरुद्रगणैःसार्द्धंपिनाकीसमतिष्ठत ॥ युगांतकालेज्वलितोब्रह्मदंडइवोद्यतः ३५ वि ष्णुसंग्रामसंभूतंप्रगृह्यविपुलंधनुः ॥ प्रातिष्ठतमहाबाहुःपाणिनाचक्रमादधत् ३६ गदांसघंटामन्येनखड्गमन्येनपाणिना ॥ प्रगृह्यसोऽग्रतोतिष्ठद्रुद्रायोद्यत पाणये ३७ ततःशृंगाग्रसंभूतप्रगृह्यविपुलंधनुः ॥ शंखंचाप्रतिमंलोकेशरांश्चानतपर्वणः ३८ विष्णुरग्रस्थितोभातिसबलःसंहतांजलिः ॥ बद्धगोधांगु लित्राणः सचंद्रइवतोयदः ३९ आदित्यावसवश्चैवदिव्यैःप्रहरणैःसह ॥ विष्णुमेवाभितःसर्वेतिष्ठंतिज्वलनप्रभाः ४० मरुतश्चैवविश्वेचरुद्रमेवाभिपेदिरे ॥ गंधर्वाःकिन्नराश्चैवनागायक्षाःसपन्नगाः ४१ ऋषयोन्यस्तदंडाश्चउभयोःपक्षयोर्हिताः ॥ जपंतिशांतयेनित्यंलोकानांहितकाम्यया ४२ रुद्रःशरेणाभ्यहनत् विष्णुमेवाग्रणीरणे ॥ हृदिसर्वांगसंधीषुतीक्ष्णाग्रेणसुयंत्रिणा ४३ नचकंपेतदाविष्णुःसर्वात्माब्रह्मसंभवः ॥ नचरोषमनानित्यंव्रतःसर्वैःषडिंद्रियैः ४४ वि ष्णुश्चधनुरानम्यशरेणसमयोजयत् ॥ जत्रुदेशेमुमोचाशुब्रह्मदंडमिवोद्यतम् ४५

कंब्रह्मदेहात्मबुद्धिरूपाविद्यानाशमात्रेणाभिलक्षितंप्रतिधावंतिउपतिष्ठंतिशब्दाभिलप्यप्रपंचादनंतगुणितःप्रपंचोहार्देदृश्यतइत्यर्थः ॥ ३४ ॥ पूर्वश्लोकस्यउत्तरार्द्धमुपजी व्यकथामनुसरतिभयादित्यर्द्धेन ॥ ३५ ॥ ३६ ॥ ३७ ॥ शृंगाग्रसंभूतंशार्ङ्गम्धर्माधिष्ठात्रीदेवतामहाविष्णुः ज्ञानाधिष्ठात्रीदेवतासदाशिवःतयोःपरस्परविरोधेआदित्यादयःवि ष्णुपक्षाःज्ञानंद्विषंति ॥ तथाचश्रुतिः तस्मादेषांतन्नप्रियंयदेतन्मनुष्याविदुरितिअक्षरयोजनास्पष्टा ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ रुद्रइति ॥ ४३ ॥ यतः सर्वात्माऽतोनचकंपे ॥ ४४ ॥ उद्यतंशरम् ॥ ४५ ॥

सविद्धइतिवज्रेणेतिव्यतिरेकेदृष्टांतः यथावज्रेणमंदरस्यमहासंधिर्वैमस्थानंचाल्यतेतेनैवबाणेनरुद्रःकंपते चालनंदूरापेतमितिभावः ॥ ४६ ॥ ततःरुद्रस्याकंप्यत्वावगमानंतरंततः यतोविष्णुःकृष्णवर्णःमहेशकंठेइंद्रनीलमयग्रैवेयकवल्लग्नस्ततोहेतोर्नीलकंठोभवत् इदमत्रआख्यायिकातात्पर्यंयद्यपिस्वोत्पत्तयेज्ञानस्यधर्मापेक्षास्तिउत्पन्नंचज्ञानंधर्ममूलतउच्छिनत्तितथापिविदुषएवधर्माधिकाराद्ज्ञानस्यैवकंठेशिशुरिवधर्मोलग्नोस्तीति ॥ ४७ ॥ कथाप्रसंगाद्विज्ञानमेवस्तौति अनादीति दीव्यतिप्रकाशयत्यर्थजातमितिचिन्मात्ररूपआत्मादेवःसचअनादिनिधनः नहिज्ञानेनपरिच्छेद्यंसर्वज्ञानस्यआद्यंतौप्रकाशयितुंक्षमतेकुतः कर्मणांकर्मोत्पादितानांमहदादीनामचलत्वात् पर्वतवज्जडत्वात्नहिजडेनाजडंप्रकाशयितुंशक्यंनतस्याद्यंतावितिभावः यतोहंसर्वेषांभूतानांआगमानामाचार्यग्राहकंगुरुं ईशानःसर्वविद्यानामितिश्रुतिप्रसिद्धंत्वांवेद्मि अतोभवान्ममापराधंक्षमतामितियोजना ॥ ॥ ४८ ॥ कर्मणांचकर्ताचिदात्मैवअहंकारादेःसत्ताप्रदत्वात् विकर्ताविषमकर्ताअशेषत्वात्भूतानांदृश्यानामर्थानां शेषस्यशिष्यतइतिशेषःकारणंतस्याज्ञानस्यकालत्रये

सविद्धस्तेनबाणेनमहादेवोनकंपते ॥ वज्रेणचमहासंधिर्मंदरस्यनचाल्यते ४६ ततःप्रसभमाङ्गुत्यरुद्रंविष्णुःसनातनम् ॥ कंठेजग्राहभगवान्नीलकंठस्ततोभवत् ४७ अनादिनिधनोदेवोक्षमतांहिभवान्मम ॥ सर्वभूतागमाचार्यमचलत्वाच्चकर्मणाम् ४८ कर्मणांचैवकर्ताचविकर्ताचैवभारत ॥ अशेषत्वाच्चभूतानांसर्वभूतेषुचोत्तमः ४९ स्वयमेवहियत्कर्मविधत्तेकर्मयोनिषु ॥ तयोःशुभतमोराजन्स्वयमेवतथाकरोत् ५० अंतरिक्षाच्छुभावाचःश्रूयंतेपरमाद्भुताः ॥ सिद्धानांवदनोन्मुक्ताःसनातननमोस्तुते ५१ नंदीपिनाकमुद्यम्यबलवान्रुद्रसंभवः ॥ मूर्द्धन्यभिजघानाजौविष्णुंक्रोधेनमूर्च्छितः ५२ ततःप्रहसितोविष्णुर्नंदींदृष्ट्वासुरोत्तमः ॥ स्तंभयामासभगवान्सर्वभूतपतिर्हरिः ५३ विष्णुर्ब्रह्मसमोभूत्वातेजसाप्रज्वलन्निव ॥ क्षमयाचसमायुक्तःस्थितःस्थाणुरिवाचलः ५४

व्यभावात् सर्वेषुभूतेषुचराचरेषुउत्तमोजीवेशापेक्षयानिरुपाधित्वादुत्कृष्टतमोभवानेवेतिशेषः ॥ ४९ ॥ स्वयमितिकर्मयोनिषुकर्मणालब्धनानाविधशरीरेषुस्थितःअंतर्यामिरूपेणस्वयमेवकर्मविधत्तेकरोतिप्रयोजकतयेतियत्तत्तयोःकर्तृकारयित्रोरन्यःशुभतमोयःशुद्धरूपःसएवतथानियमंपूर्वोक्तंअकरोत् निर्विशेषचिन्मात्रएवजीवेशादिकंकल्पितमितिभावः ॥ ५० ॥ कथामनुस्मृत्योक्तमर्थंस्तौति अंतरिक्षादिति ॥ ५१ ॥ नंदीत्यादिश्लोकद्वयतात्पर्यंतुपरमज्ञानंप्रत्यासन्नंमहदध्यात्मज्ञानंनंदितुल्यंतत्धर्मरूपस्यविष्णोर्निद्रावकंनहितेनज्ञानेनाविद्यामयेनकर्मक्षयःसंभवति प्रत्युतकर्मणैवचित्तशुद्ध्यातिशयेतस्यज्ञानस्यस्तंभोभवतीति ॥ ५२ ॥ ५३ ॥ विष्णुरिति विष्णुः परमोधर्मोयोगाख्यःक्षुद्रज्ञानैरप्रकंप्यः सब्रह्मसमोज्ञानेनसमानोभूत्वा एकंसांख्यंचयोगंचयःपश्यतिसपश्यतिइतिभगवदुक्तेः परमपुरुषार्थप्रदोभूत्वातेजसःस्वरूपप्रकाशेनक्षमयामोक्षमय्यामोक्षाख्यशांत्याचसमायुक्तःस्थाणुत्वादिविशेषवानभूदितिशेषः सार्द्धश्लोकोवाक्यम् ॥ ५४ ॥

किंकृत्वाएवंविधोभूत्तदाह युगांतेति सकार्यामविद्यांभस्मसात्कृत्वास्वतःशांतात्माऽव्ययःहरिःकर्मपाशहरश्चसन्नित्यर्थः ॥ ५५ ॥ नन्वेवंयोगेनैवेष्टासिद्धौकिंज्ञानेनेत्याशं
क्याह प्रसन्नइति रोदयतीतिरुत्अज्ञानंसर्वानर्थमूलंद्रावयतीतिरुद्रःऐकात्म्यबोधः तस्यभागोद्वैतबोधःयोगेनात्मदर्शनज्ञानेनात्मबोधश्चेतितयोर्विषयविभागइतिभावः॥५६॥
विष्णुनेति सरुद्रविद्रावितोऽनात्मज्ञस्यदक्षस्ययज्ञःविष्णुनाश्रद्धामयेनसत्त्वेन ॥ ५७ ॥ यथेति एवंसांख्ययोगयोःश्रवणासनादिसहाययोःमिथोविरोधेसत्यपियज्ञविनाशो
ज्ञानस्यैवाभिप्रेतउत्कर्षोभूदितिश्लोकद्वयार्थः ॥ ५८ ॥ यद्यप्येवंतथापिज्ञानेसन्निपत्योपकारित्वाद्यज्ञएवहितइत्याह सर्वेति अन्यथाद्वारलोपात्ज्ञानमपिनसिध्येदितिभावः
तथानात्मनोदक्षोपिविष्ण्वनुग्रहादेवयज्ञफलपरंपरयातत्त्वज्ञानंप्राप्येत्याह दक्षइति दक्षःप्रजापतिरितिसमानाधिकरणेप्रथमे ॥ ५९ ॥ यश्चैषइत्यादि शेषःस्पष्टार्थः ॥
॥ ६० ॥ अधीत्येति इदंसर्वकथाछलेनोक्तंसर्वमपिअध्यात्मानमधिकृत्यैवप्रवृत्तंशास्त्रंनवृथावादरूपं अधीत्यअर्थतःपाठतश्चदेवलोकेआत्मस्वरूपेमहीयतेसुप्रतिष्ठितोभवति

अचिंत्यश्चाप्रमेयश्चह्यजेयश्चाप्यरिंदमः ॥ युगांताग्निसमोभूत्वाशांतात्माहरिरव्ययः ५५ प्रसन्नःकल्पयामासभागंरुद्रायधीमते ॥ विष्णोर्धर्मपरोनित्यंत्य
क्तकामःसुरोत्तमः ५६ विष्णुनाचैवराजेंद्रसयज्ञःसंधितःपुनः ॥ यथापक्षंचतेसर्वेगणास्त्वासन्महीपते ॥ तस्मिन्युद्धेमहाघोरेविष्णोरुद्रस्यचैवह ५७
यथापक्षंभवद्युद्धंदक्षयज्ञविनाशने ॥ विनाशश्चैवयज्ञस्यतदालोकेप्रतिष्ठितः ५८ सर्वभूतेषुराजेंद्रहितोयज्ञःसनातनः ॥ दक्षोयज्ञफलंचैवप्राप्तवान्सप्रजा
पतिः ५९ इमांचोदाहृतांदिव्यांकथामितिसबुद्धिमान् ॥ श्रावयेद्यस्तुविप्रेभ्यःशुचिःप्रयतमानसः ६० अधीत्यसर्वमध्यात्मंदेवलोकेमहीयते ॥ एषपौ
ष्करकोनामप्रादुर्भावोमहात्मनः ६१ पुराणेपौष्करेचैवमयाद्वैपायनेरितः ॥ यथावदनुपूर्वेणसंस्कृतःपरमर्षिभिः ६२ यश्चैनमग्र्यंपुरुषंपुराणंसदाप्रमत्तः
शृणुयाद्यथोक्तम् ॥ अवाप्यकामानिहवीतशोकःपरत्रचस्वर्गफलानिभुंक्ते ६३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिद्वात्रिंशोऽध्यायः ३२ ॥
॥ जनमेजयउवाच ॥ प्रादुर्भावःपुराणेषुविष्णोरमिततेजसः ॥ सतांकथयतांविप्रवाराहइतिनःश्रुतः १ नजानतेस्यचरितंनविधिंनैवविस्तरम् ॥ नकर्मगु
णवद्भावंनहेतुंनमनीषितम् २ किमात्मकोवराहोसौकामूर्तिःकास्यदेवता ॥ किमाचारःकिंप्रभावःकिंवातेनपुराकृतम् ३

कृतकृत्योभवतीत्यर्थः ॥ ६१ ॥ ६२ ॥ यश्चैनंइत्यादिशेषःस्पष्टार्थः ॥ ६३ ॥ परैरदर्शितःपंथाःपौर्वापर्येक्षय.मया ॥ यथाकथंचिदुन्नीतःसुधियःशोधयंतुतं ॥ १ ॥ इति
श्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ प्रादुर्भावइति अध्यात्मविद्यांसमाप्यतत्तद्विघ्नविनाशायईश्वरःशरणीकर
णीयइतिविदधानस्तस्यरक्षोघ्नत्वेभक्तानुग्राहकत्वमाविष्करोति वराहादिप्रादुर्भावेत्रयेणविष्णोर्व्यापकस्यापिवह्नेरिवकाष्ठेषुलोकेप्रादुर्भावःसतांविदुषां वाराहःप्रथमइतिशेषः
॥ १ ॥ चरितंकार्यविधिंप्रवर्तकं हेतुंकारणंकर्मणांलीलानांगुणवद्भावंलोकोपकारित्वंलक्षणंगुणवत्त्वम् ॥ २ ॥ किमात्मकःकियज्ञमयोयोगमयोवा कामूर्तिःशरीरंभौतिकंमा
यिकंवा अस्यवराहस्याधिष्ठात्रीदेवताकिंहरिर्हरोवा आचारप्रभावौ पूर्वनिषेधमुखेनपृष्टावितिपुनःप्रष्टुमनूद्यते ॥ ३ ॥

द्विजातीनांचश्रुतिविस्तरंकथाविस्तरामित्यावर्तते ॥ ४ ॥ ५ ॥ चरितंतावत्संक्षेपेणाहदंष्ट्रयेति ॥ ६ ॥ श्रुतिभिःयस्यरूपंबिभ्रदिमामविंदद्गुहांप्रविष्टांशरीरस्यमध्यइतिआधानेव राहसंभारेणविनियुक्तान्मंत्रतस्तावत्प्रतीयते यस्यवराहस्यरूपंबिभ्रदीश्वरः इमांपृथिवींगुहांगूढस्थानेसलिलस्यमध्येप्रविष्टांअविंदत् लब्धवानित्यर्थः कैर्वेदैः ॥ ७ ॥ ८ ॥ पुराण मिति अत्रैवउक्तवक्ष्यमाणरीत्यासांख्ययोगयोरंतर्भावोस्तिकात्स्न्र्येन तद्यविद्वत्तमैकोन्नेयंइतरेतुकथापलालमात्रोपजीविनःपंडिताःपशवइतिभावः ॥ ९ ॥ किमात्मकइत्यस्योत्तरं विश्वात्मकोसावित्याह विश्वेदेवाइत्यादिना ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ अस्यरूपस्यसूर्यवदस्तोदयावाह पूर्णेयुगेत्यादिनायावदध्यायसमाप्ति निर्वाणेअदर्शने उत्पाताः

एतन्मेसंशयत्वेनवाराहंश्रुतिविस्तरम् ॥ यज्ञार्थंचसमेतानांद्विजातीनांमहात्मनाम् ४ ॥ वैशंपायनउवाच ॥ एतत्तेकथयिष्यामिपुराणंब्रह्मसंमितम् ॥ नानाश्रुतिसमायुक्तंकृष्णद्वैपायनेरितम् ॥ महावराहचरितंकृष्णस्याद्भुतकर्मणः ५ यथानारायणोराजन्वाराहंवपुरास्थितः ॥ दंष्ट्रयागांसमुद्रस्थामुज्जहा रारिसूदनः ६ छांदसीभिरुदाराभिःश्रुतिभिःसमलंकृतः ॥ शुचिःप्रयत्नवान्भूत्वानिबोधजनमेजय ७ इदंपुराणंपरमंपुण्यंवेदैश्वसंमितम् ॥ नानाश्रुति समायुक्तंनास्तिकायनकीर्तयेत् ८ पुराणमेतदखिलंसांख्यंयोगंतथैवच ॥ कात्स्न्येनविधिनाप्रोक्तंयोस्यार्थंज्ञास्यतेपुमान् ९ विश्वेदेवास्तथासाध्यारुद्रा दित्यास्तथाश्विनौ ॥ प्रजानांपतयश्चैवसप्तचैवमहर्षयः १० मनःसंकल्पजाश्चैवपूर्वजाश्चमहर्षयः ॥ वसवोप्सरसश्चैवगंधर्वायक्षराक्षसाः ११ दैत्याःपि शाचानागाश्चभूतानिविविधानिच ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राम्लेच्छादयोभुवि १२ चतुष्पदानिसर्वाणितिर्यग्योनिगतानिच ॥ जंगमानिचसत्त्वा नियच्चान्यज्जीवसंज्ञितम् १३ पूर्णेयुगसहस्रांतेब्राह्मेहनितथागते ॥ निर्वाणेसर्वभूतानांसर्वोत्पातसमुद्भवे १४ हिरण्यरेतास्त्रिशिखस्ततोभूत्वावृषाकपिः ॥ शिखाभिर्विविधांल्लोकान्संशोषयतिदेहिनः १५ दह्यमानास्ततस्तस्यतेजोराशिभिरग्रतः ॥ विवर्णवर्णादग्धांगाहतार्चिष्मद्भिराननैः १६ सांगोपानिष दावेदाइतिहासपुरोगमाः ॥ सर्वविद्याश्रयाश्चैवसत्यधर्मपरायणाः १७ ब्रह्माणमग्रतःकृत्वाछंदतोविश्वतोमुखम् ॥ सर्वेदेवगणाश्चैवत्रयस्त्रिंशच्चकोटयः ॥ १८ तस्मिन्नहनिसंप्राप्तेतंहंसंमहदक्षरम् ॥ प्रविशंतिमहायोगंहरिंनारायणंप्रभुम् ॥ १९ ॥ तेषांभूयःप्रविष्टानांनिधनोत्पत्तिरुच्यते ॥ यथासूर्यस्यस ततमुदयास्तमयाविह २०

वज्रपातनेत्रस्फुरणभूकंपादयः ॥ १४ ॥ त्रिशिखः अग्निवायुसूर्यरूपास्तिस्रःशिखायस्यसतेजोधातुर्हिरण्यगर्भःवृषाकपिःहरिहरात्मा वर्षतीतिवृषाकंजलंपिबतीतिकपिः वर्षणशो षणयोःकर्तेतिवा ॥ १५ ॥ हतार्चिरितिसंधिरार्षः ॥ १६ ॥ १७ ॥ छंदतःईश्वरस्यइच्छातःछंदजाइतिपाठेतदिच्छातोजाताः ॥ १८ ॥ अहनिक्षयावसरे ॥ १९ ॥ तेषामि ति यथाप्रदेशांतरस्थोभानुरस्माभिरदृश्यमानोस्तंगतइत्युच्यते एवंब्रह्मादिनांतेनारायणेलीनंजगन्नष्टमित्युच्यते उपरिस्थैःमार्कंडेयादीनांलयकालेतदुदरेतद्दर्शनादितिभावः ॥ २० ॥

निःशेषप्रलयहेतूनांवाय्वादीनामप्यभावात् अवतिष्ठतेभोगंनप्रयच्छति ॥ २१ ॥ २२ ॥ तस्यसृज्यमितिशेषः ॥ २३ ॥ २४ ॥ सर्वप्राणिनामचरेसंचारहीने ॥ २५ ॥
संपातेशेषे ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ कर्ताभूतानां विकर्त्ताभौतिकानांविविधरूपेणस्रष्टाधातासाधारणंकालादिरूपांविधाता

पूर्णेयुगसहस्रांतेकल्पोनिःशेषउच्यते ॥ तस्मिन्जीवकृतंसर्वंनिःशेषमवतिष्ठते २१ संहृत्यलोकान्सर्वान्ससदेवासुरपन्नगान् ॥ कृत्वात्मगर्भेभगवा
नास्तएकोजगद्गुरुः २२ यःस्रष्टासर्वभूतानांकल्पांतेषुपुनःपुनः ॥ अव्यक्तःशाश्वतोदेवस्तस्यसर्वमिदंजगत् २३ नष्टार्ककिरणेलोकेचंद्ररश्मिविवर्जिते ॥
त्यक्तभूताग्निपवनेक्षीणयज्ञवषट्क्रिये २४ अपक्षिगणसंघातेसर्वप्राण्यचरेपथि ॥ अमर्यादाकुलेरौद्रेसर्वतस्तमसावृते २५ अदृश्येसर्वलोकेस्मिन्नभावेसर्व
कर्मणाम् ॥ प्रशांतेसर्वसंपातेनष्टेवैरपरिग्रहे २६ गतेस्वभावसंस्थानंलोकेनारायणात्मके ॥ परमेष्ठीहृषीकेशःशयनायोपचक्रमे २७ पीतवासालोहि
ताक्षःकृष्णोजीमूतसन्निभः ॥ शिखासहस्रविकचंजटाभारंसमुद्वहन् २८ श्रीवत्सकलिलंपुण्यंरक्तचंदनभूषितं ॥ वक्षोबिभ्रन्महाबाहुःसविद्युदिवतोयदः
२९ पुंडरीकसहस्रस्यमालास्यशुशुभेतदा ॥ पत्नीचैवस्वयंलक्ष्मीर्देहमावृत्यतिष्ठति ३० ततःस्वपितिधर्मात्मासर्वलोकपितामहः ॥ किमप्यमितविक्रां
तोनिद्रायोगमुपागतः ३१ ततोवर्षसहस्रेतुपूर्णेसपुरुषोत्तमः ॥ स्वयमेवविभुर्भूत्वाबुध्यतेविबुधाधिपः ३२ ततश्चिंतयतेभूयःसृष्टिंलोकस्यलोककृत् ॥
पितृदेवासुरनरान्पारमेष्ठ्येनकर्मणा ३३ ततश्चिंतयतःकार्यंदेवेषुसमितिंजयः ॥ संभवंसर्वलोकस्यविदधातिसवाक्पतिः ३४ कर्ताचैवविकर्ताचसंहर्ता
चप्रजापतिः ॥ धाताविधाताचतथासंयमोनियमोयमः ३५ नारायणपरादेवानारायणपराःक्रियाः ॥ नारायणपरोयज्ञोनारायणपराश्रुतिः ३६ नाराय
णपरोमोक्षोनारायणपरागतिः ॥ नारायणपरोधर्मोनारायणपरःक्रतुः ३७ नारायणपरंज्ञानंनारायणपरंतपः ॥नारायणपरंसत्यंनारायणपरंपदम् ॥ ना
रायणपरोदेवोनभूतोनभविष्यति ॥३८ स्वयंभूरितिविज्ञेयःसब्रह्माभुवनाधिपः ॥ सवायुरितिविज्ञेयएषयज्ञःसनातनः ३९ सदसच्चसविज्ञेयःसयज्ञःसप्र
जाकरः ॥ यद्वेदितव्यंत्रिदशैस्तदेषपरिविंदति ४० यच्चवेद्यंभगवतोदेवाअपिनतद्विदुः ॥ प्रजानांपतयःसप्तऋषयश्चसहामरैः ४१ नास्यांतमधिगच्छंति
ततोनंतइतिश्रुतिः ॥ यदस्यपरमंरूपंतन्नपश्यंतिदेवताः ४२ प्रादुर्भावेषुसंभूतंयत्तदर्चंतिदेवताः ॥ यन्नदर्शितवान्देवःकस्तदन्वेष्टुमर्हति ४३ ग्रामणीःसर्वभू
तानामग्निमारुतयोर्गतिः ॥ तेजसस्तपसश्चैवनिधानममृतस्यच ४४ चतुराश्रमवर्णेषुचातुर्होत्रफलाशनः ॥ चतुःसागरपर्यंतश्चतुर्युगविवर्तकः ४५

विशेषकारणकर्मरूपम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ परंचैतन्यज्योतिः ॥ ३८ ॥ ३९ ॥ त्रिदशैरिंद्रियैर्यत्प्रकाश्यंतदनेनैवप्रकाश्यतेअनेनयत्प्रकाश्यंस्वरूपंतदिंद्रियाणिनगोच
रयंतीत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अग्निमारुतयोर्जाठरप्राणयोःगतिःगतिहेतुः ॥ ४४ ॥ ४५ ॥

संसारमुपसंहृत्यसृष्टिंसृष्ट्यतिमुमोचेति ॥ ४६ ॥ ४७ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांत्रयस्त्रिंशोध्यायः ॥ ३३ ॥ ॥ छ ॥सूत्रितमर्थं विवृणोतिजगदितिद्वादशभिः प्रजापतेः समष्टिजीवस्यमूर्तिमयशरीररूपंअंडम् ॥ १ ॥ उर्ध्वमुखंविभेदब्रह्मरंध्रद्वारातत:पूर्वमुत्पन्नमितिएकःपुनःशब्दोवाक्यालंकारे पुनरन्य च्छिद्रमपितत्रचजनयामासइत्यर्थः ॥ २ ॥ अष्टधेति वाक्पाणिपादाख्यच्छिद्रत्रयंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यंछिद्रपंचकंउपस्थस्यत्वपानएवांतर्भावः ॥३ ॥ एतेषांविभागमे वाहयदितिपरागतिर्ब्रह्मलोकप्रापिका यदधोद्वारद्वयंतद्रसायाःभूमेस्तलंनरकंतत्प्रापकम् ॥ ४ ॥ यदंडंशरीरमकरोत्दिवोव्याकृतात्कारणात्तत्रैवचयानिच्छिद्राणिता

**तदेषसंहृत्यजगत्कृत्वागर्भस्थमात्मनः ॥ मुमोचांडंमहायोगीधृतंवर्षसहस्रिकम् ४६ सुरासुरद्विजभुजगाप्सरोगणैर्महौषधिक्षितिधरयक्षगुह्यकैः ॥ प्रजाप तिःश्रुतिधरक्षरसांकुलंतदासृजज्जगदिदमात्मनाप्रभुः ४७ ॥ इतिश्रीमहाभा०ह०भ०प०त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ छ ॥ ॥ वैशंपायनउवा च ॥ ॥ जगदंडमिदंपूर्वमासीत्सर्वंहिरण्मयम् ॥ प्रजापतेर्मूर्तिमयमित्येवंवैदिकीश्रुतिः १ ततोवर्षसहस्रांतेबिभेदोर्ध्वमुखंविभुः ॥ लोकसंजननार्थायबि भेदाधोमुखंपुनः २ भूयोष्टधाबिभेदांडंप्रभुर्वैलोकयोनिकृत् ॥ चकारजगतश्चात्रविभागंसर्वभागवित् ३ यच्छिद्रमूर्ध्वमाकाशंपरासुकृतिनांगतिः ॥ विहितंविश्वयोगेनयदधस्तद्रसातलं ४ यदंडमकरोत्पूर्वंदेवलोकसिसृक्षया ॥ समंतादष्टधायानिच्छिद्राणिकृतवांस्तुसः ५ विदिशस्तादिशःसर्वामनसैवा करोद्विधा ॥ नानारागविरागाणियान्यंडशकलानिवै ६ बहुवर्णधराश्चित्राबभूवुस्तेबलाहका· ॥ यदंडमध्येस्कन्नंतद्द्रवमासीत्समाहितम् ७ जातरू पंतदभवत्तत्सर्वंपृथिवीतले ॥ तस्यक्लेदार्णवौघेनप्राच्छाद्यतसमंततः ८ पृथिवीनिखिलाराजन्युगांतेसागरैरिव ९ यच्चांडमकरोत्पूर्वंदेवलोकचिकीर्ष या ॥ तत्रतत्सलिलंस्कन्नंसोभवत्कांचनोगिरिः १० तेनांभसाप्लुताःसर्वादिशश्चोपदिशस्तथा ॥ अंतरिक्षंचनाकंचयच्चान्यत्किंचिदंतरम् ११ यत्र यत्रजलंस्कन्नंतत्रतत्रस्थितोगिरिः ॥ शैलैःसमस्तैर्गहनाविषमामेदिनीभवत् १२ तैःसपर्वतजालौघैर्बहुयोजनविस्तृतैः ॥ पीडितागुरुभिर्देवीपृथिवीव्य थिताभवत् १३ महीतलेभूरिजलंदिव्यंनारायणात्मकम् ॥ हिरण्मयंसमुद्दिष्टंतेजोविमलरूपितम् १४**

नि ॥ ५ ॥ सर्वाविदिशाःदिशंतिस्वंविषयंग्राहयंतीतिदिशाः इंद्रियाणिचतानिचमनसैवोपाधिनाकरोद्रूपादिदिदृक्षुरसृजत्द्विधेतिस्थूलसूक्ष्मविषयभेदात् ॥ ६ ॥ ७ ॥ द्रवंगर्भोदकादन्यदंडप्रस्वेदरूपंतस्यद्रवस्यक्लेदार्णवौघेनआर्द्रोदभारेणप्राच्छाद्यतप्रच्छन्ना ॥ ८ ॥ ९ ॥ तस्यैवद्रवस्यवाकार्यमाहयच्चेति ॥ १० ॥ ११ ॥ १२ ॥ एवंसृष्टिमुक्त्वा वाराहावतारबीजमाह तैरिति अयमर्थः ब्रह्मांडमुत्पाद्यतद्गर्भोदकेसमुद्ररूपेयोमंडःक्षीरद्रप्सतुल्यःसापृथिवी तद्यदपांशरआसीत्समहन्यतसापृथिव्यभवदितिश्रुतेः तस्यांयदंडस्वे दोदकंपतितंतन्मेर्वादिरूपमभूत्तस्यभारेणपृथिवीनिममज्जेति ॥ १३ ॥ महीतलेमह्याअधस्तात्हिरण्मयंस्वच्छं ॥ १४ ॥

तेनद्रवणेनपर्वतादिना ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ रसातलस्यापितलंअधोभागः ॥ २३ ॥ २४ ॥ ककुद्मिनंमहास्कंधवृषोपमं॥२५॥



अशक्तावैधारयितुमधःसाप्रविवेशह ॥ पीड्यमानाभगवतस्तेजसातेनसाक्षितिः १५ पृथिवींविशतींदृष्ट्वातामधोमधुसूदनः ॥ उद्धारार्थंमनश्चक्रेलोका
नांहितकाम्यया १६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ मत्तेजएवबलवत्समासाद्यतपस्विनी ॥ रसातलंविशेद्देवीपंकेगौरिवदुर्बला १७ ॥ धरण्युवाच ॥
त्रिविक्रमायामितविक्रमायमहान्नृसिंहायचतुर्भुजाय ॥ श्रीशार्ङ्गचक्रासिगदाधरायनमोस्तुतस्मैपुरुषोत्तमाय १८ त्वयात्मनाधार्यतेवैत्वयासंह्रीयतेज
गत् ॥ त्वंधारयसिभूतानिभुवनंत्वंबिभर्षिच १९ यत्त्वयाधार्यतेकिंचित्तेजसाचबलेनच ॥ ततस्तवप्रसादेनमयापश्चात्तुधार्यते २० त्वयाधृतं
धारयामिनाधृतंधारयाम्यहम् ॥ नहितद्विद्यतेरूपंयस्त्वयानतुधार्यते २१ त्वमेवपुरुषोवीरनारायणयुगेयुगे ॥ ममभारावतरणंजगतोहितकाम्यया
२२ तवैवतेजसाक्रांतांरसातलतलंगताम् ॥ त्रायस्वमांसुरश्रेष्ठत्वामेवशरणंगताम् २३ दानवैःपीड्यमानाहंराक्षसैश्चदुरात्मभिः ॥ त्वामेवशरणंनित्य
मुपयामिसनातनम् २४ तावन्मेस्तिभयंभूयोयावन्नत्वांककुद्मिनं ॥ शरणंयामिमनसाशतशोप्युपलक्षये २५ ॥ श्रीभगवानुवाच ॥ माभैर्धरणिक
ल्याणिशांतिंव्रजसमाहिता ॥ एषत्वामुचितंस्थानमानयामिमनीषितं २६ ॥ वैशंपायनउवाच ॥ ततोमहात्मामनसादिव्यंरूपमचिंतयत् ॥ किंतुरू
पमहंकृत्वाउद्धरामिवसुंधराम् २७ जलेनिमग्नांधरणींयेनाहंवैसमुद्धरे ॥ इत्येवंचिंतयित्वातुदेवस्तत्करणेमतिं २८ जलक्रीडारुचिस्तस्माद्वाराहं
रूपमस्मरत् ॥ हरिरुद्धरणेयुक्तस्तदाभूदस्यभूमिभृत् २९ अधृष्यंसर्वभूतानांवाङ्मयंब्रह्मसंमितं ॥ दशयोजनविस्तारमुच्छ्रितंशतयोजनम् ३० नील
मेघप्रतीकाशंमेघस्तनितनिःस्वनम् ॥ महागिरेःसंहननंश्वेतदीप्तोग्रदंष्ट्रिणम् ३१ विद्युदग्निप्रतीकाशमादित्यसमतेजसम् ॥ पीनवृत्तायतस्कंधंदृप्तशार्दूल
गामिनम् ३२ पीनोन्नतकटीदेशंवृषलक्षणपूजितं ॥ रूपमास्थायविपुलंवाराहममितंहरिः ३३ पृथिव्युद्धरणार्थायप्रविवेशरसातलम् ॥ वेदपादोयू
पदंष्ट्रःक्रतुदंतश्चितीमुखः ३४ अग्निजिव्होदर्भरोमाब्रह्मशीर्षोमहातपाः ॥ अहोरात्रेक्षणधरोवेदांगश्रुतिभूषणः ३५ आज्यनासास्रुवस्तुंडःसामघोषस्व
रोमहान् ॥ सत्यधर्ममयःश्रीमान्क्रमविक्रमसत्कृतः ३६ क्रियासत्रमहाघोणःपशुजानुर्महाकृतिः ॥ उद्गात्रांत्रोमहालिंगोबीजौषधिमहाफलः ३७
वाय्वंतरात्मामंत्रस्फिक्विक्रमःसोमशोणितः ॥ वेदीस्कंधोहविर्गंधोहव्यकव्यातिवेगवान् ३८



॥२६॥२७॥२८॥२९॥३०॥३१॥३२॥३३॥ वेदपादइत्यादिनायज्ञाख्यांतदधिष्ठात्रींदेवतामाह ॥ ३४ ॥ ब्रह्मशीर्षःप्रणवशिराःवेदांगश्रुतिभूषणःषडंगकुंडलः ॥ ३५ ॥ ३६ ॥
क्रियामयानिसत्राणिगवामयनादीनि घोणोनासिकायस्यउद्गातैवअंत्राणियस्य ॥ ३७ ॥ ३८ ॥

॥ ३९ ॥ उपाकर्मस्मार्त्तवेदोपकरणंतदेव ओष्ठस्यरुचकंओष्ठस्यभूषणंयस्य आवर्तोनाभिः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ समुद्धरत् समुद्दधार ॥ ४८ ॥ इतिश्रीम०भा०टी०चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ तस्यसंप्लवंमज्जनं ॥ १ ॥ २ ॥ विलेखनंमार्गज्ञापनंलेखारूपेण प्रमाणंयोजनतः गतिंप्राङ्मुखा

प्राग्वंशकायोद्युतिमान्नानादीक्षाभिरर्चितः ॥ दक्षिणाहृदयोयोगीमहासत्रमयोमहान् ३९ उपाकर्मोष्ठरुचकःप्रवर्ग्यावर्तभूषणः ॥ नानाछंदोगतिपथोगुह्योपनिषदासनः ४० छायापत्नीसहायोवैमणिशृंगइवोच्छ्रितः ॥ भूत्वायज्ञवराहोसौद्रागधःविशद्गुरुः ४१ अद्भिःसंच्छादितामुर्वीसतामार्च्छत्प्रजापतिः ॥ रसातलतलेमग्नांपातालांतरसंश्रयाम् ४२ प्रभुर्लोकहितार्थायदंष्ट्राग्रेणोज्जहारगाम् ॥ ततःस्वस्थानमानीयपृथिवींपृथिवीधरः ४३ मुमोचपूर्वंसहसाधारयित्वाधराधरः ॥ ततोजगामनिर्वाणंमेदिनीतस्यधारणात् ४४ चकारचनमस्कारंतस्मैदेवायशंभवे ॥ एवंयज्ञवराहेणभूत्वाभूतहितार्थिना ४५ उद्धृतापृथिवीदेवीलोकानांहितकाम्यया ॥ अथोद्धृत्यक्षितिंदेवोजगतःस्थापनेच्छया ४६ पृथिवीप्रविभागायमनश्चक्रेंबुजेक्षणः ॥ रसातलगतामेवंविचिंत्यसुरोत्तमः ४७ ततोविभुःप्रवरवराहरूपधृक्वृषाकपिःप्रसभमथैकदंष्ट्रया ॥ समुद्धरद्धरणिमतुल्यविक्रमोमहायशालोकहितार्थमच्युतः ४८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ छ ॥ तस्योपरिजलौघस्यमहतीनौरिवस्थिता ॥ विततत्वाच्चदेहस्यनययौसंप्लवंमही १ ततःसचिंतयामासप्रविभागंक्षितेर्विभुः ॥ समुच्छ्रयंचसर्वेषांपर्वतानांनदीषुच २ विलेखनंप्रमाणंचगतिंप्रस्रवमेवच ॥ माहात्म्यंचविशेषंचनदीनामन्वचिंतयत् ३ चतुरंतांधरांकृत्वातथाचैवमहार्णवम् ॥ मध्येपृथिव्याःसौवर्णमकरोन्मेरुपर्वतम् ४ प्राचींदिशमथोगत्वाचकारोदयपर्वतम् ॥ शतयोजनविस्तारंसहस्रंचसमुच्छ्रयम् ५ जातरूपमयैःशृंगैस्तरुणादित्यसन्निभैः ॥ आत्मतेजोगुणमयैर्वेदिकाभोगकल्पितम् ६ विविधांश्चमहास्कंधान्कांचनान्पुष्करेक्षणः ॥ नित्यपुष्पफलान्वृक्षान्कृतवांस्तत्रपर्वते ७ शतयोजनविस्तारंततस्त्रिगुणमायतम् ॥ चकारसमहादेवःपुनःसौमनसंगिरिम् ८ नानारत्नसहस्राणांकृत्वातत्रसुसंचयम् ॥ वेदिकांबहुवर्णांचसंध्याभ्राभामकल्पयत् ९ सहस्रशृंगंचगिरिंनानामणिशिलातलम् ॥ कृतवान्वृक्षगहनंषष्टियोजनमुच्छ्रितम् १० आसनंतत्रपरमंसर्वभूतनमस्कृतम् ॥ कृतवानात्मनःस्थानंविश्वकर्माप्रजापतिः ११ शिशिरंचमहाशैलंतुषारचयसंनिभम् ॥ चकारदुर्गगहनंकंदरांतरमंडितम् १२ शिशिरप्रभवांचैवनदींद्विजगणायुताम् ॥ चकारपुलिनोपेतांवसुधारामितिश्रुतिः १३ सानदीनिखिलांप्राचींपुण्यांमुखशतैश्चिताम् ॥ शोभयत्यमृतप्रख्यैर्मुक्ताशंखविभूषितैः १४

दिमाहात्म्यंपावनत्वंविशेषंफलतारतम्यम् ॥ ३ ॥ चतुरंतांचतुर्दलपद्माकारांभरताःकेतुमालाश्चभद्राश्वाःकुरवस्तथा ॥ पत्राणिभूमिपद्मस्यमर्यादाशैलबाह्यतइतिपुराणांतरोक्तेः ॥ ४ ॥ ५ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

 ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अकरोदितिशैलेंद्रंअस्ताचलमित्यर्थः ॥ २८ ॥ २९ ॥ 

 नित्यपुष्पफलोपेतैश्छादयद्भिःसुसंवृतैः ॥ भूषिताभ्यधिकंकांतैःसानदीतीरजैर्द्रुमैः १५ कृत्वाप्राचीविभागंचदक्षिणायामथोदिशि ॥ चकारपर्वतंदिव्यं 
सर्वकांचनराजतम् १६ एकतःसूर्यसंकाशंएकतःशशिसन्निभम् ॥ सबिभ्रच्छुशुभेतीवद्वौवर्णौपर्वतोत्तमः १७ तेजसायुगपद्व्याप्तंसूर्याचंद्रमसाविव ॥ वपु
ष्मंतमथोतत्रभानुमंतंमहागिरिम् १८ सर्वकामफलैर्वृक्षैर्वृतंरम्यैर्मनोरमैः ॥ चकारकुंजरंचैवकुंजरप्रतिमाकृतिम् १९ सर्वतःकांचनगुहंबहुयोजनविस्तृत
म् ॥ ऋषभप्रतिमंचैवऋषभंनामपर्वतम् २० हेमकांचनवृक्षाढ्यंपुष्पहासंससृष्टवान् ॥ महेंद्रमथशैलेंद्रंशतयोजनमुच्छ्रितम् २१ जातरूपमयैःशृंगैःस
पुष्पितमहाद्रुमम् ॥ मेदिन्यांकृतवान्देवःप्रतिक्षोभमिवाचलम् २२ नानारत्नसमाकीर्णंसूर्येंदुसदृशप्रभम् ॥ चकारमलयंचाद्रिंचित्रपुष्पितपादपम् २३
मैनाकंचमहाशैलंशिलाजालसमावृतम् ॥ दक्षिणस्यांदिशिशुभंचकाराचलमायतम् २४ सहस्रशिरसंविंध्यंनानाद्रुमलताकुलम् ॥ नदींचविपुलावर्तांपु
लिनश्रोणिभूषिताम् २५ क्षीरसंकाशसलिलांपयोधारामितिश्रुतिः ॥ सुरम्यांतोयकलिलांविहितांदक्षिणांदिशम् २६ दिव्यांतीर्थशतोपेतांप्लावयंतींशु
भांभसा ॥ दिशंयाम्यांप्रतिष्ठाप्यप्रतीचींदिशमागमत् २७ अकरोत्तत्रशैलेंद्रंशतयोजनमुच्छ्रितम् ॥ शोभितंशिखरैश्चित्रैःसुप्रवृद्धैर्हिरण्मयैः २८ कांच
नीभिःशिलाभिश्चगुहाभिश्चविभूषितम् ॥ समाकुलंसूर्यनिभैःशालैस्तालैश्चभास्वरैः २९ शुशुभेजातरूपश्चश्रीमद्भिश्चित्रवेदिकैः ॥ षष्टिंगिरिसहस्राणित
त्रासौसंन्यवेशयत् ३० मेरुप्रतिमरूपाणिवपुषाप्रभयासह ॥ सहस्रजलधारंचपर्वतंमेरुसन्निभम् ३१ पुण्यतीर्थगुणोपेतंभगवान्संन्यवेशयत् ॥ षष्टियो
जनविस्तारंतावदेवसमुच्छ्रितम् ३२ आत्मरूपोपमंतत्रवाराहंनामनामतः ॥ निवेशयामासगिरिंदिव्यंवैडूर्यपर्वतम् ३३ राजताःकांचनाश्चैवयत्रदिव्याः
शिलोच्चयाः ॥ तत्रैवचक्रसदृशंचक्रवंतंमहाबलम् ३४ सहस्रकूटंविपुलंभगवान्सन्यवेशयत् ॥ शंखप्रतिमरूपंचराजतंपर्वतोत्तमम् ३५ सितद्रुमसमा
कीर्णंशंखंनामन्यवेशयत् ॥ सुवर्णरत्नसंभूतंपारिजातंमहाद्रुमम् ३६ महतःपर्वतस्याग्रेपुष्पहासंन्यवेशयत् ॥ शुभामतिरसांचैवघृतधारामितिश्रुतिः ३७
वराहःसरितंपुण्यांप्रतीच्यामकरोत्प्रभुः ॥ प्रतीच्यांसंविधिंकृत्वापर्वतान्कांचनोज्ज्वलान् ३८ गुणोत्तरानुत्तरस्यांसन्यवेशयदग्रतः ॥ ततःसौम्यगिरिं
सौम्यमंतरिक्षप्रमाणतः ३९ रुक्मधातुप्रतिच्छन्नमकरोद्भास्करोपमम् ॥ सतुदेशोविसूर्योपितस्यभासाप्रकाशते ४० 

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ सत्वितिविसूर्योपिरात्रावपि ॥ ४० ॥

लक्ष्याधिकंचंद्रमंडलंयथातपतारविणाभातिएवंरविस्तेनपर्वतेनेत्यर्थः अतएवाह्निमध्याह्ना र्कसंनिधिस्थश्चंद्रइव सूक्ष्मलक्षणोविज्ञेयः ॥ ४१ ॥ भूयोस्तंनामेति भूयःपदात्पूर्वं अकरोदित्यत्रसउक्तएवेत्यर्थः अत्रपुनरुक्तिःपाश्चात्यजनाभिप्रायेण पाश्चात्यानांहिद क्षिणस्यामुदयाचलउत्तरस्यांअस्ताचलः एवंप्राच्यानांउत्तरेउदयाचलोदक्षिणतोऽस्ताचलः

तस्यलक्ष्म्याधिकंभातितपतारविणायथा ॥ सूक्ष्मलक्षणविज्ञेयस्तपतीवदिवाकरः ४१ सहस्रशिखरंचैवनानातीर्थसमाकुलम् ॥ चकाररत्नसंकीर्णंभूयो स्तंनामपर्वतम् ४२ मनोहरगुणोपेतंमंदरंचाचलोत्तमम् ॥ उद्दामपुष्पगंधंचपर्वतंगंधमादनम् ४३ चकारतस्यशृंगेषुसुवर्णरससंभवम् ॥ जंबूंजांबूनद मयीमनंताद्भुतदर्शनाम् ४४ गिरिंचशिखरंचैवतथापुष्करपर्वतम् ॥ शुभ्रंपांडुरमेघाभंकैलासंचनगोत्तमम् ४५ हिमवंतंचशैलेंद्रंदिव्यधातुविभूषितम् ॥ निवेशयामासहरिर्वाराहींतनुमास्थितः ४६ नदींसर्वगुणोपेतामुत्तरस्यांदिशिप्रभुः ॥ मधुधारांसकृतवान्दिव्यामृषिशताकुलाम् ४७ सर्वेचैवक्षिति धराःसपक्षाःकामरूपिणः ॥ तदाकृताभगवताविचित्राःपरमेष्ठिना ४८ सकृत्वाप्रविभागंतुपृथिव्यालोकभावनः ॥ देवासुराणामुत्पत्तौकृतवान्बुद्धिमक्ष याम् ४९ सर्वासुदिक्षुक्षतजोपमाक्षश्चकारशैलान्विविधाभिधानान् ॥ हितायलोकस्यसलोकनाथःपुण्याश्चनद्यःसलिलोपगूढाः ५० ॥ इतिश्रीमहाभारते खिलेषुहरिवंशेभविष्यपर्वणिपंचत्रिंशोऽध्यायः ३५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ जगत्स्रष्टुमनादेवश्चिंतयामासपूर्वजः ॥ तस्यचिंतय तोवक्त्रान्निःसृतःपुरुषःकिल १ ततःसपुरुषोदेवंकिंकरोमीत्युपस्थितः ॥ प्रत्युवाचस्मितंकृत्वादेवदेवोजगत्पतिः २ विभजात्मानमित्युक्त्वागतोंतर्धानमी श्वरः ॥ अंतर्हितस्यदेवस्यसशरीरस्यभारत ३ प्रशांतस्येवदीपस्यगतिस्तस्यनविद्यते ॥ ततस्तेनेरितांवाणींसोन्वचिंतयतप्रभुः ४ हिरण्यगर्भोभगवा न्यएषच्छंदसिश्रुतः ॥ एषप्रजापतिःपूर्वमभवद्भुवनाधिपः ५ तदाप्रभृतितस्याद्योयज्ञभागोविधीयते ॥ प्रजापतिरुवाच ॥ विभजात्मानमित्युक्तस्तेना स्मिसुमहात्मना ६ कथमात्माविभज्यःस्यात्संशयोह्यत्रमेमहान् ॥ इतिचिंतयतस्तस्यओमित्येवोत्थितःस्वरः ७ सभूमावंतरिक्षेचनाकेचकृतवांस्ततः ॥ तंचैवाभ्यसतस्तस्यमनःसारमयःपुनः ८ हृदयाद्देवदेवस्यवषट्कारःसमुत्थितः ॥ भूम्यंतरिक्षनाकानांभूर्भुवःसुवरात्मिकाः ९ महास्मृतिमयाःपुण्यामहा व्याहृतयोभवन् ॥ छंदसांप्रवरादेवीचतुर्विंशाक्षराभवत् ॥ तत्पदंसंस्मरन्दिव्यांसावित्रीमकरोत्प्रभुः १० ऋक्सामाथर्वयजुषश्चत्वारोभगवान्प्रभुः ॥ च कारनिखिलान्वेदान्ब्रह्मयुक्तेनकर्मणा ११ ततस्तस्यैवमनसःसनःसनकएवच ॥ सनातनश्चभगवान्वरदश्चसनंदनः १२

तथाऔदीच्यानांप्रतीच्यांउदयः प्राच्यामस्तइति ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५॥४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्व णिटीकायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ जगदित्यादिनास्थावरजंगमसृष्टीमाह ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

सनत्कुमारश्चविभुस्तत्रजज्ञेसनातनः ॥ मानसाश्चैवपूर्वाद्याइत्येतेषण्महर्षयः १३ ब्रह्माणंकपिलंचैवषडेतांश्चैवयोगिनः ॥ यतयोयोगतंत्रेषुयान्स्तुवंति द्विजातयः १४ ततोमरीचिमत्रिंचपुलस्त्यंपुलहंक्रतुम् ॥ भृगुमंगिरसंचैवमनुंचैवप्रजापातिम् १५ पितृंश्चसर्वभूतानांदेवतासुररक्षसाम् ॥ महर्षीनसृजच्छंभुरष्टावेतांश्चमानसान् १६ एतेयुगसहस्रांतेयाश्चैषामभवत्प्रजाः ॥ कल्पेनिःशेषभुंक्तेतुततोगच्छंतिनिर्वृतिम् १७ भूयोवर्षसहस्रांतेउत्पत्तिस्तुविधीयते ॥ एतेषामेवदेवानांप्रजाकर्तृषुवैतदा १८ किंतुकर्मविशेषेणदेवतानांयुगेयुगे ॥ नामजन्मविशेषाश्चतथैवयुगपर्यये १९ अंगुष्ठाद्दक्षिणाद्दक्षउत्पन्नो भगवानृषिः ॥ तस्यैवतुपुनर्भार्यावामांगुष्ठादजायत २० तस्यतत्राभवन्कन्याविश्रुतालोकमातरः ॥ याभिर्व्याप्तास्त्रयोलोकाःप्रजाभिर्मनुजाधिप ॥ २१ अदितिंचदितिंकालामनायुंसिंहिकांमुनिम् ॥ प्राधांक्रोधांचसुरभिंविनतांसुरसांतथा २२ दनुंकद्रुंचदुहितृःप्रददौकश्यपायतु ॥ प्रजांसंचिंत्यमनसागतिज्ञेनांतरात्मना २३ अरुंधतींवसुंयामींलंबांभानुंमरुत्वतीम् ॥ संकल्पांचमुहूर्तांचसाध्यांविश्वांचभारत २४ मनवेब्रह्मपुत्रायकन्यादक्षोददौदश ॥ ततःसर्वानवद्यांग्यःकन्याःकमललोचनाः २५ पूर्णचंद्राननादिव्यागंधवत्योमनोरमाः ॥ कीर्तिंलक्ष्मींधृतिंपुष्टिंबुद्धिंमेधांक्षमांतथा २६ मतिंलज्जां वसुंचैवदक्षोधर्मायवैददौ ॥ आत्रेयस्तुततोभूतस्तस्यतोयात्मकःशशी २७ पुत्रोग्रहाणामधिपःसहस्रांशुस्तमिस्रहा ॥ तस्मैनक्षत्रयोगिन्यःसप्तविंशतिरुत्तमाः २८ रोहिणीप्रमुखाःकन्यादक्षःप्राचेतसोददौ ॥ एतासांपुत्रपौत्रंचप्रोच्यमानंमयाशृणु २९ कश्यपस्यमनोश्चैवधर्मस्यशशिनस्तथा ॥ अर्यमावरुणोमित्रःपूषाधातापुरंदरः ३० त्वष्टाभगोंशुःसवितापर्जन्यश्चेतिविश्रुताः ॥ अदित्यांजज्ञिरेदेवाःकश्यपाल्लोकभावनाः ३१ दित्याःपुत्रद्वयंजज्ञेकश्यपादितिनःश्रुतम् ॥ हिरण्यकशिपुश्चैवाहिरण्याक्षश्चवीर्यवान् ॥ द्वावप्यमितविक्रांतौतपसाकश्यपोपमौ ३२ हिरण्यकशिपोःपुत्राःपंचैवसुमहाबलाः ॥ प्रह्रादश्चैवसंह्रादस्तथानुह्रादएवच ३३ ह्रदःश्चैवतुविक्रांतःपंचमोनुह्रदस्तथा ॥ प्रह्रादःपूर्वजस्तेषामनुह्रादतथापरः ३४ प्रह्रादस्यत्रयःपुत्राविक्रांताःसुमहाबलाः ॥ विरोचनश्चजंभश्चसुजंभश्चेतिविश्रुताः ३५ बलिर्विरोचनसुतोबाणएकोबलेःसुतः ॥ बाणस्यचेंद्रदमनःपुत्रःपरपुरंजयः ३६ दनोःपुत्रास्तुबहवोवंशख्यातामहासुराः ॥ विप्रचित्तिःप्रथमजस्तेषांराजाबभूवह ३७ गणःप्रजज्ञेक्रोधायाःपुत्रपौत्रमनंतकम् ॥ रौद्राःक्रोधवशानामक्रूरकर्माणएवच ३८ सिंहिकासुषुवेराहुंग्रहचंद्रार्कमर्दनम् ॥ ग्रस्तारंचैवचंद्रस्यसूर्यस्यचविनाशनम् ३९

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ इतिश्री

कालायाःकालकल्पस्तुगणःपरमदारुणः ॥ अभवद्दीप्तसूर्याक्षोनीलमेघसमप्रभः ४० सहस्रशीर्षाःशेषश्चवासुकिस्तक्षकस्तथा ॥ बहूनांकद्रुपुत्राणामे
तेप्राधान्यमागताः ॥ ४१ ॥ धर्मात्मानोवेदविदःसदाप्राणिहितेरताः ॥ लोकतंत्रधराश्चैववरदाःकामरूपिणः ४२ तार्क्ष्यश्चारिष्टनेमिश्चगरुडश्चमहाबलः ॥
अरुणिश्चारुणिश्चैवविनतायाःसुताःस्मृताः ॥ इमाश्चाप्सरसःपुण्याविविधाःपुण्यलक्षणाः ४३ सुषुवेप्टौमहाभागाप्राधादेवर्षिपूजिता ॥ अनवद्यामनू
कांचअनूनामरुणप्रियाम् ॥ अनुगांसुभगांभासींस्त्रियःप्राधाव्यजायत ४४ अलंबुषामिश्रकेशीपुंडरीकातिलोत्तमा ॥ सुरूपालक्षणाक्षेमातथारंभाम
नोरमा ॥ ४५ ॥ असिताचसुबाहुश्चसुवृत्तासुमुखीतथा ॥ सुप्रियाचसुगंधाचसुरसाचप्रमाथिनी ४६ काश्याशारद्वतीचैवमौनेयाप्सरसःस्मृताः ॥
विश्वावसुर्भरण्यश्चगंधर्वाश्चैवविश्रुताः ४७ मेनकासहजन्याचपर्णिकापुंजिकस्थला ॥ घृतस्थलाघृताचीचविश्वाचीचोर्वशीतथा ४८ अनुम्लोचे
त्यभिख्याताप्रम्लोचेतिचताःदश ॥ मनोवतीचापितथावैदिक्योप्सरसस्तथा ४९ प्रजापतेस्तुसंकल्पात्संभूताभुवनप्रियाः ॥ अमृतंब्राह्मणागावोरुद्राश्चेतिच
तुष्टयं ५० सुरभ्यपत्यमित्येतत्पुराणेनिश्चयोमहान् ॥ एतद्वैकश्यपापत्यंमनोर्वंशंनिबोधमे ५१ संक्षेपेणैवतत्सर्वंकीर्तयिष्यामितेनघ ॥ विश्वेदेवा
स्तुविश्वायाःसाध्यासाध्यान्व्यजायत ५२ मरुत्वत्यांमरुत्वंतोवसोस्तुवसवःस्मृताः ॥ भानोस्तुभानवस्तातमुहूर्ताश्चमुहूर्तजाः ५३ लंबाघोषंविजज्ञेथना
गवीथींचजामिजा ॥ पृथिव्यांविषमंसर्वंमरुत्वत्यामजायत ५४ संकल्पायास्तुकौरव्यजज्ञेसंकल्पएवच ॥ धर्मस्यपुत्रोलक्ष्म्यास्तुकामोजज्ञेजगत्प्रभुः ॥
५५ यशोहर्षश्चकामश्चरत्यांपुत्रद्वयंस्मृतम् ॥ सोमस्यपुत्रोरोहिण्यांजज्ञेवर्चामहाप्रभः ५६ उदयन्नेवभगवान्वर्चस्वीयेनजायते ॥ पुरूरवाश्चभगवानु
र्वशीयेनयुज्यते ५७ एवंपुत्रसहस्राणिस्त्रीणांचैवपरस्परम् ॥ एतावत्तुजगन्मूलंयत्रलोकाःप्रतिष्ठिताः ५८ प्रजापतिस्तुभगवान्गुणतःप्रेक्ष्यदेहिनः ॥ आधि
पत्येषुयुक्तेषुनियोजयतियोगवित् ५९ दिशोदशक्षितिमृषयोर्णवान्नगान्द्रुमौषधीरुरगसरित्सुरासुरान् ॥ प्रजापतीन्भुवनसृजोनभोभुवःक्रियामखानथ
कृतवान्गिरींश्चसः ६० इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिषट्त्रिंशोऽध्यायः ३६ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ त्रयाणाम
पिलोकानामादित्यानांचभारत ॥ चकारशक्रंराजानमादित्यसमतेजसम् १ सवज्रीकवचीविष्णुरदित्यामभिजज्ञिवान् ॥ स्मृतेःसहायोद्युतिमान्य
थासोध्वर्युभिःस्तुतः २ जातमात्रोथभगवान्त्सकुशैर्ब्राह्मणैर्धृतः ॥ तदाप्रभृतिदेवेशकौशिकत्वमुपागतः ३

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अनायुषायाः त्वष्टुर्भार्यायाः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ चक्षुषांचक्षुष्मतांदूरदर्शन



अभिषिच्याधिराज्येतुसहस्राक्षंपुरंदरम् ॥ ब्रह्माक्रमेणराज्यानिव्यादेष्टुमुपचक्रमे ४ यज्ञानांतपसांचैवग्रहनक्षत्रयोस्तथा ॥ द्विजानामौषधीनांतुसोमंरा
ज्येभ्यषेचयत् ५ दक्षंप्रजापतीनांतुअंभसांवरुणंपतिम् ॥ पितॄणांसर्वनिधनंकालंवैश्वानरंप्रभुम् ६ गंधानांचैवसर्वेषांभूतानांचशरीरिणाम् ॥ शब्दाका
शबलानांचवायुरीशस्तदाकृतः ७ सर्वभूतपिशाचानांमृत्यूनांचगवांतथा ॥ उत्पातग्रहरोगाणांव्याधीनांतुतथैवच ८ व्रतानांचैवसर्वेषांमहादेवःकृतः
प्रभुः ॥ यक्षाणांराक्षसानांचगुह्यकानांधनस्यच ९ रत्नानांचैवसर्वेषांकृतोवैश्रवणःप्रभुः ॥ सर्वेषांदंष्ट्रिणांशेषोनागानामथवासुकिः १० सरीसृपाणांस
र्वेषांप्रभुर्वैतक्षकःकृतः ॥ सागराणांनदीनांचमेघानांवर्षणस्यच ॥ आदित्यानामवरजःपर्जन्योधिपतिःकृतः ११ गंधर्वाणामधिपतिस्तथाचित्ररथःकृतः ॥ सर्वा
प्सरोगणानांचकामदेवःप्रभुःकृतः १२ चतुष्पदानांसर्वेषांवाहनानांचसर्वशः ॥ महेश्वरध्वजःश्रीमान्गोवृषोधिपतिःकृतः १३ दैत्यानांचमहातेजा
हिरण्याक्षःप्रभुःकृतः ॥ हिरण्यकशिपुश्चैवयौवराज्येभिषेचितः १४ गणानांकालकेयानांमहाकालःप्रभुःकृतः ॥ अनायुषायाःपुत्राणांवृत्रोराजातदाकृतः १५
सिंहिकातनयोयस्तुराहुर्नाममहासुरः ॥ उत्पातानामनेकानामशुभानांप्रभुःकृतः १६ ऋतूनामथसर्वेषांयुगानांचैवभारत ॥ पक्षाणांचैवमासानांतथैवति
थिपर्वणाम् १७ कलाकाष्ठामुहूर्तानांगतेरयनयोस्तथा ॥ कृतःसंवत्सरोराजायोगस्यगणितस्यच १८ पक्षिणांचैवसर्वेषांचक्षुषांचमहाबलः ॥ सुपर्णोभो
गिनांचैवगरुडोधिपतिःकृतः १९ अरुणोगरुडभ्राताजपापुष्पचयप्रभः ॥ योगानांचैवसर्वेषांसाध्यानामाधिपःकृतः २० पुत्रोस्यविरथोनामकश्यपस्य
प्रजापतेः ॥ राजाप्राच्यांदिशितथावासवेनाधिपः कृतः २१ आदित्यस्याविभोःपुत्रोधर्मराजोमहायशाः ॥ दक्षिणस्यांदिशियमोमहेंद्रेणैवसत्कृतः २२
कश्यपस्यौरसःपुत्रःसलिलांतर्गतःसदा ॥ अंबुराजइतिख्यातःप्रतीच्यांदिशिपार्थिवः २३ पुलस्त्यपुत्रोद्युतिमान्महेंद्रप्रतिमःप्रभुः ॥ एकाक्षःपिंगलोनामसौ
म्यायांदिशिपार्थिव २४ एवंविभज्यराज्यानिस्वयंभूर्लोकभावनः ॥ लोकांश्चत्रिदिवेदिव्यानददत्सपृथक्पृथक् २५ कस्यचित्सूर्यसंकाशान्कस्यचिद्वह्नि
सन्निभान् ॥ कस्यचित्सुष्ठुविद्योतान्कस्यचिच्चंद्रनिर्मलान् २६ नानावर्णान्कामगमाननेकशतशोजनान् ॥ सतान्सुकृतिनांलोकान्पापदुष्कृतिदुर्लभा
न् २७ येषांभासोविभांत्यग्रेसौम्यास्तारागणाइव ॥ एतेसुकृतिनांलोकायेजाताःपुण्यकर्मिणः २८ येयजंतिमखैःपुण्यैःसमाप्तवरदक्षिणैः ॥ स्वदारनिर
ताःक्षांताऋजवःसत्यवादिनः २९ दीनानुग्रहकर्तारोब्रह्मण्यालोभवर्जिताः ॥ संत्यक्तरजसःसंतोयांतितत्रतपोमलाः ३०

समर्थानामित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ एवमाधिपत्यस्थापनानंतरंयद्वृत्तं तदाह कदाचित्तुअसुराणांसपक्षाः मित्राणि ॥ १ ॥ २ ॥ सुराश्रयंकनिष्ठाःसुराआधिपत्यंकुर्वंतियस्यज्येष्ठाअपिअनीश्वराइतिशशंसुरित्यर्थःसर्वेहिरण्याक्षादयः ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ रश्मिभिस्तेजोयुक्तैरष्टालसदृशैश्चेतिगंडशैलविशेषणं भुशुंडोभिरितिपाठेदंडाग्रस्थितमुकुरा

एवंनियुज्यतनयान्स्वयंलोकपितामहः ॥ पुष्करंब्रह्मसदनमारुरोहप्रजापतिः ३१ सर्वेस्वयंभुदत्तेषुपालनेषुदिवौकसः ॥ रेमिरेस्वेषुलोकेषुमहेंद्रेणाभिपालिताः ३२ स्वयंभुवाशक्रपुरःसराःसुराःकृतायथार्हंप्रतिपालनेषुते ॥ यशोदिवंचप्रतिपेदिरेशुभंमुदंचजग्मुर्मखभागभोजिनः ३३ इतिश्रीमहाभारतेखिलेषु हरिवंशेभविष्यपर्वणिसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ कदाचित्तुसपक्षास्तेपर्वताधरणीधराः ॥ प्रस्थिताधरणींत्यक्त्वानूनंतस्यैवमायया १ तदासुराणांनिलयंहिरण्याक्षेणपालितम् ॥ दिशंप्रतीचीमागम्यहृदेमजन्यथागजाः २ तत्रासुरेभ्यःशंसंतआधिपत्यंसुराश्रयम् तच्छ्रुत्वाथासुराःसर्वेचक्रुरुद्योगमुत्तमम् ३ क्रूरांचबुद्धिमतुलांपृथिवीहरणेरताः ॥ आयुधानिचसर्वाणिजगृहुर्भीमविक्रमाः ४ चक्राशनीस्तथाखड्गान्भुशुंडीश्चधनूंषिच ॥ प्रासान्पाशांश्चशक्तीश्चमुसलानिगदास्तथा ५ केचित्कवचिनःसज्जामत्तनागांस्तथापरे ॥ केचिदश्वरथान्युक्ताअपरेश्वान्महासुराः ६ केचिदुष्ट्रांस्तथाखड्गान्माहिषान्गर्दभानपि ॥ स्वबाहुबलमास्थायकेचिच्चापिपदातयः ७ परिवार्यहिरण्याक्षंतलबद्धाःकलापिनः ॥ इतश्चेतश्चनिश्चेरुर्दृष्टाः सर्वेयुयुत्सवः ८ ततोदेवगणाःपश्चात्पुरंदरपुरोगमाः ॥ दैत्यानांविदितोद्योगाश्चक्रुरुद्योगमुत्तमम् ९ महताचतुरंगेणबलेनसुसमाहिताः ॥ बद्धगोधांगुलित्राणास्तूणवंतःसमार्गणाः १० उग्रायुधधरादेवाःस्वेष्वनीकेष्ववस्थिताः ॥ ऐरावतगतंशक्रमन्वगच्छंतपृष्ठतः ११ ततस्तूर्यनिनादेनभेरीणांचमहास्वनैः अभ्यद्रवद्धिरण्याक्षोदेवराजंपुरंदरम् १२ तीक्ष्णैःपरशुनिस्त्रिंशैर्गदातोमरशक्तिभिः ॥ मुशलैःपट्टिशैश्चैवछादयामासवासवम् १३ ततोस्त्रबलवेगेनसार्चिष्मत्यःसुदारुणाः ॥ घोररूपामहावेगानिपेतुर्बाणवृष्टयः १४ शिष्टाश्चदैत्याबलिनःसितधारैःपरश्वधैः ॥ परिघैरायसैःखड्गैःक्षेपणीयैश्चमुद्गरैः १५ गंडशैलैश्च विविधैरश्मिभिश्चाद्रिसन्निभैः ॥ घातनीभिश्चगुर्वीभिःशतघ्नीभिस्तथैवच १६ युगैर्यंत्रैश्चनिर्मुक्तैरर्गलैश्चविदारणैः ॥ सर्वान्देवगणान्दैत्याःसन्निजघ्नुःसवासवान् १७ धूम्रकेशंहरिश्मश्रुंनानाप्रहरणायुधम् ॥ रक्तसंध्याभ्रसंकाशंकिरीटोत्तमधारिणम् १८

कृतिफल्गुतोमरःफलशल्येनयंत्रितः पट्टिशएकधारःखड्गःक्षेपणीयैर्दूरान्मुक्तैः घातनीभिर्गुर्वीभिरितिविशेषणद्वयंशतघ्नीनांशतघ्नीभिःशतंहंत्रीभिर्गुर्वीभिरितिशालासंबंधात् ॥ १६ ॥ युगैर्युगाकारैरस्त्रैः आग्नेयादिभिरस्त्रैः पाषाणवर्षिभिः ॥ १७ ॥ धूम्रकेशत्वादिविशेषणं हिरण्याक्षंदृष्ट्वाप्रविव्यथुरितिचतुर्णामन्वयः ॥ १८ ॥

नीलपीतांबरधरंशितदंष्ट्रोर्ध्वधारिणम् ॥ आजानुबाहुंहर्यक्षंवैडूर्याभरणोज्ज्वलम् १९ समुद्यतायुधंदृष्ट्वासर्वेदेवगणास्तदा ॥ तेहिरण्याक्षमसुरंदैत्यानाम ग्रतःस्थितम् २० युगांतसमयेभीमंस्थितंमृत्युमिवाग्रतः ॥ प्रविव्यथुःसुराःसर्वेतदाशक्रपुरोगमाः २१ दृष्ट्वायांतंहिरण्याक्षंमहाद्रिमिवजंगमम् ॥ देवाःसं विग्नमनसःप्रगृहीतशरासनाः २२ सहस्राक्षंपुरस्कृत्यतस्थुःसंग्राममूर्धनि ॥ साचदैत्यचमूरेजेहिरण्यकवचोज्ज्वला २३ प्रवृद्धनक्षत्रगणाशारदीद्यौरिवा मला ॥ तेन्योन्यमपिसंपेतुःपातयंतःपरस्परम् २४ बभंजुर्बाहुभिर्बाहून्द्वंद्वमन्येयुयुत्सवः ॥ गदानिपातैर्भग्नांगाबाणैश्चव्यथितोरसः २५ विनिपेतुःपृथ क्केचित्तथान्येपिविजघ्निरे ॥ बभंजिरेरथान्केचित्केचित्संमर्दितारथैः २६ संबाधमन्येसंप्राप्तानशेकुश्चलितुंरथात् ॥ दानवेंद्रबलंतत्रदेवानांचमहद्बलम् २७ अन्योन्यबाणवर्षेणयुद्धदुर्दिनमाबभौ ॥ हिरण्याक्षस्तुबलवान्क्रुद्धःसदितिनंदनः २८ व्यवर्द्धतमहातेजाःसमुद्रइवपर्वणि ॥ तस्यक्रुद्धस्यसहसामुखान्निं श्चेरुरर्चिषः २९ शस्त्रजालैर्बहुविधैर्धनुर्भिःपरिघैरपि ॥ सर्वमाकाशमावव्रेपर्वतैरुत्थितैरिव ३० बहुभिःशस्त्रनिस्त्रिंशैश्छिन्नभिन्नशिरोरसः ॥ नशेकुश्चलि तुंदेवाहिरण्याक्षार्दितायुधि ३१ सर्वेवित्रासितादेवाहिरण्याक्षेणसंयुगे ॥ नशेकुर्यत्नवंतोपियत्नंकर्तुंविचेतसः ३२ तेनशक्रःसहस्राक्षःस्तंभितोस्त्रेणधीम ता ॥ ऐरावतगतःसंख्येनाशकच्चलितुंभयात् ३३ सर्वांश्चदेवानखिलान्त्सपराजित्यदानवः ॥ स्तंभयित्वाचदेवेशमात्मस्थंमन्यतेजगत् ३४ सतोयमे घप्रतिमोग्रनिःस्वनंप्रभिन्नमातंगविलासविग्रहम् ॥ धनुर्विधुन्वंतमुदारवर्चसंतदासुरेंद्रंददृशुःसुराःस्थिताः ३५ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभ विष्यपर्वणिवाराहेअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ निष्प्रयत्नेसुरपतौधर्षितेषुसुरेषुच ॥ हिरण्याक्षवधेबुद्धिंचक्रेच क्रगदाधरः १ वाराहःपर्वतोनामयःपूर्वंसमुदाहृतः ॥ सएषभूत्वाभगवानाजगामसुरांतकृत् २ ततश्चंद्रप्रतीकाशमगृण्हाच्छंखमुत्तमम् ॥ सहस्रारंचतत्र क्रंचक्रपर्वतसन्निभम् ३ महादेवोमहाबुद्धिर्महायोगीमहेश्वरः ॥ पश्यतेयोमरैःसर्वैर्गुह्यैर्नामभिरव्ययः ४ सदसच्चात्मनिश्रेष्ठःसद्भिर्यःसेव्यतेसदा ॥ ईज्यतेयः पुराणैश्चत्रिलोकेलोकभावनः ५ योवैकुंठःसुरेंद्राणामनंतोभोगिनामपि ॥ विष्णुर्योयोगविदुषांयोयज्ञोयज्ञकर्मणाम् ६

५८

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ इ० म० ह०टी०अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥ ॥ निष्प्रयत्नइति ॥ १ ॥ पर्वतोनामपर्वाणिदर्शपू र्णमासादीनिअवयवत्वेनवर्ततेस्मिन्नितिपर्वतोयज्ञतनुर्नामेत्यर्थः यएषःवक्ष्यमाणगुणः सवराहोभूत्वेतिसंबंधः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

त्रिधाहुतंहुतहूयमानप्रहुताख्यप्रकारत्रयेणहुताग्नौहूयमानाअनग्नौप्रहुताब्राह्मणभोजनेइत्याश्वलायनव्याख्यातेन ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

मखेयस्यप्रसादेनभुवनस्थादिवौकसः ॥ आज्यंमहर्षिभिर्दत्तमश्नुवंतित्रिधाहुतम् ७ योगतिर्देवदैत्यानांयःसुराणांपरागतिः ॥ यःपवित्रंपवित्राणांस्वयंभू
रव्ययोविभुः ८ यस्यचक्रप्रविष्टानिदानवानांयुगेयुगे ॥ कुलान्याकुलतांयांतियानिदृष्टानिवीर्यतः ९ ततोदैत्यद्रवकरंपौराणंशंखमुत्तमम् ॥ धमन्वक्रेण
बलवानाक्षिपद्दैत्यजीवितम् १० श्रुत्वाशंखस्वनंघोरमसुराणांभयावहम् ॥ क्षुभितादानवाःसर्वेदिशोदशव्यलोकयन् ११ ततःसंरक्तनयनोहिरण्याक्षो
महासुरः ॥ कोयमित्यब्रवीद्रोषान्नारायणमुदैक्षत १२ वाराहरूपिणंदेवंसंस्थितंपुरुषोत्तमम् ॥ शंखचक्रोद्यतकरंदेवानामार्तिनाशनम् १३ रराजशंखच
क्राभ्यांताभ्यामसुरसूदनः ॥ सूर्याचंद्रमसोर्मध्येयथानीलपयोधरः १४ ततोसुरगणाःसर्वेहिरण्याक्षपुरोगमाः ॥ उद्यतायुधनिस्त्रिंशादृप्तादेवमुपाद्रवन् ॥
१५ पीड्यमानोतिबलिभिर्दैत्यैःसर्वायुधोद्यतैः ॥ नचचालहरिर्युद्धेकंप्यमानइवाचलः १६ ततःप्रज्वलितांशक्तिंवाराहोरसिदानवः ॥ हिरण्याक्षोमहाते
जाःपातयामासवीर्यवान् १७ तस्याःशक्त्याःप्रभावेणब्रह्माविस्मयमागतः ॥ समीपमागतांदृष्ट्वामहाशक्तिंमहाबलः १८ हुंकारेणैवनिर्भर्त्स्यपातयामास
भूतले ॥ तस्यांप्रतिहतायांतुब्रह्मासाध्वितिचाब्रवीत् १९ यःप्रभुःसर्वभूतानांवराहस्तेनताडितः ॥ ततोभगवताचक्रमाविध्यादित्यसन्निभम् २० पाति
तंदानवेंद्रस्यशिरस्युत्तमकर्मणा ॥ ततःस्थितस्यैवशिरस्तस्यभूमौपपातह ॥ हिरण्मयंवज्रहतंमेरुशृंगमिवोत्तमम् २१ हिरण्याक्षेहतेदैत्येशेषायेतत्रदा
नवाः ॥ सर्वेतस्यभयत्रस्ताजग्मुराशुदिशोदश २२ ससर्वलोकाप्रतिचक्रचक्रोमहाहवेष्वप्रतिमोग्रचक्रः ॥ बभौवराहोयुधिचक्रपाणिःकालोयुगांतेष्विव
दंडपाणिः २३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ वि
द्राव्यतुरणेसर्वानसुरान्पुरुषोत्तमः ॥ मुमोचतत्रबद्धांस्तान्पुरंदरमुखान्सुरान् १ ततःप्रकृतिमापन्नाःसर्वेदेवगणास्तथा ॥ पुरंदरंपुरस्कृत्यनारायणमुप
स्थिताः २ ॥ ॥ देवाऊचुः ॥ ॥ त्वत्प्रसादेनभगवन्तवबाहुबलेनच ॥ जीवामोद्यमहाबाहोनिष्क्रांताश्वांतकाननात् ३ त्वच्छासनाद्धिभगवन्
किंकुर्वंत्यदितेःसुताः ॥ इच्छामःपादशुश्रूषांतवकर्तुंसनातन ४ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वावचनंतेषांपुंडरीकनिभेक्षणः ॥ उवाचवचनंदेवान्मुदा
युक्तोहतद्विषः ५ ॥ श्रीभगवानुवाच ॥ योयस्यभवतोलोकोमयैवविहितःपुरा ॥ पाल्यतांसतुयत्नेननियोगश्चक्वचित्क्वचित् ६

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अप्रतिचक्रंअप्रतिहताज्ञंचक्रंयस्यसः ॥ २३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटी
कायांएकोनचत्वरिंशोऽध्यायः ॥ ३९ ॥ ॥ छ ॥ ॥ विद्राव्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ लोकःस्थानंनियोगःआज्ञावेदरूपा ॥ ६ ॥

५९ ऐश्वर्यंप्रतिपन्नास्थक्रतुभागपुरस्कृतम् ॥ मयैवपूर्वंनिर्दिष्टोनियोगःप्रतिपाल्यताम् ७ शक्रंचोवाचभगवान्वचनंदुंदुभिस्वनः ॥ इदंयथावत्कर्तव्यंसत्सुचा अ०४०
सत्सुचत्वया ८ गच्छंतुतपसास्वर्गंमुनयःशंसितव्रताः ॥ तवलोकंसुरश्रेष्ठसर्वकामदुघंसदा ॥ यायजूकाश्चयेकेचिद्ब्राह्मणाःक्षत्रियाविशः ॥ तेषांकामदु
घालोकाःस्वर्गमादिमनोहराः ॥ यज्ञैरिष्ट्वायायजूकाःफलंतेप्राप्नुवंतुच ॥ ९ ॥ भावःसद्धर्मशीलानामभावःपापकर्मणाम् ॥ संतःस्वर्गजितःसंतु
सर्वाश्रमनिवासिनः ॥ १० ॥ सत्यशूरारणेशूरादानशूराश्चयेनराः ॥ तेनराःस्वर्गमश्नंतुसदायेचानसूयवः ११ अश्रद्दधानाःपुरुषाःकामिनोर्थपराःशठाः
अब्रह्मण्यानास्तिकाश्चनरकंयांतुमानवाः १२ एतावत्क्रियतांवाक्यंमयोक्तंत्रिदशेश्वराः ॥ ततोमयिस्थितेसर्वान्बाधिष्यंतेनचारयः १३ इत्युक्त्वांत
र्हितोदेवःशंखचक्रगदाधरः ॥ देवतानांचसर्वेषामभवद्विस्मयोमहान् १४ एतदत्यद्भुतंदृष्ट्वावाराहचरितंसुराः ॥ नमस्कृत्वावराहायनाकपृष्ठमितोगताः
१५ ततःस्वान्यधिपत्यानिप्रतिपन्नानिदैवतैः ॥ सर्वलोकाधिपत्येचप्रतिष्ठांवासवोगतः १६ विमुक्तादानवगणैःप्रकृतिंधरणीगता ॥ स्थैर्यहेतोर्धरण्या
स्तुज्ञात्वाचागस्कृतान्गिरीन् १७ स्वेषुस्थानेषुसंस्थाप्यपर्वतानांपुरंदरः ॥ चिच्छेदभगवान्पक्षान्वज्रेणशतपर्वणा १८ सर्वेषामेवपक्षावैछिन्नाःशक्रे
णधीमता ॥ एकःसपक्षोमैनाकःसुरैस्तत्समयःकृतः १९ एषनारायणस्यार्थंप्रादुर्भावोमहात्मनः ॥ वाराहइतिविप्रेंद्रैःपुराणेपरिकीर्तितः २० कृष्णद्वैपाय
नमतंनानाश्रुतिसमाहितम् ॥ नाशुचेर्नकृतघ्नायननृशंसायकीर्तयेत् २१ नक्षुद्रायननीचायनगुरुद्वेषकारिणे ॥ नाशिष्यायतथाराजन्नकृतघ्नायचैवहि २२
आयुष्कामैर्यशःकामैर्महीकामैश्चमानवैः ॥ जयैषिभिश्चश्रोतव्योदेवानामेषवैजयः २३ पुराणवेदसंबद्धःशिवःस्वस्त्ययनोमहान् ॥ पावनःसर्वसत्वानां
तत्कालविजयप्रदः २४ एषकौरव्यतत्वेनकथितस्त्वनुपूर्वशः ॥ वाराहस्यनृपश्रेष्ठप्रादुर्भावोमहात्मनः २५ येयजंतिमखैःपुण्यैर्दैवतानिपितॄनपि ॥
आत्मानमात्मनानित्यंविष्णुमेवयजंतिते २६ लोकायनायत्रिदशायनायब्रह्मायनायात्मभवायनाय ॥ नारायणायात्महितायनायमहावराहायनमस्कुरु
ष्व २७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवाराहप्रादुर्भावेचत्वारिंशत्तमोऽध्यायः ४० ॥ ७ ॥ वैशंपायनउवाच ॥ वाराहएषकथितो
नारसिंहमतःशृणु ॥ यत्रभूत्वामृगेंद्रेणहिरण्यकशिपुर्हतः १ पुराकृतयुगेराजन्हिरण्यकशिपुःप्रभुः ॥ दैत्यानामादिपुरुषश्चकारसुमहत्तपः २

मैनाकरक्षायैकृतः यथासमुद्रेस्थितस्यतेनपक्षच्छेदोभवितेति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ अयनायगतये ॥ २७ ॥ इतिश्रीमहाभार ५९
तेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांचत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ ७ ॥ ॥ वाराहएषःमृगेंद्रेणनृसिंहेनभूत्वाआविर्भूय ॥ १ ॥ २ ॥

स्थातुंशीलमस्येतिस्थानं स्थावरंनंद्यादिल्युण्प्रत्ययांतः तद्वन्मौनंस्थानमौनम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ दिग्भिः दिग्देवताभिः एवमन्यत्रापि ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

दशवर्षसहस्राणिशतानिदशपंचच ॥ जलवासीसमभवत्स्थानमौनव्रतस्थितः ३ ततःशमदमाभ्यांचब्रह्मचर्येणचैवहि ॥ ब्रह्माप्रीतोभवत्तस्यत
पसानियमेनच ४ ततःस्वयंभूर्भगवान्स्वयमागम्यतत्रह ॥ विमानेनार्कवर्णेनहंसयुक्तेनभास्वता ५ आदित्यैर्वसुभिःसाध्यैर्मरुद्भिर्दैवतैःसह ॥ रुद्रैर्विश्व
सहायैश्चयक्षराक्षसकिन्नरैः ६ दिग्भिश्चाथविदिग्भिश्चनदीभिःसागरैस्तथा ॥ नक्षत्रैश्चमुहूर्तैश्चखचरैश्चमहाग्रहैः ७ देवैर्ब्रह्मर्षिभिःसार्द्धंसिद्धैःसप्तर्षिभिस्त
था ॥ राजर्षिभिःपुण्यकृद्भिर्गंधर्वैरप्सरोगणैः ८ चराचरगुरुःश्रीमान्वृतोदेवगणैःसह ॥ ब्रह्माब्रह्मविदांश्रेष्ठोदैत्यंवचनमब्रवीत् ९ ॥ ब्रह्मोवाच ॥ प्रीतो
स्मितवभक्तस्यतपसानेनसुव्रत ॥ वरंवरयभद्रंतेयथेष्टंकाममाप्नुहि १० ततोहिरण्यकशिपुःप्रीतात्मादानवोत्तमः ॥ कृतांजलिपुटःश्रीमान्वचनंचेदमब्रवी
त् ११ हिरण्यकशिपुरुवाच ॥ नदेवासुरगंधर्वानयक्षोरगराक्षसाः ॥ नमानुषाःपिशाचाश्चनिहन्युर्मांकथंचन १२ ऋषयोनैवमांक्रुद्धाःसर्वलोकपिताम
ह ॥ शपेयुस्तपसायुक्तावरएषवृतोमया १३ नशस्त्रेणनचास्त्रेणगिरिणापादपेनच ॥ नशुष्केणनचार्द्रेणस्यान्नचान्येनमेवधः १४ नस्वर्गेप्यथपातालेना
काशेनावनिस्थले ॥ नचाभ्यंतररात्र्यह्नोर्नचाप्यन्येनमेवधः १५ पाणिप्रहारेणैकेनसभृत्यबलवाहनम् ॥ योमान्नाशयितुंशक्तःसमेमृत्युर्भविष्यति १६
भवेयमहमेवार्कःसोमोवायुर्हुताशनः ॥ सलिलंचांतरिक्षंचनक्षत्राणिदिशोदश ॥ अहंक्रोधश्चकामश्चवरुणोवासवोयमः १७ धनदश्चधनाध्यक्षोयक्षःकिंपु
रुषाधिपः ॥ मूर्तिमंतिचदिव्यानिममास्त्राणिमहाहवे ॥ उपतिष्ठंतुदेवेशसर्वलोकपितामह १८ ॥ पितामहउवाच ॥ एतेदिव्यावरास्तातमयादत्तास्त
वाद्भुताः ॥ सर्वान्कामानल्पभावात्प्राप्स्यसित्वंनसंशयः १९ वैशंपायनउवाच ॥ एवमुक्त्वासभगवान्जगामाकाशमेवच ॥ वैराज्यंब्रह्मसदनंब्रह्मर्षिगण
सेवितम् २० ततोदेवाश्चनागाश्चगंधर्वामुनिभिःसह ॥ वरप्रदानंश्रुत्वैवपितामहमुपस्थिताः २१ ॥ देवाऊचुः ॥ वरेणानेनभगवन्वधिष्यतिसनोसु
रः ॥ तत्प्रसीदस्वभगवन्वधोप्यस्यविचिंत्यताम् २२ ॥ वैशंपायनउवाच ॥ भगवान्सर्वभूतानामादिकर्तास्वयंप्रभुः ॥ स्रष्टाचहव्यकव्यानामव्यक्तप्र
कृतिर्ध्रुवः २३ सर्वलोकहितंवाक्यंश्रुत्वादेवःप्रजापतिः ॥ आश्वासयामाससुरान्सशीतैर्वचनांबुभिः २४ अवश्यंत्रिदशास्तेनप्राप्तव्यंतपसःफलम् ॥ त
पसोंतेसभगवान्वधंविष्णुःकरिष्यति २५ एतच्छ्रुत्वासुराःसर्वेवाक्यंपंकजजन्मनः ॥ स्वानिस्थानानिदिव्यानिप्रतिजग्मुर्मुदान्विताः २६ ॥ वैशंपायनउ
वाच ॥ लब्धमात्रेवरेतस्मिन्सर्वाःसोबाधतप्रजाः ॥ हिरण्यकशिपुर्दैत्योवरदानेनदर्पितः २७ आश्रमेषुमुनीन्सर्वान्ब्राह्मणान्संशितव्रतान् ॥ सत्यध
र्मरतान्दांतान्धर्षयामासवीर्यवान् २८

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ओंकारसहायत्वं ओंकारार्थस्यसार्वात्म्यस्यानुसंधा



देवांस्त्रिभुवनस्थांश्चपराजित्यमहासुरः ॥ त्रैलोक्यंवशमानीयस्वर्गेवसतिदानवः २९ यदावरमदोन्मत्तश्चोदितःकालधर्मणा ॥ यज्ञियानकरोद्दैत्यान्देवता
नप्ययज्ञियान् ३० तदादित्याश्चसाध्याश्चविश्वेचवसवस्तथा ॥ रुद्रादेवगणायक्षादेवद्विजमहर्षयः ३१ शरण्यंशरणंविष्णुमुपतस्थुर्महाबलम् ॥ देवंदे
वमयंयज्ञंब्रह्मदेवंसनातनम् ३२ भूतंभव्यंभविष्यंचप्रजालोकनमस्कृतम् ॥ देवाऊचुः ॥ नारायणमहाभागदेवत्वांशरणंगताः ३३ त्वंहिनःपरमोधाता
त्वंहिनःपरमोगुरुः ॥ त्वंहिनःपरमोदेवोब्रह्मादीनांसुरोत्तम ३४ त्वंपद्मामलपत्राक्षशत्रुपक्षभयावह ॥ क्षयायदितिवंशस्याक्षयायभवनःप्रभो ३५ त्रायस्व
जहिदैत्येंद्रंहिरण्यकशिपुंप्रभो ॥ विष्णुरुवाच ॥ भयंत्यजध्वममराअभयंवोददाम्यहम् ३६ तथैवत्रिदिवंदेवाप्रतिपत्स्यथमाचिरम् ॥ एषतंसगणंदैत्यंव
रदानेनदर्पितम् ३७ अवध्यममरेंद्राणांदानवेंद्रंनिहन्म्यहम् ॥ वैशंपायनउवाच ॥ एवमुक्त्वासभगवान्विसृज्यत्रिदिवौकसः ३८ वधंसंकल्पयित्वातुहि
रण्यकशिपोःप्रभुः ३९ सोचिरेणैवकालेनहिमवत्पार्श्वमागतः ॥ किंतुरूपंसमास्थायनिहन्म्येनंमहासुरम् ४० यत्सिद्धिकरमाशुस्याद्वधायविबुधद्विषः ॥
अनुत्पन्नंततश्चक्रेसोत्यंतंरूपमास्थितः ४१ नारसिंहमनाधृष्यंदैत्यदानवरक्षसाम् ॥ सहायंतुमहाबाहुर्जग्राहोंकारमेवच ४२ अथोंकारसहायोसौभगवा
न्विष्णुरव्ययः ॥ हिरण्यकशिपोःस्थानंजगामप्रभुरीश्वरः ४३ तेजसाभास्कराकारःकांत्याचंद्रइवापरः ॥ नरस्यकृत्वार्द्धतनुंसिंहस्यार्द्धतनुंविभुः ४४ ना
रसिंहेनवपुषापाणिंसंस्पृश्यपाणिना ॥ ततोपश्यतविस्तीर्णांदिव्यांरम्यांमनोरमाम् ४५ सर्वकामयुतांशुभ्रांहिरण्यकशिपोःसभाम् ॥ विस्तीर्णायोजन
शतंशतमध्यर्द्धमुच्छ्रिताम् ४६ विहायसींकामगमांपंचयोजनमुच्छ्रिताम् ॥ जराशोकक्लमत्यक्तांनिष्प्रकंपांशिवांशुभाम् ४७ शुभासनवतींरम्यांज्व
लंतीमिवतेजसा ॥ अंतःसलिलसंयुक्तांविहितांविश्वकर्मणा ॥ दिव्यरत्नमयैर्वृक्षैःफलपुष्पप्रदैर्युताम् ४८ नीलपीतासितश्यामैःसितैर्लोहितकैरपि ॥ अ
वतानैस्तथागुल्मैर्मंजरीशतधारिभिः ४९ सिताभ्रघनसंकाशाप्लवंतीवाप्सुदृश्यते ॥ धन्यासनवतीरम्याज्वलंतीमिवतेजसा ५० प्रभावतीभास्वराचदि
व्यगंधमनोरमा ॥ सुखानचदुःखासानसीतानचघर्मदा ५१ नक्षुत्पिपासेनग्लानिंप्राप्यतांप्राप्नुवंतिहि ॥ नानारूपैर्विरचिताविचित्रैरतिभास्वरैः ५२
स्तंभैर्मणिमयैर्दिव्यैःशाश्वतीचाक्षताचसा ॥ अतिचंद्रंचसूर्यंचपावकंचस्वयंप्रभा ५३



नंतद्बलेनैवशमादिभिःरावणादीनांनिहतत्वात् ॥ ४३ ॥ ४४ ॥ ४५ ॥ अध्यर्द्धसार्द्धशतं ॥ ४६ ॥ ४७ ॥ ४८ ॥ अवतानैःवितानप्रांतेषुलंबमानैःचित्रपटैःझालरइतिप्र
सिद्धैःगुल्मैःतेष्ववगुच्छाकारैरवयवैः ॥ ४९ ॥ ५० ॥ प्रभालावण्यंतद्वतीभास्वरादीप्तिमती ॥ ५१ ॥ ५२ ॥ ५३ ॥

दीप्यतेनाकपृष्ठस्थाभर्त्सयंतीवभास्करम् ॥ सर्वेचकामाःप्रचुरायेदिव्यायेचमानुषाः ५४ रसवंतःप्रभूताश्चभक्ष्यभोज्यंतथाक्षयम् ॥ पुण्यगंधाःस्रजस्तत्रनि
त्यपुष्पफलद्रुमाः ५५ उष्णेशीतानितोयानिशीतेचोष्णानिसंतिवै ॥ पुष्पिताग्रान्महाशाखान्प्रवालांकुरधारिणः ५६ लतावितानसंच्छन्नान्त्सरित्सुचसरः
सुच ॥ मनोहरांश्चविविधान्ददर्शसतदाप्रभुः ५७ द्रुमान्बहुविधांस्तत्रमृगेंद्रोददृशेद्भुतम् ॥ गंधवंतिचपुष्पाणिरसवंतिफलानिच ५८ तानिशीतानि
तोयानितत्रतत्रसरांसिच ॥ अपश्यत्सर्वतीर्थानिसभायांशतशोविभुः ५९ नलिनैःपुंडरीकैश्चशतपत्रैःसुगंधिभिः ॥ रक्तैःकुवलयैर्नीलैःकुमुदैःसंयुतानिच
६० सकांतैर्धार्त्तराष्ट्रैश्चराजहंसैःसुरप्रियैः ॥ कादंबैश्चक्रवाकैश्चसारसैःकुररैरपि ६१ विमलस्फटिकाभानिपांडुराष्टदलानिच ॥ कलहंसोपगीतानिसारिका
भिरुतानिच ६२ गंधवत्यःशुभास्तत्रपुष्पमंजरिधारिणीः ॥ दृष्टवान्पादपाग्रेषुनानापुष्पधरालताः ६३ केतकाशोकसरलाःपुन्नागतिलकार्जुनाः ॥ चूता
नीपानागपुष्पाःकदंबबकुलाधवाः ६४ प्रियंगुपाटलीवृक्षाःशाल्मल्यःसहरिद्रकाः ॥ शालास्तालाःप्रियालाश्चचंपकाश्चमनोरमाः ६५ तथाचान्ये
व्यराजंतसभायांपुष्पिताद्रुमाः ॥ वैद्रुमाश्चद्रुमानीकादावाग्निज्वलितप्रभाः ६६ स्कंधवंतःसुशाखाश्चबहुतालसमुच्छ्रयाः ॥ अंजनाशोकवर्णाभांतिवं
जुलकाद्रुमाः ६७ वरणावत्सनाभाश्चपनसाश्चंदनैःसह ॥ नीलाःसुमनसश्चैवपीताम्लाश्चतथातिंदुकाः ६८ प्राचीनामलकालोध्रामल्लिकाभद्रदारवः ॥
आम्रातकास्तथाजंबूलकुचाःशैलवालुकाः ६९ सर्जार्जुनाःकंदुरवाःपतंगाःकुटजास्तथा ॥ रक्ताःकुरबकाश्चैवनीपाश्चागरुभिःसह ७० कदंबाश्चैवभव्या
श्चदाडिमीबीजपूरकाः ॥ कालीयकादुकूलाश्चहिंगवस्तैलपर्णिकाः ७१ खर्जूरानालिकेराश्चपूगवृक्षाहरीतकी ॥ मधूकाःसप्तपर्णाश्चबिल्वाःपारावतास्तथा
७२ पनसाश्चतमालाश्चनानागुल्मलतावृताः ॥ लताश्चविविधाकाराःपत्रपुष्पफलोपगाः ७३ एतेचान्येचबहवस्तत्रकाननजाद्रुमाः ॥ नानापुष्पफलोपे
ताव्यराजंतसमंततः ७४ चकोराःशतपत्राश्चमत्तकोकिलसारिकाः ॥ पुष्पितान्फलिताग्रांश्चसंपतंतिमहाद्रुमान् ७५ रक्तपीतारुणास्तत्रपादपाग्रगताद्वि
जाः ॥ परस्परमवैक्षंतप्रहृष्टाजीवजीवकाः ७६ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ छ ॥ ॥ छ ॥
॥ वैशंपायनउवाच ॥ ॥ तस्यांसभायांदैत्येंद्रोहिरण्यकशिपुःप्रभुः ॥ आसीनआसनेदिव्येनल्वमात्रेप्रमाणतः १ दिवाकरनिभेरम्येदिव्यास्तरण
संभृते ॥ रराजसुचिरंराजन्ज्वलत्कांचनकुंडलः २ तस्यदैत्यपतेर्मंदंविरजस्कंसमंततः ॥ दिव्यगंधवहस्तत्रमारुतःसुमुखोववौ ३

इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ छ ॥ तस्यामितिनल्वोहस्तचतुःशतंतावन्मात्रे ॥ १ ॥ २ ॥ मंदंविरजस्कंचयथास्यात्तथाववौ ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ११ ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ददर्शेत्यत्रददर्शेइतिस्वरभक्त्याक्षरपूर

तत्रदेवाःसगंधर्वागणैरप्सरसांवृताः ॥ दिव्यतालेनदिव्यानिजगुर्गीतानिगायनाः ४ विश्वाचीसहजन्याचप्रम्लोचेत्यभिविश्रुता ॥ दिव्याचसौरभेयाचस
मीचीपुंजिकस्थला ५ मिश्रकेशीचरंभाचचित्रसेनाशुचिस्मिता ॥ चारुनेत्राघृताचीचमेनकाचोर्वशीतथा ६ एताःसहस्रशश्चान्यानृत्यगीतविशारदाः ॥
उपतिष्ठंतिराजानंहिरण्यकशिपुंतदा ७ हिरण्यकशिपुस्तत्रविचित्राभरणांबरः ॥ स्त्रीसहस्रैःपरिवृतस्तस्थौज्वलितकुंडलः ८ तत्रासीनंमहाबाहुंहिरण्यक
शिपुंप्रभुं ॥ उपासंतिदितेःपुत्राःसर्वेलब्धवराःपुरा ९ बलिर्वैरोचनस्तत्रनरकःपृथिवीजयः ॥ प्रह्लादोविप्रचित्तिश्चगविष्ठश्चमहासुरः १० अहंताक्रोधहं
ताचसुमनाःसुमतिःखरः ॥ घटोदरोमहापार्श्वःक्रथनःपिठरस्तथा ११ विश्वरूपश्वरूपश्चविरूपश्चमहाद्युतिः ॥ दशग्रीवश्चवालीचमेघवासामहारवः १२
कटाभोविकटाभश्चसंह्रादश्चेंद्रतापनः ॥ दैत्यदानवसंघाश्चसर्वेज्वलितकुंडलाः १३ स्रग्विणोवाग्मिनःसर्वेसर्वेसुचारितव्रताः ॥ सर्वेलब्धवराःशूराःसर्वेवि
गतमृत्यवः १४ एतेचान्येचबहवोहिरण्यकशिपुंप्रभुम् ॥ उपासंतेमहात्मानंसर्वेदिव्यपरिच्छदाः १५ विमानैर्विविधैरग्र्यैर्भ्राजमानैरिवार्चिभिः ॥
स्रग्विणोभूषणधरायांतिचायांतिहेलया १६ विचित्राभरणोपेताविचित्रवसनास्तथा ॥ विचित्रशस्त्रकवचाविचित्रध्वजवाहनाः १७ महेंद्रचापसंकाशै
र्विचित्रैरंगदैर्वरैः ॥ भूषितांगादितेःपुत्रास्तमुपासंतिनित्यशः १८ तस्यांसभायांदिव्यायामसुराःपर्वतोपमाः ॥ हिरण्यमुकुटाःसर्वेदिवाकरसमप्रभाः १९
कनकमणिविचित्रवेदिकायामुपहितरत्नसहस्रवीथिकायाम् ॥ सददर्शमृगाधिपःसभायांसुरुचिरदंतगवाक्षसंवृतायाम् २० कनकविमलहारभूषितांगंदि
तितनयंसमृगाधिपोददर्श ॥ दिवसकरकरप्रभंज्वलंतमसुरसहस्रगणैर्निषेव्यमाणम् २१ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनारसिंहेद्विचत्वारिं
शोऽध्यायः ४२ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततोदृष्ट्वामहाबाहुंकालचक्रमिवागतम् ॥ नारसिंहवपुश्छन्नंभस्मच्छन्नमिवानलम् १
विकुंचितसटंतस्यनारसिंहस्यभारत ॥ रूपौदार्यंबभौतत्रसहस्रशशिसन्निभम् २ अहोरूपमिदंचित्रंशंखकुंदेंदुसन्निभम् ॥ अब्रुवन्दानवाःसर्वेहिरण्यकशिपु
श्वसः ३ एवंहिब्रुवतांतेषांनिर्दग्धानांमहात्मनाम् ॥ नारसिंहेनचक्षुर्भ्यांचोदिताःकालधर्मणा ४ हिरण्यकशिपोःपुत्रःप्रह्लादोनामवीर्यवान् ॥ दिव्येनच
क्षुषासिंहमपश्यद्देवमागतम् ५ तंदृष्ट्वारुक्मशैलाभमपूर्वांतनुमास्थितम् ॥ विस्मितादानवाःसर्वेहिरण्यकशिपुश्वसः ६

णंज्ञेयं दंतगवाक्षाः झरोकाइतिभाषायांप्रसिद्धाः ॥ २१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ छ ॥
ततोदृष्ट्वा ॥ १ ॥ ॥ २ ॥ ३ ॥ चोदिताः चोदितानामितिषष्ठ्यर्थेप्रथमा ॥ ४ ॥ ५ ॥ ६ ॥

॥ ७ ॥८॥ ९ ॥ १० ॥ ११ ॥ १२ ॥१३॥ यथामहादर्शकल्पेचंद्रमंडलेचक्षुधरियतांरूकं जगद्दृष्टिगोचरीभवत्यस्येतियोगिप्रसिद्धोयंदृष्टांतः ॥ १४ ॥ १५ ॥ १६ ॥

प्रह्लादउवाच ॥ महाराजमहाबाहोदैत्यानामादिसंभव ॥ नश्रुतंनैवदृष्टंचनारसिंहमिदंवपुः ७ अव्यक्तप्रभवंदिव्यंकिमिदंरूपमद्भुतम् ॥ दैत्यांतकरणंघोरं शंसतीवमनांसिनः ८ अस्यदेवाःशरीरस्थाःसागराःसरितस्तथा ॥ हिमवान्पारियात्रश्चयेचान्येकुलपर्वताः ९ चंद्रमाःसहनक्षत्रैरादित्याश्चाश्विनौतथा ॥ धनदोवरुणश्चैवयमःशक्रःशचीपतिः १० मरुतोदेवगंधर्वामुनयश्चतपोधनाः ॥ नागायक्षाःपिशाचाश्चराक्षसाभीमविक्रमाः ११ ब्रह्मदेवःपशुपतिर्ल ळाटस्थाविभांतिवै ॥ स्थावराणिचभूतानिजंगमानितथैवच १२ भवांश्चसहितोऽस्माभिःसर्वैर्दैत्यगणैर्वृतः ॥ विमानशतसंकीर्णातथाभ्यंतरजासभा ॥ १३ सर्वंत्रिभुवनंराजन्लोकधर्मश्चशाश्वतः ॥ दृश्यतेनारसिंहेस्मिन्यथेंदौविमलंजगत् १४ प्रजापतिश्चात्रमनुर्महात्माग्रहाश्चयोगाश्चमहीनभश्च ॥ उत्पा तकालश्चधृतिःस्मृतिश्चरजश्चसत्त्वंचतपोदमश्च १५ सनत्कुमारश्चमहानुभावोविश्वेचदेवाप्सरसश्चसर्वाः ॥ क्रोधश्चकामश्चतथैवहर्षोदर्पश्चमोहःपितरश्चस र्वे १६ इत्येवमुक्त्वासचदैत्यराजंहिरण्यनामानमविस्मयेन ॥ दध्यौचदत्येश्वरपुत्रउग्रंमहामतिःकिंचिदधोमुखःप्राक् ॥ १७ ॥ ॥ इतिश्रीमहाभारते खिलेषुहरिवंशेभविष्यपर्वणिनारसिंहेत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ प्रह्लादस्यचतच्छ्रु त्वाहिरण्यकशिपुर्वचः ॥ उवाचदानवान्सर्वान्सगणांश्चगणाधिपः १ मृगेंद्रोगृह्यतांशीघ्रमपूर्वांतनुमास्थितः ॥ यदिवासंशयःकश्चिद्वध्यतांवनगोचरः २ तच्छ्रुत्वादानवाःसर्वेमृगेंद्रंभीमविक्रमम् ॥ परिक्षिपंतोमुदितास्त्रासयामासुरोजसा ३ सिंहनादंनदित्वातुपुनःसिंहोमहाबलः ॥ बभंजतांसभांरम्यांव्यादि तास्यइवांतकः ४ सभायांभज्यमानायांहिरण्यकशिपुःस्वयम् ॥ चिक्षेपास्त्राणिसिंहस्यरोषव्याकुललोचनः ५ सर्वास्त्राणामथश्रेष्ठंदंडमस्त्रंसुभैरवम् ॥ कालचक्रंतथात्युग्रंविष्णुचक्रंतथैवच ६ धर्मचक्रंमहच्चक्रमजितंनामनामतः ॥ चक्रमैंद्रंतथाघोरमृषिचक्रंतथैवच ७ पैतामहंतथाचक्रंत्रैलोक्यमहितस्वनम्॥ विचित्रामशनींचैवशुष्कार्द्रंचाशनिद्वयम् ८ रौद्रंतदुग्रंशूलंचकंकालंमुशलंतथा ॥ अस्त्रंब्रह्मशिरश्चैवब्राह्ममस्त्रंतथैवच ९ ऐषीकमस्त्रमैंद्रंचआग्नेयंशैशिरंत था ॥ वायव्यंमथनंनामकापालमथकिंकरम् १० तथाचाप्रतिमांशक्तिंक्रौंचमस्त्रंतथैवच ॥ अस्त्रंहयशिरश्चैवसौम्यमस्त्रंतथैवच ११ पैशाचमस्त्रममितंसा र्प्यमस्त्रंतथाद्भुतम् ॥ मोहनंशोषणंचैवसंतापनविलापने १२ जृंभणंप्रापणंचैवत्वाष्ट्रंचैवसुदारुणम् ॥ कालमुद्गरमक्षोभ्यंक्षोभणंतुमहाबलम् १३ सं वर्त्तनंमोहनंचतथामायाधरंपरम् ॥ गांधर्वमस्त्रंदयितमसिरत्नंचनंदकम् १४

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ शुष्कानिर्मे घाः आर्द्राःसमेघाः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

६२ प्रस्वापनंप्रमथनंवारुणंचास्त्रमुत्तमम् ॥ अस्त्रंपाशुपतंचैवयस्याप्रतिहतागतिः १५ एतान्यस्त्राणिसर्वाणिहिरण्यकशिपुस्तदा ॥ चिक्षेपनरसिंहस्यदीप्तस्या अ०४४
ग्नेर्यथाहुतिः १६ अस्त्रैःप्रज्वलितैःसिंहमावृणोदसुराधिपः ॥ विवस्वान्धर्मसमयेहिमवंतमिवांशुभिः १७ सह्यमर्षानिलोद्भूतोदैत्यानांसैन्यसागरः ॥ क्षणे
नप्लावयन्सिंहंमैनाकमिवसागरः १८ प्रासैःपाशैस्तथाशूलैर्गदाभिर्मुशलैस्तथा ॥ वज्रैरशनिकल्पैश्चशिलाभिश्चमहाद्रुमैः १९ मुद्गरैःकूटपाशैश्चशूलोलूख
लपर्वतैः ॥ शतघ्नीभिश्चदीप्ताभिर्दंडैरपिसुदारुणैः २० परिवार्यसमंताच्चनिघ्नन्त्रैर्हरितदा ॥ स्वल्पमप्यस्यनक्षुण्णमूर्जितस्यमहात्मनः २१ तेदानवाःपा
शगृहीतहस्तामहेंद्रवज्राशनितुल्यवेगाः ॥ समंततोभ्युद्यतबाहुशस्त्राःस्थितास्त्रिशीर्षाइवपन्नगेंद्राः २२ सुवर्णमालाकुलभूषितांगानानांगदाभोगपिनद्ध
गात्राः ॥ मुक्तावलीदामविभूषितांगाहंसाइवाभांतिविशालपक्षाः २३ तेषांतुवायुप्रतिमौजसांवैकेयूरमालावलयोत्कटानि ॥ तान्युत्तमांगान्यभितो
विभांतिप्रभातसूर्यांशुसमप्रभाणि २४ तैःप्रक्षिपद्भिर्ज्वलतानलोपमैर्महास्त्रपूगैःससमावृतोबभौ ॥ गिरिर्यथासंततवर्षिभिर्घनैःकृतांधकारोद्भुतकंदरद्रुमः
२५ तैर्हन्यमानोपिमहास्त्रजालैःसर्वैस्तदादैत्यगणैःसमेतैः ॥ नाकंपताजौभगवान्प्रतापवान्स्थितःप्रकृत्याहिमवानिवाचलः २६ संतापितास्तेनरसिंहरू
पिणादितेःसुताःपावकदीप्ततेजसा ॥ भयाद्विचेलुःपवनोद्धतायथामहोर्मयःसागरवारिसंभवाः २७ शतैर्धनुर्भिःसुमहातिवेगायुगांतकालप्रतिमाञ्छरौ
घान् ॥ एकायनस्थामुमुचुर्नृसिंहेमहासुराःक्रोधविदीपितांगाः २८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनारसिंहेचतुश्चत्वारिंशोऽध्या
यः ४४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ खराःखरमुखाश्चैवमकराशीविषाननाः ॥ ईहामृगमुखाश्चान्येवराहसदृशाननाः १ बालसूर्यमुखाश्चै
वधूमकेतुमुखास्तथा ॥ चंद्रार्द्धचंद्रवक्त्राश्चप्रदीप्ताग्निमुखास्तथा २ हंसकुक्कुटवक्त्राश्चव्यादितास्याभयावहाः ॥ पंचास्यालेलिहानाश्चकाकगृध्रमुखास्त
था ३ विद्युज्जिह्वास्त्रिशीर्षाश्चतथोल्कासन्निभाननाः ॥ महाग्राहनिभाश्चान्येदानवाबलदर्पिताः ४ कैलासवपुषस्तस्यशरीरेशरवृष्टयः ॥ अवध्यस्यमृगेंद्र
स्यनव्यथांचक्रुराहवे ५ एवंभूयोपरान्घोरानसृजन्दानवाःशरान् ॥ मृगेंद्रस्योरसिक्रुद्धानिःश्वसंतइवोरगाः ६ तेदानवशराघोरामृगेंद्रायसमीरिताः ॥ विल
यंजग्मुराकाशेखद्योताइवपर्वते ७ ततश्चक्राणिदिव्यानिदैत्याःक्रोधसमन्विताः ॥ मृगेंद्रायाक्षिपंत्याशुप्रज्वलंतीवसर्वशः ८ ६२

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ नगमात्रैः वृक्षप्रमाणैः ॥ १७ ॥ १८ ॥ तदूतंअश्मेत्यादि ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

तैरासीद्गगनंचक्रैःसंपतद्भिःसमावृतं ॥ युगांतेसंप्रकाशद्भिश्चंद्रसूर्यग्रहैरिव ९ तानिचक्राणिवदनंप्रविशंतिविभांतिवै ॥ मेघोदरदरींघोरांचंद्रसूर्यग्रहाइव ॥
१० तानिचक्राणिसर्वाणिमृगेंद्रेणमहात्मना ॥ निगीर्णानिप्रदीप्तानिपावकार्चिसमानिवै ११ हिरण्यकशिपुर्दैत्योभूयःप्रासृजदूर्जिताम् ॥ शक्तिंप्रज्वलि
तांघोरांहुताशनसमप्रभाम् १२ तामापतंतींसंप्रेक्ष्यमृगेंद्रःशक्तिमुत्तमाम् ॥ हुंकारेणैवरौद्रेणबभंजभगवांस्तदा १३ रराजभग्नासाशक्तिर्मृगेंद्रेणमहीतले ॥
सविस्फुलिंगाज्वलितामहोल्केवनभश्च्युता १४ नाराचपंक्तिःसिंहस्यसृष्टारेजेविदूरतः ॥ नीलोत्पलपलाशानांमालेवोज्ज्वलदर्शना १५ गर्जित्वातुय
थाकामंविक्रम्यचयथासुखम् ॥ तत्सैन्यमुत्सारितवान्तृणाग्राणिवमारुतः १६ ततोश्मवर्षंदैत्येंद्राव्यसृजंतनभोगताः ॥ नगमात्रैःशिलाखंडैर्गिरिकूटैर्महा
प्रभैः १७ तदश्मवर्षंसिंहस्यगात्रेनिपातितंमहत् ॥ दिशोदशप्रकीर्णंहिखद्योतप्रकरोयथा १८ तदश्मौघैर्दितिसुतास्तदासिंहमरिंदम् ॥ प्रच्छादयन्यथामे
घाधाराभिरिवपर्वतम् १९ नचतंचालयामासुर्दैत्यौघादेवमास्थितम् ॥ भीमवेगाबलश्रेष्ठंसमुद्राइवपर्वतम् २० ततोश्मवर्षेनिहतेजलवर्षमनंतरम् ॥
धाराभिरक्षमात्राभिःप्रादुरासीत्समंततः २१ नभसःप्रच्युताधारास्तिग्मवेगाःसहस्रशः ॥ आवृण्वन्त्सर्वतोव्योमदिशश्चोपदिशस्तथा २२ धाराणांसन्नि
पातेनवायोर्विस्फूर्जितेनच वर्द्धताचैववर्षेणनप्राज्ञायतकिंचन २३ धारादिविचसंसक्तावसुधायांचसर्वशः ॥ नस्पृशंतिस्मतंतत्रनिपतंत्योनिशंभुवि २४
बाह्यतोववृषेवर्षंनोपरिष्टाच्चुतोयदः ॥ मृगेंद्रप्रतिरूपस्यस्थितस्ययुधिमायया २५ हतेश्मवर्षेतुमुलेजलवर्षेचशोषिते ॥ ससृजुर्दानवामायामग्निंवायुंचस
र्वशः २६ नभसःप्रच्युतश्चैवतिग्मवेगःसमंततः ॥ ज्वालामालीमहारौद्रोदीप्ततेजाःसमंततः २७ ससृष्टःपावकस्तेनदैत्येंद्रेणमहात्मना ॥ नशशाकमहातेजा
दग्धुमप्रतिमौजसम् २८ तमिंद्रस्तोयदैःसार्धंसहस्राक्षोमितद्युतिः ॥ महतातोयवर्षेणशमयामासपावकम् २९ तस्यांप्रतिहतायांतुमायायांयुधिदानवाः ॥
ससृजुर्घोरसंकाशंतमस्तीव्रंसमंततः ३० तमसासंवृतेलोकेदैत्येष्वात्तायुधेषुवै ॥ स्वतेजसापरिवृतोदिवाकरइवाबभौ ३१ त्रिशिखांभ्रुकुटींचास्यददृशुर्दान
वारणे ॥ ललाटस्थांत्रिकूटस्थांगंगांत्रिपथगामिव ३२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनारसिंहेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ छ ॥

नस्पृशंतिमध्येएवशुष्यंतीत्यर्थः ॥ २४ ॥ मृगेंद्रस्योपरिष्टान्नअन्यत्रतुअस्तीत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ इतिश्रीमहाभार
तेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

तत इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अयोगतःयथोक्तवृद्धिह्राससंबंधंविनातीववृद्ध्यातीवह्रासेनच नियतगतिरप्यनियतंजगाम ॥ ८ ॥ विवर्णत्वंनिष्प्रभत्वंक

॥ वैशंपायनउवाच ॥ ततःसर्वासुमायासुहतासुदितिनंदनाः ॥ हिरण्यकशिपुंसर्वेविषण्णाःशरणंगताः १ ततःप्रज्वलितःक्रोधात्प्रदहन्निवतेजसा ॥ हि
रण्यकशिपुर्दैत्यश्चालयामासमेदिनीम् २ ततःप्रक्षुभिताःसर्वेसागराःसलिलाकराः ॥ चलितागिरयःसर्वेसकाननवनद्रुमाः ३ तस्मिन्क्रुद्धेतुदैत्येंद्रेतमोभू
तमभूज्जगत् ॥ तमसासमभूच्छन्नंनप्राज्ञायतकिंचन ४ आवहःप्रवहश्चैवविवहश्चसमीरणः ॥ परावहःसंवहश्चैवउद्वहश्चमहाबलः ५ तथापरिवहःश्रीमान्मारु
ताभयशंसिनः ॥ इत्येतेक्षुभिताःसप्तमारुतागगनेचराः ६ येग्रहाःसर्वलोकस्यक्षयेप्रादुर्भवंतिवै ॥ तेग्रहागगनेहृष्टाविचरंतियथासुखम् ७ अयोगतश्चता
रासुसर्वेष्वर्क्षेषुसंगताः ॥ सग्रहंसहनक्षत्रंप्रजज्वालनभोनृप ८ विवर्णत्वंचभगवान्गतोदिविदिवाकरः ॥ कृष्णःकबंधश्चमहाँल्लक्ष्यतेचनभस्तले ९ अमुं
चच्चासितांसूर्योधूमवर्तिंभयावहाम् ॥ गगनस्थश्चभगवानभीक्ष्णंपरितप्यते १० सप्तधूमनिभाघोराःसूर्यादिविसमुत्थिताः ॥ सोमस्यगगनस्थस्यग्रहा
स्तिष्ठंतिशृंगगाः ११ वामेचदक्षिणेचैवस्थितौशुक्रबृहस्पती ॥ शनैश्चरोलोहितांगोलोहितार्कसमद्युतिः १२ समंसमभिरोहंतिदुर्गाणिगगनेचराः ॥ शृंगा
णिकनकैर्घोरायुगांतावर्तकाग्रहाः १३ चंद्रमाःसहनक्षत्रैर्ग्रहैःसप्तभिरावृतः ॥ चराचरविनाशार्थंरोहिणींनाभ्यनंदत १४ गृहीतोराहुणाचंद्रउल्काभिरं
भिहन्यते ॥ उल्काःप्रज्वलिताश्चंद्रेप्रचेलुर्घोरदर्शनाः १५ देवानामपियोदेवःसोभ्यवर्षतशोणितम् ॥ अपतन्गगनादुल्काविद्युद्रूपाःसनिःस्वनाः १६
अकालेपादपाःसर्वेपुष्पंतिचफलंतिच ॥ लताश्चसफलाःसर्वायाःप्राहुर्दैत्यनाशनम् १७ फलेफलान्यजायंतपुष्पेपुष्पंतथैवच ॥ उन्मीलंतिनिमीलंतिह
संतिचरुदंतिच १८ विक्रोशंतिचगंभीरंधूमयंतिज्वलंतिच ॥ प्रतिमाःसर्वदेवानांकथयंतियुगक्षयम् १९ आरण्यैःसहसंसृष्टाग्राम्याश्चमृगपक्षिणः ॥ चुक्रुशु
र्भैरवंतत्रमृगेंद्रेसमुपस्थिते २० नद्यश्चप्रतिलोमाहिवहंतिकलुषोदकाः ॥ अपराह्णगतेसूर्येलोकानांक्षयकारके २१ नप्रकाशंतिचदिशोरक्तरेणुसमाकुलाः ॥
वानस्पत्यानपूज्यंतेपूजनार्हाःकथंचन २२ वायुवेगेनहन्यंतेभिद्यंतेप्रणुदंतिच ॥ तदाचसर्वभूतानांछायानपरिवर्त्तते २३ अपराह्णगतेसूर्येलोकानांचयुग
क्षये ॥ तदाहिरण्यकशिपोर्दैत्यस्योपरिवेश्मनः २४ भांडागारायुधागारेनिविष्टमभवन्मधु ॥ तथैवचायुधागारेधूमराजिरदृश्यत २५ सचदृष्ट्वामहोत्पाता
न्हिरण्यकशिपुस्तदा ॥ पुरोहितंतदाशुक्रंवचनंचेदमब्रवीत् २६

बंधोराहुरदृश्योपिदृश्यत्वंगतइत्यर्थः ॥ ९ ॥ १० ॥ सप्तग्रहाःसोमस्यशृंगगाइतियोजना ॥ ११ ॥ १२ ॥ कनकैर्निर्मितानिशृंगाणिमेरोरित्यर्थात् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥
॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ वानस्पत्याःचैत्यदेवताः ॥ २२ ॥ २३ ॥ अपराह्णगतेपिसूर्येछायानपरिवर्त्तते निष्प्रभत्वात्सूर्यस्येत्यर्थः २४ मधुक्षौद्रपटलम् २५ २६

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ पृथिवीधरणानिदिग्गजादीनि ॥ ४० ॥ नागःशेषःतेजोधराः

किमर्थंभगवन्नेतेमहोत्पाताःसमुत्थिताः ॥ श्रोतुमिच्छामितत्त्वेनपरंकौतूहलंहिमे २७ शुक्रउवाच ॥ ॥ शृणुराजन्नवहितोवचनंमेमहासुर ॥ यदर्थमिह दृश्यंतेमहोत्पातामहाभयाः २८ यस्यैतेसंप्रदृश्यंतेराज्ञोराष्ट्रेमहासुर ॥ देशोवाम्रियतेतस्यराजावाबंधमर्हति २९ अतोबुद्ध्यासमीक्षस्वयथासर्वंप्रणश्यति बृहद्भयंहिनचिराद्भविष्यातिनसंशयः ३० एतावदुक्त्वाशुक्रस्तुहिरण्यकशिपुंतदा ॥ स्वस्तीत्युक्त्वातुदैत्येंद्रंजगामस्वंनिवेशनम् ३१ तस्मिन्गतेसदैत्यें द्रोध्यातवान्सुचिरंतदा ॥ आसांचक्रेसुदीनात्माब्रह्मवाक्यमनुस्मरन् ॥ असुराणांविनाशायसुराणांविजयायच ३२ दृश्यंतेविविधोत्पाताघोरावोरनिदर्श नाः ॥ एतेचान्येचबहवोघोरात्युत्पातदर्शनाः ३३ दैत्येंद्राणांविनाशायदृश्यंतेकालनिर्मिताः ॥ ततोहिरण्यकशिपुर्गदामादायसत्वरं ३४ अभ्यद्रवतवेगे नधरणीमनुकंपयन् ॥ हिरण्यकशिपुर्दैत्योयदासंसृष्टवान्महीं ३५ संदष्टोष्ठपुटःक्रोधाद्वराहइवपूर्वजः ॥ मेदिन्यांकंपमानायांदैत्येंद्रेणमहात्मना ३६ मही धरेभ्योनाग्रेंद्रानिपेतुर्भयविक्लवाः ॥ विषज्वालाकुलैर्वक्त्रैर्विमुंचंतोहुताशनं ३७ चतुःशीर्षाःपंचशीर्षाःसप्तशीर्षाश्चपन्नगाः ॥ वासुकिस्तक्षकश्चैवकर्कोटकध नंजयौ ३८ एलापत्रश्चकालीयोमहापद्मश्चवीर्यवान् ॥ सहस्रशीर्षधृङ्नागोहेमतालध्वजःप्रभुः ३९ शेषोनंतोमहीपालोदुष्प्रकंपःप्रकंपितः ॥ दीप्तान्यंत र्जलस्थानिपृथिवीधरणानिच ४० तदाक्रुद्धेनदैत्येनकंपितानिसमंततः ॥ पातालतलचारिण्योनागतेजोधराःशिवाः ४१ आपश्चसहसाक्रुद्धादुष्प्रकंप्यर साःशुभाः ॥ नदीभागीरथीचैवसरयूःकौशिकीतथा ४२ यमुनाचैवकावेरीकृष्णावेणातथैवच ॥ सुवेणाचमहाभागानदीगोदावरीतथा ४३ चर्मण्वतीच सिंधुश्चतथानदनदीपतिः ॥ मेकलप्रभवश्चैवशोणोमणिनिभोदकः ४४ सुस्रोतानर्मदाचैवतथावेत्रवतीनदी ॥ गोमतीगोकुलाकीर्णातथापूर्णासरस्वती ४५ महीकालनदीचैवतमसापुण्यवाहिनी ॥ सिताचेक्षुमतीचैवदेविकाचमहानदी ४६ जंबुद्वीपंरत्नवंतंसर्वरत्नोपशोभितं ॥ सुवर्णकूटकंचैवसुवर्णाकरमं डितम् ४७ महानदश्चलोहित्यःशैलकाननशोभितः ॥ पत्तनंकौशिकारण्यंद्रविडंरजताकरं ४८ मागधांश्चमहाग्रामानंगान्वंगांस्तथैवच ॥ सुह्मान्मल्ला न्विदेहांश्चमालवान्काशिकोसलान् ४९ भुवनंवैनतेयस्यसुवर्णस्यचकंपितम् ॥ कैलासशिखराकारंयत्कृतंविश्वकर्मणा ५० रक्ततोयोभीमवेगोलौहित्यो नामसागरः ॥ शुभ्रःपांडुरमेघाभःक्षीरोदश्चैवसागरः ५१ उदयश्चैवराजेंद्रउच्छ्रितःशतयोजनम् ॥ सुपर्णवेदिकःश्रीमान्नागपक्षिनिषेवितः ५२ भ्राजमानो र्कसदृशैर्जातरूपमयैर्द्रुमैः ॥ शालैस्तालैस्तमालैश्चकर्णिकाभिश्चपुष्पितैः ५३

मणिगततेजोमूर्धानः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

६४ अयोमुखश्चविपुलःसर्वतोधातुमंडितः ॥ तमालवनगंधश्चपर्वतोमलयःशुभः ५४ सुराष्ट्राश्चसुबाह्लीकाःशूराभीरास्तथैवच ॥ भोजाःपांड्याश्चवंगाश्चकलिं अ० ४६
गास्ताम्रलिप्तकाः ५५ तथैवांध्राश्चपुंड्राश्चवामचूडाःसकेरलाः ॥ क्षोभितास्तेनदैत्येनसदेवाःसाप्सरोगणाः ५६ अगस्तिभुवनंचैवयदगम्यंपुराकृतम् ॥
सिद्धचारणसंघैश्चसेवितंसुमनोहरम् ५७ विचित्रनागविहगंसुपुष्पितलताद्रुमम् ॥ जातरूपमयैःशृंगैरप्सरोगणसेवितम् ५८ गिरिःपुष्पितकश्चैवल
क्ष्मीवान्प्रियदर्शनः ॥ उत्थितःसागरंभित्वावयस्यश्चंद्रसूर्ययोः ५९ रराजसुमहाशृंगैर्गगनंविलिखन्निव ॥ सूर्यचंद्रांशुसंकाशैःसागरांबुसमावृतः ॥
६० विद्युद्वान्पर्वतःश्रीमानायातःशतयोजनम् ॥ विद्युतांयत्रसंपातानिपात्यंतेनगोत्तमे ६१ ऋषभःपर्वतश्चैवश्रीमानृषभसंस्थितः ॥ कुंजरःपर्वतश्चै
वयत्रागस्त्यगृहंमहत् ६२ विशालरथ्यादुर्धर्षासर्पाणामालयापुरी ॥ तथाभोगवतीचापिदैत्येंद्रेणाभिकंपिता ६३ महामेघगिरिश्चैवपारियात्रश्चप
र्वतः ॥ चक्रवांश्चगिरिःश्रेष्ठोवाराहश्चैवपर्वतः ६४ प्राग्ज्योतिषपुरंचैवजातरूपमयंशुभम् ॥ यस्मिन्वसतिदुष्टात्मानरकोनामदानवः ६५ मेरुश्चप
र्वतश्रेष्ठोमेघगंभीरनिःस्वनः ॥ षष्टिंतत्रसहस्राणिपर्वतानांविशांपते ६६ तरुणादित्यसंकाशोमहेंद्रश्चमहागिरिः ॥ देवावासःशुभःपुण्योगिरिराजोदिवंग
तः ६७ हेमशृंगोमहाशैलस्तथामेघसखोगिरिः ॥ कैलासश्चापिदुष्कंपोदानवेंद्रेणकंपितः ६८ यक्षराक्षसगंधर्वैर्नित्यंसेवितकंदरः ॥ श्रीमन्मनो
हरश्चैवनित्यंपुष्पितपादपः ६९ हेमपुष्करसंच्छन्नंतेनवैखानसंसरः ॥ कंपितंमानसंचैवराजहंसैर्निषेवितम् ७० त्रिशृंगःपर्वतश्चैवकुमारीचसरिद्वरा ॥ तु
षारचयसंकाशोमंदरश्चैवपर्वतः ७१ उशीरबीजश्चगिरिरुद्रोपस्थस्तथाद्रिराट् ॥ प्रजापतेश्चनिलयस्तथापुष्करपर्वतः ७२ देवाभ्रपर्वतश्चैवतथावैवालुको
गिरिः ॥ क्रौंचःसप्तर्षिशैलश्चधूमवर्णश्चपर्वतः ७३ एतेचान्येचगिरयोदेशाजनपदास्तथा ॥ नद्यश्चसागराश्चैवदानवेंद्रेणकंपिताः ७४ कपिलश्चमहीपुत्रो
व्याघ्राक्षश्चैवकंपितः॥ खेचराश्चनिशापुत्राःपातालतलवासिनः ७५ गणास्तथापरेरौद्रामेघनादांकुशायुधाः ॥ ऊर्ध्वगोभीमवेगश्चसर्वएवाभिकंपिताः ७६
॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनारसिंहेषट्चत्वारिंशोऽध्यायः ४६ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ तत्रादित्याश्चसाध्या
श्वविश्वेचमरुतस्तथा ॥ रुद्रादेवामहात्मानोवसवश्चमहाबलाः १ आगम्यतेमृगेंद्रस्यसकाशंसूर्यवर्चसः ॥ ऊचुःसंत्रस्तमनसोदेवालोकक्षयार्दिताः २ ज ६४
हिदेवदितेःपुत्रंदानवंलोकनाशनम् ॥ दुर्वृत्तमसदाचारंसहसैर्महासुरैः ३

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभाविष्यपर्वणिटीकायांषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ वैशंपायनउवाच तत्रेति ॥ १ ॥ २ ॥ ३ ॥

त्वंह्येषामंतकृन्नान्योदैत्यानांदैत्यनाशन ॥ तन्नाशयहितार्थायलोकानांस्वस्तिवैकुरु ४ त्वंगुरुःसर्वलोकानांत्वमिंद्रस्त्वंपितामहः ॥ ऋतेत्वदन्यच्छरणंन भूतंनभविष्यति ५ तच्छ्रुत्वावचनंदेवोदेवानामादिसंभवः ॥ ननादसुमहानादमतिगंभीरनिःस्वनम् ६ पाटितान्यसुरेंद्राणांमृगेंद्रेणमहात्मना ॥ सिंहना देनमहताहृदयानिमनांसिच ७ गणःक्रोधवशोनामकालकेयस्तथापरः ॥ वेगश्चवैगलेयश्चसिंहिकेयश्चवीर्यवान् ८ संह्लादीयोमहानादोमहावेगस्तथा परः ॥ कपिलश्चमहापुत्रोव्याघ्राक्षःक्षितिकंपनः ९ खेचराश्चनिशापुत्राःपातालतलचारिणः ॥ गणस्तथापरोरौद्रोमेवनादोंकुशायुधः १० ऊर्ध्वगोभी मवेगश्चभीमकर्मार्कलोचनः ॥ वज्रीशूलीकरालश्चहिरण्यकशिपुस्ततः ११ जीमूतघनसंकाशोजीमूतइववेगवान् ॥ जीमूतघनसंनादोजीमूतसदृश द्युतिः ॥ दृप्तैर्दैत्यगणैस्तुष्टोमृगेंद्रेणमहात्मना १२ देवारिर्दितिजोदृप्तोनृसिंहंसमुपाद्रवत् ॥ समुत्पत्यततस्तीक्ष्णैर्मृगेंद्रेणमहानखैः १३ तत्रोंकार सहायेनविदार्यनिहतोयुधि १४ महीचलोकश्चशशीनभश्चग्रहाश्चसूर्यश्चदिशश्चसर्वाः ॥ नद्यश्चशैलाश्चमहार्णवाश्चगताःप्रकाशंदितिपुत्रनाशात् १५ ततःप्रमुदितादेवाऋषयश्चतपोधनाः ॥ तुष्टुवु र्विविधैस्तोत्रैरादिदेवंसनातनम् १६ ॥ ॥ देवाऊचुः ॥ ॥ यत्त्वयाविहितंदेवनारसिंहमिदंवपुः ॥ एतदेवार्चयिष्यंतिपरावरविदोजनाः ८ मृगेंद्रस्त्वंचलोकेषुसर्वसत्वेषुवाविभो १७ गायंतित्वांचमुनयोमृगेंद्रइतिनित्यशः ॥ त्वत्प्रसादात्स्वकंस्थानंप्र तिपन्नास्मवैविभो १८ एवमुक्तोदेवसंघैर्नरसिंहोमहामनाः ॥ ब्रह्माचपरमप्रीतोविष्णोस्तोत्रमुदीरयत् १९ ॥ ब्रह्मोवाच ॥ भवानक्षरमव्यक्तमचिंत्यं गुह्यमुत्तमम् ॥ कूटस्थमकृतंकर्तृसनातनमनामयम् २० सांख्ययोगेचयाबुद्धिस्तत्वार्थपरिनिष्ठिता ॥ तांभवान्वेदविद्यात्मापुरुषःशाश्वतोध्रुवः २१ त्वंव्यक्तश्चतथाव्यक्तस्त्वत्तःसर्वमिदंजगत् ॥ भवन्मयावयंदेवभवानात्माभवान्प्रभुः २२ चतुर्विभक्तमूर्तिस्त्वंसर्वलोकविभुर्गुरुः ॥ चतुर्युगसहस्रेणसर्वलो कांतकांतकः २३ प्रतिष्ठासर्वभूतानामनंतबलपौरुषः ॥ कपिलप्रभृतीनांचयतीनांपरमागतिः २४ अनादिमध्यनिधनःसर्वात्मापुरुषोत्तमः ॥ स्रष्टात्वं त्वंचसंहर्तात्वमेकोलोकभावनः २५ भवान्ब्रह्माचरुद्रश्चमहेंद्रोवरुणोयमः ॥ भवान्कर्ताविकर्ताचलोकानांप्रभुरव्ययः २६

परांचसिद्धिमित्यादयः सप्तश्लोकाःपुनःपुनस्तमेवार्थंप्रकाशयंतीतिप्राञ्चःनृसिंहतापनीयोपनिषदितु विश्वादीनांचतुर्णांप्रत्येकंविश्वचतुष्टयगर्भितत्वेनषोडशभेदानुदाहृत्यईश्वर ग्रासस्तुरीयइतिचतुर्थस्यापिचतुर्थः षोडशोनृसिंहइत्युक्तंतदनुसारेणात्रापिआद्यंश्लोकत्रयंविश्वादिषुत्रिष्वंतर्भूतंयद्रूपंपरंतदेवप्रकाश्यते ततश्चतुर्भिःश्लोकैस्तुर्यस्यचत्वारोभेदाः ओ तानुज्ञानुज्ञा विकल्परूपावर्ण्यंतेइत्यपौनरुक्त्यं तत्राखंडैकरसंचिन्मात्रंकृत्स्नंजगत् खंडशर्करामयमिवसैत्यंसिकतामात्रंइत्येतत्दृष्टिराकारसत्वमुपेत्यतस्यचिन्मात्रत्वमुक्तंअनुज्ञातृ दृष्टौतुस्वाप्नजगद्वदाकारस्यमिथ्यात्वमुपेत्याचिन्मात्रमुक्तं अनुज्ञादृष्टौतुशशशृंगादिवद्विकल्पमात्रत्वमाकारस्येत्यतितुच्छत्वमुक्तम् अविकल्पेतुतुच्छत्वभानमपिनास्तीतिसप्तानां श्लोकानांयोजनातत्रपरशब्दाःपूर्वपूर्वापेक्षयाअपेक्षिकाः यथाइंद्रियेभ्यपराह्यर्थाअर्थेभ्यःश्चपरंमनः ॥ मनसस्तुपराबुद्धिर्बुद्धेरात्मापरात्परः ॥ महतःपरमव्यक्तमव्यक्तात्पुरुषः

**परांचसिद्धिंपरमंचदेवंपरंचमंत्रंपरमंमनश्च ॥ परंचधर्मंपरमंयशश्चत्वामाहुरग्र्यंपुरुषंपुराणम् २७ परंचसत्यंपरमंहविश्चपरंपवित्रंपरमंचमार्गम् ॥ परंचय ज्ञंपरमंचहोत्रंत्वामाहुरग्र्यंपुरुषंपुराणम् २८ परंशरीरंपरमंचधामपरंचयोगंपरमांचवाणीम् ॥ परंरहस्यंपरमांगतिंचत्वामाहुरग्र्यंपुरुषंपुराणम् २९ परं परस्यापिपरंचयत्परंपरंपरस्यापिपरंचदेवम् ॥ परंपरस्यापिपरंप्रभुंचत्वामाहुरग्र्यंपुरुषंपुराणम् ३० परंपरस्यापिपरंप्रधानंपरंपरस्यापिपरंचतत्वम् ॥ परंपरस्यापिपरंचधातारंत्वामाहुरग्र्यंपुरुषंपुराणम् ३१ परंपरस्यापिपरंरहस्यंपरंपरस्यापिपरंपरंयत् ॥ परंपरस्यापिपरंतपोयत्त्वामाहुरग्र्यंपुरुषंपुराणम् ३२ परंपरस्यापिपरंपरायणंपरंचगुह्यंचपरंचधाम ॥ परंचयोगंपरमंप्रभुत्वंत्वामाहुरग्र्यंपुरुषंपुराणम् ३३ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासभगवान्स र्वलोकपितामहः ॥ स्तुत्वानारायणंदेवंब्रह्मलोकंगतःप्रभुः ३४ ततोनदत्सुतूर्येषुनृत्यंतीष्वप्सरःसुच ॥ क्षीरोदस्योत्तरंकूलंजगामप्रभुरीश्वरः ३५ नार सिंहींतनुंत्यक्त्वास्थापयित्वाचतद्वपुः ॥ पौराणंरूपमास्थायययौसगरुडध्वजः ३६ अष्टचक्रेणयानेनभूतियुक्तेनशोभिना ॥ अव्यक्तःप्रकृतिर्देवः संस्थानमगमत्प्रभुः ३७**

परः ॥ पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरिति ॥ इंद्रियार्थमनोबुद्धिमहदव्यक्तपुरुषाणामुत्तरोत्तरंपरत्वम् इंद्रियाणानपिपरत्वंभगवताउक्तंइंद्रियाणिपराण्याहुरिति ॥ तद्व दत्रापिपरंपराज्ञेया इंद्रियादीन्येववासप्तसप्तानामपिश्लोकानांक्रमेणप्रतिपाद्यानिसर्वथापिनात्रपौनरुक्त्यदोषोस्तीतिसर्वंज्ञेयम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ उत्तरंकूलंश्वेतद्वीपम् ॥ ३५ ॥ त्यक्त्वाअदृश्यांकृत्वा तद्वपुःतस्याःप्रतिमांपौराणंवैष्णवंचतुर्भुजादिलक्षणम् ॥ ३६ ॥ भूतयुक्तेन पंचमहाभूतघटितेन अ ष्टचक्रेण· अष्टौग्रहाअष्टावतिग्रहाइत्यादिश्रुतिप्रसिद्धशब्दश्रोत्रादिग्रहातिग्रहरूपैरनिशंचक्रवच्चाल्यमानेनदेहेनसाधनेनअव्यक्तप्रकृतिरप्यष्टाकृतिरहंकारान्निकृष्टादेवआत्मानृसिंहरू पीस्वस्थानंनिर्विशेषचिन्मात्रस्वरूपंतद्विष्णोःपरमंपदमितिश्रुतिप्रसिद्धमगमत् ॥ ३७ ॥

॥ ३८ ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ नृसिंहइति ॥ १ ॥ २ ॥ ३ ॥ अत्रमइति नारायणइतिप्रख्यातरीत्याकृत्स्नब्रह्मांडलयस्थानभूतब्रह्मांडदेवासुरविभागमुपजीव्यदेवानांपक्षपातेनासुरान्विध्वंसोयतेत्युक्तंसर्वात्मनःस्वावयवेष्विवतेषुविषमबुद्ध्ययोगादितिशंकार्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ विष्णुत्वंवामनस्यापिकथंत्रैलोक्यव्यापकत्वंचेतिभावः ॥ ८ ॥ उत्तरमाह शृण्विति दिव्यांलौकिकदृष्टांतागम्यां अथापिऋषिपुंगवैर्मंत्रद्रष्टृप्रवरैरर्चितांकविभिर्ब्रह्मनिष्ठैःस्वानुभवप्रामाण्येनप्रकर्षेणोक्तांब्रह्मोक्तांमंत्रसूचितांब्राह्मणेमंत्रविवरणरूपेपिईरितांअयंभावः इंद्रोमायाभिःपुरुरूपईयतेइत्यादिश्रुतौएकस्यांमायायामसमवेतंबहुवचनंपाशन्यायेनतदवयवेषुसत्त्वरजस्तमःसुपर्यवस्यतितत्रसत्त्वप्रधानानिरूपाणिदेवतादीनि रजःप्रधानानियक्षरक्षःप्रभृतीनि तमःप्रधानानिभूतप्रेतादीनित्रिविधानींद्रस्यरूपाणितैःसत्त्वकार्यंकदा

एवंमहात्मनातेननृसिंहवपुषातदा ॥ देवेननिहतःपूर्वंहिरण्यकशिपुश्चसः ॥ ३८॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनारसिंहप्रादुर्भावेहिरण्यकशिपुवधकथनंनामसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥छ॥ वैशंपायनउवाच ॥ नृसिंहएषकथितोभूयोयंवामनोपरः ॥ यत्रवामनमास्थायरूपंरूपविदांवरः १ बलेर्बलवतोयज्ञेबलिनाविष्णुनापुरा ॥ विक्रमैस्त्रिभिराक्रम्यत्रैलोक्यमखिलंहृतम् २ समुद्रवसनाचोर्वीनानानगविभूषिता ॥ हृत्वादत्वासुरेंद्रायशक्रायप्रभविष्णुना ३ ॥ जनमेजयउवाच ॥ अत्रमेसंशयोब्रम्हन्नत्रकौतूहलंमहत् ॥ कथंनारायणोदेवोवामनत्वमुपागतः ४ यःपुराणेपुराणात्माभूत्वानारायणःप्रभुः ॥ पद्मनाभोमहाबाहुर्लोकानांप्रकृतिर्ध्रुवः ५ अनादिमध्यनिधनस्त्रैलोक्यादिःसनातनः ॥ देवदेवःसुराध्यक्षःकृष्णोलोकनमस्कृतः ६ हव्यकव्यवहःश्रीमान्हव्यकव्यभुगव्ययः ॥ अदित्यादेवमातुश्चकथंगर्भेभवत्प्रभुः ॥ स्रष्टायोवासवस्यापिसकथंवासवानुजः ७ प्रसूतोदेवदेवेशोविष्णुत्वंप्राप्तवान्कथम् ॥ एतदाचक्ष्वमेविप्रप्रादुर्भावंमहात्मनः ८ ॥ वैशंपायनउवाच ॥ शृणुराजन्कथांदिव्यामर्चितामृषिपुंगवैः ॥ पुराणैःकविभिःप्रोक्तांब्रह्मोक्तांब्राह्मणेरिताम् ९

चिदुपकरोतिकदाचिदुभयस्याप्यभिभवंकरोति उभयेनाप्यभिभूयतेच तदेवंमूलगुणानांयथाविरोधएवंतत्प्रधानानांदेवादीनामपितत्रयथासलिलस्यमाधुर्यंइक्षुद्राक्षादौबीजगुणादतिशयेनाविर्भवति निंबूमरीचरसादौतुनिरवशेषेणावृत्तंभवतिऔपाधिकंचाम्लकटुत्वादिकंअतीवप्रकाशतेएवमिंद्रस्यस्वरूपभूतंज्ञानंसात्विकेषुदेवतादिष्वाविर्भवतिइतरेष्वनुतस्यतिरोभावःऔपाधिकानांचकामक्रोधादीनामतिशयेनाविर्भावोभवतीति इंद्रस्यापिसविशेषरूपवतःस्वरूपप्रकाशहेतुत्वाद्देवेषुपक्षपातः तत्तिरोधानहेतुत्वादितरेषुद्रोहश्चयुज्यते संतिहींद्रस्यपंचरूपाणिभूबीजांकुरतरुफलोपमानिशुद्धशवलसूत्रविराड्विष्णुसंज्ञानि तत्रशुद्धंनिर्विशेषं विष्णुस्तुसर्वविशेषयुक्तोराजवच्छिष्टेष्वनुग्रहंदुष्टेषुद्रोहंचकरोतीतियुज्यतएवंस्वांगमपि त्याज्योदुष्टःप्रियोप्यासीद्दष्टोंगुष्ठइवाहिनेतिन्यायेनबाधितुंशक्यमेव मायाविलाचास्यवामनत्वंव्यापकत्वंचयुज्यतइतिसर्वमनवद्यम् ॥ १ ॥

६६ मारीचस्यसुरेशस्यकश्यपस्यप्रजापतेः ॥ अदितिर्दितिर्द्वेभार्येभगिन्यौजनमेजय १० अदित्यांजज्ञिरेदेवाःकश्यपस्यमहात्मनः ॥ धातार्यमाचमित्रश्चवरु
णोंशोभगस्तथा ११ इंद्रोविवस्वान्पूषाचपर्जन्योदशमस्तथा ॥ तथैकादशमस्त्वष्टाद्वादशोविष्णुरुच्यते १२ दित्यांजातोहिबलवान्हिरण्यकशिपुःप्रभुः ॥ अ०४८
तस्यानुजश्चदैत्येंद्रोहिरण्याक्षःप्रतापवान् १३ हिरण्यकशिपोःपुत्राःपंचवीरपराक्रमाः ॥ प्रह्लादश्चानुह्लादश्चजंभःसंह्लादएवच १४ विरोचनश्चप्राह्लादि
स्तस्यपुत्रोबलिःस्मृतः ॥ पुत्रपौत्रंचबलवत्तेषामक्षयमव्ययम् १५ तेजस्विनांसुरारीणांदैत्येंद्राणांमनस्विनाम् ॥ गणाःसुबहुशोराजन्देशेदेशेसहस्रशः १६
तेदृष्ट्वानारसिंहेनहिरण्यकशिपुंहतम् ॥ दैत्यादेववधार्थायबलिमिंद्रंप्रचक्रिरे १७ दृष्ट्वाधर्मपरंनित्यंसत्यवाक्यंजितेंद्रियम् ॥ शौर्याध्ययनसंपन्नंसर्वज्ञानवि
शारदम् १८ परावरगृहीतार्थंतत्वदर्शिनमव्ययम् ॥ तेजस्विनंसुररिपुंहिरण्यकशिपुंयथा १९ अभिषेकेणदिव्येनबलिंवैरोचनिंतथा ॥ दैत्याधिपत्येदि
तिजास्तदासर्वेऽभ्यपूजयन् २० अभिषिक्तस्तदादैत्यैर्बलिर्बलवतांवरः ॥ ब्रह्मणाचैवतुष्टेनहिरण्यकशिपोःपदे २१ अभिषिक्तोसुरगणैर्बलिर्वैरोचनिस्त
दा ॥ कांचनैःकलशैःस्फीतैःसर्वतीर्थांबुसंभृतैः २२ जयशब्दंततश्चक्रुरभिषिक्तस्यदानवाः ॥ बलेरतुलवीर्यस्यसिंहासनगतस्यवै २३ कृत्वेंद्रंदानवाःसर्वे
बलिंबलवतांवरम् ॥ ततोविज्ञापयामासुःशिरोभिःपतिताःक्षितौ २४ ॥ दैत्याऊचुः ॥ विदितंतवदैत्येंद्रहिरण्यकशिपोर्यथा ॥ त्रैलोक्यमासीदखिलंज
गत्स्थावरजंगमम् २५ पितामहंतुहत्वातेसुरेश्वरनिषूदन ॥ हृतंतदैवत्रैलोक्यंशक्रश्चैवाभिषेचितः २६ तत्पितामहराज्यंत्वंप्रत्याहर्तुमिहार्हसि ॥ अ
स्माभिःसहितोनाथत्रैलोक्यमिदमव्ययम् २७ प्रत्यानयस्वभद्रंतेराज्यंपैतामहंप्रभो २८ असुरगणसहस्रसंवृतस्त्वंजयदिविदेवगणान्महानुभावान् ॥ अ
मितबलपराक्रमोसिराजन्नतिशयसेस्वगुणैःपितामहंस्वम् ॥ २९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनेबलेरभिषेकोनामअष्टच
त्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ निशम्यतेषांवचनंमहामतिर्बलिस्तदाप्रीतमनामहाबलः ॥ आज्ञापयामाससदैत्यकोटिंत्रै
लोक्यमद्यैवजयामसर्वं १ तस्यतद्वचनंश्रुत्वाबलेर्वैरोचनस्यतु ॥ उद्योगंपरमंचक्रुर्दानवायुद्धदुर्मदाः २ महापद्मोनिकुंभश्चकुंभकर्णश्चवीर्यवान् ॥ कांच
नाक्षःकपिस्कंधोमैनाकःक्षितिकंपनः ३ शितकेशोर्ध्ववक्रश्चवज्रनाभःशिखीजटी ॥ सहस्रबाहुर्विकटोव्याघ्राक्षःप्रियदर्शनः ४ एकाक्षएकपान्मुंडोविद्युद ६६
क्षश्चतुर्भुजः ॥ गजोदरोगजशिरागजस्कंधोगजेक्षणः ५

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

अष्टदंष्ट्रश्चतुर्वक्रोमेघनादीजलंधरः ॥ करालोज्वालजिह्वास्यःशतांगःशतलोचनः ६ सहस्रपादःसुमुखःकृष्णश्चैवमहासुरः ॥ रणोत्कटोदानपतिःशैलकंपी
कुलाकुलिः ७ समुद्रोरभसश्चंडोधूम्रश्चैवमहासुरः ॥ गोत्रजोगोक्षुरोरौद्रोगोदंतःस्वस्तिकोध्रुवः ८ मांसलोमांसभक्षश्चवेगवान्केतुमाञ्छिबिः ॥ पंकादि
ग्धशरीरश्चबृहत्कीर्तिर्महाहनुः ९ समप्रभोविकुंभांडोविरूपाक्षोमहोदरः ॥ श्वेतशीर्षश्चंद्रहनुश्चंद्रहाचंद्रतापनः १० विक्षरोदीर्घबाहुश्चमद्यपोमारुताशनः
तालजंघोमहाभागःस्वरभःशलभःक्रथः ११ समुद्रमथनोनादीविततश्चमहाबलः ॥ प्रलंबोनरकोव्यालीधेनुकःकाललोचनः १२ वरिष्ठश्चगरिष्ठश्चभूतलो
न्मातथाविधुः ॥ दुष्प्रसादःकिरीटीचमूचीवक्रोमहासुरः १३ सुबाहुःकंजबाहुश्चकरणःकलशोदरः ॥ सोमपोदेवयाजीचप्रवरोवीरमर्दनः १४ सुपथःखंडमु
क्तिश्चशिखिनेत्रःशिखिध्वजः ॥ यथास्मृतिमयाप्रोक्तामरीचेःकीर्तिवर्धनाः १५ एतेचान्येचबहवोनानाभूषणभूषिताः ॥ रथौघैर्बहुसाहस्रैर्ययुर्योद्धुमरिंद
माः १६ दिव्यांबरधरादैत्यादिव्यमाल्यानुलेपनाः ॥ दिव्यैश्चकवचैर्नद्धादिव्यैश्चैवोच्छ्रितैर्ध्वजैः १७ दिव्यायुधधरादैत्यागर्जमानायथांबुदाः ॥ बृहद्भी
रथघोषैश्चचालयंतोवसुंधराम् १८ महाबलादिव्यबलास्त्रधारिणोभुजंगभोगप्रतिमैर्महाभुजैः ॥ सुदुर्जयादैत्यवृषाःसुरारयोदितिप्रियालोहितलोहितेक्ष
णाः १९ तेजग्मुरर्कज्वलनेंद्रवीर्यामहेंद्रवज्राशनितुल्यवेगाः ॥ विवृद्धदंष्ट्राहरिधूम्रकेशाविवर्द्धमानाःशरदीवमेघाः २० सहस्रबाहुर्बाणश्चबलेःपुत्रोमहाब
लः ॥ रथातिरथकोव्यावैसन्नद्ध्यतमहाबलः २१ सर्वेमायाधरादैत्याःसर्वेदिव्यास्त्रयोधिनः ॥ सर्वेमदबलोत्सिक्ताःसर्वेलब्धवराःपुरा २२ सर्वेकांचनशै
लाभाःपीतकौशेयवाससाः ॥ किरीटोष्णीषमुकुटादिव्यभूषणभूषिताः २३ हिरण्यकवचाःसर्वेहिरण्यध्वजकेतवः ॥ स्यंदनस्थाव्यराजंतशारदाइवखेग्रहाः
२४ तापनीयैर्वरैर्निष्कैरनलज्वालितप्रभैः ॥ हेमपर्वतशृंगस्थाःपुष्पिताइवकिंशुकाः २५ तेषांमध्यगतोबाणःप्रावृषीवोत्थितोघनः ॥ स्थितःशक्तिगदापा
णिस्त्रिनल्वप्रतिमेरथे २६ विचित्राश्वध्वजयुगेचित्रभक्तिविराजिते ॥ गदापरिघसंपूर्णेहेमजालविभूषिते २७ अन्वीयमानोदितिजैर्वालखिल्यैरिवांशुमान्॥
नानाप्रहरणैर्घोरैस्तीक्ष्णदंष्ट्रैरिवोरगैः २८ पंचतस्यमहावीर्यादानवायुद्धदुर्मदाः ॥ ररक्षूरथमव्यग्राव्यादितास्याभयावहाः २९ सुबाहुर्मेघनादश्चभीमग
र्भश्चवीर्यवान् ॥ तथाकनकमूर्धाचवेगवान्केतुमानिति ३० कनकरजतभक्तिचित्रपार्श्वेपतगपतिप्रतिमेरथेस्थितोभूत् ॥ जलदनिनदतुल्यनेमिघोषे
सुरगणसैन्यवधायदानवेंद्रः ३१ अनायुषायाःपुत्रस्तुबलोनाममहासुरः ॥ वृतःशतसहस्रेणरथानामभिवर्चसाम् ३२

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

६७ युक्तमृक्षसहस्रेणरथमारुह्यवीर्यवान् ॥ नीलायसमयंघोरंवायसांकंसुदुर्जयम् ३३ नीलांबरधरःश्रीमान्वैडूर्याचलसन्निभः ॥ महतारथवेगेनप्रययौदानव
स्तदा ३४ तत्रैकार्णवसंकाशेसैन्यमध्येव्यराजत ॥ प्रभातसमयेश्रीमान्त्समुद्रस्थइवांशुमान् ३५ सुतप्तजांबूनदतुल्यवर्चसानिशाकराकारतडिद्गुणाकरः ॥ अ०४९
किरीटमुख्येनविभातिशोभिनायथागिरिःशृंगवरेणभास्वता ३६ षष्टीरथसहस्राणिनमुचेरसुरस्यवै ॥ खरयुक्तानिसर्वाणिमेघतुल्यरवाणिच ३७ नाना
प्रहरणाःसर्वेसर्वेतेचित्रयोधिनः ॥ महाभ्रघनसंकाशावेगवंतोमहाबलाः ३८ रथोप्याघ्रसहस्रेणयुक्तःपरमवेगवान् ॥ नमुचेरसुरेंद्रस्यसर्वरत्नविभूषितः ३९
शार्दूलचिह्नःशुशुभेतस्यकेतुर्हिरण्मयः ॥ रथमध्येसुरेशस्यमध्यंदिनरविर्यथा ४० सभीमवेगश्चमहाबलश्चप्रगृह्यचापंहिमवानिवस्थितः ॥ नीलांबरः
कांचनपट्टनद्धोदिशागजोयद्वदुपेतकक्षः ४१ किंकिणीजालनिर्घोषंतपनीयविभूषितम् ॥ सपताकाध्वजोपेतंससंध्यामिवतोयदम् ४२ चक्रैश्चतुर्भिःसंयुक्त
मष्टनल्वायतांतरम् ॥ हेमजालाकुलंदीप्तंकालचक्रमिवोदितं ४३ नानायुधधरंघोरंव्याघ्रचर्मपरिष्कृतम् ॥ ईहामृगगणाकीर्णंचित्रभक्तिविराजितम् ४४ तू
णीरशरसंपूर्णंशक्तितोमरसंकुलम् ॥ गदामुद्गरसबाधंचापरत्नविभूषितम् ४५ युक्तमृक्षसहस्रेणलंबकेसरवर्चसा ॥ राजतेनविकीर्णेनशोभितंसिंहकेतुना ॥
४६ सतेनशुशुभेदैत्योमयोमायाविसर्पिणा ॥ रथस्तेस्थितःश्रीमानुदयस्थइवांशुमान् ४७ विमलरजतबिंदुशोभितांगंमणिकनकोज्ज्वलचारुभक्तिचित्रम्
अयुतशतसहस्रमूर्जितानांमयमनुयातितदामहारथानाम् ४८ इतिश्रीमहाभारतेखिलेषुहरिवंशेभ०वामनप्रादुर्भावेमयस्ययुद्धाभिगमनंनामैकोनपंचाश
त्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ पुलोमातुमहादैत्यस्तिमिराकारगह्वरं ॥ आरुरोहायसंघोरंरथंपरमथारुजम् १ उत्कर्णपर्व
ताकारंलोहजालांतरांतरम् ॥ नेमिघोषेणमहताक्षुभ्यंतमिवसागरम् २ गदापरिघनिस्त्रिंशैःसतोमरपरश्वधैः ॥ शक्तिमुद्गरसंकीर्णंसतोयमिवतोयदम् ३
रथमुष्ट्रसहस्रेणसंयुक्तंवायुवेगिना ॥ पुलोमारुह्ययुद्धायप्रस्थितोयुद्धदुर्मदः ४ षष्टिंरथसहस्राणिपुलोमानंमहारथम् ॥ अन्वयुःसूर्यवर्णानिप्रदीप्तानीवतेज
सा ५ खड्गध्वजेनमहतातप्तकांचनवर्चसा ॥ भ्राजतेरथमध्यस्थःपर्वतस्थइवांशुमान् ६ सुचारुचामीकरपट्टनद्धांमहागदांकालनिभांमहाबलः ॥ प्रगृह्य
बभ्राजसशत्रुमध्येकार्ष्णायसींकेतुरिवास्थितोर्व्यां ७ हयग्रीवस्तुबलवान्हयग्रीवैर्महासुरैः ॥ वृतःशतसहस्रेणरथानांरथसत्तमः ८ धराधरनिभाकारंसप
त्नानीकमर्दनम् ॥ स्यंदनंभीममास्थाययुद्धायाभिमुखःस्थितः ९ ६७
णिटीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

श्वेतशैलप्रतीकाशःश्वेतकुंडलभूषणः ॥ शुशुभेरथमध्यस्थःश्वेतशृंगइवाचलः १० महतासप्तशीर्षेणशोभितोनागकेतुना ॥ वैडूर्यमणिचित्रेणप्रवालांकु
रशोभिना ११ अमितबलपराक्रमाकृतीनांवररथिनामनुजग्मुरूर्जितानाम् ॥ असुरगणशताभिगच्छमानंत्रिदशगणाइववासवंप्रयांतम् १२ प्रह्लादस्तु
महाप्राज्ञःसर्वशास्त्रविशारदः ॥ सर्वमायाधरःश्रीमान्यष्टाक्रतुशतैरपि १३ समनह्यततेजस्वीपावकार्चिसमप्रभः ॥ रथानीकेनमहतादुर्दिनांभोदनादि
ना १४ शूरेणामितवीर्येणहेमकुंडलधारिणा ॥ वृतोदैत्यसहस्रेणदेवैरिवपितामहः १५ स्ववीर्यादग्रणीर्दृप्तोमत्तवारणविक्रमः ॥ सुरसैन्यस्यसर्वस्यप्रति
क्षोभइवस्थितः १६ स्ववीर्येणोदधेस्तुल्यःप्रदीप्ताग्निरिवज्वलन् ॥ तेजसाभास्कराकारःक्षमयापृथिवीसमः १७ तालध्वजेनदीप्तेनरथेनातिविराजता ॥
तंयांतमनुयांतिस्मदानवाःशतसंघशः १८ सर्वेहिरण्यकवचाःसर्वेरत्नविभूषिताः ॥ दिव्यांगरागाभरणाःसमरेष्वनिवर्तिनः १९ जांबूनदविचित्रांगावैडू
र्यविकृतांगदाः ॥ दिव्यस्यंदनमध्यस्थाःखस्थाइवमहाग्रहाः २० आचारवांश्चैववजितेंद्रियश्चधर्मेरतःसत्यपरोनसूयः ॥ स्थितोग्नितोयांबुदवायुकल्पोरूपी
षथासर्वहरःकृतांतः २१ शंबरस्तुमहामायोरथयूथपयूथपः ॥ आरुरोहरथंदिव्यंसर्वयुद्धविशारदः २२ लोहिताक्षोमहाबाहुःप्रतप्तोत्तमकुंडलः ॥ जी
मूतघनसंकाशोदिव्यस्रगनुलेपनः २३ विद्युज्ज्योतिर्निकाशेनमुकुटेनार्कवर्चसा ॥ मणिरत्नविचित्रेणवैडूर्यवरशोभिना २४ तपनीयेनमहताकवचेनवि
राजता ॥ संध्याभ्रेणेवसंच्छन्नःश्रीमानस्तशिलोच्चयः २५ त्रिंशच्छतसहस्राणिदैत्यानांचित्रयोधिनाम् ॥ बलिनांकालकल्पानामन्वयुःशंबरंतदा २६
युक्तंहयसहस्रेणशुक्लवर्णेनराजता ॥ क्रौंचध्वजेनदीप्तेनरथेनाहवशोभिना २७ व्यासक्तवैडूर्यसुवर्णजालंनानाविहंगैरपिभक्तिचित्रम् ॥ विद्युत्प्रभंभीमरवं
सुवेगंरथंसमारुह्यरराजदैत्यः २८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेशंबरादिदैत्यसन्नहनंनामपंचाशत्तमोऽध्यायः ॥
५० ॥ ॥ ४ ॥ ॥ वैशंपायनउवाच ॥ अनुह्लादश्चतत्रैवदैत्यःपरमदुर्जयः ॥ हिरण्यकशिपोःपुत्रःप्रययौयुद्धलालसः १ चतुश्चक्रेणयानेनत्रि
नल्वप्रतिमेनतु ॥ युक्तेनाश्वैर्महावीर्यैःसिंहवक्त्रैरजिह्मगैः २ भीमगंभीरनादेननेमिघोषेणवीर्यवान् ॥ चालयन्वसुधांसर्वांसशैलवनकाननाम् ३ विनर्दमा
नादैत्यौघाअनुह्लादंययुःशुभाः ॥ शतंशतसहस्राणांरथानांहेममालिनाम् ४ परिघैर्भिंदिपालैश्चभल्लैःपाशैःपरश्वधैः ॥ विविधायुधहस्तास्तेशूलमुद्गर
पाणयः ५ सुवर्णजालनिर्मुक्तैर्वज्रैश्चसमलंकृताः ॥ रथैश्चित्रैश्चकवचैःसज्जमानामहासुराः ६

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ भिन्नांजनचयप्रभःकज्जलगुटिकागर्भवत्कृष्णः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥



तदाविशालोच्छ्रितशैलरूपेबभौरथेकांचनचित्रितांगे ॥ दैत्याधिपःसत्वबलानुरूपेसमास्थितस्त्वप्रतिमेसुरूपे ७ विरोचनश्चबलवान्वैश्वानरसमद्युतिः ॥
महतारथवंशेनसर्वास्त्रकुशलःशुचिः ८ व्यूहानांविनियोगज्ञोज्ञानविज्ञानतत्ववित् ॥ बलेःपितासुरवरःसुराणामिववासवः ९ सर्वायुधसमोपेतंकिंकिणी
जालभूषितम् ॥ युक्तानांवाजिमुख्यानांसहस्रेणाशुगामिनाम् १० रथमारुह्यदैत्येंद्रोबभौमेरुरिवापरः ॥ किंकिणीजालपर्यंतंगजेंद्रध्वजशोभितम् ॥ सं
ध्याभ्रसमवर्णाभिःपताकाभिरलंकृतम् ११ प्रवालजांबूनदभक्तिचित्रंव्यालंविकारांतरनेमिघोषम् ॥ रथंसमारुह्यकिरीटमालीययौसयुद्धायमहासुरेंद्रः १२
विरोचनानुजश्चैवकुजंभोनामदानवः ॥ स्यंदनैर्बहुसाहस्रैर्मणिकांचनभूषितैः १३ वृतोमदबलोत्सिक्तैर्देवारिभिररिंदमः ॥ प्रासपाशगदाहस्तैर्दानवैर्युद्धकां
क्षिभिः १४ सपर्वतनिभाकारोभिन्नांजनचयप्रभः ॥ महताभ्राजमानेनकिरीटेनसुवर्चसा १५ सर्वरत्नविचित्रेणकवचेनचसंवृतः ॥ महतादीप्तवपुषार
थेनेंदुरिवांशुमान् १६ शातकौंभेनमहतातालवृक्षेणकेतुना ॥ रराजरथमध्यस्थोमेरुस्थइवभास्करः १७ रणपटुरतिवीर्यसत्वबुद्धिःसुरसमराभिमुखःप्र
यातितूर्णम् ॥ असुरगणसमावृतःकुजंभस्त्रिदशगणैरिववृत्रहामरेंद्रः १८ असिलोमाचतत्रैवदानवःपर्वतायुधः ॥ दारुणंवपुरास्थायदारुणोदारुणाननः
१९ रौद्रःशकटचक्राक्षोमहाकायोमहाबलः ॥ कृष्णवासामहादंष्ट्रःकिरीटीलोहिताननः २० वृतोदैत्यसहस्रौघैर्गिरिपादपयोधिभिः ॥ नानारूपधरैर्दृप्तै
र्दैत्यैस्त्रिदशशत्रुभिः २१ तेशूलहस्तागगनेचरंतइतस्ततस्तोयदवृंदतुल्याः ॥ खंच्छादयंतस्तपनीयनिष्कायथोन्नताःप्रावृषिकालमेघाः २२ अनायुषा
याःपुत्रस्तुवृत्रोनाममहासुरः ॥ देवशत्रुर्महाकायस्ताम्रास्योनिर्नतोदरः २३ दीप्तजिह्वोहरिश्मश्रुरूर्ध्वरोमामहाहनुः ॥ नीलांगोलोहितमुखःकिरीटीलो
हितांबरः २४ आजानुबाहुर्विकृतःश्वेतदंष्ट्रोविभीषणः ॥ महामायाधरोभीमोहेमकेयूरभूषणः २५ महतामणिचित्रेणकवचेनतुसंवृतः ॥ हेममाला
धरोरौद्रश्चक्रकेतुरमर्षणः २६ किंकिणीशतसंघुष्टंतपनीयविभूषितम् ॥ युक्तंहयसहस्रेणरक्तध्वजपताकिनम् २७ रथानीकेनमहतायुद्धायाभिमुखोययौ ॥
दिव्यंस्यंदनमास्थायदैत्यानांनंदिवर्द्धनः २८ तपितकनकबिंदुपिंगलाक्षोदितितनयोसुरसैन्ययुद्धनेता ॥ विकसितकमलाभचारुचक्षुःसिततदशनःशुशु
भेरथासनस्थः २९ एकचक्रस्तुतत्रैवसूर्यचक्रइवोदितः ॥ कालचक्रसमोरौद्रश्चक्रायुधइवोद्यतः ॥ सर्वायसमयंदिव्यंरथमास्थायभासुरम् ३० वृतोदैत्य
गणैर्दृप्तैःकालायसशिलायुधैः ॥ तस्याशीतिसहस्राणिरथिनांचित्रयोधिनाम् ३१

तपनीयनिष्काःसुवर्णमयपदकालंकाराः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

सर्वेकालांतकप्रख्यारुधिराक्षामहाबलाः ॥ आयसैःकांचनैश्चैवसन्नद्धावरवर्णिनः ३२ विराजतांतरिक्षस्थानीलाइवपयोधराः ॥ सर्वेकालांतकप्रख्याधीराः समरदुर्जयाः ३३ सागरोदरगंभीरानीलवक्त्राद्दुरासदाः ॥ रेजुर्यातोसुरवराःवेलातीताइवार्णवाः ३४ तेभीममायाःसुसमृद्धकायाःकिरीटिनःकांचनभूषितां गाः ॥ ययुस्तदास्वायुधदीप्तहस्तानभःसपक्षाइवपर्वतेंद्राः ३५ संदिष्टोबलिपुत्रेणवृत्रभ्राताममहासुरः ॥ वधायसुरसैन्यस्यसंनद्धस्त्वेतिवीर्यवान् ३६ हेम तालीमहादंष्ट्रःस्रग्वीरुचिरकुंडलः ॥ रक्तमाल्यांबरधरश्चंडःसमरदुर्जयः ३७ सुमहावृत्तनयनःसकिरीटीधनुर्धरः ॥ प्रभिन्नइवमातंगःशार्दूलसमविक्रमः ३८ महातालनिभंचापंतथारुचिरसायकम् ॥ विस्फारयन्महावेगंवज्रनिष्पेषनिःस्वनम् ३९ रथेनखरयुक्तेनध्वजेनभुजगेनह ॥ शुशुभेस्यंदनस्थःससंध्यागतइ वांशुमान् ४० रथैस्तुबहुसाहस्रैर्हेमपट्टविभूषितैः ॥ कूटमुद्गरसंपूर्णैर्जलपूर्णैरिवांबुदैः ॥ संदेयेंद्रोभिचक्रामतस्मिन्युद्धउपस्थिते ४१ पवनसमगतिर्विशा लवक्षाविकसितपंकजचारुगर्भगौरः ॥ प्रवररथगतोययौसतूर्णंत्रिदशगणैरभिलक्षितप्रभावः ४२ सिंहिकातनयश्चैवराहुर्नाममहासुरः ॥ विकटःपर्वता कारःशतशीर्षाःशतोदरः ४३ पीतमाल्यांबरधरोजांबूनदविभूषितः ॥ स्निग्धवैडूर्यसंकाशःपद्मपत्रनिभेक्षणः ४४ सर्वकांचनसंयुक्तंमणिजालपरिष्कृतम् ॥ पताकाशतसंकीर्णंयुक्तंपरमवाजिभिः ४५ आरुरोहरथंदिव्यंदैत्यःपरमवीर्यवान् ॥ ननादचमहानादंकंपयन्वसुधातलम् ४६ मयेनविहितोदिव्यस्तस्यकेतु र्हिरण्मयः ॥ मयूरपक्षसंकाशंकवचंचायसंमहत् ४७ भीमवेगरवैश्चान्यैरथैर्दिव्यैःसुभासुरैः ॥ नानाप्रहरणाकीर्णैःसेव्यमानोमहाबलः ४८ असुरगणपति र्गजेंद्रगामीजतिरभसगतिर्महासुराणाम् ॥ अरिगणमभितोविभुःप्रयातोगिरिवरमस्तमिवांशुमान्सुदीप्तः ४९ विप्रचित्तिस्तुतत्रैवदनोर्वंशविवर्द्धनः ॥ क श्यपस्यात्मजःश्रीमान्ब्रह्मणस्तेजसासमः ५० यष्टाक्रतुसहस्राणांवेदवित्तपसान्वितः ॥ स्वयंभुवादत्तवरोवरदश्चस्वयंभुवः ॥ ईशित्वंचमहत्वंचवशित्वंच महाद्युतेः ५१ ऐश्वर्यगुणसंपन्नोब्रह्मेवस्वयमूर्जितः ॥ सार्धंपुत्रैश्चपौत्रैश्चसंनह्यतमहाबलः ५२ सर्वेमायाधराःशूराःकृतास्त्रारणदुर्जयाः ॥ सर्वेकमलवर्णा भाहेमकूटोच्छ्रयोच्छ्र्याः ५३ सर्वेरजतसंकाशाःकैलासशिखरोपमाः ॥ मयेननिर्मितास्तेषांसर्वेमायामयारथाः ५४ विचरंतोऽन्यराजंतशारदाइवतोयदाः ॥ सर्वेहंसध्वजाःश्वेताश्वेतदंडसमुच्छ्रयाः ५५ श्वेतांबरधरादैत्याःश्वेतमाल्यविभूषिताः ॥ श्वेतातपत्राःसर्वेतेश्वेतकुंडलमंडिताः ५६ मुक्ताहारवृतोरस्काभां तिनाकेश्वराइव ॥ महाग्रहनिभाकाराःशत्रूणांलोमहर्षणाः ५७

श्चस्वयंभुवः ब्रह्मणोपिमान्यइत्यर्थः ॥ लोकान्मानाशयेति ब्रह्मणाप्रार्थितः सन्तस्मैवदरइत्यर्थः ॥ ५१ ॥ सन्नह्यत समनह्यतअडभावः ५२ ५३ ५४ ॥ ५५ ५६ ॥ ५७ ॥

रक्तचित्रांबरधराश्चित्राभरणभूषिताः ॥ त्रैलोक्यविजयंनामरथमास्थायवीर्यवान् ५८ कैलासशिखराकारमष्टनल्वायतांतरम् ॥ युक्तंवाजिसहस्रेणसिते
नशिवर्वर्चसा ॥ पताकाशतसंच्छन्नंनानायुधविकल्पितम् ५९ हिमांशुकुंदप्रतिमंविशालंसितातपत्रंदनुजेश्वरस्य ॥ विभातितस्योपरिधार्यमाणंश्वेताद्रि
मूर्ध्नोपगतःशशांकः ६० केशीदानवमुख्यस्तुजिह्मस्ताम्राक्षदर्शनः ॥ नीलमेघचयप्रख्यःकालःपुरुषविग्रहः ६१ महाग्रहनिभाकारःशत्रूणांलोमहर्षणः ॥
चित्रमाल्यांबरधरोरक्ताभरणभूषितः ६२ शताक्षःशतबाहुश्चहरिश्मश्रुर्महाबलः ॥ शंकुकर्णोमहानादोवपुषाघोरदर्शनः ६२ युक्तंमहिषकैर्दिव्यैर्घंटाको
टिकृतस्वनम् ॥ महावारिधराकारमास्थायरथमुत्तमम् ६४ ध्वजेनोष्ट्रेणमहतानीलकेसरवर्चसा ॥ नानारागविचित्राभिःपताकाभिर्विभूषितम् ६५ द्विपं
चाशत्सहस्राणिरथानामुग्रवर्चसाम् ॥ ययुस्तस्यासुरेंद्रस्यप्रयातस्यसुरान्प्रति ६६ भांतिभिन्नांजननिभाःप्रयातस्यमहात्मनः ॥ दंष्ट्रार्द्धचंद्रवदनासबला
काइवांबुदाः ६७ ततस्यवैडूर्यसुवर्णचित्रंविद्युत्प्रभंभास्कररश्मितुल्यम् ॥ किरीटमाभात्यसुरोत्तमस्यदावाग्निदीप्तंशिखरंयथाद्रेः ६८ वृषपर्वासुरश्चै
वश्रीमांश्चसुरसूदनः ॥ आरुरोहरथंदिव्यंमेरुशृंगमिवांशुमान् ६९ प्रवालजांबूनदचित्रकूबरंमहारथंभारसहंमहार्हम् ॥ स्वलंकृतंराजतहेमकुंडलंगभ
स्तिनक्षत्रतडिन्निकाशम् ७० केयूरयुक्तांगदनद्धबाहुःसहस्रतारेणचचर्मणासः ॥ सांग्रामिकैराभरणैश्चचित्रैर्मध्याह्नसूर्यप्रतिमोबभूव ७१ महाबलोबद्धतलां
गुलित्रोबलोत्कटःकिंशुकलोहिताक्षः ॥ प्रगृह्यचामीकरचारुचित्रंचापंस्थितोवृत्तविशालनेत्रः ७२ महासुरेंद्रश्चमहासुरैर्वृतोबलिस्तदास्यंदनमारुरोह ॥
वैडूर्यहेमोपचितंविशालंविद्युत्प्रभंषोडशनल्वमात्रम् ७३ युक्तंसहस्रेणदितेःसुतानांगजाननानांविकृताकृतीनाम् ॥ चामीकरोरःस्थलभूषितानांप्रनर्दतांप्रा
वृषिचांबुदानाम् ७४ महारथंदेवरथप्रकाशंसहस्रमायेनमयेनसृष्टम् ॥ ईहामृगाक्रीडितभक्तिचित्रंदिव्यंरथंदिव्यरथानुयातम् ६९ सकिंकिणीकंविमलं
सुविस्तृतंहिरण्मयैःपद्मशतैरलंकृतम् ॥ अभ्याददेवैजयिकींजयायस्रजंबलिर्हैमविचित्रपुष्पाम् ७६ अवध्यमालांप्रभयाविचित्रांबलिस्तदाभातिभुजैर्वि
शालैः ॥ रराजतैःसर्वसमृद्धियुक्तैर्महार्चिषासूर्यइवांबरस्थः ७७ स्रजंतदाबध्यंतिचास्यदुर्गांसर्वासुराणामिवहारभूताम् ॥ वैरोचनिःसर्वश्रियाभिजुष्टोवि
भाजतेसौशरदीवचंद्रः ७८ मेरोस्तटैर्वाज्वलनप्रकाशैरादित्यसंयुक्तमिवाभ्रजालम् ॥ प्रासाश्चपाशाश्चहिरण्यबद्धावर्माणिखड्गाश्चपरश्वधाश्च ७९ धनूंषि
वज्रायुधसप्रभाणिदिव्यागदावज्रमुखाश्चशक्तयः ॥ दिव्याश्चखड्गाविशिखाश्चदीप्तानाराचपूर्णाविविधाश्चतूर्णाः ८०

धृतारथेदैत्यवृषस्यतस्यदकाशिरेप्रज्वलितायथोल्काः ॥ तेचामरापीडधराःसुदंष्ट्राःसुवर्णमुक्तामणिहेमचित्राः ८१ वीज्यंतिवालव्यजनैर्विनीतामहा
सुराःस्यंदनवेदिकास्थाः ॥ अयःशिराअश्वशिरादुरापःशिबिर्मतंगोविशिराःशताक्षः ८२ अयोनिकुंभःक्रथनश्चदानवोरक्षिरेतेदशदानवाधिपं ॥ पुरश्च
राश्चैवसहस्रशोसुराःपदातयोदानवराजरक्षिणः ८३ शतघ्निचक्राशनिशक्तिपाणयःप्रजग्मुरग्रेनिलतुल्यवेगिनः ॥ घंटाःसुशब्दास्तपनीयबद्धाआडंबराग
गररिंडिमाश्च ८४ महारवादुंदुभयश्चनेदूरथप्रयाणेदितिजेश्वरस्य ॥ तस्योत्थितःकांचनवेदिकाग्रेहिरण्मयोदिव्यमहापताकः ८५ महाध्वजोवैतप
नीयनद्धोराजवीरस्ययथाविवस्वान् ॥ समुच्छ्रितंकांचनमातपत्रंस्रक्कांचनीवक्षसिचास्यभाति ८६ समंततश्चाप्यसुराश्चरंतिदैत्यर्षयःप्रांजलयोजयंति ॥
पुरोहिताःशत्रुवधेसमाहितास्तथैवचान्येश्रुतशीलवृद्धाः ८७ जपैश्चमंत्रैश्चतथौषधीभिर्महात्मनःस्वस्त्ययनंप्रचक्रुः ॥ सतत्रवस्त्राणिशुभाश्चगावःफलानि
पुष्पाणितथैवनिष्कान् ८८ बलिर्द्विजेभ्यःप्रयतःप्रयच्छन्विराजतेतीवयथाधनेशः ॥ सहस्रसूर्योबहुकिंकिणीकःपरार्ध्यजांबूनदहेमचित्रः ८९ सहस्रचंद्रा
युततारकश्चरथोबलेरग्निरिवावभाति ॥ तमास्थितोदानवसंगृहीतंमहाबलःकार्मुकधृक्सबाणः ९० उद्वर्तयिष्यन्त्रिदशेंद्रसेनामतीवरौद्रंसबिभर्तिरूपम् ॥
सवेगवान्वीररथौघसंकुलःप्रयातिदेवान्प्रतिदैत्यसागरः ९१ महार्णवोवीचितरंगसंकुलोयथाजलौघैर्युगसंशयेतथा ॥ त्रैलोक्यवित्रासकरैर्वपुर्भिस्तान्यग्रतो
यांतिबलेरथस्य ॥ महाबलान्युच्छ्रितकार्मुकाणिसपर्वतानीववनानिराजन् ९२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिबलेरुद्योगोना
मैकपंचाशत्तमोऽध्यायः ५१ ॥ ॥ वैशंपायनउवाच ॥ श्रुतस्तेदैत्यसैन्यस्यविस्तरोजनमेजय ॥ भूयस्त्रिदशसैन्यस्यशृणुविस्तरमादितः १ सुराधि
पस्तुभगवानाज्ञापयतवैसुरान् ॥ मरुद्गणांस्तथादित्यान्विश्वान्देवांश्चवासवः २ वसूनष्टौभृशंसर्वान्यक्षरक्षोमहोरगान् ॥ विद्याधरगणान्सर्वान्गंध
र्वांश्चमहाबलान् ३ महार्णवांश्चशैलांश्चतथारुद्रान्महौजसः ॥ यमवैश्रवणौचोभौवरुणंचजनाधिपम् ४ येतुसिद्धामहात्मानःपितरश्चमनस्विनः ॥
राजर्षयश्चशतशोयोगसिद्धास्तथैवच ५ त्रिदशाज्ञापकःशक्रआज्ञापयतिवीर्यवान् ॥ भवंतोदैत्यनाशायसन्नह्यंतामितिप्रभुः ६ शक्रस्यवचनंश्रुत्वात
तःसर्वेदिवौकसः ॥ सन्नह्यतमहात्मानःशक्रस्यसमविक्रमाः ७ नानाकवचिनःसर्वेविचित्रकवचध्वजाः ॥ नानायुधोद्यतकरामत्ताइवमहागजाः ८
केचिदारुरुहुर्व्याघ्रान्केचिदारुरुहुर्गजान् ॥ केचिदारुरुहुर्नागान्केचिदारुरुहुर्वृषान् ९

रथंआरुह्येतिशेषः ॥ १० ॥ ११ ॥ आभिताम्रंईषत्सर्वतस्ताम्रंसुचारुभ्योपिचारुयानंरथं प्रतिचक्रस्यवैरिसमूहस्यापिचक्रंआज्ञापकंपातालंगच्छतेत्येवमादि ॥ १२ ॥१३॥

हरिनेत्रोहरिश्मश्रुर्द्रिरदैरावृतध्वजम् ॥ रथंहरिहयैर्युक्तंसप्रायात्समरंप्रति १० आदित्यवर्णंविरजंसुधौतंत्वष्ट्रास्वयंनिर्मितमीश्वरार्थम् ॥ जालैश्चजांबूनदभ
क्तिचित्रैरलंकृतंकांचनदामभिश्च ११ सकूबरोपस्करबंधुरेषविद्युत्प्रभाभिःकृतमाभिताम्रम् ॥कैलासशृंगोपममिंद्रयानंसुचारुचारुप्रतिचक्रचक्रम् १२ तारा
सहस्रैःखचितंज्वलद्भिर्देवार्हमाल्यार्चितसर्वदेहम् ॥ समुच्छ्रितंश्रीध्वजमक्षयाक्षंप्रज्वाल्यमानंपुरुषोत्तमेन १३ आस्थायतंभास्करमाशुवेगंशचीपतिर्लोक
पतिःसुरेशः ॥ वज्रस्यधर्त्ताभुवनस्यगोप्ताययौमहात्माभगवान्महेंद्रः १४ आमुच्यवर्माथसहस्रतारंहुताशनादित्यसमप्रभावम् ॥ सूर्यप्रभंचामुमुचेकिरी
टंमालांचजांबूनदवैजयंतीम् १५ त्वष्ट्राकृतंभास्कररश्मिदीप्तंसुतीक्ष्णघोरामलतीव्रधारम् ॥ महासुराणांरुधिरार्द्रमुग्रंप्रगृह्यवज्रंशतपर्वभीमम् १६ महा
शनींद्वेचमहाग्रहाभेदीप्तामभोघांचसशक्तिमुग्राम् ॥ चक्रंतथैंद्रंसुमहत्प्रतापंप्रगृह्यशक्रःप्रययौरणाय १७ सहस्रदृग्भूतपतिःसनातनःसनातनानामपियःसना
तनः ॥ खड्गंचदेवाधिपतिर्महात्मावैयाघ्रमादायचचर्मचित्रम् १८ क्षीरोदधिक्षोभसमुच्छ्रितानिपुरामृतादुत्तमभूषणानि ॥ देवासुराणांसमनिर्जितानिसो
मार्कनक्षत्रतडित्प्रभाणि १९ तत्तान्यदित्यामणिकुंडलानियुद्धंप्रयातस्यसुरेश्वरस्य ॥ तैर्भूषितोभातिसहस्रचक्षुरुद्योतयद्वैविदिशोदिशश्च २० हरिःप्रभुर्नेत्र
सहस्रचित्रोविभातियुद्धाभिमुखःसुरेंद्रः ॥ यथासितंशारदमभ्रकल्पंनभस्तलंऋक्षसहस्रचित्रम् २१ स्तुवंतियांतंविपुलैर्वचोभिर्जयाशिषाचोर्जितसत्त्ववीर्यं
अत्रिर्वसिष्ठोजमदग्निरुर्वोबृहस्पतिर्नारदपर्वतौच २२ तमन्वयुर्देवगणामहेंद्रंप्रयांतमादित्यसमानवर्चसम् ॥ विश्वेचदेवामरुतस्तथैवसाध्यास्तथादित्यगणाश्चस
र्वे २३ तेदेवराजस्यपुरंदरस्यहयाश्वयेमातलिसंगृहीताः ॥ प्रयांतिदेवेश्वरमुद्वहंतोनभस्तलंपद्भिरिवाक्षिपंतः २४ ब्रह्मर्षयश्चैवमहर्षयश्चराजर्षयश्चाक्षयपुण्य
लोकाः ॥ सर्वेनुजग्मुःसहसाज्वलंतंतेजोन्वितंशक्रममित्रसाहं २५ प्रगृह्यशूलांश्चपरश्वधांश्चदीप्तानिचापान्यशनीर्विचित्राः ॥ वर्माणिचामुच्यहिरण्मया
निप्रयांतिसूर्यांशुसमप्रभाणि २६ तथाकुबेरोश्वसहस्रयुक्तंश्रेष्ठंरथंसर्वसहंमहार्हम् ॥ दिव्यंसमारुह्यरणाययातोधनेह्यरोदीप्तगदाग्रहस्तः २७ निशाचराःपा
वकधूमकायारक्षोवृषारुद्रसखस्यतस्य ॥ विशालनानायुधदीप्तहस्तायांत्यग्रतोवैश्रवणस्यराज्ञः २८ तेलोहिताक्षाःपरिवार्यदेवंव्रजंतिभिन्नांजनचूर्णवर्णाः
यक्षोत्तमायक्षपतिंधनेशंरक्षंतिवैपाशगदासिहस्ताः २९ पुण्यःप्रभुःप्राणपतिर्जितात्मावैवस्वतोधर्मभृतांवरिष्ठः ॥ तडिद्गणाभंशतवाजियुक्तंरथंसमारो
हतसूर्यकल्पम् ३०

॥१४ ॥ जांबूनदमयीचासौवैजयंतीआपादलंबिनीतांजांबूनदवैजयंतीं ॥१५॥ ॥१६॥ ॥१७॥ ॥१८॥१९॥२०॥२१॥२२॥२३॥२४॥२५॥२६॥२७॥२८॥२९॥३०॥

विविक्तपापाःपृथग्दूरीकृतदोषाः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ततस्त्रीतित्रयवाक्यम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ निभानिवर्माणीतिअग्रिमेणसं

तंलोकपालंपितरोनुजग्मुर्विविक्तपापाज्वलितास्तपोभिः ॥ सर्वेचभूताभुवनप्रधानानानायुधव्यग्रकराःसुभीमाः ३१ दंडंमहास्त्रंपरिगृह्यदेवोलोकांकुशंनिग्र
हनिश्चितार्थम् ॥ हिरण्मयानांकमलोत्पलानांमालांमनोज्ञामवसज्यकंठे ३२ स्थितोस्थिमेदामिषलोहितार्द्रंसर्वासुराणांनिधनंविरूपम् ॥ तेजोमयंमुद्गर
मुग्ररूपंविकर्षमाणोरुणधूम्रनेत्रः ३३ समन्वितोव्याधिशतैरनेकैर्ययौहारिश्मश्रुरुदारसत्त्वः ॥ महासुराणांनिधनायबुद्धिंचक्रेतदाव्याधिपतिःकृतांतः ॥
३४ ततस्त्रिशीर्षैर्भुजगैर्बृहद्भिर्युक्तंरथंहेमचितंमहात्मा ॥ आस्थायकुंदेंदुनिभंजलेशोययौरणायासुरदर्पहंता ३५ वैडूर्यमुक्तामणिभूषितांगस्तेजोमयः
पाशगृहीतहस्तः ॥ महासुराणांनिधनायदेवःप्रयातिरूप्यांगदबद्धबाहुः ३६ कैलासशृंगप्रतिमोप्रमेयःसमुद्रनाथोमृतपोमहात्मा ॥ महोरगैःस्वैस्तनये
स्सुगुप्तोययौरथेनार्कसमप्रभेण ३७ युद्धायतंयांतमदीनसत्वंनभस्तलेचंद्रमिवातिकांतं ॥ पश्यंतिभूतानिमहानुभावंसंहृष्टरोमाणिकृतांजलीनि ३८ धाता
र्यमांशोथभगोविवस्वान्पर्जन्यमित्रौचशशीचदेवः ॥ त्वष्टातथैवोर्जितविश्वकर्मापूषाचसाक्षाद्दिविदेवराजः ३९ सोरच्छदैःसध्वजकिंकिणीकैर्वैडूर्यनि
ष्कैश्चितहेमकंठैः ॥ हयैर्वरैःशक्ररथप्रकाशैर्युक्तान्रथानारुरुहुःसुरास्ते ४० दिवाकराकारनिभानिकेचिद्धुताशनार्चिःप्रतिमानिकेचित् ॥ निशाकरांशुप्रति
मानिकेचित्तडिद्गणोद्योतनिभानिकेचित् ४१ नीलांशुमेघप्रतिमानिकेचित्कार्ष्णायसाकारनिभानिकेचित् ॥ वर्माणिदिव्यानिमहाप्रभाणित्वष्ट्राकृतान्युत्तम
भानुमंति ४२ आमुच्यमालाश्वसुवर्णपुष्पाःप्रयांतितोयानिलतुल्यवेगाः ॥ द्वावश्विनौचैवमहानुभावौरूपोत्तमौधर्मभृतांवरिष्ठौ ४३ रथंसमारुह्यसुवर्ण
चित्रंरणंगतौकांचनतुल्यवर्णौ ॥ भानोःसुतावैवसवश्चसर्वेबलोत्कटादैत्यवधायदेवाः ४४ रथांश्चनागांश्चमहाप्रमाणानास्थायजग्मुःसुशुभास्त्रहस्ताः ॥
रुद्राश्चसर्वेरुणधूमवर्णाःश्वेतैर्ययुर्गोपतिभिर्बृहद्भिः ४५ महौजसःसर्वगुणोपपन्नादीप्तात्मनोभाभिरिवज्वलंतः ॥ नानायुधव्यग्रकरैर्भुजैस्तैर्लोकान्समस्तानि
वनिर्दहंतः ४६ ययुःससैन्यास्तपनीयनद्धाःसविद्युतस्तोयधरायथैव ॥ विश्वेचदेवास्तपसाज्वलंतोवीर्योत्तमाःसूर्यमरीचिवर्णाः ४७ ययुःससैन्यायुधि
दुर्निवार्याबलोत्कटाःपद्मसहस्रमालाः ॥ रथैःसुयुक्तैस्तपनीयवर्णैर्वैडूर्यमुक्तामणिदामचित्रैः ४८ नानाविधाकारसमाकुलास्तेपारिप्लवैश्चैवसितातपत्रैः ॥
तेजोमयैःकांचनचारुचित्रैःसुनिर्मलैःपावकसंनिभास्ते ४९ उरच्छदैःसध्वजकिंकिणीकैर्हयैश्चवायोःसमवेगवाद्भिः ॥ दिशांगजैश्चैवमहाबलैस्तैःकैलास
शृंगप्रतिमैर्महद्भिः ५०

बंधः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ उरःछादयंतितैःआरूढानांपुंसांअत्युच्छ्रितकंधरत्वेनवक्षसआच्छादकैः ॥ ५० ॥

७१ प्रजग्मुरुग्रायुधचापहस्ताश्चतुर्युगांतेज्वलिताइवोल्काः ॥ साध्याश्चदेवाःसुमहाप्रभावाःस्वाधीनचक्राःप्रतिदीप्तवक्राः ॥ प्रयांतिजांबूनदभूषितांगागांगौघमा अ०५३
त्रैर्गगनैर्बलौघैः ५१ विद्योतयंतोविदिशोदिशश्चमहाबलास्तेजयतांवरिष्ठाः ॥ वरिष्ठपुष्टोष्ठभुजाःसुदप्तावैश्वानरार्कप्रतिमप्रभावाः ५२ तेब्रह्मविद्भिश्च
समस्यमानाःसंपूज्यमानाश्चसुरैःसशक्रैः ॥ गंधर्वसंघैरनुगम्यमानावधायतेषामसुराधिपानाम् ५३ वैडूर्यवज्रस्फटिकाग्रचित्रैर्ध्वजैःसुवर्णैश्चपरिष्कृता
नाम् ॥ रूपंबभौचोत्कटभूषणानांदैत्येंद्रनाशायविभूषितानाम् ५४ आत्मप्रभाभिश्चरणोत्कटाभिर्वर्मप्रभाभिश्चतमोनुदाभिः ॥ ध्वजोत्तमाभिःस्वशरीरभा
भिर्महाप्रभाभिश्चमहोज्ज्वलाभिः ५५ विभांतितेदेववराःससाध्याःप्रध्मातशंखस्वनसिंहनादाः ५६ महारथस्थास्त्रिदिवौकसस्तेमहाबलाःशत्रुबलंप्रयां
ति ॥ महास्त्रहस्ताययुरुग्रकायामहासुराणांनिधनायदेवाः ५७ तथैवसर्वेमहतोतिवीर्याबलोत्कटास्तेसमरंप्रतीताः ॥ ययुर्महामेघसमानवर्णाश्चक्रायुधा
स्तोयदनादनादाः ५८ महेंद्रकेतुप्रतिमामहाबलाःप्रगृह्यसर्वासुरसूदनांगदाम् ॥ रणोत्कटालोहितचंदनाक्ताःसहेममाल्यांबरभूषितांगाः ५९ तेयुद्धशौंडाः
सुभुजास्त्रवीर्याबलोत्कटाःक्रोधविलोडिताक्षाः ॥ ययुःसजांबूनदपद्ममालायथेष्टनानाविधकामरूपाः ॥ खड्गप्रभाश्यामलितांसपीठाःपुरंपरंवैपरिवार्यदेवाः
६० वैडूर्यचामीकरचारुरूपाण्याबध्यगात्रेषुमहाप्रभाणि ॥ वर्माणिदैत्यास्त्रनिवारणानिप्रयांतियुद्धायसपत्नसाहाः ६१ तैरुच्छ्रितैःकांचनवेदिकाग्रैर्वरध्वजै
र्भास्करररश्मिवर्णैः ॥ ययौसुराणांपृतनोग्रभासासमुन्नदंतीयुधिसिंहनादान् ६२ इत्येवमुक्तंत्रिदिवेश्वरस्यसैन्यंतदासीत्सुमहत्प्रभावम् ॥ युद्धंप्रयातस्यजया
वहस्यवधायतेषामसुराधिपानाम् ६३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभ०प०वामनप्रादुर्भावेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ छ ॥ ॥ वैशंपा
यनउवाच ॥ ततःप्रवृत्तोसुरदेवविग्रहस्तदद्भुतोभातिसुरासुराकुलः ॥ वेलामतिक्रम्ययुगांतकालेमहार्णवान्योन्यमिवाश्रयंतः १ नानायुधोद्योतविदी
पितांगामहाबलाश्चायतकार्मुकास्ते ॥ रणोत्सुकावारणहस्तहस्ताःसुदुर्जयास्तोयदनादनादाः २ विस्फारयंतःसहसाधनूंषिचक्राणिचादित्यसमप्रभा
णि ॥ समुत्क्षिपंतोह्यशनीश्चघोरान्खड्गांश्चतेवज्रमुखाश्चशक्तीः ३ महागदाःकांचनपट्टनद्धास्तथायसान्कार्मुकमुद्गरांश्च ॥ शूलांश्चवृक्षांश्चविगृह्यदीप्तान्नदंति
शूराःशतशोरणस्थाः ४ ॥ वैशंपायनउवाच ॥ एतस्मिन्नंतरेतेषामन्योन्यमभिनिघ्नताम् ॥ द्वंद्वयुद्धान्यवर्त्ततदेवानांदानवैःसह ५ ७१

॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ छ ॥
ततःमहार्णवाइवेतियोजना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

मरुतांपंचमोयस्तुसबाणेनाभ्ययुध्यत ॥ महाबलःसुरवरःसावित्रइतियंविदुः ६ अनायुषायाःपुत्रस्तुबलोनाममहासुरः ॥ सोयुध्यतरणेत्युग्रोध्रुवेणवसु
नासह ७ नमुचिश्चासुरश्रेष्ठोधरेणसहयुध्यत ॥ प्रवरौविश्वकर्माणौख्यातौदेवासुरेश्वरौ ८ पुलोमातुमहादैत्योवायुनासहयुध्यत ॥ ससैन्यःपर्वताकारो
रणेयुध्यतदंशितः ९ हयग्रीवस्तुदितिजःसहपूष्णात्वयुध्यत ॥ शूरेणामितवीर्येणभास्कराकारवर्चसा १० शंबरस्तुमहादैत्योमहामायोमहासुरः ॥ भ
गेनायुध्यततदाशहितोयुद्धदुर्मदः ११ शरभःशलभश्चैवदैत्यानांचंद्रभास्करौ ॥ प्रयुद्धौसहसोमेनशैशिराश्त्रेणधीमता १२ विरोचनस्तुबलवान्बलेर्बलवतः
पिता ॥ विष्वक्सेनेनसाध्येनदेवेनचसयुध्यत १३ कुजंभस्तुमहातेजाहिरण्यकशिपोःसुतः ॥ अंशेनायुध्यततदाप्रासप्रहरणेनवै १४ असिलोमातुबलिना
मारुतेनसमंविभो ॥ तदायुध्यतदीप्तास्योविकृतःपर्वतायुधः १५ अनायुषायाःपुत्रस्तुवृत्रोनाममहासुरः ॥ अश्विभ्यांदेववैद्याभ्यांसहयुध्यतसंयुगे १६
एकचक्रस्तुदितिजश्चक्रहस्तोदुरासदः ॥ सहायुध्यतदेवेनसाध्येनदितिजारिणा १७ बलस्तुमधुपिंगाक्षोवृत्रभ्रातामहासुरः ॥ मृगव्याधेनरुद्रेणस
हायुध्यतवीर्यवान् १८ राहुस्तुविकृताकारःशतशीर्षाःसहोदरः ॥ अजैकपादेनरणेसहायुध्यतदंशितः १९ केशीतुदानवश्रेष्ठःप्रावृट्कालांबुदप्रभः ॥
धनेश्वरेणभीमेनसहायुध्यतसंयुगे २० वृषपर्वातुबलिनानिकुंभेनमहारणे ॥ विश्वेदेवेनविश्वेशःसहायुध्यतवीर्यवान् २१ प्रह्लादस्तुमहावीर्योवीरैःस्वैस्त
नयैर्वृतः ॥ युयुधेसहकालेनरणेकालइवापरः २२ अनुह्लादःकुबेरेणधनदेनमहारणे ॥ गदाहस्तेनयुयुधेशोभयन्रिपुवाहिनीं २३ विप्रचित्तिस्तुदैतेयोवरु
णेनमहात्मना ॥ प्रवृत्तोवैरणंकर्तुंदैत्यानांनंदिवर्द्धनः २४ बलिस्तुसहशक्रेणसुरेशेनमहात्मना ॥ युयुधेदेवराजेनबलिनाबलवान्रणे २५ शेषादेवाश्चदैत्या
श्चजघ्नुरन्योन्यमाहवे ॥ विनर्दंतोमहानादान्प्रासासिशरशक्तिभिः २६ अदृश्यंतमहोत्पातायेप्रोक्ताजगतःक्षये ॥ मारुताःसप्तसंक्षुब्धाव्यशीर्यंतमहीधराः ॥
२७ सप्तचैवोत्थिताःसूर्याःशोषयंतोमहार्णवान् ॥ बहुनाभिद्यतधरावायुनामथितायथा २८ व्युत्थिताश्चमहामेघाःशक्रचापांकितोदराः ॥ प्रणेदुःसर्वभू
तानिसर्वाःसतिमिरादिशः २९ देवानामजयोघोरोदृश्यतेकालनिर्मितः ॥ घोरोत्पातःसमुद्भूतोयुगांतसमयेयथा ३० नद्यंतरिक्षंनदिशोनभूमिर्नभास्करो
दृश्यतरेणुजालैः ॥ ववुश्चवातास्तुमुलाःसुधूमादिशश्चसर्वास्तिमिरोपगूढाः ३१ एतेचान्येचबहवोदृश्यंतेदेवनिर्मिताः ॥ भूमौतथांतरिक्षेचमहोत्पाताःस
मंततः ३२ तद्युद्धंदेवदैत्यानांभीमानांभीमदर्शनम् ॥ अपश्यतगुरुर्ब्रह्मासर्वैरेवसुरैःसह ३३

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

वेदैश्चतुर्भिःसांगैश्चविद्याभिश्चसनातनः ॥ पद्मयोनिर्वृतःश्रीमान्सिद्धैश्चपरमर्षिभिः ३४ नानामणिस्तंभसहस्रचित्रमारुह्ययानंददृशेस्वयंभूः ॥ सुभास्वरं
७२ भूतसहस्रयुक्तंप्रदीप्यमानंवपुषावरेण ३५ सुतप्तजांबूनदभक्तिचित्रमानंदभेरीशतसंप्रणादम् ॥ नक्षत्रचंडांशुभिरंशुमंतंवैडूर्यसोमार्कविभूषितांगम् ३६ अ०५४
तमात्मजोवैपुलहःपुलस्त्यस्तथामरीचिर्भृगुरंगिराश्च ॥ ऋक्सामाभिःसम्यगभिष्टुवंतःसेवंतिदेवंवरदंविमाने ३७ तंपावकालोकगुरुंस्वयंभुवंसांगाश्चवेदाम
खदेवताश्च ॥ सेवंतिदेवंभुवनेश्वरेशंभूतानिचान्यानिमहानुभावम् ३८ एतेबभूवुश्चमहर्षिसंघावैश्वानरापावकयोनयश्च ॥ सर्वेययुर्देवपुरोहिताश्चयुद्धोत्सु
काःसर्वसुरासुराणाम् ३९ योगेश्वराःषट्चदिवाकराभाविभूषणैर्भूषितसर्वदेहाः ॥ अंतर्हितावेददृशुर्नभस्थानारायणश्चैवनरश्चदेवाः ४० वक्त्रैश्चतुर्वेदधरैश्च
तुर्भिःसंपूर्णचंद्रप्रतिमैःसुकांतैः ॥ सर्वादिशोनिस्तिमिराश्चकारनवोदितोसौशरदीवचंद्रः ४१ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिदेवासुर
युद्धेसनकादिकागमनंनामत्रिपंचाशत्तमोऽध्यायः ५३ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ उभयोःसेनयोराजन्भूयोयुद्धमवर्त्तत ॥ ना
देनसंचालयतांत्रैलोक्यमिदमव्ययम् १ गोमुखाडंबराणांचभेरीणांमुरजैःसह ॥ झल्लरीडिंडिमानांचव्यश्रूयंतमहास्वनाः २ प्रवृत्तोयुद्धयज्ञस्तुतुमुलोलो
महर्षणः ॥ रणमध्येमहानादःस्वर्गीयःशूरसंमतः ३ युद्धयज्ञस्यनेताभूत्प्रह्रादोदैत्यसत्तमः ॥ विरोचनस्तथाध्वर्युर्युद्धयज्ञप्रवर्त्तकः ४ होताचैवात्रनमु
चिर्वृत्रःस्तोत्रोपकल्पकः ॥ मंत्रादैत्याःसमाख्यातायज्ञकर्मणितत्रवै ५ अनुयातश्चपितृभिरधिकोवापराक्रमैः ॥ यज्ञेतत्राभवद्बाणःसंयुगेचोपतिष्ठते ६
ऐंद्रंपाशुपतंब्राह्मंस्थूणाकर्णंसुदुर्जयम् ॥ मंत्रास्तत्राभ्यवर्तंतसाध्वनुह्लादयोजिताः ७ उद्गाताचमयःश्रीमान्स्थितःशत्रुभयंकरः ॥ विनदन्दितिजश्रेष्ठोदे
वानीकंव्यदारयत् ८ बलिस्तुराजाद्युतिमान्स्वयंतत्रमहासुरः ॥ जाप्यैर्होमैश्चसंयुक्तोब्रह्मत्वमकरोत्प्रभुः ९ रणाग्निर्ज्वलितोघोरोवैरेंधनसमीरितः ॥
हूयतेत्वसुरैस्तत्रदेवोविष्णुःसुरैःसह १० शंखशब्दैःसुतुमुलैर्भेरीणांचमहास्वनैः ॥ उद्घुष्टंविमलंचैवब्रह्मण्यंसुप्रयुज्यते ११ बलश्चबलकश्चैवपुलोमाच
महासुरः ॥ प्रशस्तंचसमंकृत्वासत्रंसम्यक्प्रचक्रिरे १२ कल्माषदंडविमलाविपुलारथपंक्तयः ॥ यूपाश्चसमकल्पंतयुद्धयज्ञेमहाफले १३ कर्णनाली
कनाराचावत्सदंतोपबृंहिकाः ॥ तोमराःसोमकलशाविचित्राणिधनूंषिच १४

॥ १५ ॥ इध्माःप्रस्ताराःशरपंक्तयःपरिधयोगदाइतिसंबंधः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

अस्थीन्यत्रकपालानिपुरोडाशाःशिरांसिच ॥ आज्यंचरौद्रंरुधिरंतस्मिन्यज्ञेभिहूयते १५ इध्माःपरिधयस्तत्रप्रस्ताराविपुलागदाः ॥ हयग्रीवोसिलोमाच राहुःकेशीचदानवः १६ विरोचनश्चजंभश्चकुजंभश्चमहाबलः ॥ सदस्यास्तत्रतुमखेविप्रचित्तिस्तुवीर्यवान् १७ इषवस्तुस्रुवास्तत्ररथाक्षसदृशाःशुभाः ॥ धनुष्कोटयोधनुर्ज्याश्चस्रुचस्तत्रमहामखे १८ प्रतिप्रास्थानिकंकर्मवृषपर्वाकरोदिह ॥ दीक्षितस्तत्रतुबलिस्तस्यपत्नीमहाचमूः १९ शंबरस्तत्रशामित्रमकरोद्दितिनंदनः ॥ अतिरात्रेमहाबाहुर्विततेयज्ञकर्मणि २० दक्षिणास्तस्ययज्ञस्यकालनेमिर्महासुरः ॥ वैतानेकर्मणिविभोयःख्यातोहव्यवाडिव २१ त्रिदशानांतुसैन्यस्यशरीरैर्गतजीवितैः ॥ तस्मिन्यज्ञेतुसवनंवर्धतेदैत्यनिर्मितम् २२ देवानांरुधिरंसंख्येपपुरुग्रादितेःसुताः ॥ नर्दमानाःप्रमुदिताःसोमपानंरणाध्वरे ॥ २३ यदाबलिर्महादैत्योविजेतासमरेसुरान् ॥ तदाह्यवभृथोयज्ञेभविष्यतिनसंशयः २४ महासुरेंद्रपतयोयज्वानोभूरिदक्षिणाः ॥ वेदवंतोवृत्तवंतःशूराःसर्वेतनुत्यजः २५ त्रैलोक्यहरणेमृष्टायुद्धयज्ञायदीक्षिताः ॥ बद्धकृष्णाजिनाःसर्वेव्रतिनोमुंजधारिणः २६ एकनिश्चयकार्याश्चत्रैलोक्यजयकांक्षिणः ॥ सुरदानवदैत्यानांशब्दःसमभवन्महान् २७ नानायुधविहस्तानांत्वरितानांप्रधावताम् ॥ क्ष्वेडितोत्क्रुष्टनिनदैर्गजबृंहितनिःस्वनैः २८ रथनेमिस्वनैर्घोरैस्तुमुलःसर्वतोभवत् ॥ शंखदुंदुभिनिर्घोषैर्हयहेषितनिःस्वनैः २९ हयानांहेषमाणानांदानवानांचगर्जताम् ॥ क्ष्वेडितोत्क्रुष्टनिनदैःपाणिपादरवैस्तथा ३० दानवानांपरेषांचशस्त्रवंतिमहांतिच ॥ समरेभीमकर्माणिसैन्यानिप्रचकाशिरे ३१ ततोनागारथाश्चैवजांबूनदविभूषिताः ॥ भ्राजमानाव्यराजंतमेघाइवसविद्युतः ३२ ऋष्टिशक्तिगदास्तीक्ष्णशूलशक्तिपरश्वधाः ॥ चारुविभ्राजिरेतत्रतेष्वनीकेषुभागशः ३३ रथाबहुविधाकाराःशतशोथसहस्रशः ॥ हेमप्रच्छन्नशिखराज्वलंतइवपावकाः ३४ दानवानांसुराणांचसमालोक्यंतसैनिकाः ॥ कांचनैःकवचैःसर्वेज्वलितार्कसमप्रभैः ३५ सन्नद्धाःसमदृश्यंतज्योतींषिगगनेयथा ॥ उद्यतैरायुधैश्चित्रैस्तलबद्धाःकलापिनः ३६ ऋषभाक्षाःसुरगणाश्चमूमुखगताबभुः ॥ नानावर्णाःपताकाश्चध्वजमालाश्चसंयुगे ३७ युद्ध्यतांरणशौंडानांईरयामासमारुतः ॥ ध्वजालंकारवस्त्राणिकवचानिचरश्मिभिः ३८ भासयामाससर्वाणिरश्मिवर्णानिरश्मिवान् ॥ सर्वेषामप्रमेयाणांबलानांपादचारिणाम् ३९ रजःप्रच्छादयामासपत्रोर्णापांडुरंदिशः ॥ दिव्यायुधधराःसर्वेदीप्तायुधपरिच्छदाः ४० प्रतितस्तंभिरेन्योन्यमनीकंप्रत्यनीकतः ॥ गिरिकूटोच्छ्रयाःसर्वेतदातेदेवदानवाः ४१

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ऊर्णापांडुराश्वेतोर्णावच्छुक्लाःपत्रोर्णेतिपाठेधौतकौशेयवच्छुक्लाः ॥ ४० ॥ ४१ ॥

पत्रवाजैःशरपुंरववेगितैः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ बाणाभ्याशेबाणसमीपे ॥ ५१ ॥ सावित्रंचिक्षेप ॥ ५२ ॥ ५३ ॥



अन्योन्यमभिनिघ्नंतोरणस्थाश्चित्रयोधिनः ॥ बाणैःसुरुचिरैस्तीक्ष्णैःपत्रवाजैर्दुरासदैः ४२ मुद्गरैर्मुशलैःशूलैरयस्तुंडैरुलूखलैः ॥ वज्रैरशनिकल्पैश्चखड्गवृ
क्षादिभिस्तथा ४३ तथाप्रवर्तितेतेषांविमर्देद्भुतविक्रमे ॥ सावित्रस्यवधंप्रेप्सुर्बाणोजग्राहकार्मुकम् ४४ शरजालेनदिव्येनच्छादयानःसुरोत्तमम् ॥
मंत्रैर्हुतइवार्चिष्मान्त्संप्रजज्वालतेजसा ४५ सागराभांमहासेनांदेवानांदैत्यपुंगवः ॥ संशोषयतिबाणौघैरर्कांशुभिरिवार्णवम् ४६ मारुतःसुमहावेगःसा
वित्रःशक्तिमुत्तमाम् ॥ चिक्षेपबलिपुत्रायशक्रोशनिमिवाद्रये ४७ आपतंतीचसाशक्तिर्महोल्काज्वलिताइव ॥ द्विधाछिन्नाक्षुरप्रेणबाणेनाद्भुतकर्मणा ४८ ह
तायामथशक्त्यांतुसावित्रोदेवसत्तमः ॥ विश्वकर्मकृतंदिव्यंसुतीक्ष्णंदानवार्दनम् ४९ सुपीनधारंविमलंविपुलंचंद्रवर्चसम् ॥ अगृह्णान्निशितंखड्गमाशीविषमि
वोरगम् ५० तंगृहीत्वारणमुखेप्रज्वलंतंमहाप्रभम् ॥ बाणाभ्याशेमहातेजाःखड्गपाणिरवस्थितः ५१ सतंस्थितमथालक्ष्यसावित्रंबलिनंदनः ॥ लोहिता
क्षंमहाकायंचिक्षेपघननादच ५२ ततोर्ककिरणाकारानशनिप्रतिमाञ्छितान् ॥ संदधेचाशुबाणौघानाशीविषाशिलीमुखान् ५३ रुक्मपुंखान्प्रदीप्ताग्रा
नुग्रवेगानलंकृतान् ॥ आकर्णपूरांश्चिक्षेपशरानुग्रान्त्समंततः ५४ दृढचापप्रमुक्तास्तेशरावैश्वानरप्रभाः ॥ सावित्रंछादयामासुःकैलासमिवतोयदाः ५५
संच्छाद्यमानःशस्त्रौघैर्बाणेनबलिसूनुना ॥ पराङ्मुखःसुरवरःप्रयातःसरथध्वजः ५६ पराजित्यससावित्रंबाणःपरमहर्षितः ॥ प्रगृह्यकार्मुकंघोरंगतःशक्र
रथंप्रति ५७ बलश्चाप्यसुरश्रेष्ठःप्रगृह्यमहतींगदाम् ॥ ध्रुवायवसवेनूर्ध्निरौद्रांचिक्षेपदानवः ५८ तस्यनिर्माथितस्त्वंसोहेमचित्रंचवर्मवै ॥ गदावेगेनभीमेन
ध्रुवस्यसमरेतदा ५९ शेषाश्चवसवःसर्वेदिव्यास्त्रैर्घोरदर्शनैः ॥ प्राच्छादयन्रणेदैत्यमादित्यमिवतोयदाः ६० ततःसंमर्दितोबाणैर्बलोदानवसत्तमः ॥ अवातर
द्रथात्तस्माद्गदामुद्यम्यवेगवान् ६१ पातयामासशत्रूणांसमाविध्यमहासुरः ॥ दिशःप्राद्रावयत्सर्वास्त्रिदशान्त्सामहागदा ६२ इंद्राशनिरिवेंद्रेणप्रवृद्धासुम
हास्वनाः ॥ तस्याःसविद्युद्घोषायास्तेनशब्देनवेपिताः ६३ व्यद्रवंतपरिभ्रष्टारथेभ्योरथिनस्तदा ॥ तदुदीर्णरथानीकंमूर्याभंमेघनिःस्वनम् ६४ देवानां
शरधाराभिःसमंतादभ्यवर्षत ॥ क्षुरकैर्विशिखैर्भल्लैर्वत्सदंतैःशिलीमुखैः ६५ मुहुर्मुहुर्महातेजाःप्रत्यविध्यन्महासुरान् ॥ बलाकस्तुगदापाणिर्व्यादिता
स्यइवांतकः ६६ तडिद्रणार्कसदृशोवैश्वानरइवापरः ॥ पिबन्निवशरौघांस्तान्देवचापसमुच्छ्रितान् ६७ अभ्यद्रवतदैत्येंद्रोमहार्णवइवापरः ॥ अवस्फूर्ज
न्दिशःसर्वाःस्वेनवीर्येणदानवः ६८

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ शत्रुणांशत्रूषु ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांचतुःपंचाशत्तमोऽध्याय. ५४

अरुजंस्त्रिदशान्दैत्यःसिंधुवेगान्नगाइव ॥ समुद्रस्तरसादेवान्वायुर्वृक्षानिवौजसा ६९ शामयंश्चमहेष्वासान्वसुभ्यांसमसज्जत ॥ आपश्चैवानिलश्चैववववर्षतुर
रिंदमौ ७० शरवर्षाणिदीप्तानिमेघाविवपरंतपौ ॥ क्षिप्तांस्तान्त्रिशिखान्दीप्तानंतरिक्षेसचिच्छिदे ७१ अमृष्यमाणस्तत्कर्मध्रुवस्तमभिदुद्रुवे ॥ तौपृथक्श
रवर्षाभ्यामन्योन्यमभिजघ्नतुः ७२ उत्तमाभिजनौशूरौदेवदैत्यौयशस्करौ ॥ तौनखैरिवशार्दूलौदंतैरिवमहाद्विपौ ७३ रथशक्तिभिरन्योन्यंविशिखैश्चाप्यकं
तताम् ॥ निर्भिंदंतौचगात्राणिविलिखंतौचसायकैः ७४ स्तंभयंतौचबलिनौप्रतुदंतौस्थितौरणे ॥ चरंतौविविधान्मार्गान्मंडलानिचभागशः ७५ मुद्गरैर्ज
घ्नतुःक्रुद्धावन्योन्यमभिमानिनौ ॥ असिभ्यांचर्मणीदिव्येविपुलेचशरासने ७६ निकृत्याचलसंकाशौबाहुयुद्धंप्रचक्रतुः ॥ व्यूढोरस्कौदीर्घभुजौनियुद्धकुश
लावुभौ ७७ बाहुभिःसमसज्जेतामायसैःपरिघैरिव ॥ तयोरासीद्भुजाघातैर्निग्रहःप्रग्रहस्तथा ७८ अतीवभीमःसंह्रादोवज्रपर्वतयोरिव ॥ द्विपाविवविषा
णाग्रैःशृंगैरिवमहावृषौ ७९ अन्योन्यमभिसंरब्धौमुहूर्तंपर्यकर्षताम् ॥ ततःपराजितोदेवोबलाकेनतथाध्रुवः ॥ रथंत्यक्त्वाभयात्तस्यप्रनष्टःप्राङ्मुखोव
सुः ॥ ८० ॥ ॥ इतिश्रीम०हरिवंशेभविष्यपर्वणिवामनप्रादुर्भावे०चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ पुनरेवतुतत्रा
सीन्महायुद्धंसुदारुणम् ॥ क्रुद्धस्यनमुचेश्चैवधरस्यचमहात्मनः १ संरब्धौचमहाबाहूमहेष्वासावरिंदमौ ॥ परस्परमुदैक्षेतांदहंताविवलोचनैः २ विस्फा
र्यचमहाचापंहेमपृष्ठंदुरासदम् ॥ संरंभात्सवसुश्रेष्ठस्त्यक्त्वाप्राणानयुध्यत ३ ससायकमयैर्जालैर्धरोदैत्यरथंप्रति ॥ भानुमाद्रिःशिलाधौतैर्भानोःप्राच्छादय
त्प्रभाम् ४ ततःप्रहस्यनमुचिर्धरस्यचाशिलाशितान् ॥ असृजत्सायकान्दीप्तान्भीमवेगान्दुरासदान् ५ महातेजामहाबाहुर्महावेगोमहारथः ॥ विंध्याधा
तिबलोदैत्योनवभिर्निशितैःशरैः ६ सतोत्रैरिवमातंगोवार्यमाणःपतत्रिभिः ॥ अभ्यधावत्संक्रुद्धोनमुचिंवसुसत्तमः ७ तमापतंतंवेगेनसंरंभान्नमुचीरणे ॥ दै
त्यःप्रत्यसरद्देवंमत्तोमत्तमिवद्विपम् ८ ततःप्राध्मापयच्छंखंभेरीशतनिनादितम् ॥ विक्षोभ्यतद्बलंहर्षादुद्धूतार्णवसंप्रभम् ९ अश्वानृक्षसवर्णाभान्हंसवर्णैः
सुवाजिभिः ॥ मिश्रयन्त्समरेदैत्योवसुंप्राच्छादयच्छरैः १० समाश्लिष्टावथान्योन्यंवसुदानवयोरथौ ॥ दृष्ट्वाप्राकंपतमुद्धास्त्रिदशानांमहद्बलम् ११ क्रोधसं
रंभताम्राक्षौप्रेक्षमाणौमुहुर्मुहुः ॥ गर्जंताविवशार्दूलौप्रभिन्नाविववारणौ १२ महामेघोपमंरौद्रमासीदायोधनंतयोः ॥ रथश्वावरसंबाधंमत्तवारणसंकुलम् १३

॥ १ ॥ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ॥ ६ ॥ ७ ॥प्रत्यसरत्अभिससार ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ महामेघोपमंमहांतोमेघायत्राकाशेतदुपमं संकीर्ण
मेघेननभसातुल्यमित्यर्थः आयोधनंयुद्धभूमिः यमदंष्ट्रोपममित्यपिपाठः ॥ १३ ॥

७४ समाजमिवतंदृष्ट्वाप्रेक्षमाणामहारथाः ॥ आशंसंतोजयंताभ्यांयोधानैकत्रसंश्रयाः १४ तयोःप्रेक्ष्यंतसंरंभंसन्निकृष्टंमहास्त्रयोः ॥ सिद्धगंधर्वमुनयोदेवदान अ०५५
वयोस्तदा १५ तौच्छादयंतावन्योन्यंसमरेनिशितैःशरैः ॥ शरजालावृतंव्योमचक्रतुश्चमहाबलौ १६ तावन्योन्यंजिघांसंतौशरैस्तीक्ष्णैर्महारथैः ॥ प्रेक्ष
णीयतमावास्तांवृष्टिमंताविवांबुदौ १७ सुवर्णविकृतान्बाणान्प्रमुंचंतावरिंदमौ ॥ भास्कराभंतदाकाशमुल्काभिरिवचक्रतुः १८ तयोःशराःप्रकाशंतेदेव
दानवयोस्तदा ॥ पंक्तयःशरदमत्तानांसारसानामिवांबरे १९ त्रिदशाश्वगजानांहिशरीरैर्गतजीवितः ॥ क्षणेनसंवृताभूमिर्मेघैरिवनभस्तलम् २० ततःसु
धारंज्वलितंसूर्यमंडलसन्निभम् ॥ धरायवसवेमुकंचक्रंनमुचिनारणे ॥ पतताातेनचक्रेणधरस्यस्यंदनोत्तमः २१ सध्वजःसायुधःसाश्वोदग्धोर्ककिरणप्रभः ॥
सत्यक्त्वास्यंदनंदेवःप्रदीप्तंचक्रतेजसा २२ भयात्तस्यासुरेंद्रस्यगतःस्वगृहमुत्तमम् ॥ पराजित्यसुरंदैत्योनमुचिर्बलगर्वितः २३ प्रयातःस्वेनसैन्येनभूयःसुर
चमूंप्रति ॥ यौतौमयश्चत्वष्टाचदेवदैत्येषुविश्रुतौ २४ प्रवरौविश्वकर्माणौमायाशतविशारदौ ॥ घोरस्तयोःसंप्रहारःप्रावर्ततसुदारुणः २५ अन्योन्यस्प
र्द्धिनोस्तत्रचिरात्प्रभृतिसंयुगे ॥ त्वष्टातुनिशितैर्बाणैर्दैत्यंतुबलदर्पितम् २६ पराक्रांतंपराक्रम्यविव्याधत्रिशतैःशरैः ॥ मयस्तुप्रतिविव्याधत्वष्टारंनिशि
तैःशरैः २७ सुघातैःसुप्रसन्नाग्रैःशातकुंभविभूषितैः ॥ ननाददितिजश्रेष्ठोहतस्त्वष्टुःशरैर्मयः २८ संक्रुद्धोदैत्यसैन्यस्यविचिन्वन्निवजीवितम् ॥ शक्तिंकन
कवैडूर्यचित्रदंडांमहाप्रभाम् २९ देवोगृहीत्वासमरेदैत्येंद्रंसमपातयत् ॥ भीमांसर्वायसींदृष्ट्वापुरंदरइवाशनिः ३० तांत्वष्टुर्भुजनिर्मुक्तामर्कवैश्वानरप्र
भाम् ॥ मयश्चिच्छेदतीक्ष्णाग्रैस्तूर्णंसप्तभिराशुगैः ३१ ततःक्षुण्वन्निवप्राणांस्त्वष्टुःकोपान्महासुरः ॥ प्रेषयामाससंरब्धःशरान्बर्हिणवाससः ३२ चिच्छे
दबाणांस्त्वष्टातान्ज्वलितैर्नतपर्वभिः ॥ दैत्यस्यसुमहावेगैःसुवर्णविकृतैःशरैः ३३ तौवृषाविवनर्दंतौबालिनौवासितांतरे ॥ शार्दूलाविवचान्योन्यंप्रसक्ता
वभिजघ्नतुः ३४ अन्योन्यंप्रतियुध्यंतावन्योन्यवधकांक्षिणौ ॥ अन्योन्यमभिवीक्षंतौक्रुद्धावाशीविषाविव ३५ महागजाविवासाद्यविषाणाग्रैःपरस्परम् ॥
शरैःपूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ३६ ततःसुविपुलांदीप्तांमयोरुक्मांगदोगदाम् ॥ त्वष्टरिप्राहिणोत्क्रुद्धःसर्वप्राणहरांरणे ३७ तयाजघानातिरथ
स्त्वष्टुरुत्तमवाजिनः ॥ गदयादानवःक्रुद्धोवज्रेणेंद्रइवाचलान् ३८ ततःक्रुद्धोमहादैत्यःक्षुराभ्यामथसंयुगे ॥ पुनर्द्वाभ्यांशराभ्यांतुनिशिताभ्यांमहारणे ॥ ७४
३९ ध्वजंत्वष्टुरथच्छित्वासूतंनिन्येयमक्षयम् ॥ महाबलान्महावेगान्त्सदश्वान्गदयाहनत् ४०

दृष्ट्वात्वष्टाहतंसूतमश्वांश्चविनिपातितान् ॥ हताश्वंरथमुत्सृज्यसूतंचपतितंभुवि ४१ विस्फारयन्महाचापंस्थितोभूमाविवाचलः ॥ हताश्वसूतंविरथंदृष्ट्वा रिपुमवस्थितम् ४२ जयश्रियासेव्यमानोदीप्यमानइवानलः ॥ मयःकालांतकप्रख्यश्चापपाणिरदृश्यत ४३ प्रादहद्देवसैन्यानिदावाग्निरिवकाननम् ॥ त्वष्टुःसोक्षिपतानुग्रान्नाराचांस्तिग्मतेजसः ४४ चतुर्दशशिलाधौतान्त्सायकान्विविधाकृतीन् ॥ तेपपुस्तस्यसैन्यस्यशोणितंरुक्मभूषणाः ४५ आशी विषाइवक्रुद्धाभुजंगाःकालचोदिताः ॥ तेक्षितिंसमवर्त्तंतशोभंतेरुधिरोक्षिताः ४६ अर्द्धप्रविष्टाःसंरब्धाबिलानीवमहोरगाः ॥ तंप्रत्यविध्यत्त्वष्टातुजांबून दविभूषितैः ४७ चतुर्दशभिरत्युग्रैर्नाराचैरभिदारयन् ॥ तेतस्यदैत्यस्यभुजंसव्यंनिर्भिद्यपत्रिणः ४८ विदार्यविविशुर्भूमिंपन्नगाइववेगितः ॥ तेप्रकाशं तनाराचाप्रविशंतोवसुंधराम् ४९ अस्तंगच्छंतमादित्यंप्रविशंतइवांशवः ॥ मयस्त्रिभिरथानर्च्छत्त्वष्टारंतुपतत्रिभिः ५० सुपर्णवेगैर्विकृतैर्ज्वलद्भिःप्राणनाश नैः ॥ त्वष्टाथमयनिर्मुक्तैःसायकैरर्दितःप्रभुः ५१ अपयातोरणंहित्वाव्रीडयाभिसमन्वितः ॥ तंतत्रहतसूतंचभुजंगइवनिर्विषम् ५२ त्वष्टारंविरथं कृत्वामुदितःसतुदानवः ॥ विस्फार्यमाणोरुचिरंचापंरुक्मांगदंदृढम् ५३ रणेव्यतिष्ठद्दैत्येंद्रोज्वलन्निवहुताशनः ॥ पुलोमातुबलश्लाघीदृप्तोदानवसत्त मः ५४ रथेश्वेतहयेनेहसार्द्धंयुध्यतिवायुना ॥ सर्वेषामेवभूतानांयःप्राणःकथ्यतेद्विजैः ५५ बलिनाकालकल्पेनवायुनासहसंगतः ॥ पुलोम्नस्तत्रपवनः श्रुत्वाज्यातलनिःस्वनम् ५६ नामृष्यतयथामत्तोगजःप्रतिगजस्वनम् ॥ दैत्यचापच्युतैर्बाणैःप्राच्छाद्यंतदिशोदश ५७ रश्मिजालैरिवार्कस्यविततंसांबरं जगत् ॥ सताम्रनयनःक्रुद्धःश्वसन्निवमहोरगः ५८ वृतोदैत्यशतैर्वायूरश्मिवानिवभास्करः ॥ दैत्यचापभुजोत्सृष्टाःशराबर्हिणवाससः ५९ रुक्मपुंखाः प्रकाशंतहंसाःश्रेणीकृताइव ॥ चापध्वजपताकाभ्यःशस्त्रादीप्तमुखाश्च्युताः ६० प्राप्तवंतश्चदृश्यंतेदैत्यस्यापततःशराः ॥ एवंसुतीक्ष्णान्खचराञ्छलभा निवपावके ६१ सुवर्णविकृतान्चित्रान्मुमोचदितिजःशरान् ॥ तमंतकमिवक्रुद्धमापतंतंसमारुतः ६२ त्यक्त्वाप्राणानतिक्रम्यविव्याधनवभिःशरैः ॥ त स्यवेगमसंहार्यंदृष्ट्वावायुःसनातनः ६३ उत्तमंजवमस्थायव्यधमत्सायकव्रजान् ॥ तेजोविधम्यबलवाञ्छरजालानिमारुतः ६४ विव्याधदैत्यंविंशत्या विशिखैर्नतपर्वभिः ॥ मरुद्गणानांप्रवरादशदिव्यामहौजसः ६५ साधुसाध्वितिवेगेनसिंहनादंप्रचक्रिरे ॥ तस्मिन्त्समुत्थितेशब्देतुमुलेलोमहर्षणे ६६ अभ्यधावंतदितिजाःपौलोमाःक्रोधमूर्च्छिताः ॥ तेसमासाद्यपवनंसमावृण्वन्शरोत्तमैः ६७

च्युताःधनुषइत्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ व्रजान्समूहान् ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥

७५ पर्वतंवारिधाराभिःप्रावृषीवबलाहकाः ॥ तेपीडयंतःपवनंक्रुद्धाःसप्तमहारथाः ६८ प्रजासंहरणेघोराःसोमंसप्तग्रहाइव ॥ ततोदक्षिणमक्षोभ्यंनानारत्नवि
भूषितम् ६९ करंगजकराकारमुद्यम्यधियुधिमारुतः ॥ तेषांमूर्द्धसुदैत्यानांपातयामासवीर्यवान् ७० निहतावायुवेगेनतेनसप्तमहारथाः ॥ त्यक्त्वाप्राणा अ०५५
न् पुलोमातुविव्याधनवभिःशरैः ७१ प्रदीपितमसंहार्यंदृष्ट्वावायुंसनातनम् ॥ असंचिंत्यसुरोघांस्तान्ज्वलितांश्चपुलोमतः ७२ तेषांविदार्यतेजांसिदान
वानांमहात्मनाम् ॥ शोणिताक्लिन्नमुकुटागैरिकाक्ताइवाद्रयः ७३ तेभिन्नवर्मास्थिभुजाःपतंतोभांतिदानवाः ॥ मातंगयूथसंभग्नापुष्पिताइवपादपाः
७४ तेषांविदारितैर्देहैर्दानवानांमहात्मनाम् ॥ ततःप्रावर्त्ततनदीरौद्ररूपाभयावहा ७५ प्रस्रवंतीरणेरक्तंभीरूणांभयवर्द्धिनी ॥ देवदैत्यगजाश्वानांरुधिरौ
घपरिप्लुता ॥ रणभूमिरभूद्रौद्रातत्रतत्रसहस्रशः ७६ संभूतागतसत्वैश्चयक्षराक्षसखेचरैः ॥ सानुगैःसपताकैश्चसोपासंगरथध्वजैः ७७ शीर्णकुंभै
स्तथानागैर्घंटाभिस्तुविभूषितैः ॥ सुवर्णपुंखैर्ज्वलितैर्नाराचैस्तिग्मतेजसैः ७८ देवदानवनिर्मुक्तैःसविषैरुरगैरिव ॥ प्रासतोमरनाराचैःशक्तिखड्गपरश्वधैः
७९ सुवर्णविकृतैश्चापिगदामुशलपट्टिशैः ॥ कनकांगदकेयूरैर्मणिभिश्चसकुंडलैः ८० तनुत्रैःसतलत्रैश्चहारैर्निष्कैश्चशोभनैः ॥ हतैश्चदितिजैस्त
त्रशस्त्रस्यंदनवर्जितैः ८१ पतितैरपिविद्धैश्चशतशोथसहस्रशः ॥ निपातितध्वजरथोहतवाजिरथद्विपः ८२ विमर्दोदेवदैत्यानांसदृशःकर्मणाब
भौ ॥ अथदैत्यसहस्रेणपौलोमेनमहासुरः ८३ संवृतःपवनःश्रीमान्गदामुशलपाणिना ८४ तेजघ्नुःशतसाहास्राःपवनंदानवोत्तमाः ॥ तैर्वध्यमानःसब
भौसमंतादर्पितैःशरैः ८५ हत्वाष्टौतत्रयोधानांशतानिपवनःप्रभुः ॥ कृत्वामार्गंसुरश्रेष्ठोननादसुमहारथः ८६ अद्यापिचसुविस्तीर्णःपंथाःसंदृश्यतेदिवि
नाम्नावायुरथोनामसिद्धाःपश्यंतितंदिवि ८७ ॥ वैशंपायनउवाच ॥ हयग्रीवस्तुदितिजःपूषाणंप्रतिवीर्यवान् ॥ ननादसुमहानादःसिंहनादंमहारथः
८८ विस्फार्यसुमहच्चापंहेमजालविभूषितं ॥ पूषाणंदितिजोपश्यत्क्रुद्धोघोरेणचक्षुषा ८९ भुजाभ्यामाददानस्यसंदधानस्यवैशरान् ॥ मुंचतःकर्षतोवा
पिददृशुस्तत्रनांतरम् ९० अग्निचक्रोपमंदीप्तंमंडलीकृतकार्मुकम् ॥ तदासीद्दानवेंद्रस्यसव्यदक्षिणमस्यतः ९१ रुक्मपुंखैस्ततस्तस्यचापमुक्तैः
शितैःशरैः ॥ प्राच्छाद्यंताशिलाधौतैर्दिशःसूर्यस्यचप्रभाः ९२ ततःकनकपुंखानांशराणांनतपर्वणाम् ९३ नभश्चराणांनभसिदृश्यंतेबहवोव्रजाः ॥ ७५
गिरिकूटनिभाच्चापात्प्रभवंतःशरोत्तमाः ९४ श्रेणीभूताःप्रकाशंतेयांतःश्येनाइवांबरे ॥ गृध्रपत्राञ्छिलाधौतान्कार्तस्वरविभूषितान् ९५

॥ ८८ ॥ पूषाणंपूष्णं ॥ ८९ ॥ ९० ॥ अग्निचक्रंअलातचक्रं ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥

महावेगान्प्रशस्ताग्रान्मुमोचदितिजःशरान् ॥ ततश्चापबलोद्भूताःशातकुंभविभूषिताः ९६ देहेसमवकीर्यंतपूष्णःसन्निहिताःशराः ॥ तेव्योम्निरुक्मविकृ
ताःसंप्रकाशंतसर्वशः ९७ खद्योताइवघर्मांतेखेचरंतःसमंततः ॥ शिलाधौताःप्रसन्नाग्राःपूषाणंसिषिचुःशराः ९८ पर्वतंवारिधाराभिर्यथाप्रावृषितोयदाः
ततःप्रच्छादयामासपूषाणंशरवृष्टिभिः ९९ पर्वतंवारिधाराभिश्छादयन्निवतोयदः ॥ ततःसपूष्णोदेवस्यबलंवीर्यंपराक्रमम् १०० व्यवसायंचसत्वंचप
श्यंतित्रिदशाद्भुतम् ॥ तांसमुद्रादिवोद्भूतांशरवृष्टिंसमुत्थिताम् १ नाचिंतयत्तदापूषादैत्यंचाभ्यद्रवद्रणे ॥ हेमपृष्ठंमहानादंपूष्णआसीन्महाधनुः २ वि
कृतंमंडलीभूतंशक्राशनिमिवापरम् ॥ ततःशराःप्रादुरासन्पूरयंतइवांबरम् ३ सुवर्णपुंखाःपूष्णस्तेप्रभवंतःशरासनात् ॥ मालेवरुक्मपुंखानांवितताव्यो
म्निपत्रिणाम् ४ प्रादुरासीन्महाघोराबृहतीपूषकार्मुकात् ॥ ततोव्योम्निविभक्तानिशरजालानिसर्वशः ५ आहतानिव्यशीर्यंतशरैःसन्नतपर्वभिः ॥ ततःक
नकपुंखानांछिन्नानांकंकवाससाम् ६ पततांपात्यमानानांखमासीच्चावृतंरणे ॥ पूषाप्रापूरयद्बाणैर्हयग्रीवंशिलाशितैः ७ नामांकैरर्कसदृशैर्दिव्यहेमपरिष्कृ
तैः ॥ ततोव्यसृजदुग्राणिशरजालानिदानवः ८ अमर्षीबलवान्क्रुद्धोदिधक्षन्निवपावकः ॥ पूष्णस्त्वाजौध्वजंचैवपताकांधनुरेवच ९ रश्मीन्योक्त्राणिचा
श्वानांहयग्रीवोरणेच्छिनत् ॥ अथाप्यश्वान्पुनर्हत्वाचतुर्भिःसायकोत्तमैः १० सारथिंसुमहातेजारथोपस्थादपातयत् ॥ कृतस्तुविरथःपूषाहयग्रीवेणसं
युगे ११ पूषातस्यरथाभ्यासात्सययौतेनवैजितः ॥ गतःशक्ररथाभ्यासंमुक्तोमृत्युमुखादिव १२ तत्राद्भुतमिदंभूयोयुद्धंवर्ततदारुणम् ॥ कृतप्रतिकृतं
घोरंशंबरस्यभगस्यच १३ सप्तकिष्कुपरीणाहंद्वादशारत्निकार्मुकम् ॥ चापंचाशनिनिर्घोषंदृढज्यंभारसाधनम् ॥ विक्षिपन्नक्षसदृशान्व्यसृजत्सायकान्बहून्
१४ क्रोधसंरक्तनयनःशंबरःसर्वयोगवित् ॥ तेनवित्रास्यमानानिदेवसैन्यानिसर्वशः १५ समकंपंतभीतानिसिंधोरिवमहोर्मयः ॥ तमापतंतंसंप्रेक्ष्यविरू
पाक्षंविभीषणम् १६ भगःप्रस्फुरमाणौष्ठस्त्वरमाणोव्यदारयत् ॥ ततोभगोमहेष्वासोदिव्यंविस्फारयन्धनुः १७ अवाकिरन्दैत्यगणाञ्छरजालेनछादयन्
तमभ्यगाद्भगोदैत्यंतूर्णमस्यंतमंतिकात् १८ मातंगमिवमातंगोवृषंप्रतिवृषोयथा ॥ तौप्रगृह्यमहावेगौधनुषीभारसाधने १९ प्रच्छादयेतामन्योन्यंतक्षमा
णौरणेशरैः ॥ तयोःसुतुमुलंयुद्धमासीद्घोरंमहारणे २० भगशंबरयोर्भीममप्रमेयंमहात्मनोः ॥ अथपूर्णायतोत्सृष्टैःशरैःसन्नतपर्वभिः २१ व्यदारयेताम
न्योन्यंकार्ष्णेनिर्भिद्यचर्मणी ॥ तौतुविकृतसर्वांगौरुधिरेणसमुक्षितौ २२

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥ १३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

संप्रेक्ष्यमाणौरथिनावुभौपरमदुर्मदौ ॥ तक्षमाणौसितैर्बाणैर्नवीक्षितुमशक्नुताम् २३ अथविव्याधसमरेत्वरमाणोसुरोभगम् ॥ नाराचैःक्रोधताम्राक्षः
कालांतकयमोपमः २४ गरुत्मानिवचाकाशेपोथयानोमहोरगम् ॥ नाराचान्यपतन्देहेतूर्णंशंबरचोदिताः २५ तानंतरिक्षेनाराचान्भगश्चिच्छेदपत्रि
भिः ॥ ज्वलंतमचलप्रेष्यंवैश्वानरसमप्रभम् २६ ततोभगंचतुःषष्ट्याविव्याधासुरसत्तमः ॥ शिलीमुखैर्महावेगैर्जांबूनदविभूषितैः २७ तदातत्सुचिरंका
लंयुद्धंसममिवाभवत् ॥ शंबरस्यचमायाभिर्नादृश्यतततोंबरम् २८ दोर्भ्यांचिक्षिपतश्चापंरणेविष्टभ्यतिष्ठतः ॥ श्रूयतेधनुषःशब्दोविस्फूर्जितमिवाशनिः
२९ सभगस्यहयान्हत्वासारथिंचमहाहवे ॥ अभ्यवर्षच्छतैरेनंपर्जन्यइववृष्टिमान् १३० नतस्यासीदनिर्भिन्नंगात्रेष्व्यंगुलमंतरम् ॥ भगदेवस्यदैत्येनशं
बरेणास्त्रघातिना १३१ दैत्यस्यचाद्भुतंदिव्यमस्त्रमस्त्रेणधारयन् ॥ मायायुद्धेनमायावीशंबरोस्तमयोभवत् ३२ अवंचयद्भगंदैत्योमायाभिर्लाघ
वेनच ॥ भगस्तस्यरथंसाश्वंशरवर्षैरवाकिरत् ३३ सहस्रमायोद्युतिमान्देवसेनांनिषूदयन् ॥ अदृश्यतशरैश्छन्नःशंबरःशतशोरणे ३४ अदृश्यन्पतितो
भूमौगतचेताइवासुरः ॥ अथस्मयुध्यतेभूयःशतधाशैलसन्निभः ३५ दिशागजेंद्रमारूढोदृश्यतेसपुनर्बली ॥ प्रादेशमात्रश्चपुनःपुनर्भवतिशैलवत् ३६
महामेघइवश्रीमान्तिर्यगूर्ध्वंचसोभवत् ॥ पुनःकृत्वाविरूपाणिविकृतानिचसर्वशः ३७ सर्वाभीषयतेसेनांदेवानांभीमदर्शनः ॥ तेभीताःप्रपलायंतेसिंहंदृ
ष्ट्वामृगायथा ॥ ततःसोन्यंवरंदेहंकृत्वाप्रांशुतरंपुनः ३८ गच्छत्यूर्ध्वगतिंघोरोदिशःशब्देनपूरयन् ॥ नभस्तलगतश्चापिवर्षतेवासवोयथा ३९ संवर्त्तकां
बुदप्रख्यःपूरयन्पृथिवीतलम् ॥ संवर्त्तकोनलश्चैवभूत्वाभीमपराक्रमः ४० शतवर्माशताशिखोददाहचपुनःसुरान् ॥ मुहूर्त्ताच्चमहाशैलःशतशीर्षःशतोदरः
४१ अदृश्यतदिवस्तंभःशतशृंगइवाचलः । येन्येदैत्याश्चसाध्याश्चयेचविश्वेचदेवताः ४२ क्षिपंत्यस्त्राणिदिव्यानितानिसोग्रसतासुरः ॥ युद्धमानश्चसमरेसर
थःसोसुरोत्तमः ४३ गंधर्वनगराकारस्तत्रैवांतरधीयत ॥ तेभीताःसमुदीक्षंतत्रिदशाभीमविक्रमाः ४४ सहस्रमायंसमरेशंबरंचित्रयोधिनम् ॥ सभगोभयसं
त्रस्तोदानवेंद्रस्यसंयुगे ४५ रथंत्यक्त्वामहाभागोमहेंद्रंशरणंगतः ॥ पराजित्यतुतंदेवंदानवेंद्रःप्रतापवान् ४६ गतोयत्रमहातेजाजातवेदामहाप्रभः ॥ सवाक्भि
वाग्भिरुग्राभिःक्रुद्धस्तर्जयतेबली ॥अवाम्येषहितेमृत्युरित्युक्त्वांतरधीयत ४७ वैशंपायनउवाच ॥ एतस्मिन्नंतरेभूत्वाब्राह्मणेंद्रोमहाबलः ॥ जघानसोम
शीतास्त्रोदानवानांचमूंरणे ४८ कैलासशिखराकारोद्युतिमद्भिर्गणैर्वृतः ॥ अवधीद्दानवान्दृष्ट्वादंडपाणिरिवांतकः ४९

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

७६

॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ १६९ ॥

पोथयद्रथवृंदानिवाजिवृंदानिवैप्रभुः ॥ दैत्येषुविचरञ्छ्रीमान्युगांतेकालवद्बली ५० सोमर्षद्रथजालानिउरुवेगेनचंद्रमाः ॥ ददाहदानवान्सर्वान्दावाग्नि
रिवचोदितः ५१ मृदन्रथेभ्योरथिनोगजेभ्योगजयोधिनः ॥ सादितश्चाश्वपृष्ठेभ्योभूमौचापिपदातिनः ५२ शीतेनव्यधमत्सर्वान्वायुर्वृक्षानिवौजसा ॥
चंद्रमाःसुमहातेजादानवानांमहाचमूम् ५३ तदस्त्रमभवत्तस्यप्रदिग्धंशत्रुशोणितैः ॥ पिनाकमिवरुद्रस्यक्रुद्धस्याभिघ्नतःपशून् ५४ युगांतको
पमःश्रीमान्दैत्येषुव्यचरद्बली ॥ आचार्यमहतींसेनांप्राद्रवंतींपुनःपुनः १५५ चंद्रंमृत्युमिवायांतंदृष्ट्वायोधाविसिस्मयुः ॥ यतोयतःप्रक्षिपतिशिशिरास्त्रंत
मोनुदः ५६ ततस्ततोव्यशीर्यंतदैत्यसैन्यानिसंयुगे ॥ व्यदारयत्ससैन्यानिस्वबलेनाभिसंवृतः ५७ ग्रसमानमनीकानिव्यादितास्यमिवांतकम् ॥ तंत
थाभीमकर्माणंगृहीतास्त्रंसहाहवे ५८ दृष्ट्वाशशांकमायांतंदैत्याभंचंद्रभास्करौ ॥ तालमात्राणिचापानिकर्षमाणौमहाबलौ ५९ छादयेतांशरैश्चंद्रं
वृष्टिमंताविवांबुदौ ॥ अथविस्फार्यमाणानांकार्मुकाणांसुरासुरैः १६० अभवत्सुमहाशब्दोदिशःसन्नादयन्निव ॥ विनदद्भिर्महानागैर्हेषमाणैश्चवाजिभिः
१६१ भेरीशंखनिनादैश्चतुमुलंसर्वतोभवत् ॥ युयुत्सवस्तेसंरब्धाजयगृध्रायशस्विनः ६२ अन्योन्यमभिगर्जंतोगोष्ठेष्विवमहावृषाः ॥ शिरसांपा
त्यमानानांसमरेनिशितैःशरैः ६३ अश्मवृष्टिरिवाकाशेह्यभवत्सेनयोस्तयोः ॥ कुंडलोष्णीषधारीणिजातरूपस्रजांसिच ६४ पतितानिस्मदृश्यंतेशिरांसि
रणमूर्द्धनि ॥ विशिखैर्मथितैर्गात्रैर्बाहुभिश्चसकार्मुकैः ६५ सहस्ताभरणैश्चान्यैर्विच्छिन्नैरुधिरोक्षितैः ॥ कवचैराव्रतैर्गात्रैरुरुभिश्चंदनोक्षितैः ६६ मुखैश्च
चंद्रसंकाशैस्तप्तकुंडलभूषणैः ॥ गजवाजिमनुष्याणांसर्वगात्रैःसमंततः ६७ आसीत्सर्वासमाकीर्णामुहूर्तेनवसुंधरा ॥ चापमेघाश्चविपुलाःशस्त्रविद्यु
त्प्रकाशिनः ॥ वाहनानांचनिर्घोषःस्तनयित्नुसमोभवत् १६८ ससंप्रहारस्तुमुलःकटुकःशोणितोदकः ॥ प्रावर्त्ततसुराणांचदानवानांचसंयुगे १६९
॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेपंचपंचाशतमोऽध्यायः ५५ ॥ वैशंपायनउवाच ॥ तस्मिन्महाहवेरौद्रेतुमुलेलो
महर्षणे ॥ ववर्षुःशरवर्षाणिसंरब्धादेवदानवाः १ व्याक्रोशंतगजास्तत्रशरघातप्रपीडिताः ॥ अश्वाश्चपर्यधावंतहतारोहादिशोदश २ उत्पत्यनिप
तंत्यन्येशरवर्षप्रपीडिताः ॥ देवानांदानवानांचगजाश्वरथिनांरणे ३ समरेतत्रशूराणामन्योन्यमभिधावताम् ॥ धनुषांतलशब्देननप्राज्ञायतकिंचन
४ शरशक्तिगदाभिस्तेखड्गैश्चामिततेजसः ॥ निजघ्नुर्महतींसेनामन्योन्यस्यपरंतप ५

इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ ७ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

बाहूनामुत्तमांगानांकार्मुकाणांचसंयुगे ॥ राशयस्तत्रदृश्यंतेदेवदैत्यसमागमे ६ अश्वानांकुंजराणांचरथानांचवरूथिनाम् ॥ नांतंसमभिगच्छंतिनिहतानां
सुरासुरैः ७ गदाभिरसिभिःप्रासैर्भल्लैःसन्नतपर्वभिः ॥ योधास्तत्राभ्यहन्यंतहस्त्यश्वंचामितंबहु ८ प्रावर्ततनदीघोराशोणितौघातरंगिणी ॥ तदामध्ये
तुसैन्यानांकेशशैवलशाड्वला ९ हाहाकारोमहाशब्दोयोधानामभवत्तदा ॥ दानवैर्हन्यमानानांत्रिदशानांमहारणे १० ॥ वैशंपायनउवाच ॥ तेषां
तदभवद्युद्धंदेवानामसुरैःसह ॥ विभीषणंमहारौद्रंविकृतंभीमदर्शनम् ११ विरोचनस्तुतत्रैवविष्वक्सेनंमहाहवे ॥ जघानरुधिराभाक्षंसाध्यंपरमधन्विन
म् १२ तमायांतमभिप्रेक्ष्यविष्वक्सेनःसुरैर्वृतः ॥ अमेयात्मासुरश्रेष्ठःप्रत्यविध्यत्स्तनांतरे १३ साध्यस्यबाणाभिहतस्तोत्रार्दितइवद्विपः ॥ विरोचनः
प्रजज्वालक्रोधेनाग्निरिवाध्वरे १४ सकार्मुकविनिर्मुक्तैःशरैर्दानवसत्तमः ॥ विष्वक्सेनोबिभेदाजौदीप्तैःसप्तभिराशुगैः १५ सोतिविद्धोबलवतादानवेनसुरो
त्तमः ॥ मूर्च्छामभिजगामाशुध्वजंचाप्याश्रयत्प्रभुः १६ ततःसपुनराश्वस्यसाध्योयुद्धेमनोदधे ॥ विस्फार्यचमहाचापंदैत्यमध्येव्यवस्थितः १७ विरो
चनस्तुबलवानभ्ययुध्यतसर्वशः ॥ क्षोभयन्सुरसैन्यानिसमंतान्निशितैःशरैः १८ ततस्तस्यासुरेंद्रस्ययुध्यमानस्यसंयुगे ॥ श्रूयतेतुमुलःशब्दोजीमूतस्येव
गर्जतः १९ जगर्जचमहाघोषोविनिघ्नन्देववाहिनीम् ॥ चंडवेगाश्मवर्षीचसविद्युत्स्तनयित्नुमान् २० दिशोविद्रावयामासशरवर्षेणदानवः ॥ सर्वसै
न्यानिदेवानामुद्यतास्त्रोमहाहवे २१ तेप्राद्रवंतवित्रस्तारथेभ्योरथिनस्तदा ॥ सादिनश्वाश्वपृष्ठेभ्योभूमौचापिपदातयः २२ श्रुत्वाकार्मुकनिर्घोषंविस्फू
र्जितमिवाशनेः ॥ सर्वसैन्यानिभीतानिविव्यलीयंतसंयुगे २३ विरोचनभयत्रस्तारथेभ्योरथिनस्तदा ॥ पदातीनांययुःसंघायत्रदेवःशचीपतिः २४
विष्वक्सेनस्यसाध्यस्यसर्वतःसुमहाबलः ॥ पादरक्षःसहस्राणिनिजघानचतुर्दश २५ अश्ववृंदेषुनागेषुरथानीकेषुचाभिभूः ॥ पदातीनांचसंघेषुविनिघ्नन्प्र
त्यदृश्यत २६ वितत्यश्येनवत्पक्षौसर्वतःसवरूथिनीम् ॥ भित्वाच्छित्वामहाबाहुःशिरांस्याजौव्यकृंतत २७ सादिनश्वपदाताश्वहतशेषारथास्तथा ॥ वि
ष्वक्सेनेनसहिताविरोचनमथाद्रवन् २८ तेऽसिचर्मगदाशक्तिपरिघप्रासतोमरैः ॥ तमेकमभ्यधावंतसिंहनादंप्रचक्रिरे २९ ततःसोसिंसमुद्यम्यजवमास्था
यदानवः ॥ चकर्त्तरथिनामाजौशिरांसिचधनूंषिच ३० रथनागाश्वृंदेषुबलवानरिसूदनः ॥ विरोचनश्चरन्मार्गान्प्रकारानेकविंशतिम् ३१ भ्रांतमुद्भ्रां
तमाविद्धमाप्लुतंविप्लुतंयुगम् ॥ संपातंसमुदीर्णंचदर्शयामासदानवः ३२ ७७

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९॥५०॥ ५१ ॥ ५२ ॥ ५३ ॥

केचिद्दरासिनारुग्णादानवेनमहात्मना ॥ विनेदुश्छिन्नवर्माणोनिपेतुश्चगतासवः ३३ छिन्नपृष्ठाहतारोहादानवेनमहात्मना ॥ विद्रुताःस्वान्यनीकानि जघ्नुस्त्रिदशवारणाः ३४ निपेतुरुर्व्यामाकाशेनिकृत्तादृढधन्विना ॥ विविधास्तोमराश्चपामहामात्रशिरांसिच ३५ प्रतीपमाहरन्नागानश्वांश्चदृढविक्रमा न् ॥ आप्लुत्यरथिनःकांश्चित्परामृश्यमहाबलः ३६ सूतांश्चिच्छेदखड्गेनरथानपिचदानवः ॥ मुहुरुत्पततोदिक्षुधावतश्चयशस्विनः ३७ मार्गांश्चरतिवैचि त्रान्विस्मयंतस्ततोसुरान् ॥ निजघानपदाकांश्चिदाक्षिप्यान्यानपोथयत् ३८ खड्गेनचान्यांश्चिच्छेदनादेनान्यांश्चभीषयन् ॥ ऊरुस्तंभगृहीताश्चनिपतं त्यपरेभुवि ॥ अपरेदैत्यमालोक्यभयात्प्राणानवासृजन् ३९ तस्मिंस्तथावर्तमानेयुद्धेमहतिदारुणे ॥ रथौघगजपत्तीनांसुराणांचमहाक्षये ४० कुजंभो दानवश्रेष्ठोह्यंशुमादित्यमाहवे ॥ योधयामाससमरेवृषःप्रतिवृषंयथा ४१ जघानाचलसंकाशोमत्तवारणविक्रमः ॥ स्फुरद्भिर्निशितैस्तीक्ष्णशरैर्बहुभिराशु गैः ४२ देवसैन्यसहस्राणिसरथानिमहाहवे ॥ तस्यबाणपथंप्राप्यनाभ्यवर्ततसर्वशः ४३ प्रणेदुःसर्वभूतानिबभूवुस्तिमिरादिशः ॥ देवानामजयःक्रूरःप्र त्यपद्यतदारुणः ४४ अंशस्तुदानवेंद्रस्यजघानोत्तमविक्रमः ॥ अनीकंदशसाहस्रंकुंजराणांतरस्विनाम् ४५ आपतंतंगजानीकंकुजंभोवीक्ष्यदानवः ॥ गदापाणिरवारोहद्रथोपस्थादरिंदमः ४६ अद्रिसारमयींगुर्वींप्रगृह्यमहतींगदाम् ॥ अभ्यद्रवद्गजानीकंव्यादितास्यइवांतकः ४७ सगजान्गदयानिघ्नन्व्य चरत्समरेबली ॥ कुजंभोदानवश्रेष्ठोगदापाणिर्बलाधिकः ४८ विशीर्णदंतांश्चबहून्भिन्नकुंभांश्चदारुणान् ॥ अकरोद्दानवश्रेष्ठउद्दिश्योद्दिश्यतान्बली ४९ विशीर्णदंताबहवोभिन्नकुंभास्तथापरे ॥ कुजंभेनार्दितानागाव्यद्रवंतदिशोदश ५० कुजंभस्यचयेमात्यादानवाघोरविक्रमाः ॥ नाराचैर्विविधैस्तीक्ष्णैरपा स्तगजयोधिनः ५१ क्षुरैःक्षुरप्रैर्भल्लैश्चपातैरंजलिकैःशितैः ॥ चिच्छेदचोत्तमांगानिकुजंभोदानवोत्तमः ५२ शिरोभिःप्रपतद्भिस्तुगगनंप्रत्यपूर्यत ॥ अश्मवृ ष्टिरिवाकाशेबहुभिश्चसहांकुशैः ५३ कृत्तोत्तमांगाःस्कंधेषुगजानांगजयोधिनः ॥ अदृश्यंतमहाराजतालाविशिरसोयथा ५४ आपतंतंमहानागमंशस्याशु रसत्तमः ॥ जघानैकेषुणाक्रुद्धस्ततःसविमुखोभवत् ५५ विगाह्यैवंगजानीकंकुजंभोदानवोत्तमः ॥ विनिघ्नन्प्रवरान्सैन्यान्गदयाबलिनांवरः ५६ एकप्रहा राभिहतान्कुजंभेनमहागजान् ॥ अपश्यंतसुराःसर्वेपर्वतानिवपातितान् ५७ कुजंभस्यचमार्गेषुविशीर्णास्तेमहागजाः ॥ वज्राहताइवेंद्रेणविशीर्णाइवप र्वताः ५८ अपश्यंस्त्रिदशाःसर्वेमूर्तिमंतमिवांतकम् ॥ गजातथाव्यदीर्यंतसिंहस्येवेतरेमृगाः ५९

॥ ५४ ॥ ५५ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

सबभौतांगदांबिभ्रत्प्रोक्षितांगदशोणितैः ॥ व्यादितास्योनदत्क्रुद्धोरौद्ररूपोभयानकः ६० यथाहिभगवान्क्रुद्धःप्रजानांसंक्षयेपुरा ॥ विक्रीडमानोगदया
रणमध्येमहासुरः ६१ गोपालइवदंडेनकालयन्समहागजान् ॥ क्रुद्धंकालमिवाकालेदंडमुद्यम्यदानवम् ६२ अपश्यंतसुराःसर्वेकुजंभंभीमविक्रमम् ॥ हता
रोहास्तुतत्रान्येप्रभिन्नावारणोत्तमाः ६३ तेहन्यमानागदयाबाणैश्चभृशविक्षताः ॥ असहंतःकुजंभस्यगदावेगंमहाहवे ६४ स्वान्यनीकानिगृह्णंतःप्राद्रवंत
महागजाः ॥ महावातइवाभ्राणिविधमन्गदयागजान् ॥ अतिष्ठत्समरेदैत्यःकालःसंवर्त्तकोयथा ६५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणि
कुजंभोत्कर्षवर्णनंनामषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ छ ॥ वैशंपायनउवाच ॥ ततःसर्वाणिसैन्यानिदेवराजस्यशासनात् ॥ अभ्यद्रवंतदितिजान्नर्द
तोभैरवान्रवान् १ तंबलौघमपर्यंतंदेवानांसुदुरासदम् ॥ रथनागाश्वकलिलंशंखदुंदुभिनिस्वनम् २ आपतंतंसुदुष्पारंरजसासर्वतोवृतम् ॥ सैन्यसागरम
क्षोभ्यंवेलेवमकरालयम् ३ तदाश्चर्यमपश्यंतअश्रद्धेयमिवाद्भुतम् ॥ उदीर्णांपृतनांसर्वांसाश्वांसरथकुंजराम् ४ आचार्यःसमरेतिष्ठत्कुजंभस्तरसाबली ॥
सैन्यार्णवंदेवतानांगिरिर्मेरुरिवाचलः ५ अनीकिनींकुजंभस्तुगदयासन्यवारयत् ॥ सातथावारितासेनाविह्वलाभून्निरुद्यमा ६ तस्मिंस्तथावर्त
मानेसंप्रहारेसुदारुणे ॥ असिलोमातुबलवान्दानवोदानवाधिपः ७ देवसैन्यस्यसर्वस्यधूमकेतुरिवोत्थितः ॥ तमांस्यर्कइवापोह्यत्सुरसैन्यानिसंयुगे ८
सहस्ररश्मिप्रतिमोदानवस्यरथोत्तमः ॥ शरैर्मेघइवावर्षद्देवानीकंप्रतापवान् ९ शरौघरश्मिभिर्दीप्तैःप्रतप्तोघोरविक्रमः ॥ रौद्रःक्रूरोदुराधर्षोदुरापोध्वजिनी
मुखे १० युध्यतेदैवतैःसार्धंग्रसमानइवप्रभुः ॥ उग्रेषुरुग्रवदनःसमारुह्यमहागजम् ११ सुराणामुत्तमांगानिप्रचिनोतिमहाबलः ॥ ग्रसन्दैवतसैन्यानिश
रदंष्ट्रःप्रतापवान् १२ असिजिह्वश्चक्रहस्तश्चापव्यात्ताननोसुरः ॥ परश्वधनखःश्रीमान्मृदंगापूरितध्वनिः १३ तिष्ठतेदानवश्रेष्ठःसंयुगेव्याघ्रवद्बली ॥ मौर्वी
घोषःस्तनयितुःपृषत्कःप्रथितोमहान् १४ धनुर्विद्युद्रणश्चापोमहामेघइवापरः ॥ इष्वस्त्रसागरोघोरोबाहुगाहोदुरासदः १५ कार्मुकोर्मितरंगौघैर्बाणावर्त
महाह्रदः ॥ गदासिमकरोरौद्रोज्यावेलःशिक्षयोद्धतः १६ पदातिमीनःसुमहान्गर्जितोत्क्रुष्टघोषवान् ॥ हयान्गजान्पदातींश्चरथांश्चसहसाबहून् १७
न्यमज्जयतसमरेपरवीरान्महारथान् ॥ आप्लावयत्सदेवौघान्दारुणोदानवेश्वरः १८ प्रावर्ततयुधिश्रीमान्युधिश्रेष्ठोयुधिष्ठिरः ॥ अपश्यंस्त्रिदशाःसर्वेशुद्ध
जांबूनदप्रभम् १९ सन्नद्धंतत्रयुध्यंतंज्वलंतमिवपावकम् ॥ मध्यंदिनगतंसूर्यंज्वलंतमिवतेजसा २० ७८

॥ २१ ॥ २२ ॥ २३ ॥ उत्पिंजलकंआकुलत्वम् ॥ २४ ॥ देवदानवयोःदेवदानवजात्योः ॥ २५ ॥ २६ ॥२७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३॥

नशेकुःसर्वभूतानिदानवंप्रसमीक्षितुम् ॥ यथाप्ररूढंवर्मांतेदहेत्कक्षंहुताशनः २१ तथासुरवरोदैत्योदहतिस्मसुतेजसा ॥ देवानांदानवानांचबलंमर्द्दतिदा
रुणम् २२ विरुद्धमभवत्सर्वमाकुलंचसमंततः ॥ शूराश्वतेबलोदग्राहस्त्यश्वरथधूर्गताः २३ आर्याबुद्धिंसमास्थायनत्यजंतिमहारणम् ॥ तदुत्पिंजलकं
युद्धमभवद्रोमहर्षणम् २४ देवदानवयोःसंख्येरुधिरस्रावकर्दमम् ॥ नदिशःप्रत्यजानंतभयग्राहनिपीडिताः २५ शस्त्रपातांश्वविविधान्दानवानांमहारणे
अन्योन्यंमूढचित्तास्तेनिजघ्नुर्व्याकुलीकृताः ॥ स्वान्परान्नाभिजानंतिविमूढाःशस्त्रपाणयः २६ शिरोरुहेषुसंगृह्यकश्चिच्छूरस्यसंयुगे ॥ शूरश्छिनत्तिमूर्द्धा
नंसंदष्टौष्ठपुटाननम् २७ बाहुभिर्मुष्टिभिश्चैववज्रकल्पैःसुदारुणैः ॥ प्रहरंतिरणेवीराआत्तशस्त्राःपरस्परम् २८ योधप्राणहरेरौद्रेस्वर्गद्वारेनृपावृते ॥ संकु
लेतुमुलेयुद्धेवर्तमानेमहाभये २९ हयोहयंगजोनागंवीरोवीरंमहाहवे ॥ अभ्यद्रवज्जिघांसंतोह्यसमंजसमाहवे ॥ असुराश्चसुराश्चैवविक्रमाढ्यामहारथाः ३०
जुहुवुःसमरेप्राणान्निजघ्नुरितरेतरम् ॥ मुक्तकेशाविकवचाविरथाश्छिन्नकार्मुकाः ३१ हस्तैःपादैश्चयुध्यंतेदानवास्त्रिदशैःसह ॥ हरिस्तुनिशितंभल्लंप्रेषयामा
ससंयुगे ३२ सतस्यधनुषःकोटिंछित्वाभूमावपातयत् ॥ पुनश्चापिपृषत्काणांशताननितपर्वणाम् ३३ प्राहिणोत्सहसातस्यदानवेंद्रस्यसंयुगे ॥ तस्यदेह
विमुक्तास्तेमारुतेनसमीरिताः ३४ मग्नार्द्धकायाविविशुःपन्नगाइवपर्वते ॥ सतैर्निपतितैर्गात्रैःक्षरद्भिरसृगावलीः ३५ बभौदैत्योमहाबाहुर्मेरुर्धातुमिवोत्सृ
जन् ॥ पुनश्चापिपृषत्काणांशताननितपर्वणाम् ३६ ततोसिलोमासंक्रुद्धःप्रगृह्यान्यन्महाधनुः ॥ रुक्मपुंखांश्चनिशितान्प्रेषयामाससायकान् ३७ तैस्तुम
र्मसुविव्याधसर्पानलविषोपमैः ॥ गात्रंसंच्छादयामासमहाभ्रैरिवपर्वतम् ३८ भूयःसंधायचशरंमुमोचांतकसंनिभम् ॥ सुपुंखंसूर्यसंकाशंबाणमप्रतिमंरणे
३९ तेनबाणप्रहारेणसंयुगेभीमकर्मणा ॥ मुमोचसहसादेवोभूमौचापिपपातह ४० ततोहाहाकृताःसर्वेदेवेभूतलमाश्रिते ॥ जगत्सदेवमाविग्नंयथार्कपतनं
तथा ४१ परिवार्यतुसमरेतस्यहत्वामहासुरः ॥ एकत्रिंशत्सहस्राणियोधानांदानवोत्तमः ४२ जयश्रियासेव्यमानोदीप्यमानइवाचलः ॥ प्रगृह्यकार्मुकं
घोरंगतःशक्ररथंप्रति ४३ तथैवतुमहायुद्धेससैन्यावश्विनावुभौ ॥ प्रयुद्धौसहवृत्रेणबलिनादेवतारिणा ४४ बाणखड्गधनुष्पाणिःसमरेत्यक्तजीवितः ॥
आसाद्यसोश्विनौदैत्यःस्थितोगिरिरिवाचलः ४५ ततःशंखमुपाध्मायद्विषतांलोमहर्षणम् ॥ ज्याघोषतलशब्दैश्चसर्वभूतान्यवेजयत् ४६ ततःसंत्रस्तरो
माणःशंखशब्दंविशुश्रुवुः ॥ यक्षराक्षसदेवौघावृत्रस्यापिचनिःस्वनम् ४७

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ अवेजयत्कंपयत् ॥ ४६ ॥ ४७ ॥

गदातोमरनिस्त्रिंशशूलशक्तिपरश्वधाः ॥ प्रगृहीतान्यराजंतयक्षराक्षसबाहुभिः ४८ तैःप्रमुक्तान्महाकायैः शूलशक्तिपरश्वधान् ॥ भल्लैर्वृत्रपरिच्छेदभीमवेग रवैस्तथा ४९ अंतरिक्षचराणांचभूमिस्थानांचगर्जताम् ॥ शरैर्विव्याधगात्राणिदेवानांप्रियदर्शिनाम् ५० वृत्रासुरभुजोत्सृष्टैर्बहुधायक्षरक्षसाम् ॥ निकृंतान्येवदृश्यंतेशरीराणिशिरांसिच ५१ अथरक्तमहावृष्टिरभ्यवर्षतमेदिनीम् ॥ गदापरिघभिन्नानांदेवानांगात्रसंभवा ५२ प्रच्छादयंतंबाणौघै र्वृत्रंभीमपराक्रमम् ॥ ददृशुःसर्वभूतानिभानुमंतमिवांशुभिः ५३ तीक्ष्णरश्मिरिवादित्यःप्रतपन्सर्वदेवताः ॥ अश्विनोर्बलवान्क्रुद्धःसायकैर्मर्मभेदिभिः ५४ नदतोविविधान्नादानर्दितस्यापिसायकैः ॥ नमोहमसुरेंद्रस्यददृशुस्त्रिदशारणे ५५ तेसिचर्मगदाभिश्चपरिघप्रासतोमरैः ॥ परश्वधैश्चशूलैश्चप्रववर्षु र्महारथाः ५६ ततोवृत्रःसुसंक्रुद्धस्तैस्तदाभ्यर्दितोबली ॥ अभ्यवर्षच्छितैर्बाणैस्तान्सर्वान्सत्यविक्रमः ५७ तेनवित्रासितादेवाविप्रकीर्णमहायुधाः ॥ घो रमार्त्तस्वरंचक्रुर्वृत्रासुरभयार्दिताः ५८ उत्सृज्यतेगदाशक्तिशूलर्ष्टिपरिघाशनीन् ॥ उत्तरांदिशमाजग्मुस्त्रासितादृढधन्विना ५९ शूलशक्तिगदापाणिर्व्यू ढोरस्कोमहाभुजः ॥ प्रावर्त्ततरणेवृत्रस्त्रासयानश्वराचरान् ६० तत्रैकस्तुमहाबाहुरसिशूलधरःप्रभुः ॥ अभ्यधावतदैत्येंद्रंवृत्रमप्रतिमंरणे ६१ तमापतंतंसं प्रेक्ष्यगिरिभिन्नमिववारणम् ॥ वत्सदंतैस्त्रिभिःपार्श्वेविव्याधसुरसत्तमम् ६२ सोतिविद्धोमहेष्वासःशरैरमितविक्रमः ॥ गदांजग्राहबलवान्गदायुद्धविशारदः ॥ ६३ तांप्रगृह्यमहाभीमामयःसारमयींदृढाम् ॥ अश्विनौसहसागम्यताडयामासवीर्यवान् ६४ दीप्यमानंततःशूलमश्वीसुविपुलंदृढम् ॥ प्रासृजद्वृत्रदैत्या यसहसारोमहर्षणम् ६५ भंक्त्वाशूलंगदाग्रेणगदायुद्धविशारदः ॥ अश्विनंसहसाभ्यर्च्छद्गरुत्मानिवपन्नगम् ६६ सोंतरिक्षात्समुत्पत्यविधूयमहतींगदाम् ॥ नासत्योपरिचिक्षेपगिरिशृंगोपमांबली ६७ गदयाभिहतःसोश्वित्यक्त्वाशूलमनुत्तमम् ॥ प्रयातःसहसातत्रयत्रयुध्यतिवासवः ६८ पराजित्यतुसंग्रा मेअश्विनंभीमविक्रमम् ॥ जयश्रियासेव्यमानोवृत्रोयुद्धेव्यवस्थितः ॥ ६९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवृत्रासुरोत्कर्षवर्णनंनामसप्त पंचाशत्तमोऽध्यायः ॥ ५७ ॥ छ ॥ वैशंपायनउवाच ॥ तत्रैवतुमहायुद्धेरणाजिर्देवसत्तमः ॥ युध्यतेसहदैत्येनएकचक्रेणधीमता १ प्रच्छाद्यरथपंथान मुत्क्रोशंश्चमहाबलः ॥ एकचक्रस्यसैन्यंतच्छरवर्षैरवाकिरत् २ महासुरामहावीर्यामहापट्टिशयोधिनः ॥ शूलानिचभुशुंडीश्चक्षिपंतिस्ममहारणे ३ त च्छूलवर्षंसुमहद्गदाशक्तिसमाकुलम् ॥ अविशद्दितिजैर्मुक्तंदुर्निवार्यंचराचरैः ४

७९

॥ ६९ ॥ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ तत्रैवेतिरणाजिःसाध्यविशेषः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ त्रिधाकंठकरकुंभदेशेषुमदंक्षरंत.द्वितीयार्थेप्रथ

अन्योन्यमभिवर्ततेबेदेवासुरगणायुधि ॥ महाद्रिशिखराकारावीर्यवंतोमहाबलाः ५ तुरंगमाणांतुशतंयुक्तंतस्यमहारथे ॥ महासुरवरस्येवहिरण्यकशिपो
र्युधि ६ तेषांचरणपातेनचक्रनेमिस्वनेनच ॥ तस्यबाणनिपातैश्चहतावैशतशःसुराः ७ ततःसलघुभिश्चित्रैःशरैःसन्नतपर्वभिः ॥ सायुधानच्छिनत्क्रुद्धः
शतशोथसहस्रशः ८ वध्यमानाःशरैस्तीक्ष्णैरथद्विरदवाजिनः ॥ गमिताःप्रक्षयंकेचित्त्रिदशैर्दानवारणे ९ ततःप्रक्षीयमाणांस्तानुपप्रेक्ष्यदितेःसुताः ॥ त्य
क्त्वाबाणान्यवर्ततप्रगृहीतवरायुधाः १० तेदिशोविदिशश्चैवप्रतियुद्धप्रहारिणः ॥ अभ्यघ्नन्निशितैःशस्त्रैर्देवान्दितिसुतारणे ११ रणाद्विचलितंघोरंपरमं
तिग्मतेजसम् ॥ मुमोचास्त्रंमहाबाहुर्मथनंनामसंयुगे १२ ततःशस्त्राणिशूलानिनिशितानिसहस्रशः ॥ अतिवीर्येणमहतादितिजःसंप्रचिच्छिदे १३ छि
त्वाशूलेनतान्सर्वानेकचक्रोमहासुरः ॥ अभ्यविध्यततंसाध्यंदशभिर्निशितैःशरैः १४ अस्त्रवेगेनहत्वैवसोस्त्रैस्तस्यानुसैनिकान् ॥ ज्वलितैरपरैःशीघ्रैस्तान
विध्यत्सहस्रशः १५ तेषांछिन्नानिगात्राणिविसृजंतिस्मशोणितम् ॥ प्रावृषीवांबुवृष्टीनिशृंगाणिधरणीभृताम् १६ इंद्राशनिसमस्पर्शैर्निपतद्भिरजिह्मगैः ॥
दितिजैर्वध्यमानास्तेवित्रेसुःसुरसत्तमाः १७ एकचक्रेरथेतिष्ठन्नपश्यद्गजयूथपम् ॥ वराभरणनिह्रादान्समुद्रस्वननिःस्वनान् १८ मत्तान्सुविहितान्दृप्तान्म
हामात्रैरधिष्ठितान् ॥ कुलीनान्वीर्यसंपन्नान्प्रतिद्विरदघातिनः १९ शिक्षितान्गजशिक्षायामैरावतसमान्युधि ॥ न्यहनत्सुरसैन्यस्यगजान्गजइवासुरः
२० विक्षरंतोमहानागान्भीमवेगांस्त्रिधामदम् ॥ मेघस्तनितनिर्घोषान्महाद्रीनिवचोत्थितान् २१ सहस्रसंमितान्दिव्यान्जांबूनदपरिष्कृताम् ॥ सुवर्ण
जालैर्विततांस्तरुणादित्यवर्चसः २२ एकचक्रोगदापाणिर्बलवान्गादिनांवरः ॥ उत्सारयामासगजान्महाभ्राणीवमारुतः २३ निहत्यगदयासर्वांस्तान्गजान्ग
जमर्दनः ॥ भूयोश्वसंघान्सबलीनिरैक्षतमहासुरः २४ शुकवर्णानृष्यवर्णान्मयूरसदृशांस्तथा ॥ पारावतसवर्णांश्चहंसवर्णांस्तथैवच २५ मल्लिकाक्षान्वि
रूपाक्षान्क्रौंचवर्णान्मनोजवान् ॥ अश्वसैन्यंमहाबाहुस्तदप्रतिमपौरुषः २६ निषूदयामासबलीगदयाभीमविक्रमः ॥ रणाजिस्तस्यसमरेसर्वा
न्दृष्ट्वासुरद्विषः २७ अचिंत्यविक्रमःश्रीमानभ्ययाद्देववाहिनीम् ॥ गदायुद्धेषुकुशलोरथेनरथयूथपः २८ हृष्टसैन्योमहाबाहुःप्रस्थितःशक्रसन्निधौ ॥
त्रिंशच्छतसहस्राणिरथानांविनिहत्यसः २९ रणेतिष्ठतदैत्येंद्रोविधूमइवपावकः ॥ तस्मिन्नेवतुसंग्रामेबलदृप्तोमहासुरः ३० मृगव्याधंमहात्मानंयोधयत्य
जितंरणे ॥ मृगव्याधस्यरुद्रस्यमहापारिषदास्तथा ३१ समुत्पेतुर्बलंदृष्ट्वाहुताग्निसमतेजसः ॥ गजैर्मत्तैरथैर्दिव्यैर्वाजिभिश्चमहाजवैः ३२

मा ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ऋष्यःधूसरोमृगविशेषस्तद्वर्णान् ॥ २५ ॥ २६ ॥ व्यस्य त्यक्त्वा ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

अस्त्रैश्वनिशितैर्बाणैःशरैश्वानलसन्निभैः ॥ ददृशुस्तेततोवीरादीप्यमानंमहासुरम् ३३ रश्मिवंतमिवोद्यंतंसुतेजोरश्मिमालिनम् ॥ संग्रामस्थंमहावेगंम
८० हासत्वंमहाबलम् ३४ महामतिंमहोत्साहंमहाकायंमहारथम् ॥ समीक्ष्यतंमहायोधंदिक्षुसर्वास्ववस्थितम् ३५ ततःप्रहरणैर्घोरैरभिपेतुःसमंततः ॥ तस्य अ०५८
सर्वायसास्तीक्ष्णाःशराःपीतमुखाःशिताः ३६ शिरस्यद्रिप्रतीकाशेमृगव्याधेनपातिताः ॥ तैश्वसप्तभिराविष्टाःशरैःशिरसिचार्पितैः ३७ उत्पपाततदा
व्योम्निदिशोदशविनादयन् ॥ ततस्तंत्रिदशोवीरःसरथःसज्जकार्मुकः ३८ अनुवव्राजसंहृष्टःश्वेतदासमहाबलः ॥ असुरंच्छादयामासतंव्योम्निशरवृष्टिभिः
३९ वृष्टिमानिवजीमूतोनिदाघांतेधराधरम् ॥ अर्द्यमानस्ततस्तेनमृगव्याधेनदानवः ४० चकारनिनदंघोरमंबरेजलदोयथा ॥ सदूरंसहसोत्पत्यमृग
व्याधरथंप्रति ४१ निपपातमहावेगःपक्षवातैर्गिरिर्यथा ॥ बभंजचततोदैत्योभग्नेषाकूबरंरथम् ४२ मृगव्याधःपरित्यज्यास्थितोभूमौमहाबलः ॥ विर
थंप्रेक्ष्यरुद्रंतुतस्यपारिषदाःशुभाः ४३ उत्थिताघोररक्ताक्षाव्योम्निमुद्गरपाणयः ॥ सतुतैःसहसोत्थायवेष्टितोविमलेंबरे ४४ मुद्गरैरर्दितोभीमैर्वृक्षःपरशु
भिर्यथा ॥ तेषांवेगवतांवेगंनिहत्यसमहारथः ४५ निपपातपुनर्भूमौसुपर्णसमविक्रमः ॥ सशालवृक्षमुत्पाट्यमहाशाखंमहाबलः ४६ सर्वान्पारि
षदान्त्संरब्धेसूदयामासदानवः ॥ सतैर्व्रीजितदेहस्तुरुधिरौघपरिप्लुतः ४७ शुशुभेदानवश्रेष्ठोबालसूर्यइवोदितः ॥ अथोत्पाट्यगिरेःशृंगंसमृगव्यालपादप
म् ४८ जघान तान्पारिषदान्त्समरेदानवेश्वरः ॥ ततस्तेषुचभग्नेषुमहापारिषदेषुवै ४९ बलंतदवशेषंतुनाशयामासवीर्यवान् ॥ अश्वैरश्वान्गजैर्नागान्यो
धान्योधैरथान्रथैः ५० दानवःसूदयामासयुगांतेंतकवत्प्रजाः ॥ हतैरश्वैश्वनागैश्वभग्नाक्षैश्वमहारथैः ५१ त्रिदशैश्वाभवद्भूमीरुद्धमार्गासमंततः ॥
एवंबलःसदैत्येंद्रोमृगव्याधश्ववीर्यवान् ५२ युधिप्रवृद्धौबलिनौप्रभिन्नाविववारणौ ५३ ॥ ॥ वैशंपायनउवाच ॥ ॥ तत्रैवयुध्यतेरुद्रोद्वितीयोराहु
णासह ॥ विश्रुतस्त्रिषुलोकेषुक्रोधात्माह्यजएकपात् ५४ तद्यथासुमहद्युद्धंतुमुलंलोमहर्षणम् ॥ आसीत्प्रतिभयंरौद्रंवीराणांजयमिच्छताम् ५५
देवदानवदेहैस्तुदुस्तराकेशशाड्वला ॥ शरीरसंघातवहाप्रसृतालोहितापगा ५६ आजघानाथसंक्रुद्धोरुद्रोरौद्राकृतिःप्रभुः ॥ राहुंशतमुखंयुद्धेशत्रुसैन्यनि
वारणम् ५७ तस्यकांचनचित्रांगंरथंसाश्वंससारथिम् ॥ जघानसमरेश्रीमान्क्रुद्धोदैत्यस्यसायकैः ५८ तस्यपारिषदस्त्वेकोशरशक्त्यामहाबलः ॥ बिभे
दसमरेहृष्टोदानवंतंस्तनांतरे ५९ सभिन्नगात्रोरुद्रेणतथापारिषदैरपि ॥ रुद्रस्यरथमायांतंसराहुर्दानवोत्तमः ६० ८०

प्रममाथतलेनाशुसहसाक्रोधमूर्च्छितः ॥ भिन्नगात्रैश्शरैस्तीक्ष्णैर्मेरुंसूर्यइवांशुभिः ६१ हतैर्दानवमुख्यैस्तुरुद्रेणामिततेजसा ॥ रुद्रपारिषदान्सर्वान्निजघानम
हासुरः ६२ वर्त्तमानेमहाघोरेसंग्रामेलोमहर्षणे ॥ रुधिरौघामहावेगामहानद्यःप्रसुस्रुवुः ६३ दानवंसमरेरुद्रोनीलांजनचयोपमम्॥ निर्बिभेदशरैस्तीक्ष्णैर्मेरुं
सूर्यइवांशुभिः ६४ हतैर्दानवमुख्यैश्चशक्तिशूलपरश्वधैः ॥ पतितैःपर्वताभैश्चदानवैःकामरूपिभिः ६५ वर्तमानेमहाघोरेसंग्रामेलोमहर्षणे ॥ विरेजुस्तेतदादै
त्याःपुष्पिताइवकिंशुकाः ॥ महाभेरीमृदंगानांपणवानांचनिःस्वनः ६६ शंखवेणुस्वनोन्मिश्रःसंबभूवाद्भुतोपमः ॥ हतानांस्वनतांतत्रदैत्यानांचापिनिःस्वनः
६७ देवानांचतथातत्रशुश्रुवेदारुणोमहान् ॥ तुरंगमखुरोत्कीर्णरथनेमिसमुत्थितम् ६८ रुरोधमार्गंयोधानांचक्षूंषिचधरारजः ॥ शस्त्रपुष्पोपहारासातत्रासीद्यु
द्धमेदिनी ६९ दुर्दर्शादुर्विगाह्याचमांसशोणितकर्दमा ॥ भग्नैःखड्गैर्गदाभिश्चशक्तितोमरपट्टिशैः ७० अपविद्धैश्चभग्नैश्चरथैःसांग्रामिकैर्हतैः ॥ निहतैःकुंजरैर्म
त्तैस्तथात्रिदशदानवैः ७१ चक्राक्षयुगशस्त्रैश्चभग्नैरवनिपातितैः ॥ बभूवायोधनंघोरंपिशिताशनसंकुलम् ७२ उत्पेतुश्चकबंधानिदिक्षुसर्वासुसंयुगे ॥ अ
न्योन्यबद्धवैराणांदैत्यानांजयगृद्धिनाम् ७३ संप्रहारस्तथायुद्धेववर्त्ततेतिभयंकरः ॥ सैन्यानांसंप्रयुद्धानांशूराणामनिवर्त्तिनाम् ७४ अजस्यचैकपादस्य
राहोश्चैवमहात्मनः ॥ तेषांतुतत्रपततांक्रुद्धानामतिनिःस्वनः ७५ उद्वृत्तइवभूतानांसमुद्राणांतुशुश्रुवे ॥ तत्रैकस्तुसुधूम्राक्षःश्रीमान्रुद्रोमुनीश्वरः ७६ बिभेद
केशिनंशक्त्यागदापरिघशूलभृत् ॥ नानाप्रहरणाघोराभीमाख्याभीमविक्रमाः ७७ निष्पेतूरुद्रदयितामहापारिषदास्तथा ॥ रथमास्थायचश्रीमांस्तप्तकां
चनकुंडलः ७८ दानवैःसंवृतःकेशीयुध्यतेयुद्धदुर्जयैः ॥ तस्यसंग्रामशौंडस्यसंग्रामेषुयुयुत्सतः ७९ निपेतुरुग्रवीर्यस्यज्वालाह्विप्रसृतामुखात् ॥ सतुसिंहर्षभ
स्कंधःशार्दूलसमविक्रमः ८० महाजलदसंकाशोमृदंगध्वनिनिःस्वनः ॥ तस्यनिष्पतमानस्यदानवैःसंवृतस्यच ८१ बभूवसुमहानादःक्षोभयंस्त्रिदिवं
यथा ॥ तेनशब्देनवित्रस्तात्रिदशानांमहाचमूः ८२ द्रुमशैलप्रहरणायोद्धुमेवाभ्यवर्त्तत ॥ तेषांचदेवदैत्यानांयुयुत्सूनांपरस्परम् ॥ सन्निपातःसुतुमुलो
रौद्रोलोकभयावहः ८३ तेषांयुद्धंमहाघोरंसंजज्ञेलोमहर्षणम् ॥ देवदानवसंघानांप्राणांस्त्यक्त्वामहाहवे ॥ सर्वेह्यतिबलाःशूराःसर्वेपर्वतसन्निभाः
८४ सर्वेसर्वास्त्रविद्वांसःसर्वेसर्वायुधोद्यताः ॥ त्रिदशादानवाश्चैवपरस्पराजिघांसवः ॥ तेषांवैनदतांशब्दःसंयुगेमेघनिःस्वनः ८५ शुश्रुवेतिमहाघोरश्चर
स्थावरकंपनः ॥ रेणुश्चारुणसंकाशोभीमःससमपद्यत ८६ उद्भूतोदेवदैत्यौघःसंरुरोधदिशोदश ॥ अन्योन्यंरजसातेनकौशेयारुणपांडुना ८७

संवृतावहुरूपेणददृशुर्नचकिंचन ॥ नध्वजोनपताकाश्चनवर्मतुरगोपिवा ८८ आयुधंस्यंदनोवापिदृश्यतेनैवसारथिः ॥ सशब्दस्तुमुलस्तेषामन्योन्यंसम
८१ धावताम् ८९ निपेतुरुग्रवीर्यस्यज्वालाहिप्रसृतामुखात् ॥ सतुसिंहर्षभस्कंधःशार्दूलसमविक्रमः ९० तस्यनिष्पतमानस्यदानवैःसंवृतस्यच ॥ श्रूयते अ०५९
तुमुलःशब्दोनरूपाणिचकाशिरे ९१ दानवास्तत्रसंक्रुद्धादानवानेवजघ्निरे ॥ त्रिदशास्त्रिदशांश्चैवनिजघ्नुस्तुमुलेतदा ९२ नपरांश्चविनिघ्नंतःस्वांश्चयुद्धे
महासुरान् ॥ रुधिरार्द्रांतथाचक्रुर्मेदिनींचमहासुराः ९३ ततस्तुरुधिरौघेणसंसिक्तमुदितंरजः ॥ शरीरशतसंकीर्णंबभूवधरणीतलम् ९४ शूलशक्तिगदा
खड्गपरिघप्रासतोमरैः ॥ त्रिदशादानवाश्चैवजघ्नुरन्योन्यमाहवे ९५ बाहुभिःपरिघाकारैर्निघ्नंतःपरिवैस्तथा ॥ रुद्रपारिषदान्सर्वान्स्सूदयंतिस्मदानवाः ॥ रुद्र
पारिषदाश्चैवमहाद्रुममहाश्मभिः ९६ विदारयन्नतिक्रम्यशस्त्रैश्चादित्यसन्निभैः ॥ एतस्मिन्नंतरेक्रुद्धःकेशीदानवसत्तमः ९७ संग्राममर्षीवीरःसस्वान्यनीका
न्निहर्षयन् ॥ तेषांपरमसंक्रुद्धोवज्रमस्त्रमुदीरयत् ९८ वज्रेणास्त्रेणदिव्येनशस्त्रेणचमहात्मना ॥ महापारिषदाःसर्वेनिहतायुधिदुर्जयाः ९९ वज्रास्त्रपीडि
ताभ्रांतारुद्रपारिषदायुधि ॥ विप्रकीर्णद्रुमाःपेतुःशैलावज्रहताइव १०० एवंसुतुमुलंयुद्धमभवल्लोमहर्षणम् ॥ केशिनःसहरुद्रेणतदद्भुतमिवाभवत् १०१
॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेकेशिरुद्रयुद्धकथनंनामाष्टपंचाशत्तमोऽध्यायः ५८ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥
वृषपर्वातुदैत्येंद्रोविश्वमद्भुतदर्शनम् ॥ निष्कुंभंयोधयामासलोहितार्कसमद्युतिम् १ क्रोधमूर्च्छितवक्त्रस्तुधुन्वन्परमकार्मुकम् ॥ धनूंषिप्रेक्ष्यशत्रूणांसार
थिंत्वरितोब्रवीत् २ अत्रैवतावत्त्वरितंनयमेसारथेरथम् ॥ एतेदेवाश्चसहितान्घ्नंतिनःसमरेबलम् ३ एतान्निहंतुमिच्छामिसमरश्लाघिनोरणे ॥ एतै
र्हिदानवानीकंकृतच्छिद्रमिदंमहत् ४ ततःप्रजविताश्वेनरथेनरथिनांवरः ॥ अरीनभ्यहनत्क्रुद्धःशरजालैर्महासुरः ५ नस्थातुंदेवताःशक्ताःकिंपुनर्योद्धु
माहवे ॥ वृषपर्वेषुनिर्भिन्नाःसर्वएवाभिदुद्रुवुः ६ तान्मृत्युवशमापन्नान्वैवस्वतवशंगतान् ॥ समीक्ष्यनिहतान्ज्ञातीनवतस्थेमहासुरः ७ दृष्ट्वातंतत्रनिष्कुं
भंसर्वेतेत्रिदशोत्तमाः ॥ समेत्यसहिताःसर्वेद्रुतंतंपर्यवारयन् ८ व्यवस्थितंतुनिष्कुंभंदृष्ट्वात्रिदशसत्तमम् ॥ बभूवुर्बलवंतोवैतस्यास्त्रबलतेजसा ९ वृषप
र्वातुशैलाभंनिष्कुंभंसमरेस्थितम् ॥ महेंद्रइवधाराभिःशरवर्षैरवाकिरत् १० अचिंतयित्वातुशराञ्छरीरेपतितान्बहून् ॥ स्थितश्चप्रमुखेश्रीमान्सतसैन्यः ८१
समहाबलः ११ संप्रहस्यमहातेजावृषपर्वाणमाहवे ॥ अभिदुद्राववेगेनकंपयन्निवमेदिनीम् १२

|| १३ || १४ || १५ || १६ || १७ || १८ || १९ || २० || २१ || २२ || २३ || २४ || २५ || २६ || २७ || २८ || २९ || ३० || ३१ || ३२ ||

तस्यत्वाधावमानस्यदीप्यमानस्यतेजसा ॥ वभूवरूपंदुर्धर्षंदीप्तस्येवविभावसोः १३ रथंत्यक्त्वामहातेजाःसक्रोधःसमपद्यत ॥ वृक्षमुत्पाटयामासमहाता
लंमहोच्छ्रयम् १४ ततश्चिक्षेपतंवृक्षंनिष्कुंभोवृषपर्वणः ॥ तंगृहीत्वामहावृक्षंपाणिनैकेनदानवः १५ विनद्यसुमहानादंभ्रामयित्वाचवीर्यवान् ॥ सगजा
न्सगजारोहान्सरथान्रथिनस्तथा १६ जघानदानवस्तेनशाखिनात्रिदशांस्तदा ॥ तमंतकमिवक्रुद्धंसमरेप्राणहारिणम् १७ वृषपर्वाणमासाद्यत्रिदशावि
प्रदुद्रुवुः ॥ तमापतंतंसंक्रुद्धंत्रिदशानांभयावहम् १८ आलोक्यधन्वीनिष्कुंभश्चक्रोधचननादच ॥ सतत्रनिशितैर्बाणैर्निस्त्रिंशाद्भिर्मर्मभेदिभिः १९ निर्बिभेदम
हावीर्योनिष्कुंभोदानवाधिपः ॥ शरशक्तिभिरुग्राभिर्दैत्यानामधिपंप्रभुम् २० विद्धःसमरमध्यस्थोरुधिरंप्रास्रवद्बहु ॥ उद्विग्नामुक्तकेशास्तेभग्नदर्पाःपरा
जिताः २१ श्वसंतोदुद्रुवुःसर्वेभयाद्वैवृषपर्वणः ॥ अन्योन्यंप्रममंथुस्तेत्रासितावृषपर्वणा २२ पृष्ठवक्त्राःसुसंविग्नाःप्रेक्ष्यमाणामुहुर्मुहुः ॥ त्यक्तप्रहरणाः
सर्वेकृतास्तेवृषपर्वणा २३ संग्रामेयुद्धशौंडेनतदानिष्कुंभसैनिकाः ॥ तत्रैवतुमहावीर्यःप्रह्लादःकालमाहवे २४ योधयामासरक्ताक्षोहिरण्यकशिपोःसुतः
तस्यदानववीरस्ययुद्धकालेजयक्रियाः २५ चकारत्वरयायुक्तोभार्गवोविजयावहाः ॥ हुताशनंतर्पयतोब्राह्मणांश्चनमस्यतः २६ आज्यगंधप्रतिवहो
मारुतःसुरभिर्ववौ ॥ स्रजश्चविविधाश्चित्राजयार्थमभिमंत्रिताः २७ प्रह्लादस्यशुभेमूर्धन्याबबंधोशनाःस्वयम् ॥ कालेनसहसंग्रामेप्रयुद्धस्यमहात्मनः २८
प्रह्लादस्यातिवीर्यस्यशांतिंचक्रेसभार्गवः ॥ दशशिष्यसहस्राणिभार्गवस्यमहात्मनः २९ यानिदानववीराणांजेपुःशांतिमनुत्तमाम् ॥ अथर्वाणमथोदिव्यं
ब्रह्मसंस्तवचोदितं ३० रणप्रवेशसदृशंकर्मवैजयिकंकृतम् ॥ ततःसर्वास्त्रविदुषःसमरेष्वनिवर्तिनः ३१ विद्ययातपसायुक्ताःकृतस्वस्त्ययनक्रियाः ॥ धनुर्ह
स्ताःकवचिनोवेगेनाह्वयदानवाः ॥ बलिमभ्यर्च्यराजानंप्रह्लादंपर्यवारयन् ३२ आस्थायपरमंदिव्यंरथंपररथारुजम् ॥ नानाप्रहरणाकीर्णंसवज्रमिवपर्व
तम् ३३ तद्बभूवमुहूर्तेनक्ष्वेडितास्फोटिताकुलम् ॥ मेरोःशिखरमाकीर्णंद्यौरिवांबुधरागमे ३४ स्रजःपद्मपलाशानामामुच्यसुविभूषिताः ॥ बांधवान्सं
परित्यज्यनिपतंतिरणप्रियाः ३५ महायुधधरःश्रीमाञ्छुभचर्मधरःप्रभुः ॥ शिरस्त्राणतनुत्राणिधन्वीपरमदुर्जयः ३६ सिंहशार्दूलदर्पाणांगदताकिंकिणी
किनाम् ॥ तस्यदैत्यसहस्राणिप्रयांत्यग्रेमहारणे ३७ सैन्यपक्षहतास्तस्यरथाःपरमदुर्जयाः ॥ सप्ततिर्वैसहस्राणिगजास्तावंतएवच ३८ मध्येव्यूहोदरस्य
स्तुकालनेमिर्महासुरः ॥ धनुर्विस्फारयामासननादप्रजहासच ३९ तस्मिञ्छितसहस्राणिपुरोयांतिमहाद्युतेः ॥ दानवानांबलवतांशक्रप्रतिमतेजसाम् ४०

|| ३३ || ३४ || ३५ || ३६ || ३७ || ३८ || ३९ || ४० ||

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ निर्वर्त्तयिष्यंति हतानांदेवभावंगतानामर्थेशत्रुमांसानिशत्रुरूपाणांपशूनांहृदया



ससमंवर्तमानस्तुपक्षाभ्यांविस्तृतोमहान् ॥ अभवद्दानवव्यूहोदुर्भेद्यःसर्वदैवतैः ४१ षष्टीरथसहस्राणिदानवानांधनुर्भृताम् ॥ नानाप्रहरणानांचपरिमाणं नविद्यते ४२ गदापरिघनिस्त्रिंशैःशूलमुद्गरपट्टिशैः ॥ प्रगृहीतैर्व्यराजंतदानवाःपर्वतोपमाः ४३ गर्जंतोविनदंतश्वविक्रोशंतःपुनःपुनः ॥ अयुध्यंतेमहावीर्याःसमरेष्वनिवर्तिनः ४४ तत्रतूर्यसहस्राणिभेरीशंखरवाणिच ॥ हयानांचगजानांचगर्जतामतिवेगिनाम् ४५ दुंदुभीनांचनिर्घोषःपर्जन्यनिनदोपमः ॥ शुश्रुवेशंखशब्दश्वपटहानांचनिःस्वनः ४६ तेनशंखनिनादेनभेरीतूर्यरवेणच ॥ निर्घोषेणरथानांचक्रोशतीवनभस्तलम् ४७ सागरप्रतिमौघेनबलेन महतावृतः ॥ प्रह्रादोयुद्ध्यतरणेकालांतकयमोपमः ४८ तस्यनादेनरौद्रेणघोरेणाप्रतिमौजसः ॥ विनेदुःसर्वभूतानित्रैलोक्यविक्रैतैःस्वनैः ४९ अंतरिक्षात्परंत्यक्त्वावायुश्वपरुषोववौ ॥ ववर्षत्यःपावकंघोरंशिवाश्चैववववासिरे ५० प्रह्रादस्तुमहावीर्यःप्रहसन्युद्धदुर्मदः ॥ उवाचवचनंश्रीमांस्तत्कालक्षममुत्तमम् ५१ अद्याहंदर्शयिष्यामिस्वबाहुबलमूर्जितम् ॥ अद्यमद्बाणनिहतान्देवान्द्रक्षथसंयुगे ५२ बांधवानिहतायेषांत्रिदशैरिहसंयुगे ॥ अद्यनिर्वर्त्तयिष्यंतिशत्रुमांसानिदानवाः ५३ इममद्यसमुद्धूतंरेणुंसमरमूर्द्धनि ॥ अहंतुशमयिष्यामिशत्रुशोणितविस्रवैः ५४ तिमिरौघहतार्कंतुसैन्यरेण्वरुणीकृतम् ॥ आकाशंसंपतिष्यंतिखद्योताइवमेशराः ५५ हृष्टाःसंपरिमोदध्वंदेवेभ्यस्त्यज्यतांभयम् ॥ अद्याहंनिहनिष्यामिकालेंद्रंधनुषारणे ५६ तोषयिष्यामिराजानंबलिंबलवतांरणे ॥ त्रिदशान्सगणान्हत्वारणेचांतकमंतिकात् ५७ अक्षयाःसंतिमेतूणाःशराश्वाशीविषोपमाः ॥ स्थातुंमेपुरतःशक्ताःकेरणेजीवितेप्सवः ५८ हत्वारिपुगणांस्तुष्टिरनुरागश्वराजसु ॥ हतस्यत्रिदिवेवासोनास्तियुद्धसमागतिः ६९ तद्भयंपृष्ठतःकृत्वा रणेदानवसत्तमाः ॥ निहत्येमानरीन्सर्वान्मोदध्वंनंदनेवने ६० एवमुक्त्वामहत्सैन्यंप्रह्रादोदानवोत्तमः ॥ कालसैन्यंमहारौद्रंतरसामर्दतासुरः ६१ सर्वास्त्रविद्वान्वीरश्वनित्यंचाप्यपराजितः ॥ युद्धेह्यभिमुखोनित्यंस्वबाहुबलदर्पितः ६२ षष्टिंरथसहस्राणिविविधायुधधारिणाम् ॥ प्रह्रादस्यातिवीर्यस्यतेतस्यतनयानिजाः ६३ तैस्तुक्रतुशतैरिष्टंविपुलैराप्तदक्षिणैः ॥ क्षांताधर्मपरानित्यंसत्यव्रतपरायणाः ६४ दातारःप्रियवक्तारोवक्तारःशास्त्रवस्तुषु ॥ स्वदारनिरतादांताब्रह्मण्याःसत्यसंगराः ६५ यष्टारःक्रतुभिर्नित्यंनित्यंचाध्ययनेरताः ॥ इष्वस्त्रकुशलाःसर्वेबहुशोदृढविक्रमाः ६६



द्यंगानिनिर्वर्त्तयिष्यंतिइदममुष्माइतितत्तदुद्देशपूर्वकंकल्पयिष्यंति ॥ ५३ ॥ ५४ ॥ ५५ ॥ कालश्वासाविंद्रश्वकालेंद्रोयमः ॥५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१॥ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

वातरेचकान्व्यजनीकृतान्वृक्षादीन्ईरयंतः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

मत्तवारणविक्रांताःशत्रुसैन्यप्रमर्दकाः॥ दारयंतःपदाक्षेपैःसुघोरान्वातरेचकान् ६७ युद्धोत्सुकधियानित्यंक्रोधरंजितलोचनाः॥ संदष्टौष्टपुटादैत्याविनेदुर्भी
मविक्रमाः ॥ क्ष्वेडितास्फोटितरवैरन्योन्यंसमहर्षयन् ६८ वेणुशंखरवैश्चैवसिंहनादैश्चपुष्कलैः ॥ आप्लुत्याप्लुत्यसहसारणेवव्रुरनेकशः ६९ तालमात्राणि
चापानिविकृष्यसुमहाबलाः ॥ अमृष्यमाणाःसहसादानवाश्चापपाणयः ७० सुरासुरैरप्यजितंयोधयंतिरणेंतकम् ॥ प्रतप्तहेमाभरणाःसर्वेतेश्वेतवाससः ॥
७१ दानवामानिनःसर्वेसर्वेस्वर्गाभिकांक्षिणः ॥ सर्वेजयैषिणोवीराःसर्वेशत्रुवधोद्यताः ७२ शुशुभेसाचमूर्दीप्तापताकाध्वजमालिनी ॥ गजाश्वरथसंबाधा
स्वर्गमार्गाभिकांक्षिणी ७३ ततःकालःसुनिर्यातोभीमोभीमपराक्रमः ॥ निनदन्सुमहाकायोव्याधिभिर्बहुभिर्वृतः ७४ ददर्शमहतींसेनांदानवानांबलीय
साम् ॥ अभिसंजातदर्पाणांकालंसमभिगर्जताम् ७५ तदायांतंतदानीकंदानवानांतरस्विनाम् ॥ प्रतिलोमंचकाराशुव्याधिभिःसहितोंतकः ७६ प्रविश्य
ध्वजिनींचैषांपातयामासदानवान् ॥ कालोरुधिररक्ताक्षःस्वेनानीकेनसंवृतः ७७ प्रह्लादबलमत्युग्रंप्रह्लादंचमहाबलम् ॥ आजघानरणेकालोदंडमुद्गरप
ट्टिशैः ७८ शरशक्त्यृष्टिखड्गांश्चशूलानिमुशलानिच ॥ गदाश्चपरिघाश्चैवविचित्राश्चपरश्वधाः ७९ धनूंषिचविचित्राणिशतघ्नीश्चस्थिरायसीः ॥ पात्यंते
व्याधिभिर्युद्धेदानवानांचमूमुखे ८० बहवोव्याधयोयुद्धेबहूनसुरपुंगवान् ॥ व्याधीनपिचदैत्यौघानिजघ्नुर्बहवोबहून् ८१ शूलैःप्रमथिताःकेचित्केचि
च्छिन्नाःपरश्वधैः ॥ परिघैराहताःकेचित्केचिच्चपरमायुधैः ॥ केचिद्द्विधाकृताःखड्गैःस्फुरंतःपतिताभुवि ८२ व्याधयोदानवैरेवनानाशस्त्रैर्विदारिताः ॥
तेचापिव्याधिभिःसर्वेविविधैरायुधोत्तमैः ८३ खड्गैश्चमुशलैस्तीक्ष्णैःप्रासतोमरमुद्गरैः ॥ भिन्नाश्चदानवाःसर्वेनिकृत्ताश्चपरश्वधैः ८४ मुद्गरैःपट्टिशैश्चैवव्या
धिभिश्चमहाबलैः ॥ कृत्वाशस्त्रैरनेकैश्चमुष्टिभिश्चहताभृशम् ८५ वेमुःशोणितमन्योन्यंविष्टब्धदशनेक्षणाः ॥ आर्तस्वरंचनदतांसिंहनादंचगर्जताम् ८६
बभूवतुमुलःशब्दःसंग्रामेलोमहर्षणे ॥ मुष्टिभिश्चोत्तमांगानितलैर्गात्राणिचासकृत् ८७ सादितानिमहींजग्मुस्तिष्ठतामेवसंयुगे ॥ असृक्फेनाध्वजाव
र्ताच्छिन्नबाहुमहोरगा ८८ शूलशक्तिमहामत्स्याचापग्राहसमाकुला ॥ रथेषूपलसंबंधाध्वजद्रुमलतावृता ८९ सशब्दघोरविस्तारालोहितोदाभवन्न
दी ॥ स्वधनुःशक्रधनुषौकांचनांगदविद्युतौ ९० तौदैत्यकालजलदौशरधारांविमुंचताम् ॥ तौमहामेघसंकाशौरथनागगतौतदा ९१ बभूवतुरभिक्रुद्धौ
सांबुगर्भाविवांबुदौ ॥ तप्तकांचनसन्नाहौदिव्यहारविभूषितौ ९२

॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

८३ तौविरेजतुरायत्तौसूर्यवैश्वानरोपमौ ॥ तौमहाबलसंकाशावन्योन्यस्यचमूमुखे ९३ शक्राशनिसमस्पर्शैर्बाणैर्जघ्नतुराहवे ॥ परस्परंसमाद्यंततयोर्युधि
दुरासदम् ९४ नाशंसंततदायोधाजीवितान्यपिसंयुगे ॥ शरैर्विभिन्नसर्वांगायुधिप्रक्षीणबांधवाः ॥ निपेतुर्योधमुख्यास्तुरुधिरोक्षितवक्षसः ९५ पतितै अ०६०
र्निष्पतद्भिश्चपात्यमानैश्चसंयुगे ॥ बभूवभूःसमाकीर्णायोधैरुद्गतजीवितैः ९६ अगृह्णंतोशरान्घोरांस्तेचसंदधतोस्तयोः ॥ अंतरंददृशेकश्चित्प्रयतादपिसं
युगे ९७ लघुत्वाच्चमहाबाहूयुद्धशौंडौमहाबलौ ॥ मंडलीभूतधनुषौसकृदेवबभूवतुः ९८ प्रह्लादस्यचबाणौघैर्द्राव्यमांतकवाहिनी ॥ उह्यमानाबलवता
वायुनेवाभ्रमंडलम् ९९ हतदर्पंतुविज्ञायप्रह्लादःकालमाहवे ॥ अपयातंचसमरेद्विषंतंसंप्रतर्कयंतम् १०० मत्वावशगतंचैवप्रह्लादोयुद्धदुर्मदः ॥ तत्रैवा
न्यांचमूंभूयःसंममर्दमहासुरः १०१ कालप्रह्लादयोर्युद्धमभवद्यादृशंपुरा ॥ तादृशंसर्वलोकेषुनभूतंनभविष्यति १०२ एवमद्भुतवीर्यौजामहारणकृतव्रणः ॥
प्रह्लादस्त्वथयुद्धोत्रकालस्त्वपसृतोरणात् १०३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकालप्रह्लादयुद्धेएकोनषष्टितमोऽध्यायः ५९ ॥ ७ ॥
॥ वैशंपायनउवाच ॥ धनाध्यक्षमनुह्लादःप्रह्लादस्यानुजोबली ॥ ससैन्यंयोधयामासक्षोभयन्यक्षवाहिनीम् १ महताचबलौघेनत्वनुह्लादोसुरोत्तमः ॥
अर्दयामाससंक्रुद्धोधनाध्यक्षंप्रतापवान् २ अमृष्यमाणांस्त्रिदशानाहवस्थानुदायुधान् ॥ चकारकदनंघोरंधनुष्पाणिर्महासुरः ३ आवर्तइवसंजज्ञेबल
स्यमहतोमहान् ॥ क्षुभितस्याप्रमेयस्यसागरस्येवसंप्लवः ४ त्रिदशानांशरीरैस्तुदानवानांचमेदिनी ॥ बभूवनिचिताघोरैःपर्वतैरिवसंप्लवे ५ मेरुपृष्ठंतु
रक्तैमरंजितंसंप्रकाशते ॥ सर्वतोमाधवेमासिपुष्पितैरिवकिंशुकैः ६ हतैर्वीरैर्गजैरश्वैःप्रावर्ततमहानदी ॥ शोणितौघामहाघोरायमराष्ट्रविवर्द्धिनी ७ श
क्रन्मेदोमहापंकासंप्रकीर्णांत्रशैवला ॥ छिन्नकायशिरोमीनाअंगावयवशाड्वला ८ गृध्रहंससमाकीर्णाकेकिसारसनादिता ॥ वसाफेनसमाकीर्णाप्रोत्कृष्ट
स्तनितस्वरा ९ तांकापुरुषदुस्तारांयुद्धभूमौमहानदीम् ॥ नदीमिवातपापायेहंससंघोपशोभिताम् १० त्रिदशादानवाश्चैवतेरुस्तेदु स्तरांनदीम् ॥ यथाप
द्मरजोध्वस्तांनलिनींगजयूथपाः ११ ततःसृजंतंबाणौघाननुह्लादंरथेस्थितम् ॥ ददर्शतरसादेवोनिघ्नंतंयक्षवाहिनीम् १२ क्रुद्धस्ततोदैत्यबलंसूदयामास
वित्तपः ॥ विक्षिपन्निवखेवायुर्महाभ्रपटलंबलात् १३ समीक्ष्यतुमुलंयुद्धमनुह्लादश्चवीर्यवान् ॥ रथेनादित्यवर्णेनकुबेरमभिदुद्रुवे १४ सधनुर्धन्विनां
श्रेष्ठोविकृष्यरणमूर्धनि ॥ उत्ससर्जशितान्बाणान्वित्तेशस्यमहात्मनः १५ ८३

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

कुबेरंप्राप्यतेबाणानिर्भिद्यसुसमाहिताः ॥ अपरान्पृष्ठतोजघ्नुर्व्यासक्तान्यक्षराक्षसान् १६ देवःशरैरभिहतोनिशितैर्ज्वलनोपमैः ॥ अनुह्लादंप्रत्युदियात्सं
क्रुद्धःपरमाहवे १७ ततोवैश्रवणोराजाक्रुद्धोयक्षगणैःसह ॥ ववर्षशरवर्षाणिदानवंप्रतिवीर्यवान् १८ तद्यथाशारदंवर्षंगोवृषःशीघ्रमागतम् ॥ अपारयन्वा
रयितुंप्रतिगृह्णन्निमीलितः १९ एवमेवकुबेरस्यशरवर्षंमहासुरः ॥ निमीलिताक्षःसहसादैत्यःसहतिदारुणम् २० रोषितःशरवर्षेणधनदेनमहासुरः ॥ इं
द्रकेतुप्रतीकाशमभितोपश्यतद्रुमम् २१ प्रवृद्धशाखाविटपंतरुणांकुरपल्लवम् ॥ उत्पाट्यकुपितोदैत्यस्तरुंफलसमन्वितम् २२ निजघानहयाञ्श्रेष्ठान्कु
बेरस्यमहात्मनः ॥ तस्यकर्ममहाघोरंदृष्ट्वासर्वेमहासुराः २३ सिंहनादंनदंतिस्मअनुह्लादप्रहर्षिताः ॥ तयोस्तुतुमुलंयुद्धंसंजज्ञेदेवदैत्ययोः २४ ततस्तौक्रो
धरक्ताक्षावन्योन्यवधकांक्षिणौ ॥ अन्योन्यंविविधैःशस्त्रैर्घोरैर्जघ्नतुराहवे २५ त्रिदशादानवान्सर्वेमथित्वाप्रणदंस्तदा ॥ दानवैस्त्रिदशाश्चापिक्रुद्धैर्भुविनिपा
तिताः २६ दानवास्त्वथसंक्रुद्धास्त्रिदशान्निशितैःशरैः ॥ विव्यधुर्वज्रसंकाशैःकंकपत्रैरजिह्मगैः २७ विदार्यमाणादैत्यौघैस्त्रिदशास्तुमहाबलाः ॥ अमर्षिततरा
श्चक्रुर्युद्धकर्माण्यभीतवत् २८ तेगदाभिःसुभीमाभिःपट्टिशैःशूलमुद्गरैः ॥ परिघैश्चसुतीक्ष्णाग्रैर्दानवाःपीडिताःशरैः २८ शरनिर्भिन्नगात्राश्चखड्गविच्छिन्नवक्षसः
जगृहुस्तेशिलाश्चैवद्रुमांश्चासुरसत्तमाः ३० तेभीमसंगादितिजानर्दमानाःपुनःपुनः ॥ ममंथुस्त्रिदशान्वीर्याच्छतशोथसहस्रशः ३१ ततस्तुतुमुलंयुद्धंतेषां
समभिवर्त्तत ॥ शिलाभिर्विपुलाभिश्चशतशश्चैवपादपैः ३२ परिघैःपट्टिशैर्भल्लैर्भिंडिपालैःपरश्वधैः ॥ केचिन्निवृत्ताशिरसःकेचिच्चविदलीकृताः ३३ केचिद्वि
निहताभूमौरुधिरार्द्राःसुरासुराः ॥ केचिद्रणाजिरान्नष्टाःपरस्परवधार्दिताः ३४ विभिन्नहृदयाःकेचिच्छिन्नपादाश्चशेरते ॥ विदारितास्त्रिशूलैश्चकेचित्तत्रग
तासवः ३५ तत्सुभीमंमहद्युद्धंदेवदानवसंकुलम् ॥ बभूवतुमुलंयुद्धंशिलापादपसंकुलम् ३६ धनुर्ज्यातंत्रिमधुरंहिक्कातालसमन्वितम् ॥ आर्त्तस्तनित
घोषाढ्यंयुद्धंगांधर्वमाबभौ ३७ कुबेरःसधनुष्पाणिर्दानवान्रणमूर्द्धनि ॥ दिशोविद्रावयामाससंक्रुद्धःशरवृष्टिभिः ३८ कुबेरेणार्दितंसैन्यंविद्रुतंप्रेक्ष्यदानवः
अभ्यद्रवदनुह्लादःप्रगृह्यमहतींशिलाम् ३९ क्रोधाद्द्विगुणरक्ताक्षःपितृतुल्यपराक्रमः ॥ शिलांतांपातयामासकुबेरस्यरथोत्तमे ४० आपतंतींशिलांदृष्ट्वाग
दापाणिर्धनाधिपः ॥ रथादाप्लुत्यवेगेनवसुधायांव्यतिष्ठत ४१ सचक्रकूबरहयंसध्वजंसशरासनम् ॥ भंक्त्वारथोत्तमंतस्यानिपपातशिलाभुवि ४२ विम
थ्यतुकुबेरस्यप्रह्लादस्यानुजोरथम् ॥ शूराणांकदनंचक्रेसस्कंधविटपैर्द्रुमैः ४३

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

निर्भिन्नशिरसोभग्नास्त्रिदशाःशोणितोक्षिताः ॥ द्रुमप्रव्यथितांगाश्चनिपेतुर्धरणीतले ४४ विद्राव्यविपुलंसैन्यमनुह्रादोमहासुरः ॥ गिरिशृंगंगृहीत्वातु
कुबेरमभिदुद्रुवे ४५ तमापतंतंधनदोगदामुद्यम्यवीर्यवान् ॥ विनदित्वाह्वयामासदानवेंद्रंमहाबलम् ४६ तस्यदैत्यस्यसंक्रुद्धोगदांतांबहुकंटकाम् ॥ न्य
पातयन्वित्तेशोदानवस्योरसिप्रभो ४७ दैत्यःसंक्रोधताम्राक्षस्तंप्रहारमचिंतयत् ॥ वित्तेशस्योपरितदागिरिशृंगमपातयत् ४८ सविह्वलितसर्वांगोगिरिशृं
गेणताडितः ॥ पपातसहसाभूमौविशीर्णइवपर्वतः ४९ वित्तेशंविह्वलंदृष्ट्वासर्वेतेयक्षराक्षसाः ॥ परिवार्यमहात्मानंररक्षुर्भीमविक्रमाः ५० मुहूर्तंविह्वलो
भूत्वापुनर्विश्रवसःसुतः ॥ उपतस्थेचसहसाधनदःक्रोधमूर्च्छितः ५१ सननादमहानादंत्रैलोक्यमभिनादयन् ॥ जनयन्निवनिर्घोषंविधमन्निवपर्वतान्
५२ तमवध्यंतुविज्ञायनिहंतुंपुनरुत्थितम् ॥ प्रेक्ष्यपिंगाक्षमायांतंदानवाविप्रदुद्रुवुः ५३ तांस्तुविद्रवतोदृष्ट्वानुह्रादोह्यसुरोब्रवीत् ॥ कालनेमिंदानवंचवीर्य
दर्पसमन्वितम् ५४ आत्मानंचैववीर्यंचविस्मृत्याभिजनंतथा ॥ क्वगच्छथभयत्रस्ताःप्राकृताइवदानवाः ५५ निवर्तध्वंमहावीर्याःकिंप्राणान्परिरक्षथ ॥
नालंयुद्धाययक्षोयंमहतीयंविभीषिका ५६ एतांविभीषिकामद्यदानवानांसमुत्थिताम् ॥ विक्रम्यविधमिष्यामिनिवर्त्तध्वंमहासुराः ५७ तेसुराःसन्निवृत्ता
श्वसमदाइवकुंजराः ॥ निजघ्नुःपरमक्रुद्धादेवसैन्यंमहासुराः ५८ क्षीणप्रहरणाःकेचिन्महामेघनिभस्तनाः ॥ दर्पोत्कटाभुजैरेवसंप्रहारंप्रचक्रिरे ५९ पांशु
भिश्चैवकाष्ठैश्चशिलाभिश्चमहाबलाः ॥ बाहुभिश्चतथान्योन्यमाक्षिपंतिस्मवेगिताः ६० मुष्टिभिश्चतलैश्चैवनखपातैर्महाबलाः ॥ पादपैश्चमहाशाखैरयुध्यं
तरणाजिरे ६१ अनुह्रादस्तुसंक्रुद्धोदेवतानांमहाचमूम् ॥ ममंथपरमायत्तोवनान्यग्निरिवोत्थितः ६२ रुधिरार्द्रास्तुबहवःशेरतेयोधसत्तमाः ॥ विकृताः
पतिताभूमौताम्रपुष्पाइवद्रुमाः ६३ अनुह्रादश्चविक्रांतोदेवांस्त्वाशीविषोपमान् ॥ युध्यमानस्यसमरेव्यसृजन्निशिताञ्छरान् ६४ धनाधिपेनवि
द्धस्यअनुह्रादस्यसंयुगे ॥ अंगारमिश्राःक्रुद्धस्यमुखान्निश्चेरुरर्चिषः ६५ अथबाणसहस्रेणवित्तेशंदानवोत्तमः ॥ विव्याधसशरैःक्रुद्धोदंडपाणिरिवांतकः
६६ कुबेरस्तुशरैर्भिन्नःसमंतात्क्षतजोक्षितः ॥ रुधिरंपरिसुस्रावगिरिप्रस्रवणैरिव ६७ लब्ध्वासतुपुनःसंज्ञांरोषरक्तेक्षणःसुरः ॥ गदामथसमासाद्यभीमांभी
मपराक्रमः ॥ चिक्षेपदैत्यमुद्दिश्यबलात्क्रोधेनमूर्च्छितः ६८ अप्राप्तामंतरेसोथतांगदांगदयासुरः ॥ बभंजविनदःक्रुद्धस्तदाश्चर्यमभूत्तदा ६९ प्रगृह्यतुगदां
भूयोह्यभिदुद्रावदानवम् ॥ तमापतंतंदृष्ट्वैवअनुह्रादोमहाबलः ७०

गिरिशृंगमिवोत्पाट्यकैलासाचलसन्निभम् ॥ धनाधिपंप्रदुद्रावव्यादितास्यइवांतकः ७१ तमंतकमिवायांतमजेयंसकलैःसुरैः ॥ ग्रसंतमिवतंदैत्यंत्रैलो
क्यमखिलंरुषा ७२ तमालोक्यतथाभूतंधनाध्यक्षोरणंभयात् ॥ अपहाययर्योतत्रयत्रशक्रःसुराधिपः ७३ तस्यचापिमहत्कर्मदृष्ट्वावित्तपतिस्तदा ॥
जगामभयसंत्रस्तोयत्रदेवःशचीपतिः ७४ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेअनुह्रादकुबेरयुद्धवर्णनंनामषष्टितमो
ऽध्यायः ६० ॥ छ ॥ वैशंपायनउवाच ॥ विप्रचित्तिस्तुवरुणंदैत्यानामादिरव्ययम् ॥ जघानेषुगणैःक्रुद्धोदीप्तैरिवमहोरगैः १ सदह्यमानोदैत्येनदीप्तैः
शरगभस्तिभिः ॥ नाभ्यजानतकर्तव्यंसंग्रामेसजलेश्वरः २ सर्वलोकेश्वरस्येवपरमेष्ठीप्रजापतिः ॥ नशक्तोरयग्रतःस्थातुंविप्रचित्तेर्जलाधिपः ३ वज्रोनाम
महाव्यूहोनिर्भयःसर्वतोमुखः ॥ तंव्यूह्यप्रत्ययुध्यंतदानवादेववाहिनीम् ४ वह्निज्वालासमंतत्ररविमंडलसन्निभम् ॥ मुखमाभातिदैत्यस्यविप्रचि
त्तेर्महात्मनः ५ वरुणस्तुमहातेजाविप्रचित्तिंमहासुरम् ॥ प्रदहन्निवतेजोभिर्जिगीषुःप्रत्यवैक्षत ६ स्रग्दाममालाभरणःकेयूरांगदभूषणः ॥ जग्राहपरि
घंदैत्यःकैलासशिखरोपमम् ७ पिनद्धंकांचनैःपट्टैर्हैममालिनमायसम् ॥ यमदंडोपमंघोरंदैत्यानांभयनाशनम् ८ भ्रामयामाससंक्रुद्धोमहाशक्रध्वजोप
मम् ॥ विमनादविवृत्तास्योविप्रचित्तिर्महासुरः ९ सकंठस्थेननिष्केणभुजस्थैरपिचांगदैः ॥ कुंडलाभ्यांविचित्राभ्यांभ्राजतेकांचनस्रजः १० दानवोभू
षणैर्भातिपरिघेणायसेनच ॥ यथेंद्रधनुषामेघःसविद्युत्स्तनयित्नुमान् ११ प्रस्फुरत्परिघास्त्रेणवातस्कंधान्महास्वनः ॥ जज्वालचसधूमार्चिःसांकर्षणइवा
नलः १२ विद्याधरगणैःसार्द्धंगंधर्वनगरैरपि ॥ सहचैवामरावत्यासिद्धलोकैस्तथासह १३ ग्रहनक्षत्ररवितंसार्कचंद्रविभूषितम् ॥ दैत्येंद्रपरिघोद्भूतंभ्रमती
वनभस्तलम् १४ दुरासदःसुसंजज्ञेपरिघाभरणक्षमः ॥ सुरेंधनोसुरेंद्राग्निर्युगांताग्निरिवोत्थितः १५ त्रिदशावरुणश्चैवनशेकुःस्पंदितुंभयात् ॥ तत्रासी
न्निर्भयस्त्वेकःकौशिकोवासवःप्रभुः ॥ भास्करप्रतिमंघोरंपरिघंरौद्रदर्शनम् १६ पातयामाससेनायांजलेशस्यसदानवः ॥ पततातेनसंग्रामेजलेशस्यमहा
त्मनः १७ भूतानांशतसाहस्रंपरिघेणसमाहतम् ॥ तेषांगात्राणिचासाद्यव्यशीर्यंतसहस्रशः १८ विशीर्यमाणंविबभावुल्काशतमिवांबरे ॥ भूयश्चैनं
तदाभ्राम्यवरुणायन्यपातयत् १९ पात्यमानेतदातस्मिञ्छरीरेवारुणेतदा ॥ सभिन्नःपरिघोघोरोदेवगात्रेव्यशीर्यत २० शीर्यमाणस्यचूर्णानिखद्योता
इवचांबरे ॥ सतुतेनप्रहारेणनचचालजलाधिपः २१

८५ परिवेणहतःसंख्येयथावज्रहतोचलः ॥ स्वसैन्येष्वपिभग्नेषुभिन्नदेहेषुचाहवे २२ मुहूर्त्तमभवत्क्षोभ्यमपांपतिरमर्षणः ॥ सोमर्षंचसमापन्नोवरुणोमितवि अ०६१
क्रमः २३ सर्वसंहारमकरोत्स्वपक्षस्यारिमर्दनः ॥ ससागरैश्चतुर्भिश्चवृतोदीप्तैश्चपन्नगैः २४ शंखमुक्तामणिचितोबिभ्रत्तोयमयंवपुः ॥ पांडुरोद्धूतवसनो
नानारत्नविभूषितः २५ वरुणःपाशधृक्श्रीमान्कूर्ममीनसमाकुलः ॥ वरुणस्तुतदाक्रुद्धस्तान्निरीक्ष्यस्वसैनिकान् २६ उवाचदृष्ट्वायुध्यध्वंदानवानांजिघां
सया ॥ अहमेनंहनिष्यामिमयंमुक्तायुध्यत २७ ततस्तेपन्नगाःसर्वेमहार्णवजलाश्रयाः ॥ जघ्नुर्दैत्यान्व्रणमुखेनदंतोजयगृद्धिनः २८ तेतुनालीकनारा
चैर्गदाभिर्मुशलैस्तथा ॥ अभ्यघ्नन्दानवान्हृष्टामुदितावरुणानुगाः २९ विप्रचित्तिस्तुसंक्रुद्धोमहाबलपराक्रमः ॥ पन्नगानांशरीराणिव्यधम
द्युद्धदुर्मदः ३० गारुडेनापिचास्त्रेणपन्नगान्दानवोत्तमः ॥ समरेघातयामासगरुडैःपन्नगाशनैः ३१ सशरैःसूर्यसंकाशैःशातकुंभविभूषितैः ॥
पन्नगान्त्समरेवीरःप्रममाथसुदुर्जयान् ३२ समरेभिन्नगात्रास्तेपन्नगाःशरपीडिताः ॥ पेतुर्मथितसर्वांगागजाइवमहागजैः ३३ तंपतंतमिवादित्यंदी
प्तैर्बाणगभस्तिभिः ॥ अभ्यधावतसंक्रुद्धःसमरेवरुणःप्रभुः ३४ ततस्तुदानवास्तत्रभिन्नदेहाःसहस्रशः ॥ व्यथिताविद्रवंतिस्मदिशोदशविचेतसः ३५ इंद्र
स्यार्थेपराक्रम्यवरुणस्त्यक्तजीवितः ॥ विनर्दमानोयुयुधेसमरेपाशभृद्वरः ३६ वरुणःपन्नगाश्चैवमुष्टिभिःसमरोत्कटाः ॥ अभ्यवर्ततसमरेविप्रचित्तिमहासु
रम् ३७ ततोस्त्रैश्चशिलाभिश्चप्राहरत्सबलोत्कटः ॥ व्यपोहतमहातेजाविप्रचित्तिर्महासुरः ३८ ततःपावकसंकाशैःसमुक्तैःशीघ्रगामिभिः ॥ वरुणस्यमहा
वेगान्बिभेदसमरेहयान् ३९ कर्मणातेनमहताविप्रचित्तेर्महात्मनः ॥ अग्नेराज्याहुतस्येवतेजःसमभिवर्धत ४० सशरैःसूर्यसंकाशैःसुमुक्तैःशीघ्रगामिभिः ॥
वारुणींतांमहासेनांनिर्ममंथमहाबलः ४१ क्षीणास्त्रांसायकाक्रांतांशरजालेनमोहिताम् ॥ शूलशक्त्यृष्टिभिन्नांचचकाररुधिरोक्षिताम् ४२ सशरैर्वह्निसंका
शैःसुमुक्तैर्नतपर्वभिः ॥ वरुणस्यमहावेगात्विभेदसमरेहयान् ४३ अभिद्रुतोथदैत्येनससैन्यःसलिलाधिपः ॥ महेंद्रंशरणंप्राप्तोविप्रचित्तेर्भयार्दितः ४४
इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनेविप्रचित्तियुद्धंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ६ ॥ ॥ वैशंपायनउवाच ॥ ॥ पराज
यंतुदेवानांदृष्ट्वाग्निर्देवसत्तमः ॥ चकारबुद्धिंदैत्यानांवधेब्रह्मर्षिभिःस्तुतः १ स्वयंप्रभायाःशांडिल्यायःपुत्रोहव्यवाहनः ॥ हिरण्यरेताःपिंगाक्षोदेवहूतोहुता
शनः २ रोहितोलोहितग्रीवोहर्तादाताहविःकविः ॥ पावकोविश्वभुग्देवःसर्वदेवाननःप्रभुः ३ ८५

सुब्रह्मात्माशोभनयज्ञस्वरूपः वेदस्वरूपोवा सुवर्चस्कःशोभनंवर्चःविद्यातपोजन्यंतेजःयस्मात्सतथा ॥ ४ ॥ अर्चिष्मान् शमीगर्भोऽश्वत्थः सएवस्वस्ययोनिर्यस्यासौशमीग
र्भस्वयोनिः ॥ ५ ॥ ६ ॥ शुचिरोमापावनधूमः ॥ ७॥ ८ ॥ सोमपूताशनःअभिष्टुतंसोममश्नातीत्यर्थः अद्रिधृक्सोमाभिषवार्थंग्रावाणोध्रियंतेस्मइत्यद्रिधृक् ॥ ९ ॥ १० ॥
॥ ११ ॥ १२ ॥ १३ ॥ यस्यवायोर्योनिराकाशः सप्तस्वरगतानादब्रह्मप्राप्तायत्रनादात्मकंब्रह्मसर्ववेदकारणंआविर्भवतीत्यर्थःअतएवाकाशमयः ॥ १४ ॥ वेदकर्त्ता वागु

सुब्रह्मात्मासुवर्चस्कःसहस्रार्चिर्विभावसुः ॥ कृष्णवर्त्माचित्रभानुर्देवानामपिदेवराट् ४ लोकसाक्षीद्विजहुतःसदार्चिष्मान्वषट्कृतः ॥ हव्यभक्षःशमीगर्भः
स्वयोनिःसर्वकर्मकृत् ५ पावनःसर्वभूतानांत्रिदशानांतपोनिधिः ॥ शमनःसर्वपापानांलेलिहानस्तपोमयः ६ प्रदक्षिणावर्तशिखःशुचिरोमामखाकृतिः ॥
हव्यभुक्भूतभव्येशोयज्ञभागहरोहरिः ७ सोपमःसुमहातेजाभूतेशःसुमहातपाः ॥ अधृष्यःपावकोभूतिर्भूतात्मावैस्वधाधिपः ८ स्वाहापतिःसामगी
तःसोमपूताशनोद्रिधृक् ॥ देवदेवोमहाक्रोधोरुद्रात्माब्रह्मसंभवः ९ लोहिताश्ववायुचक्रंरथमास्थायभूतधृक् ॥ धूमकेतुर्धूमशिखोनीलवासाःसुरोत्तमः १०
उद्यम्यदिवमाग्नेयंशस्त्रंदेवोरणेमहान् ॥ दानवानांसहस्राणिप्रयुतान्यर्बुदानिच ११ ददाहभगवान्वह्निःसंक्रुद्धःप्रलयेयथा ॥ प्राणोयःसर्वभूतानांदेहेतिष्ठ
तिपंचधा १२ यंतायश्चहुताशश्चसखाचप्रभुरीश्वरः ॥ प्रभंजनेयोलोकानांयुगांतेसर्वनाशनः १३ सप्तस्वरगतायस्ययोनिर्गीर्भिरुदीर्यते ॥ योह्याका
शमयोदेवोदूरगःसर्वसंभवः १४ यश्चकर्ताविकर्ताचगातिर्गातिमतांप्रभुः ॥ वेदकर्तासमोलोकेब्रह्मणायःसनातनः १५ अमूर्तिमंतंयंप्राहुर्महाभूतंमहत्तरम् ॥
सोग्निःसमीरयामासशमीगर्भंसमीरणः १६ त्रिदिवारोहिभिर्ज्वालैर्जृंभमाणोदिशोदश ॥ दानवानामभावाययुगांताग्निरिवोत्थितः १७ मेदोमज्जामहा
पंकांकेशशैवलशालिनीम् ॥ योधशीर्षोपलवहांमृतद्विपतटोत्कटाम् १८ शोणितोदांरणेदृष्ट्वासंग्रामसरितंविभुः ॥ वह्निःप्रस्कंदयामासदैत्यानांभयवर्द्धनः
१९ ततोग्निर्दितिजान्सर्वान्प्रह्लादप्रमुखांस्तथा ॥ पराजयानःसविभुःक्रोशमानोमहामृधे २० केचित्प्रदीप्तैर्मुकुटैःकेचिद्दीप्तैःशिरोरुहैः ॥ केचित्प्रदीप्त
वसनैःकेचिद्दीप्तैर्भुजाननैः २१ केचित्प्रदीप्तैरुरुभिःकेचिच्छत्रैर्ध्वजैरथैः ॥ असुरास्तत्रदृश्यंतेप्रदीप्तेनाग्निनावृताः २२ त्यक्त्वायुधानिसर्वाणिसध्वजां
श्चरथोत्तमान् ॥ प्रयांतिसमरेभीताःपावकेनपराजिताः २३ नचपश्यंतितेवह्निंप्रदीप्तंध्वजिनीमुखे ॥ दिशःखड्गांश्चमेवांश्चदीप्तान्पश्यंतिदानवाः २४
ध्रुवःस्वयंभुवासृष्टोयुगांतस्तोययोनिना ॥ इत्येवंदानवाःसर्वेमेनिरेत्रस्तचेतसः २५

च्चारणहेतूनांस्थानकरणादीनांचहेतुत्वात् ॥ ब्रह्मणाचतुर्मुखेन ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ सरितंप्रस्कंदयामासप्रवाहयामास ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥
२३ ॥ २४ ॥ तोयंयेनिःस्थानंयस्यतेनजलशायिनानारायणेन तोययोनिनावाह्निनावा ॥ २५ ॥

वारिविक्षरेजलवर्षिणी ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ तपसेऽर्करूपीसन् गोषुरश्मिषुमंडलेइत्यर्थः ॥ ३५ ॥ वर्षणात्कस्यज



मयश्चशंबरश्चैवमहामायाधरौतदा ॥ पार्जन्यवारुणीमोयस्सृजतांवारिविक्षरे २६ ताभ्यांवह्निःसमायाभ्यांसिच्यमानःसमंततः ॥ तोयौघैःपर्वतनिभैर्मृद्वर्चि रभवद्रणे २७ शम्यमानेतुसमरेपावकेदैत्यनाशिनि ॥ बृहत्कीर्तिर्बृहत्तेजावह्निमाहबृहस्पतिः २८ ॥ ॥ गुरुरुवाच ॥ हिरण्यरेतःसुमुखज्वलनाह्वयस र्वभुक् ॥ सप्तजिह्वाननक्षामलेलिहानमहाबल २९ आत्मावायुस्तवविभोशरीरंसर्ववीरुधः ॥ योनिरापश्चतेप्रोक्तायोनिस्त्वमसिचांभसः ३० ऊर्ध्वंचाध श्चगच्छंतिसंचरंतिचपार्श्वतः ॥ अर्चिषस्तेमहाभागसर्वतःप्रभवंतिच ३१ त्वमेवाग्नेसर्वमसित्वयिसर्वमिदंजगत् ॥ त्वंधारयसिभूतानिभुवनंत्वंबिभर्षिच ॥ ३२ त्वमग्नेहव्यवाडेकस्त्वमेवपरमंहविः ॥ यजंतिचसदासंतस्त्वमेवपरमाध्वरे ३३ त्वमन्नंप्राणिनांभुंक्षेजग्धपीतासित्वंप्रभो ॥ त्वयिप्रवृत्तोविजयस्त्व यिलोकाःप्रतिष्ठिताः ३४ सर्वांल्लोकांस्त्रीनिमान्हव्यवाहप्राप्तेकालेत्वंपचस्येवदीप्तः ॥ त्वमेवैकस्तपसेजातवेदोनान्यस्त्वत्तोविद्यतेगोषुदेव ३५ वृषाक पिःसिंधुपतिस्त्वमग्नेमहामखेष्वग्र्यहरस्त्वमेव ॥ विश्वस्यभूमन्स्त्वमसिप्रभूतिस्त्वंचप्रतिष्ठाभगवत्प्रजानाम् ३६ सृजस्यपोरश्मिभिर्जातवेदस्तथौषधीरोष धीनांरसांश्च ॥ विश्वंत्वमादाययुगांतकालेस्रष्टाभवस्यानलसर्गकाले ३७ ॥ त्वमग्नेसर्वभूतानांयोनिर्वेदेषुगीयसे ॥ त्वयादेवहितार्थायनिहतादानवारणे ३८ स्वयोनिस्तेमहातेजस्तोयंमखशतार्चितम् ॥ तांस्वयोनिंसमासाद्यकिंविषीदसिपावक ३९ त्रायस्वसमरेदेवान्दैत्येभ्यःसुरसत्तम ॥ पिंगाक्षलोहि तग्रीवकृष्णवर्त्मन्हुताशन ४० ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनेग्निस्तवोनामद्विषष्टितमोऽध्यायः ६२ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ बृहस्पतेस्तुवचनंश्रुत्वासत्यंसमीरितम् ॥ भूयःप्रजज्वालरणेहविषेवमहामखे १ हतास्तुमायादैत्यानांप्रदीप्तेनाग्निनारणे ॥ हतमा याहतबलाबलिंतेसमुपस्थिताः २ पराजितेषुदैत्येषुवन्हिनाद्भुतकर्मणा ॥ प्रह्लादस्तूत्तरंवाक्यमाहदैत्यपतिंबलिम् ३ भवानग्निश्चवायुश्चभास्करःसलिलं शशी ॥ नक्षत्राणिदिशोव्योमभूश्चदानवसत्तम ४ भविष्यंचैवभूतंचभवच्चासुरसत्तम ॥ दत्तंचैतद्भगवतावरदेनस्वयंभुवा ५ इंद्रत्वंचामरत्वंचयुद्धेचाप्यप राजयः ॥ ईशित्वंचवशित्वंचबलंचैवामितंशुभम् ६ सर्वभूतेश्वरत्वंचदैत्यराजसदातव ॥ महायोगीश्वरत्वंचशूरत्वंचमहामृधे ७ अणिमालघिमाश्चैवयेचा न्येसात्त्विकागुणाः ॥ तत्पराजित्यदैत्येंद्रदेवान्सर्वांश्चसानुगान् ८

लस्यपानात्त्रवृषाकपिःअन्येभ्योपिदृश्यतइतिदीर्घः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांद्विषष्टितमोऽध्यायः ॥ ६२ ॥ बृहस्पतेस्त्विति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

यथोक्तंब्रह्मणाराजंस्तत्तथानतदन्यथा ॥ तस्यतद्वचनंश्रुत्वाप्रह्लादस्यमहात्मनः ॥ बलिःपरमसंहृष्टःप्रायाच्छक्ररथंप्रति ९ ततःप्रयांतंत्रिदशेंद्रसन्निधौमहा
सुरेंद्रंबलिमुत्तमश्रियम् ॥ तमंजसाजग्मुरभिप्रदक्षिणंद्विजाश्चपुण्याःपशवश्चसत्तमाः १० महाजटाभारधरास्तपस्विनस्तदातमाहुर्विधिमंत्रमंगलैः ॥ अ
भिष्टुवंतःकवयःस्वलंकृतंबलिंप्रयांतंरणमूर्द्धनिस्थिताः ११ प्रतप्तजांबूनदचित्रभूषणैर्दिव्यैश्चरत्नैर्विविधैरलंकृतः ॥ विराजमानःपरमेणवर्चसारणेविभा
त्यग्निशिखेवदानवः १२ सवैतदाशत्रुबलार्दितंबलंबलिर्ददर्शोत्तमसत्ववीर्यवान् ॥ जलागमेश्रीमदिवाभ्रमंडलंविशीर्यमाणंनभसीववायुना १३ ततोद
दर्शाथबलानिसर्वतोरणेप्रगुप्तानिहुताशनेनवै ॥ समुच्छ्रितान्युग्रतराणितत्रवैसमुद्रवेगानिवपर्वसंधिषु १४ सशूलशक्त्यृष्टिगदासिसायकान्क्षिपन्रिपू
णांसमरेमहात्मनाम् ॥ ननादसिंहर्षभमत्तनागवज्जलागमेतोयदवच्चवीर्यवान् १५ दिव्यास्त्रधूमःसुभुजोग्रवायुर्महाबलःपौरुषविक्रमेंधनः ॥ प्रजादिधक्ष
न्निवकालवह्निःसुघोररूपोविबभौरणेबली १६ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेत्रिषष्टितमोऽध्यायः ६३ ॥ ७ ॥
॥ वैशंपायनउवाच ॥ बलिनातुसुराःसर्वेवर्जयित्वासुराधिपम् ॥ रणेशरशतैर्भिन्नाःससैन्यावैपराजिताः १ विमुखायातिदैत्येंद्रैर्वध्यमानामहाचमूः ॥
जितास्तुबलिनादेवाःशक्रमाहुर्महाबलम् २ ॥ देवाऊचुः ॥ भवानिंद्रश्चधाताचलोकानांप्रभुरव्ययः ॥ त्वमप्रतिमकर्माचतथैवानुपमद्युतिः ३ विद्रुता
नीहसैन्यानिसहास्माभिःसुरेश्वर ॥ रथचक्रध्वजाक्षाणिविभिन्नानिमहासुरैः ॥ ४ ॥ रथहस्त्यश्वयोधाश्चपदाताश्चसहस्रशः ॥ भिन्नच्छिन्नाश्चशतशोग
दामुशलपट्टिशैः ५ महाभैरवरूपंहिदैत्येंद्रेणकृतंरणे ॥ किमुपेक्षसिदैत्येंद्रैर्हन्यमानांमहाचमूम् ६ त्रायस्वत्रिदशश्रेष्ठशरण्यःशरणागतान् ॥ श्रुत्वातुव
चनंतेषांदेवानाममराधिपः ७ संवर्त्ताग्निसमक्रुद्धःसर्वान्दहतिदानवान् ॥ दिवाकरकराकारंकिरीटंधारयन्प्रभुः ८ वैडूर्यवर्णसंकाशोनानारत्नचितांगदः ॥
मयूररोमारक्ताक्षःशतबाहुःसहस्रदृक् ९ हरिरेकोहरिश्मश्रुर्नानाकेतुर्महाबलः ॥ वज्रप्रहरणःश्रीमान्योगीशिताशिरोधरः १० सधनुर्बद्धसन्नाहःशतादित्यस
मप्रभः ॥ देवगंधर्वयक्षौघैरनुयातःसहस्रशः ११ सामगैश्चजपैश्चापिस्तूयमानोमहर्षिभिः ॥ शतपर्वमहारौद्रंस्फोटनंसर्वतोमुखम् १२ प्रगृह्यरुचिरंवज्रंदी
प्तरौद्राट्टहासिनम् ॥ दैत्यानयोधयत्सर्वान्महेंद्रःपाकशासनः १३ अधृष्यःसर्वभूतानामदित्यादयितःसुतः ॥ ततःप्रवृत्तःसंग्रामोबलिवासवयोस्तदा १४
उभाभ्यांदेवदैत्याभ्यामचिरान्महदद्भुतः ॥ अतिवीर्यबलोदग्रस्तुमुलोलोमहर्षणः १५

८७ प्रह्लादेनस्तुतिशतैःकर्मभिर्जयसंमतैः ॥ प्रबोधितोदैत्यपतिरग्निरिद्धइवाबभौ १६ सुरासुरेंद्रयोर्दृष्ट्वासंग्रामंलोमहर्षणम् ॥ देवानांदानवानांचभूयोयुद्धमभूत्तदा
१७ ततोविध्यन्महेंद्रस्तंबलिमस्त्रैर्महाबलं ॥ तान्यस्त्राणिमहाबाहुश्चिच्छेदशतधारणे १८ ततःक्रुद्धःपुनस्तत्रनिजघ्नेदानवंमहत् ॥ आग्नेयमथशत्रुघ्नंचिक्षेपेंद्रो अ०६४
महाबलः ॥ तंदृष्ट्वाखेसमागच्छत्प्रलयानलसन्निभम् १९ पातयामासतच्चैंद्रंवारुणास्त्रेणधीमता ॥ संक्रुद्धोमघवावज्रमगृह्णात्पर्वतोपमम् २० हंतुकामोरण
श्लाघीबलिंदैत्याधिपंरणे ॥ ततःशुश्रावदेवेंद्रःकौशिकोहरिवाहनः २१ अशरीरांशुभांवाणींतस्मिन्महतिवैशसे ॥ निवर्तस्वमहाबाहोसुराणांनंदिवर्धन २२
पुरंदरसुरश्रेष्ठनजेष्यसिरणेबलिम् ॥ तपसात्युत्तमोदैत्योवरदानेनचाधिकः २३ स्वयंभूःपरितोषाच्चसत्यधर्माच्चवासव ॥ नैषशक्यस्त्वयाजेतुंत्रिदशैर्वासु
रेश्वर २४ योह्यस्यजेताभगवांस्तंशृणुष्वसमाहितः ॥ ब्रह्मणःसहिसर्वस्वंदेवानांचैवसागतिः २५ परंरहस्यंधर्मस्यपरस्यचपरागतिः ॥ परात्परतरःश्री
मान्परावरगतिःप्रभुः २६ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ शंखचक्रगदापाणिःपीतवासाःसुरारिहा २७ जेताजेयोजयःश्रीमान्सोऽस्यजेताभवि
ष्यति ॥ श्रुत्वादिव्यांतुमधुरांवाणींतामशरीरिणीम् २८ अपयातोरणाच्छक्रःसार्द्धंसर्वैःसुरोत्तमैः ॥ अपयातेतुदेवेंद्रेकौशिकेहरिवाहने २९ सिंहनादोम
हानासीद्दानवानांमहामृधे ॥ ततःकिलकिलाशब्दःक्ष्वेडितास्फोटितस्वनः ३० शंखानांनिनदश्चात्रयोधानांवल्गितस्वनः ॥ वादित्राणांचनिर्घोषस्तुमु
लश्चाभवत्तदा ३१ जयशब्दरवाश्चैवदेवानांतुपराजये ॥ ससैन्योदैत्यराजस्तुस्तूयमानःसुहृद्गणैः ॥ बलींद्रोविबभौदैत्योहिरण्यकशिपुर्यथा ३२ इतिश्री
महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनेदेवासुरसंग्रामोनामचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ निष्प्रयत्ने
षुदेवेषुत्रैलोक्येदैत्यपालिते ॥ जयेबलेर्बलवतोमयशंबरयोस्तथा १ सुधासुदिक्षुसर्वासुप्रवृत्तेधर्मकर्मणि ॥ अपवृत्तेचंद्रमसिअयनस्थेदिवाकरे २ प्रह्लाद
शंबरमयैरनुह्लादेनचैवहि ॥ दिक्षुसर्वासुगुप्तासुगगनेदैत्यपालिते ३ दैत्येषुमखशोभाश्चस्वर्गार्थंदर्शयत्सुच ॥ प्रकृतिस्थेतदालोकेवर्तमानेचसत्पथे ४
अभावेसर्वपापानांभावेचैवतथास्थिते ॥ भावेतपसिसिद्धानांसर्वत्राश्रमरक्षिषु ५ चतुष्पादेस्थितेधर्मेअधर्मेपादविग्रहे ॥ प्रजापालनयुक्तेषुभ्राजमानेषु
राजसु ६ स्वधर्मसंप्रयुक्तेषुसर्वाश्रमनिवासिषु ॥ अभिषिक्तोसुरैःसर्वैर्दैत्यराजोबलिस्तदा ७ ८७

रिवंशेभविष्यपर्वणिटीकायांचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ छ ॥ निष्प्रयत्नेष्विति ॥ १ ॥ सुधासुअमृतमयीषुअपवृत्तेउद्धरिते ॥ २ ॥ ३ ॥ ४ ॥ अभावेपापानांभावा
नांभावेपुण्यानामित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥

हृष्टेष्वसुरसंघेषुनदत्सुमुदितेषुच ॥ अथाभ्युपगतालक्ष्मीर्बलिंपद्मासनेस्थिता ८ पद्मोद्यतकरादेवीवरदासुरमोहिनी ॥ ॥ श्रीरुवाच ॥ बलेबलवतांश्रे
ष्ठमहाराजमहाद्युते ९ प्रीतास्मितवभद्रंतेदेवतानांपराजये ॥ यस्त्वयायुधिविक्रम्यदेवराजःपराजितः १० दृष्ट्वातेपरमंसत्वंततोहंस्वयमागता ॥ नाश्च
र्यंदानवश्रेष्ठहिरण्यकशिपोःकुले ११ प्रसूतस्यसुरेंद्रस्यतवकर्मेदमीदृशम् ॥ विशेषतस्त्वयाराजन्दैत्येंद्रःप्रपितामहः १२ येनभुक्तंहिनिखिलंत्रैलोक्यमिदम
व्ययम् ॥ विशेषतस्तवविभोसर्वेधर्मपथेस्थिताः १३ तेनत्रैलोक्यमुख्येनभोक्ष्यस्यमितविक्रम ॥ एवमुक्त्वातुसादेवीलक्ष्मीर्दैत्यपतिंबलिम् १४ प्रविष्टावर
दासौम्यासर्वभूतमनोरमा ॥ शिष्टाश्चदेव्यःप्रवराह्रीःकीर्तिर्द्युतिरेवच १५ प्रभाधृतिःक्षमाभूतिर्नीतिर्विद्यादयास्मृतिः ॥ स्मृतिर्लज्जातथामेधालक्ष्मीरिहाग
तिस्तथा १६ श्रुतिःप्रीतिरिलाकीर्तिःशांतिःपुष्टिःक्रियास्तथा ॥ सर्वाश्चाप्सरसोदिव्यानृत्यगीतविशारदाः १७ पतिंप्राप्ताःसुदैतेयंत्रैलोक्येसचराचरे ॥ प्राप्त
मैश्वर्यममितंबलिनाब्रह्मवादिना १८ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेपंचषष्टितमोऽध्यायः ६५ ॥ ॥ ध ॥ ॥
जनमेजयउवाच ॥ ॥ पराजिताःसुरादैत्यैःकिमकुर्वतवैमुने ॥ कथंचत्रिदिवंलब्धंभूयोदेवैर्द्विजोत्तम १ ॥ ॥ वैशंपायनउवाच ॥ ॥ श्रुत्वावाणींतु
तांदिव्यांसहदेवैःसुराधिपः ॥ प्राग्दिशंप्रस्थितःश्रीमानदित्यालयमुत्तमम् २ प्राप्यादित्यालयंशक्रःकथयामासतांगिरम् ॥ अदित्यांसायथायुद्धेतेनवाणी
पुराश्रुता ३ ॥ ॥ अदितिरुवाच ॥ ॥ यद्येवंपुत्रयुष्माभिर्नशक्योहंतुमाहवे ॥ बलिर्विरोचनसुतःसर्वैश्चैवमरुद्गणैः ४ सहस्रशिरसाहंतुंकेवलंशक्यते
सुरः ॥ तेनैकेनसहस्राक्षनह्यन्येनशतक्रतो ५ तद्भःपृच्छस्वपितरंकश्यपंसत्यवादिनम् ॥ पराजयार्थंदैत्यस्यबलेस्तस्यमहात्मनः ६ ततोदित्यासहसुराः
संप्राप्ताःकश्यपांतिकम् ॥ अपश्यन्कश्यपंतत्रमुनिंदिव्यतपोनिधिम् ७ आद्यंदेवंगुरुंदिव्यंक्लिन्नंत्रिषवणांबुभिः ॥ तेजसाभास्कराकारंगौरमग्निशिखा
प्रभम् ८ न्यस्तदंडंतपोयुक्तंबद्धकृष्णाजिनोत्तरम् ॥ वल्कलाजिनसंवीतंप्रदीप्तंब्रह्मवर्चसा ९ हुताशमिवदीप्यंतमाज्यमंत्रपुरस्कृतम् ॥ स्वाध्यायनिरतं
शांतंवपुष्मंतमिवानलम् १० तंब्रह्मवादिनांश्रेष्ठंसुरासुरगुरुंप्रभुम् ॥ प्रतपंतमिवादित्यंमारीचंदीप्ततेजसम् ११

यइति उत्तमइतिचतुर्मुखउक्तःतस्य आत्मावैपुत्रनामासीतिश्रुत्यावगतः पुत्रेमरीचौआत्मभावःएवंपरंपरयापौत्रेपिसाधारण्येनात्मभावप्राप्तावाह आत्मभावविशेषेणेति पुत्रापेक्षयापौत्रेआत्मभावोविशेषतोस्तिअतएवप्रह्लादगुणाःवैष्णवत्वादयःपौत्रेबलौकात्स्न्येनाभिव्यक्तानतुपुत्रेविरोचनेअतएवदाक्षिणात्याःपौत्रंपितामहनाम्नायोजयंति ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ लोकायतिकमुख्यैःशा

यःस्रष्टासर्वभूतानांप्रजानांपतिरुत्तमः ॥ आत्मभावविशेषेणतृतीयोयःप्रजापतिः १२ ततःप्रणम्यतेवीराःसहादित्यासुरर्षभाः ॥ ऊचुःप्रांजलयःसर्वेब्रह्माण मिवमानसाः १३ तच्छ्रुतंयुधिशक्रेणसरस्वत्यासमीरितम् ॥ अजेयस्त्रिदशैःसर्वैर्बलिर्दानवसत्तमः १४ श्रुत्वातुवचनंतेषांपुत्राणांकश्यपस्तदा ॥ चकारग मनेबुद्धिंब्रह्मलोकायलोककृत् १५ ॥ कश्यपउवाच ॥ गच्छामब्रह्मसदनंब्रह्मघोषानिनादितम् ॥ यथाश्रुतंचतत्रैवब्रह्मणेवदतानघाः १६ ॥ वैशंपायनउ० ततोदित्यासहसुरायांतंकश्यपमन्वयुः ॥ प्रस्थितंब्रह्मसदनंदेवर्षिगणसेवितम् १७ तेमुहूर्तेनसंप्राप्ताब्रह्मलोकंदिवौकसः ॥ दिव्यैःकामगमैर्यानैर्महार्हैःसुम नोहरैः १८ दिदृक्षवस्तेब्रह्माणंतपसोराशिमव्ययम् ॥ अभ्यगच्छंतविस्तीर्णांब्रह्मणःपरमांसभाम् १९ षट्पदोद्गीतनिनदांसामगीतविमिश्रिताम् ॥ श्रेय स्करीममित्रघ्नींदृष्ट्वासंजहृषुर्मुदा २० ब्राह्मणैश्चमहाभागैर्वेदवेदांगपारगैः ॥ ऋचोबह्वृचमुख्यैश्चशिक्षाविद्भिस्तथाद्विजैः ॥ शब्दनिर्वचनार्थंचप्रेर्यमाणपदा क्षराः २१ ततस्तैर्वैमरण्याम्रावितंतेषुचकर्मसु ॥ यज्ञवेदांगविदुषांपदक्रमविदांतथा २२ घोषेणपरमर्षीणांसाबभूवनिनादिता ॥ यज्ञसंस्तवविद्भि श्चशिक्षाविद्भिस्तथाद्विजैः २३ शब्दनिर्वचनार्थज्ञैःसर्वविद्याविशारदैः ॥ मीमांसाहितवाक्यज्ञैःसर्ववादविशारदैः २४ हृष्टपुष्टस्वरैस्तत्रद्विजेंद्रैर्वल्गुवा दिभिः ॥ नादितंब्रह्मसदनंप्रवरंदेवसद्मवत् २५ तेतत्रसमनुप्राप्यशृण्वंतोवैध्वनिंसुराः ॥ पूतान्यात्मशरीराणिमेनिरेतुनसंशयः २६ तूष्णींभूताएकचि त्ताब्रह्मण्यगतमानसाः ॥ विस्मयोत्फुल्लनयनानिरीक्षंतःपरस्परम् २७ नमस्कुर्वंतिचपुनर्गुरुंलोकगुरुंप्रभुम् ॥ मनसैवसुरश्रेष्ठाःपुरस्कृत्यतुकश्यपम् २८ पुनःसंपूज्यपरमंवेदोच्चारणनिःस्वनम् ॥ गंभीरोदारमधुरंसुस्वरंहंसगद्गदम् २९ ऐक्यनानात्वसंयोगसमवायविशारदैः ॥ लोकायतिकमुख्यैश्चशुश्रुवुः स्वनमीरितम् ३० तत्रतत्रचविप्रेंद्रान्नियतान्संशितव्रतान् ॥ जपहोमपरान्मुख्यान्ददृशुःकश्यपात्मजाः ३१ तस्यांसभायामास्तेस्मब्रह्मालोकपितामहः ॥ सुरासुरगुरुःश्रीमान्विधिवद्देवमायया ३२ उपासतेचतत्रैनंप्रजानांपतयःप्रभुम् ॥ दक्षःप्रचेताःपुलहोमरीचिश्चद्विजोत्तमः ३३

स्त्रविद्भिःसहदेवाःशुश्रुवुरितिसंबंधःनचलोकायतानांदेहात्मवादिनांवेदद्रोहिणांब्रह्मलोकेगतिःसंभवतीतिशंकनीयम्अत्रलोकायतशब्दस्यतच्छास्त्राभिमानिदेवतापरत्वात् ॥ त त्रमूर्तिमतांवेदानांसामगानांशास्त्राणांचसर्वेषांसद्भावस्यकथनादित्यूह्यम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीका

भृगुरत्रिर्वसिष्ठश्चगौतमोनारदस्तथा ॥ मनुर्द्यौरंतरिक्षंचवायुस्तेजोजलंमही ३४ शब्दस्पर्शौचरूपंचरसोगंधस्तथैवच ॥ प्रकृतिश्चविकाराश्चयच्चान्यत्कारणंम
हत् ३५ सांगोपांगाश्चतुर्वेदाःसरहस्यपदक्रमाः ॥ क्रियाश्चक्रतवश्चैवसंकल्पःप्राणएवच ३६ एतेचान्येचबहवःस्वयंभुवमुपस्थिताः ॥ अर्थोधर्मश्चकामश्चद्वेषो
दर्पश्चनित्यदा ३७ शक्रोबृहस्पतिश्चैवसंवर्त्तोबुधएवच ॥ शनैश्चरोथराहुश्चग्रहाःसर्वेह्यशेषतः ३८ मरुतोविश्वकर्माचनक्षत्राणिचभारत ॥ दिवाकरश्चसोमश्चब्र
ह्माणंसमुपासते ॥ सावित्रीदुर्गतरणीवाणीसप्तविधातथा ३९ सर्वाणिश्रुतिशास्त्राणिगाथाश्चनियमास्तथा ॥ भाष्याणिसर्वशास्त्राणिदेहवंतिविशांपते ॥ क्षणा
लवामुहूर्त्ताश्चदिवारात्रिश्चभारत ४० अर्धमासाश्चमासाश्चऋतवःषट्तथैवच ॥ संवत्सराश्चतुर्युगंमासारात्रिश्चतुर्विधा ४१ कालचक्रंचयद्दिव्यमनित्यं
ध्रुवमव्ययम् ॥ एतेचान्येचबहवःस्वयंभुवमुपस्थिताः ४२ तेप्रविष्टाःसभांदिव्यांब्रह्मणःसर्वकामदाम् ॥ कश्यपस्त्रिदशैःसार्द्धंपुत्रैर्धर्मविशारदैः ४३ सर्व
तेजोमयींदिव्यांब्रह्मर्षिगणसेविताम् ॥ ब्राह्म्याश्रियादीप्यमानमचिंत्यंविगतक्लमम् ४४ ब्रह्माणंवीक्ष्यतेसर्वेआसीनंपरमासने ॥ जग्मुर्मूर्ध्नाशुभौपादौब्रह्म
णस्तेदिवौकसः ४५ शिरोभिःस्पृश्यचरणौतस्यतेपरमेष्ठिनः ॥ विमुक्ताःसर्वपापेभ्यःशांताविगतकल्मषाः ४६ दृष्ट्वातुतान्सुरान्सर्वान्कश्यपेनसहागता
न् ॥ आहब्रह्मामहातेजादेवानांप्रभुरीश्वरः ४७ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ छ ॥
॥ ब्रह्मोवाच ॥ यदर्थमिहसंप्राप्ताभवंतःसर्वएवहि ॥ विजानाम्यहमव्यग्रएतत्सर्वंमहाबलाः १ भविष्यतिचवःसोर्थःकांक्षितोयःसुरोत्तमाः ॥ बलेर्दानव
मुख्यस्ययोविजेताभविष्यति २ नखल्वसुरसंघानामेकोजेतासविश्वकृत् ॥ त्रैलोक्यस्यापिजेतासौदेवानामपिचोत्तमः ३ धाताचैवहिलोकानांविश्व
योनिःसनातनः ॥ पूर्वदेहंसदाप्राहुर्हेमगर्भनिदर्शनम् ४ आत्मादेवेनविभुनाकृतोजेयोमहात्मना ॥ बलेरसुरमुख्यस्यविश्वस्यजगतस्तथा ५ प्रभवःसहि
सर्वेषामस्माकमपिपूर्वजः ॥ अचिंत्यःसहिविश्वात्मायोगयुक्तःपरंतपः ६ तंदेवापिमहात्मानंनविदुःकोप्यसाविति ॥ वेदात्मानंचविश्वंचसदेवःपुरुषो
त्तमः ७ तस्यैवतुप्रसादेनप्रवक्ष्येहंपरांगतिम् ॥ यत्रयोगंसमास्थायतपश्चरतिदुश्चरम् ८ क्षीरोदस्योत्तरेकूलेउदीच्यांदिशिदेवताः ॥ अमृतंनामपरमंस्था
नमाहुर्मनीषिणः ॥ भवंतस्तत्रवैगत्वातपसासंशितव्रताः ९ अमृतंस्थानमासाद्यतपश्चरतदुश्चरम् ॥ तत्रश्रोष्यथविस्पष्टांस्निग्धगंभीरनिःस्वनाम् १०

यांषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ हेमगर्भनिदर्शनंहिरण्यगर्भोनिदर्शनंप्रतिमापुत्रोयस्यसतथातंममपितरमित्यर्थःवयमित्यन्वयः ॥
॥ ४ ॥ विश्वस्याजेयमित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

उष्णगेउष्णोग्रीष्मःगतोनीतोयत्रतस्मिन्नुष्णगेवर्षाकाले ॥ ११ ॥ १२ ॥ १३ ॥ अमोघःस्वोयस्यमुखेतिपाठेपिरवएवलक्ष्म ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥
॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ सुरेशायसुरेशस्य ॥ २४ ॥ २५ ॥ २६ ॥ इतिश्रीमहाभारतेहरिवंशेभाविष्यपर्वणिटीकायांसप्तषष्टितमोऽध्यायः ॥ ६७ ॥



उष्णगेतोयपूर्णस्यतोयदस्यसमस्वनाम् ॥ युक्ताक्षरपदांस्निग्धांरम्यामभयदांशिवाम् ११ वाणींपरमसंस्कारांवरदांब्रह्मवादिनीम् ॥ दिव्यांसरस्वतींसत्यां सर्वकिल्बिषनाशिनीम् १२ सर्वदेवाधिदेवस्यभाषितांभावितात्मनः ॥ तस्यव्रतसमाप्तौतुयावद्व्रतविसर्जनम् १३ अमोघस्यतुदेवस्यविश्वेदेवामहात्म नः ॥ स्वागतंवःसुरश्रेष्ठामत्सकाशेव्यवस्थिताः १४ कस्यकिंवावरंदेवाददामिवरदःस्थितः ॥ तंकश्यपोदितिश्चैववरंगृह्णीतवैततः १५ प्रणम्यशिरसा पादौतस्मैयोगात्मनेतदा ॥ भवानेवचनःपुत्रोभवत्वितिनसंशयः १६ उक्तश्चपरयाभक्त्यातथास्त्वितिसवक्ष्यति ॥ देवाश्चवंतुतंसर्वेभ्रातानस्त्वंभवेति ह १७ तथास्त्वितिचसश्रीमान्वक्ष्यतेसर्वलोककृत् १८ तस्मादेवंगृहीत्वातुवरंत्रिदशसत्तमाः ॥ कृतकृत्याःपुनःसर्वेगच्छध्वंस्वंस्वमालयम् १९ तथा स्त्वितिसुराःसर्वेकश्यपोदितिरेवच ॥ वंदित्वाब्रह्मचरणौगताःसौम्यांदिशंप्रति २० तेचिरेणैवसंप्राप्ताःक्षीरोदस्योत्तरंतटम् ॥ यथोद्दिष्टंभगवताब्रह्मणाब्र ह्मवादिना २१ तेतीत्यसागरान्सर्वान्पर्वतांश्चबहून्क्षणात् ॥ नद्यश्चविविधादिव्याःपृथिव्यांसुरसत्तमाः २२ पश्यंतिचसुघोरांवैसर्वसत्त्वविवर्जिताम् ॥ अभास्करामममर्यादांतमसासंवृतांदिशम् ॥ अमृतंस्थानमासाद्यकश्यपेनसुरैःसह २३ दीक्षिताःकामदंदिव्यंव्रतंवर्षसहस्रकम् ॥ प्रसादार्थंसुरेशायतस्मैयो गायधीमते ॥ नारायणायदेवायसहस्राक्षायधीमते २४ ब्रह्मचर्येणमौनेनस्थानवीरासनेनच ॥ दमेनचसुराःसर्वेतपोदुश्चरमास्थिताः २५ कश्यपस्तत्रभ गवान्प्रसादार्थंमहात्मनः ॥ उदीरयतिवेदोक्तंयमाहुःपरमंस्तवम् २६ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेसप्तषष्टितमोऽध्या यः ॥ ६७ ॥ ॥ ध ॥ ॥ कश्यपउवाच ॥ नमोस्तु १ देवदेवेशएकशृंग वराह वृषार्चिष ४ वृषसिंधो ५ वृषाकपे सुरवृषभ सुरनिर्मित अनिर्मितभद्रकपिल विष्वक्सेन ध्रुव धर्म धर्मराज वैकुंठ त्रेतावर्त १७ अनादिमध्यनिधन धनंजय शुचिश्रवः अग्निज २१ वृष्णिज अज अजय मृते शय सनातन विधातस्त्रिकाम त्रिधाम त्रिककुत् ३० ककुद्मिन् दुंदुभे ३२ महानाभ लोकनाभ पद्मनाभ विरिंचे वरिष्ठ बहुरूप विरूप विश्वरूपाक्ष याक्षय सत्याक्षर हंसाक्षर ४३



नमोस्तु ॥ १ ॥ वृषार्चिषधर्ममयूख ॥ ४ ॥ वृषसिंधोधर्मसागर ॥ ५ ॥ त्रेतावर्तकर्मणाश्रौतेनावर्ततेनाभिमुखोभवतीतित्रेतावर्त ॥ १७ ॥ अग्निजकार्तिकेय ॥ २१ ॥ त्रिककुत्धर्मज्ञानवैराग्यस्कंध ॥ ३० ॥ दुंदुभेविजयावहध्वने ॥ ३२ ॥ हंसाक्षर अजपामंत्र ॥ ४३ ॥

चंद्ररथ समष्टिमनोधिरूढविराडात्मन्नित्यर्थः ॥७४॥ आदौगतिः धर्मरूपः ॥९७॥ शतधारः सोमः ॥ १०५ ॥ एवंसहस्रधारः ॥ १०६॥ धात्रापरमेणयज्ञेनहेतुनाधाम्नोग्रेहें

हव्यभुक् खंडपरशो शुक्र मुंजकेशो हंस महाहंस महदक्षर हृषीकेश सूक्ष्म परसूक्ष्म तुराषाट् विश्वमूर्ते सुराग्रज नील निस्तमो विरजस्तमोरजःसत्वधाम सर्वलोकप्रतिष्ठ शिपिविष्ट सुतपस्तपोग्र अग्र अग्रज धर्मनाभ गभस्तिनाभ धर्मनेम सत्यधाम सत्याक्षर गभस्तिनेमे विपाप्मन् चंद्ररथ ७४ त्वमेवसमुद्रवासाः अजैकपात् सहस्रशीर्ष सहस्रसंमित महाशीर्ष सहस्रदृक् सहस्रपात् अधोमुख महामुख महापुरुष पुरुषोत्तम सहस्रबाहो सहस्रमूर्ते सहस्रास्य सहस्राक्ष सहस्रभुज सहस्रभुव सहस्रशस्त्वामाहुर्वेदाः विश्वेदेव विश्वसंभव सर्वेषामेवदेवानांसौभग आदौगतिः ९७ विश्वंत्वमाप्यायनः विश्वंत्वमाहुः पुष्पहास परमवरदस्त्वमेव त्वमेववौषट् ओंकारवषट्कारंत्वामेकमाहुरग्र्यं मखभागप्राशिनम् शतधार १०५ सहस्रधार १०६ भूर्द भुवर्द स्वर्द भूर्भुवःस्वर्दत्वमेवभूतं भुवनंत्वं स्वधात्वमेव ब्रम्हेशय ब्रह्ममय ब्रह्मादिस्त्वमेव द्यौरसि पृथिव्यसि पूषासि मातरिश्वासि धर्मोसि मघवासि होता पोता नेता हंता मंता होम्यहोतापरात्परस्त्वम् होम्यहोतात्वमेव आपासिविश्ववाक् धात्रा परमेणधाम्नात्वमेवदिग्भ्यःस्रुक् १३२ स्रुग्भांड १३३ त्वंगण इष्टोसि इज्योसि ईड्योसि त्वष्टात्वमसि समिद्धस्त्वमेवगतिर्गतिमतामसि मोक्षोसियोगोसि गुह्योसि सिद्धोसि धन्योसि धातासि परमोसि यज्ञोसि सोमोसि यूपोसि दक्षिणासि दीक्षासि विश्वमसि स्थविष्ठ स्थविर विश्व तुराषाट् हिरण्यगर्भ हिरण्यनाभ हिरण्यनारायण नारायणांतर नृणामयन आदित्यवर्ण आदित्यतेजः महापुरुष सुरोत्तम आदिदेव पद्मनाभ पद्मेशय पद्माक्ष पद्मगर्भ हिरण्याग्रकेश शुक्लविश्वदेव विश्वतोमुख विश्वाक्ष विश्वसंभव विश्वभुक्त्वमेव भूरिविक्रम चक्रक्रम त्रिभुवन सुविक्रम स्वर्विक्रम बभ्रु सुविभुः प्रभाकर शंभुः स्वयंभूश्च भूतादिः भूतात्मन् महाभूत विश्वभुक्त्वमेव विश्वगोप्तासि विश्वंभर पवित्रमसि हविर्विशारद हविःकर्मा अमृतेंधन सुरासुरगुरो महादिदेव नृदेव उर्ध्वकर्मन् २०२ पूतात्मन् अमृतेश दिवस्पृक् विश्वस्यपते घृताच्यसि २०७ अनंतकर्मन् २०८ द्रुघ्नवंश स्ववंश विश्वपास्त्वं त्वमेवविश्वंबिभर्षि वरार्थिनोनस्त्रायस्वेति २१३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशे भविष्यपर्वणिवामनप्रादुर्भावेअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ नारायणस्तुभगवांश्चक्रुस्त्वेतत्परमंस्तवम् ॥ ब्रह्मज्ञेनद्विजेंद्रेणकश्यपेनसमीरितम् १

तोर्दिग्भ्यःसमाहृतास्रुक्त्वमेव ॥ १३२ ॥ स्रुक्भांडःस्रुगादिर्यज्ञोपस्करः ॥ १३३ ॥ उर्ध्वकर्मन्उर्ध्वगतिप्रदानिकर्माणियस्य ॥ २०२ ॥ घृताचीजुहूर्यभृत्ध्रुवाच ॥ ॥ २०७ ॥ द्रुघ्नवृक्षवत्घनदेह ॥ २०८ ॥ २१३ ॥ ॥ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥ ॥ १ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ इति

स्निग्धगंभीरनिर्घोषजीमूतस्वननिःस्वनम् ॥ मनसाप्रीतियुक्तेनविबुधानांमहात्मनाम् २ उवाचवचनंसम्यग्हृष्टपुष्टपदाक्षरम् ॥ आकाशाच्छुश्रुवेशब्दो
१० दर्शनंनोपलभ्यते श्रीमान्प्रीतमनादेवःप्रोवाचप्रभुरीश्वरः ३ विष्णुरुवाच ॥ प्रीतोस्मिवःसुरश्रेष्ठाःसर्वेमत्तोविनिश्चयम् ॥ वरंवृणुतभद्रंवोवरदोस्मिसुरो अ०६९
त्तमाः ४ कश्यपउवाच ॥ यदेवभगवान्प्रीतःसर्वेषाममरोत्तमः ॥ तदेवकृतकृत्याःस्मत्वंहिनःपरमागतिः ५ यदिप्रसन्नोभगवान्दातव्योवावरोयदि ॥
वासवस्यानुजोभ्राताज्ञातीनांनंदिवर्द्धनः ६ अदित्यांवामनःश्रीमान्भगवानस्तुवैसुरः ॥ वैशंपायनउवाच ॥ अदितिर्देवमाताचएतमेवार्थमुत्तमम् ॥
पुत्रार्थेवरदंप्राहभगवंतंवरार्थिनी ७ ॥ अदितिरुवाच ॥ याचेत्वांपुत्रकामावैभवान्पुत्रोभवत्विति ॥ निःश्रेयसायसर्वेषांदेवानांहिमहात्मनाम् ८
॥ देवाऊचुः ॥ भ्राताभर्ताचदाताचशरणंचभवस्वनः ॥ अदित्याःपुत्रतांयातेत्वयिदेवाःसवासवाः ॥ देवशब्दंवहिष्यंतिकश्यपस्यात्मजोभव ९ ॥ वैशं
पायनउवाच ॥ ततस्तानब्रवीद्विष्णुर्देवान्कश्यपमेवच ॥ एवंभवतुभद्रंवोयथेष्टंकाममाप्नुत ॥ सर्वेषामेवयुष्माकंयेभविष्यंतिशत्रवः १० मुहूर्तमपितेस
र्वेनस्थास्यंतिममाग्रतः ॥ हत्वासुरगणान्त्सर्वान्येचान्येदेवशत्रवः ११ करिष्येदेवताःसर्वायज्ञभागाग्रभोजिनः ॥ हव्यादांश्चसुरान्त्सर्वान्क्रव्यादांश्चपितॄन
पि १२ करिष्येविबुधश्रेष्ठाःपारमेष्ठ्येनकर्मणा ॥ यथागतेनमार्गेणनिवर्त्तध्वंसुरोत्तमाः १३ देवमातुस्तथादित्याःकश्यपस्यामितात्मनः ॥ यथामनीषि
तंकर्तागच्छध्वंस्वंस्वमालयम् १४ ॥ वैशंपायनउवाच ॥ एवमुक्तेतुवचनेविष्णुनाप्रभविष्णुना ॥ देवाःप्रहृष्टमनसःपूजयंतिस्मसर्वशः १५ विश्वेदे
वामहात्मानःकश्यपोदितिरेवच ॥ साध्यामरुद्गणाश्चैवशक्रश्चैवमहाबलः ॥ नमस्कृत्यसुरेशायतस्मैदेवायरंहसे १६ प्रयाताःप्राग्दिशंदिव्यंविपुलंकश्यपा
श्रमम् ॥ गत्वातआश्रमंतत्रब्रह्मर्षिगणसेवितम् ॥ चेरुःस्वाध्ययनियताअदित्यागर्भमीप्सवः १७ अदितिर्देवमाताचगर्भंदध्रेतितेजसम् ॥ भूतात्मानंमहात्मा
नंदिव्यंवर्षसहस्रकम् १८ पूर्णेवर्षसहस्रेतुप्रसूतागर्भमुत्तमम् ॥ सुराणांशरणंदेवमसुराणांविनाशनम् १९ गर्भस्थेनतुदेवेनपरित्राताःसुरास्तदा ॥ आद
दानेनतेजांसित्रैलोक्यस्यमहात्मना २० तस्मिन्जातेतुदेवेशेत्रैलोक्यस्यसुखावहे ॥ भयदेदैत्यसंघानांसुराणांनंदिवर्द्धने २१ ॥ इतिश्रीमहाभारतेखि
लेषुहरिवंशेभविष्यपर्वणिवामनप्रादुर्भावेएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ प्रजानांपतयःसप्तसप्तचैवमहर्षयः ॥ १०
तस्यदेवस्यजातस्यनमस्कारंप्रचक्रिरे १

श्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ छ ॥ ॥ प्रजानांसप्तमरीच्यादयः ॥ १ ॥

भास्करत्वकर्त्तात्रिरप्याजगामेत्याह यश्चेति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

भारद्वाजःकश्यपोगौतमश्चविश्वामित्रोजमदग्निर्वसिष्ठः ॥ यश्चोदितोभास्करेसंप्रणष्टेसोप्यत्रात्रिर्भगवानाजगाम २ मरीचिरंगिराश्चैवपुलस्त्यःपुलहःक्रतुः ॥ दक्षप्रजापतिश्चैवनमस्कारंप्रचक्रिरे ३ और्वोवसिष्ठपुत्रश्चस्तंबःकाश्यपएवच ॥ कपीवानकपीवांश्चदत्तोनिश्च्यवनस्तथा ४ वसिष्ठपुत्राःसप्तासन्वासिष्ठाइतिविश्रुताः ॥ हिरण्यगर्भस्यसुतापूर्वजाताःसुतेजसः ५ गार्ग्यःपृथुस्तथैवान्योजन्योवामनएवच ॥ देवबाहुर्यदुध्रश्चपर्जन्यश्चैवसोमजः ६ हिरण्यरोमावेदशिराःसप्तनेत्रस्तथैवच ॥ विश्वोतिविश्वश्च्यवनःसुधामाविरजास्तथा ७ अतिनामास्महिष्णुश्चनमस्कारमकुर्वत ॥ उद्योतमानावपुषासर्वाभरणभूषिताः ८ उपनृत्यंतिदेवेशंविष्णुमप्सरसांवराः ॥ ततोगंधर्वतूर्येषुप्रणदत्सुविहायसि ९ बहुभिःसहगंधर्वैःप्रगायतचतुंबुरुः ॥ महाश्रुतिश्चित्रशिराऊर्णायुरनघस्तथा १० गोमायुःसूर्यवर्चाश्चसोमवर्चाश्चसप्तमः ॥ युगपस्तृणयःकार्ष्णिर्नंदिश्चत्रिशिरास्तथा ११ त्रयोदशःशालिशिराःपर्जन्यश्चचतुर्दशः ॥ कलिःपंचदशश्चात्रतत्रैवतुमहीपते १२ दशपंचत्विमेप्रोक्तानारदश्चैवषोडशः ॥ हाहाहूहूश्चगंधर्वौहंसश्चैवमहाद्युतिः १३ सर्वेतेदेवगंधर्वाउपगायंतिकेशवम् ॥ तथैवाप्सरसोहृष्टाःसर्वालंकारभूषिताः १४ वपुष्मंतःसुजघनाःसर्वांगशुभदर्शनाः ॥ ननृतुश्चमहाभागाजगुश्चायतलोचनाः १५ सुमध्याश्चारुमध्याश्चप्रियमुख्यावराननाः ॥ अनूकाथतथाजामीमिश्रकेशीत्वलंबुषा १६ मरीचिशुचिकाश्चैवविद्युत्पूर्णातिलोत्तमा ॥ अद्रिकालक्षणाचैवरंभातद्वन्मनोरमा १७ असिताचसुबाहुश्चसुप्रियासुभगातथा ॥ उर्वशीचित्रलेखाचसुग्रीवाचसुलोचना १८ पुंडरीकासुगंधाचसुरथाचप्रमाथिनी ॥ नंदाशारद्वतीचैवतथान्यास्तत्रसंवशः १९ मेनकासहजन्याचपर्णिकापुंजिकस्थला ॥ एताश्चाप्सरसोन्याश्चप्रनृत्यंतिसहस्रशः २० धातार्यमाचमित्रश्चवरुणोंशोभगस्तथा ॥ इंद्रोविवस्वान्पूषाचत्वष्टाचसवितातथा २१ कथितोविष्णुरित्येवंकाश्यपेयोगणस्तथा ॥ इत्येतेद्वादशादित्याज्वलंतःसूर्यवर्चसः २२ चक्रुस्तस्यसुरेशस्यनमस्कारंमहात्मनः ॥ मृगव्याधश्चसर्पश्चनिर्ऋतिश्चमहाबलः २३ अजैकपादहिर्बुध्न्यःपिनाकीचापराजितः ॥ दहनोथेश्वरश्चैवकपालीचविशांपते २४ स्थाणुर्भगश्चभगवान्रुद्रास्तत्रावतस्थिरे ॥ अश्विनौवसवश्चाष्टौमरुतश्चमहाबलाः २५ विश्वेदेवाश्चसाध्याश्चतस्यप्रांजलयःस्थिताः ॥ शेषानुजामहाभागावासुकिप्रमुखास्तथा २६ कच्छपश्चापहर्त्ताचतक्षकश्चमहाबलः ॥ अधृष्टास्तेजसायुक्तामहाक्रोधामहाबलाः २७ एतेनागामहात्मानस्तस्मैप्रांजलयःस्थिताः ॥ तार्क्ष्यश्चारिष्टनेमिश्चगरुडश्चमहाबलः २८

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

॥ ८८ ॥ ८९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायामशीतितमोऽध्यायः ॥ ८० ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥
॥ १० ॥ आत्मनिहृदयपंकजे ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभवि

विकल्परहितंचित्तंहृदिमध्येन्यवेशयत् ॥ पुंडरीकेशुभदलेसमावेश्यजगत्पतिम् ८८ आस्तेसुखंमहायोगीपिशिताशस्तदामहान् ॥ त्रिधामानंजपंस्त
त्रस्मरन्विष्णुंसनातनम् ८९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांघंटाकर्णचित्तसमाधिर्नामाशीतितमोध्यायः ८० वैशं
पायनउवाच ॥ ततःसभगवान्विष्णुःपिशाचंदृष्टवांस्तदा ॥ चिंतयंतंस्वमात्मानंशुद्धिबुद्धिसमन्वितम् १ आत्मन्यवस्थितंसाक्षात्पठंतंप्रणवंसकृत् ॥
प्रार्थयंतंस्वमात्मानमेकांतेनियतंहरिः २ अचिंतयज्जगन्नाथःकारणंपुण्यसंचये ॥ ध्यात्वातुसुचिरंविष्णुःकारणंपुण्यकर्मणः ३ धनदस्योपदेशेनपठन्सु
बहुशःक्षितौ ॥ वासुदेवेतिकृष्णेतिमाधवेतिचमांसदा ४ जनार्दनहरेविष्णोभूतभावनभावन ॥ नराकारजगन्नाथनारायणपरायण ५ इतिमांनामभिर्नि
त्यंपठत्येवदिवानिशम् ॥ स्वपन्जाग्रंस्तथातिष्ठन्भुंजन्गच्छंस्तथावदन् ६ भक्षयन्मांसपिटकंपिबञ्छोणितमेववा ॥ बाधमानंचसुचिरंहत्वाचापिमृगा
न्बहून् ७ हननेभोजनेचैवजाग्रत्स्वप्नेतथैवच ॥ सर्वेष्वपिचकार्येषुकर्ताहमितिमन्यते ८ एतस्यकर्मणःपाकएषघोरस्यकर्मणः ॥ निश्चित्यैवंजगन्नाथःप्रीत
स्तस्यबभूवह ९ अदर्शयत्स्वमात्मानमनन्यस्यजगत्पतिः ॥ शुद्धांतःकरणेतस्यपिशाचस्यापिभूमिप १० सचघोरःपिशाचोपिददर्शात्मनिकेशवम् ॥
पीतकौशेयवसनंपद्माक्षंश्यामलंहरिम् ११ शंखिनंचक्रिणंविष्णुंस्रग्विणंगदिनंविभुम् ॥ किरीटिनंकौस्तुभिनंश्रीवत्साच्छादितोरसम् १२ नील
मेघनिभंकांतंगरुडस्थंप्रभंजनम् ॥ चतुर्भुजंशुभगिरंनिश्चलंसर्वगांशिवम् १३ अनादिनिधनंनित्यंमायाविनममायिनम् ॥ सत्ययुक्तंसदाशुद्धंबुद्धिग
म्यंसदामलम् १४ मनस्येवंजगन्नाथंदृष्ट्वाविष्णुमनेकधा ॥ अनुमील्यैवनयनेकृतार्थोस्मीत्यमन्यत १५ अथदृष्टोहरिर्विष्णुःसाक्षात्सर्वत्रगःशुभः ॥
प्रसन्नोहिहरिर्मह्यंतेनाहंदृष्टवान्हरिम् १६ सिद्धंमेजन्मनःकृत्यंकिमतःकृत्यमस्तिमे ॥ ग्रंथयोममनिर्भिन्नावश्यान्येवेंद्रियाणिमे १७ प्रायेणजितमि
त्येवमनोमन्येस्मृतेहरौ ॥ ईषणाचनिरस्तामेप्रसन्नोहंतथाभवम् १८ एतेभ्योपिपिशाचेभ्योनिर्मुक्तःसांप्रतंतथा ॥ योसौममानुजःसाक्षात्सचभक्तस्तथा
हरौ १९ कालेनचैवनिर्मुक्तोविष्णोःसायुज्यमाप्नुयात् ॥ इत्येवंचिंतयित्वासआंत्रपाशंविभिद्यच २० क्रमेणप्राणानुन्मुच्यविलोक्यचदिशस्तथा ॥
शरीरंसुगमंकृत्वाप्राविशत्ससुखेनह २१ इतिमा०खिलेषुह०भविष्यपर्वणिकैलासयात्रायांपिशाचस्यविष्णुसाक्षात्कारोनामएकाशीतितमोऽध्यायः ८१

ष्यपर्वणिटीकायामेकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ छ ॥

१०२ वैशंपायनउवाच ॥ पिशिताशोजगन्नाथंददर्शाथजगद्गुरुम् ॥ समाधौचयथादृष्टंभूमौचापितथाहरिम् १ अयंविष्णुरयंविष्णुरित्यूचेपिशिताशनः ॥ समा अ०८२
धौचयथादृष्टःसोयमत्रापिदृश्यते ॥ इत्युवाचपुनर्भूतेनृत्यन्निवहसन्निव २ अयंसचक्रीशरशार्ङ्गधन्वागदीरथीसध्वजतूणपाणिः ॥ सहस्रमूर्द्धासकलाम
रेशोजगत्प्रसूतिर्जगतांनिवासः ३ विष्णुर्जिष्णुर्जगन्नाथःपुराणःपुरुषोत्तमः ॥ विश्वात्माविश्वकर्तायःसोयमेषसनातनः ४ अस्यैवदेवस्यहरेस्तनांतरे
विराजतेकौस्तुभरत्नदीपः ॥ यस्यप्रसादाज्जगदेतदादौविराजतेचंद्रमसेवरात्रिः ५ योसौपृथ्वींदधाराशुदंष्ट्रयाजलसंचयात् ॥ योयमेवहरिःसाक्षाद्वाराहं
वपुरास्थितः ६ बद्ध्वातथादानवमुग्रपौरुषंददौचशक्रायततोनुराज्यम् ॥ बलिंबलादेषहरिःसवामनःस्तुतश्चभक्त्यामुनिभिःपुरातनैः ७ दंष्ट्राकरालःसु
महान्हत्वायोदानवान्रणे ॥ निःशोकमखिलंलोकंचकारासौजनार्दनः ८ आदौदधारैकभुजेनमंदरंनिर्जित्यसर्वानसुरान्महार्णवे ॥ ददौचशक्रायसुधा
मयंमहान्सएषसाक्षादिहमामवस्थितः ९ यःशेतेजलधौनागेदेव्यालक्ष्म्यासुखावहे ॥ हत्वातौदानवौघोरौमधुकैटभसंज्ञितौ १० यमाहुराद्यंविबुधा
जगत्पतिंसर्वस्यधातारमजंजनित्रम् ॥ अणोरणीयांसमतिप्रमाणंस्थूलात्स्थविष्ठंहरिमेवविष्णुम् ११ यत्रस्थितमिदंसर्वंप्राप्तेलोकस्यनाशने ॥ आदौ
यस्मात्समुत्पन्नंसोयंविष्णुरितिस्थितः १२ यस्येच्छयासर्वमिदंप्रवृत्तंप्रवर्ततेचापिजनार्दनस्य ॥ अयंसविष्णुःपुरुषोत्तमःशिवःप्रवर्त्ततेमामिहयादवेश्वरः
१३ भृगोर्वंशेसमुत्पन्नोजामदग्न्यइतिश्रुतः ॥ शिष्यत्वंसमवाप्यैवमृगव्याधस्ययःस्थितः १४ जघानवीर्याद्बलिनंमहारणेकुठारशस्त्रेणगिरीशशिष्यः ॥
सहस्रबाहुंकृतवीर्यसंभवंहयैर्गजैश्चैवरथैश्चनिर्गतम् १५ कुरुक्षेत्रंसमासाद्ययश्चकारपितृक्रियाम् ॥ निःक्षत्रियमिमंलोकंकृतवानेकविंशतिम् १६ रघो
रथकुलेजातोरामोनामजनार्दनः ॥ सीतयाचश्रियायुक्तोलक्ष्मणानुचरःकृती १७ कृत्वाचसेतुंजलधौजनार्दनोहत्वाचरक्षःपतिमाशुगैःशरैः ॥ दत्त्वाचराज्यं
सविभीषणायदशाश्वमेधैरजयच्चयोसौ १८ वसुदेवकुलेजातोवासुदेवेतिशब्दितः ॥ गोकुलेक्रीडतेयोसौसंकर्षणसहायवान् १९ उत्तानशायीशिशुरूपधा
रीपीत्वास्तनंपूतनिकाप्रदत्तम् ॥ व्यसुंचकाराशुजनार्दनस्तदादनोःसुतांतामवसत्सुखंहरिः २० पयःपानंतथाकुर्वन्भक्षयन्दधिपिंडकम् ॥ दाम्नाबद्धोदरो
विष्णुर्मात्रारुषितयादृढम् २१ ततश्चदाम्नासुदृढेनबद्धोजघानयोसौयमलार्जुनौच ॥ क्रीडन्हरिर्गोकुलवासवासीगोपीभिरास्वाद्यमुखंस्तनंच २२ वृंदावने १०२
वसन्विष्णुर्गोपैर्गोकुलवासिभिः ॥ तत्रहत्वाहयंराजन्विरराजांशुमानिव २३

फणावाक्रम्येतिशेषः फणाद्वयोरित्यमरः पुंसिद्विवचनमिदम् ॥ २४ ॥ २५ ॥ गोधरंशैलम् ॥ २६ ॥ स्तनमध्येहृदये ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ दामानिपुष्प मालाः माल्यकृतेमालाकाराय ॥ ३१ ॥ ३२ ॥ गजंकुवलयापीडंविषाणंदंतम् ॥ ३३ ॥ ३४ ॥ यादवनामधेयंनतुयादवंद्रुमिलत्वात् ॥ ३५ ॥ पुत्रंनष्टमितिशेषः॥३६॥

यःक्रीडतेनागफणौजनार्दनोनिषेव्यमाणःसहगोपदारकैः ॥ महाह्रदेनागपतिंजगत्पतिर्ममर्दवीर्यातिशयंप्रदर्शयन् २४ योधेनुकंतालवनेतत्फलैःसमम च्छिनत् ॥ हत्वादानवमुग्रंतंगोपान्विस्मापयत्यसौ २५ दधारयोगोधरमुग्रपौरुषान्महामतिर्मेवसमागमेसति ॥ त्रिडंबयञ्छक्रबलंप्रमोदयन्गोपांश्चगोपीं श्चसगोकुलंहरिः २६ गोपीनांस्तनमध्येतुक्रीडतेकाममीश्वरः ॥ योसौपिबंस्तदधरंमायामानुषदेहवान् २७ गोपीभिरास्वाद्यमुखंविविक्तेशेतेस्मरात्रौ सुखमेवकेशवः ॥ स्तनांतरेष्वेवतदाचतासांकामीचकांताधरपल्लवंपिबन् २८ अक्रूरेणसमाहूतस्तेनगच्छन्हियामुने ॥ जलेयोह्यर्चितस्तेननागलोकेसएव हि २९ ततश्चगच्छन्बलवान्जनार्दनोहत्वातमुग्रंरजकंबलात्पथि ॥ हृत्वाचवस्त्राणियथेष्टमीश्वरोययौसरामोमथुरांपुरींहरिः ३० लब्ध्वाचदामानिबहूनि कामदोदत्वावरंमाल्यकृतेमहांतम् ॥ लब्ध्वानुलेपंसुरभिंचयादवःकुब्जांचकाराशुमहार्हरूपाम् ३१ योसौचापंसमादायमध्येच्छित्वामहद्धनुः ॥ सिंह नादंमहांश्चक्रेकल्पांतेजलदोयथा ३२ हत्वागजंघोरमुदग्ररूपंविषाणमादायततोनुकेशवः ॥ ननर्तरंगेबहुरूपमीश्वरःकंसस्यदत्वाभयमुग्रवीर्यः ३३ योसौ हत्वामहामल्लंचाणूरंनिहतद्विषम् ॥ यादवेभ्योददौप्रीतिंकंसस्यैवतुपश्यतः ३४ जघानकंसंरिपुपक्षघातिनंपितृद्विषंयादवनामधेयम् ॥ संस्थाप्यराज्येह रिरुग्रसेनंसांदीपिनंकाश्यमुपागतोयः ३५ विद्यामवाप्यसकलांदत्वापुत्रंमहामुनेः ॥ साग्रजोथजगामाशुमथुरांयादवींपुरीम् ३६ हत्वानिशुंभंनरकंमहाम तिःकृत्वासुघोरंकदनंजनार्दनः ॥ ररक्षविप्रान्मुनिवीरसंघान्देवांश्चसर्वान्जगतोजगत्पतिः ३७ सएषभगवान्विष्णुरद्यदृष्टोजनार्दनः ॥ कृतकृत्योस्मिसंजा तःसायुज्यंप्राप्तवानहम् ३८ येनदृष्टोहरिःसाक्षात्तस्यमुक्तिःकरेस्थिता ॥ सोयमेषहरिःसाक्षात्प्रत्यक्षमिहवर्तते ३९ नूनंजन्मांतरेपूर्वेधर्मःसंचितएवमे ॥ य स्यपाकःसमुत्पन्नोयेनासौदृश्यतेमया ४० सर्वथापुण्यवानस्मिनष्टसंसारबंधनः ॥ किमस्मैदीयतेवस्तुकिंनुवक्ष्यामिसांप्रतम् ॥ करिष्येकिमहंविष्णोवद स्वाद्ययथेप्सितम् ४१ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाविस्तरंनादंननर्दबहुशस्तदा ॥ जहासविकृतंभूयोननर्तपिशिताशनः ४२ नमोनमोहरेकृष्णया दवेश्वरकेशव ॥ प्रत्यक्षंचहरेस्तत्रननर्तविविधंनृप ४३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांघंटाकर्णस्तुतिर्नामद्व्यशी तितमोऽध्यायः ८२ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ विहस्यविकृतंभूयःप्रनृत्यचयथाबलम् ॥ ब्राह्मणस्यहतस्याथशवमादायसत्वरः १

॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ केशवेत्यंतंपठन् ॥ ४३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ १ ॥

॥ २ ॥३॥ गृहाणेतियोग्यंयदन्नःपुरुषोभवतितदन्नास्तस्यदेवताइतिश्रुतेरित्याशयः ॥ ४ ॥ ५ ॥६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ करणंअंतः



द्विधाकृत्यमहाघोरंपिशितंकेशशाड्वलम् ॥ ततःखंडंसमादायअद्भिरभ्युक्ष्ययत्नतः २ विधायपात्रेसुशुभेनमस्कृत्यजनार्दनम् ॥ इदंप्रोवाचदेवेशंप्रांजलिः प्रणतःस्थितः ३ गृहाणमेजगन्नाथभक्ष्यंयोग्यंतवप्रभो ॥ भवादृशैर्जगन्नाथग्राह्यंसर्वात्मनाहरे ४ भक्तिनम्रावयंविष्णोनात्रकार्याविचारणा ॥ दत्तंयद्भक्तिनम्रेणग्राह्यंतत्स्वामिनाहरे ५ नवंसुसंस्कृतंभक्ष्यंब्राह्मणंशवमुत्तमम् ॥ अस्माकंपिशिताशानांशास्त्रेनियतमेवहि ६ तस्माद्गृहाणभगवन्यदिदोषोनविद्यते ॥ इत्युक्त्वाविकृतंभूयोविहस्यसतुकामतः ७ दातुमैच्छत्तदाखंडमस्पृश्यंतुशवस्यह ॥ ततःप्रीतोभवत्तस्मैमनसापूजयन्व्रतम् ८ अहोस्यस्नेहकारुण्यंमयिसर्वत्रवर्त्तते ॥ इतिसंचिंत्यमनसाप्रोवाचयदुपुंगवः ९ अलमेतेनसर्वत्रपिशाचपिशिताशन ॥ अस्पृश्यंमादृशैरेतद्ब्राह्मणंशवमुत्तमम् १० ब्राह्मणःसर्वथापूज्योजंतुभिर्धर्मकांक्षिभिः ॥ पिशाचाघोरकर्माणोयतंतेब्रह्महिंसने ११ नहंतव्याःसदाविप्रास्तद्धिंसानरकावहा ॥ तस्मादस्पृश्यमस्माभिर्नात्रकार्याविचारणा १२ भक्त्याप्रीतोस्मिभद्रंतेमनोनिर्मलतामया ॥ मनःशुद्धिंयदायत्नंततःप्रीतोस्मिमांसप १३ अस्मात्संकीर्त्तनाच्छश्वद्बुद्धंहिकरणंतव अतीवमनसाप्रीतइत्युक्त्वाभगवान्हरिः १५ पस्पर्शांगंतदाविष्णुःपिशाचस्याथसर्वतः ॥ करेणमृदुनादेवःपापान्निर्मोचयद्धरिः १५ ततस्तस्याभवद्रूपंकामरूपसमप्रभम् ॥ दीर्घकुंचितकेशाढ्योदीर्घबाहुःसुलोचनः १६ समांगुलिःसमनखःसमवक्त्रःसमुन्नसः ॥ पद्माक्षःपद्मवर्णाभःपद्मकेसरभूषणः १७ केयूरीचांगदीचैवकौशेयवसनस्तदा ॥ ज्ञानवान्सत्वसंपन्नःसाक्षादिंद्रइवापरः १८ गंधर्वइवगायंस्तुसिद्धःसिद्धइवस्वयम् ॥ साक्षात्स्पृष्टंतदाविष्णोःकरेणमृदुपूर्वकम् १९ ननूनंतादृशंरूपमासीत्कालांतरेष्वपि ॥ अद्यापिनैवमुनयोलभंतेतादृशंवपुः २० कृत्वासुबहुशोघोरंतपःपरमदारुणम् ॥ यच्चलब्धंतदातेनपिशाचेननृपोत्तम २१ कोनुनामजगन्नाथमाश्रितःसीदतेनृप ॥ सहिसर्वत्रकल्याणोयोहिनित्यंजनार्दनम् २२ ध्यायन्पठन्जपन्वापितस्यकिंनास्तिभूपते ॥ ततःप्रोवाचभगवान्स्थितंकाममिवापरम् २३ अक्षयःसर्ववासस्तेयावदिंद्रोवसिष्यति ॥ तावत्स्वर्गीभवानस्तुशासनान्ममनान्यतः २४ नष्टेशक्रेततःस्वर्गात्सायुज्यंममगच्छतु ॥ योयंभ्रातातवस्वर्गीयावदिंद्रोभवेत्तदा २५ वरंवरयभद्रंतेयस्तेमनसिवर्त्तते ॥ दातास्मिसर्वंसर्वत्रनात्रकार्याविचारणा २६ ॥ ॥ घंटाकर्णउवाच ॥ ॥ यश्चेमंसंगमंदेवसंस्मरन्नियतात्मवान् ॥ भक्तिस्तस्याचलादेवत्वयिभूयाज्जनार्दन २७ मनःशुद्धिर्भवेत्तस्यमाभूत्कलुषताहरे ॥ कालुष्यंमनसस्तस्यमाभूदेषवरोमम २८ एवमस्त्वितिदेवेशःस्वर्गंगच्छेतिकेशवः ॥ इंद्रातिथिर्भवानस्तुत्वांप्रतीक्ष्यहरिःस्थितः २९

करणम् ॥१४॥१५॥१६॥ पद्माक्षः संनिमेषदृष्टिःपिशाचानांप्राकृतदभावात् ॥१७॥१८॥१९॥२०॥ २१ ॥ २२ ॥ २३ ॥२४॥२५॥ २६ ॥२७॥ २८ ॥ २९ ॥

इत्युक्त्वाभगवान्कृष्णउत्थाप्यब्राह्मणंतदा ॥ तेनस्तुतोजगन्नाथःपूजयित्वाचतंद्विजम् ३० ततोविसृज्यगोविंदस्तस्माद्देशादुपागमत् ॥ यत्रतेमुनयः
सिद्धाअग्निहोत्रसमन्विताः ३१ सचस्वर्गीततःस्वर्गमाज्ञयाकेशवस्यह ॥ तस्मात्पठसदाराजन्मनःशुद्धिंयदीच्छसि ॥ मनश्चशुद्धंभवतिपठतस्तेजगत्पते
३२ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिघंटाकर्णमुक्तिप्रदानंनामत्र्यशीतितमोऽध्यायः ८३ ॥ ॥ वैशंपायनउवाच ॥ ततःसभगवान्विष्णु
र्मुनिभ्यस्तत्वमादितः ॥ कथयामासयद्वृत्तंपिशाचस्यमहात्मनः १ तच्छ्रुत्वामुनयःसर्वेविस्मयंपरमंगताः ॥ अहोस्यकर्मणःपाकस्तवसंदर्शनादिति २
अर्चितोमुनिभिःसर्वैःप्रीतःप्रीतिमतांप्रियः ॥ ततःप्रभातेविमलेसूर्येचाभ्युदितेसति ३ आरुह्यगरुडंविष्णुर्ययौकैलासमुत्तमम् ॥ भवद्भिस्तत्रगंतव्यमित्यु
क्त्वामुनिसत्तमान् ४ यत्रविश्वेश्वराःसिद्धास्तपस्यंतियतव्रताः ॥ यत्रवैश्रवणःसाक्षादुपास्तेशंकरंसदा ५ यत्रतन्मानसंनामसरोहंसालयंमहत् ॥
यत्रभृंगीरिटिर्देवमुपास्तेशंकरंशिवम् ६ गाणपत्यमवाप्याथहरपार्श्वचरःसदा ॥ यत्रसिंहावराहाश्वद्विपद्वीपिमृगैःसह ७ क्रीडंतिवन्यरतयःपरस्परहि
तेरताः ॥ यत्रनद्यःसमुत्पन्नागंगाद्याःसागरंगमाः ८ यत्रविश्वेश्वरःशंभुरच्छिनद्ब्रह्मणःशिरः ॥ यत्रोत्पन्नामहावेत्राभूतानांदंडतांययुः ९ उमयायत्रस
हितःशंकरोनीललोहितः ॥ ऋषिभिःप्रार्थितःपूर्वंददौयत्रागिरिःसुताम् १० शंकरायजगद्धात्रेशिवायजगतीपते ॥ यत्रलेभेहरिश्चक्रमुपास्यबहुभिर्दिनैः
११ पुष्करैःशतपत्रैश्चनेत्रेणचजगत्पतिम् ॥ गुहांयत्रसमाश्रित्यक्रीडंतेसिद्धकिन्नराः १२ प्रियाभिःसहमोदंतेपिबंतेमधुचोत्तमम् ॥ यमुद्धृत्यभुजैः
सर्वैःपौलस्त्योविररामह १३ तमारुह्यमहाशैलंदेवकीनंदनोहरिः ॥ मानसस्योत्तरंतीरंजगामयदुनंदनः १४ तपश्चर्तुंकिलहरिर्विष्णुःसर्वेश्वरःशिवः ॥ जटी
चीरीजगन्नाथोमानुषंवपुरास्थितः १५ तपसेधृतचित्तस्तुशुचौभूमावुपाविशत् ॥ अवरुह्यततोयानाद्गरुडाद्देदसंमितात् १६ द्वादशाब्दंतपश्चर्तुंमनोदध्रे
ततोहरिः ॥ फाल्गुनेनतुमासेनसमारेभेजगत्पतिः ॥ १७ शाकभक्षःकृतजपोवेदाध्ययनतत्परः ॥ किमुद्दिश्यजगन्नाथस्तपश्चरतिमानवः १८ तंनविद्मोय
थाकामंदुर्ज्ञेयेश्वरचिंतना ॥ तपस्यतितदाविष्णौपर्वतेभूतसेविते १९ गरुडःकश्यपसुतइंधनानिसमाचिनोत् ॥ होमार्थंवासुदेवस्यचरतस्तपउत्तमम् २०
चक्रराजोथपुष्पाणिसंचिनोतितदाहरेः ॥ दिक्षुसर्वासुसर्वत्ररक्षजलदस्तदा २१ खड्गआहृत्ययत्नेनकुशान्सुबहुशस्तदा ॥ गदाकौमोदकीचैवपरिचर्यांच
कारह २२ धनुःप्रवरमत्युग्रंशार्ङ्गंदानवभीषणम् ॥ स्थितंहिपुरतस्तस्ययथेष्टंभृत्यवत्स्वयम् २३

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांचतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥

१०४ जुहोतिभगवान्विष्णुरेधोभिर्बहुभिःसदा ॥ आज्यादिभिस्तदाहव्यैरग्निंसंपूज्यमाधवः २४ सप्तार्चिषःसमाप्तिंचसमस्तव्यस्ततःकृती ॥ एकस्मिन्नेकदामासे
भुंजानोनियतात्मवान् २५ द्वितीयेत्वथपर्यायेभुंजन्नेकेनकेशवः ॥ एकस्मिन्वत्सरेभुंजंस्तथैवैकेनकेनचित् २६ समाप्यतत्तपःसर्वमेवमेवजगत्पतिः ॥ द्वाद अ०८५
शाब्देतथापूर्णेऊनमासेजगत्पतिः २७ जुह्वन्नग्निंसमास्थायपठन्मंत्रंजनार्दनः ॥ आरण्यकंपठन्विष्णुःसाक्षात्सर्वेश्वरोहरिः ॥ आस्तेध्यानपरस्तत्रपठन्प्रणव
मुत्तमम् २८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांकृष्णतपोवर्णनंनामचतुरशीतितमोऽध्यायः ॥ ८४ ॥ वैशंपायनउवाच ॥
ततइंद्रःस्वयंतत्रआरुह्यगजमुत्तमम् ॥ द्रष्टुंसर्वेश्वरंविष्णुंतपस्यंतंसमाययौ १ ततोयमस्तुभगवानारुह्यमहिषंवरम् ॥ किंकरैश्वस्वयंसाक्षादाययौनगमुत्तमम् २
प्रचेताहंसमारुह्यवारुणैश्वसमन्वितः ॥ श्वेतच्छत्रसमायुक्तःश्वेतव्यजनवीजितः ३ ययौकैलासशिखरंद्रष्टुंकेशवमंजसा ॥ अन्येचापितथादेवाआदित्यावसवस्त
था ४ रुद्राश्चैवतथाराजन्द्रष्टुंकेशवमाययुः ॥ सिद्धाश्वमुनयश्चैवगंधर्वायक्षकिन्नराः ५ सर्वाश्वाप्सरसोराजन्नृत्यगीतविशारदाः ॥ ततोदेवगणाःसर्वेकैलासंसंमप
द्यत ६ पर्वतोनारदश्चैवतथान्येमुनिसत्तमाः ॥ विस्मयस्थितलोलाक्षाःसर्वदेवगणास्तथा ७ आश्चर्यंखलुपश्यध्वंनभूतंनभविष्यति ॥ योगिध्येयःस्वयंकृष्णो
यत्तप्यतिगुरुःस्वयम् ८ कोन्वत्रसमयोभूयादितितेमेनिरेगणाः ॥ ततःसमाप्तेसकलेजगत्पतेर्व्रतेसमूलेसकलेश्वरःशिवः ॥ द्रष्टुंहरिंलोकहितैषिणंप्रभुंययौभवा
न्यासहभूतसंघैः ९ सार्द्धंकुबेरेणसगुह्यकेनसख्याप्रियेणप्रभुरीश्वरःशिवः ॥ स्वयंजटीभूतपिशाचसंवृतःशरीचखड्गीशशिखंडशेखरः १० करेणबिभ्रत्सह
दर्भकुंडिकांकरेणसाक्षादपरेणदीपिकाम् ॥ अन्येनबिभ्रन्महतींसडिंडिमांशूलंचबिभ्रन्नपरेणबाहुना ११ गुणान्सरुद्राक्षकृतात्पमुद्वहन्जटाभिरापिंगल
ताम्रमूर्तिः ॥ विराजमानःप्रभुरिंदुशेखरोवृषेणयुक्तःससितेनशंकरः १२ उमास्तनद्वंद्वसमर्पिताननस्तयासमाश्लिष्यनिपीडिताधरः ॥ गंगांबुविक्षालित
चंद्रशेखरस्तांचापिवीक्षन्बहुशस्तदाशिवः १३ भस्मांगरागैरनुलेपिताननोमहोरगैर्बद्धजटःसनातनः ॥ शिरःकपालैःपरिशोभितस्तदाद्रष्टुंहरिंकेशव
मभ्ययाच्छिवः १४ यमाहुरग्र्यंपुरुषंमहांतंपुरातनंसांख्यनिबद्धदृष्टयः ॥ यस्यापिदेवस्यगुणान्समग्रांस्तत्वांश्चतुर्विंशतिमाहुरेके १५ यमाहुरेकंपुरुषंपुरा
तनंकणादनामानमजंमहेश्वरम् ॥ दक्षस्ययज्ञंविनिहत्ययोवैविनाश्यदेवानसुरान्सनातनः १६ यंविदुर्भूततत्वज्ञंभूतेशंभूतभावनम् ॥ वामदेवंविरूपाक्षमा १०४
हुस्तत्वविदोजनाः १७ महादेवंसहस्राक्षंकालमूर्तिंचतुर्भुजम् ॥ रुद्रंरोदननामानमाहुर्विश्वेश्वरंशिवम् १८

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांटीकायांपंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

अप्रमेयमनाधारमाहुर्माहेश्वराजनाः ॥ नग्नंनग्नपरीतंतुनागिनंत्वग्निवर्चसम् १९ आहुर्विश्वेश्वरंशांतंशिवमादिंसनातनम् ॥ तस्यमूर्तिरिमाःसर्वाबराद्याः सकलानृप २० भूमिरापोनलोवायुःखंसूर्यश्चतथाशशी ॥ अग्निश्चयजमानश्चप्रकृतिश्चैवमष्टधा २१ महादेवोमहायोगीगिरीशोनीललोहितः ॥ आदिकर्त्तामहाभर्त्ताशूलपाणिरुमापतिः ॥ द्रष्टुंविश्वेश्वरंविष्णुंभूतसंघैःसमाययौ २२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांशिवागमनकथनंनामपंचाशीतितमोध्यायः ॥ ८५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ तस्याग्रेसमपद्यंतभूतसंघाःसहस्रशः ॥ घंटाकर्णोविरूपाक्षःकुंडधारःकुमुद्वहः १ दीर्घरोमादीर्घभुजोदीर्घबाहुर्निरंजनः ॥ उरुनेत्रःशतमुखःशतग्रीवःशतोदरः २ कुंडोदरोमहाग्रीवःस्थूलजिह्वोद्विबाहुकः ॥ पार्श्ववक्त्रःसिंहमुखउन्नतांसोमहाहनुः ३ त्रिबाहुःपंचबाहुश्चव्याघ्रवक्त्रःसिताननः ॥ एतेचान्येचबहवोदीर्घास्यादीर्घलोचनाः ४ नृत्यंतःप्रहसंतश्चस्फोटयंतःपरस्परम् ॥ तथान्येघोररूपाश्चतथान्येविकृताननाः ५ प्रेतभक्षाःप्रेतवाहामांसशोणितभोजनाः ॥ शवानिसुबहून्याशुभक्षयंतस्ततस्ततः ६ पिबंतोरुधिरंघोरंखंडयंतःशवान्बहून् ॥ करालाविततादीर्घाधमनिस्नायुसंतताः ७ नानाविधाःसुवीराश्चशूलाग्रप्रोतमानुषाः ॥ शिरामालावृताःकेचिदांत्रपाशावपाशिताः ८ डिंडिमैरट्टहासैश्चनादयंतोवसुंधराम् ॥ कपालिनोभैरवाश्चजटिलामुंडिनस्तथा ९ एवंबहुविधाघोराःपिशाचाविकृताननाः ॥ तथान्येमुनिवीराश्चध्यायंतःपरमेश्वरम् १० पठंतोवेदवाक्यानिसांगानिविविधानिच ॥ कुंडिकास्थकराःकेचित्केचित्कुशविचारिणः ११ कौपीनवसनाःकेचित्केचित्कार्पाससंवृताः ॥ स्तुवंतःशंकरंभक्त्यास्तोत्रैर्माहेश्वरैस्तथा १२ एकत्रतेमुनिगणाअपरत्रगणास्तथा ॥ अन्यत्रसिद्धगंधर्वाःप्रियाभिःसहसंगताः १३ नृत्यंतिनृत्यकुशलागायंतिस्मचकन्यकाः ॥ विद्याधरास्तथान्यत्रस्तुवंतःशंकरंशिवम् १४ ननृतुस्तस्यपुरतोगच्छंतोप्सरसांगणाः ॥ एवमेतैर्महाघोरैःपिशाचैर्भूतकिन्नरैः १५ मुनिभिश्चैवप्रमथैःसमंशर्वःसमाययौ ॥ यत्रविश्वेश्वरोविष्णुस्तपस्तेपेसुदारुणम् १६ यत्रतेलोकपालाश्चतिष्ठंतिस्मदिदृक्षया ॥ उमयालोकभाविन्यागंगयाचंद्रशेखरः १७ ससर्वलोकप्रभवोभवोविभुर्जटीचसाक्षात्प्रणवात्मकःकृती ॥ द्रष्टुंहरिंविष्णुमुदारविक्रमोययौयथेष्टंपिशिताशनैर्वृतः १८ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांमहादेवागमनेषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ शितिकंठायशितिर्विषमेवकंठवर्णत्वात्कंठेयस्यतस्मै अतएवनीलकंठायशोचिषेदीप्तिमते ॥ १३ ॥ १४ ॥ कूपायकूपवासिने ॥ १५॥ तुंडायमुखायसर्वभक्षकायेत्यर्थःतुष्टयायतुष्टिमते तुटितुटायहिंस्राय ॥१६॥ हिप्रायहिनोतिप्रापयतिचेतिहिप्रः रेचकः

॥ वैशंपायनउवाच ॥ एवंबहुविधैर्भूतैःपिशाचैरुरगैःसह ॥ आगत्यभगवान्रुद्रःशंकरोवृषवाहनः १ ददर्शविष्णुंदेवेशंतपंतंतपउत्तमम् ॥ जुह्वानमग्निंविधिवद्धव्यैर्मेध्यैर्जगत्पतिम् २ गरुडात्पतकाष्ठंतुजटिलंचीरवाससम् ॥ चक्रेणानीतकुसुमंखड्गानीतकुशंतथा ३ गदाकृतसमाचारंदेवदेवंजनार्दनम् ॥ इंद्राद्यैर्देवसंघैश्चवृतंमुनिगणैःसह ४ अचिंत्यंसर्वभूतानांध्यायंतंकिमपिप्रभुम् ॥ अवरुह्यवृषाच्छर्वोभगवान्भूतभावनः ५ ततःप्रीतःप्रसन्नात्माललाटाक्षउमापतिः ॥ ततोभूतपिशाचाश्चराक्षसागुह्यकास्तथा ६ मुनयोविप्रवर्याश्चजयशब्दंप्रचक्रिरे ॥ जयदेवजगन्नाथजयरुद्रजनार्दन ७ जयविष्णोहृषीकेशनारायणपरायण ॥ जयरुद्रपुराणात्मन्जयदेवहरेश्वर ८ आदिदेवजगन्नाथजयशंकरभावन ॥ जयकौस्तुभदीप्तांगजयभस्मविराजित ९ जयचक्रगदापाणेजयशूलिंस्त्रिलोचन ॥ जयमौक्तिकदीप्तांगजयनागविभूषण १० इतितेमनुयःसर्वेप्रणामंचक्रिरेहरिम् ॥ ततउत्थायभगवान्दृष्ट्वादेवमवस्थितम् ११ वृषध्वजंविरूपाक्षंशंकरंनीललोहितम् ॥ ततोहृष्टमनाविष्णुस्तुष्टावहरमीश्वरम् १२ ॥ श्रीभगवानुवाच ॥ नमस्तेशितिकंठायनीलग्रीवायवेधसे ॥ नमस्तेशोचिषेअस्तुनमस्तेउपवासिने १३ नमस्तेमीढुषेअस्तुनमस्तेगदिनेहर ॥ नमस्तेविश्वतनवेवृषायवृषरूपिणे १४ अमूर्त्तायचदेवायनमस्तेस्तुपिनाकिने ॥ नमःकुब्जायकूपायशिवायशिवरूपिणे १५ नमस्तुष्टायतुण्यायनमस्तुटितुटायच ॥ नमःशिवायशांतायगिरिशायचतेनमः १६ नमोहरायहिप्रायनमोहरिहरायच ॥ नमोघोरायघोरायघोरघोरप्रियायच १७नमोघंटायघंटायनमोघटिघटायच ॥ नमःशिवायशांतायगिरीशायचतेनमः १८ नमोविरूपरूपायपुरायपुरहारिणे ॥ नमआद्यायबीजायशुचयेष्टस्वरूपिणे १९ नमःपिनाकहस्तायनमःशूलासिधारिणे ॥ नमःखट्वांगहस्तायनमस्तेकृत्तिवाससे २० नमस्तेदेवदेवायनमआकाशमूर्त्तये ॥ हरायहरिरूपायनमस्तेतिग्मतेजसे २१ भक्तप्रियायभक्तायभक्तानांवरदायिने ॥ नमोभ्रमूर्त्तयेदेवजगन्मूर्तिधरायच २२ नमश्चंद्रायदेवायसूर्यायचनमोनमः ॥ नमःप्रधानदेवायभूतानांपतयेनमः२३ करालायचमुंडायविकृतायकपर्दिने ॥ अजायचनमस्तुभ्यंभूतभावनभावन २४

पूरकश्चतदुभयरूपाय ॥ १७ ॥ अघटायघंटायघंटावते घटिघटायघटयतांश्लिष्टानामपिश्लिष्टे ॥ १८ ॥ पुरायक्षेत्ररूपाय अष्टौपृथिव्यादीनिस्वरूपाणियस्यतस्मैअष्टस्वरूपिणे ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

हरिकेशाय हरयोरश्मयःइंद्रियाणिवाकेशाइवस्वरूपांतर्गतावाहिर्भूताश्रयस्येतिहरिकेशः यंपरमेश्वरस्यासितकृष्णकेशौरामकृष्णावित्युक्तेः कृष्णावतारः केशोयस्यावतारिणोमहेश्वर स्येतिवाहरिकेशस्तस्मैअभीपुहस्तायअर्जुनसारथये भीरुभीरुश्चासौहरश्चतस्मैभीरुभीरुहराय अतिभीतायातिसंहर्त्रेइत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ अजमथनायब्रह्मशिरोह

नमोस्तुहरिकेशायपिंगलायनमोनमः ॥ नमस्तेभीषुहस्तायभीरुभीरुहरायच २५ हरायभीतिरूपायघोराणांभीतिदायिने ॥ नमोदक्षमखघ्नायभगनेत्रा पहारिणे २६ उमापतेनमस्तुभ्यंकैलासनिलयायच ॥ आदिदेवायदेवायभवायभवरूपिणे २७ नमःकपालहस्तायनमोजमथनायच ॥ त्र्यंबकायनमस्तु भ्यंत्र्यक्षायचशिवायच २८ वरदायवरेण्यायनमस्तेचंद्रशेखर ॥ नमइध्मायहविषेध्रुवायचकुशायच २९ नमस्तेशक्तियुक्तायनागपाशप्रियायच ॥ वि रूपायसुरूपायमद्यपानप्रियायच ३० श्मशानरतयेनित्यंजयशब्दप्रियायच ॥ खरप्रियायखर्वायखरायखररूपिणे ३१ भद्रप्रियायभद्रायभद्ररूप धरायच ॥ विरूपायसुरूपायमहाघोरायतेनमः ३२ घंटायघंटभूषायघंटभूषणभूषिणे ॥ तीव्रायतीव्ररूपायतीव्ररूपप्रियायच ३३ नग्नायनग्न रूपायनग्नरूपप्रियायच ॥ भूतावासनमस्तुभ्यंसर्वावासनमोनमः ३४ नमःसर्वात्मनेतुभ्यंनमस्तेभूतिदायक ॥ नमस्तेवामदेवायमहादेवायतेनमः ३५ कानुवाक्स्तुतिरूपातेकोनुस्तोतुंप्रशक्नुयात् ॥ कस्यवास्फुरतेजिह्वास्तुतौस्तुतिमतांवर ३६ क्षमस्वभगवन्देवभक्तोहंत्राहिमांहर ॥ सर्वात्मन्सर्व भूतेशत्राहिमांसततंहर ३७ रक्षदेवजगन्नाथलोकान्सर्वात्मनाहर ॥ त्राहिभक्तान्सदादेवभक्तप्रियसदाहर ॥ ३८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवं शेभविष्यपर्वणिकैलासयात्रायांविष्णुकृतईश्वरस्तुतिर्नामसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ततोवृषध्वजोदेवःशूलीसा क्षादुमापतिः ॥ करंकरेणसंस्पृश्यविष्णोश्चक्रधरस्यह १ प्रोवाचभगवानुद्रःकेशवंगरुडध्वजम् ॥ शृण्वतांसर्वदेवानांमुनीनांभावितात्मनाम् २ किमिदं देवदेवेशचक्रपाणेजनार्दन ॥ तपश्चर्याकिमर्थंतेप्रार्थनातवकाविभो ३ स्वयंविष्णुर्भवान्नित्यस्तपस्त्वंतपसांहरे ॥ पुत्रार्थंयदितेदेवतपश्चर्याजनार्दन ४ पुत्रोदत्तोमयादेवपूर्वमेवजगत्पते ॥ शृणुतत्रापिभगवन्कारणंकारणात्मक ५ तपश्चर्तुंप्रवृत्तोहंकुतश्चित्कारणाद्धरे ॥ वर्षायुतंमहाघोरंपुराकृतयुगेतदा ६ भवानीतत्रमेदेवपरिचर्तुंतदाभवत् ॥ पित्रानियुक्तादेवेशउमैषावरवर्णिनी ७ भीतइंद्रस्तदादेवमारंमांप्रेषयत्तदा ॥ मधुनासहसंयुक्तोमारोमामागतस्तदा ८ लक्ष्यंमामकरोत्तत्रबाणस्यप्रेषितस्यह ॥ एषामांसेवतेतत्रदानात्पुष्पादिनांहरे ९

त्रे ॥ २८ ॥ २९ ॥ भद्रेतिपाठेपिमद्यमेवभद्रम् ॥ ३० ॥ खरायकर्कशाय ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ इतिश्रीमहाभारते खिलेषुहरिवंशेभविष्यपर्वणिटीकायांसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

ततःक्रुद्धोहमभवंदृष्ट्वामारंतथाविधम् ॥ क्रुद्ध्यतोममदेवेशनेत्रादग्निःपपातह १० सोयमग्निस्तदामारंभस्मसात्कृतवान्हरे ॥ अचिंतयंतदाविष्णोशक्रस्यै
१०६ तच्चिकीर्षितम् ११ ततःप्रभृतिदेवेशदयातंप्रतिवर्तते ॥ ब्रह्मणाचनियुक्तोस्मिप्रीतस्तत्रजनार्दन १२ नियुक्तःपुत्ररूपेणसतेदेवजगत्पते ॥ ज्येष्ठस्तववसु अ०८८
तोदेवप्रद्युम्नेत्यभिविश्रुतः १३ स्मरंतंविद्धिदेवेशनात्रकार्याविचारणा ॥ इत्युक्त्वापुनराहेदंयाथात्म्यंदर्शयन्निव १४ मुनीनांश्रोतुकामानांयाथा
त्म्यंतत्रसत्तमः ॥ अंजलिंसंपुटंकृत्वाविष्णुमुद्दिश्यशंकरः १५ उमयासार्द्धमीशानोयाथात्म्यंवक्तुमैहत ॥ हरेकुर्वतितत्रैवमंजलिंकुरुसत्तम १६ मुनयोदे
वगंधर्वाःसिद्धाश्चसहकिन्नराः ॥ अंजलिंचक्रिरेविष्णौदेवदेवेश्वरेहरौ १७ महेश्वरउवाच ॥ यत्तत्कारणमाहुस्तत्सांख्याःप्रकृतिसंज्ञकम् ॥ ततोमहान्स
मुत्पन्नःप्रकृतिर्यस्यकारणम् १८ त्रिधाभूतंजगद्योनिंप्रधानंकारणात्मकम् ॥ सत्वंरजस्तमोविष्णोजगदंडंजनार्दन १९ तस्यकारणमाहुस्त्वांसांख्य
प्रकृतिसंज्ञकम् ॥ तद्रूपेणभवान्विष्णोपरिणम्याधितिष्ठति २० तस्मात्तुमहतोघोरादहंकारोमहानभूत् ॥ सत्वमादौजगन्नाथपरिणामस्तथाहिसः २१
अहंकारात्प्रभोदेवकारणानिमहांतिच ॥ तन्मात्राणितथापंचभूतानिप्रभवंत्युत २२ तानित्वामाहुरीशानंभूतानीहजगत्पते ॥ पृथिवीवायुराकाशमापो
ज्योतिश्चपंचमम् २३ चक्षुर्घ्राणंतथास्पर्शोरसनंश्रोत्रमेवच ॥ मनःषष्ठंतथादेवप्रेरकंतत्रतत्रह २४ कर्मेंद्रियाणिचान्यानिवागादीनिजनार्द्दन ॥ त्वमेवता
निसर्वाणिकरोषिनियतात्मवान् २५ स्वेषुस्वेषुजगन्नाथविषयेषुतथाहरे ॥ निवेशयसिदेवेशयोग्यामिंद्रियपद्धतिम् २६ यदात्वंरजसायुक्तस्तदाभूतानि
सृष्टवान् ॥ यदाचसत्वयुक्तोसितदापाताजगत्त्रयम् २७ यदात्वंतमसाकृष्टस्तदासंहरसेजगत् ॥ त्रिभिरेवगुणैर्युक्तःसृष्टिरक्षाविनाशने २८ वर्त्तसेत्रिविधां
भूतिमादायनियतात्मवान् ॥ इंद्रियाणींद्रियार्थेषुनियोजयसिमाधव २९ प्राणिनामुपभोगार्थमंतःस्थित्वाजगद्गुरो ॥ तस्मात्सर्वत्रभूतेषुवर्त्तसेसर्वभोगवा
न् ३० ब्रह्मात्वंसृष्टिकालेतुस्थितौविष्णुरसिप्रभो ॥ संहारेरुद्रनामासित्रिधामात्वमसिप्रभो ३१ भूमिरापोनलोवायुःखंमनोबुद्धिरेवच ॥ एताःप्रकृत
योदेवभिन्नाःसर्वत्रतेहरे ३२ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सहस्रधारःसाहस्रीसहस्रात्मादिवस्पतिः ३३ भूमिंसर्वामिमांप्राप्यसप्तद्वीपांससा
गराम् ॥ अणुःसर्वत्रगोभूत्वाअत्यतिष्ठद्दशांगुलम् ३४ त्वमेवेदंजगत्सर्वंयद्भूतंयद्भविष्यति ॥ त्वत्तोविराट्प्रादुरभूत्संम्राट्चैवजनार्दन ३५ तववक्त्राज्जग १०६
न्नाथब्राह्मणोलोकरक्षकः ॥ प्रादुरासीत्पुराणात्मन्षट्कर्मनिरतःसदा ३६

राजन्यस्तुतथाबाह्वोरासीत्संरक्षणेरतः ॥ ऊर्वोर्वैश्यस्तथाविष्णोःपादाच्छूद्रउदाहृतः ३७ एवंवर्णाजगन्नाथतवदेहाज्जनार्दन ॥ मनसस्तवदेवेशचंद्रमाःस
मपद्यत ३८ सुखकृत्सर्वभूतानांशीतांशुरमितप्रभः ॥ अक्ष्णोःसूर्यःसमुत्पन्नःसर्वप्राणिविलोचनः ३९ यस्यभासाजगत्सर्वंभासतेभानुमानसौ ॥ मुखा
दिंद्रश्चअग्निश्चप्राणाद्वायुरजायत ४० नाभेरभूदंतरिक्षंतवदेवजनार्दन ॥ द्यौरासीत्तुमहाघोराशिरसस्तवगोपते ४१ पद्भ्यांभूमिःसमुत्पन्नादिशःश्रोत्रा
ज्जगत्पते ॥ एवंदृष्ट्वाजगत्सर्वंव्याप्यसर्वंव्यवस्थितः ४२ व्याप्यसर्वानिमाँल्लोकांस्थितःसर्वत्रकेशव ॥ ततश्चविष्णुनामासिधातोर्व्याप्तेश्चदर्शनात् ४३ ना
राआपःसमाख्यातास्तासामयनमादितः ॥ यतस्त्वंभूतभव्येशतन्नारायणशब्दितः ४४ हरसिप्राणिनोदेवततोहरिरितिस्मृतः ॥ शंकरोसिसदादेवततः
शंकरतांगतः ४५ बृहत्वाद्बृंहणत्वाच्चतस्माद्ब्रह्मेतिशब्दितः ॥ मधुरिंद्रियनामेतिततोमधुनिषूदनः ४६ हृषीकाणींद्रियाण्याहुस्तेषामीशोयतोभवान् ॥
हृषीकेशस्ततोविष्णोख्यातोदेवेषुकेशव ४७ कइतिब्रह्मणोनामईशोहंसर्वदेहिनाम् ॥ आवांतवांगसंभूतौतस्मात्केशवनामवान् ४८ माविद्याचहरेप्रो
क्तातस्याईशोयतोभवान् ॥ तस्मान्माधवनामासिधवःस्वामीतिशब्दितः ४९ गौरेषातुयतोवाणीतांचवेदयतोभवान् ॥ गोविंदस्तुततोदेवमुनिभिःकथ्य
तेभवान् ५० त्रिरित्येवत्रयोवेदाःकीर्तितामुनिसत्तमैः ॥ क्रमतेतांस्तथासर्वांस्त्रिविक्रमइतिश्रुतः ५१ अणुर्वामननामासियतस्त्वंवामनाख्यया ॥ मनना
न्मुनिरेवासियमनाद्यतिरुच्यते ५२ तपश्चरसियस्मात्त्वंतपस्वीतिचशब्दितः ॥ वसंतित्वयिभूतानिभूतावासस्ततोहरे ५३ ईशस्त्वंसर्वभूतानामीश्वरो
सिततोहरे ॥ प्रणवःसर्ववेदानांगायत्रीछंदसांप्रभो ५४ अक्षराणामकारस्त्वंस्फोटस्त्वंवर्णसंश्रयः ॥ रुद्राणामहमेवासिवसूनांपावकोभवान् ५५ अश्वत्थो
वृक्षजातीनांब्रह्मालोकगुरुर्भवान् ॥ मेरुस्त्वंपर्वतेंद्राणांदेवर्षीणांचनारदः ५६ दानवानांभवान्दैत्यःप्रह्लादोभक्तवत्सलः ॥ सर्पाणामेवसर्वेषांभवान्वासु
किसंज्ञितः ५७ गुह्यकानांचसर्वेषांभवान्धनदएवच ॥ वरुणोयादसांराजागंगात्रिपथभाग्भवान् ५८ आदिस्त्वंसर्वभूतानांमध्यमंतस्तथाभवान् ॥
त्वत्तःसमभवद्विश्वंत्वयिसर्वंप्रलीयते ५९ अहंत्वंसर्वगोदेवत्वमेवाहंजनार्दन ॥ आवयोरंतरंनास्तिशब्दैरर्थैर्जगत्पते ६० नामानितवगोविंदयानिलोके
महांतिच ॥ तान्येवममनामानिनात्रकार्याविचारणा ६१ त्वदुपासाजगन्नाथसैवास्तुममगोपते ॥ यश्चत्वांद्वेष्टिदेवेशसमांद्वेष्टिनसंशयः ६२ त्वद्विस्तारो
यतोदेवअहंभूतपतिस्ततः ॥ नतदस्तिविनादेवयत्तेविरहितंहरे ६३

॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ इतिश्रीमहाभारतेखिलेपुहरिवंशेभविष्यपर्वणिशिवकृताविष्णुस्तुतिर्नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ ७ ॥ ॥ इत्युक्त्वेति ॥ १ ॥ एतदित्यंगुल्याकृष्णंदर्शयतितपःतपःफलं ॥२॥ सततमानसैःअविच्छिन्नाचित्तवृत्तिभिः ॥ ३ ॥ फलंएकाग्र्यं ॥ ४ ॥ ५ ॥ त्रयीगतिःकर्मकांडप्राप्यः ॥ ६ ॥ ७ ॥ ८ ॥



यदासीद्वर्ततेयच्चयच्चभाविजगत्पते ॥ सर्वत्वमेवदेवेशविनाकिंचित्त्वयानहि ६४ स्तुवंतिदेवाःसततंभवंतंस्वैर्गुणैःप्रभो ॥ ऋक्त्वंयजुरेवासिसामासिसत
तंप्रभो ६५ किमुच्यतेमयादेवसर्वंत्वंभूतभावन ॥ नमःसर्वात्मनादेवविष्णोमाधवकेशव ६६ नमस्करोमिसर्वात्मन्नमस्तेस्तुसदाहरे ॥ नमःपुष्करनाभा
यवंदेत्वामहमीश्वर ॥ ६७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांशिवकृतविष्णुस्तुतिर्नामाष्टाशीतितमोऽध्यायः ॥ ८८॥
॥ वैशंपायनउवाच ॥ इत्युक्त्वादेवदेवेशंमुनीनाहपुनःशिवः ॥ एवंजानीतहेविप्रायेभक्ताद्रष्टुमागताः १ एतदेवपरंवस्तुनैकस्मात्परमस्तिवः ॥ एतदेव
विजानीध्वमेतद्वःपरमंतपः २ एतदेवसदाविप्राध्येयंसततमानसैः ॥ एतद्वःपरमंश्रेयएतद्वःपरमंधनम् ३ एतद्वोजन्मनःकृत्यमेतद्वस्तपसःफलम् ॥ एषवः
पुण्यनिलयएषधर्मःसनातनः ४ एषवोमोक्षदाताचएषमार्गउदाहृतः ॥ एषपुण्यप्रदःसाक्षादेतद्वःकर्मणांफलम् ५ एतदेवप्रशंसंतिविद्वांसोब्रह्मवादिनः ॥
एषत्रयीगतिर्विप्राःप्रार्थ्याब्रह्मविदांसदा ६ एतदेवप्रशंसंतिसांख्ययोगसमाश्रिताः ॥ एषब्रह्मविदांमार्गःकथितोवेदवादिभिः ७ एवमेवविजानीतनात्रका
र्याविचारणा ॥ हरिरेकःसदाध्येयोभवद्भिःसत्वमास्थितैः ८ नान्योजगतिदेवोस्तिविष्णोर्नारायणात्परः ॥ ओमित्येवंसदाविप्रापठतध्यातकेशवम् ९ त
तोनिःश्रेयसप्राप्तिर्भविष्यतिनसंशयः ॥ एवंध्यातोहरिःसाक्षात्प्रसन्नोवोभविष्यति १० भवनाशमयंदेवःकरिष्यतिदृढंहरिः ॥ सदाध्यातहरिंविप्रायदी
च्छाप्राप्तुमच्युतम् ११ एषसंसारविभवंविनाशयतिवोगुरुः ॥ स्मरध्वंसततंविष्णुंपठध्वंत्रिशरीरिणम् १२ मनःसंयमनंविप्राःकुरुध्वंयत्नतःसदा ॥ शुद्धे
तःकरणेविष्णुःप्रसीदतितपोधनाः १३ ध्यात्वामांसर्वयत्नेनततोजानीतकेशवम् ॥ उपास्योहंसदाविप्राउपास्येस्मिन्हरौस्मृतः १४ उपायोयंमयाप्रोक्तो
नात्रसंदेहइत्यपि ॥ अयंमार्गःसदाविप्रायतध्वमघनाशने १५ यथावोबुद्धिरखिलाशुद्धाभवतियत्नतः ॥ तथाकुरुतविप्रेंद्रायथादेवःप्रसीदति १६ ॥ वैशं
पायनउवाच ॥ एवमुक्तास्ततःसर्वेमुनयःपुण्यशीलिनः ॥ यथावदुपगृह्णानानिरसन्संशयंनृप १७ एवमेवेतितंविप्राःप्राहुःप्रांजलयोहरम् ॥ छिन्नोनःसं
शयःसर्वोगृहीतोर्थःसतादृशः १८ एतदर्थंसमायातावयमद्यतवालयम् ॥ संगमाद्युवयोःसर्वोनष्टोमोहोमहानिह १९



॥ ९ ॥ १० ॥ ११ ॥ संसारस्यविभवःनानारूपेणभवनंयस्याःसकाशात्सामूलाविद्यातांत्रिशरीरिणंब्रह्मादित्रयदेहम् ॥ १२ ॥ १३ ॥ ध्यात्वेतिस्वस्यसगुणब्रह्मभावंजानी
तेतिकेशवस्यनिर्गुणब्रह्मभावंचसूचयति उपास्यःचिंतनीयः उपास्यउपगत्यप्राप्यः ॥ १४ ॥ १५ ॥ १६ ॥ निरसन् निरस्तवंतः ॥ १७ ॥ १८ ॥ १९ ॥

॥ २० ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांनवाशीतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥ ततःसइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

यथावदसिदेवेशतथानःश्रेयसेपरम् ॥ यथाहभगवान्रुद्रोयतामःसततंहरौ ॥ इतितेमुनयःप्रीताःप्रणेमुःकेशवंहरिम् २० ॥ इतिश्रीमहाभारतेखिले षुहरिवंशेभविष्यपर्वणिकैलासयात्रायांनवाशीतितमोऽध्यायः ८९ ॥ वैशंपायनउवाच ॥ ततःसभगवान्रुद्रःसर्वान्विस्मापयन्निव ॥ स्तुत्याप्रचक्रमेस्तो तुंविष्णुंविश्वेश्वरंहरिम् ॥ अर्घ्यैर्भिस्तुतदावाग्भिर्मुनीनांशृण्वतांतथा १ ॥ महेश्वरउवाच ॥ नमोभगवतेतुभ्यंवासुदेवायधीमते ॥ यस्यभासाजगत्स र्वंभासतेनित्यमच्युत २ नमोभगवतेदेवनित्यंसूर्यात्मनेनमः ॥ यःशीतयतिशीतांशुर्लोकान्सर्वानिमान्विभुः ३ नमस्तेविष्णवेदेवनित्यंसोमात्मनेनमः ॥ यःप्रजाःप्रीणयत्येकोविश्वात्माभूतभावनः ४ नमःसर्वात्मनेदेवनमोवागात्मनेहरे ॥ योदधारकरेणासौकुशचीरादियत्सदा ५ दधारवेदान्सर्वांश्चतुभ्यंब्रह्मा त्मनेनमः ॥ सर्वान्संहरतेयस्तुसंहारेविश्वदृक्सदा ६ क्रोधात्मासिविरूपोसितुभ्यंरुद्रात्मनेनमः ॥ स्रष्टोस्रष्टासमस्तानांप्राणिनांप्राणदायिने ७ अजायविष्णवेतुभ्यंस्रष्ट्रेविश्वसृजेनमः ॥ आदौप्रकृतिमूलायभूतानांप्रभवायच ८ नमस्तेदेवदेवेशप्रधानायनमोनमः ॥ पृथिव्यांगंधरूपे णसंस्थितःप्राणिनांहरे ९ दृढायदृढरूपायतुभ्यंगंधात्मनेनमः ॥ अपांरसायसर्वत्रप्राणिनांसुखहेतवे १० नमस्तेविश्वरूपायरसायचन मोनमः ॥ तेजसाभास्करोयस्तुघृणोजंतुहितःसदा ११ तस्मैदेवजन्नाथनमोभास्कररूपिणे ॥ वायोःस्पर्शगुणोयत्रशीतोष्णसुखदुःखदः १२ नमस्ते वायुरूपायनमःस्पर्शात्मनेहरे ॥ आकाशेवस्थितःशब्दःसर्वश्रोत्रानिवेशनः १३ नमस्तेभगवन्विष्णोतुभ्यंसर्वात्मनेनमः ॥ योदधारजगत्सर्वंमायामानुषदे हवान् १४ नमस्तुभ्यंजगन्नाथमायिनेऽमायदायिने ॥ नमआद्यायबीजायनिर्गुणायगुणात्मने १५ अचिंत्यायसुचिंत्यायतस्मैचिंत्यात्मनेनमः ॥ हरायहरिरूपायब्रह्मणेब्रह्मदायिने १६ नमोब्रह्मविदेतुभ्यंब्रह्मब्रह्मात्मनेनमः ॥ नमःसहस्रशिरसेसहस्रकिरणायच १७ नमःसहस्रवक्त्रायसहस्रनयनाय च ॥ विश्वायविश्वरूपायविश्वकर्त्रेनमोनमः १८ विश्वचक्रेनमोनित्यंभूतावासनमोनमः ॥ इंद्रियायेंद्ररूपायविषयायसदाहरे १९ नमोश्वशिरसेतुभ्यं वेदाभरणरूपिणे ॥ अग्नयेग्निपतेतुभ्यंज्योतिषांपतयेनमः २० सूर्यायसूर्यपुत्रायतेजसांपतयेनमः ॥ नमःसोमायसौम्यायनमःशीतात्मनेहरे २१ नमोयज्ञायइज्यायहविषेहव्यसंस्कृते ॥ नमःस्रुवायपात्रायज्ञांगायपरायच २२

॥ ८ ॥ ९ ॥ १० घृणःघृणयोरश्मयस्तद्वान्सूर्यःघृणिरितिपाठःस्वच्छः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ब्रह्मब्रह्मात्मनेवेदयज्ञस्वरूपाय ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ कृष्णायनामतः कृष्णायवर्णतः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥
इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांनवतितमोऽध्यायः ॥ ९० ॥ ॥ छ ॥ ॥ बाणयुद्धेयदुक्तंहरिहराद्वैतंतदेवकैलासयात्रायांहरेःशिवाराधन

नमःप्रणवदेहायक्षरायाप्यक्षरायच ॥ वेदायवेदरूपायशस्त्रिणेशस्त्ररूपिणे २३ गदिनेखड्गिनेतुभ्यंशंखिनेचक्रिणेनमः ॥ शूलिनेचर्मिणेनित्यंवरदायनमो नमः २४ बुद्धिप्रियायबुद्धायप्रबुद्धायसुखायच ॥ हरयेविष्णवेतुभ्यंनमःसर्वात्मनेगुरो २५ नमस्तेसर्वलोकेशसर्वकर्त्रेनमोनमः ॥ नमःस्वभावशुद्धायनम स्तेयज्ञसूकर २६ नमोविष्णोनमोविष्णोनमोविष्णोनमोहरे ॥ नमस्तेवासुदेवायवासुदेवायधीमते २७ नमःकृष्णायकृष्णायसर्वावासनमोनमः ॥ नमो भूयोनमस्तेस्तुपाहिलोकाञ्जनार्दन २८ इतिस्तुत्वाजगन्नाथमुवाचमुनिसत्तमान् ॥ इदंस्तोत्रमधीयानानित्यंव्रजतकेशवम् २९ शरण्यंसर्वभूतानांतत्रश्रे योविधास्यति ॥ येचेमंधारयिष्यंतिस्तवंपापविमोचनम् ३० तेषांप्रीतःप्रसन्नात्मापठतांशृण्वतांहरिः ॥ श्रेयोदास्यतिधर्मात्मानात्रकार्याविचारणा ३१ अवश्यंमनसाध्यातकेशवंभक्तवत्सलम् ॥ श्रेयःप्राप्तुंयदीच्छंतभवंतःशंसितव्रताः ३२ इत्युक्त्वाभगवान्रुद्रस्तत्रैवांतरधीयत ॥ सगणःशंकरःसाक्षादुमया भूतभावनः ३३ नेमुस्तंमुनयःसर्वेपरांनिर्वृतिमाययुः ॥ तमेवपरमंतत्वंमत्वानारायणंहरिम् ॥ विस्मयंपरमंगत्वामेनिरेस्वकृतार्थताम् ३४ लोकपाला स्तदाविष्णुंनमस्कृत्यहरिंमुदा ॥ जग्मुःस्वान्यथवेश्मानिगणैःसर्वैर्नृपोत्तम ३५ आरुह्यभगवान्विष्णुर्गरुडंपक्षिपुंगवम् ॥ शंखीचक्रीगदीखड्गीशार्ङ्गीतूणीतनु त्रवान् ३६ यथागतंजगन्नाथोययौबदरिकामनु ॥ सायाह्नेपुंडरीकाक्षोनित्यंमुनिनिषेविताम् ३७ तत्रगत्वायथायोगंविनम्यहरिरीश्वरः ॥ अर्चितोमुनिभिः सर्वैर्निषसादसुखासने ३८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांनवतितमोऽध्यायः॥ ९० ॥ ॥ छ ॥ वैशंपायनउवाच ॥ एतस्मिन्नेवकालेतुपौंड्रोनृपवरोत्तमः ॥ बलवान्सत्वसंपन्नोयोद्धाविपुलविक्रमः १ वृष्णिशत्रुस्सदाराजाकृष्णद्वेषीबलात्तदा ॥ नृपान्सर्वान्समाहूयप्रोवा चनृपसंसदि २ जिताचपृथिवीसर्वाजिताश्चनृपसत्तमाः ॥ वृष्णयस्तेबलोन्मत्ताःकृष्णमाश्रित्यगर्विताः ३ दास्यंतिमेकरंसर्वेनहितेकृष्णसंश्रयात् ॥ स तुकृष्णश्चक्रबलान्मामवज्ञायतिष्ठति ४ अहंचक्रीतिगर्वोभूत्तस्यगोपस्यसर्वदा ॥ शंखीचक्रीगदीशार्ङ्गीशरीतूणीसहायवान् ५ एवमादिर्महागर्वस्तस्य संप्रतिवर्त्तते ॥ लोकेचममयन्नामवासुदेवेतिविश्रुतम् ६ अगृह्णन्ममतन्नामगोपोमदबलान्वितः ॥ तस्यचक्रस्ययच्चक्रंममापिनिशितंमहत् ७

कत्वेनशिवस्यविष्णुस्तावकत्वेनचदृढीकृतं तेनशास्तृशास्ययोर्जीवेशयोरविकृतब्रह्मभावःकृत्स्नस्यशास्त्रस्यार्थउक्तः अथावतारकृत्यशेषंव्याचष्टे एतस्मिन्नेवकालइत्यादिना
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ चक्रस्यनाशकमितिशेषः ॥ ७ ॥

॥ ८ ॥ अनेकंबहुविग्रहं अहतंअप्रतिहतंतादृशंममापीतिभावः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ भारःस्याद्विंशतिस्तुलाःतेषांभाराणांशतैःशतंअयुतमित्य

गर्वंहंतृसदातस्यनाम्नाचापिसुदर्शनम् ॥ सहस्रारंमहाघोरंतस्यचक्रस्यनाशनम् ८ अनेकमहतंचक्रंगोपजस्यनृपोत्तमाः ॥ ममाप्येतद्धनुर्दिव्यंशार्ङ्गनामम
हारवम् ९ गदाकौमोदकीनाममयेयंबृहतीदृढा ॥ कालायससहस्रस्यभारेणसुकृतामया १० खड्गोनंदकनामासौममायंविपुलोदृढः ॥ अंतकस्यांतको
घोरस्तस्यखड्गस्यनाशकः ११ तत्रायंचगदीखड्गीशंखीचक्रीतनुत्रवान् ॥ युधिजेताचकृष्णस्यनात्रकार्याविचारणा १२ मांसंब्रूतनृपाश्चैवगदिनंचक्रिणं
तथा ॥ शंखिनंशार्ङ्गिणंवीरंब्रूतनित्यंनृपोत्तमाः १३ वासुदेवेतिमांब्रूतनतुगोपंयदूत्तमम् ॥ एकोहंवासुदेवोहिहत्वातंगोपदारकम् १४ सख्यु
र्ममबलाद्धंतानरकस्यमहात्मनः ॥ मांतथायदिनब्रूतदंड्याभारशतैःशतम् १५ सुवर्णस्यचनिष्कस्यधान्यस्यबहुशस्तदा ॥ तथाब्रुवतिराजेंद्रेमनसादु
स्सहंयथा १६ केचिल्लज्जासमायुक्ताआसंस्तेबलवत्तराः ॥ रसज्ञाबलवीर्यस्यराजानस्तेसदानृप १७ अपरेतुनृपाराजन्नेवमेवेतिचुक्रुशुः ॥ अन्येबलमदो
त्सिक्ताजेष्यामःकेशवंरणे १८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपौंड्रकोक्तावेकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥ ॥ वैशंपा
यनउवाच ॥ ततःकैलासशिखरान्निर्गतोमुनिसत्तमः ॥ नारदःसर्वलोकज्ञःपौंड्रस्यनगरंप्रति १ अवतीर्यनभोभागात्प्रत्यागम्यनरोत्तमम् ॥ द्वास्थेनचस
माज्ञप्तःप्रविवेशगृहोत्तमम् २ अर्घादिसमुदाचारंनृपाल्लब्ध्वामहामुनिः ॥ निषसादासनेशुभ्रेह्यास्तृतेशुभवाससा ३ कुशलंपृष्टवान्भूयोनृपःसमुनिस
त्तमम् ॥ उवाचनारदंभूयःपौंड्रकोबलगर्वितः ४ भवान्सर्वत्रकुशलःसर्वकार्येषुपंडितः ॥ प्रथितोदेवसिद्धेषुगंधर्वेषुमहात्मसु ५ सर्वत्रगोनिराबाधोगंता
सर्वत्रसर्वदा ॥ अगम्यंतवविप्रेंद्रब्रम्हांडेनहिकिंचन ६ नारदेदंवदत्वंहियत्रयत्रगतोभवान् ॥ तत्रतत्रतपःसिद्धोलोकेप्रथितवीर्यवान् ॥ पौंड्रएवचविख्या
तोवासुदेवेतिशब्दितः ७ शंखीचक्रीगदीशार्ङ्गीखड्गीतूणीतनुत्रवान् ॥ विजेताराजसिंहानांदातासर्वस्यसर्वदा ८ भोक्ताराज्यस्यसर्वस्यशास्ताराजाबला
द्बली ॥ अजेयःशत्रुसैन्यानांरक्षितास्वजनस्यह ९ योद्यगोपकनामासौवासुदेवेतिशब्दितः ॥ तस्यवीर्यबलेनस्तोनाम्नोस्यममधारणे १० सहिगोपोत्र
थाबाल्याद्धारयत्येवनाममे ॥ इदंनिश्चिनुविप्रेंद्रएकएवभवाम्यहम् ११ वासुदेवोजगत्यस्मिन्निर्जित्यबलिनंयदुम् ॥ वृष्णीन्सर्वान्बलात्क्षिप्त्वानिहनि
ष्येचतांपुरीम् १२ द्वारकांविष्णुनिलयांयोद्धाचाहंमहामते ॥ एतेचबलिनःसर्वेनृपाममसमागताः १३

र्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायामेकनवतितमोऽध्यायः ॥ ९१ ॥ ॥छ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥
॥ ६ ॥ वदपौंड्रकएववासुदेवशब्दितइतिख्यापयेत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ आचार्यःशरणीकरणीयःपाठांतरेगमनेआचार्यइतियोज्यम् ॥ १७ ॥ १८ ॥ कोनामधारयेदितिशेषः ॥ १९ ॥ गोमतीसूर्यकिरणसंपर्कवतीद्वे
भुवनेद्युभूनामनीशासतिपालयतिइदंवक्तुंकोनामसमर्थः स्यात् नकोपीत्यर्थःप्राकृतास्त्वादृशाः मूढाः ॥ २० ॥ २१ ॥ २२ ॥ तत्रशार्ङ्गादिकंतत्रविष्णौस्थितंनदाप्यतेत्वदी

अश्वाश्ववेगिनःसंतिरथावायुजवामम ॥ नानामंत्राःसहस्रंचगजानियुतमेवच १४ एतेनाहंबलेनाजौहनिष्येकेशवंरणे ॥ तस्मादेवंसदाविप्रवदब्रह्मन्पुरेम
म १५ इंद्रस्यापिसदाविप्रवदनारदसांप्रतम् ॥ प्रार्थनैषाममविभोनमस्येत्वांतपोधन १६ ॥ नारदउवाच ॥ ॥ सर्वत्रगःसदाचास्मियावद्ब्रह्मांडसं
स्थितिः ॥ आचार्यःसर्वकार्येषुगमनेकेनचिन्नृप १७ किन्नुवक्तुंतथाराजन्नुत्सहेनृपसत्तम ॥ महींशासतिदेवेशेचक्रपाणौजनार्दने १८ विष्णौसर्वत्रगेदेवेदु
ष्टान्हत्वासबांधवान् ॥ वासुदेवेतिकोनामतिष्ठत्यस्मिन्हराविति १९ कोनामवक्तुमेवेदंकृष्णेशासतिगोमती ॥ अज्ञानाद्वक्तुमेवंचसमर्थाःप्राकृताजनाः २०
हरिःसर्वत्रगोविष्णुर्दर्पंतेव्यपनेष्यति ॥ अचिंत्यविभवोविष्णुःशार्ङ्गधन्वागदाधरः २१ आदिदेवःपुराणात्मादर्पंतेव्यपनेष्यति ॥ हास्यमेतन्महाराजयच्च
वैतत्रसंस्थितम् २२ शार्ङ्गखड्गंतथाराजन्महाघोरंनदाप्यते ॥ अतीवहासकालोयंतवसंप्रतिवर्त्तते २३ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपौं
ड्रकनारदसंवादेद्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ततःक्रुद्धोमहाराजपौंड्रोमदबलान्वितः ॥ नारदंविप्रवर्यंतंप्रोवा
चनृपसंसदि १ किमिदंप्राहविप्रर्षेराजाहंचद्विजैःसह ॥ गच्छत्वंकाममथवामुनेशापप्रदःसदा २ भीतस्त्वत्तोमहाबुद्धेगच्छत्वंकाममद्यहि ॥ इत्युक्तोनृ
पवर्येणतूष्णीमेवसनारदः ३ जगामाकाशगमनोयत्रतिष्ठतिकेशवः ॥ सगत्वाविष्णुसंकाशंविष्णोःसर्वंशशंसह ४ तच्छ्रुत्वाभगवान्विष्णुर्यथेष्टंवदतामिति
दर्पंतस्यापनेष्यामिश्वोभूतेद्विजसत्तम ५ इत्युक्त्वाविररामैवतस्मिन्बदरिकाश्रमे ॥ ततःपौंड्रोमहाबाहुर्बलैर्बहुभिरीश्वरः ६ अश्वैरनेकसाहस्रैर्गजैर्बहुभि
रन्वितः ॥ शस्त्रकोटिसमायुक्तःसराजासत्यसंगरः ७ अनेकशतसाहस्रैःपत्तिभिश्चसमन्वितः ॥ एकलव्यप्रभृतिभीराजभिश्चसमंततः ८ अष्टौरथसहस्राणि
नागानामयुतंतथा ॥ अर्बुदंपत्तिसंघानांतद्बलंसमपद्यत ९ एतेनचबलेनाजौप्रस्फुरन्नृपसत्तमः ॥ विरराजमहाराजउदयस्थोमहारविः १० सययौमध्यरा
त्रेणनगरींद्वारकामनु ॥ पत्तयोदीपिकाहस्तारात्रौतमसिदारुणे ११ ययुर्विविधशस्त्रौघान्संपतंतोमहाबलाः ॥ द्वारकांवीर्यसंपन्नामहाघोरांनृपोत्तमाः १२
रथंमहांतमारुह्यशस्त्रौघैश्चसमावृतम् ॥ पट्टिशासिसमाकीर्णंगदापरिघसंकुलम् १३



येनशार्ङ्गादिनानच्छेद्यतेइत्यर्थःदाप्लवनेइत्यस्यरूपम् ॥ २३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांपौंड्रनारदसंवादेद्विनवतितमोध्यायः ॥ ९२ ॥ ॥ छ ॥
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

॥ १४ ॥ महावाद्योपमंमहामेघगर्जिततुल्यध्वनिंमहत्‌महांतरथं ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ सूचकान्बाह्याभ्यंतरवृत्तांतज्ञान्यादवभटान्सूर्यकान्इ

शक्तितोमरसंकीर्णध्वजमालासमाचितम्‌ ॥ किंकिणीजालसंयुक्तंशरासिप्राससंयुतम्‌ १४ महाघोरंमहारौद्रंयुगांतजलदोपमम्‌ ॥ धनुर्गदासमाकीर्णंमहा
वाद्योपमंमहत्‌ १५ अग्न्यर्कसदृशाकारंययौद्वारवतीमनु ॥ गृहीतदीपिकोराजावीर्यवान्बलवान्नृप १६ हंतुमैच्छज्जगन्नाथंवृष्णींश्चैवसमंततः ॥ आकर्ष
न्बलमुख्यांस्तान्राज्ञःसर्वान्महाद्युतिः १७ पुरद्वारंसमासाद्यबलंसंस्थाप्ययत्नतः ॥ इदंप्रोवाचराजातुनृपान्सर्वानवस्थितान्‌ १८ ताड्यतामत्रभेरीतुना
मविश्राव्यमामकम्‌ ॥ युध्यतांयुध्यतामत्रदेयंवाप्रतिदीयताम्‌ १९ आगतःपौंड्रकोराजायुद्धार्थीवीरवत्तरः ॥ हंतुकामःसमग्रान्वःकृष्णबाहुबलाश्रयान्‌ ॥
२० इतितेप्रेषितासर्वेसमीयुःसूचकान्बहून्‌ ॥ दीपिकाश्चप्रदीप्यंतेबह्वयःशतसहस्रशः २१ इतश्चेतश्चराजानोयुद्ध्यंतेयुद्धलालसाः ॥ पुरींतेपुरतस्तत्रक्षत्रि
याःशस्त्रिणस्तथा २२ सिंहनादंप्रकुर्वंतःशस्त्रधारासमाकुलाः ॥ कुतोयंवृष्णिप्रवरःकुतोराजागजत्पतिः २३ कुतोयंसात्यकिर्वीरःकुतोहार्दिक्यएवच ॥ कुतो
नुबलभद्रश्चसर्वयादवसत्तमः ॥ इत्येवंकथयंतोवैराजानःसर्वएवते २४ आदायशस्त्राणिबहूनिसर्वतःशरांश्चचापानिबहूनिसर्वे ॥ युद्धायसन्नाहनिबद्धशो
ययुर्हरेःपुरींद्वारवतींनृपोत्तमाः २५ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपौंड्रकवधेत्रिनवतितमोऽध्यायः ९३ ॥ ॥ छ ॥ ॥ वै
शंपायनउवाच ॥ ततश्चयादवाःसर्वेदृष्ट्वासैनिकसंचयम्‌ ॥ रात्रौचव्यसनंप्राप्तंमहाशस्त्रसमाकुलम्‌ १ महावातसमुद्भूतंकल्पांतेसमरोपमम्‌ ॥ सन्नद्धाःसम
पद्यंतशस्त्रिणोयुद्धलालसाः २ गृहीतदीपिकाःसर्वेयादवाःशस्त्रयोधिनः ॥ सात्यकिर्बलभद्रश्चहार्दिक्योनिशठस्तथा ३ उद्धवोथमहाबुद्धिरुग्रसेनोमहा
बलः ॥ अन्येचयादवाःसर्वेकवचप्रग्रहेरताः ४ समस्तयुद्धकुशलारात्रौसन्नाहयोधिनः ॥ शस्त्रिणःखड्गिनश्चैवसर्वेशस्त्रसमाकुलाः ५ युद्धायसमपद्यंतबह
वोबाहुशालिनः ॥ रथिनोगदिनश्चैवसादिनःसायुधास्तथा ६ नित्ययुक्तामहात्मानोधन्विनःपुरुषोत्तमाः ॥ निर्ययुर्नगरात्तूर्णंदीपिकाभिःसमंततः ७ कुतः
पौंड्रकइत्येवंवदंतःसर्वसात्वताः ॥ दीपिकादीपितोदेशोनिस्तमःसमपद्यत ८ ततोवितिमिरोदेशःसमंतात्प्रत्यपद्यत ॥ युद्धंसमभवद्घोरंवृष्णिभिःशत्रुभिः
सह ९ ततोमहान्समभवत्सन्नादोरोमहर्षणः ॥ हयाहयैःसमायुक्तागजाश्चगजयूथपैः १० रथारथैःसमायुक्ताःसादिभिःसादिनस्तथा ॥ खड्गिनःखड्गिभिः
सार्द्धंगदिभिर्गदिनस्तथा ११ परस्परव्यतीकारोरणआसीत्सुदारुणः ॥ महाप्रलयसंक्षोभःशब्दस्तेषांमहात्मनाम्‌ १२

तिपाठेसूर्यप्रतिकृतींस्तत्तुल्यान्यदून्‌ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ निबद्धानिबद्धइतिनिबद्धशःसर्वेसन्नाहनिबद्धाइत्यर्थः ॥ २५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशे
भविष्यपर्वणिटीकायांत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

 धावंतःप्रहरंत्येतान्हंत्येतान्सर्वतोनृपान् ॥ अयमेषमहाबाहुःखड्गीपततिवीर्यवान् १३ अयमेषशरोघोरोवर्ततेतिसुदारुणः ॥ गदीचायंमहावीर्यःसर्वान्नो
बाधतेनृपः १४ अयंरथीशरीचापीगदीतूणीतनुत्रवान् ॥ यादृशःसर्वतोयातिकुंतपाणिरयंबली १५ अयमत्रमहाशूलीसंश्रितःसर्वतोदिशम् ॥ गजोयंस 
विषाणाग्रोवर्ततेसर्वतःप्रति १६ अतिसर्वत्रगःशूरोवेगवान्वातसन्निभः ॥ शरान्छरैःसमाहंतिदंडान्दंडैर्जगत्पते १७ कुंतान्कुंतैःसमाजघ्नुर्गदाभिश्चगदास्त
था ॥ परिघान्परिघैःसार्द्धंशूलाञ्छूलैःसमंततः १८ एवंतेषांमहाराजकुर्वतांरणमुत्तमम् ॥ संग्रामःसुमहानासीच्छब्दश्चापिमहानभूत् १९ भूतानिसुब
हून्याजौशब्दवंतिमहांतिच ॥ प्रादुरासन्सहस्राणिशंखानांभीमनिःस्वनः २० रात्रौप्रादुरभूच्छब्दःसंग्रामेरोमहर्षणः ॥ वर्तमानेमहायुद्धेवृष्णीनांचैवतैःसह
२१ केचिद्धस्ताःसमापेतुःपृथिव्यांपृथिवीक्षितः ॥ केचित्पतिताश्लिष्टाश्वविप्रकीर्णशिरोधराः २२ पेतुरुर्व्यांमहावीर्याराजानःशस्त्रपाणयः ॥ केचिच्छिन्नव
र्माणःसमापेतुःसहस्रधा २३ परस्परंसमाश्रित्यपरस्परवधैषिणः ॥ न्यस्तशस्त्रामहात्मानःसमंतात्क्षताविग्रहाः २४ पेतुर्गतासवःकेचिद्यमराष्ट्रविवर्द्ध
नाः ॥ एवंतेनिहताराजन्योधिताःसर्वएवतु २५ एतस्मिन्नंतरेशूरएकलव्योनिषादपः ॥ धनुर्गृह्यमहाघोरंकालांतकयमोपमः २६ शरैरनेकसाहस्रैरर्द
यामासयादवान् ॥ परंशतैःशराणांतुनिशितैर्मर्मभेदिभिः २७ वृष्णीनांचबलंसर्वंपोथयामाससर्वतः ॥ युद्ध्यतःशस्त्रपाणींश्चक्षात्रियान्वीर्यवत्तरान् २८
निशठंपंचविंशत्याशराणांनतपर्वणाम् ॥ सारणंदशभिर्विध्वाहार्दिक्यंपंचभिःशरैः २९ उग्रसेनंनवत्याशुवसुदेवंचसप्तभिः ॥ उद्धवंदशभिश्चैवह्यक्रूरंपंचभिः
शरैः ३० एवमेकैकशःसर्वेनिहतानिशितैःशरैः ॥ विद्राव्ययादवींसेनांनामविश्राव्यवीर्यवान् ३१ एकलव्योयदुवृषान्वीर्यवान्बलवानहम् ॥ इदानींसा
त्यकिर्वीरःक्वयास्यतिमहाबलः ३२ मदमत्तोहलीसाक्षात्क्वयातीहगदाधरः ॥ इत्याहसिंहनादेनासिंहान्विस्मापयन्निव ३३ इतिश्रीमहाभारतेखिलेषुह
रिवंशेभविष्यपर्वणिपौंड्रकवधेचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ निवृत्तेष्वथसैन्येषुवृष्णिवीरेषुचैवहि ॥ भीतेष्वथमहा
राजन्हतेषुयुधिसर्वतः १ दीपिकासुप्रशांतासुनिःशब्देसातिसर्वतः ॥ जितमित्येवयन्मत्वावृष्णीनांबलमुत्तमम् २ ततःपौंड्रोमहावीर्योबभाषेसैनिका
न्स्वकान् ॥ शीघ्रंगच्छतराजेंद्राष्टकैःकुंतैःपुरीमिमाम् ३ कुठारैःकुंतलैश्चैवपाषाणैःसर्वतोदिशम् ॥ कर्षणस्थैःसुपाषाणैःसर्वतोयातभूमिपाः ४ भिद्यंतांप्रा
कारचयाःप्रासादाश्चसमंततः ॥ गृह्यंतांकन्यकाःसर्वादास्यश्चैवंसमंततः ५ 

॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

गृह्यंतांवसुमुख्यानिधनानिसुबहून्यथ ॥ तेतथेतिमहात्मानोराजानःसर्वएवतु ६ कुठारैःसर्वतश्चैवचिच्छिदुःपौंड्रकाज्ञया ॥ प्राकारांश्चैवसर्वत्रप्रासादान्न रसंचयान् ७ अथतत्रमहाशब्दःप्रादुरासीत्समंततः ॥ टंकेषुपात्यमानेषुप्राकारेषुमहाबलैः ८ पूर्वद्वारेमहाराजभिन्नाःप्राकारसंचयाः ॥ श्रुत्वाशब्दं महाघोरंसात्यकिःक्रोधमूर्च्छितः ९ मयिसर्वंसमारोप्यकेशवोयादवेश्वरः ॥ गतःकैलासशिखरंद्रष्टुंशंकरमव्ययम् १० अवश्यंहिमयारक्ष्यापुरीद्वारवती त्वियम् ॥ इतिसंचिंत्यमनसाधनुरादायसत्वरम् ११ रथंमहांतमारुह्यदारुकस्यमहात्मनः ॥ पुत्रेणसंस्कृतंघोरंयंताचस्वयमेवहि १२ धनुर्महत्तदादायश रांश्चाशीविषोपमान् ॥ आमुच्यकवचंघोरंशस्त्रसंपातदुःसहम् १३ अंगदीकुंडलीतूणीशरीचापीगदासिमान् ॥ ययौयुद्धायशैनेयःसंस्मरन्केश वंवचः १४ दीपिकादीपितेदेशेययौसात्यकिरुत्तमः ॥ तथैवबलदेवोपिरथमारुह्यभास्वरम् १५ गदीशरीमहावीर्यःप्रायाद्रणचिकीर्षया ॥ सिंहना दंप्रकुर्वंतोमुंचंतोभैरवंरवम् १६ उद्धवोपिबलीसाक्षाद्गजमारुह्यसत्वरम् ॥ मत्तंमहारवंघोरंसंग्रामेनीतिमत्तरम् १७ ययौनीतिंविचिन्वानःपरांप्री तिंमहाबलः ॥ अन्येचवृष्णयःसर्वेययुःसंग्रामलालसाः १८ रथान्गजान्समारुह्यहार्दिक्यप्रमुखास्तथा ॥ दीपिकाभिश्चसर्वत्रपुरोवृत्ताभिरीश्वराः १९ सिंहनादंप्रकुर्वंतःस्मरंतःकेशवंवचः ॥ पूर्वद्वारंसमागम्यवृष्णयोयुद्धलालसाः २० तेसमेत्ययथायोगंस्थितास्तत्रमहाबलाः ॥ स्थितेसैन्येमहाघो रेदीपिकादीपितेपथि २१ शिनिर्वीरःशरीचापीगदीतूणीरवान्विभो ॥ वायव्यास्त्रंसमादाययोजयित्वामहाशरम् २२ आकर्णपूर्णमाकृष्यधनुःप्रव रमुत्तमम् ॥ मुमोचपरसैन्येषुशिनिर्वीरःप्रतापवान् २३ वायव्यास्त्रेणतेसर्वेतत्रस्थानरसत्तमाः ॥ विजिताह्यस्त्रवीर्येणयत्रतिष्ठतिपौंड्रकः २४ तत्र गत्वास्थिताःसर्वेनिर्धूतावातरंहसा ॥ यत्रपूर्वंस्थिताःसर्वेविद्रुताराजसत्तमाः २५ तत्रस्थित्वाचशैनेयःशरमादायसत्वरम् ॥ निशितंसर्पभोगाभंबभा षेसात्यकिस्तदा २६ क्वइदानींमहाबुद्धिःपौंड्रकोराजसत्तमः ॥ स्थितोस्तिव्यवसायेनशरीचापीमहाबलः २७ यदिद्रष्टादुरात्मानंततोहंतान्नृपाधमम् ॥ भृत्योस्मिकेशवस्याहंजिघांसुःपौंड्रकंस्थितः २८ छित्वाशिरस्तुतस्यास्यसर्वक्षत्रस्यपश्यतः ॥ बलिंदास्यामिगृध्रेभ्यःश्वभ्यश्चैवदुरात्मनः २९ को नामईदृशंकर्मचौरवच्चसमाचरेत् ॥ सुप्तेषुनिशिसर्वत्रयादवेषुमहात्मसु ३० चोरोयंसर्वथाराजानहिराजाबलान्वितः ॥ यदिशक्तोनकुर्याच्चचौर्यमे वंनृपाधमः ३१ अहोस्यबलिनोराज्ञश्चौरकार्यंप्रकुर्वतः ॥ सर्वथागमनंतस्यनहिपश्यामिसांप्रतम् ३२

इत्युक्त्वासात्यकिर्वीरःप्रजहासमहाबलः ॥ विस्फार्यसुदृढंचापंसंदधेकार्मुकेशरम् ३३ आकर्ण्यवचनंवीरःसात्यकेस्तस्यधीमतः ॥ क्वनुकृष्णःक्वगोपालः कुतःसोथप्रवर्तते ३४ स्त्रीहंतापशुहंताचक्वचस्वामीतिसेवितः ॥ सइदानींक्ववर्त्ततेतगृहीत्वाममनामतत् ३५ हंतासख्युर्महावीर्योनरकस्यमहात्मनः ॥ ममैवतातयुद्धेस्मिन्हतेतस्मिन्दुरात्मनि ३६ गच्छत्वंकामतोवीरयोद्धुंनक्षमतेभवान् ॥ अथवातिष्ठकिंचित्तुततोद्रष्टासिमेबलम् ३७ शिरस्तेपातयिष्यामिशरैर्घोरैर्दुरासदैः ॥ हतस्यतववीरेहभूमिःपास्यतिशोणितम् ३८ श्रोष्यतेसतथागोपोहतःसात्यकिरित्यपि ॥ योगर्वस्तस्यगोपस्यसर्वदावर्त्तेमहान् ३९ विनश्यतिसतुक्षिप्रंहतेत्वयियदूत्तम ॥ त्वयिरक्षांसमादिश्यगोपःकैलासपर्वतम् ४० गतइत्येवमस्माभिःश्रुतंपूर्वंमहामते ॥ शरंगृहाणनिशितंयदिशक्तोसिसात्यके ॥ इत्युक्त्वाबाणमादायययौयोद्धुंव्यवस्थितः ४१ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपौंड्रकवधेसात्यकिपौंड्रभाषणंनामपंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःक्रुद्धोमहाराजसात्यकिर्वृष्णिपुंगवः ॥ उवाचवचनंराजन्वासुदेवंस्मरन्निव १ अवोचदीदृशंवाक्यंवासुदेवंनृपाधमः ॥ कोनामजगतांनाथमित्थंब्रूयाज्जिजीविषुः २ मृत्युस्त्वांसर्वथायातिवदंतंतादृशंवचः ॥ जिह्वातेशतधादीर्याद्वदतस्तादृशंवचः ३ एषतेपातयिष्यामिशिरःकायाच्चपौंड्रक ॥ यन्नामवासुदेवेतितवसंप्रतिवर्तते ४ यावत्पततिकायात्तेशिरस्तावत्प्रवर्त्तते ॥ सएवश्वोनभगवान्वासुदेवोभविष्यति ५ एकएवजगन्नाथःकर्त्तासर्वस्यसर्वगः ॥ दुरात्मन्सर्वथादेवोभविष्यतिनसंशयः ६ एषतेहंशिरःकायात्पातयिष्यामिराजक ॥ यदसौभगवान्विष्णुर्नागमिष्यतिसांप्रतम् ७ अस्त्रवीर्यंबलंचैवसर्वंदर्शयसांप्रतम् ॥ नातःपरतरंराजन्वीर्यंचतववर्त्तते ८ सर्वंदर्शययत्नेनस्थितोस्मिव्यवसायवान् ॥ शरीचापीगदीखड्गीसर्वथाहमुपस्थितः ९ नैतन्नगरमायासीःसत्येनैतद्ब्रवीम्यहम् ॥ सर्वथाकृतकृत्योस्मिदृष्ट्वात्वांवासुदेवकम् १० तवांगंतिलशःकृत्वाश्वभ्योदास्थामिराजक ॥ इत्युक्त्वाबाणमादायवासुदेवंमहाबलः ११ आकर्णपूर्णमाकृष्यविव्याधनिशितंशरम् ॥ सतेनविद्धोयदुनावासुदेवःप्रतापवान् १२ वमच्छोणितमत्युष्णमंगान्नेत्रान्नृपोत्तम ॥ ततश्चक्रोधनृपतिर्वासुदेवःप्रतापवान् १३ नवभिर्दशभिश्चैवशरैःसन्नतपर्वभिः ॥ विव्याधसात्यकिंराजानदंश्चबहुधाकिल १४

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ प्रवर्ततेतवनामेतिशेषःसएवत्वंश्वोनभविष्यतिमरिष्यति ॥ ५ ॥ ६ ॥ ७ ॥ राजन्कुत्सितराजन् ॥ ८ ॥ ९ ॥ नायासीःनागतोभूःतर्हिनैतद्ब्रवीमितदायतःआगतोसिअतःसत्यमेवममवचनमित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १७ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ शरवान्सर्वतःशरैःसह ॥ ३१ ॥

ततोनाराचमादायनिशितंयमसंनिभम् ॥ धनुराकृष्यभगवान्वासुदेवोनृपोत्तम १५ विव्याधसात्यकिंभूयोनिशिप्रह्लादयन्स्वकान् ॥ नाराचेनसमाविद्धः सात्यकिःसत्यसंगरः १६ ललाटेसुदृढंवीरोवृष्णीनामग्रणीस्तदा ॥ निषसादरथोपस्थेनिश्चेष्टइवसत्तमः १७ ततःसपौंड्रकोराजाविद्धादशभिराशुगैः ॥ सारथिंपंचविंशत्याहयांश्चचतुरोनृप १८ तेहयारुधिराक्तांगाःसारथिश्चसमंततः ॥ विह्वलाःसमपद्यंतवासुदेवस्यपश्यतः १९ वासुदेवोरथेचापिसिंहनादंसमादद ॥ तेननादेनतत्राभूद्विबुद्धःसात्यकिर्नृप २० विद्धान्हयांस्तथादृष्ट्वासारथिंचतथागतम् ॥ शैनेयोथमहावीर्योरुषितोनृपसत्तमः २१ अलंद्रक्ष्यामितेवीर्यमित्युक्त्वाबाणमाददे ॥ विव्याधतेनबाणेनवक्षस्येनंमहाबलः २२ ततश्चचालतेनाजौवासुदेवःशरेणह ॥ सुस्रावरुधिरंघोरमत्युष्णंवक्षसोनृप २३ रथोपस्थेपपाताशुनिश्वसन्नुरगोयथा ॥ कृत्यंचापिनजानातिकेवलंनिषसादह २४ सात्यकिस्तुरथंविद्धादशभिःसायकैस्तथा ॥ ध्वजंचिच्छेदभल्लेनवासुदेवस्यवृष्णिपः २५ हयांश्चचतुरोहत्वाबाणैःसारथिमेवच ॥ युयुधानोथराजेंद्रपौंड्रकस्यचपश्यतः २६ सारथेश्चशिरःकायादाहरत्सरथात्तदा ॥ रथग्रंथिंचचिच्छेदहयाश्चव्यसवोभवन् २७ चक्रंचतिलशःकृत्वाबाणैर्दशभिरंहसा ॥ जहासविपुलंराजन्वासुदेवंमहाबलः २८ ततःपरंमहत्प्रायंसात्यकिर्वृष्णिनंदनः ॥ शब्दंकृत्वाबलीसाक्षात्सर्वक्षत्रस्यपश्यतः २९ शरैःसप्ततिसंख्याकैरर्दयामाससत्वरम् ॥ तेशराःशलभाकारानिपेतुःसर्वशस्तदा ३० शिरस्तःपार्श्वतश्चैवपृष्ठतःपुरतस्तथा ॥ केवलंधैर्यनिचयस्तृषार्तःशरवान्यथा ३१ यथामनस्वीरिक्तश्चतथातिष्ठतिपौंड्रकः ॥ ततश्चुक्रोधबलवान्वासुदेवःप्रतापवान् ॥ ३२ अर्धचंद्रंसमादायविव्याधयुधिसात्यकिम् ॥ विद्धासप्तभिरायांतंक्रोधेनप्रस्फुरन्निव ३३ विद्धोथसात्यकिस्तेनशरैःपंचभिराशुगैः ॥ चापंचिच्छेदपौंड्रस्यसिंहनादंव्यनीनदत् ३४ वासुदेवोगदांगृह्यभ्रामयित्वापदात्पदम् ॥ त्वरितंपातयामाससात्यकेर्वक्षसिप्रभो ३५ सव्येनतांसमाकृष्यकरेणयदुनंदनः ॥ शरंप्रगृह्यविव्याधसात्यकिर्युधिपौंड्रकम् ३६ तमंतरेगृहीत्वाशुवासुदेवःप्रतापवान् ॥ शक्तिभिर्दशभिश्चैवसात्यकिंनिजघानह ३७ ताभिर्विद्धोरणेवीरःसात्यकिःसत्यसंगरः ॥ अपास्यधनुरन्यत्तद्धनुरादायसत्वरम् ॥ आजघानतदावीरोवृष्णीनामग्रणीर्नृपः ॥ ३८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांपौंड्रकवधेषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

मनस्वीउदारःरिक्तःनिर्धनःसत्पात्रआगतइतिशेषः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ छ ॥ ॥ छ ॥

११२ ॥ वैशंपायनउवाच ॥ ततःक्रुद्धोगदापाणिःसात्यकिर्वृष्णिनंदनः ॥ वासुदेवंजघानाशुगदयातीक्ष्णयानृप १ सात्यकिंवासुदेवस्तुगदयाभ्यहनद्बली ॥ अ०९७
तावुद्यतगदौवीरौशुशुभातेसुदारुणौ २ दृप्तौवनेयथासिंहौपरस्परवधैषिणौ ॥ ततःससात्यकिःक्रुद्धःसव्यंमंडलमागमत् ३ दक्षिणंवासुदेवस्तुतंजघानस्त
नांतरे ॥ युयुधानोथवीरस्तुबाह्वोर्मध्यमताडयत् ४ दृढंसताडितोवीरोजानुभ्यामपतद्भुवि ॥ ततउत्थायवीरस्तुललाटेभ्यहनद्गदाम् ५ विषण्णःकिंचि
दास्थायततउत्थायसत्वरम् ॥ गदयाभ्यहनद्वीरःसात्यकिःपौंड्रसत्तमम् ६ वासुदेवोबलिर्वीरःसाक्षान्मृत्युरिवापरः ॥ जघानगदयावृष्णिंनिर्दहन्निवचक्षु
षा ७ सतयाताडितोवृष्णिर्गदयाबाहुमुक्तया ॥ आलंब्यभूमिंसहसामृत्योरंकगतोयथा ८ संज्ञांपुनःसमालंब्यपाणिभ्यांदृढमेवच ॥ गदांतस्यमहाराजगृ
हीत्वाप्रग्रहेणह ९ द्विधाकृत्वामहागुर्वींगदांकालायसींशुभाम् ॥ उत्सृज्यसहसावीरःसिंहनादंव्यनीनदत् १० ततउत्सृज्यराजातुवासुदेवोमहाबलः ॥ सव्ये
नसात्यकिंगृह्यदक्षिणेनकरेणह ११ मुष्टिंकृत्वामहाघोरांवासुदेवःप्रतापवान् ॥ ताडयामासमध्येतुस्तनयोःसात्यकेर्नृप १२ शैनेयोवृष्णिवीरस्तुगदामुत्सृज्य
सत्वरम् ॥ तलेनाभ्यहनद्वीरोवासुदेवंरणाजिरे १३ तलेनवासुदेवोपिसात्यकिंसत्यसंगरम् ॥ तयोरेवंमहाघोरंतलयुद्धंप्रवर्तत १४ जानुभ्यांमुष्टिभिश्चैव
बाहुभ्यांशिरसातदा ॥ उरसोरःसमाहत्यजानुभ्यांजानुनीतथा १५ कराभ्यांकरमाहत्यतौयुद्धंसंप्रचक्रतुः ॥ तालयोस्तत्रराजेंद्रवृक्षयोःसंनिकर्षयोः १६
वनेयथानिरुत्पन्नस्तथैवाभून्महास्वनः ॥ ताबाजौप्रथितौवीरावुभौपौंड्रकसात्यकी १७ निशिस्तिमितमूकायांशस्त्रंत्यक्त्वामहाबलौ ॥ युयुधातेमहारंगे
मल्लौद्वाविवविश्रुतौ १८ उभेसेनेमहाराज्ञोःसंशयंजग्मतुस्तदा ॥ किंनुस्यात्सात्यकिर्वीरोहतस्तेनभविष्यति १९ आहोस्विद्वासुदेवस्तुहतस्तेनमहात्म
ना ॥ अद्यैवेतौमहावीरौपरस्परवधैषिणौ २० युध्यमानौमहावीरौतदास्वर्गंगमिष्यतः ॥ अन्यथानोपरम्येतांयुद्धाद्वीरौसुनिश्चितौ २१ अहोवीर्यमहोधैर्य
मेतयोर्बलशालिनोः ॥ एतौमहाबलौलोकेएतौप्रकृतिसत्तमौ २२ नैवयुद्धंमहाघोरमासीद्देवासुरेष्वपि ॥ नश्रुतोनचवादृष्टःसंग्रामोयंकदाचन २३
एतेवैसैनिकाब्रूयुःसेनयोरुभयोरपि ॥ रात्रौनिशीथेमेघौघेदृष्ट्वायुद्धंसुदारुणम् २४ अथतौबाहुभिर्वीरौसंनिपेततुरंजसा ॥ दशभिर्मुष्टिभिर्जघ्नेसात्यकिः
पौंड्रकंतदा २५ पंचभिःसात्यकिंपौंड्रःसमाजघ्नेमहाबलः ॥ तयोश्चटचटाशब्दोब्रह्मांडक्षोभणोमहान् ॥ प्रादुरासीत्तुसर्वत्रसर्वान्विस्मापयन्निव २६ ११२
इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपौंड्रकवधोनामसप्तनवतितमोऽध्यायः ९७ ॥ ॥ ध ॥

एतस्मिन्निति ॥ १ ॥ २ ॥ ३ ॥ दशतालप्रमाणतः दशप्रादेशसंमितम् ॥ ४ ॥ ५ ॥ माधवोमधुवंश्यः माधवाग्रजोलक्ष्मीपतेर्ज्येष्ठभ्राता ॥ ६ ॥ ७ ॥८॥९॥ १० ॥

वैशंपायनउवाच ॥ ॥ एतस्मिन्नंतरेक्रुद्धएकलव्योनिषादपः ॥ बलभद्रमभिक्षिप्रंधनुरादा यसत्वरम् १ नाराचैर्दशभिर्विध्वाबाणैश्चदशभिःपरैः ॥ चिच्छेदधनुरद्धंतत्सर्वक्षत्रस्यपश्यतः २ सूतंदशभिराहत्यरथंत्रिंशद्भिरेवच ॥ ध्वजंचिच्छेदभल्लेननिषादस्यजगत्पतिः ३ ततःपरंमहच्चापंनिषादोवीर्यसंमतः ॥ दृढमौर्व्यासमायुक्तंदशतालप्रमाणतः ४ कामपालंशरेणाशुजघानजनमध्यतः ॥ बलदेवोमहावीर्यःसर्पशेषइवश्वसन् ५ दशभिस्तद्धनुर्दिव्यंशरैःसर्पसमैर्बलः ॥ चिच्छेदमुष्टिदेशेतुमाधवोमाधवाग्रजः ६ एकलव्योनिषादेशःखड्गमादायसत्वरः ॥ प्राहिणोद्बलमादायनिशितंघोरविग्रहम् ७ तमंतरेपटुर्वीरोवृष्णिवीरःप्रतापवान् ॥ तिलशःपंचभिर्बाणैश्चकारयदुनंदनः ८ ततोपरंमहत्खड्गंसर्वकालायसंशुभम् ॥ प्राहिणोत्सारथेःकायमालोक्याथनिषादजः ९ तंचापिदशभिर्वीरोमाधवोयदुनंदनः ॥ बाह्वोरंतरयोश्चैवनिर्बिभेदमहारणे १० ततःशक्तिसमादायघंटामालाकुलांनृपः ॥ निषादोबलदेवायप्रेषयित्वामहाबलः ११ सिंहनादंमहाघोरमकरोत्सनिषादपः ॥ साशक्तिःसर्वकल्याणीबलदेवमुपागतम् १२ उत्पतंतींमहाघोरांबलभद्रःप्रतापवान् ॥ आदायाथनिषादेशंसर्वान्विस्मापयन्निव १३ तथैवतंजघानाशुवक्षोदेशेसमाधवः ॥ सतयाताडितोवीरःस्वशक्त्याथनिषादपः १४ विह्वलःसर्वगात्रेषुनिपपातमहीतले ॥ प्राणसंशयमापन्नोनिषादोरामताडितः १५ निषादास्तस्यराजेंद्रशतशोथसहस्रशः ॥ अष्टाशीतिसहस्राणिनि षादास्तस्ययोधिनः १६ गदिनःखड्गिनश्चैवमहेष्वासामहाबलाः ॥ शरैरनेकसाहस्रैःशक्तिभिश्चपरश्वधैः १७ गदाभिःपट्टिशैःशूलैःपरिघैःप्रासतोमरैः ॥ कुंतैरथकुठारैश्चयादवानांमहौजसाम् १८ शलभाइवराजेंद्रदीप्यमानंहुताशनम् ॥ तेशरैःपातयांचक्रूरामंराममिवापरम् १९ केचित्कुठारैराजघ्नुःकेचित्कुंतैःपरश्वधैः ॥ गदाभिःकेचिदाघ्नंतिशक्तिभिश्चतथापरे २० निजघ्नुःसहसारामंस्फुरंतंपावकंयथा ॥ ततःक्रुद्धोहलीसाक्षाद्बलमुद्यम्यसत्वरम् २१ सर्वानाकर्षयामासमुशलेनाहिपीडयन् ॥ तेहन्यमानाराजेंद्रनिषादाःपर्वताश्रयाः २२ निपेतुर्धरणीपृष्ठेशतशोथसहस्रशः ॥ क्षणेनतन्महाराजहत्वासर्वान्महाबलान् २३ सिंहवद्व्यनदंस्तत्रतस्थौरामोमहाबलः ॥ ततोरात्रौमहाघोराःपिशाचाःपिशिताशनाः २४ आकृष्यमांसयूथानिभक्षयंतःसमासते ॥ पिबंतःशोणितंकोष्ठात्संछिद्यचशवंबहु २५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिएकलव्यसैन्यवधोनामाष्टनवतितमोऽध्यायः ९८ ॥ ॥ छ ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ इतिश्रीमहाभारतेहरिवंशेभाविष्यपर्वणिएकलव्यसैन्यवधोनामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ छ ॥

११३ ॥ वैशंपायनउवाच ॥ क्रव्यादाःसर्वएवाशुभक्षयंतस्तदाशवम् ॥ हसंतौविविधंघोरंनादयंतोवसुंधराम् १ राक्षसाश्चपिशाचाश्चपिबंतःशोणितंबहु ॥ अ०९९
आशिखंभुंजतेराजञ्छवस्यपिशिताशनाः २ नृत्यंतिस्मतदाराजन्नगर्योरणतोषिताः ॥ काकाबलाकागृध्राश्चश्येनागोमायवस्तथा ३ भक्षयंतःप्रवर्तंते
राक्षसाश्चैवदारुणाः ॥ एतस्मिन्नंतरेवीरोनिषादोलब्धसंज्ञकः ४ हतान्सर्वान्समालोक्यनिषादान्नगचारिणः ॥ गदामादायकुपितोराममेवजगामह ५
जघानगदयाराजञ्छत्रदेशेनिषादपः ॥ ततोरामोगदीराजन्निषादंबाहुशालिनम् ६ आजघ्नेगदयाक्रूरंमदमत्तोहलायुधः ॥ तयोश्चतुमुलंयुद्धंगदाभ्यां
समवर्तत ७ आकाशेशब्दआसीत्तुतयोर्युद्धेमहाभुज ॥ समुद्राणांयथाघोषःसर्वेषांसन्निगच्छताम् ८ कल्पक्षयेमहाराजशब्दःसुतुमुलोभवत् ॥ क्षोभि
तोनागराजश्चनागाःक्षोभंसमाययुः ९ पृथिवीचांतरिक्षंचसर्वंशब्दमयंबभौ ॥ ततःसपौंड्रकोराजासात्यकिंवृष्णिनंदनम् १० गदयैवजघानाशुसत्वरं
रणकोविदः ॥ युयुधानोबलीराजन्वासुदेवंजघानह ११ तयोश्चतुमुलःशब्दःप्रादुरासीन्महारणे ॥ चतुर्णांयुध्यतांराजन्परस्परवधैषिणाम् १२ ब्रह्मां
डक्षोभणोराजञ्छब्दआसीत्सुदारुणः ॥ ततोरजःप्रादुरभूत्तस्मिन्संग्राममूर्द्धनि १३ तारकानिष्प्रभाराजंस्तमस्येवंक्षयंगते ॥ उषसिप्रतिबुद्धायांत
तोनिःशेषतांययौ १४ उदितोभगवान्सूर्यश्चंद्रश्चक्षयमाययौ ॥ तयोर्युद्धंप्रादुरभूच्चतुर्णांबाहुशालिनाम् ॥ देवासुरसमंराजन्नुदितेभास्करेमहत् १५
॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिपौंड्रकयुद्धेनवनवतितमोऽध्यायः ॥ ९९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रभातेविमलेभग
वान्देवकीसुतः ॥ गंतुमैच्छज्जगन्नाथःपुरंबदरिकाश्रमात् १ नमस्कृत्यमुनीन्सर्वान्ययौद्वारवतींनृप ॥ आरुह्यगरुडंविष्णुर्वेगेनमहताप्रभुः २ सुमहा
ञ्छुश्रुवेशब्दस्तेषांयुद्धंप्रकुर्वताम् ॥ गच्छतादेवदेवेनपुरींद्वारवतींनृप ३ अचिंतयज्जगन्नाथःकोन्वयंशब्दउत्थितः ॥ संग्रामसंभवोघोरोआर्यशैनेयसं
युतः ४ व्यक्तमागतवान्पौंड्रोनगरींद्वारकामनु ॥ तेनयुद्धंसमभवत्पौंड्रकेनदुरात्मना ५ यदूनांवृष्णिवीराणांयुद्ध्यतामितरेतरम् ॥ शब्दोयंसुमहान्व्यक्तो
नात्रकार्याविचारणा ६ इत्येवंचिंतयित्वातुदध्मौशंखंमहारवम् ॥ पांचजन्यंहरिःसाक्षात्प्रीणयन्वृष्णिपुंगवान् ७ रोदसीपूरयामासतेनशब्देनकेशवः ॥
यादवावृष्णयश्चैवश्रुत्वाशंखस्यतेरवम् ८ व्यक्तमायातिभगवान्पांचजन्यरवोह्ययम् ॥ इतितेमेनिरेराजन्वृष्णयोयादवास्तथा ९ निर्भयाःसमपद्यंतवृ
ष्णयोयादवाश्चते ॥ तस्मिन्नेवक्षणेदृष्टस्ताक्ष्यश्चतपतांवरः १० ११३

॥ ११ ॥ स्तुतंतैरेवसुतादिभिः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ क्रियतांकरोतु ॥ २५ ॥ २६ ॥

ततश्चदेवकीसूनुर्दृष्टस्तैर्यादवेश्वरः ॥ सूताश्चमागधाश्चैवपुरोयांतिजगत्पतेः ११ स्तुत्यास्तुतंहरिंविष्णुमीश्वरंकमलेक्षणम् ॥ गताश्चयादवाःसर्वेपरिवव्रुर्ज
नार्दनम् १२ कृष्णस्तुगरुडंभूयोगच्छत्वंनाकमुत्तमम् ॥ इत्युक्त्वागरुडंविष्णुर्विसृज्ययदुनंदनः १३ दारुकंपुनराहेदंरथमानयमेप्रभो ॥ सतथेतिप्रतिज्ञा
यरथमादायसत्वरम् १४ रथोयंभगवन्देवकिमतःकृत्यमस्तिमे ॥ इत्युक्त्वारथमादायप्रणम्याग्रेस्थितोहरेः १५ गतेथगरुडेविष्णूरथमारुह्यसत्वरम् ॥ य
त्रयुद्धंसमभवत्तत्रयातिस्मकेशवः १६ तत्रगत्वामहाराजयुध्यतांचमहात्मनाम् ॥ पांचजन्यंमहाशंखंदध्मौयदुवृषोत्तमः १७ पौंड्रोथवासुदेवस्तुकृष्णं
दृष्ट्वारणोत्सुकम् ॥ सात्यकिंपृष्ठतःकृत्वावासुदेवमुपागमत् १८ क्रुद्धोथसात्यकीराजन्वारयामासपौंड्रकम् ॥ नगंतव्यमितोराजन्नेषधर्मःसनातनः १९
जित्वामांगच्छराजेंद्रपरंयोद्धुंमहारणे ॥ क्षत्रियोसिमहावीरस्थितेमयिरणोत्सुके २० एषतेगर्वमखिलंनाशयिष्यामिसंयुगे ॥ इत्युक्त्वाचाग्रतस्तस्थौ
गच्छतोयादवेश्वरः २१ पौंड्रस्यशिनिनप्तातुपश्यतःकेशवस्यह ॥ अवज्ञायशिनेःपौत्रंकृष्णमेवजगामह २२ निर्भर्त्स्यसहसाभूयःसात्यकिःक्रोधमू
र्च्छितः ॥ गदयाप्राहरत्पौंड्रंवासुदेवस्यपश्यतः २३ यथाप्राणंयथायोगंसात्यकिःसत्यविक्रमः ॥ दृष्ट्वाथभगवानेवंसात्यकिंप्रशशंसह २४ निवा
र्यसात्यकिंकृष्णोयथेष्टंक्रियतामसौ ॥ उपारमद्यथायोगंसात्यकिःकृष्णवारितः २५ सततःपौंड्रकोराजावासुदेवमुवाचह ॥ भोभोयादवगोपालइदानीं
क्वगतोभवान् २६ त्वांद्रष्टुमथसंप्राप्तोवासुदेवोस्मिसांप्रतम् ॥ हत्वात्वांसबलंकृष्णबलैर्बहुभिरन्वितः २७ अहमेकोभविष्यामिवासुदेवोमहीतले ॥ य
च्चक्रंतवगोविंदप्रथितंसुप्रभंमहत् २८ अनेनतवचक्रेणपीडितोस्मिचतद्रणे ॥ चक्रमस्तीतितद्वीर्यंतवमाधवसांप्रतम् २९ नाशयिष्यामितत्सर्वंसर्वक्षत्रस्य
पश्यतः ॥ शार्ङ्गीतिमांविजानीहिनत्वंशार्ङ्गीतिशिष्यते ३० (शंखमस्तीतितद्वीर्यंतवमाधवसांप्रतम्)॥ शंखीचाहंगदीचाहंचक्रीचाहंजनार्दन ३१ मामेव
हिसदान्नूयुर्जानंतोवीर्यशालिनः ॥ आदौत्वंबलवद्वृद्धान्हत्वास्त्रीबालकान्बहून् ३२ गाश्चहत्वामहागर्वस्तवसंप्रतिवर्त्तते ॥ तत्तेहंव्यपनेष्यामियदितिष्ठ
सिमत्पुरः ३३ शस्त्रंगृहाणगोविंदयदियोद्धुंव्यवस्थितः ॥ इत्युक्त्वाबाणमादायतस्थौपार्श्वेजगत्पतेः ३४ एतद्वचनमाकर्ण्यवासुदेवेनभाषितम् ॥ स्मि
तंकृत्वाहरिःकृष्णोबभाषेपौंड्रकंनृपम् ३५ कामंवदनृपत्वंहिपातकयस्मिसदानृप ॥ गोघातीबालघातीचस्त्रीहंतासर्वथानृप ३६

॥ २७ ॥ २८ ॥ पीडितोस्मि त्वदीयस्यचक्रस्यनाशादितिभावः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ गोघातीवृषभासुरवधात्बालघातीपङ्गुर्भाणां
कंसद्वाराघातनात् ॥ ३६ ॥

महंमम ॥ ३७ ॥ ३८ ॥ ३९ ॥ वृत्ततः वर्तुलत्वेन ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांकृष्णपौंड्रकयु

चक्रीभवगदीराजञ्छार्ङ्गीचसततंभव ॥ नामधेयंनृथामह्यंवासुदेवेतिचप्रभो ३७ शार्ङ्गीचक्रीगदीशंखीत्येवमादिनृथामम ॥ किंतुवक्ष्यामिकिंचित्तुशृणु
ष्वयदिमन्यते ॥ क्षत्रियाबलिनोयेतुस्थितेमयिजगत्पतौ ३८ तथानुब्रुवतेत्वांहिजीवत्येवमयिप्रभो ॥ यत्तेचक्रंमहाघोरमसुरांतकरंमहत् ३९ तत्तुल्यं
ममचक्रंतुवृत्ततोनतुवीर्यतः ॥ आयुधेष्वथसर्वत्रशब्दसादृश्यमस्तिते ४० गोपोहंसर्वदाराजन्प्राणिनांप्राणदःसदा ॥ गोप्तासर्वेषुलोकेषुशास्तादुष्टस्यसर्व
दा ४१ कत्थनंसर्वकार्येहिजित्वाशत्रून्नृपाधम ॥ अजित्वाकिंभवान्ब्रूतेस्थितेमयिचशास्त्रिणि ४२ हत्वामांब्रूहिराजेंद्रयदिशक्तोसिपौंड्रक ॥ स्थितोहं
चक्रमाश्रित्यरथीचापीगदासिमान् ४३ रथमारुह्ययुद्धायसन्नद्धोभवमानद ॥ इत्युक्त्वाभगवान्विष्णुःसिंहनादंव्यनीनदत् ४४ ॥ ॥ इतिश्रीम
हाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकै०कृष्णपौंड्रकयुद्धंनामशततमोऽध्यायः ॥ १०० ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ततःशरंसमादायवासु
देवःप्रतापवान् ॥ पौंड्रंजघानसहसानिशितेनशरेणह १ पौंड्रोथवासुदेवस्तुशरैर्दशभिराशुगैः ॥ वासुदेवंजघानाशुवार्ष्णेयंवृष्णिनंदनम् २ दारुकंपंच
विंशत्याहयान्दशभिरेवच ॥ सप्तत्यावासुदेवंतुयादवंवासुदेवकः ३ ततःप्रहस्यसुचिरंकेशवःकेशिसूदनः ॥ दृष्टोसावितिमनसासंपूज्ययदुनंदनः ४ आकृ
ष्यशार्ङ्गंबलवान्संधायरिपुसूदनः ॥ नाराचेनसुतीक्ष्णेनध्वजंचिच्छेदकेशवः ५ सारथेश्चशिरःकायादाहृत्ययदुनंदनः ॥ अश्वांश्चचतुरोहत्वाचतुर्भिःसा
यकोत्तमैः ६ रथंराज्ञःसमाहत्यतदोभौपार्ष्णिसारथी ॥ चक्रंचतिलशःकृत्वाहसन्किंचिदिवस्थितः ७ पौंड्रकोवासुदेवस्तुरथादुत्प्लुत्यसत्वरः ॥ आदा
यनिशितंखड्गंप्राहिणोत्केशवायसः ८ सखड्गंशतधाकृत्वातूष्णीमासीच्चकेशवः ॥ ततःपरंमहाघोरंपरिघंकालसंमितम् ९ गृहीत्वावासुदेवायवासुदेवःप्र
तापवान् ॥ प्राहिणोद्वृष्णिवीरायसर्वक्षत्रस्यपश्यतः १० तद्द्विधाजगतांनाथश्चकारयदुनंदनः ॥ ततश्चक्रंमहाघोरंसहस्रारंमहाप्रभम् ११ त्रिंशद्भारसमा
युक्तमायसास्यममित्रहा ॥ आदायाथमहाराजकेशवंवाक्यमब्रवीत् १२ पश्येदंनिशितंघोरंतवचक्रविनाशनम् ॥ अनेनतवगोविंददर्पंदर्पवतांवर १३ अप
नेष्यामिवार्ष्णेयसर्वक्षत्रस्यपश्यतः ॥ त्वामुद्दिश्यमहाघोरंकृतमन्यद्दुरासदम् १४ यदिशक्तोहरेकृष्णदारयेदंमहास्पदम् ॥ इत्युक्त्वातच्छतगुणंभ्रामयित्वा
महाबलः १५ चिक्षेपाथमहावीर्यःपौंड्रकोनृपसत्तमः ॥ अवप्लुत्यततोदेशात्तदुत्सृज्यमहाबलः १६

द्धशततमोऽध्यायः १०० ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ आयसास्यं आयसंलोहमयंतच्चतत् आस्यंक्षेप्यंतत्
आयसास्यम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अवप्लुत्यचक्रंवंचितवान्इत्यर्थः ॥ १६ ॥

सिंहनादंमहाघोरंव्यनदद्वीर्यवांस्तदा ॥ ततोविस्मयमापन्नोभगवान्देवकीसुतः १७ अहोवीर्यमहोधैर्यमस्यपौंड्रस्यदुःसहम् ॥ इतिमत्वाजगन्नाथउत्थि तश्वरथोत्तमात् १८ ततःशिलांसमादायप्रेषयामासकेशवम् ॥ तांशिलांप्रेषयामासतस्मैयदुकुलोद्वहः १९ पौंड्रेणसुचिरंकालंविक्रीडयभगवान्हरिः ॥ ततश्वक्रंसमादायनिशितंरक्तभोजनम् २० दैत्यमांसप्रदिग्धांगंनारीगर्भविमोचनम् ॥ शातकुंभमयंघोरंदैत्यदानवनाशनम् २१ सहस्रारंशतारंतदद्भुतंदै त्यभीषणम् ॥ ऐश्वर्यवमिपरमंनित्यंसुरगणार्चितम् २२ विष्णुःकृष्णस्तथाशार्ङ्गीनित्ययुक्तःसदाहरिः ॥ जघानतेनगोविंदोपौंड्रकंनृपसत्तमम् २३ तस्य देहंविदार्याशुचक्रंपिशितभोजनम् ॥ कृष्णस्याथकरंभूयःप्रापसर्वेश्वरस्यह २४ ततःसपौंड्रकोराजागतासुःप्रापतद्भुवि ॥ निहत्यभगवान्विष्णुर्दुर्विज्ञेयगतिः प्रभुः ॥ प्रतिपेदेसुधर्मांतुयादवैःपूजितोहरिः २५ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांपौंड्रकवासुदेववधोनामैकाधिकशतत मोऽध्यायः ॥ १०१ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ निषादेशंततोरामःशक्त्यावीर्यवतांवरः ॥ आजघानस्तनद्वंद्वेसिंहनादंव्यनीनदत् १ ततःक्रुद्धोनिषादेशोराममंमत्तंमहाबलम् ॥ गदयालोकविख्यातोजघानस्तनवक्षसि २ आहतःसतुतेनाशुबलभद्रोमहाबलः ॥ उभाभ्यांचैवरामस्तुकरा भ्यांवृष्णिपुंगवः ३ गदांगृह्यमहाघोरामायांतींप्राणहारिणीम् ॥ दुद्रावाथनिषादेशःसमुद्रंमकरालयम् ४ धावत्येवंतदाराजन्निएकलव्येनिषादपे ॥ धाव त्येवंचरामोपियत्रयातोनिषादपः ५ सागरंसप्रविश्याशुगत्वायोजनपंचकम् ॥ भीतएवतदाराजन्नेकलव्योनिषादपः ६ कंचिद्वीपांतरंराजन्प्रविश्यन्य वसत्तदा ॥ ततोरामोनिषादेशंजिगाययदुनंदनः ७ तांसभांमणिरत्नाढ्यांप्रविवेशहलायुधः ॥ सात्यकिर्युद्धसंसक्तस्तांसभांप्रविवेशह ८ अन्येचयादवारा जन्यथायोगमुपस्थिताः ॥ आसीनेषुचसर्वेषुवृष्णिवीरेषुसर्वतः ९ अभिवाद्ययथायोगंवृष्णीन्सर्वांश्वकेशवः ॥ उवाचवचनंकालेभगवान्देवकीसुतः १० दृष्टं कैलासशिखरंशंकरोनीललोहितः ॥ सतुमह्यंयदुवराःप्रीतिमांश्वददौवरम् ११ तत्रदेवाःसमायातामुनयश्वतपोधनाः ॥ दृष्ट्वामांशंकरश्चैवप्रीतःस्तुत्वा समागयौ १२ अत्यद्भुतंमयादृष्टंरात्रौयादवसत्तमाः ॥ पिशाचौद्वौमहाघोरौवदंतौमामिकांकथाम् १३ मृगयांचक्रतुस्तौतुचिंतयंतौतुमांसदा ॥ दृष्ट्वामां तौतुराजेंद्राःप्रीतिमंतौतपस्विनौ १४

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांपौंड्रकवधसमाप्तौद्व्यधि



भक्तिनम्रौमहात्मानौप्रणामंचक्रतुस्तदा ॥ ततोहंसर्वथाप्रीतस्तौनीतौस्वर्गमुत्तमम् १५ तोषयित्वामहादेवंमयाचाद्यसमागतम् ॥ वैशंपायनउवाच ॥ तत
स्तेवृष्णयःसर्वेदेवदेवंशशंसिरे १६ सर्वथाकृतकृत्यास्तेवृष्णयःकेशवाश्रयाः ॥ यादवाःसर्वएवैतेस्वंस्वंजग्मुर्यथालयम् १७ अभ्यंतरेजगन्नाथःप्रविश्यहरि
रीश्वरः ॥ रुक्मिणीसत्यभामाभ्यामाचचक्षेयथाभवत् १८ तेप्रीतेप्रीतियुक्तेनकेशवेनसमन्विते ॥ एतत्तेसर्वमाख्यातंकेशवस्यविचेष्टितम् १९ शशासपृ
थिवींकृत्स्नांदुष्टान्हत्वामहाबलान् ॥ नरकंघोरकर्माणंपौंड्रकंनृपसत्तमम् २० हयग्रीवंनिशुंभंचतथासुंदोपसुंदकौ ॥ ररक्षविप्रान्देवेशोमुनीन्मुनिवरार्चि
तः २१ विप्रेभ्यश्चददौवित्तंगाश्चदत्वासकेशवः ॥ अग्निहोत्रंप्रयुंजानोब्राह्मणांश्चसुतर्पयन् २२ मुनींश्चब्रह्मचर्येणदेवान्यज्ञैरनेकधा ॥ स्वधयाचपितॄन्स
र्वान्प्रीणयन्नेवसर्वदा २३ तस्मिञ्छासतिदेवेशेराज्यंनिष्कंटकंप्रभो ॥ सुखमेवप्रजाःसर्वाजीवंतिब्राह्मणादयः २४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभ
विष्यपर्वणिकैलासयात्रायांपौंड्रकवधसमाप्तौद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ७ ॥ ॥ जनमेजयउवाच ॥ ॥ भूयएवद्विजश्रेष्ठशंखचक्रगदा
भृतः ॥ चरितंश्रोतुमिच्छामिविस्तरेणतपोधन १ नहितेतृप्तिरस्तीहशृण्वतःकेशवींकथाम् ॥ कोनुनामहरेर्विष्णोर्देवदेवस्यचक्रिणः २ शृण्वंस्तथारम
न्वापितृप्तिंयातिदिवानिशम् ॥ पुरुषार्थोयमेवैकोयत्कथाश्रवणंहरेः ३ कथमासीज्जगद्धेतोर्हंसस्यडिंभकस्यच ॥ समितिःसर्वभूतानांसदाविस्मयदायिनी ४
विचक्रस्यकथंयुद्धंदानवस्यमहात्मनः ॥ सतयोर्मित्रतांयातइत्येवमनुशुश्रुमः ५ तौसुतौवीर्यसंपन्नौशिष्यौभृगुसुतस्यह ॥ सर्वास्त्रकुशलौवीरौहरेर्लब्धव
रौकिल ६ संग्रामःसुमहानासीदित्युक्तंभवतापुरा ॥ तयोश्चनृपयोर्विप्रकेशवस्यजगत्पतेः ७ कस्यपुत्रौसमुत्पन्नौयथाभूद्विग्रहोमहान् ॥ अष्टाशीतिसह
स्राणिदानवानांतरस्विनाम् ८ बलान्यथविचक्रस्यशितशूलधराणिच ॥ आसन्युद्धेमहाराजदानवस्यमहात्मनः ९ यदूनामंतरंप्रेप्सुर्यदूनांयुद्धकांक्षया ॥
देवासुरेमहायुद्धेदेवान्जयतिदुर्धरः ॥ तद्वधार्थंसदायत्नमकरोच्चैवकेशवः १० ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्या
नेत्र्यधिकशततमोऽध्यायः १०३ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ आसीच्छाल्वेपुराजेंद्रब्रह्मदत्तोनृपोत्तमः ॥ नाम्नाराजन्सपूतात्मासर्वभूतदया
परः १ पंचयज्ञपरोनित्यंजितात्माविजितेंद्रियः ॥ ब्रह्मविद्वेदविच्चैवसदायज्ञमयःशिवः २

कशततमोऽध्यायः १०२ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपा
ख्यानेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ ७ ॥ ॥ १ ॥ २ ॥

॥ ३ ॥ ४ ॥ ५ ताभ्यांस्त्रीभ्यांसह ॥ ६ ॥ सइतितेनवैष्णवसत्रेणशंकरस्यार्चनंविष्णुशंकरयोर्वास्तवाभेदाभिप्रायेण ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३॥

तस्यभार्येमहीपालरूपौदार्यगुणान्विते ॥ बभूवतुःसुसंपन्नेअनपत्येनृपोत्तम २ सताभ्यांमुमुदेराजाशच्याशक्रइवांबरे ॥ नाम्नामित्रसहोनामसखाचासीद्द्विजो त्तमः ४ तस्यराज्ञोमहायोगीवेदवेदांततत्परः ॥ अनपत्यःसविप्रेंद्रोयथाराजाबभूवह ५ सराजासहितस्ताभ्यामर्चयामासशंकरम् ॥ पुत्रार्थंशूलिनंशर्वंद शवर्षाण्यनन्यधीः ६ सविप्रोवैष्णवंसत्रंपुत्रार्थेसमयोजयत् ॥ अर्चितस्तेनराजेंद्रशंकरोनीललोहितः ७ आत्मानंदर्शयामासस्वप्नेराजानमब्रवीत् ॥ प्री तोस्मितवभद्रंतेवरंवरयसुव्रत ८ अथराजाजगन्नाथमुवाचेदंस्मयन्निव ॥ पुत्रौममभवेतांहितथेत्युक्त्वावृषध्वजः ९ अंतर्धानंगतःशंभुःप्रतिबुद्धस्ततोनृपः सोऽपिमित्रसहोविद्वान्देवंकेशवमव्ययम् १० पंचवर्षंजगन्नाथमर्चयामासभक्तितः ॥ अर्चितस्तेनविप्रेणदेवदेवोजनार्दनः ११ पुत्रमेकंददौतस्मैस्वा त्मनासदृशंहरिः ॥ तेभार्येगर्भमाधत्तांतेजसाशंकरस्यह १२ विप्रभार्यामहाराजवैष्णवंतेजआदधत् ॥ महिष्येतेमहावीर्येपुत्रौशंकरनिर्मितौ १३ असू येतांमहीपालक्रमेणैवनृपस्यह ॥ सतयोश्चमहाराजनामकर्मादिकाःक्रियाः १४ चकारविधिवत्सर्वाविप्रेभ्योदान्महद्धनम् ॥ सचविप्रोविनीतात्मापुत्रमे कंहिलब्धवान् १५ साक्षादिवजगन्नाथंस्थितंपुत्रात्मनानृप ॥ जातकर्मादिकंसर्वंब्राह्मणःसचकारह १६ तौकुमारावयंचैवत्रयःसवयसोभवन् ॥ वेदानधी त्यतेसर्वाञ्छ्रुत्वाचान्वीक्षिकींतथा १७ धनुर्वेदेतथास्त्रेचनिपुणास्तेभवंस्तदा ॥ हंसोज्येष्ठोनृपसुतोडिभकोनंतरोभवत् १८ सचविप्रसुतोराजन्जनार्दन इतिस्मृतः ॥ अन्योन्यंमित्रतांयाताःसर्वेचैवकुमारकाः १९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिभकोत्पत्तौचतुरधिकशततमोऽ ध्यायः १०४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ हंसश्चडिभकश्चैवतपश्चर्तुंमहामतिः ॥ मनश्चक्रतुरात्मांशौशंकरस्यनृपोत्तम १ गत्वातुहिमव त्पार्श्वंतपश्चक्रतुरंजसा ॥ उद्दिश्यशंकरंशर्वंनीलग्रीवमुमापतिम् २ वीर्यास्त्रेचैवनौस्यातामित्याधायतुमानसे ॥ एकाग्रौप्रयतौभूत्वावाय्वंबुप्राशिनौनृ प ३ नमस्तेदेवदेवेतिशंकरेतिदिवानिशम् ॥ हरशर्वशिवानंदनीलग्रीवउमापते ४ वृषध्वजविरूपाक्षहर्यक्षजगतांपते ॥ भक्तप्रियगिरीशेशवासुदेव शिवाच्युत ५ सद्योजातमहादेवदेवदेवगुहाशय ॥ भूतभावनदेवेशप्रणवात्मन्सदाशिव ६ इत्यादिनामभिर्नित्यंस्तुवंतौशंकरंभवम् ॥ हृदिकृत्वाविरूपा क्षंतपस्तेपतुरंजसा ७ निर्ममौनिरहंकारौमौनव्रतसमास्थितौ ॥ वर्षाणीहतदाराजन्पंचचक्रतुरोजसा ८

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ छ ॥ ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

॥ ९ ॥ त्रियक्षःत्रिभिर्वेदैरिज्यतइति त्रियक्षःयज्ञेशः ॥ १० ॥ वरयवरतम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ भृंगिरिटी भृंगिरिटिंच ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

ततःप्रीतोभवच्छर्वस्ताभ्यांसंयमनेनच ॥ सददौदर्शनंनैजंव्याघ्रचर्मांबरोहरः ९ त्रियक्षःशंकरःशर्वःशूलपाणिरुमापतिः ॥ अग्रतःसंस्थितंशर्वंचंद्रार्द्धकृत
शेखरम् ॥ तौदृष्ट्वाप्रीतमनसौनमश्चक्रतुरंजसा १० ॥ श्रीभगवानुवाच ॥ वरंवरयभद्रंवांयथेच्छावांतथास्तुवै ॥ तावूचतुस्तदाराजन्प्रीतस्त्वंभगवन्य
दि ११ देवासुरचमूमुख्यैर्यक्षैर्गंधर्वदानवैः ॥ आवामजय्यौसर्वात्मन्नेषनौप्रथमोवरः १२ द्वितीयोनौविरूपाक्षरौद्रास्त्राणांचसंग्रहः ॥ माहेश्वरंतथारौद्र
मस्त्रंब्रह्मशिरोमहत् १३ अभेद्यंकवचंदिव्यमच्छेद्यंचापिकार्मुकम् ॥ परशुंचतथाशर्वसदारक्षार्थमेवच १४ सहायौद्वौमहादेवभूतौयुद्धेहिगच्छताम्
एवमस्त्वितिदेवेशआहभृंगिरिटीहरः १५ कुंडोदरंविरूपाक्षंसर्वप्राणिहितेरतम् ॥ युवामथचभूतेशौसहायौसततंरणे १६ संग्राममंगच्छतांघोरमेतयोर्बल
शालिनोः ॥ इत्युक्त्वाभगवाञ्छर्वस्तत्रैवांतरधीयत १७ ततस्तौवीर्यसंपन्नौहंसोडिभकएवच ॥ कृतास्त्रौशस्त्रसंपन्नौचापिनौवीर्यवत्तरौ १८ आमुक्तक
चनौवीरावजय्यौदेवदानवैः ॥ अत्यंतभक्तौदेवेशेशंकरेनीललोहिते १९ नित्योत्सवकरौदेवेभस्मोद्धूलनशोभिनौ ॥ कृतत्रिपुंड्रकौनित्यंजटायुक्तशिरोधरौ
२० रुद्राक्षार्पितसर्वांगौव्याघ्रचर्मांबरावृतौ ॥ नमःशिवायशांतायमहादेवायधीमते २१ इत्यादिभिर्महादेवंस्तुवंतौनामभिःशिवम् ॥ साक्षादिवमहादे
वौरेजतुर्जलधारिणौ २२ ततःस्वभवनंगत्वापितुःपादावगृह्यताम् ॥ पितुश्वसख्युर्बलिनौमातुश्चचरणौतदा २३ जनार्दनोपिधर्मात्माकालेनमहतानृप ॥
विद्यापारंमहाबुद्धिर्युक्तेनासावुपेयिवान् २४ सचविष्णुंहृषीकेशंपीतकौशेयवाससम् ॥ ब्रह्मतत्त्वपरोनित्यमुपास्तेविजितेंद्रियः २५ हंसश्चडिभक
श्चैवकृतदारौबभूवतुः ॥ जनार्दनोपिधर्मात्माकृतदारोबभूवह २६ सर्वेतेयज्ञनिरताःपंचयज्ञपरास्तथा ॥ स्वदारनिरताःसर्वेगुरुशुश्रूषणेरताः ॥ धर्मएव
परंश्रेयइतितेमेनिरेनृप २७ ॥ ॥ इतिश्रीम०खिलेषुहरिवंशेभ०कैलासयात्रायांहंसडिभकोपाख्यानेपंचाधिकशततमोऽध्यायः १०५ ॥ ॥ छ ॥
वैशंपायनउवाच ॥ ततःकदाचित्तौवीरौमृगयामटतुःकिल ॥ जनार्दनेनसहितौरथैरश्वैर्गजैरपि १ वनंगत्वातुतौवीरौसिंहव्याघ्रांश्चजघ्नतुः ॥ शितैर्बाणै
र्महाराजवराहानथसर्वशः २ व्यालानन्यान्मृगान्हिंस्राञ्छ्वभिश्चसहितौनृप ॥ एषआयातिविपुलोवराहोदीर्घलोचनः ३ एनंबाणेनसंछिंधियाति
चायंमृगाधिपः ॥ अयमन्योथमहिषःशृंगप्रोतसरीसृपः ४ एतेखलुमृगाःसार्द्धंशावैर्बाधंतिसर्वशः ॥ एतद्भ्रमतिसर्वत्रभीतंशशकुलंमहत् ५

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ पितुर्ब्रह्मदत्तस्यसख्युःमित्रसहस्य ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटी
कायांपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ बाधंतिबाधामनुभवंतिशावैःपोतैःसहिताः ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अनूपंसजलप्रदेशस्तेनसहितंसानूपं वीजन्मारुतवतात्मनासानूपंचेतिविग्रहः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ सत्रं यजतःअनुतिष्ठतः ॥ १७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांषडधिकशततमोऽध्यायः ॥ १०६ ॥ जनार्दनइति सदःयज्ञमंडपम् ॥ १ ॥ २ ॥ ३ ॥

शावंस्तनंपिबत्साधुनहंतव्यमिदंशुभम् ॥ गृहीतव्यमिदंसर्वैनिरुध्यश्वगणैरिह ६ इत्यादिशब्दःसुमहान्मृगयांकुर्वतांनृप ॥ क्षत्रियाणांनृपश्रेष्ठव्याधानां चैवधावताम् ७ हत्वामृगान्सुबहुशोव्याघ्रान्सिंहान्नृपोत्तमौ ॥ श्रमंचजग्मतुर्वीरौमध्यंयातेदिवाकरे ८ अलंहिमृगयास्माकंश्रमःसमुपजायते ॥ इत्यूचतुर्महाराजपुष्करंजग्मतुःसरः ९ सरःसमीपमागम्यमुनिसिद्धनिषेवितम् ॥ वीजन्मारुतसानूपंश्रमात्तत्रसुखस्थितौ १० ततोजनाःसरःसर्वेविगा ह्यश्रमकर्षिताः ॥ बिसान्प्रवालान्पद्मानांभक्षयामासुरार्तवत् ११ जनार्दनेनसहितौहंसोडिभकएवच ॥ सरःक्वचित्समाश्रित्यश्रमंसंत्यज्यतिष्ठतः १२ वि श्रम्यसरसस्तीरेतदासातेसुखंनृपौ ॥ अशृण्वतांपरंब्रह्ममुनिमुख्यैःसमीरितम् १३ मध्यंदिनंतथासर्वैःसवनंसस्वरंनृपौ ॥ ततःप्रीतौनृपौभूत्वाश्रुत्वा वेदध्वनिंतदा १४ ऐच्छेतांतौतदाद्रष्टुंयज्ञंमुनिकृतंतदा ॥ स्थापयित्वाततःसेनांसर्वांमृगसमन्विताम् १५ आदायचमहाचापेशरान्कतिचिदेवच ॥ जनार्दनस्तदावीरोहंसोडिभकएवच १६ पदातिनौमहाराजजग्मतुश्चाश्रमंकिल ॥ महर्षेःकाश्यपस्याथसत्रंवैष्णवसंज्ञिकम् ॥ यजंतोमुनिभिःसार्द्धंज पहोमपरायणैः १७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिभकोपाख्यानेमृगयावर्णनंनामषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ वैशंपायनउवाच ॥ जनार्दनश्चधर्मात्माहंसोडिभकएवच ॥ सदःप्रविश्यसत्रस्यनमश्चक्रुर्मुनीश्वरान् १ तानागतान्महात्मानोमुनयःशिष्यसंयुताः ॥ अर्घ्यपाद्यासनादीनिचक्रुःपूजांचयत्नतः २ तौनृपौसचविप्रेंद्रःसपर्यांप्रतिगृह्यच ॥ प्रीतात्मानोमहात्मानआसतेससुखंनृप ३ ततोहंसोबभाषेतान्मुनीन्संय तवाङ्नृप ॥ पिताहिनौमुनिश्रेष्ठायष्टुमैच्छत्ससाधनम् ४ गंतव्यंतत्रयुष्माभिःसत्रांतेमुनिसत्तमाः ॥ राजसूयेनयज्ञेनकृत्वादिग्विजयंवयम् ५ याजयिष्याम हेविप्राःपितरंधार्मिकंनृपम् ॥ आयांतुतत्रविप्रेंद्राःसशिष्याःसपरिच्छदाः ६ वयमद्यैवसहितौदिशोजेष्यामहेवयम् ॥ शक्तावयमिहैवैतत्कर्तुंसैनिकसंच यैः ७ आवयोःपुरतःस्थातुंनशक्तादेवदानवाः ॥ कैलासनिलयाद्देवाद्वरंलब्धाःस्मयत्नतः ८ अजय्यौशत्रुसंघानामस्त्राणिविविधानिच ॥ इत्युक्त्वाविररा मैवहंसोमदबलान्वितः ९ ॥ मुनयऊचुः ॥ यदिस्यात्तत्रगच्छामोवयंशिष्यैर्नृपोत्तम ॥ आस्महेवान्यथाराजन्नित्यूचुःकिलतापसाः १०

॥ ४ ॥ ५ ॥ सपरिच्छादाःअग्निहोत्रादिसामग्रिसहिताः ॥ ६ ॥ अहयंहयसामग्रीरहितंयथास्यात्तथाकेवलंसैनिकैःपुरुषैःसहएवंदिग्विजयाख्यंकार्यंकर्तुंशक्तावितियोजना ॥ ॥ ७ ॥ वरंलब्धाः अजेयास्मेतियोजना ॥ ८ ॥ यदिस्याद्राजसूयःतर्हितत्रगच्छामोन्यथात्रैवास्महे ॥ १० ॥

एवंकर्मनिष्ठैःसहसंवादंकृत्वानैष्कर्म्यनिष्ठायुक्तान्उच्छेत्तुंप्रवृत्ताइत्याह ततोदेशानित्यादिना ॥ ११ ॥ मंत्रब्रह्ममंत्रमयंब्रह्मप्रणवरूपं ब्रह्मसूत्रंब्रह्मविदाप्नोतिपरमित्यादितत्रनिर्दि
ष्टंयत्पदंपदनीयंवस्तुतत्रसक्ताःतत्प्राप्त्यर्थंयतमानाः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ वर्णवित्तमःवर्णविभागविदांश्रेष्ठइत्युपहासः



॥ वैशंपायनउवाच ॥ ततोदेशान्महाराजगंतुंनिश्चितमानसौ ॥ पुष्करस्योत्तरंतीरंदुर्वासायत्रतिष्ठति ११ यतयोनियताभूत्वामंत्रब्रह्मनिषेविणः ॥ ब्रह्म
सूत्रपदेसक्तास्तदर्थालोकतत्पराः १२ निर्ममानिरहंकाराःकौपीनाच्छादनव्रताः ॥ तमात्मानंजगद्योनिंविष्णुंविश्वेश्वरंविभुम् १३ ब्रह्मरूपंशुभंशांतमक्ष
रंसर्वतोमुखम् ॥ वेदांतमूर्तिमव्यक्तमनंतंशाश्वतंशिवम् १४ नित्ययुक्तंविरूपाक्षंभूताधारमनामयम् ॥ ध्यायंतंसर्वदादेवंमनसासर्वतोमुखम् १५ दुर्वास
सासदोपास्यंवेदांतैकरसंगुरुम् ॥ तर्कनिश्चिततत्वार्थाज्ञाननिर्मलचेतसः १६ हंसाःपरमहंसाश्चशिष्यादुर्वाससःप्रभो ॥ गत्वातत्रमहात्मानौतौदृष्ट्वातूर्ध्व
रेतसम् १७ दुर्वाससंमहाबुद्धिंविचिन्वानंपरंपदम् ॥ क्रुद्धोयदिसदुर्वासादग्धुंलोकानिमान्क्षमः १८ देवाअपिचयंद्रष्टुंक्रुद्धंनैवक्षमाःसदा ॥ रोषमूर्तिःसदा
यस्तुरुद्रात्माविश्वरूपधृक् १९ रक्तकौपीनवसनोहंसःपरमएवच ॥ दृष्ट्वैनंचतयोरेवंबुद्धिरासीन्महामते २० कोनामासौमहाभूतःकाषायीवर्णवित्तमः ॥
कश्चायमाश्रमोनामविहायचगृहाश्रमम् २१ गृहस्थएवधर्मात्मागृहस्थोधर्मवित्तमः ॥ गृहस्थोधर्मरूपस्तुगृहस्थोवर्णएवच २२ गृहस्थश्चसदामाताप्रा
णिनांजीवनंसदा ॥ तंविनान्येनरूपेणवर्त्ततेयोतिमूर्खवत् २३ उन्मत्तोयंविरूपोयमथवामूर्खएवच ॥ ध्यायन्निवसदाचायमास्तेवंचयितापिवा २४
किमेतेप्राकृतज्ञानाध्यायंतइतिकिंचन ॥ वयमेतान्दुरारोहानाश्रमांतरकल्पकान् २५ स्थापयिष्यामहेसर्वान्मंदबुद्धीनिमान्गृहे ॥ बलादेवद्विजानेतान्मू
ढविज्ञानतत्परान् २६ असद्ग्राहग्रहीतांश्चबालिशान्दुर्मतीनिमान् ॥ एषांशास्ताचकोमूढोनविप्रोवयमत्रह २७ धर्मेवर्त्मनिसंस्थाप्यपुनर्यास्यावनिर्वृ
तौ ॥ इतिसंचिंत्यतौवीरौविप्रेणसहितौनृप २८ जनार्दनेनराजानौमोहाद्भाग्यक्षयान्नृप ॥ समीपंतस्यराजेंद्रयतेःसंयतचेतसः २९ गत्वाचप्रोचतुरुग्रौदु
र्वाससमतींद्रियम् ॥ यतींश्चनियतान्क्रुद्धौराजानौराजसत्तम ३० ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेसप्ताधिकशतत
मोऽध्यायः ॥ १०७ ॥ ॥ छ ॥ हंसडिंभकावूचतुः ॥ ज्ञानलेशाद्विहीनात्मन्किंतेव्यवसितंद्विज ॥ कश्चायमाश्रमोविप्रभवतायःसमाश्रितः १ गृ
हमेधंपरित्यज्यकिंत्वयासाधितंपदम् ॥ दंभएवभवान्व्यक्तंशंकेनास्त्यत्रकारणम् २

सर्ववर्णबहिष्कृतइत्याशयः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ संस्थाप्यएषांशास्तारमित्यर्थात् ॥ २८ ॥ २९ ॥ ३० ॥ इतिश्रीमहाभारतोखि
लेषुहरिवंशेभविष्यपर्वणिटीकायांसप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ज्ञानलेशादिति ॥ १ ॥ दंभःदंभमूर्तिः ॥ २ ॥

॥ ३ ॥ ४ ॥ त्वद्विनेतातवशिक्षकः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३॥ अग्रः अग्र्यः ॥ १४ ॥ १५ ॥ १६ ॥ अन्यस्यज्ञानंधर्मप्रभवं धर्म
स्यफलम् युवयोर्ज्ञानंतुपापस्यविधातृरूपंपापोत्पत्तिहेतु ॥ १७ ॥ १८ ॥ १९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांहंसडिंभकोपाख्यानेटीकायां

लोकांश्चेमान्सदामूढनाशयिष्यसिनिर्घृतः ॥ एतान्सर्वान्विनेतासिनरकेपातयिष्यसि ३ स्वयंनष्टःपरान्मूर्खनाशयिष्यसियत्नतः ॥ अहोशास्ताकथंना
स्तितवमंदमतेर्द्विज ४ सर्वथात्वद्विनेताचपापोनास्त्यत्रसंशयः ॥ त्यक्त्वेममाश्रमंविप्रगृहीभवयतात्मवान् ५ पंचयज्ञान्सदाविप्रकुरुयत्नपरोभव ॥ ततः
स्वर्गपरंगत्वास्वर्गेहिसुमहत्सुखम् ६ एषश्रेयःपथोविप्रजीवितेचेत्स्पृहातव ॥ इत्युक्तवंतौधर्मात्माश्रुत्वाविप्रोजनार्दनः ७ उवाचयतिर्दृष्ट्वाप्रणम्यासौसु
नीतवत् ॥ माब्रूतामीदृशंवाक्यंराजानौमंदतेजसौ ८ अश्राव्यमीदृशंघोरंलोकयोरुभयोरपि ॥ कोवस्तुमीशोमंदात्मायदिजीवेत्सबांधवः ९ सर्वथा
कालएवायंयुवयोर्मंदचेतसोः ॥ समाप्तआयुषःशेषोब्रह्मदंडहतौयुवाम् १० एतेहियतयःशुद्धाज्ञानदीपितचेतसः ॥ ज्ञानाग्निदग्धकर्माणःप्राणान्प्राणेषुजुह्व
ति ११ ऋतेवामीदृशंवाक्यंकःसमर्थोह्यनुब्रुवन् ॥ सर्वथाज्ञातमस्माभिःसमाप्तमिहजीवितम् १२ चत्वारआश्रमाःपूर्वमृषिभिर्विहितानृपौ ॥ ब्रह्मचारी
गृहस्थश्चवानप्रस्थश्चभिक्षुकः १३ तेषामग्रश्चतुर्थोयमाश्रमोभिक्षुकःस्मृतः ॥ आस्तेतस्मिन्महाबुद्धिःसहिपुण्यतरःस्मृतः १४ नोपासिताभवद्भ्यांचवृ
द्धाःसम्यग्विनीतवत् ॥ ज्ञानंनाप्तंतपस्विभ्यस्तथाचैवंवदेतकः १५ अश्राव्यमीदृशंघोरंमयाप्राणभृतानृप ॥ किंकरिष्यामिमंदात्मन्मित्रत्वाद्भवतोनृप १६
ज्ञानंयदाप्तंभवतागुरुभ्यस्तदत्रदुःखायहिकेवलंनृप ॥ ज्ञानंहिधर्मप्रभवंयथेष्टंबलाद्धिपापस्यविधातृरूपम् १७ युवांविहाययास्येवापतेयंवाशिलातलम् ॥
पिबेयंवाविषंघोरंपतेयंवामहोर्मिषु १८ आत्मानंवात्रसंत्यक्ष्येपश्यतांशृण्वतांपुनः ॥ इत्युक्त्वाविललापैवंमाब्रूतमितितौवदन् १९ ॥ ॥ इतिश्रीमहा
भारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांहंसडिंभकोपाख्यानेष्टाधिकशततमोऽध्यायः १०८ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःक्रुद्धोथदुर्वासा
धक्ष्यन्निवतयोरसून् ॥ एकेनाक्ष्णाथदुर्वासारौद्रेणाग्नियुजासदा १ पश्यंस्तौचदुरात्मानौरोषव्याकुलितेंद्रियः ॥ कुर्वन्निवतदालोकान्भस्मभूतानिमान्नृप
२ ब्राह्मणंचक्षुषापश्यन्सौम्येनान्येनकेवलम् ॥ उवाचवचनंराजन्ध्वंसतध्वंसतेतिच ३ इतोगच्छतराजानौकिंविलंबितमाचिरम् ॥ नवांवचनसंभूतंरोषं
धारयितुंक्षमे ४ अन्यथावोमहीपालान्सर्वान्दग्धुमहंक्षमः ॥ किमतःसाहसंवक्तुंकश्चशक्नोतिमत्पुरः ५

अष्टाधिकशततमोऽध्ययः ॥ १०८ ॥ ततःक्रुद्धइति ॥ १ ॥ २ ॥ ब्राह्मणंजनार्दनंइतरान्स्वीयान्प्रतिध्वंसत इतःशीघ्रंप्रस्थानंकुरुतेतिवचनंउवाचेत्यर्थः ॥ ३ ॥ तदाह
इतोगच्छतेति भोराजानावित्यादिवाक्यांतरं ॥ ४ ॥ ५ ॥

मंदज्ञौमंदफलंगार्हस्थ्यमेवजानंतौ ॥ ६ ॥ गंतुंदेशांतरं निषेद्धुंसंन्यासधर्मादपाकष्टुम् ॥ ७ ॥ ८ ॥ हाइतीतिच्छेदः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥
॥ १३ ॥ युवयोःर्वां सज्जीवःसदितिमृत्युनास्वर्गमनुलाभादितिभावः ॥ १४ ॥ एतावतासंन्यासिद्रोहेनजरासंधोबंधुत्वंयुवयोस्त्यक्ष्यतीत्यर्थः ॥ १५ ॥ वांयुवाभ्याम् ॥

दर्पवांलोकविख्यातःशंखचक्रगदाधरः ॥ व्यपनेष्यतिमंदज्ञोकिंवोवक्ष्यामिसांप्रतम् ६ ततउत्थायधर्मात्मागंतुमैच्छद्यतीश्वरः ॥ ततोनिषेद्धुंहंसस्तंयततेस्म
यतीश्वरम् ७ तस्यबाहुंसमादायहंसोनृपवरोत्तमः ॥ कौपीनंचिच्छिदेक्रूरःकृतांतइवसत्तम ८ यतयोन्येपलायंतिदिशोदशविचेतसः ॥ कष्टंहेतिवदन्विप्रो
मित्रभावाज्जनार्दनः ९ न्यवारयद्यथाशक्तिकिमिदंसाहसंत्विति ॥ दुर्वासाःसत्यधर्मस्तुहंतुमीशोपितंततः १० मंदंमंदमुवाचेदंहंसंडिंभकमेवच ॥ शापे
नाहंसमर्थोपिहंतुंराजकुलाधमौ ११ तथापिनकरोम्यंतंयतयोह्यत्रतेवयम् ॥ योहिदेवोजगन्नाथःकेशवोयादवेश्वरः १२ शंखचक्रगदापाणिर्गर्वंवांव्यपने
ष्यति ॥ लोकेतस्मिन्यदुश्रेष्ठेरक्षत्येवंजगत्पतौ १३ युवयोःसर्वथाजीवःसज्जीवइतिमेमतिः ॥ जरासंधोपिवांबंधुःसचवक्तुंनचेच्छति १४ ईदृशंलोकविद्वि
ष्टंसहिधर्मपथेसदा ॥ एतावतासवांबंधुर्नहिभूयोभविष्यति १५ विद्वेषोह्यस्तुवांतस्यमागधस्यमहीपतेः ॥ श्रुत्वेदंवोररूपंतुसहिबंधुःसहेतचेत् १६ धर्म
नाशोभवेत्तस्यनात्रकार्याविचारणा ॥ इत्युक्त्वागच्छगच्छेतिहंसंप्राहपुनःपुनः १७ जनार्दनमुवाचेदंदुर्वासायतिसत्तमः ॥ स्वस्त्यस्तुतवविप्रेंद्रभक्तिरस्तु
जनार्दने १८ संगतिस्तवतस्यास्तुशंखचक्रगदाभृतः ॥ अद्यश्वोवापरश्वोवासाधुरेवसदाभवान् १९ नहिसाधोर्विनाशोस्तिलोकयोरुभयोरपि ॥ गच्छ
सर्वंपितुर्ब्रूहिज्ञात्वावृत्तंयथाखिलम् २० इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांहंसडिंभकोपाख्यानेदुर्वासोभाषणेनवाधिकशतत
मोऽध्यायः १०९ ॥ छ ॥ वैशंपायनउवाच ॥ ततस्तौहंसडिभकौक्रुद्धौकालेनचोदितौ ॥ शिक्यंकमंडलुंचैवद्विदलंदारुमेवच १ दंडान्पात्रविशेषांश्चछि
त्वाभित्त्वाचसर्वशः ॥ तस्मिन्देशेमहाराजव्याधैर्मांसान्यदीदहन् २ भक्षयित्वाततोदेशात्स्वपुरींतौप्रजग्मतुः ॥ जनार्दनश्चधर्मात्मास्नेहादनुययौतयोः ३
नष्टाविमावितितदासमेनेदुःखितःपरम् ॥ गतेषुतेषुसर्वेषुदुर्वासायतिसत्तमः ४ पलायनपरान्सर्वानिदंप्राहयतीश्वरान् ॥ इतोदेशाद्विनिर्गत्यपुष्करात्पुण्य
संयुतात् ५ मंदंमंदंसमाश्वास्यविश्रम्यचततस्ततः ॥ प्रविश्यद्वारकांदेवंशंखचक्रगदाधरम् ६ दृष्ट्वाचतस्मैप्रभवेवक्ष्यामोयतिसत्तमाः ॥ साहिरक्षन्
जगदिदंधर्मवर्त्मनिसंस्थितः ७

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपाख्यानेदुर्वासोभाषणंनामनवाधिकशततमोऽध्यायः ॥ १०९ ॥
ततस्ताविति द्विदलंदारुगोकणाकारंभोजनपात्रंदारुमितिपुंस्त्वमार्षं ॥ १ ॥ पात्रविशेषान्शालग्रामसंपुटादीन् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

॥ ८ ॥ पापकृतान्पापजन्मभाजः ज्ञानेषुज्ञानसाधनेषुअमानित्वादिषु ॥ ९ ॥ यानंप्रयाणं ॥ १० ॥ ११ ॥ कर्पटंकाषायवासः ॥ १२ ॥ अर्धप्रोतकपालकंअलाबुफल स्यमूलादग्रांतंद्विधाकृतस्यैकदेशः ॥ १३ ॥ १४ ॥ लोमशाःगलादधःकेशवर्जिताःउपरिकेशवर्जितावा ॥ १५ ॥ १६ ॥ एकरूपंमुख्याविग्रहंश्रीकृष्णं ॥ १७ ॥ इतिश्री

आद्योलोकगुरुर्विष्णुर्यतात्मातत्वविप्रियः ॥ उद्धृत्यकंटकान्सर्वाञ्छशासपृथिवीमिमाम् ८ सचपापान्महाघोरान्सर्वान्पापकृतान्प्रभुः ॥ रक्षेन्नसकला न्सर्वान्ज्ञानेषुनियतात्मनः ९ इदमद्यक्षमंविप्रायानमद्यविधीयताम् ॥ साहसंयत्कृतंताभ्यांपात्रभेदादिसत्तमाः १० एतत्सर्वमशेषेणदर्शयामजना र्दनम् ॥ तथेतितेप्रतिज्ञाययतयोज्ञानचक्षुषः ११ छिन्नंताभ्यांसमादायशिक्यंदारुमयंतथा ॥ द्विदलंकर्पटंचैवकौपीनमथवल्कलम् १२ कमंडलुं तथाराजन्नर्धप्रोतकपालकम् ॥ एतानन्यान्समादायद्रष्टुंकेशवमाययुः १३ पंचचैवसहस्राणिपुरस्कृत्यमहामुनीन् ॥ दुर्वाससंतपोयोनिमीश्वरस्यात्मसंभ वम् १४ अहोरात्रेणतेसर्वेद्वारकांकृष्णपालिताम् ॥ ययुर्दांतामहात्मानोलोमशाःकेशवर्जिताः १५ प्रातःप्रविश्यराजेंद्रवापिकायांयतीश्वराः ॥ स्नात्वो पस्पृश्यतेसर्वेयत्नेनमहतातदा १६ द्रष्टुमभ्युद्यताविष्णुंकंटकोद्धृतितत्परम् ॥ एकरूपंसमास्थायसुधर्मायामवस्थितम् १७ इतिश्रीमहाभारतेखिलेषु हरिवंशेभविष्यपर्वणिकैलासयात्रायांहंसडिंभकोपाख्यानेयतीनांद्वारकागमनंनामदशाधिकशततमोऽध्यायः ११० ॥ ॥ छ ॥ वैशंपायनउवाच ॥ अथसर्वेश्वरोविष्णुःपद्मकिंजल्कलोचनः ॥ श्यामःपीतांबरःश्रीमान्प्रलंबांबरभूषणः १ किरीटीश्रीपतिःकृष्णोनीलकुंचितमूर्द्धजः ॥ अव्यक्तःशाश्वतोदेवः सकलोनिष्कलःशिवः २ क्रीडाविहारोपगतःकदाचिदभवद्धरिः ॥ कुमारैरपरैःसार्द्धंसात्यकिप्रमुखैर्नृप ३ गोलक्रीडांसुधर्मायामध्येयादवसत्तमः ॥ चकारप्रियकृत्कृष्णोयुयुधानेनकेशवः ४ ममायंप्रथमोगोलस्तवपश्चाद्भविष्यति ॥ इतिब्रुवंस्तदाविष्णुःसात्यकिंकमलेक्षणः ५ पार्श्वस्थायादवास्त स्यवसुदेवपुरोगमाः ॥ उद्धवप्रमुखाराजन्नासेदुःक्वचिदत्रवै ६ अन्यव्यापाररहितोभूतात्माभूतभावनः ॥ विजहारयथारामःसुग्रीवेणपुरानृप ७ मध्यं दिनेमहाविष्णुःशैनेयेनसहाच्युतः ॥ विक्रीडचसुचिरंकृष्णउपारंसीत्सयादवः ८ द्वास्थेनवारिताःपूर्वंद्वार्येवचसमास्थिताः ॥ इदमंतरमित्येवविविशुस्तां सभांनृप ९ यतयोदीर्घतपसःपुरस्कृत्यतपोधनम् ॥ दुर्वाससंसुमनसोददृशुर्यादवेश्वरम् १० गोलक्रीडासमासक्तंकरसंस्थितगोलकम् ॥ पद्मपत्रविशा लाक्षंविष्णुंतंसात्यकिंहरिम् ११ एकेनाक्ष्णाह्लादयंतंपरेणान्येनगोलकम् ॥ यतयश्चमहाराजप्रत्यदृश्यंततत्पुरः १२

महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांदशाधिकशततमोऽध्यायः ॥ ११० ॥ अथेति पद्मकिंजल्कलोचनःकिंजल्कपदंतद्वत्वात्पत्रेत्रज्ञेयंतेनपद्मपत्रनेत्रइत्यर्थः ॥ १ ॥ ॥ २ ॥ ३ ॥ गोलक्रीडांगोलाकारैरक्षैर्द्यूतक्रीडां ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ विविशुस्तापसाइतिशेषः ॥ ९ ॥ १० ॥ ११ ॥ ह्लादयंतंमुनीन्गोलकंपश्यंतं ॥ १२ ॥

वृष्णिपः पुंडरीकाक्षः सात्यकिर्बलभद्रकः ॥ वसुदेवस्तथाक्रूरउग्रसेनस्तथानृप १३ अन्येचयादवाःसर्वेसंभ्रमंप्रतिपेदिरे ॥ इदंकिमिदमित्येवंशशंकमनसो
११९ भवन् १४ पृष्ठतोप्यनुगच्छंतिदिधक्षंतंजगत्रयम् ॥ अर्धकौपीनवसनंस्मरंतंकमपिद्विजम् १५ अंतस्तापसमायुक्तंछिन्नदंडधरंयतिम् ॥ अंतर्ज्वलंतंरोषे अ.१११
णहंसासादितकल्मषम् १६ नेत्रोत्थितमहावह्निंप्रेक्षंतंयादवेश्वरम् ॥ दुर्वाससंतंदद्दशुर्भीतायादवसत्तमाः १७ किंकरिष्यत्यसौक्रुद्धःकिंवावक्ष्यतिनःप्रभुः ॥
इतिप्रांजलयःसर्वेयादवाःप्रतिपेदिरे १८ इदमासनमित्येवंकिंचिद्रूचुश्चवृष्णयः ॥ ततःकृष्णोहृषीकेशःकिंचिदुत्स्थुत्यतत्पुरः १९ इदमासनमित्येवंस्थी
यतामिहनिर्वृतः ॥ अहमद्यस्थितोविप्रकिंकरोस्मीतिचाब्रवीत् २० ततःकिंचिदिवासीनआसनेयतिविग्रहः ॥ आसनेसंस्थितेतस्मिन्यतयोवीतमत्स
राः २१ आसनानियथायोगंभेजिरेनिर्वृताःकिल ॥ अर्वादिसमुदाचारंचक्रेकृष्णःकिरीटभृत् २२ आहभूयोहृषीकेशोयतिंदुर्वाससंप्रभुम् ॥ किमर्थंब्रू
हिविप्रेंद्रअस्मिन्प्रत्यागमोहिवः २३ दृष्टंवाद्यथवाकिंचित्कारणंचास्तिवोमहत् ॥ संन्यासिनोद्विजश्रेष्ठायूयंविगतकल्मषाः २४ निस्पृहाश्वसदायू
यमस्मत्तोद्विजपुंगवाः ॥ प्रार्थनामनचैवास्तिस्पृहानैवास्तिवोयतः २५ स्पृहाप्रेरितकर्माणःक्षत्रियान्यांतिसुव्रताः ॥ निरूप्यमाणमस्माभिर्विप्रकिंचि
न्नदृश्यते २६ नजानेकारणंब्रह्मन्युष्मदागमनंप्रति ॥ एतावताचानुमेयंकिंचित्कारणमस्तिवै २७ तद्ब्रूहियदिविद्येतत्वत्तोज्ञास्यामहेवयम् ॥ इत्युक्तव
तिदेवेशेचक्रपाणौजनार्दने २८ तस्यापिराजन्विप्रस्यभूयःकोपोमहानभूत् ॥ तस्मादभ्यधिकःपूर्वात्कोपःसंजायतेमहान् २९ दिधक्षन्निवलोकांस्त्रीन्भ
क्षयन्निवपश्यतः ॥ रोषरक्तेक्षणःक्रुद्धोहसन्निवदहन्निव ३० उवाचवचनंविष्णुंदुर्वासाःक्रोधमूर्छितः ॥ नजानेइतिकस्मात्त्वंब्रूषेनोयादवेश्वर ३१ जानामि
त्वांमहादेवंवंचयन्निवभाषसे ॥ पुरातनावयंविष्णोपूर्ववृत्तांतवेदिनः ३२ तथाहिदेवदेवोसिमायामानुषदेहवान् ॥ निगूहसेप्रभुरतःकस्मान्नोजगतीपते
३३ सोसिब्रह्मविदांमूर्तिस्त्वंवैतत्परमंपदम् ॥ यदभ्यर्च्यपुराब्रह्मायत्वज्ञानावयंपुरा ३४ यतोविश्वमिदंभूतंतदेतत्परमंपदम् ॥ यत्वस्थूलंविजानंतिपुरात
त्वेनचेतसा ३५ पुराविदोथविश्वेशतदेतत्परमंवपुः ॥ कर्मणाप्राप्यतेयत्तुयत्स्मृत्वानिर्वृतावयम् ३६ प्रत्यक्षमपियद्रूपंनैवजानंतिमानुषाः ॥ नहिमूढ
धियोदेवनवयंतादृशाहरे ३७ नजानेइतियद्ब्रूषेकिमतःसाहसंवचः ॥ येहिमूलंविजानंतितेषांतुप्रविवेचनम् ३८ ११९

दृष्टंवाद्वयंउभयत्रयथाक्रमंयोज्यम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ पश्यतःपुरुषान् ॥ ३० ॥ ३१ ॥ ३२ ॥ निगूहसे आत्मानं नोस्मान्प्रति ॥ ३३॥
ज्ञानाः ज्ञानवंतः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ प्रविवेचनं विचारम् ॥ ३८ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ यद्यदिति यत्रवस्तुनिधारणाक्रियते तत्रैवाविर्भवसीत्यर्थः ॥ ४६ ॥ तदेवाहवायुरित्यादि ॥ ४७ ॥ ४८ ॥ ४९॥

कुर्वतःकिंफलंदेवतवकेशिनिषूदन ॥ वेदांतेप्रथितंतेजस्तवचेदंविचार्यते ३९ येचविज्ञानतृप्तास्तुयोगिनोवीतकल्मषाः ॥ पश्यंतिहृत्सरोजेपितदेवेदंवपुः
प्रभो ४० वेदैर्यद्गीयतेतेजोब्रह्मेतिप्रतिपाद्यवै ॥ तदेवेदंविजानेहंरूपमैश्वरमेवच ४१ वैष्णवंपरमंतेजइतिवेदेषुपठ्यते ॥ अवगच्छाम्यहंविष्णोतदेवेदंव
पुस्तव ४२ यओमित्युच्यतेशब्दोयस्यवागितिगीयते ॥ सएवासिप्रभोविष्णोनजानेइतिमावद ४३ परोक्षंयदिकिंचित्स्यात्तववक्तुंप्रयुज्यते ॥ नजानेइ
तिगोविंदमावादीःसाहसंहरे ४४ विश्वंयदाप्रादुरासीद्यस्मिंल्लीनंक्षयेसति ॥ इदंतदैश्वरंतेजस्त्ववगच्छामिकेशव ४५ कर्तात्वंभूतभव्येशप्रतिभासिसदाहृ
दि ॥ यद्यद्रूपंस्मरेन्नित्यंतत्तदेवासिमेहृदि ४६ वायुरेवयदाविष्णुरितिमेधीयतेमतिः ॥ तदातद्रूपमेवासिहृन्मध्येसंस्थितोविभो ४७ आकाशोविष्णुरित्ये
वकदाचिद्धीयतेमतिः ॥ तदातद्रूपमेवासिहृन्मध्येसंस्थितोविभो ४८ पृथिवीविष्णुरित्येतत्कदाचिद्धीयतेमतिः ॥ तदापार्थिवरूपस्त्वंप्रतिभासिसदाममं
४९ रसोयंदेवइत्येवकदाचिच्चिंत्यतेमया ॥ तदारसात्मनाविष्णोहृन्मध्येसंस्थितोविभो ५० यदात्वंतेजइत्येवंस्मर्तास्त्यांपुरुषोत्तम ॥ तदातद्रूपसंपन्नःप्रति
भासिसदाहृदि ५१ चंद्रमाहरिरित्येवंतदाचांद्रमसंवपुः ॥ निरीक्ष्यचक्षुषादेवततःप्रीतोस्मिकेशव ५२ यदासौरंवपुरितिस्मर्तास्त्यांजगतीपते ॥ तदात
द्भावनायोगात्सूर्यएवविराजसे ५३ तस्मात्सर्वंत्वमेवासिनिश्चितामतिरीदृशी ॥ अतोनजानेहमितिवक्तुंनेशोजनार्दन ५४ इत्यर्थेसंस्थितोविष्णोपीडांनो
नैवचिंत्यसे ॥ अत्यंतदुःखिताविष्णोवयंत्वामनुसंस्थिताः ५५ ईदृशीयमवस्थानोनैतांस्मरसिकेशव ॥ एतत्पुनर्भाग्यमतोनष्टमित्येवचिंतये ५६ मंद
भाग्यावयंविष्णोयतोनोनःस्मरेप्रभो ॥ कौचित्क्षत्रियदायादौगिरीशवरगर्वितौ ५७ नाम्नाहंसडिंभकौचबाधेतेनोजनार्दन ॥ गार्हस्थ्यंहिसदाश्रेयोवदं
ताविविकेशव ५८ इतस्ततश्चधावंतौवदंतौबहुकिल्बिषम् ॥ अयुक्तंबहुभाषंतौधर्षयंतौचनःसदा ५९ इदमन्यत्कृतंदेवअसह्यंपापमुच्यते ॥ पश्येदंबहु
धादेवभिन्नंभिन्नंसहस्रशः ६० शिक्यंचदारवंपात्रंद्विदलान्वेणुकान्बहून् ॥ इदमप्यपरंपश्यतयोःसाहसचेष्टितम् ६१ कौपीनंबहुधाच्छिन्नंतदस्माकंमह
द्धनम् ॥ कृतंकपालमात्रेणकमंडलुजगत्प्रभो ६२ त्वंतुनोरक्षसेनित्यंक्षात्रंवैव्रतमास्थितः ॥ चित्रंचित्रमिदंदेवरक्षस्यसिसदानिशम् ६३ किंकरिष्यामि
मंदात्मामंदभाग्यावयंविभो ॥ किंनःशरणमत्रैवतद्ब्रूहिजगतांपते ६४

॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ चिंत्यसे चिंतयसेअकारलोपआर्षः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ त्वंसदाअसिरक्षसि
चअथाप्येतत्चित्रंआश्चर्यंयदस्माकमीदृशीअवस्थेति ॥ ६३ ॥ ६४ ॥

१२० जीवंतौतौयदिस्यातांनष्टालोकाइमेत्रयः ॥ नविप्रानचराजानोनवैश्यानचपादजाः ६५ अत्यंतबलिनौमत्तौतीक्ष्णदंडधरौनृप ॥ नतयोःपुरतःस्थातुंशक्ता अ.११२
देवाःसवासवाः ६६ नचभीष्मोनवाराजाबाह्लीकोभीमविक्रमः ॥ योहिवीरोजरासंधःक्षत्रियाणांभयंकरः ६७ नैवचप्रायशःस्थातुंगिरीशवरदर्पिणोः ॥
तयोःकृष्णहरेशक्तोनित्यमप्रतिसंगिनोः ६८ तस्मात्त्वंजहितौवीरौरक्षलोकानिमान्प्रभो ॥ अन्यथारक्षसीत्येवंव्यर्थःशब्दोत्रजायते ६९ बहुनात्रकिमुक्ते
नरक्षरक्षजगत्त्रयम् ॥ इत्युक्त्वाविररामैवदुर्वासाःक्रोधमूर्च्छितः ७० ॥ इतिश्रीमहाभा०खि०भवि०कैलासयात्रायांहंसडिंभकोपाख्यानेदुर्वासःसमागमो
नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ यतेर्वचनमाकर्ण्यमंदमुच्चहस्यकेशवः ॥ दुर्वाससंसमालोक्यबभाषे
यादवेश्वरः १ क्षंतव्यंभवतासर्वदोषएवममैवहि ॥ शृणुवाक्यंममैतत्तुश्रुत्वाशांतिपरोभव २ जेष्यामितौरणेविप्रहंसंडिंभकमेवच ॥ गिरीशोवावरंदद्याच्छ
क्रोवाधनदोपिवा ३ यमोवावरुणोवापिब्रह्मावाथचतुर्मुखः ॥ सबलौसानुजौहत्वापुनर्दास्यामिवोरतिम् ४ सत्येनैवशपाम्यद्यमारोषवशगोभव ॥ र
क्षांवोहंकरिष्यामिहत्वातौचनृपाधमौ ५ जानामितौदुरात्मानौयुष्मद्दोषकरौहितौ ॥ श्रुतंचपूर्वमस्माभिस्तीक्ष्णदंडधराविति ६ अत्यंतबलिनौमत्तौगि
रीशवरदर्पितौ ॥ नाल्पप्रयत्नसंसाध्यौजरासंधहितैषिणौ ७ प्राणानपितयोराजादास्यत्येवनसंशयः ॥ जरासंधोमहीपालोविनातौजयतेमहीम् ८ जयेत
योर्विप्रवर्यतत्रश्रेयोभवेत्ततः ॥ यत्रयत्रतुतौगत्वास्थितावित्यनुशुश्रुमः ९ तत्रतत्रचहंताहंनात्रकार्याविचारणा ॥ गच्छध्वंयतयःस्वैरंनिजकार्यपरायणाः
१० अचिरेणैवकालेनजेष्यामिरणपुंगवौ ॥ ततःप्रीतःप्रसन्नात्मायादवेश्वरमाहसः ११ स्वस्त्यस्तुभवतेकृष्णजगतांस्वस्तिकुर्वते ॥ किन्नुनामजगन्नाथदुः
साध्यंतवकेशव १२ त्रिलोकेशत्रिधामासिसर्वसंहारकारकः ॥ देवानामपिदेवेशसर्वत्रसमदर्शनः १३ विष्णोदेवहरेकृष्णनमस्तेचक्रपाणये ॥ नमः
स्वभावशुद्धायशुद्धायनियतायच १४ शब्दगोचरदेवेशनमस्तेभक्तवत्सल ॥ अज्ञानादथवाज्ञानाद्यन्मयोक्तंक्षमस्वतत् १५ त्वमेवाहंजगन्नाथनावयोरं
तरंपृथक् ॥ अतःक्षमस्वभगवन्क्षमासाराहिसाधवः १६ श्रीभगवानुवाच ॥ क्षंतव्यंभवताविप्रक्षमासारावयंसदा ॥ संन्यासिनःक्षमासाराःक्षमतेषांप
रंबलम् १७ क्षमामोक्षकरीनित्यंतत्त्वज्ञानामिवद्विज ॥ क्षमाधर्मःक्षमासत्यंक्षमादानंक्षमायशः १८ क्षमास्वर्गस्यसोपानमितिवेदविदोविदुः ॥ तस्मात्स १२०
र्वप्रयत्नेनक्षमांपालयतस्वकाम् १९ प्रत्यक्षज्ञानसंयुक्तायूयंसर्वेयतीश्वराः ॥ यएतेयतयोविप्राःपूजनीयामयाध्रुवे २०

भोक्तव्यायतयोविप्राभिक्षुकाःसर्वएवहि ॥ तथेतितेतप्रतिज्ञायभोक्तुमैच्छन्हरेर्गृहे २१ ततःस्वभवनंविष्णुःप्रविश्यहरिरीश्वरः ॥ चतुर्विधंतथाहारंकारयि त्वायथाविधि २२ भोजयामासतान्सर्वान्यतीन्यतिवरार्चितः ॥ छित्त्वाछित्त्वाचदेवेशोदुकूलानिमृदूनिसः २३ ददौतेभ्यस्तदाविष्णुःसर्वेभ्योजनमेजय ॥ तेचप्रीतायथायोगंयथापूर्वंततोगताः २४ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांहंसडिंभकोपाख्यानेयतिभोजनंनामद्वाद शाधिकशततमोऽध्यायः ११२ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ दुर्वासास्त्वथतत्रैवनारदेनमहात्मना ॥ चिंतयन्ब्रह्मणस्तत्त्वंविजहारयथासुख म् १ भगवानपिगोविंदस्तयोर्वासममन्यत ॥ ततस्तौहंसडिंभकौतस्मिन्कालेमहीपतिम् २ ब्रह्मदत्तंमहीपालंपितरंवीर्यशालिनम् ॥ प्रावोचतामिदंवा क्यंसमंताज्जनसंसदि ३ राजसूयंमहायज्ञंपितःकुरुसुयत्नतः ॥ अस्मिन्मासिनृपश्रेष्ठयतावोयज्ञसिद्धये ४ आवांतेद्यमहाराजदिशांविजयतत्परौ ॥ यति ष्यावोबलैःसार्द्धंगजैरश्वैरथैरपि ५ संभारायज्ञसिद्ध्यर्थमानेतव्यानृपोत्तम ॥ तथेतिसमहाबाहोब्रह्मदत्तोब्रवीत्तदा ६ जनार्दनस्तुविप्रेंद्रोदृष्ट्वासाहसतत्परौ ॥ अशक्यमितिमन्वानोवयस्यंहंसमब्रवीत् ७ शृणुहंसवचोमह्यंश्रुत्वानिश्चित्यवीर्यवान् ॥ आयुष्मन्साहसंकर्तुमुद्यतोसिनृपोत्तम ८ स्थितेभीष्मेजरासं धेबाह्लीकेचनृपोत्तमे ॥ किंचवीरेषुसर्वेषुयादवेषुनृपोत्तम ९ भीष्मोहिबलवान्वृद्धःसत्यसंधोजितेंद्रियः ॥ त्रिःसप्तकृत्वःपृथिवींयोजिगायभृगूत्तमः १० तंयुद्धेजितवान्भीष्मःसर्वक्षत्रस्यपश्यतः ॥ जरासंधस्ययद्वीर्यंतद्भवान्वेत्तिसंयुगे ११ वृष्णिवीरास्तुतेसर्वेकृतास्त्रायुद्धदुर्मदाः ॥ तत्रकृष्णोहृषीकेशोजि तशत्रुःकृतीसदा १२ जरासंधेनसहितःसदायुद्धेजितश्रमः ॥ प्रमुखेतस्यनस्थातुंशक्तोजीवन्नृपोत्तमः १३ बलभद्रस्तथामत्तःक्रुद्धोयदिभवेद्बली ॥ लोकानिमान्समाहर्तुंशक्नोतीतिमतिर्मम १४ तथाचसात्यकिर्वीरःशक्तोजेतुंरणेरिपून् ॥ तथान्येयादवाःसर्वेकृष्णमाश्रित्यदंशिताः १५ अस्माभि श्चकृतःपूर्वंविरोधोयतिभिःसह ॥ दुर्वासायतिभिःसार्धंगतोद्रष्टुंसकेशवम् १६ इतिश्रुतंनृपश्रेष्ठब्राह्मणाद्भोक्तुमागतात् ॥ तथासतियथासिद्ध्येत्तथाचिं त्यंचमंत्रिभिः १७ ततःपश्चाद्विधास्यामोराजसूयंमहाक्रतुम् ॥ हंसउवाच ॥ कोनामभीष्मोमंदात्माव्रृद्धोहीनबलःसदा १८ आवयोःपुरतःस्यातुंशक्तः सकिलवृद्धकः ॥ यादवाइतिचित्रंनःशक्ताःस्यातुंरणेद्विज १९ कश्चकृष्णःपुरःस्थातुंबलदेवश्चमत्तकः ॥ शैनेयश्चापिविप्रेंद्रस्यातुंनइतिचिंतय २० जरासंधस्तुधर्मात्माबंधुरेवसदामम ॥ गच्छविप्रयदुश्रेष्ठंब्रूहिमद्वचनात्त्वरन् २१

भा.ह. ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ छ ॥ टी.प.३

१२१ दीयतांकरसर्वस्वंयज्ञार्थंसुंदरंबहु ॥ लवणानिबहून्यद्यगृह्यकेशवमाचिरम् २२ आगच्छत्वरितंकृष्णनतेकार्यविलंबनम् ॥ इतिब्रूहियदुश्रेष्ठंयाहित्वरि अ.११३
तविक्रमः २३ नब्रूयाश्चोत्तरंविप्रशपेयंत्वांप्रियोसिमे ॥ मित्रभावादिदंब्रूहिपश्यामित्वांपुनःपुनः २४ इतिसंचोदितोविप्रोनोत्तरंप्रत्यभाषत ॥ मित्रभावा
त्तथाराजन्स्नेहाच्चजनमेजय २५ जनार्दनस्तुधर्मात्मानित्यंगंतुंसमुद्यतः ॥ अद्यश्वोवापरश्वोवागच्छामीतियतेतसः २६ देवंद्रष्टुंजगद्योनिंशंखचक्रगदाध
रम् ॥ एकएवचधर्मात्माहयमारुह्यसत्वरम् २७ प्रातरेवजगामाशुद्रष्टुंद्वारवतींद्विजः ॥ हरिंकृष्णंहृषीकेशंमनसासंस्मरन्द्विजः २८ ॥ ॥ इतिश्री
महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिकैलासयात्रायांहंसडिंभकोपाख्यानेत्रयोदशाधिकशततमोऽध्यायः ११३ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥
ततःप्रायाद्धरिंविष्णुंब्राह्मणोब्रह्मवित्तमः ॥ हयेनैकेनराजेंद्रत्वरितंसययौनृप १ यथानिदाघसमयेसूर्यांशुपरिपीडितः ॥ पांथोयातिजलंदृष्ट्वात्वरितंतात्पिपा
सया २ धावत्येवतथाविप्रोहरिंद्रष्टुंजनार्दनः ॥ गच्छन्सचिंतयामासचोदयन्हयमुत्तमम् ३ हंसएवप्रियोमह्यंकुर्यात्प्रियहितंमम ॥ तथाहिप्रेषितस्ते
नहरिंपश्याम्यहंप्रभुम् ४ अहमेवसदाधन्योमत्तोह्यभ्यधिकोनाहि ॥ यतोद्रक्ष्याम्यहंविष्णुंवसंतंद्वारकापुरे ५ साहिमेजननीधन्याहरिंदृष्ट्वा
पुनर्गतम् ॥ कृतार्थंसर्वदादेवीद्रक्षत्येषामनस्विनी ६ मुखमुन्निद्रहेमाब्जकिंजल्कसदृशप्रभम् ॥ द्रक्ष्यामिदेवदेवस्यचक्रिणःशार्ङ्गधन्वनः ७ वपुर्द्रक्ष्याम्य
हंविष्णोर्नीलोत्पलदलच्छविम् ॥ शंखचक्रगदाशार्ङ्गवनमालाविभूषितम् ८ नेत्रेतेदेवदेवस्यपद्मकिंजल्कसप्रभे ॥ पश्याम्यहमदीनात्मानष्टदुःखोस्मि
निर्वृतः ९ अपिद्रक्ष्यतियोगात्मासौम्येनैवस्वचक्षुषा ॥ अपिवामात्प्रियंब्रूयात्स्वास्तिचेतिचवावदेत् १० द्रक्ष्यामिचक्रिणोवर्ष्मंततस्त्रैलोक्यसन्निभम् ॥
पादाब्जंचक्रिणोद्रष्टुंत्वरत्येवचमेमनः ॥ ११ ॥ वक्षःस्थलंसदाविष्णोःस्फुरद्रत्नप्रभायुतम् ॥ पश्यन्निवचगच्छामिस्मरंश्चानिशमीश्वरम् ॥ १२ ॥
पीतकौशेयवसनंलंबहारविभूषितम् ॥ ईषत्स्मिताधरंविष्णुंपश्यामिचपुनःपुनः १३ स्मरतश्चहरेरूपंरोमहर्षोयमीदृशः ॥ गच्छतश्चपुरोभातिशंख
चक्रगदासिमान् १४ यातीवचपुरोभातिमह्यंदेवोजगद्गुरुः ॥ एषोयमितिमेवक्तुंजिह्वाप्रस्फुरतीवतम् १५ इदंदुःखतरंमन्येकरंदेहीतिमद्वचः ॥ इदंतरसाह
संमन्येयद्वचस्तस्यभूपते १६ हंसस्यकरदोविष्णुस्तदाज्ञापरिचारकः ॥ तस्यसर्वंपुरोगत्वावक्ताहंकिलनिर्दयः १७ मूढानामग्रणीरस्मिनिर्लज्जश्चतथाव १२१
दन् ॥ करंदेहिहरेविष्णोहंसस्ययदुपुंगव १८ लवणानिबहून्याशुपातव्यानिकरात्मना ॥ इतिवक्तुंनमेयुक्तंपरतस्तस्यशार्ङ्गिणः १९

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ वर्ष्मवपुः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

॥ २० ॥ २१ ॥ यतस्यमे यतंतमाम् ॥ २२ ॥ २३ ॥ २४ जगतिरक्षायस्मात्तजगद्रक्षम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

तथापिमित्रभावात्तुवक्तव्यंघोरमीदृशम् ॥ कष्टोह्ययंमित्रभावोमनुष्याणांकृतात्मनाम् २० अथवासर्वविद्विष्णुःसर्वस्यहृदिसंस्थितम् ॥ जानात्येवसदा
भावंप्राणिनांशोभनेरतः २१ तथासतिनमेदोषोमित्रभावोयतोह्ययम् ॥ सर्वथारक्षतांविष्णुर्घोरंवक्तुंयतस्यमे २२ द्रक्ष्याम्यहंजगन्नाथंनीलकुंचितमूर्द्ध
जम् ॥ कंबुग्रीवाधरंविष्णुंश्रीवत्साच्छादितोरसम् २३ स्फुरत्पद्ममहाबाहुंरत्नच्छायाविराजितम् ॥ द्रक्ष्यामिकेशवंविष्णुंचक्रिणंयादवेश्वरम् २४ अचिं
त्यविभवंदेवंभूतभव्यभवत्प्रभुम् ॥ आत्मेच्छयाजगद्रक्षंद्रक्ष्यामिजलशायिनम् २५ कृतार्थःसर्वथाचाहंभवामिविगतज्वरः ॥ अद्यमेसफलंजन्मसाक्षाद्दृष्ट
वतोहरिम् २६ अद्यमेसफलायज्ञाःसाक्षात्कृतवतोहरिम् ॥ नेत्रेमेसफलेविष्णुंपश्यतश्चजगन्मयम् २७ प्रीतिमानस्तुमेविष्णुर्वक्तुर्घोरस्यकर्मणः ॥ उन्मि
षन्नेत्रयुग्मेनद्रक्ष्यामिसकृदीश्वरम् २८ आमूलमसकृद्विष्णुंपश्यामिचपुनःपुनः ॥ पिबामिनेत्रयुग्मेनवपुःकृष्णस्यकेवलम् २९ धारयिष्याम्यहंपांसुंतत्पाद
प्रभवंशिवम् ॥ ततःकृतार्थतांयास्येस्वर्गमार्गोहितद्रजः ३० मेघगंभीरनिर्घोषंश्रोष्यामिचहरेःस्वरम् ॥ पादाब्जंचक्रिणोविष्णोःपश्यामिचजगत्पतेः ॥
३१ पश्यामिचहरेर्वक्त्रंपूर्णेंदुसदृशप्रभम् ॥ हरेरिदंजगद्रूपंपश्यामीवचसर्वतः ३२ प्रसीदतुसदाविष्णुरयुक्तंवक्तुमिच्छतः ॥ आलोलकुंडलयुतंहरिचंदन
चर्चितम् ३३ स्फुरत्केयूररत्नार्चिर्बाहुद्वयविराजितम् ॥ सव्येद्योतन्महाशंखंरश्मिजालविराजितम् ३४ प्रोद्यद्भास्करवर्णाभंचक्रज्वालाविराजितम् ॥
प्रोज्वलत्कंकणयुतंतप्तजांबूनदांगदम् ३५ पीतकौशेयवसनंविस्तीर्णोरस्कमच्युतम् ॥ कदाद्रक्ष्यामिदेवेशमिदानीमथवान्यदा ३६ सर्वथाकृतकृत्यो
हंयद्वपुर्द्रष्टुमुद्यतः ॥ नमोमह्यंनमोमह्यंयतोद्रष्टुमहंहरिम् ३७ उद्यतोस्मिजगन्नाथंबलभद्रकृतास्पदम् ॥ द्रक्ष्याम्यवश्यमद्यैवाजिष्णुंविष्णुंजगद्गुरुम् ३८
श्रीकौस्तुभोद्भवरुचिस्फुरितोरुवक्षःपीतांबरंमकरकुंडलपंकजाक्षम् ॥ कृष्णंकिरीटवरचक्रगदोर्ध्वहस्तंतेजोमयंममहरेर्वपुरस्तुभूत्यै ३९ वेदोदधौविशदशा
स्त्रमहाहियोगेनिष्णातशुद्धमतिमंदरमथ्यमाने ॥ उद्योतमानममरैरनिशंनिषेव्यंनारायणाख्यममृतंप्रपिबामिचाद्य ४० ध्येयंमुमुक्षुभिरमेयमनाद्यनंतं
स्थूलंसुसूक्ष्मतरमेकमनेकमाद्यम् ॥ ज्योतिस्त्रिलोकजनकंत्रिदशैकवंद्यमक्ष्णोर्ममास्तुसततंहृदयेच्युताख्यम् ४१ चिंतयन्नितिविप्रेंद्रोययौद्वारवतींपुरी
म् ॥ मत्वाकृतार्थमात्मानंवाहयन्हयमुत्तमम् ॥ ४२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेविप्रस्यद्वारवतीगम
नेचतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ ६ ॥ ॥ ६ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रपिबामिसादरंपश्यामि ॥ ४० ॥ ४१ ॥ ४२ ॥ इतिश्री०ह०नीलकं०चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

सःनिवेदितंईश्वरेर्पितंसर्वस्वंयेनताद्दशोद्वास्थेनद्वाराप्रविश्यसुधर्मासभांअपश्यत् ॥ १ ॥ सुधर्मःयोगधर्मोसाक्षात्तदाकारेणसंस्थितिःसंस्थानंयस्यतंसुधर्माकृतिसंस्थितम् ॥ २॥

॥ वैशंपायनउवाच ॥ सनिवेदितसर्वस्वोद्वास्थेनहिजनार्दनः ॥ अथप्रविश्यधर्मात्मासुधर्मांवैद्विजोत्तमः १ अपश्यद्देवदेवेशंसुधर्माकृतिसंस्थितम् ॥ बलभद्रेणसंयुक्तमध्यासितमहासनम् २ अग्रतःस्थितशैनेयंपार्श्वतःस्थितनारदम् ॥ दुर्वाससाकृतकथमुग्रसेनपुरस्कृतम् ३ गायद्गंधर्वमुख्यैश्चनृत्यदप्सरसांगणैः ॥ सेव्यमानंमहाराजसूतमागधबंदिभिः ४ उद्गीयमानयशसंमाधवंमधुसूदनम् ॥ उद्गीयमानंविप्रैश्चसामभिःसामगैर्हरिम् ॥ दृष्ट्वाप्रीतमनाविष्णुंप्रोद्भूतपुलकच्छविः ५ नाम्नाजनार्दनोस्मीतिननामचरणौहरेः ॥ बलभद्रंततोदेवंववंदेशिरसाद्विजः ६ दूतोस्मिदेवदेवेशहंसस्यडिंभकस्यच ॥ इतिब्रुवाणंविप्रेंद्रमिदमाहसमाधवः ७ आस्वेदंविष्टरंपूर्वंपश्चाद्ब्रूहिप्रयोजनम् ॥ तथेतिचाब्रवीद्विप्रोमहदासनमास्थितः ८ वाचासंपूज्यविप्रेंद्रमपृच्छत्कुशलंहरिः ब्रह्मदत्तस्यराजेंद्रहंसस्यडिंभकस्यच ९ श्रुतंचापितयोर्वीर्यंप्रयोजनमतोद्विज ॥ अपिवाकुशलंविप्रपितुस्तवजनार्दन १० ॥ जनार्दनउवाच ॥ कुशलंब्रह्मदत्तस्यपितुश्चममकेशव ॥ तयोरेवजगन्नाथहंसस्यडिंभकस्यच ११ श्रीभगवानुवाच ॥ किमाहतुर्महीपालौतौहंसडिंभकौनृपौ ॥ ब्रूहिसर्वमशेषेणनात्रशंकाद्विजोत्तम १२ वाच्यंवाप्यथवावाच्यंकर्तव्यमथचेतरत् ॥ श्रुत्वातस्यविधास्यामोयुक्तरूपंद्विजोत्तम १३ दूतोसिसर्वथाविप्रनवाच्यावाच्यकल्पना ॥ यत्कर्मकारनिर्दिष्टंतद्वाच्यंदूतजन्मना १४ नात्रशंकात्वयाकार्यावक्तव्यस्येतरस्यच ॥ अतोवदयथाप्रोक्तंताभ्यामिहजनार्दन १५ केशवेनैवमुक्तस्तुप्रोवाचसजनार्दनः ॥ अजानन्निवकिंब्रूषेसर्वंप्रत्यक्षदर्शिवान् १६ नचास्तितेपरोक्षंतुजगद्वृत्तांतमच्युत ॥ सर्वंहिमनसापश्यन्किंत्वमात्थवदेतिमाम् १७ विद्वद्भिर्गीयसेविष्णोत्वमेवजगतीपते ॥ इच्छयासर्वमाप्नोषिदृष्टादृष्टविवेचनम् १८ त्वमेवेदंजगत्सर्वंजगच्चत्वयितिष्ठति ॥ नत्वयारहितोह्येकःपदार्थःसचराचरः १९ नास्तिकिंचिदवेद्यंतेसर्वगोसिजगत्पते ॥ त्वमिंद्रःसर्वभूतानांरुद्रःसंहारकर्मकृत् २० रक्षितासिसदाविष्णुःसर्वलोकस्यमाधव ॥ संसारस्यभवान्स्रष्टाकिंत्वमात्थवदेतिमाम् २१ विद्वद्भिर्गीयतेनित्यंज्ञानात्मेतिचमाधव ॥ प्राणंप्राणविदःप्राहुस्त्वामेवपुरुषोत्तम २२ शब्दंशब्दविदःप्राहुस्त्वामेवपुरुषोत्तम ॥ तथासतिहृषीकेशकिंत्वमात्थवदेतिमाम् २३ तथापिशृणुदेवेशचोदितोस्मियतस्त्वया ॥ वदेत्यसकृद्देवैतत्तस्माद्वक्ष्यामिमाधव २४ राजसूयेनयज्ञेनब्रह्मदत्तोद्ययक्ष्यते ॥ तदर्थंप्रेषितस्ताभ्यांहंसेनडिंभकेनच २५ करार्थंयदुमुख्येभ्यस्तवचामंत्रणायहि ॥ लवणंबहुदेयंतेयज्ञार्थंतस्यकेशव २६ इत्यर्थंप्रेषितस्ताभ्यांकरंदेहितदाज्ञया ॥ इदंत्वमपरंताभ्यामुक्तंशृणुजगत्पते २७

॥३॥४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२॥३३॥३४॥३५॥ ३६॥३७ ॥ ३८॥ ३९ ॥ इतिश्रीनीलकंठकृतौभारतभावदीपेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभको

लवणानिबहून्याशुप्रगृह्यत्वरितंभवान् ॥ आगच्छतुतयोराज्ञोःसेयंकेशववाग्विभो २८ इत्युक्तवतिविप्रेंद्रेदूतेतत्रतयोर्नृप ॥ प्रहस्यसुचिरंकृष्णोबभाषे
दूतमीश्वरः २९ शृणुदूतवचोमह्यंयुक्तमुक्तंद्विजोत्तम ॥ करंददामिताभ्यांतुकरदोस्मियतोनृप ३० धार्ष्ट्यमेतत्तयोर्विप्रमत्तोयस्तुकरग्रहः ॥ अहोधार्ष्ट्यं
महोधार्ष्ट्यंतयोःक्षत्रियबीजयोः ३१ इदमश्रुतपूर्वंमेमत्तोयस्तुकरग्रहः ॥ इत्युक्त्वाकेशवोदूतमिदमाहस्मयादवः ३२ हास्यमेतद्यदुश्रेष्ठामत्तो
यस्तुकरग्रहः ॥ यष्टासौराजसूयस्यब्रह्मदत्तोमहीपतिः ३३ तौतुयाजयितारौहिहंसोडिंभकएवच ॥ वोढाकिलयदुश्रेष्ठोलवणस्यदुरात्मनः ३४ करदो
वासुदेवोहिजितोस्मियदुसत्तमाः ॥ हास्यंहास्यमिदंभूयःशृणुध्वंयादवावचः ३५ इत्युक्तवतिदेवेशेबलभद्रपुरोगमाः ॥ यादवाःसर्वएवैतेहासायसमवस्थि
ताः ३६ करदःकृष्णइत्येवंब्रुवंतःसर्वसात्वताः ॥ हासंमुमुचुरत्यर्थंतलंदत्वापरस्परम् ३७ तलशब्दोहासशब्दोरोदसीपर्यपूरयत् ॥ सचविप्रोनृपश्रेष्ठनंदय
न्मित्रमात्मनः ३८ अहोकष्टमहोकष्टंदौत्यंयत्कृतवानहम् ॥ इतिलज्जासमाविष्टस्तूष्णीमासीदवाङ्मुखः ३९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभवि
ष्यपर्वणिहंसडिंभकोपाख्यानेवासुदेववाक्यंनामपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ हासंकुर्वत्सुतेष्वेवंके
शवःकेशिसूदनः ॥ उवाचवचनंदूतंगच्छमद्वचनाद्विज १ तावित्थंहंसडिंभकौब्रूहित्वरितविक्रमः ॥ बाणैर्दास्यामिनिशितैःशार्ङ्गमुक्तैःशिलाशितैः २ अ
सिनावाथदास्यामिनिशितेनमहात्मनोः ॥ शिरोवाछेत्स्यतेचक्रंमत्करप्रहितंबालिम् ३ योवरंदत्तवान्रुद्रोयुवयोर्धार्ष्ट्यकारणम् ॥ सएवरक्षितावांस्यात्तंजि
त्वावांनिहन्म्यहम् ४ देशोयसंविधातव्योयत्रनःसंगतिर्भवेत् ॥ तत्रगंतातथाचास्मिसबलःसहवाहनः ५ भवंतौनिर्भयौभूत्वागच्छेतांसबलौनृपौ ॥ पु
ष्करेवाप्रयागेवामथुरायामथापिवा ६ तत्राहंसबलोयातानात्रकार्याविचारणा ॥ अथवामित्रभावाच्चवक्तुमेवंनतेक्षमम् ७ नशक्यंयत्त्वयावक्तुंतच्चवक्ष्याति
सात्यकिः ॥ त्वयासहततोगत्वासाक्षिभूतोभवद्विज ८ इदंचजानेविप्रेंद्रस्नेहोममसदात्वयि ॥ तेनत्वंविजयीभूत्वासंसारेदुःखसंकुले ॥ मत्कथापरमोनित्यं
सदाभवजनार्दन ९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ छ ॥ वैशं
पायनउवाच ॥ इत्युक्त्वाब्राह्मणंकृष्णःसात्यकिंपुनराहसः ॥ गत्वाशैनेयविप्रेणब्रूहिमद्वचनात्तयोः १

पाख्यानेवासुदेववाक्यंनामपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ छ ॥ ॥ हासमिति ॥ १ ॥ २॥ ३ ॥ युवयोःवांत्वांयुवाम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥
॥ ९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ छ ॥ ॥ इतीति ॥ १ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ प्रविश्यगृहमितिशेषःयादवेसात्यकिनिमित्तंपुनःआसनंविसृज्यसमर्प्य ॥ ७ ॥ विप्रःजनार्दनःहंसडिंभयोरन्यद्वाराआह ॥ ८ ॥ ९ ॥



यन्मयोक्तमशेषेणवदगत्वातयोःपुरः ॥ यथानःसंगतिर्युद्धेतथावदबलात्तदा २ धनुरादायाच्छत्वंबद्धगोधांगुलित्रवान् ॥ एकेनाश्वेनगच्छत्वमसहायोयदूत्त
म ३ सात्यकिस्तंतथेत्युक्त्वाहयमारुह्यशीघ्रगम् ॥ गंतुमैच्छत्ततोराजन्नसहायःससात्यकिः ४ जनार्दनंविसृज्याशुदूतंतंयादवेश्वरः ॥ अहोधार्ष्ट्यमहो
धार्ष्ट्यमित्युवाचजनार्दनः ५ नमस्कृत्यतदादूतोमाधवंमाधवेश्वरम् ॥ सययौशाल्वनगरंशैनेयेनसमन्वितः ६ ततःप्रविश्यधर्मात्माब्राह्मणोब्रह्मवित्तमः ॥
आसनंमहदास्थायविसृज्ययादवेपुनः ७ आस्तेसुखंयदाविप्रःशैनेयेनसमन्वितः ॥ अथतंहंसडिंभयोर्दर्शयामाससात्यकिम् ८ दूतोयंसात्यकिःप्राप्तःस
व्योबाहुरयंहरेः ॥ तस्यतद्वचनंश्रुत्वाहंसःप्राहवचस्तदा ९ श्रुतःसमागमःपूर्वमद्यदृष्टोमयात्वसौ ॥ धनुर्वेदेचवेदेचशास्त्रेशस्त्रेतथैवच १० निपुणोयंसदा
धीरइत्येवमनुशुश्रुमः ॥ अथोदृष्टिपथंप्राप्तःप्रीतिंनोविदधात्यसौ ११ कुशलंवासुदेवस्यबलभद्रस्यवापुनः ॥ कुशलाःसात्वताःसर्वेउग्रसेनपुरोगमाः १२
तथेतिसात्यकिःप्राहमंदमुन्मथिताननः ॥ ततोजनार्दनंप्राहहंसोवाक्यविशारदः १३ अपिदृष्टस्त्वयाचक्रीसिद्धंनःकार्यमीहितम् ॥ वदसर्वमशेषेणमावृथा
कालमत्यगाः १४ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ ६ ॥ ॥ वैशंपा
पायनउवाच ॥ इत्युक्तवतिहंसेचधर्मात्माथजनार्दनः ॥ उवाचप्रहसन्वीरःस्तुवन्नारायणंसदा १ अद्राक्षमद्राक्षमहंजनार्दनंहस्तस्थशंखंवरचक्रधारिणम् ॥
आतप्तजांबूनदभूषितांगदंस्फुरत्प्रभाद्योतितरत्नधारिणम् २ अद्राक्षमेनंयदुभिःपुरातनैःसंसेव्यमानंमुनिवृंदमुख्यैः ॥ संस्तूयमानंप्रभुभिःसमागवैःस्मितप्र
वालाधरपल्लवारुणम् ३ अद्राक्षमेनंकविभिःपुरातनैर्विविच्यवेद्यंविधिवत्सहामरैः ॥ प्रफुल्लनीलोत्पलशोभितंश्रियाविनिद्रहेमाब्जविराजितोदरम् ४ भूयो
हमद्राक्षमजंजगद्गुरुंप्रमोदयंतंवचनेनयादवान् ॥ निरूपयंतंविधिवन्मुनीश्वरैःप्रवृत्तवेदार्थविधिंपुरातनैः ५ अद्राक्षमद्राक्षमहंपुनःपुनःसमस्तलोकैकहितैषि
णंहरिम् ॥ वसंतमस्मिञ्जगतोहितायगन्मयंतान्परिभूयशत्रून् ६ भूयोप्यपश्यंसहयादवेश्वरैर्विक्रीडयमानंचविहारकाले ॥ रमंतमीड्यंरमयंतमीश्वरा
न्यदूत्तमान्यादवमुख्यमीश्वरम् ७ भूयोप्यपश्यंसरसीरुहेक्षणंसमेतयाभीष्मतनूजयाहरिम् ॥ वसंतमंभोनिधिशायिनंविभुंभक्तप्रियंभक्तजनास्पदंशिवम् ८
अद्राक्षमद्राक्षमहंसुनिर्वृतःपिबन्पिबंस्तस्यवपुःपुरातनम् ॥ नेत्रेणमीलद्विवरेणकेवलंधन्योहमस्मीतितदाव्यचिंतयम् ९



१०॥ ११ ॥ १२ ॥ १३ ॥१४ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभाविष्यपर्वणिटीकायांनीलकंठकृतौभारतभावदीपेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥॥ ६ ॥
॥ १ ॥ २ ॥ ३ ॥ विविच्यदेहादिभि. पृथक्कृत्य ॥ ४ ॥ ५ ॥ ६ ॥ भूयोप्यद्राक्षमित्यनुषंगः ॥ ७ ॥ ८ ॥ मीलद्विवरेणअच्छिद्रेण ॥ ९ ॥

ककुद्मानंमाहात्म्यवंतं विभावसुंभास्वंतं ॥ १० ॥ ११ ॥ युवांस्वरंतमद्राक्षमित्यन्वयः क्वदेशेतौवर्तेतेक्वचवाकालेतौद्रक्ष्यामीतिस्मरंतमित्यर्थः १२ कुतःकेनोपायेनमत्पुरोग
तौतौस्यातांइतिशेषः ॥ १३ ॥ ॥ १४ ॥ दापयंतंशिष्येभ्यःपाठयितुमनुज्ञांप्रयच्छंतंमुनीश्वरंदुर्वाससम् ॥ १५॥अचिंतयमित्युक्त्वास्वचिंतनमेवाह असाध्यमिति इदंराजसू

अद्राक्षमंभोजयुगंदधानंप्रभुंविभुंभूतमयंविभावनम् ॥ आद्यंककुद्मानमुरुंविभावसुंसंस्मृत्यसंस्मृत्यतमेवनिर्वृतः १० अद्राक्षंजगतामीशंवक्षोराजितकौस्तुभम् ॥ वीज्यमानंहरिंकृष्णंचामराणांशतैःसदा ११ युवांविद्वेषयुक्तेनचेतसायादवेश्वरम् ॥ स्मरंतंसर्वदाविष्णुंक्वचैवंक्वचवेत्तिकः १२ क्वचद्रक्ष्यामितौमंदौकुतोवामत्पुरोगतौ ॥ ध्यायंतमित्थंदेवेशंकरेशंखवहंसदा १३ हसंतमेनमद्राक्षंकरदंहास्यतत्परम् ॥ वदंतंनारदेवाचंदुर्वाससियतीश्वरे १४ ब्रह्मसूत्रपदांवाणींदापयंतंमुनीश्वरम् ॥ दृष्ट्वाहंतंहरिंदेवंपुनःपुनरचिंतयम् १५ असाध्यमिदमारब्धंताभ्यामितिनृपोत्तम ॥ नारब्धव्यमिदंकार्यमितःप्रभृतिभूमिप १६ निवृत्तासाकथाहंसाचिंतयद्ग्रहणंतव ॥ तद्वृत्तमखिलंसर्वंवदिष्यतिहिसात्यकिः ॥ एतद्वचनमाकर्ण्यहंसःक्रुद्धोब्रवीद्वचः १७ ॥ हंसउवाच ॥ अरेब्राह्मणदायादकानामवागियम् ॥ आवयोःपुरतोवक्तुंत्रैलोक्यंजेतुमिच्छतोः १८ माययात्वांभ्रमयतिकृष्णोलीलाविधानवित् ॥ तंदृष्ट्वाभ्रमएवैषतवसंजायतेमहान् १९ शंखचक्रगदाशार्ङ्गवनमालाविभूषितम् ॥ वृष्णिवीरंसमावेश्यसमुच्छ्रितयशोधरम् २० सूतमागधसंस्तावप्रकटहारबाहुकम् ॥ अत्यद्भुतयशोराशिंविक्रमाल्लोकमंडनम् २१ चतुर्भुजंबलाक्रांतंवृष्णियादवसंमतम् ॥ अहोह्यभ्रमएवैषदर्शनात्तस्यचक्रिणः २२ इदानींचमहाराजभ्रामयत्येवदुर्मतिः ॥ त्वामेवविप्रमंदात्मन्निंद्रजालिकताहिया २३ चापल्यमिदमेवैतत्तवविप्रभ्रमोद्भवम् ॥ अहोहिखलुसादृश्यंवक्तव्यंभवतामम २४ अहमेवत्वयाविप्रमर्षयेप्रोदितंवचः ॥ सखिभावाद्द्विजश्रेष्ठअन्यथाकःसहेदिदम् २५ गच्छमंदमतेविप्रयथेष्टंसांप्रतंतव ॥ द्विजगच्छयथेष्टंत्वंपृथिवींपृथिवीतव २६ जित्वागोपालदायादंहत्वायादवकान्बहून् ॥ एषनःप्रथमःकल्पोजेष्यामइतियादवान् २७ गच्छगच्छेतिविप्रत्वंधृष्टंपरुषवादिनम् ॥ शत्रुपक्षस्तुतिपरंसहयुक्त्वासदामया २८ नमेविप्रवधःकार्यःकष्टादपिहिसर्वतः ॥ इत्युक्त्वाब्राह्मणंभूयोहंसःसात्यकिमब्रवीत् २९ भोभोयादवदायादकिमर्थंप्राप्तवानिह ॥ किमब्रवीन्नंदसुतःकिंवासौमेदिशत्करम् ३० ॥ सात्यकिरुवाच ॥ इदंसत्यंवचोहंसशंखचक्रगदाभृतः ॥ शरैर्निशितधाराग्रैःशार्ङ्गमुक्तैःशिलाशितैः ३१ दास्यामिकरसर्वस्वमसिनानिशितेनते ॥ शिरश्छेत्स्यामितेहंसकरदानस्यसंग्रहम् ३२

यारव्यकर्म॥ १६॥ साकथाकृष्णात्करोग्राह्यइति इयंकृष्णप्रशंसात्मिका ॥ १७ ॥ १८ ॥ एषभ्रमःअस्मास्वशक्ततावुद्धिःमाययेत्यादिवाक्यंनिंदापरतयाभासमानमपिवाग्देवता
भिप्रायेणायथार्थमेव स्पष्टमेवहिमायावित्वं चतुर्भुजादिकंचभगवतःशास्त्रेइतिदिक् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

धार्ष्ट्यंहितवमंदात्मन्किमतोपिनृपाधम ॥ देवदेवाज्जगन्नाथात्करमिच्छतियोनृपः ३३ तस्यैषकरसंक्षेपोजिह्वाच्छेदोनराधम ॥ तस्यशार्ङ्गरवंश्रुत्वाशंखस्यचहरेःपुनः ३४ कोनामजीवितंकांक्षेत्तिष्ठेदानींत्वमद्यवै ॥ गिरीशवरदर्पेणकोब्रूयादीदृशंवचः ३५ सहायावयमेवैतेबलभद्रपुरोगमाः ॥ प्रथमोबलभद्रोसौद्वितीयोहंचसात्यकिः ३६ कृतवर्मातृतीयस्तुचतुर्थोनिशठोबली ॥ पंचमोथचबभ्रुस्तुषष्ठश्चैवोत्कलःस्मृतः ३७ सप्तमस्तारणोधीमानस्त्रशस्त्रविशारदः ॥ अष्टमस्त्वथसारंगोनवमोविपृथुस्तथा ३८ दशमश्चोद्धवोधीमान्वयमेतेबलान्विताः ॥ तएतेपुरतोगोप्तुःशंखचक्रगदाभृतः ३९ देवदेवस्ययुद्धेषुतिष्ठंत्येवदिवानिशम् ॥ यौहिवीरौसुतौतस्यनासत्यसदृशौबले ४० तावेववांक्षमौयुद्धेहंतुंबलमदान्वितौ ॥ योगिरीशोगिरादेवोवरंदत्त्वासतिष्ठति ४१ युवांहिकिंबलौयुद्धेतिष्ठतःसशरंधनुः ॥ गृहीत्वाशत्रुभिःसार्द्धंयुद्धंकर्तुंसमुद्यतौ ४२ ईदृशेष्वथभृत्येषुयुद्धंकुर्वत्सुशत्रुभिः ॥ त्रैलोक्यंरक्षतस्तस्मात्करमिच्छन्व्रजेतकः ४३ हनिष्यत्येववांयुद्धेत्रैलोक्यंयोहिरक्षति ॥ शरेणनिशितेनाजौशार्ङ्गमुक्तेनकेवलम् ४४ क्वनःसंग्रामइत्येवंपुनराहजगत्पतिः ॥ पुष्करेपुण्यदेनित्यमुतगोवर्द्धनेगिरौ ४५ मथुरायांप्रयागेवादर्शयंतोबलानिमे ॥ शंखचक्रधरेदेवेजगत्पालनतत्परे ४६ राजसूयंमहायज्ञंकर्त्तुमिच्छतिकःस्वयम् ॥ वदन्वास्वस्तिमान्मर्त्यस्त्वांविनाकोव्रजेत्सुखम् ४७ इदमिच्छासिचेन्मूढहास्यतांयासिभूतले ॥ इत्युक्त्वासात्यकिर्वीरोहसन्निवभुविस्थितः ४८ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेसात्यकिवाक्यंनामाष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ छ ॥ वैशंपायनउवाच ॥ ततःक्रुद्धौमहाराजहंसोडिंभकएवच ॥ इदंवैप्रोचतुर्वाक्यंरोषव्याकुलितेक्षणौ १ दिधक्षंतौदिशःसर्वाःसर्वान्वीक्ष्यनृपोत्तमान् ॥ करेणनिष्पीड्यकरंस्मरंतौतद्वचोमहत् २ क्वनुक्वनंदसूनुःक्वारामोबलोत्कटः ॥ इतिब्रुवाणौसाक्षेपौसात्यकिंसत्यसंगरम् ३ अरेयादवदायादकिंब्रूषेनःपुरोगतः ॥ इतोनिर्गच्छमंदात्मन्दूतस्त्वमसिसांप्रतम् ४ अन्यथावध्यएवत्वंप्रलपन्परुषंवचः ॥ सत्यंनिर्लज्जएवासियद्ब्रूयाईदृशंवचः ५ आवामिदंजगत्सर्वंशासितुंसंयतौनृपौ कोनाममानुषेलोकेकरदोनैवजीवति ६ हत्वागोपालकान्सर्वान्बद्ध्वायादवकान्बहून् ॥ गृह्णीमःकरसर्वस्वंततोगच्छनराधम ७ अवध्योदूततांप्राप्तोबहुबद्धंप्रभाषसे ॥ ईश्वरोनौवरंदाताह्यस्त्राणामपिचप्रभुः ८ रक्षितारौमहाभूतौसंग्रामंगच्छतोश्वनौः ॥ पितरंयाजयिष्यावोजित्वागोपालकंरणे ९ १२४

पेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपाख्यानेअष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ततःक्रुद्धइति ॥ १ ॥ २ ॥ क्वनु द्वौकौश्चांतत्वंसूचयतःनंदसूनुरितिगोपत्वव्यंजकम् ॥ ३ ॥ ४ ॥ ५ ॥ कःकरदोनैवजीवतिअपितुसर्वःकरदोजीवतिवृष्णयस्त्वकरत्वान्नजीविष्यंतीत्यर्थः ॥ ६ ॥ एतदेवाह हत्वेति ॥ ७ ॥ ८ ॥ ९ ॥

एतेप्रोक्ताभृशंयुद्धेकातराःसर्वएवते ॥ हत्वातान्सबलान्युद्धेपुनर्जेष्यामिकेशवम् १० संहतंव्यामहासेनाप्रगृहीतशरासना ॥ गृहीतप्रासमुश
लागृहीतकवचासदा ११ आरूढारथसाहस्रागदापरिघसंकुला ॥ सुप्रभूतेंधनवतीप्रभूतबलसाधना १२ चाल्यतांवाहिनीघोराबलाध्यक्षासमंततः ॥ अ
वध्यएवगच्छत्वंनतेमरणतोभयम् १३ संग्रामःपुष्करेस्माकंश्वःपरश्वोपिवानृप ॥ ततोज्ञास्यामहेवीर्यंकेशवस्यबलस्यच ॥ येत्वयोक्तानृपाःसंख्येतेषाम
पिचयद्बलम् १४ ॥ सात्यकिरुवाच ॥ हंसागच्छामिवांहंतुंश्वःपरश्वोपिवानृप ॥ अद्यैवंहिमयावध्यौनचेद्भूतोभवाम्यहम् १५ नहिश्वोवापरश्वोवायु
वांकटुकभाषिणौ ॥ दौत्येहिदुःखमतुलंवहाम्येवसदानृणाम् १६ अन्यथाहंयुवांहत्वाततोयास्यामिनिर्वृतिम् ॥ स्ववीर्यंबाहुदर्पंचदर्शयन्वांनृपाधमौ
१७ शंखचक्रगदापाणिःशार्ङ्गधन्वाकिरीटभृत् ॥ नीलकुंचितकेशाढ्योलंबबाहुःश्रियावृतः १८ ससर्वलोकप्रभवोविश्वरूपःसुरूपवान् ॥ दैत्यदानवहंता
सौयोगिध्येयःपुरातनः १९ पद्मकिंजल्कनयनःश्यामलःसिंहविक्रमः ॥ सृष्टिस्थितिलयेष्वेकःकर्तात्रिजगतोगुरुः २० शरेणनिशितेनाजौदर्पंवांव्यपनेष्य
ति ॥ इत्युक्त्वारथमारुह्यप्रययौसात्यकिःकिल २१ इतिश्रीम०खिले०भविष्यपर्वणिहंसडिंभकोपाख्यानेएकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥
॥ वैशंपायनउवाच ॥ प्रविश्यसपुरंविष्णोःसात्यकिःशिनिपुंगवः ॥ आचचक्षेथकृष्णाययथावृत्तंतयोस्तथा १ ततःप्रभातेविमलेकेशवःकेशिसूदनः ॥
बलाध्यक्षानुवाचेदंचक्रपाणिर्गदाधरः २ संनह्यतांबलंसर्वंरथकुंजरवाजिमत् ॥ अनेकभेरीपणवंप्रासासिपरिघाकुलम् ३ सध्वजंसपताकंचसालंकारपरि
च्छदम् ॥ तेतथेतिप्रतिज्ञायसर्वेचक्रुरधीनगाः ४ आदायसुदृढंचापंरथमारुह्यदंशिताः ॥ अग्रतोजग्मुरत्यर्थंसेनायाःपुरुषोत्तमाः ५ सात्यकिश्चतथारा
जन्प्रगृहीतशरासनः ॥ बभौक्रोधसमायुक्तोजगामाग्रेमहाबलः ६ अन्येचयादवाःशूराःप्रगृहीतमहायुधाः ॥ सिंहनादंप्रकुर्वंतोजग्मुरत्यर्थमुत्तमाः ७ हरि
स्तुरथमारुह्यसंस्कृतंदारुकेणह ॥ शार्ङ्गभारसहंघोरंगृहीत्वासशरंधनुः ८ चक्रपाणिस्तदाशंखीगदाशरवरासिमान् ॥ बद्धगोधांगुलित्राणःपीतवासाजना
र्दनः ९ पद्ममालावृतोरस्कोनवजीमूतसन्निभः ॥ ययौरथगतोविप्रैःस्तूयमानोमुदान्वितैः १० सूतैर्मागधपुत्रैश्चगीयमानस्ततस्ततः ॥ आनीयसेनांसक
लांययौकाष्ठामथोत्तराम् ११ पांचजन्यंमुखेन्यस्यसर्वप्राणेनकेशवः ॥ दध्मौमहारवंकुर्वञ्छत्रूणांभयवर्द्धनम् १२ आध्मातस्तेनहरिणासचक्रेशंखराड्ध्रुवम्
रवःसरोदसीराजन्पूरयामाससर्वतः १३

दध्मुः ध्मांतः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांविंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ छ ॥
अथेति ॥ १ ॥ पुरःसरौचतौमहाभूतौचेतिविग्रहः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ पुरसरःपुरोगामी विसर्गलोपःपूर्वपदेआर्षः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ योहिपुरावृतःसमभवत्स



तस्मिञ्छंखेतथाध्मातेदध्मुःशंखाःसहस्रशः ॥ भेर्यश्चापिसमाध्मातामृदंगाबहवोनृप १४ नेदुरत्यर्थमतुलंवर्मांतेजलदायथा ॥ अथाययुर्महाराजपुष्करं पुण्यवर्धनम् १५ सरसस्तस्यराजेंद्रपुष्करस्यनृपोत्तमाः ॥ प्रतीक्ष्यहंसडिंभकौयुद्धायसमवस्थिताः १६ निवेशंकारयामासुर्यादवाःसर्वएवहि ॥ स्वंस्वंच युःसुखंराजन्प्रगृहीतकुटीमठम् १७ भगवानपिगोविंदःसरोदृष्ट्वासुशोभनम् ॥ उपस्पृश्यजलेतस्मिन्प्रणम्ययतिपुंगवान् १८ तयोरागमनंलिप्सुरास्तेती रेयथासुखम् ॥ शृण्वन्वेदध्वनिंविष्णुर्ब्राह्मणानांसमंततः १९ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेकृष्णपुष्करप्रवेशो नामविंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ अथतौहंसडिंभकौजग्मतुःपुष्करंप्रति ॥ प्रगृहीतमहाचापौसरथौसध्व जौनृप १ पुरःसरमहाभूतौसंहरंताविवोल्बणौ ॥ प्रकुर्वंतौसिंहरवंभस्मनापरिलेपितौ २ त्रिपुंड्रकललाटांतौरुद्राक्षपरिशोभितौ ॥ अन्योन्यद्वाविवरुद्रौतौ लोकसंहारकारकौ ३ ततोनुजग्मुःशतशःसैन्यानिनृपसत्तम ॥ अक्षौहिण्योदशैवासंस्तयोरथसमागताः ४ विचक्रस्तुमहाराजदानवोनगसन्निभः ॥ तयो रेवसखापूर्वमासीच्चबलशालिनोः ५ शक्रोयस्यपुरसरःस्थातुंशक्तोनवज्रभृत् ॥ योहिवीरोमहाराजदेवदैत्यसमागमे ६ देवानिघ्नंस्तथाराजन्देवेंद्रमज यन्महान् ॥ अकरोच्चपुरायुद्धंविष्णुनाप्रभविष्णुना ७ योहिद्वारवतींप्राप्यबबाधेयदुपुंगवान् ॥ सतदानींमहाराजश्रुत्वायुद्धमुपस्थितम् ८ अनेकशत साहस्रैर्दानवैःपरिवायुधैः ॥ वृतःसमभवद्दैत्योवृष्णिद्वेषान्नृपोत्तम ९ हंसस्यडिंभकस्याथसाहाय्यंकर्तुमुद्यतः ॥ विचक्रस्याथदैत्यस्यहिडिंबोराक्षसेश्व रः १० अतीवमित्रतांयातोदयात्प्राणांश्चसंयति ॥ राक्षसैरपरैःसार्धंशिलाशूलासिपाणिभिः ११ ययौतस्यसहायार्थेहिडिंबःपुरुषादपः ॥ अष्टाशीति सहस्राणिराक्षसास्तस्यचाभवन् १२ अनुयातामहाराजशिलापरिघबाहवः ॥ तयोस्तत्रमहासैन्यंगच्छतोःकेशवंप्रति १३ मिश्रितंदैत्यसंघैश्चराक्षसै श्चसमंततः ॥ अत्यद्भुतंमहारौद्रंत्रैलोक्यभयदायकम् १४ दैत्येनसहितौतौहिजग्मतुःपुष्करंप्रति ॥ तावेतौहंसडिंभकौहंतुंकेशवमंजसा १५ ततः श्रुत्वाजरासंधोविग्रहंयदुभिःसह ॥ नाकरोन्नृपसाहाय्यंपापंमेभवितेतिह १६

एवंविचक्रः तस्यविचक्रस्यवृतस्यामित्रतांयातोहिडिंबोनामराक्षसेश्वरइतियोजना ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ दैत्येनविचक्रेणतेनाहिडिंबेन ॥ १५ ॥ नृपसाहाय्यंहंस डिंभकयोःसाहाय्यंविग्रहमपिताभ्यांसहचशापः परासक्तः परेणहंतव्यइतिशास्त्रातिक्रमजोदोषः ॥ १६

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ताभ्यांकुरुनमस्कारमितिवैशंपायनोदिव्यदृष्टयातमप्यर्थंवर्त्तमानवत्पश्यन्जनमेजयंप्रेरयतिजन मेजयेताद्दशशब्दजन्यंपरोक्षंज्ञानंसंभावयत्कथामेवानुसंधत्तेसैन्यमिति सैन्यंकर्तृ देवेशंदर्शयामास अयंकृष्णोयंकृष्णइत्यन्योन्यंदर्शयामासेत्यर्थःद्वयोःसंबंधः ॥ २६ ॥

गच्छतोःसमितिंराजन्हंसस्यडिंभकस्यच ॥ अतित्वरितविक्रांतास्तेययुःपुष्करंप्रति १७ सिंहनादंविमुंचंतःकथयंतःपरस्परम् ॥ अहमेवनृपायुद्धंकरोमि प्रथमंहरेः १८ इत्यब्रुवन्नृपाराजञ्छतशःकेशवंप्रति ॥ संप्राप्तास्तेनृपश्रेष्ठाःपुष्करंपुण्यवर्द्धनम् १९ मुनिजुष्टंतपोवृद्धैर्ऋषिभिश्चनिषेवितम् ॥ अत्यंतभद्रं लोकेषुपुष्करंप्रथमंनृप २० पुष्करंपुंडरीकाक्षोद्वावेवजगतीपते ॥ दर्शनात्स्पर्शनाच्चैवाकिल्बिषच्छेदिनौनृप २१ पुष्करंपुंडरीकाक्षोद्वावेवनृपसत्तम ॥ सेव्यमानौमुनिश्रेष्ठैरमरौवैर्महात्मभिः २२ द्वावेवहिनृपश्रेष्ठसर्वपापप्रणाशकौ ॥ तावुभौयत्रसहितौतत्रतेसांस्थितानृपाः २३ दृष्टवंतौहरिंविष्णुंविष्टरश्र वसंपरम् ॥ पुष्करंपुण्यनिलयंतीर्थंब्रह्मनिषेवितम् २४ ताभ्यांकुरुनमस्कारंमनसानृपसत्तम ॥ अहोनिःशेषमभवत्तत्रभूयोनसंशयः २५ सैन्यंतत्रचसंप्रा प्तंदैत्यरक्षःसमाकुलम् ॥ अनेकभेरीपणवझर्झरीडिंडिमाकुलम् २६ नानापणवसंमिश्रंरक्षोनादविनादितम् ॥ प्रविश्यसरसस्तीरंपुष्करस्यविशांपते ॥ दर्शयामासदेवेशंयुद्धायसमुपास्थितम् २७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेएकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ द्वेसेनेसंगतेराजन्सध्वजेसपरिच्छदे ॥ महापरिघसंकीर्णेगदाशक्तिसमाकुले १ भेरीझर्झरसंपूर्णेडिं डिमारावसंकुले ॥ प्रगृहीतमहाशस्त्रेशूलासिवरकार्मुके २ परस्परकृतोत्साहेचक्रातेयुद्धमुल्बणम् ॥ तेशराःकार्मुकोत्सृष्टानिर्भिद्याथशरीरिणाम् ३ शरी राणिमहाराजजग्मुर्दूरंसहस्रशः ॥ भटबाहुविनिर्मुक्ताःखड्गानिर्भिद्यवक्षसि ४ स्फुरंतश्चतथाराजञ्छिरांस्याहृत्यखंययुः ॥ परिघाश्चतथाराज्ञांबाहुभिःप रिचोदिताः ५ तिलशश्चक्रुरतुलंशरीरंनृपरक्षसाम् ॥ दैत्यानांकुर्वतांनादमन्योन्यवधकांक्षिणाम् ६ दैत्यारक्षांसिराजेंद्रराजानश्चसमंततः ॥ अन्योन्यंपरिघै र्जघ्नुश्चापमुक्तैःशिलाशितैः ७ शरैश्चभोगिभोगाभैस्तीक्ष्णमन्येमहाबलाः ॥ राक्षसादानवाश्चान्येमत्तमातंगविक्रमाः ८ अन्योन्यंजघ्निरेराजंश्चापमुक्तैर्महा शरैः ॥ नागानागैर्महाराजहयाअश्वैःसमंततः ९ रथारथैःसभाजग्मुःसादिनःसादिभिस्तथा ॥ पट्टिशासिशरव्रातैःकुंतैःसायककर्षणैः १० सशक्तिपरिघप्रा सपरश्वधसमाकुलैः ॥ भिंडिपालैर्महारौद्रैर्जघ्नुरन्योन्यमाहवे ११

॥ २७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपाख्यानेएकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ ७ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

१२६ अन्योन्यंजघ्निरेराजंश्चापमुक्तैःशिलाशितैः ॥ राक्षसादानवाराजन्क्षत्रियाश्चसमंततः ॥ इतश्चेतश्चधावंतःकुर्वंतोविस्वरंरवम् १२ हताःकेचिन्महाराज पेतुरु
र्व्यांमहासिभिः ॥ केचिन्मथितमस्तिष्कागदाभिर्वीर्यवत्तमाः १३ भिन्नग्रीवामहाराजपरिघैःपरिघायुधैः ॥ यमराष्ट्रंगताःकेचित्केचित्स्वर्गंसमाययुः १४ अ.१२३
अप्सरोभिःसमासेदुःपश्यंतःस्वकलेवरम् ॥ केचित्स्वांश्चपरांश्चैवहत्वाभ्रांताइवाभवन् १५ एतस्मिन्नंतरेराजन्शंखाभेर्यःसहस्रशः ॥ सस्वनुःसर्वतःसैन्येमृ
दंगाबहवस्तथा १६ मध्यंदिनगतेसूर्येतापंदधतिघोरवत् ॥ ततःपिशाचाविकृताःकरालविततोदराः १७ राक्षसाश्चमहाघोराःपिशितंकेशशाद्वलम् ॥
मुदिताभक्षयामासुःपिबंतःशोणितंबहु १८ संचितानिशवान्यासन्कबंधाःखड्गपातिताः ॥ विभज्यदेशंबहुशोयुद्धभूमौशवाशिनः १९ अथश्येनामृगा
श्चैवकंकागृध्रास्तथापरे ॥ तुंडैःशवान्विनिष्कृष्यभक्षयंतिततस्ततः २० सप्ताशीतिसहस्राणिहतानागानृपोत्तम ॥ त्रिंशत्सहस्रमयुतंनिहताहयसत्तमाः २१
हतंलक्षंमहाराजरथानांरथिभिःसह ॥ त्रिंशत्कोट्योहतास्तत्रसादिनःसायुधाभृशम् २२ मध्यंदिनगतेसूर्येहताःकेचननिर्गताः ॥ केचित्तृषिताराजन्विवि
शुःपुष्करंसरः २३ केचिद्भूमिंसमालिंग्यभीताइत्यब्रुवन्रणे ॥ मुक्तकेशाःपतंतिस्मरथान्संत्यज्यकेचन २४ संदष्टोष्टपुटाःकेचित्सादिनःपुरतोहताः ॥ अत्य
द्भुतंमहायुद्धमासीत्पुष्करतीर्थके ॥ यथादेवासुरंयुद्धमासीत्पूर्वंनृपोत्तम२५ ॥इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिद्वाविंशत्यधिकशततमोऽध्या
यः १२२ ॥ ॥ ६ ॥ वैशंपायनउवाच ॥ एतस्मिन्नंतरेराजन्द्वंद्वयुद्धमवर्तत ॥ विचक्रंयोधयामासशार्ङ्गधन्वागदाधरः १ बलभद्रोथहंसेनडिंभकेणचसा
त्यकिः ॥ वसुदेवोग्रसेनाभ्यांहिडिंबःपुरुषादकः २ शेषाश्चशेषैराजेंद्रचक्रुर्युद्धमदीनगाः ॥ वासुदेवंत्रिसप्तत्यादैत्यंवक्षस्यताडयत् ३ शरैर्निशितधाराग्रैर्वि
स्मयंदर्शयन्रणे ॥ दानवोदेवदेवेशंदृढेननिशितेनच ४ शरेणाकर्णमाकृष्यधनुःप्रवरमीश्वरम् ॥ जघानस्तनमध्येचपश्यतस्तुशचीपतेः ५ तेनविद्धोथभगवा
न्वक्षोदेशेजनार्दनः ॥ अवमच्छोणितंविष्णुरादिकालेयथाप्रजाः ६ ततःक्रुद्धोहृषीकेशःक्षुरप्रेणाहनद्ध्वजम् ॥ अश्वांश्चचतुरोहत्वासारथिंचशरैस्त्रिभिः ७
ततोदध्मौमहाशंखंयथातारामयेरणे ॥ रथादुत्प्लुत्यसहसादानवःक्रोधमूर्च्छितः ८ गदांगृह्यमहाघोरांदुःसहांवीर्यशालिनीम् ॥ तयाजघानदैत्येंद्रःकिरीटे
केशवस्यह ९ ललाटेचपुनर्विष्णुंसिंहनादंव्यनीनदत् ॥ ततःशिलांचमहतींप्रगृह्यदनुजःकिल १० भ्रामयित्वादशगुणंप्राहरत्केशवोरसि ॥ तामपतंतींसंप्रे १२६
क्ष्यहस्तेनादायकेशवः ११ जघानचतयादैत्यंसपपातार्दितःक्षितौ ॥ गतासुरिवसंजज्ञेश्वसन्निवपपातह १२

द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ ॥ ६ ॥ ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ तारामयेबृहस्पतिभार्याप्रधानेतन्निमित्तेइत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

प्राप्यसंज्ञांततोदैत्यःक्रोधाद्विगुणमाबभौ ॥ आदायपरिघंघोरमिदमाहजनार्दनम् १३ अनेनतवगोविंददर्पजातंनिहन्म्यहम् ॥ विक्रमज्ञस्तदाचासिममदेवा सुरेरणे १४ तावेवविपुलौबाहूसएवास्मिजनार्दन ॥ तथापियुध्यसेवीरज्ञात्वात्वंमामकंबलम् १५ वारयेनंमहाबाहोपरिघंबाहुनिःसृतम् ॥ इत्युक्तोदेवदेवे शंशंखचक्रगदाधरं ॥ चिक्षेपदैत्योलोकेशंसर्वलोकस्यपश्यतः १६ तंगृह्यबाहुनाकृष्णोहतोसीतिवदन्हरिः ॥ खंडशःकारयामासखड्गेननिशितेनह १७ उ त्पाट्यवृक्षंदैत्येशःशतशाखंमहाशिखम् ॥ तेनसंपोथयामासविष्टरश्रवसंविभुम् १८ छित्वातंचापिखड्गेनतिलशश्चकारह ॥ विक्रीड्यसुचिरंविष्णुस्तेनदै त्येनमाधवः १९ हंतुमैच्छत्तदादैत्यमादायनिशितंशरम् ॥ आग्नेयास्त्रेणसंयोज्यजघानैनंमहान्हरिः २० संदह्यसशरोदैत्यंसर्वलोकस्यपश्यतः ॥ यथापूर्वंज गामाशुकरंभगवतःपुनः २१ हतशिष्टास्ततोदैत्याःपलायंतोदिशोदश ॥ अद्यापिनानिवर्त्ततेगच्छंतोवैमहोदधिम् २२ इतिश्रीमहाभारतेखिलेषुहरिवंशेभवि ष्यपर्वणिहंसडिंभकोपाख्यानेकृष्णस्योत्कर्षवर्णनंनामत्रयोविंशत्यधिकशततमोऽध्यायः १२३ ॥ छ ॥ वैशंपायनउवाच ॥ बलदेवस्तुधर्मात्माधनुरादा यसत्वरम् ॥ जघानहंसंदशभिर्बाणैर्बाणभृतांवरः १ तंप्रत्यविध्यन्नाराचैर्हंसःपंचभिराशुगैः ॥ तानंतरेहलीछित्वानाराचैर्दशभिःपुनः २ नाराचेनाशुविव्या धललाटेहंसमोजसा ॥ दृढंपतन्सनाराचस्तस्यसंज्ञांसमाददे ॥ रथोपस्थेचिरंस्थित्वातूणाद्बाणंसमाददे ३ लब्ध्वाहंसःससंज्ञांतुविद्ध्वातेनयदूत्तमम् ॥ सिंहव द्व्यनदद्धंसोदेवान्विस्मापयन्रणे ४ ततःक्रुद्धोहलीविद्धस्तेनबाणेनमाधवः ॥ वमञ्छोणितमत्युष्णंनिश्वसंश्चरणाजिरे ५ लोहिताविष्टगात्रस्तुकुंकुमार्द्रइवाभ वत् ॥ नाराचैःशतसाहस्रैरर्दयामासमाधवः ६ हंसंहंसगतिंवीरंनीलवासाहलायुधः ॥ तेमुक्तानिशिताघोरानाराचाश्चसुवाजिनः ७ रथेध्वजेतथाचापेच केतूणीद्वयेनृप ॥ पतिताःसर्वतोराजन्व्यर्थांचैवतथाददुः ८ ततःक्रुद्धोमहाराजहंसोवीर्यमदान्वितः ॥ शरेणहलिनंविद्ध्वाध्वजंचिच्छेदकालवित् ९ श रैश्चतुर्भिरश्वांश्चसूतंप्रेताधिपंददौ ॥ ततःक्रुद्धोहलीतस्मैगदांगृह्यमहारणे १० आपपातमहाबाहुर्हंसंशेषइवश्वसन् ॥ तयारथंध्वजंचक्रमश्वान्सूतंहलायुधः॥ बभंजतिलशःसर्वंननादचपुनःपुनः ११ भूयश्चगदयाहंसंचिक्षेपचबलीकिल ॥ सोपिहंसोगदांगृह्यरथात्तस्मादवापतत् १२ ततस्तौहंसहलिनौयुयुधातेमहा रणे ॥ महारथौमहाबाहूलोकेप्रथिततेजसौ १३ अत्यद्भुतंसुविक्रांतौपरस्परवधैषिणौ ॥ कृतश्रमौमहायुद्धेहंसविक्रांतगामिनौ १४ यथादेवासुरेयुद्धेशक्र वृत्रौपुरांबरे ॥ उभौसंसक्तसर्वांगौशोणितेनमहारणे १५ अत्यंतखेदिनौयुद्धेपरस्परबलेनह ॥ ततश्चदक्षिणंमार्गंबलभद्रोन्वगच्छत १६

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपाख्यानेचतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

सव्यंतुहंसोराजेंद्रोव्यगृह्णात्स्वयमेवहि ॥ पोथयांचक्रतुर्युद्धेगदाभ्यांगजविक्रमौ १७ यथाप्राणंमहाबाहूजघ्नतुर्मरणायतौ ॥ अतिप्रवृद्धंसंग्रामंदेवासुरर
णोपमम् १८ विदधातैमहारंगेपश्यतांत्रिदिवौकसाम् ॥ देवाश्चमुनयश्चैवविस्मयंपरिजग्मिरे १९ अहोखल्वीदृशंयुद्धंदृष्टंपूर्वंनचश्रुतम् ॥ इत्यूचुर्विस्म
यवशाद्देवगंधर्वकिन्नराः २० परस्परकृतोत्साहौचक्रतुर्युद्धमुत्तमम् ॥ अथहंसोमहारंगेदक्षिणंदक्षिणोत्तमः २१ व्यचरन्मार्गमत्यर्थंसव्यंतुबलवान्बलः ॥
निकुंच्यजानुनीपूर्वंचक्रतुर्गदयाभृशम् ॥ रणेरणविदांश्रेष्ठौपश्यतांत्रिदिवौकसाम् ॥ २२ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभको
पाख्यानेहंसबलभद्रयुद्धेचतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ७ ॥ वैशंपायनउवाच ॥ युद्धंचक्रतुरत्यर्थंततोडिंभकसात्यकी ॥ तावुभौबलिनौ
वीरौविख्यातौक्षत्रियेषुच १ कृतश्रमौमहायुद्धेसततंवृद्धसेविनौ ॥ सात्यकिर्दशभिर्वीरोडिंभकंवेदपारगम् २ अविध्यन्निशितैर्बाणैस्तेनवक्रेतथोरसि ॥ स
तेनविद्धोबलिनाडिंभकःक्षत्रियोत्तमः ३ नाराचैःपंचसाहस्रैर्विव्याधयुधिगर्वितः ॥ तानंतरेवृष्णिवीरोनिषिद्धन्निनदन्ब्रुवन् ४ अथक्रुद्धोनृपवरोविद्धःसप्त
भिराशुगैः ॥ पुनःशतसहस्रेणप्रत्यविध्यतसात्यकिम् ५ सात्यकिस्त्वथविक्रांतोधनुश्चिच्छेदतस्यतत् ॥ अर्धचंद्रेणतीक्ष्णेनडिंभकस्यसयादवः ६ आज
घ्नेडिंभकोवीरश्चापमादायचापरम् ॥ क्षुरप्रेणाथरौद्रेणतैलधौतेनविक्रमी ७ सतेनविद्धोबाणेनवमञ्छोणितकंनृप ॥ अतीवशुशुभेराजन्वसंतेकिंशुकोयथा
८ धनुश्चिच्छेदभूयस्तुगृहीतंयत्पुराधनुः ॥ ततोन्यद्धनुरादायडिंभकोयादवेश्वरम् ९ जघाननिशितैर्बाणैःसर्वक्षत्रस्यपश्यतः ॥ सधनुःपुनरत्युग्रंचिच्छेद
युधिसात्यकिः १० शरेणतीक्ष्णपुंखेनडिंभकस्यदुरात्मनः ॥ ततोन्यद्धनुरादायसत्वरंसनृपोत्तमः ११ धनुषातेनराजेंद्रसात्यकिंविव्यधेपुनः ॥ एवंधनूंषि
राजेंद्रशतंपंचचपंचच १२ छित्त्वाननादशैनेयःसर्वक्षत्रस्यपश्यतः ॥ धनुषीतौपरित्यज्यवीरौडिंभकसात्यकी १३ खड्गौप्रगृह्यचात्युग्रौयुद्धायसमुपास्थितौ
तौहिखड्गविदांश्रेष्ठौवीरौडिंभकसात्यकी १४ दौःशासनिर्महाभागसौमदत्तिस्तथैवच ॥ अभिमन्युश्चविक्रांतोनकुलश्चतथैवच १५ एतेखड्गविदांश्रेष्ठाःकी
र्तितायुधिसत्तमाः ॥ एतेष्वेतौनृपश्रेष्ठौषट्सुवैनृपसत्तम १६ तावेतावसिनायुद्धंचक्रतुर्युद्धलालसौ ॥ भ्रांतमुद्भ्रांतमाविद्धंप्राविद्धंबाहुनिःसृतम् १७
आकरंविकरंभिन्नंनिर्मर्यादममानुषम् ॥ संकोचितंकुलचितंसव्यजानुविजानुच १८

॥ १ ॥ २ ॥ ३ ॥ निषिद्धन्खंडयन् निनदन्गर्जन्ब्रुवन्गर्जितशब्देनैवतेषांनिषेधंचकारेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥
॥ १४ ॥ १५ ॥ १६ ॥ भ्रांतमुद्भ्रांतमित्यादयोद्वात्रिंशत्खड्गभेदायथायथमूह्याःखड्गशास्त्रेवाऽन्वेषणीयाः ॥ १७ ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ शक्तिभृत्कार्तिकेयः ॥ २६ ॥ २७ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांपंचविंशत्य

आहिकंचित्रकंक्षिप्तंकुसुंबंलंबनंधृतम् ॥ सर्वबाहुविनिर्बाहुसव्येतरमथोत्तरम् १९ त्रिबाहुस्तुंगबाहुश्चसव्योन्नतमुदासिच ॥ पृष्ठतःप्रथितंचैवयोधिकंप्र
थितंतथा २० ॥ इतिप्रकारान्द्वात्रिंशच्चक्रतुःखड्गयोधिनौ ॥ पुनःपुनःप्रहरंतौनचश्रममुपेयतुः २१ पुष्करस्थौमहाराजयुद्धायकृतनिश्चयौ ॥ ततोदेवाः
सगंधर्वाःसिद्धाश्चपरमर्षयः २२ तुष्टुवुस्तौमहाराजजयेकृतपरिश्रमौ ॥ अहोवीर्यमहोधैर्यमनयोर्बाहुशालिनोः २३ एतावेवरणेशक्तौखड्गेधनुषिपारगौ ॥
एकःशिष्योगिरीशस्यद्रोणस्यान्योहिधीमतः २४ अर्जुनःसात्यकिश्चैववासुदेवोजगत्पतिः ॥ त्रयएतेमहाराजप्रथिताःसंगरेसदा २५ डिंभकःशक्तिभृच्छर्व
स्त्रयएतेमहारथाः ॥ प्रसिद्धाःसर्वएवैतेवीर्येषुचबलेषुच २६ इतितेदेवगंधर्वाःसिद्धायक्षामहोरगाः ॥ दिविस्थिताःसमंतूपुर्युद्धदर्शनलालसाः २७ ॥ इति
श्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेपंचविंशत्यधिकशततमोऽध्यायः १२५ ॥ वैशंपायनउवाच ॥ वसुदेवोग्रसेनौचवृद्धौयु
द्धेसुनिर्वृतौ ॥ जराजरितसर्वांगौपलितांगशिरोरुहौ १ ज्ञानविज्ञानसंपन्नौराजमार्गविशारदौ ॥ युयुधातेमहारंगेराक्षसेनदुरात्मना २ शरैरनेकसाहस्रैर
र्दयामासतूरणे ॥ राक्षसेंद्रंदुरात्मानंहिडिंबंपुरुषादकम् ३ हिडिंबोराक्षसेंद्रस्तुभक्षयन्सर्वतोनरान् ॥ अतिप्रवृद्धोदुष्टात्मालंबबाहुर्महाहनुः ४ लंबोदरो
विरूपाक्षःपिंगकेशीविलोचनः ॥ श्येननासोमहारौद्रऊर्ध्वरोमामहाभुजः ५ पर्वताकारवर्ष्माचदीर्घदंष्ट्रःशिवाननः ॥ लंबोदरोदीर्घदंतोजगद्ग्रासपरस्तथा
६ उत्तुंगांसोमहोरस्कोदीर्घग्रीवोगजोपमः ॥ भक्षयन्मांसपिटकंपिबन्शोणितसंचयम् ७ गजान्नागैःसमाहत्यहयैरश्वान्नृपोत्तम ॥ रथान्रथैःसमाहत्यसादि
नःसादिभिस्तथा ८ मनुष्यान्त्सपुरोदृष्ट्वानास्यग्रासंचकारसः ॥ कांश्चिद्धत्वामहाराजवृष्णिपालान्समंततः ९ भक्षयामाससहसाहिडिंबःपुरुषादकः ॥
यान्पश्यन्पुरतोरक्षस्तान्जघानविरूपधृक् १० भक्षयन्नपरान्वृष्णीन्यादवान्राक्षसेश्वरः ॥ चिक्षेपसहसाकांश्चिद्धिडिंबःपुरुषादकः ११ अंतकालेयथाक्रुद्धो
रुद्रःप्राणभृतोनृपः ॥ क्षणेनैकेनसर्वांस्तान्भक्षयामासराक्षसः १२ केचिद्भीतादिशःप्रापुर्वृष्णयोवीर्यशालिनः ॥ केचित्तुभक्षितास्तेनरक्षसावृष्णिपुंगवाः
१३ कुंभकर्णोयथाराजन्भक्षयामासवानरान् ॥ ( निःशेषंवृष्णिसैन्यंतुचकारपुरुषादकः ) १४ निश्चेष्टंवृष्णिसैन्यंतुस्थितंचित्रपटेयथा ॥ एतस्मिन्नंतरेक्रुद्धौवृ
द्धौयादवपुंगवौ ॥ धनुर्गृह्यमहाघोरंराक्षसस्यपुरस्थितौ १५

धिकशततमोऽध्यायः ॥ १२५ ॥ ॥ छ ॥

वसुदेवइति ॥ १ ॥ राजमार्गःक्षत्रधर्मोयुद्धाख्यःतत्रविशारदौ ॥ २ ॥ ३ ॥ ४ ॥ विलोचनःविरूपनेत्रः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ नास्यग्रासंनासयाअत्तुंयोग्यंना
स्यमिवग्रासितवेति नास्यग्रासंश्वासेच्छ्वासेनमहिषोमशकानिवनासामार्गेणमनुष्यान्संजहारेत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

१२८ यथाक्रुद्धस्यसिंहस्यमृगौवृद्धतमाविव ॥ व्यादायास्यंमहारक्षस्तौवृद्धावभ्यधावत १६ चिखादिषुर्विरूपाक्षंपातालतलसन्निभम् ॥ ततोरथःपर्यधावत्खा अ.१२६
दन्नखादन्कलेवरम् १७ पूरयामासतुर्वीरौशरैर्यदुवृषौनृप ॥ हिडिंबस्यमहाघोरंव्यादितास्यमिवांतकम् १८ सर्वांस्तान्वारयामासदेवशत्रुर्विरूपधृक् ॥
धावतिस्मततोरक्षोव्यादितास्यंभयानकम् १९ तयोर्गृहीत्वाधनुषीबभंजयुधिसत्वरम् ॥ बाहूंप्रसार्यदुष्टात्माराक्षसोविकृताननः २० वसुदेवंमहीपालं
राजानंवृद्धसेविनम् ॥ गृहीतुंराक्षसश्रेष्ठोयततेनृपसंसदि २१ ॥ हिडिंबउवाच ॥ एषवांभक्षयिष्यामिवसुदेवंत्वयासह ॥ उग्रसेनकिमर्थंत्वंतिष्ठसेम
त्पुरोगमः २२ आगच्छप्रविशास्यंमेग्रासभूतौतुवांमम ॥ विधिनानिर्मितोवृद्धोवसुदेवोहरेःपिता २३ बुभुक्षितःश्रमार्तश्चयुद्धेत्वरितविक्रमः ॥ मन्मुखा
न्नैवगच्छेतांप्रविशेतांत्वरान्वितौ २४ युवयोःशोणितंपीत्वात्वंमियास्यामिनिर्वृतः ॥ खादामिचपुनर्मांसंवृद्धयोर्युवयोःसुखम् २५ इतिब्रुवंस्तथारक्षोव्या
दितास्यंमहाहनु २६ धावतिस्मतदाक्षिप्रंहिडिंबोराक्षसेश्वरः २६ वसुदेवोग्रसेनौचभीतौविप्रेक्ष्यसर्वतः ॥ दिशोऽभ्यभजतांराजन्निःशस्त्रौवृष्णिपुंगवौ ॥
२७ एतस्मिन्नंतरेदृष्ट्वाबलभद्रःप्रतापवान् ॥ दृष्ट्वाचतौतथाभूतौवसुदेवोग्रसेनकौ २८ वासुदेवेसमादिश्यहंसंयुध्यंतमीश्वरे ॥ निर्गत्यचांतरंतस्यराक्षस
स्यदुरात्मनः २९ माकृथाःसाहसंरक्षोमुंचैतौराजसत्तमौ ॥ स्थितोस्मियुध्यतांरक्षोमयाशत्रूनजिघांसता ३० अहमेवहनिष्येत्वांकाचेयंतवभीषिका ॥
इतिब्रुवाणंहलिनंतौविसृज्यमहारणे ३१ महानयमसौदुष्टोभक्षयाम्येनमग्रतः ॥ विदार्यपूर्ववद्वक्त्रंबलभद्रमुपाद्रवत् ३२ विमृज्यसशरंचापंराक्षसस्यपुरः
स्थितः ॥ मुष्टिंप्रगृह्यबलवान्स्फोटयन्बाहुमुत्तमम् ३३ हिडिंबस्त्वथदुष्टात्मामुष्टिंकृत्वाभयानकाम् ॥ जघानवक्षोरामस्यव्यादितास्यइवांतकः ३४
क्रुद्धोथबलभद्रस्तुमुष्टिनातेनताडितः ॥ जघानमुष्टिनातेनराक्षसेशमानिंदितः ३५ मुष्टियुद्धंसमभवन्नरराक्षसवीरयोः ॥ युद्ध्यतोर्युद्धरंगेथनरराक्षससिं
हयोः ३६ तयोश्चटचटाशब्दःप्रादुरासीद्भयानकः ॥ अथराक्षसराजस्तुमुष्टिनाराममाहवे ३७ जघानवक्षोदेशेतुवज्रेणेवपुरंदरः ॥ अथरामोबलीसाक्षा
न्मुष्टिंसंवर्त्ययत्नतः ३८ हिडिंबंताडयामासवक्षस्यमरविद्विषम् ॥ तलाभ्यामथरामस्तुवक्त्रेहत्वासराक्षसम् ३९ आहतस्तलघातेनाहिडिंबोराक्षसेश्वरः ॥
जानुभ्यामपतद्भूमौगतासुर्वीरराक्षसः ४० ततउत्पाट्यरामस्तुदोर्भ्यांसंगृह्यराक्षसम् ॥ आदायबाहुवेगेनभ्रामयित्वापदात्पदम् ४१ व्याविध्यत्सुचिरंरा १२८
मोदर्शयन्नात्मनोबलम् ॥ उत्क्षिप्यराक्षसेंद्रंतंसर्वलोकस्यपश्यतः ४२

गतासुःप्राप्तसंज्ञः निराक्रमत् निर्गतः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ हेनृप प्रभातकालेगोवर्द्धनेरणःसत्तमइतिब्रुवंतइत्यन्वयः पुष्करदेशादपक्रम्यगोवर्द्धनं देशं प्रातिप ला।यिताइत्यर्थः ॥ ४७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिभकोपाख्यानेहिडिंबपराभवोनामषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥

गव्यूतिमात्रंचिक्षेपततोदेशाद्धलायुधः ॥ गतासूराक्षसश्रेष्ठस्ततोदेशान्निराक्रमत् ४३ येकेचिद्राक्षसास्तत्रहतशेषामहारणे ॥ बलभद्रात्ततोभीताजग्मुश्चै वंदिशोदश ४४ अथांशुमालीभगवान्दिनेशःसंहृत्यतेजांसिसहस्ररश्मिः ॥ अस्तंययौचक्षुरपिप्रजानामीषत्तमश्चापिसमाविवेश ४५ तस्मिन्प्रविष्टेथस मुद्रतोयंप्रजापतौविश्वमुखेजगद्गुरौ ॥ नक्षत्रनाथःसमुपाजगामसंध्यातमोपिव्यनशन्नृपोत्तम ४६ प्रभातकालेनृपसत्तमोरणोगोवर्द्धनेकिन्नरगीतनादिते ॥ इ तिब्रुवंतोनृपसत्तमास्तदाव्युपारमंस्तत्ररणोत्सवेनृप ४७ ॥ ॥ इतिश्रीम०खिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेहिडिंबपराभवोनामषड्विंशत्य धिकशततमोऽध्यायः ॥ १२६ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ उभौतौहंसडिभकौरात्रावेवमहागिरिम् ॥ जग्मतुःसाहितौराजन्गोवर्द्धनमथोनृप १ अथप्रभातेविमलेसूर्येचाभ्युदितेसति ॥ गोवर्द्धनंजगामाशुकेशवःकेशिसूदनः २ शैनेयोबलभद्रश्चयादवाःसारणादयः ॥ गंधर्वैरप्सरोभिश्चनादितंबहुधागि रिम् ३ जग्मतुःसहितौराजन्गोवर्द्धनमथोगिरिम् ॥ गोधनैरथसैन्यैश्चनादितंबहुधागिरिम् ४ तस्योत्तरंनृपश्रेष्ठपार्श्वंसंप्राप्ययादवाः ॥ निकषायमुनां राजंस्ततोयुद्धमवर्त्तत ५ विव्याधहंसडिभकौवसुदेवश्चसप्तभिः ॥ सारणःपंचविंशत्यादशभिःकंकएवच ६ हंसेनडिभकेनाथयादवैश्चसमंततः ॥ उग्रसे नस्त्रिसप्तत्याशराणांनतपर्वणाम् ७ विराटस्त्रिंशताराजन्सात्यकिश्चापिसप्तभिः ॥ अशीत्याविपृथूराजन्नुद्धवोदशभिःशरैः ९ प्रद्युम्नस्त्रिंशताराजन्सांबश्चा पिचसप्तभिः ॥ अनाधृष्टिस्त्वेकषष्ट्याचशराणांनतपर्वणाम् ९ एवंतेसहिताराजंश्चक्रुर्युद्धमदीनवत् ॥ अत्यद्भुतंमहाघोरंयादवाःसर्वएवहि १० च क्रुस्ताभ्यांमहायुद्धंवासुदेवस्यपश्यतः ॥ सर्वानपिमहाराजयादवान्बलदर्पितान् ११ तावुभौहंसडिभकौनृपांस्तान्प्रत्यविध्यताम् ॥ प्रत्येकंदशभि र्विद्धाबाणैर्निशितकोमलैः १२ जघ्नतुश्चशरैस्तीक्ष्णैरत्यर्थंयादवेश्वरान् ॥ व्यथिताःसर्वएवैतेवमंतःशोणितंबहु १३ माधवेकिंशुकाराजन्पु ष्पिताइवतेबभुः ॥ भीताश्चयादवाराजन्पलायनपरायणाः १४ एतस्मिन्नंतरेराजन्वसुदेवात्मजौनृप ॥ वासुदेवोहलीयुद्धेप्रमुखेधन्विनौतयोः १५ चक्र तुर्युद्धमतुलंस्कंदशक्राविवांबरे ॥ तयोरेवसगंधर्वाःसिद्धायक्षामहर्षयः १६

॥ छ ॥ ॥ उभौताविति ॥ १ ॥ सर्वज्ञोगोविंदोपिसद्यस्तत्रगतइत्याह अथेति ॥ २ ॥ ३ ॥ ४ ॥ यमुनांनिकषायमुनायाःसमीपे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

१२९ विमानस्थाश्चददृशुर्युद्धंदेवासुरोपमम् ॥ ततःप्रादुरभूतांतौदूतौभूतेश्वरौनृप १७ शूलिनाप्रेषितौयुद्धेरक्षार्थंबलिनोस्तयोः ॥ हंसोथवासुदेवश्चयुद्धंचक्रतुरी अ.१२७
श्वरौ १८ रामश्चडिभकश्चैवसंयुक्तौयुद्धकांक्षया ॥ विशून्याःसर्वएवैतेह्यस्त्रेशस्त्रेतथाबले १९ शंखान्दध्मुःपृथक्ह्लादंस्वेस्वेसर्वेरथेस्थिताः ॥ अथकृष्णोहृ
षीकेशःपांचजन्यंमहारवम् २० दध्मौपद्मपलाशाक्षःसर्वान्विस्मापयन्निव ॥ अथभूतौमहाघोरौलंबोदरशरीरिणौ २१ दुद्रुवतुर्महाराजशूलमादायकेशव
म् ॥ शूलेनपोथयांराजन्चक्रतुर्यादवेश्वरम् २२ ताभ्यांसमाहतोविष्णुर्देवगंधर्वसंनिधौ ॥ ईषत्स्मिताधरोदेवःकिंचिदुल्लुत्यसत्वरम् २३ रथाद्रथिवरश्रे
ष्ठस्तौप्रगृह्यजनार्दनः ॥ भ्रामयित्वाशतगुणमलातमिवकेशवः २४ कैलासंचसमुद्दिश्यप्रचिक्षेपततोहरिः ॥ ताउपेत्यगिरेःशृंगंकैलासस्यमहामते २५ दृ
ष्ट्वातत्कर्मदेवस्यविस्मयंजग्मतुःपरम् ॥ हंसश्चदृष्ट्वातत्कर्मरोषताम्रायतेक्षणः २६ उवाचवचनंहंसःशृण्वतांत्रिदिवौकसाम् ॥ किमर्थंराजसूयस्यविघ्नंचरसिके
शव २७ ब्रह्मदत्तोमहीपालोयष्टातस्यमहाक्रतोः ॥ करंदिशयथायोगंयदिप्राणान्हिरक्षसि २८ अथवात्वंक्षणंतिष्ठततोज्ञात्वापरंबहु ॥ ददासित्वंनंदपुत्र
ततोयष्टासमेगुरुः २९ ईश्वरोहंसदाराज्ञांदेवानामिवशूलभृत् ॥ एषतेवीर्यमतुलंनाशयिष्यामिसंयुगे ३० इत्युक्त्वासशरंचापंशालतालोपमंनृप ॥ आकृ
ष्यचयथाप्राणंनाराचेनचकेशवम् ३१ ललाटेचिक्षिपेहंसोललामइवसोभवत् ॥ उवाचसात्यकिंकृष्णोरथंवाहयमेप्रभो ३२ दारुकंपृष्ठवाहंतंकृत्वादेशं
तमीश्वरः ॥ अथतेनसमादिष्टःसात्यकिर्वाहयन्रथम् ३३ मंडलानिबहून्याजौदर्शयामाससत्वरम् ॥ अथविद्धोदृढंतेनशरेणहरिरीश्वरः ३४ आग्नेयमस्त्रं
संयोज्यशरेकस्मिंश्चिदव्ययः ॥ उवाचहंसंराजेंद्रसात्यकिंप्रेरयन्रणे ३५ अनेनत्वांदहेपापयदिशक्तोसिवारय ॥ अलंतेबहुबद्धेनक्षत्रियोसिसदाशठ ३६
मत्तश्चेत्करमिच्छेस्त्वंदर्शयाद्यपराक्रमम् ॥ यतयोबाधिताहंसपुष्करेसंस्थितास्त्वया ३७ शास्तात्वंखलुविप्राणांस्थितेमयिनराधम ॥ स्थितेमयिजगन्ना
थेहत्वाक्षत्रियकंटकान् ३८ शास्तास्म्यथोसतांलोकेदुष्टानांब्रह्मविद्विषाम् ॥ शापेनयतिमुख्यानांहतएवनृपाधम ३९ मृत्यवेत्वांनिवेद्याद्यरक्षिताब्राह्मणा
नहम् ॥ इतिब्रुवंस्तदस्त्रंतुमुमोचयुधिकेशवः ४० तदस्त्रंवारुणेनाथहंसोपिप्रत्यषेधयत् ॥ वायव्यमथगोविंदोमुमोचयुधिहंसके ४१ तदस्त्रंवारयामासमा १२९
हेंद्रेणनृपोतमः ॥ अथमाहेश्वरंकृष्णोमुमोचात्युग्रमाहवे ४२ रौद्रेणतत्ततोहंसोवारयामासतत्क्षणात् ॥ गांधर्वंराक्षसंचैवपैशाचमथकेशवः ४३

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपाख्यानेहंसकेशवयुद्धेसप्तविंशत्यधिकशततमो ऽध्यायः ॥ १२७ ॥ ॥ छ ॥ ॥ अथेति ॥ १ ॥ २ ॥ ह्रदामितिक्रीबत्वमार्षम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ कोनमस्यतिकःपूजयेन्नकोपीत्यर्थः १०

ब्रह्मास्त्रमथकौबेरमासुरंयाम्यमेवच ॥ चत्वार्येतानिहंसस्तुमुमोचयुधिसत्वरम् ४४ वारणार्थंतदस्त्राणांचतुर्णांमाधवस्यह ॥ अथब्रह्मशिरोनामघोरमस्त्रं विनाशकम् ४५ मुमोचहंसमुद्दिश्यदेवदेवोजनार्दनः ॥ योजयामासतद्धंसेमहाघोरपराक्रमम् ४६ अथभीतोमहारौद्रमस्त्रंदृष्ट्वानृपोत्तमः ॥ हंसोपिते नराजेंद्रवारयामासतंशरम् ४७ यमुनापउपस्पृश्यदेवदेवोजनार्दनः ॥ अस्त्रंवैष्णवमादायशरेसनिशितेहरिः ४८ योजयामासभूतात्माभूतभावनभा वनः ॥ येनदेवारणेहत्वाराज्यमापुःपुरासुरान् ॥ तदस्त्रंयोजयामासवधार्थंतस्यभूपते ४९ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणि हंसडिभकोपाख्यानेहंसकेशवयुद्धेसप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ ॥ छ ॥ ॥ ॥ वैशंपायनउवाच ॥ अथभीतोमहारौद्र मस्त्रंदृष्ट्वानृपोत्तम ॥ हंसोराजामहाराजनिश्चेष्टइवसंबभौ १ उत्प्लुत्यसरथात्तस्माद्यमुनामभ्यधावत ॥ यत्रकृष्णोहृषीकेशःकालियाहिममर्दह २ महा ह्रदंमहारौद्रंयावत्पातालसंस्थितम् ॥ तावद्दीर्घंमहानीलंकालांजननिभंहियत् ३ तस्मिन्ह्रदेमहाघोरेपपाताथसहंसकः ॥ हंसेपतिततास्मिंस्तुमहान्रा वोबभूवह ४ गिरीणांपात्यमानानांसमुद्रइववज्रिणा ॥ रथादुत्प्लुत्यकृष्णोपितस्योपरिपपातह ५ देवदेवोजगन्नाथोजगद्विस्मापयन्निव ॥ प्राहरत्तंमहाबा हुःपादाभ्यामथकेशवः ६ पादक्षेपंनृपस्तस्माल्लब्ध्वाहंसोनृपोत्तम ॥ ममारचनृपश्रेष्ठकेचिदेवंवदंतिहि ७ अन्येपातालमायातोभक्षितःपन्नगैरिति ॥ अद्यापिनैवराजेंद्रदृष्टइत्यनुशुश्रुम ८ यथापूर्वंजगन्नाथोरथंसमुपजग्मिवान् ॥ हतेतस्मिन्महाराजधर्मपुत्रोयुधिष्ठिरः ९ अकरोद्राजसूयंचतवपूर्वपिताम हः ॥ यदिजीवेदसौहंसःकोनमस्यातितंक्रतुम् १० सचसर्वास्त्रविन्नित्यंरुद्राल्लब्धवरःप्रभो ॥ क्षणादेवमहाराजवार्त्तेयंगामगाहत ११ हतोहंसोहतोहंसःकृष्णे नरिपुमर्दिना ॥ जगुर्गंधर्वपतयोदेवलोकेदिवानिशम् १२ कृष्णेनलोकनाथेनविष्णुनाप्रभविष्णुना ॥ यमुनायाह्रदेघोरेहंसोनिहतइत्यपि १३ इतिश्री महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकोपाख्यानेहंसवधोनामाष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥ ॥ छ ॥ ॥ ॥ वैशंपाय नउवाच ॥ श्रुत्वानिहतमत्युग्रंभारतंवीर्यशालिनम् ॥ बलदेवंपरित्यज्ययुध्यमानंमहाररणे १

इयंवार्ताहंसमरणकथागांपृथ्वींअगाहतआक्रांतवती ॥ ११ ॥ १२ ॥ १३ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांहंसडिंभकोपाख्यानेहंसवधेष्टाविंशत्यधिक शततमोऽध्यायः ॥ १२८ ॥ ॥ छ ॥ ॥श्रुत्वेति ॥ १ ॥

२ ॥ ३ ॥ अथेतिपादपूरणार्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभाविष्यपर्वणिटीकायां



डिंभकोवीर्यसंपन्नोयमुनामनुजग्मिवान् ॥ तमन्वधावद्वेगेनबलभद्रोहलायुधः २ हतोहिंयत्रपतितस्तत्रासौनिपपातह ॥ यमुनायांमहाराजविलोड्यंज
लसंचयम् ३ अथक्रुद्धःसडिभकोभ्रामयित्वाजलंबहु ॥ उन्मज्ज्योन्मज्ज्यसहसानिमज्ज्यचपुनःपुनः ४ नददर्शतदाराजन्भ्रातरंवीर्यशालिनम् ॥ उन्मज्ज्या
थमहाबाहुर्वासुदेवंविलोक्यच ५ उवाचवचनंराजन्डिंभकोवीर्यवत्तमः ॥ अरेगोपकदायादक्वासौहंसइतिस्थितः ६ वासुदेवोपिधर्मात्मायमुनांपृच्छरा
जक ॥ इत्यब्रवीत्प्रसन्नात्मावासुदेवःप्रतापवान् ७ तच्छ्रुत्वायमुनांभूयःप्रविश्यडिभकःकिल ॥ बहुप्रकारमुद्वीक्ष्यभ्रातरंभ्रातृवत्सलः ८ विललापततो
राजाडिंभकोभ्रांतमानसः ॥ क्वनुगच्छसिराजेंद्रविहायैनमबांधवम् ९ कुतोभ्रातरितोगच्छेःपरित्यज्यैवमामिह ॥ विलप्यैवंनृपश्रेष्ठडिंभकोभ्रातृवत्स
लः १० आत्मत्यागेमनःकुर्वन्यमुनायामहाह्रदे ॥ निमज्ज्योन्मज्ज्यसहसामरणेकृतनिश्चयः ११ हस्तेनजिह्वामाकृष्यभूयोभूयोविलप्यच ॥ ततःसमू
लामाकृष्यजिह्वांसाहसकृत्स्वयम् १२ ममारांतर्जलेराजन्डिंभकोनरकायवै ॥ एवंतुनिहतेहंसेडिंभकेवीर्यशालिनि १३ आगमत्पुंडरीकाक्षोभूतान्वि
स्मापयन्निव ॥ ततःप्रीतःप्रसन्नात्मावासुदेवःप्रतापवान् १४ गोवर्द्धनेथविश्रम्यबलभद्रसहायवान् ॥ कंचित्कालंमहाराजपूर्वभुक्तमुवासह १५
॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिहंसडिंभकवधोनामैकोनत्रिंशदधिकशततमोऽध्यायः १२९ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥
यशोदानंदगोपश्चकृष्णदर्शनलालसौ ॥ गोवर्द्धनगतंश्रुत्वावासुदेवंसहाग्रजम् १ नवनीतंचदधिचपायसंकृसरंतथा ॥ वन्यंपुष्पंमहाराजमयूरांगदमेवच
२ बल्लवैरपरैःसार्द्धंगोपीभिश्चसमंततः ॥ जग्मतुःसहसाप्रीतौगोवर्धनमथोनृप ३ क्वचिद्वृक्षेसमासक्तंकृष्णंकृष्णमृगेक्षणम् ॥ ददर्शतुर्महाबाहुंवासुदेवंसहा
ग्रजम् ४ प्रणेमतुःसुसंहृष्टौतत्रदृष्ट्वामहाबलौ ॥ दर्शयामासतुर्देवौपायसानिमहांतिच ५ तातमातर्व्रजेगोष्ठेकुशलंवास्वगोधनम् ॥ अपिगावःक्षीरवत्यो
वत्सावत्सतराःपितः ६ अपिवासुशुभंक्षीरमपिगावःसुशोभनाः ॥ अपिवादारकामातर्वत्सपालाःपिबंतिच ७ बहूनिचापिदामानिकीलकाअपिवाबहु ॥
तृणानिबहुरूपाणिकिंवासंतिपितःसदा ८ शकटानिसुगंधीनिकिंवासंतिपितर्ध्रुवम् ॥ अपिगोप्यःपुत्रवत्योदारकान्किमजीजनन् ९ घटाःकिंबहवोमातर
भिन्नाःसर्वतोव्रजे ॥ किंगावःक्षीरमतुलंस्रवंत्यहरहःपितः १०

हंसडिंभकोपाख्यानेहंसडिंभकवधोनामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ छ ॥ ॥ यशोदेति ॥ १ ॥ मयूरांगदंमयूरपिच्छमयंबाहुभूषणम् ॥ २ ॥
॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांत्रिंशदाधिकशततमोऽध्यायः

हय्यंगवीनंक्षीराणिदधिवाकिमजीजनन् ॥ गोधनंसर्वमेवेदंनिरोगंप्रतिपद्यते ११ ॥ नंदउवाच ॥ सर्वमेतद्यदुश्रेष्ठनीरोगंबहुशःप्रभो ॥ कुशलंगोधनस्यै
वसर्वकालेषुकेशव १२ रक्षणात्तवदेवेशसदाकुशलिनोवयम् ॥ सगोधनास्सवत्साश्वनीरोगाइवकेशव १३ एकमेवसदादुःखंनत्वांद्रक्ष्यामिकेशव ॥ यदे
तत्केवलंदुःखमितिधीःशीर्यतेसदा १४ ॥ वैशंपायनउवाच ॥ एवमादिविलप्यंतंगच्छेत्याहसकेशवः ॥ यशोदांपुनराहेदंमातर्गच्छगृहंप्रति १५ येच
त्वांकीर्तयिष्यंतितेचस्वर्गमवाप्नुयुः ॥ येकेचित्त्वांनमस्यंतितेमेप्रियतराःसदा १६ मद्भक्ताःसर्वदासंतुगच्छेत्याहचतांहरिः ॥ इत्युक्त्वापितरौदेवोवासुदेवः
सनातनः १७ गाढमालिंग्यतौप्रीतौप्रेषयामासकेशवः ॥ यशोदानंदगोपश्चजग्मतुःस्वगृहंप्रति १८ ततःकृष्णोहृषीकेशोयादवैःसहवृष्णिभिः ॥ गंतुमै
च्छत्तदाविष्णुःपुरींद्वारवतींकिल १९ यएतच्छृणुयान्नित्यंपठेद्वापिसमाहितः ॥ पुत्रवान्धनवांश्चैवअंतेमोक्षंचगच्छति २०॥ इतिश्रीमहाभारतेखिलेषुह
रिवंशेभविष्यपर्वणियशोदानंदगोपबलभद्रकृष्णसमागमोनामत्रिंशदधिकशततमोऽध्यायः १३० ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ गच्छन्नथम
हाविष्णुःपुष्करंप्राप्ययादवैः ॥ अपश्यन्मुनिमुख्यांस्तुपुष्करस्थान्नृपोत्तम १ तेसमेत्यमहादेवमृषयोवीतमत्सराः ॥ अर्घादिसमुदाचारंकृत्वैनंयादवोत्त
मम् २ प्रोचुर्विश्वेश्वरंविष्णुंभूतभव्यभवत्प्रभुम् ॥ अत्यद्भुतमिदंविष्णोतववीर्यंजनार्दन ३ येनतौनिहतौयुद्धेहंसोडिंभकएवच ॥ योविचक्रोदुराधर्षो
देवैरपिसुदुःसहः ४ संगरेनिहतोदेवदुःसाध्यइतिनोमतिः ॥ क्षेमोनःसर्वकार्येषुचरतांतपउत्तमम् ५ निष्कल्मषाभविष्यामस्तवसंस्मरणाद्धरे ॥ त्वंहिसर्व
स्यदुःखस्यहर्तात्वांध्यायतांसदा ६ त्वदनुस्मरणंजंतोःसदापुण्यप्रदंप्रभो ॥ त्वंहिनःसततंधाताविधातातपसोहरेः ७ त्वमोंकारोवषट्कारस्त्वंयज्ञस्त्वंपिता
महः ॥ त्वंज्योतिर्ब्रह्मणोमूर्तिस्त्वंब्रह्मारुद्रएवच ८ प्राणस्त्वंसर्वभूतानामंतरात्मेतिकथ्यते ॥ उपास्यःसर्वभूतानांयज्ञैर्दानैर्जगत्पते ९ नमोविश्वसृजेदे
वनमस्तेविश्वमूर्तये ॥ पाहिलोकमिमंदेवहत्वाब्रह्मद्विषःसदा १० सतथेतिहरिर्विष्णुर्ययौद्वारवतींपुरीम् ॥ अवसद्वृष्णिभिःसार्द्धंस्तूयमानःसमागधैः ११
इयंचदेवदेवस्यचेष्टाहिजनमेजय ॥ प्रोक्तातेपृच्छतेराजन्किमन्यच्छ्रोतुमिच्छसि १२ ॥ इतिश्रीमहाभारतेभविष्यपर्वणिद्वारकायांकृष्णप्रत्यागमनंनामै
कत्रिंशाधिकशततमोऽध्यायः १३१ ॥ ॥ छ ॥ ॥

॥ १३० ॥ गच्छन्यादवैःसहेतिशेषः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ धाताप्रवर्त्तकःविधाताफलप्रदः ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ इतिश्रीमहा
भारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांएकत्रिंशाधिकशततमोऽध्यायः ॥ १३१ ॥ ॥ छ ॥ ॥

भगवन्निति यद्यपिभारतंस्वर्गारोहणांतमवभातितथापिशतपर्वगणनायांहरिवंशस्यांतर्भावकथनात्हरिवंशांतमेवभारतमितिस्पष्टयितुंअत्रभारतश्रवणविधिःकीर्त्यतेपारणेषुसमाप्ति पुएतेनअसकृन्निरंतरंभारतंश्रोतव्यंपठितव्यंचेतिदर्शितम् ॥ १ ॥ २ ॥ ३ ॥ दिवीति देवाः स्वर्गादेत्यात्रक्रीडित्वादिवंगताइतिमुनिराहेतियोज्यम् ॥ ४ ॥ एतदेवविवृणोति हंतेति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ तेषामिति यतोत्रमहतायत्नेनएतत्श्रवणात्पापनाशोभवतीत्यर्थः ॥ १० ॥ ११ ॥ तेषांभारतयुद्धेमृतानांभीष्मादीनाम् ॥

॥ जनमेजयउवाच ॥ भगवन्केनविधिनाश्रोतव्यंभारतंबुधैः ॥ फलंकिंकेचदेवाश्चपूज्यावैपारणेष्विह १ देयंसमाप्तेभगवन्किंचपर्वणिपर्वणि ॥ वाचकः कीदृशश्चात्रयष्टव्यस्तद्ब्रवीहिमे २ ॥ वैशंपायनउवाच ॥ शृणुराजन्विधिमिमंफलंयच्चापिभारतात् ॥ श्रुताद्भवतिराजेंद्रयत्त्वंमामनुपृच्छसि ३ दिविदेवा महीपालक्रीडार्थमवनिंगताः ॥ कृत्वाकार्यमिदंचैवततश्चदिवमागताः ४ हंततत्तेप्रवक्ष्यामितच्छृणुष्वसमाहितः ॥ ऋषीणांदेवतानांचसंभवंवसुधातले ५ अत्ररुद्रास्तथासाध्याविश्वेदेवाश्चशाश्वताः ॥ आदित्याश्चाश्विनौदेवौलोकपालामहर्षयः ६ गुह्यकाश्चसगंधर्वानागाविद्याधरास्तथा ॥ सिद्धाधर्मःस्वयंभूश्चमुनिःकात्यायनोवरः ७ गिरयःसागरानद्यस्तथैवाप्सरसांगणाः ॥ ग्रहाःसंवत्सराश्चैवअयनान्यृतवस्तथा ८ स्थावरंजंगमंचैवजगत्सर्वंसुरासुरम् ॥ भारतेभरतश्रेष्ठएकस्थमिहदृश्यते ९ तेषांश्रुतिप्रतिष्ठानांनामकर्मानुकीर्तनात् ॥ कृत्वापिपातकंघोरंसद्योमुच्येतमानवः १० इतिहासमिमंश्रुत्वायथावदनुपूर्वशः ॥ संयतात्माशुचिर्भूत्वापारंगत्वाचभारते ११ तेषांश्राद्धानिकुर्वीत श्रुत्वाभारतभारतम् ॥ ब्राह्मणेभ्योयथाशक्त्याभक्त्याचभरतर्षभ १२ महादानानिदेयानिरत्नानिविविधानिच ॥ गावःकांस्योपदोहाश्चकन्याश्चैवस्वलंकृताः १३ सर्वकामगुणोपेतायानानिविविधानिच ॥ भाजनानिविचित्राणिभूमिर्वासांसिकांचनम् १४ वाहनानिचदेयानिहयामत्ताश्चवारणाः ॥ शयनंशिबिकाश्चैवस्यंदनाश्चस्वलंकृताः १५ यद्यद्गृहेवरंकिंचिद्यद्यदस्तिमहद्वसु ॥ तत्तद्देयंद्विजातिभ्यआत्मादाराश्चसूनवः १६ श्रद्धयापरयादत्तंक्रमशस्तस्यपारगः ॥ शक्तितःसुमनाहृष्टःशुश्रूषुरविकंपनः १७ सत्यार्जवरतोदांतःशुचिःशौचपरायणः ॥ श्रद्दधानोजितक्रोधोयथासिद्ध्यतितच्छृणु १८ शुचिःशीलान्विताचारःशुक्लवासाजितेंद्रियः ॥ संस्कृतःसर्वशास्त्रज्ञःश्रद्दधानोनसूयकः १९ रूपवान्सुभगोदांतःसत्यवादीजितेंद्रियः ॥ दानमानगृहीताचकार्योभवतिवाचकः २० अविलंबमनायस्तमद्रुतंधीरमूर्जितम् ॥ असंसक्ताक्षरपदंनवभावसमन्वितम् २१ 

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अनायस्तमकर्कशाक्षरम् ऊर्जितंस्पष्टाक्षरं असंसक्तंअग्रस्तंअक्षरंपदंचयस्मिन्तत्तथा नवभावेनलोभाद्यभिप्रायेणसमन्वितंच ॥ २१ ॥

त्रिषष्टीत्यनेनचकारवकारशसयजादिवर्णानांविवेकेनउच्चारणंकर्तव्यमित्यर्थः तदेवाह स्थानेति उरःशिरआदिस्थानेषुसमन्वितंबवयोरभेदपक्षेहिस्थानभेदाभावान्नषष्टिवर्णताभव तीत्यर्थः ॥ २२ ॥ वाचकस्यविधिमाह नारायणमिति ॥ २३ ॥ २४ ॥ प्रथमंपारणंहरिवंशांतंनियमपूर्वकंश्रवणम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ पंचमेद्विगुणं

त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमीरितम् ॥ वाचयेद्वाचकःस्वस्थःस्वाधीनःसुसमाहितः २२ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोज यमुदीरयेत् २३ ईदृशाद्वाचकाद्राजञ्छ्रुत्वाभारतभारतम् ॥ नियमस्थःशुचिःश्रोताशृण्वन्सफलमश्नुते २४ पारणंप्रथमंप्राप्यद्विजान्कामैश्चतर्पयेत् ॥ अग्निष्टोमस्ययागस्यफलंवैलभतेनरः २५ अप्सरोगणसंकीर्णंविमानंलभतेमहत् ॥ प्रहृष्टःसतुदेवैश्चदिवंयातिसमाहितः २६ द्वितीयंपारणंप्राप्यअतिरात्र फलंलभेत् ॥ सर्वरत्नमयंदिव्यंविमानमधिरोहति २७ दिव्यमाल्यांबरधरोदिव्यगंधविभूषितः ॥ दिव्यांगदधरोनित्यंदेवलोकेमहीयते २८ तृतीयंपा रणंप्राप्यद्वादशाहफलंलभेत् ॥ वसत्यमरसंकाशोवर्षाण्ययुतशोदिवि २९ चतुर्थेवाजपेयस्यपंचमेद्विगुणंफलम् ॥ उदितादित्यसंकाशंज्वलंत ममलोपमम् ३० विमानंविबुधैःसार्द्धमारुह्यदिविगच्छति ॥ वर्षायुताभिभवनेशक्रस्यदिविमोदते ३१ षष्ठेद्विगुणमस्तीतिसप्तमेत्रिगुणंफलम् ॥ कैलासशिखराकारंवैदूर्यमणिवेदिकम् ३२ परिक्षिप्तंचबहुधामणिविद्रुमभूषितम् ॥ विमानंसमधिष्ठायकामगंसाप्सरोगणम् ३३ सर्वाँलोकान्वि चरतेद्वितीयइवभास्करः ॥ अष्टमेराजसूयस्यपारणेलभतेफलम् ३४ चंद्रोदयनिभंरम्यंविमानमधिरोहति ॥ चंद्ररश्मिप्रतीकाशैर्हयैर्युक्तंमनोजवैः ३५ सेव्यमानोवरस्त्रीणांचंद्रकांततरैर्मुखैः ॥ मेखलानांनिनादेननूपुराणांचनिःस्वनैः ३६ अंकेपरमनारीणांसुखंसुप्तोविबुध्यते ॥ नवमेक्रतुराजस्यवाजिमे धस्यभारत ३७ कांचनस्तंभनिर्व्यूहंवैदूर्यकृतवेदिकम् ॥ जांबूनदमयैर्दिव्यैर्गवाक्षैःसर्वतोवृतम् ३८ सेवितंचाप्सरःसंघैर्गंधर्वैर्दिविचारिभिः ॥ विमा नंसमधिष्ठायश्रियापरमयाज्वलन् ३९ दिव्यमाल्यांबरधरोदिव्यचंदनभूषितः ॥ मोदतेदैवतैःसार्द्धंदिविदेवइवापरः ४० दशमंपारणंप्राप्यद्विजातीन भिवंद्यच ॥ किंकिणीजालनिर्घोषंपताकाध्वजशोभितम् ४१ रत्नवेदिकसंकाशंवैदूर्यमणितोरणम् ॥ हेमजालपरिक्षिप्तंप्रवालवलभीमुखम् ४२ गंधर्वैर्गीतकुशलैरप्सरोभिर्निषेवितम् ॥ विमानंसुकृतावासंसुखेनैवोपपद्यते ४३

वाजिमेधद्वयफलम् ॥ ३० ॥ ३१ ॥ षष्ठेद्विगुणंवाजिमेधचतुष्टयफलम् सप्तमेत्रिगुणंद्वादशवाजिमेधफलम् ॥ ३२ ॥ ३३ ॥ अष्टमेराजसूयस्यफलंतेनचतुर्विंशतिवाजि मेधतुल्योराजसूयइतिगम्यते ॥ ३४ ॥ ३५ ॥ ३६ ॥ क्रतुराजस्येत्यनेनसोपानस्यवाजिमेधस्यफलंतेनकेवलानांराजसूयानामष्टचत्वारिंशतातुल्यःसोपानोराजसूयइतिगम्यते ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ दशमेतुपारणेततोपिद्विगुणंविष्णुसालोक्यंक्रममुक्तिप्रापकंप्राप्नोतीत्याह दशमंपारणमित्यादिनाविष्णोर्यातिसलोकतामित्यंतेन ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अत्रविष्णुसालोक्यंप्राप्तस्यनपुनःसंसारबंधोस्तीतिभावःश्रवणमात्रस्यैतत्फलंअर्थावधारणपूर्वकमनुष्ठानवतस्तुभारताध्यय



मुकुटेनार्कवर्णेनजांबूनदविभूषणः ॥ दिव्यचंदनदिग्धांगोदिव्यमाल्यविभूषितः ४४ दिव्याँल्लोकान्प्रचरतिदिव्यैर्भोगैःसमन्वितः ॥ विबुधानांप्रसादेन
श्रियापरमयायुतः ४५ अथवर्षगणानेवंस्वर्गलोकेमहीयते ॥ ततोगंधर्वसहितःसहस्राण्येकविंशतिः ४६ ॥ पुरंदरपुरेरम्ये शक्रेणसहमोदते ॥ दिव्ययान
विमानेषुलोकेषुविविधेषुच ४७ दिव्यनारीगणाकीर्णोनिवसत्यमरोयथा ॥ ततःसूर्यस्यभवनेचंद्रस्यभवनेतथा ४८ शिवस्यभवनेराजन्विष्णोर्यातिसलो
कताम् ॥ एवमेतन्महाराजनात्रकार्याविचारणा ४९ श्रद्दधानेनवैभाव्यमेवमाहगुरुर्मम ॥ वाचकस्यतुदातव्यंमनसायद्यदिच्छति ५० हस्त्यश्वरथयाना
निवाहनंचविशेषतः ॥ कटकंकुंडलेचैवब्रह्मसूत्रंतथापरम् ५१ वस्त्रंचैवविचित्रंचगंधंचैवविशेषतः ॥ देववत्पूजयेत्तंतुविष्णुलोकमवाप्नुयात् ५२ अतःपरंप्र
वक्ष्यामियानिदेयानिभारते ॥ वाच्यमानेथविप्रेभ्योराजन्पर्वणिपर्वणि ५३ जातिंदेशंचसत्यंचमाहात्म्यंभरतर्षभ ॥ धर्मवृत्तिंचविज्ञायक्षत्रियाणांनराधि
प ५४ स्वस्तिवाच्यद्विजानादौततःकार्यंप्रवर्तयेत् ॥ समाप्तेपर्वणिततःस्वशक्त्यातर्पयेद्द्विजान् ५५ आदौतुवाचकंचैववस्त्रगंधसमान्वितम् ॥ विधिवद्भोज
येद्राजन्मधुपायससंयुतम् ५६ ततोमूलफलप्रायंपायसंमधुसर्पिषा ॥ आस्तिकेभोजयेद्राजन्दद्याच्चैवगुडोदनम् ५७ अपूपैश्चैवपूपैश्चमोदकैश्चसमन्वितम् ॥
सभापर्वणिराजेंद्रहविष्यंभोजयेद्द्विजान् ५८ आरण्यकेमूलफलैस्तर्पयेच्चद्विजोत्तमान् ॥ अरणीपर्वआसाद्यजलकुंभान्प्रदापयेत् ५९ तर्पणानिचमुख्या
निवन्यमूलफलानिच ॥ सर्वकामगुणोपेतंविप्रेभ्योन्नंप्रदापयेत् ६० विराटपर्वणितथावासांसिविविधानिच ॥ उद्योगेभरतश्रेष्ठसर्वकामगुणान्वितम् ६१
भोजनंभोजयेद्विप्रान्गंधमाल्यैरलंकृतान् ॥ भीष्मपर्वणिराजेंद्रदत्वायानमनुत्तमम् ॥ ततःसर्वगुणोपेतमन्नंदद्यात्सुसंस्कृतम् ६२ द्रोणपर्वणिविप्रेभ्योभो
जनंपरमार्चितम् ॥ शराश्वदेयाराजेंद्रचापान्यसिवरास्तथा ६३ कर्णपर्वण्यपितथाभोजनंसार्वकामिकम् ॥ विप्रेभ्यःसंस्कृतंसम्यक्दद्यात्संयतमानसः६४
शल्यपर्वणिराजेंद्रमोदकैस्सगुडौदनैः ॥ अपूपैस्तर्प्पयेच्चैवसर्वमन्नंप्रदापयेत् ६५ गदापर्वण्यपितथामुद्गमिश्रंप्रदापयेत् ॥ स्त्रीपर्वणितथारत्नैस्तर्पयेत्तुद्वि
जोत्तमान् ६६ घृतौदनंपुरस्ताच्चऐषिकेदापयेत्पुनः ॥ ततःसर्वगुणोपेतमन्नंदद्यात्सुसंस्कृतम् ६७ शांतिपर्वण्यपिगतेहविष्यंभोजयेद्द्विजान् ॥ आश्वमे
धिकमासाद्यभोजनंसार्वकामिकम् ६८



नात्तत्पुण्यादपिपादमधीयतःश्रद्दधानस्यपूर्यंतेसर्वपापान्यशेषतइतिप्रागेवफलमुक्तम् सर्वपापानिप्रारब्धफलभोगपातकेभ्योन्यानि॥ ५०॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४॥५५॥
॥ ५६ ॥ ५७ ॥ पूपैःमालपुवाइतिमध्यदेशप्रसिद्धैः अपूपैस्तत्सदृशैःसच्छिद्रपक्वान्नैः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥६६॥६७॥६८॥

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२॥७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८॥ ७९॥ ८० ॥ तदर्धमिति प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्तयेत् सनाप्नोतिफलंतस्येतिवचनात्

तथाश्रमनिवासेतुहविष्यंभोजयेद्विजान् ॥ मौसलेसार्वगुणिकंगंधमाल्यानुलेपनम् ६९ महाप्रस्थानिकेतद्वत्सर्वकामगुणान्वितम् ॥ स्वर्गपर्वण्यपितथा हविष्यंभोजयेद्विजान् ७० हरिवंशसमाप्तौतुसहस्रंभोजयेद्विजान् ॥ गामेकांनिष्कसंयुक्तांब्राह्मणायनिवेदयेत् ७१ तदर्द्धेनापिदातव्यादरिद्रेणापिपार्थिव ॥ प्रतिपर्वसमाप्तौतुपुस्तकंवैविचक्षणः ७२ सुवर्णेनचसंयुक्तंवाचकायनिवेदयेत् ॥ हरिवंशेपर्वणिचपायसंतत्रभोजयेत् ७३ श्लोकंवाश्लोकपादंवाअक्षरंवानृपात्मज ॥ शृणुयादेकचित्तस्तुसविष्णुदयितोभवेत् ७४ व्यासंचैवसपत्नीकंपूजयेच्चयथाविधि ॥ लक्ष्मीनारायणंदेवंपूजितंतच्चपूजयेत् ७५ वाचकंपूजयेद्यस्तुभूमिवस्त्रसुधेनुभिः ॥ विष्णुःसंपूजितस्तेनससाक्षाद्देवकीसुतः ७६ पारणेपारणेराजन्यथावद्भरतर्षभ ॥ समाप्यसर्वाःप्रयतःसंहिताःशास्त्रकोविदः ७७ शुभेदेशेनिवेश्याथक्षौमवस्त्राभिसंवृतः ॥ शुक्लांबरधरःश्रीमाञ्छुचिर्भूत्वास्वलंकृतः ७८ अर्चयेत्तंयथान्यायंगंधमाल्यैःपृथक्पृथक् ॥ संहितापुस्तकान्राजन्प्रयतःशिष्टसंमतः ७९ भक्ष्यैर्मांसैश्चपेयैश्चकामैश्चविविधैःशुभैः ॥ हिरण्यंगांचवस्त्रंचदक्षिणामथदापयेत् ८० सर्वत्रत्रिपलंस्वर्णंदातव्यंप्रणतात्मना ॥ तदर्द्धंपादशेषंवावित्तशाठ्यविवर्जितम् ८१ यद्यदेवात्मनोभीष्टंतत्तद्देयंद्विजातये ॥ सर्वथातोषयेद्भक्त्यावाचकंगुरुमात्मनः ॥ देवताःकीर्त्तयेत्सर्वानरनारायणौतथा ८२ ततोगंधैश्चमाल्यैश्चस्वलंकृतद्विजोत्तमान् ॥ तर्पयेद्विविधैःकामैर्दानैश्चोच्चावचैस्तथा ८३ अतिरात्रस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ प्राप्नुयाच्चक्रतुफलंतथापर्वणिपर्वणि ८४ वाचकोभरतश्रेष्ठव्यक्ताक्षरपदस्वरः ॥ भविष्यंश्रावयेद्विप्रान्भारतंभरतर्षभ ८५ भुक्तवत्सुद्विजेंद्रेषुयथावत्संप्रदापयेत् ॥ वाचकंभरतश्रेष्ठभोजयित्वास्वलंकृतम् ८६ वाचकेपरितुष्टेतुशुभाप्रीतिरनुत्तमा ॥ ब्राह्मणेषुचतुष्टेषुप्रसन्नाःसर्वदेवताः ८७ ततोहिभरणंकार्यंद्विजानांभरतर्षभ ॥ सर्वकामैर्यथान्यायंसाधुभिश्चयथाक्रमम् ८८ इत्येषविधिरुद्दिष्टोमयातेद्विपदांवर ॥ श्रद्दधानेनवैभाव्यंयन्मांत्वंपरिपृच्छसि ८९ भारतश्रवणेराजन्पारणेचनृपोत्तम ॥ सदायत्नवताभाव्यंश्रेयस्तुपरमिच्छता ९० भारतंशृणुयान्नित्यंभारतंपरिकीर्तयेत् ॥ भारतंभवनेयस्यतस्यहस्तगतोजयः ९१ भारतंपरमंपुण्यंभारतेविविधाःकथाः ॥ भारतंसेव्यतेदेवैर्भारतंपरिकीर्तयेत् ९२ भारतंसर्वशास्त्राणामुत्तमंभरतर्षभ ॥ भारतात्प्राप्यतेमोक्षस्तत्वमेतद्ब्रवीमिते ९३

सर्वथापादोनपलात्न्यूनंनदेयमित्यर्थः पादःत्रिपलचतुर्थोभागः सएवशेषोंतिमः पक्षेयत्रतत्पादशेषः ॥ ८१ ॥ ८२ ॥ ८३ ॥ अतिरात्रस्येति पारणाभावेपिबोद्धव्यम् ॥ अत्यल्पपर्वश्रवणेक्षुद्रक्रतुफलम् ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ यत्नवताब्रह्मचर्यादिनियमवता ॥ ९० ॥ भारतंभवनेपुस्तकरूपम् ॥ ९१॥९२॥९३॥

॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ विनापिभारतंकेवलोहरिवंशएवश्रोतव्यइत्याशयेनाह क्रियतइतिक्रियतेशिष्टैरितिशेषःअसारेतिच्छेदःवांच्छितस्यैवकारणंइष्टप्रदं ॥ ९८ ॥
पारणात्नियमपूर्वकसमापनात् ॥ ९९ ॥ भारतप्रतिपाद्यांदेवतांप्रणमति अजरमिति ॥ १०० ॥ भारतसमाप्तौशंनोमित्रःशंवरुणइत्यादिवत्शांतिंपठति सर्वस्तरत्विति ॥
॥१०१॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांश्रवणफलंनामद्वात्रिंशाधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ छ ॥ ॥ त्र्यक्षादिति प्रश्नस्योत्थानमपिनसं
भवतिभारतभावसमापनेनज्ञातव्यानशेषात् पूर्वमुक्तमपिदाढर्चायपुनःपृच्छतीत्युत्तरमिहनसाधुअतिप्रसंगात् इतरेषामपिअर्थानांप्रष्टव्यत्वापत्तेः शिवोत्कर्षज्ञापनार्थमित्यपिनह
रिहराद्वैतस्यभूयसाप्रबंधेनसाधितत्वात् वक्तृविवक्षामात्रमित्यपिननिष्प्रयोजनायांमहतांविवक्षायाअसंभवात् अथकृत्स्नभावात्तुगृहिणोपसंहारंइतिन्यायेनछांदोग्येयथाकुटुंबेशुचौ
देशे स्वाध्यायमधीयानइत्यादिनानचपुनरावर्त्ततइत्यंतेनभोगमोक्षोभयोपभोगतयागार्हस्थ्यायत्तत्वेनोपसंहारोदर्शितः नतुमोक्षमात्रोपयोगिनाभोगविरोधिनाश्रमांतरेणैतद्वत्

महाभारतमाख्यानंक्षितिंगांचसरस्वतीम् ॥ ब्राह्मणंकेशवंचापिकीर्तयन्नावसीदति ९४ वेदेरामायणेपुण्येभारतेभरतर्षभ ॥ आदौचांतेचमध्येचहरिःसर्व
त्रगीयते ९५ यत्रविष्णुकथादिव्याःश्रुतयश्चसनातनाः ॥ तच्छ्रोतव्यंमनुष्येणपरंपदमिहेच्छता ९६ एतत्पवित्रंपरममेतद्धर्मनिदर्शनम् ॥ एतत्सर्वगुणो
पेतंश्रोतव्यंभूतिमिच्छता ९७ क्रियतेसारसंसारेवांच्छितस्यैवकारणम् ॥ हरिवंशस्यश्रवणमितिद्वैपायनोऽब्रवीत् ९८ अश्वमेधसहस्रेणवाजपेयशतैस्त
था ॥ यत्फलंप्राप्यतेपुंभिस्तद्धरेर्वंशपारणात् ९९ अजरममरमेकंध्येयमाद्यंतशून्यंसगुणमगुणमाद्यंस्थूलमत्यंतसूक्ष्मम् ॥ निरुपममनमेयंयोगिनांज्ञानग
म्यंत्रिभुवनगुरुमीशंत्वांप्रपन्नोस्मिविष्णो १०० सर्वस्तरतुदुर्गाणिसर्वोभद्राणिपश्यतु ॥ सर्वेषांवांच्छिताअर्थाभवंत्वस्यचपारणात् १०१ ॥ इतिश्रीम
हाभारतेखिलेषुहरिवंशेभविष्यपर्वणिश्रवणफलकथनंनामद्वात्रिंशाधिकशततमोऽध्यायः १३२ ॥ ॥ छ ॥ ॥ जनमेजयउवाच ॥ त्र्यक्षाद्वधमहंब्रह्म
न्श्रोतुमिच्छामितत्वतः ॥ त्रयाणांपुरसंज्ञानांखेचराणांसमासतः १ इहापि यस्यानुग्रहमिच्छामितस्यवित्तंहराम्यहमितिवदता विष्णोरुपास्तिभोगविरोधि

नीमोक्षैकफलानांसमाम्नायारुद्रोपास्त्याउभयफलयाउपसंहारःतेनसंन्यासगार्हस्थ्ययोरिवहरिहरोपास्त्योरवांतरफलभेदोज्ञेयइतिमतम् तदपिनातीवरमणीयं एकैकोपास्तेःप्रत्येकं
कार्त्स्न्येनफलप्रदत्वस्यसर्वशास्त्रसिद्धत्वात् विकल्पोविशिष्टफलत्वादित्यविशिष्टफलत्वेनोपासनानांविकल्पाभिधानाच्चतस्मादन्यदिहप्रश्नकारणंवक्तव्यं तच्चमसाधनांब्रह्मविद्यांस
माप्यांतेउक्तं यत्रविष्णुकथादिव्याःश्रुतयश्चसनातनाःतच्छ्रोतव्यंमनुष्येणपरंपदमिहेच्छतेतिविष्णुकथानांश्रुतीनांचश्रवणमात्रात्परमपदप्राप्तिरुक्ता तत्रासंभावनावान्पृच्छतीतित्र्य
क्षात्त्रीणिश्रवणमनननिदिध्यासनानिअक्षवदिंद्रियवत्दर्शनसाधनानियस्यसत्र्यक्षः विद्वान्श्रवणादिसमुदायवान्त्र्यक्षः तस्मात्त्रयाणांस्थूलसूक्ष्मकारणदेहानांवधः समूलोच्छे
दःकथंस्यात् मनननिदिध्यासनाभ्यांफलोपकार्यंगाभ्यांसहिताद्वेदांतमहावाक्यश्रवणात्कथंसंसारस्यात्यंतोच्छेदःस्यात् नहिज्ञानमात्रात्कस्यचिदर्थस्यउच्छेदोदृष्टइतिभावः १

द्वयमाह प्राजापत्यादेवाश्चासुराश्चतत्रकानीयसाएवदेवाज्यायांसोअसुराइत्यादिनाबृहदारण्यकोक्तरीत्याध्यात्मविद्यायामत्रशमादयोदेवाः कामक्रोधादयोसुराइत्यभिप्रेत्यसमाधत्ते शृण्विति दैत्यानांकामादीनां नैधनंनिरन्वयोच्छेदविधिम् ॥ २ ॥ शंकरेणपरमानंदंप्रतित्सुनाबाधनंत्रिभिःशूलैःश्रवणादिभिःसाधनैःकृतंअसुरेंद्राणांवधंशृण्वित्यनुषज्यते ॥ ३ ॥ त्रिपुरंपुरत्रयंजाग्रत्स्वप्नसुषुप्त्यभिमानिभिर्विश्वतैजसप्राज्ञैर्भोग्यंबहुभिर्धातुभिर्मायाकार्यैर्गुणैःसमीरितं पाठांतरेबृहद्धातुर्मुख्यप्राणस्तेनसमीरितं नभसिस्वेकारणेआकाशेघनपटलमिवाकस्मादुत्थितम् ॥ ४ ॥ प्राकारेणअन्नमयपिंडेनकांचनेनभोगमोक्षोपयोगितयारमणीयेनमणिभिःइंद्रियैरित्यादियथायथंनगरसाम्यमूह्यंपिंडस्य ॥ ५ ॥ कर्म

॥ वैशंपायनउवाच ॥ शृणुविस्तरतःसर्वंयन्मांपृच्छसिनैधनम् ॥ दैत्यानांबाहुबलिनांसर्वप्राणिविरोधिनाम् २ शंकरेणवधंराजन्शूलैस्त्रिभिरजिह्मगैः ॥ कृतंपुरासुरेंद्राणांसर्वभूतवधैषिणाम् ३ त्रिपुरंपुरुषव्याघ्रंबृहद्धातुसमीरितम् ॥ विक्रामतिनभोमध्येमेघवृंदमिवोत्थितम् ४ प्राकारेणप्रवृद्धेनकांचनेनविराजता ॥ मणिभिश्चप्रकाशद्भिःसर्वरत्नैश्चतोरणैः ५ बभासेनभसोमध्येश्रियापरमयाज्वलन् ॥ गंधर्वाणामिवोदग्रंकर्मणासाधितंपरम् ६ वाजिनःपक्षसंयुक्तावहंतिबलदर्पिताः ॥ पुरंप्रभाकरश्रेष्ठंमनोभिःकामबृंहणैः ७ धावंतिह्रेषमाणास्तेविक्रमैःप्राणसंभृतैः ॥ आह्वयंतइवाकाशंखुरैःश्यामदलप्रभैः ८ वायुवेगसमैर्वेगैःकालयंतइवांबरम् ॥ असुराःसमदृश्यंतचक्षुर्भिर्विदितात्मभिः ९ ऋषिभिर्ज्वलनप्रख्यैस्तपसादग्धकिल्बिषैः ॥ गीतवादित्रबहुलंगंधर्वनगरोपम् १० चित्रायुधसमाकीर्णैःप्रतप्तकनकप्रभैः ॥ भवनैर्बहुभिश्चैवप्रांशुभिःसमलंकृतैः ११ देवेंद्रभवनाकारैःशुशुभेतन्महाद्युति ॥ प्रासादाग्रैःप्रवृद्धैश्चकैलासशिखरप्रभैः १२ शुशुभेदैत्यनगरंबहुसूर्यमिवांबरम् ॥ वराट्टालकसंपन्नंतप्तकांचनसप्रभम् १३ प्रदीप्तमिवतेजोभिरराजाथमहाप्रभो ॥ क्ष्वेडितोत्कृष्टबहुलंसिंहनादविनादितम् १४ बभौवल्गुजनाकीर्णंवनंचैत्ररथंयथा ॥ समुच्छ्रितपताकंतदसिभिश्चविराजितम् १५

णायज्ञादिनागंधर्वाणांपुरमिवेतिमिथ्यात्वेदृष्टांतः ॥ ६ ॥ वाजिनइंद्रियाश्वाःमनोवृत्तिभिः प्रवर्तिकाभिःपुरंदेहंवहंतिश्रेष्ठंस्थानंप्रापयंति ॥ ७ ॥ विक्रमैःउत्तरोत्तरवासनावृद्ध्यापरात्परंयावतःकामबृंहणैस्तृष्णायाःपोषकैर्वाजिभिः प्राणसंभृतैरितिपाठेमुख्यप्राणेनसम्यक्चालितैः ॥ ८ ॥ चतुर्भिर्दर्शनसाधनैःदृश्यप्रकाशेनलिंगेनेत्यर्थः विदितात्मभिः अनुमानेनआज्ञातैः वेगैर्वेगवद्भिस्तैर्वाजिभिरसुराअंबरंकारणंब्रह्मकालयंतइवअपलायनेप्रसंतइवसमदृश्यंतअसुराःकामादयः ॥ ९ ॥ ऋषिभिरितिअदग्धकिल्बिषैःअविनाशितदुःप्रचारैर्वाजिभिरेवउपेतंगंधर्वनगरोपमंपुरंतत्शुशुभेइत्युत्तरेणान्वयः ॥१०॥भवनैश्चित्तप्रवेशस्थानैःस्त्र्यादिभिः आयुधानिकामोद्दीपनानिस्रगादीनिकटाक्षादीनिवातैः समाकीर्णैः ॥ ११ ॥ देवेंद्रभवनाकारैःसाक्षात्स्वर्गरूपैरित्यर्थः प्रासादाग्रैः गृहोपरिगृहेतद्वदत्रसंसारपुरोपरिमनोरथपुरम् बहुत्वंआनंत्यात्तेषाम् ॥ १२ ॥ १३॥ १४ ॥ १५ ॥

अक्षिभ्यांचक्षुश्चक्षुषआदित्यहृदयान्मनोमनसश्चंद्रमाः इतिताभ्यांसूर्योनाभोयस्येतिव्युत्पत्त्यासूर्यजनकंचक्षुः चक्षुःसूर्यनाभएवचंद्रनाभोमनः तावुभौपुराध्यक्षौतदनुगाश्चसर्वे कामादयइतितावेवं दैत्येंद्रौअन्येचमदमत्सरादयोदानवाः ॥ १६ ॥ तेसर्वेदेवयानपितृयानमार्गप्रापकौकर्मोपासनामार्गौविनाशितवंतइत्यर्थः ॥ १७ ॥ प्रगृहीतशरासनैःस्व कृतद्यूतपानादिव्यसनैः ॥१८॥ वन्हिवलोपेतेदेवयानेपितृवलोपेतेपितृयानेचापहृतेश्रद्धादिराहित्येनसर्वस्मिन्कर्मणिरक्षोभिरपहृतेसतीत्यर्थः ॥१९ ॥ ब्रह्माणंईश्वरंदीनाःमार्ग द्वयभ्रष्टत्वादत्यंतंशोकाकुलाः ॥ २० ॥ हन्यामहेहतास्मः भागोच्छेदेनपुण्यलोकप्राप्त्यभावेन ॥२१॥ २२ ॥ शत्रुप्रतिकृतिंप्रतीकारंपरांशत्रूणांनिरन्वयोच्छेदकराम् ॥ २३॥

रराजत्रिपुरंराजन्महाविद्युदिवांबरे ॥ सूर्यनाभश्चदैत्येंद्रश्चंद्रनाभश्चभारत १६ तथान्येचमहावीर्यादानवाबलदर्पिताः ॥ ममृदुश्चबभंजुश्चमोहिताःपरमेष्ठि
ना १७ पंथानंदेवगमनंपितृयानंचभारत ॥ तैरेवमसुराग्रैश्चप्रगृहीतशरासनैः १८ दानवैर्नरशार्दूलदेवयानेमहापथे ॥ पितृवह्निबलोपेतेहृतेभरतसत्तम
१९ ब्रह्माणमभ्यधावंतसर्वेसुरगणास्तथा ॥ विवर्णवदनादीनाच्छिन्नेवगतिकर्मणि २० अब्रुवंश्चगताःस्थित्वास्वरेणार्त्तनिनादिना ॥ हन्यामहेशत्रुगणै
र्भागोच्छेदेनभागद २१ तेषांचैववधोपायंवदस्ववदतांवर ॥ यंज्ञात्वाबाहुबलिनोबाधेमसमरेपरान् २२ सांत्वयित्वातुवरदोब्रह्माप्रोवाचदेवताः ॥ शृणु
ध्वंदेवताःसर्वाःशत्रुप्रतिकृतिंपराम् २३ अवध्यादानवाःसर्वेऋतेशंकरमव्ययम् ॥ प्रतिगृह्यचतद्वाक्यंमनोभिर्वाग्भिरेवच २५ भूमौप्रपेदिरेसर्वेसहरुद्रैश्च
भारत ॥ विंध्यपादेचमेरौचमध्येचपृथिवीतले २५ तपसोग्रेणयोगज्ञाःसर्वेतेमुनयोभवन् ॥ काश्यपेयंहरंप्राप्ताजपंतोब्रह्मसंहिताम् २६ येषांचपरदाराणा
मभवद्वंध्यताजने ॥ विन्यस्तदर्भनिचयेताम्रलोहंचभूषणम् २७ परिधानानिचर्माणिमृदूनिचशुभानिच ॥ स्वयंमृतानांकृष्णानांमृगाणांकुरुसत्तम २८
गृहीतानिविमुक्तानिदेहेभ्योवनचारिणाम् ॥ अंतरिक्षमथोपेत्यविविशुर्मायायावृताः २९

ऋतेशंकरंसुखकरंबोधंविनाकामादीनांनिरन्वयोच्छेदोनभवति अव्ययमिति तद्धेतोर्मूलाज्ञानस्यैवोच्छेदात् ॥ २४ ॥ तेनपुनरपिकारणकर्मभूमौउग्रेणतपसाप्राणैःसहशंकरंशर णंगताइत्याह भूमावितिद्वाभ्याम् तपश्चांद्रायणादिवानप्रस्थधर्मः योगोनिष्कामकर्मानुष्ठानंगृहस्थधर्मः जपोवेदाभ्यासोब्रह्मचारिधर्मः ॥ ब्रह्मसंहितांप्रणवंइतिउभयोःसंबंधः ॥ २५॥२६तेषांतपोयोगजैश्वर्यंप्रार्थमानानांसंबंधिनःपरदाराःकामादिपरिग्रहास्तृष्णादयःतासांजनेवंध्यतानिष्फलतावैराग्यहेतुरभूत् ततस्तेतृष्णादयोऽत्यंतंदुर्बलाअभूवन्निति रूपके णाह विन्यस्तेति दर्भनिचयेतृणमयेकटेशेरतेइत्यर्थः ॥ २७ ॥ शुभानिव्याघ्राजिनादीनि ॥ २८ ॥ वनचारिणांमृगाणांदेहेभ्योगृहीतानिविमुक्तानिपरिहितानि तएवंकामा दयोत्यंतदारिद्र्यग्रस्ताःइतःअदर्शनंगताइत्याह अंतरिक्षमिति इतउत्पन्नाअपियोगपरिपाककालेवाधितुंअंतरिक्षेहृदयाकाशेसूक्ष्मवासनारूपेणनिलीनाइत्यर्थः ॥ २९ ॥

योगजयेक्षीणासुभोगवासनासु उपासनायांअधिकारिणःसंसारादुद्विग्नाःसंतःप्रवर्त्ततइत्याह हरालयमिति हरतिसंसारमितिहरोनिर्गुणंब्रह्मतस्यालयंतदुपलब्धिस्थानंहार्द्दाकाशा
ख्यंसगुणंब्रह्मतदुपासितंजग्मुःसुराःशांत्यादयःविशेषेणआघ्रातिविषयान्आस्वादयतीतिव्याघ्रोभोक्तातस्यचर्मवदावरकंदेहंवसानाइत्यर्थःभगवंतंईश्वरंप्रणिपत्यउपास्य॥ ३० ॥
हरंशुद्धंप्रभाषंतअहंभावआर्षःशुद्धंब्रह्मास्मीतिपरोक्षनिश्चयंकृत्वालोकेपिंअबदन्नित्यर्थः हरमदृष्ट्वाभगवंतमेवप्रार्थयंते हविरितिसार्द्धेन यथाभस्मच्छन्नेषुआग्निषुहविर्निष्फलंएवम
स्मासुमलिनचित्तेषु ॥ ३१ ॥ वरदानंश्रेष्ठस्यआत्मवस्तुज्ञानस्यप्रदानंहरज्ञानंप्राप्तमपिनिष्फलमतस्त्वमेवानुग्रहंकृत्वायथाब्रह्मणोवचोवेदवाक्यंयमेवैषविवृणुतेतेनलभ्यइतितत्प्र
सादफलख्यापकंतत्यथादेशंयथाकालंकुरुष्वाक्रियतां अस्मासुप्रसन्नोभूत्वात्त्वंआत्मतत्त्वंप्रकाशयेतिभावः ॥ ३२ ॥ खेहार्द्दाकाशेचरतामुपासकानांसमीपेयदुक्तं सर्वधर्मान्प
रित्यज्यमामेकंशरणंव्रज अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचेत्यादिरूपंवचनं इतरदेववचोभिश्चभाविनोर्थस्यवैभवात् मोक्षरूपस्यार्थस्यवैभवाच्चमहादेवईश्वरःसमनह्यत्

हरालयंसुराःसर्वेव्याघ्रचर्मनिवासिनः ॥ प्रणिपत्याथतेदीनाभगवंतंजगत्पतिम् ३० सुव्यक्तेनाभिधानेनप्रभाषंतहरंततः ॥ हविर्दत्तमविज्ञानाद्भस्मच्छन्नेषु वह्निषु ॥ ३१ ॥ वरदानंत्वथास्मासुभगवन्विमुखेत्वयि ॥ यथादेशंयथाकालंक्रियतांब्रह्मणोवचः ३२ यदुक्तंदेवदेवेनखेचराणांसमीपतः ॥ एवंदेववचोभिश्चभाविनोर्थस्यवैभवात् ३३ ॥ समनह्यन्महादेवोदेवैःसहसवासवैः ॥ आदित्यपथमास्थायसन्नद्धाःसमलंकृताः ३४ सर्वेकांचनवर्णाभाबभुर्दीप्ताइवाग्नयः ॥ रुद्रेणसहितारुद्रादहंतइवतेजसा ३५ सन्नद्धाःकुशलाःसर्वेप्रांशवःपर्वताइव ॥ विश्वेविश्वेनवपुषाबलिनःकामरूपिणः ३६ समनह्यन्महात्मानोदानवांतंविधित्सवः ॥ एभिःसहधनाध्यक्षैःसमंतात्परिवारितः ३७ त्रिपुरंयोधयन्त्र्यक्षःप्रगृह्यसशरंधनुः ॥ अथदैत्याभिन्नदेहाःपुराट्टालंगताइव ३८ न्यपतंतविदेहास्तेविशीर्णाइवपर्वताः ॥ अतिविद्धाःसुविद्धाश्चरणमध्यगतान्नृप ३९

अविद्यामुच्छेत्तुंसज्जोबभूवसाधकानुग्रहंकर्तुमभिमुखोभूदित्यर्थः॥ ३३ ॥ तत्रादित्यपथाख्यमुपासनामार्गमेवाह देवैःशमादिभिःसहप्रकटीचकारइत्याह समनह्यदिति ॥ ३४॥
रुद्रेणध्यातेनईश्वरेणसहिताःरुद्राउपासकाउपासनाबलादत्यंतमशोभंतेत्यर्थः ॥ ३५ ॥ विश्वेविश्वेनवपुषातपोयोगबलेनसर्वेसर्वात्मकाजाताइत्यर्थः ॥ ३६ ॥ केनोपायेन
कामरूपिणोभवन्नित्यतआहसमनह्यन्निति महात्मनः वैराग्यादियुक्ता दानवानांकामादीनांउच्छेदंविधित्सवः एभिःसाधनैः धनाध्यक्षैः श्रद्धावित्तंअध्यक्षोमुख्योयेषुतैःशमाद्यैः
परिवारितोवृतःशरणीकृतः ॥ ३७ ॥ त्र्यक्षोविद्वान्त्रिपुरंयोधयत्कोशभंगंकर्तुमुद्युक्तःतत्रसशरंधनुःप्रगृह्यप्रणवोधनुःशरोह्यात्मेतिश्रुतेःप्रणवेचेतःसंयोज्येत्यर्थः अथयोगा
रंभानंतरंदैत्याःकामादयोभिन्नदेहाःभिन्नाःप्रविलापिनः स्थूलदेहाआश्रयभूतायेषांतेतथाध्यानबलेनस्थूलदेहाध्यासनिवृत्तौकामाद्याःभिन्नदेहाःनष्टमूर्त्तयोभवन्विशेषणांतराणिक
थाशोभार्थानि ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ तत्रेतिइयमत्रप्रक्रियाविशेषाविशेषलिंगमात्रालिंगानिगुणपर्वाणीतिपातंजलसूत्रात् एकादशेंद्रियाणिस्थूलभूतानिचविशेषाःअहंकारः पंचतन्मात्राणिचावि शेषाः महत्तत्वंलिंगमात्रंअलिंगंप्रधानंतत्राविशेषादविशेषंप्रविविक्षतोयोगिनोमध्येलयविक्षेपाख्यौयोगाविघ्नौआगच्छतःएवमविशेषाल्लिंगमात्रत श्चपुरुषंचप्रविविक्षतस्तौआगच्छत इति तत्रयोगिनोविशेषाख्यस्थूलदेहवियोगेदैनंदिनलयाभ्यासात्प्रथमंलयोभ्येतीत्याह तत्रेति तत्रतस्यांअवस्थायांकामादयः योगिनांबलेनानिरुध्यमानाःसंतःदुष्टाश्चवदंतीवप्र दीप्यंते ततःकषायेणजडीभूयलयंप्राप्नुवंतितदिदमुक्तंदीप्यमानेनतेजसेति एवंकर्तुः करणेनअन्योन्यसंबाधसंकटेसतिउभयेपिक्षीयंतेक्षयकर्मणाअन्योन्यविरोधेन ॥ ४२ ॥ अ तएवनोपलभ्यंतअव्यक्तभावंगतत्वादित्यर्थःयेहिव्यक्ताःसंतोदुर्लक्ष्याः परमाण्वादयस्तेदिव्यचक्षुर्ग्राह्यानत्वेतइतिभावः दिनकरेबोधेनिशामुखेलयेचप्राप्तेसतिसुरेंद्राः शमादयोपि छिन्नाभिन्नरूपाः निलीनाएवेत्यर्थः ॥ ४३॥ अथसौषुप्तेनतमसासर्वेषांनाशेसुषुप्तौस्वप्नरूपोविक्षेपउत्पन्नइत्याह अथेति तदानीमेवकामादयोलब्धवृत्तयोभूवन् निशायांआवि

न्यपतन्दैत्यसंघातावज्रेणेवहतानगाः ॥ असिभिश्चहतादेवैःशक्तिचक्रपरश्वधैः ४० बाणैश्चभिन्नमर्माणोदैत्येंद्रायुद्धगोचरे ॥ प्रपेतुःसहिताउर्व्यांछिन्नपक्षा इवाचलाः ४१ तत्रसंज्ञांविमुंचंतिदीप्यमानेनतेजसा ॥ एवंतेन्योन्यसंबाधेक्षीयंतेक्षयकर्मणा ४२ नोपलभ्यंतचक्षुर्भ्यामपिदिव्येनचक्षुषा ॥ अस्तंप्राप्ते दिनकरेसुरेंद्रास्तेनिशामुखे ॥ छिन्नभिन्नक्षतमुखानिपेतुर्वसुधातले ४३ अथदैत्याजयंप्राप्तानिशायांनिशितैःशरैः ॥ विनेदुर्विपुलैर्नादैर्मेघाइवमहारवाः ४४ जयप्राप्त्यासुराश्चैवतेन्योन्यमभिजल्पिरे ॥ त्रासितास्त्रिदशाःसर्वेसंग्रामजयकांक्षिणः ४५ अस्माभिर्बलसंपन्नैःसहप्रासासितोमरैः ॥ विरेजुश्चजयंप्रा प्ताउशनोहव्यबोधिताः ४६ समरेबलसंपन्नाःसायुधादैत्यसत्तमाः ॥ सुरैश्चसहितःसर्वैरथमास्थायशंकरः ४७ दर्पितान्निनदन्दैत्यान्प्रदहन्निवतेजसा ॥ युगांतकालेविततेरश्मिवानिवनिर्दहन् ४८ सर्वभूतानिभूतात्मा्यःप्रलयेसमुपस्थिते ॥ सरथोवाजिभिःशीघ्रैरुह्यमानोमनोजवैः ४९ विबभौनभसोमध्येस विद्युदिवतोयदः ॥ वृषभेणध्वजाग्रेणगर्जमानेनभारत ५०

द्यास्वरूपायांस्थिताःसंतःशमादीनजयंश्चेत्यर्थःशरैःसूक्ष्मैः विषयैः ॥ ४४ ॥ ४५ ॥ उशनोहव्यबोधिताःवृहस्पतिर्हिशुक्रोभूत्वेंद्रस्याभयायासुरेभ्यःक्षयायेमामविद्यामसृजादि तिमैत्रायणीयश्रुतेः उशनसाकल्पिताःयेवेदविरोधिनोमार्गास्तन्निषेवणादत्यंतबलिनइत्यर्थः ॥ ४६ ॥ एवंत्यक्तस्थूलदेहानामपियोगिनांसूक्ष्मदेहप्रवेशादर्वाक्लयविक्षेपाख्यं सूक्ष्मंव्याप्यमहत्तत्वापरपर्यायलिंगमात्रेअस्मितारूपंप्रपित्सूनपिलयविक्षेपबाधाभवतीतिप्रपंचयिष्यन्सूक्ष्मंप्रतिगमनंतावदाहसुरैश्चेत्यादिनासुरैःशमादिभिः सहायैःशंकरोयो गीरथंसूक्ष्मशरीरंआस्थायसम्यगधिष्ठाय ॥ ४७ ॥ विदेहत्वदशामाह दर्पितानिति युगांताग्निर्लोकानिवकामादीन्प्रदहन्नित्यर्थः ॥ ४८ ॥ वाजिभिर्वासनामयैःसूक्ष्मैरिंद्रियैः ॥ ४९ ॥ वृषभेणयोगजधर्मेणध्वजाग्रेणध्वजाग्रवदत्युच्छ्रितेन ॥ ५० ॥

तमेनदर्पाक्रांतंसुस्थितंगत्यंयोगिनंआरूढभूमिस्थैर्देवादिभि.स्तूयमानंपुनर्विघ्नआविवेशेत्याह तपइत्यादिना ॥ ५१ ॥ ५२ ॥ ५३ ॥ पैत्र्यंपित्राईश्वरेणसृष्टंस्थानांतरंस्थूलदेहादन्यत्रसूक्ष्मदेहस्थितमितिशेषः ॥ ५४ ॥ तस्मिन्मध्यमे ॥ ५५ ॥ सुराणामुपरीतिशेषः मध्येस्थितानांलिंगदेहस्थाः शुभवासनाः सर्वायोगोपसर्गभूतैः कामादिभिर्मधुमत्यांभूमौस्थित्वानिवारिताइत्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ अशनिःअशनयः मृत्योरज्ञानसंबंधिनिविषयगोचरेशब्दादिपारवश्येवास्थिताइतिसंबंधः ॥ ५९ ॥ एवंसूक्ष्मदेहस्थस्यविक्षेपरूपंविघ्नमुक्तालयरूपमपितमाहगंधर्वेति मनोमयंसूक्ष्मशरीरंध्येयेश्वरेणापिसहितंविलीनमित्यर्थः ॥ ६० ॥ शचीपतिर्योगीअतिष्ठतकुंठितः महांधकारमग्नत्वात् ॥

भातिस्मसरथोराजन्सेंद्रायुधइवांबुदः ॥ ततोंबरगतासिद्धास्तुष्टुवुर्वृषभध्वजम् ५१ कर्मभिःपूर्वजंपूर्वैःशुचिभिस्त्र्यंबकंतदा ॥ ऋषयश्चतपःशांताःसत्यव्रतपरायणाः ५२ अमृतप्राशिनश्चैवसुरसंवास्तथैवच ॥ गंधर्वाप्सरसश्चैवगंधर्वेणस्वरेणवै ५३ प्रहृष्टवदनाःसौम्याःपैत्र्येस्थानांतरेनृप ॥ चयाट्टालकसंपन्नेशतघ्नीशतसंकुले ५४ तस्मिंस्तुदैत्यनगरेसर्वभूतभयावहे ॥ ततस्तुशरवर्षाणिमुमुचुर्दैत्यदानवाः ५५ सुराणामरयोमध्येतीक्ष्णाग्राणिसमंततः ॥ शतघ्नीभिश्चनिघ्नंतोभल्लैःशूलैश्चभारत ५६ तेचक्रिरेमहत्कर्मदानवायुद्धकोविदाः ॥ गदाभिश्चगदांजघ्नुर्भल्लैर्भल्लांश्चिच्छिदुः ५७ अस्त्रैरस्त्राण्यबाधंतमायांमायाभिरेवच ॥ ततोपरेसमुद्यम्यशरशक्तिपरश्वधान् ५८ अशनींश्चमहाघोरान्मुक्तान्शतसहस्रशः ॥ असिभिर्मायाविहितैर्मृत्योर्विषयगोचरे ५९ तेवध्यमानाविबुधाःशरवर्षैरवस्थिताः ॥ गंधर्वनगराकारःसोसीदत्सहरोरथः ६० हन्यमानोसुरगणैःप्रासासिशरतोमरैः ॥ तैश्चदैत्यप्रहरणैर्गुरुभिर्भारसाहिभिः चित्रैश्चबहुभिःशस्त्रैरतिष्ठतशचीपतिः ६१ ततोमध्येदिव्यशब्दःप्रादुरासीन्महीपते ॥ ऋषीणांब्रह्मपुत्राणांमहतामपिभारत ६२ सएषशंकरस्याग्रेरथोभूमिंप्रतिष्ठितः ॥ अजेयोजय्यतांप्राप्तःसर्वलोकस्यपश्यतः ६३ तस्मिन्निपतितेराजन्रथानांप्रवरेरथे ॥ निपेतुःसर्वभूतानिभूतलेवसुधाधिप ६४ विचेलुःपर्वताग्राणिचेलुश्चैवमहाद्रुमाः ॥ विचुक्षुभुःसमुद्राश्चनरेजुश्चदिशोदश ६५ वृद्धाश्चब्राह्मणास्तत्रजेपुश्चपरमंजपम् ॥ यत्तद्ब्रह्ममयंतेजःसर्वत्रविजयैषिणाम् ६६ शांत्यर्थंसर्वभूतानामिहलोकेपरत्रच ॥ समाधायात्मनात्मानंयोगप्राप्तेनहेतुना ६७

॥ ६१ ॥ अस्यावस्थामन्ययोगिमुखेनानुवदतिततोमध्यइत्यादिनाश्लोकचतुष्टयेन ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ एवंविघ्नेषूत्पन्नेषुसंतःस्वस्त्ययनानिकुर्वंतीत्याहवृद्धाइति तत्फलमाहयत्तदित्यादिनासार्द्धचतुष्टयेन ब्रह्ममयंवेदप्रधानंयत्तत्तेजः सर्वभूतानांशांत्यर्थंआत्मनासमाधाययोगवलेनवृषरूपधर्मस्वरूपमाश्रित्यरथंतरेणसाम्नारथोत्तमंउज्जहारेत्यन्वयः ॥ ६६ ॥ इहजीवन्मुक्तिलाभार्थंपरत्रविदेहमुक्तिलाभार्थमित्यर्थःयोगप्राप्तेनहेतुनावलेन ॥ ६७ ॥

रथंलिंगशरीरंतरत्यनेनेतिरथंतरंप्रणवाख्यंप्रतीकेतनसाम्नासाधुनाब्रह्मभूतेनशब्दब्रह्मरूपेण पुनःकीदृशेन साम्नाविष्णवादीनांतेजसासारभूतेन ॥ ६८ ॥ ६९ ॥ किंतत्तेजोयत्तूरथमुज्जहारेत्यतआहअथविष्णुरिति अथोपायांतराभावनिश्चयानंतरंसर्वतोदृश्य तत्वतः सर्वान्इंद्रादीनकिंचित्करानवेक्ष्यधर्मएवतमसिमग्नस्यजीवस्योद्धर्तेत्यर्थः ॥ ७० ॥ एतदेवाह समाक्रांतमिति तंचेतोरथंदेवैः शमादिभिराक्रांतवृषरूपीधर्मःविषाणाभ्यांहेतुभ्यांदेवयानप्रयाणार्थंपितृयानप्रयाणार्थंवातोलयित्वातमोत्दृदयसकाशादुद्धृत्यननादगर्जातिस्मप्राणयोगेनवलवत्त्वेन ॥ ७१ ॥ एवंलिंगशरीररूपामविशेषाख्यांभूमिंविजित्यलिंगमात्रापरपर्यायांमहत्तत्वाख्यांअस्मितामात्रप्रत्ययांयोगभूमिंधर्मःवृषएवप्रापयतीत्याहतृतीयमितिवायुविषयंनिरूपदेशंतत्रविषयदर्शनाभावेनशुद्धत्वंपदार्थमात्रस्याभावात् विषाणवान्धर्मस्तामपिभूमिमेनंप्राप्यगर्जातिस्मेत्यर्थः ॥ ७२ ॥ ततोलिंगमात्रात्शुद्धंवस्तुप्रपित्सोरपियोगिनःपुनर्लयविक्षेपौभवतइत्याहद्वाभ्यांततोनादेनेति नादेनधर्मएषगर्जनेनयद्यप्यत्रलयोनोक्तस्तथापिसोऽपिबोध्यः अतएवचात्रप्रथमोलीनःसुषुप्तएवोच्यतेद्वितीयो

रथंतरेणसाम्नाथब्रह्मभूतेनभारत॥ तेजसाज्वलयन्विष्णोरूयक्षस्यचमहात्मनः ६८ सर्वेषांचैवदेवानांबलिनांकामरूपिणाम् ॥ ऋषीणांतपसाढ्यानांवसतांविजनेवने ६९ अथविष्णुर्महायोगीसर्वतोदृश्यतत्त्वतः ॥ वृषरूपंसमास्थायप्रोज्जहाररथोत्तमम् ७० समाक्रांतंदेवगणैःसमग्रबलपौरुषैः ॥ बलवांस्तोलयित्वातुविषाणाभ्यांमहाबलः ॥ ननादप्राणयोगेनमथ्यमानइवार्णवः ७१ तृतीयंवायुविषयंसमाक्रम्यविषाणवान् ॥ ननादबलवान्नादंसमुद्रइवपर्वणि ७२ ततोनादेनवित्रस्तादैतेयायुद्धदुर्मदाः ॥ पुनस्तेकृतसन्नाहायुयुधुःसुमहाबलाः ॥ ७३ ॥ सर्वेवैबाहुबलिनःसमर्थबलपौरुषाः ॥ सुरसैन्यंप्रमर्दंतःप्रगृहीतशरासनाः ७४ अग्निंसंधायधनुषिशितंबाणंसुपत्रिणम् ॥ ब्रह्मास्त्रेणाभिसंयोज्यब्रह्मदंडंशिवोऽव्ययः ॥ मुमोचदैत्यनगरंत्रिधामात्रानुसंज्ञितम् ७५

लीनोविदेहइत्युच्यते स्थूलशरीरस्यत्यागात् अथतृतीयोलीनस्तुप्रकृतिलयइत्युच्यते योगिभिस्तस्मादत्रापिलयोस्तीतिज्ञेयम् ॥ ७३ ॥ ७४ ॥ अग्निमिति अग्निदेवतात्वादग्नित्वमस्यादिकंमहावाक्यंधनुषिप्रणवेसंधायतयोरैक्यंभावयित्वायःप्रणवार्थःसएवमहावाक्यार्थःओमित्येतदक्षरमिदंसर्वं सर्वंह्येतद्ब्रह्मपरमात्माब्रह्मेतिचानुसंधायेत्यर्थः शितंबाणंसुयंत्रितंसूक्ष्मयाबुद्ध्यासुयंत्रितंस्वार्थेस्थापितंवाक्यतात्पर्यभ्रमरहितंयथास्यात्तथेत्यर्थः सूक्ष्मीकृतेचेतसिवाक्यार्थानुसंधानजन्याचपरमावृत्तिर्ब्रह्मविद्यानामसैवब्रह्मास्त्रंतेनब्रह्मदंडंब्रह्मणानानायोनिपातनेनदंडयितारंचिदाभाससंज्ञंजीवंसंयोज्य तृतीयेदैत्यनगरेमूलाज्ञानेमुमोचकः अव्ययःशिवःअयमर्थःवाक्यजन्यवृत्त्यासंगतश्चिदाभासःस्वात्मनासहमूलाज्ञानंनाशयति ततश्चाव्ययश्चतुर्थएवावशिष्यतइति कीदृशंब्रह्मदंडं त्रिधामात्रानुसंज्ञितंत्रिधाप्रकारत्रयेणमात्राभिरकारोकारमकाररूपाभिरनुसंज्ञितंविश्वतैजसप्राज्ञेतिसंज्ञावंतम् त्रिधाशब्देनेतिपाठेतुशब्देनप्रणवेनात्रिधाभेदेनसंज्ञितमितिसएवार्थः सार्द्धश्लोकः ॥ ७५ ॥

एतदेवस्पृष्टयति तंबाणमिति सूक्ष्मधारेवस्थौल्यदशायांजाग्रदादिभेदेनत्रिविधाग्रासीदिति मनसाभिनिश्चित्यशास्त्रतोयुक्तितस्ततोवीर्यात्ध्यानबलेनउग्रेणतपसा मनसश्चेंद्रियाणां चऐकाग्र्यंपरमंतपइत्येकाग्रतारूपेणालोचनेन ततःसत्येनाबाधितेनजीवस्यब्रह्मयोगेनब्रह्माभेदेनानंतंधीबाणंमुमोचध्याताकुत्रमुमुचे अथदैत्यनगरेमूलाज्ञानेधीवृत्तौनष्टायांमूलाज्ञानस्यानिरन्वयोच्छेदोभवतीतिभावः ॥ ७६ ॥ सर्वप्राणहरानित्यादिश्लोकाःकाव्यशोभार्थकाः ॥ ७७॥७८॥७९ ॥ त्र्यक्षाद्वधमित्यादौपृष्टंकथंज्ञानमात्रेणसत्यस्यवस्तुनोनाशइतितत्राह अग्निनेति अग्निर्विज्ञानधातुर्वाग्वायाद्दृशोयक्षस्त।दृशोवालिरितिन्यायेनधीमयानि पुराणिधियैवरज्जूरगवन्नष्टानीत्यर्थः यद्वा शब्दमात्राणितानिशब्देनैवनष्टानिनाश्यनाशकयोर्द्वयोरपिमिथ्यात्वादितिभावः धरणीमित्यादिकथाशोभा ॥ ८० ॥ एवंशंकरेणकल्याणकारिणाजीवेनब्रह्मविद्याऽस्त्रेण त्रीणिपुराणिजाग्रदादीनिप्रदग्धानि ॥८१॥

तंबाणंत्रिविधंवीर्यात्संधायमनसाप्रभुः ॥ सत्येनब्रह्मयोगेनतपसोग्रेणभारत ७६ मुमोचदैत्यनगरेसर्वप्राणहराञ्छरान् ॥ दीप्तान्कनकवर्णाभान्सुवर्णांश्चसुनिर्मलान् ७७ मुक्त्वावरशरान्घोरान्सविषानिवपन्नगान् ॥ सुप्रदीप्तैस्त्रिभिर्बाणैर्वेगिभिस्तद्विदारितम् ७८ शरघातप्रदीप्तानिविध्याप्राणीवभारत ॥ गोपुराणिपुरेःसार्द्धंव्यशीर्यंतनराधिप ७९ अग्निनासंप्रदीप्तानिवह्निगर्भाणिभारत ॥ धरणींसप्रपद्यंतपुराणिवसुधाधिपः ८० तानिवैदूर्यवर्णानिशिखराणिगिरेरिव ॥ शंकरेणप्रदग्धानिब्रह्मास्त्रेणापतन्नृप ८१ हतेचत्रिपुरेदेवैर्वाचोहर्षात्किलेरिताः ॥ सर्वान्जहीतिशत्रूंस्त्वंप्रवृद्धान्पुरुषोत्तम ८२ विष्णुरेवमहायोगीयोगेनप्रस्मयन्निव ॥ स्तूयतेब्रह्मसदृशैर्ब्रह्मर्षिभिःशंकरेणच ॥ ब्रह्मणासहितैर्देवैःसंपन्नबलपौरुषैः ८३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणित्रिपुरवधोनामत्रयस्त्रिंशाधिकशततमोऽध्यायः १३३ ॥ ॥ छ ॥ वैशंपायनउवाच ॥ हरिवंशेत्रवृत्तांताःप्रकीर्त्यंतेक्रमोदिताः ॥ तत्राद्यमादिसर्गस्तुभूतसर्गस्ततःपरः १ पृथोर्वैन्यस्यचाख्यानंमनूनांकीर्त्तनंतथा ॥ वैवस्वतकुलोत्पत्तिर्धुंधुमारकथातथा २ गालवोत्पत्तिरिक्ष्वाकुवंशस्याप्यनुकीर्त्तनम् पितृकल्पस्तथोत्पत्तिःसोमस्यचबुधस्यच ३ अमावसोरन्वयस्यकीर्त्तनंकीर्तिवर्द्धनम् ॥ च्युतिप्रतिष्ठेशक्रस्यप्रसवःक्षत्रवृद्धजः ४ दिवोदासप्रतिष्ठाचत्रिशंकोःक्षत्रियस्यच ॥ ययातिचरितंचैवपुरुवंशस्यकीर्त्तनम् ५ कीर्त्तनंकृष्णसंभूतेःस्यमंतकमणेस्तथा ॥ संक्षेपात्कीर्त्तिताविष्णोःप्रादुर्भावास्ततःपरम् ६

अत्रत्रिपुरदाहेमुख्यंकारणंधर्मएवेतितत्स्तुतिमाह हतेचेति हेपुरुषोत्तम हेधर्मरूपिन् महाविष्णो ॥ ८२ ॥ विष्णुर्धर्मः योगेनसाम्यबुद्ध्याऽनुष्ठितःसन् प्रस्मयन्आश्चर्यमिवस्तूयते अविद्यामुपजीव्यप्रवृत्तोऽपितामेवमूलउच्छिनत्तीत्याश्चर्यम् तदेवमनेनाध्यायेनकृत्स्नस्यभारतस्यतात्पर्यंवर्णितंधर्मबलेनैवविद्योत्पत्तावविद्योच्छेदात्परमानंदाभिव्यक्तिरितिशिवम् ॥ ८३ ॥ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभाविष्यपर्वणिटीकायांत्रिपुरवधोनामत्रयस्त्रिंशाधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

॥७॥८॥९॥१०॥११॥१२॥१३॥१४॥१५॥१६॥ १७ ॥ १८॥१९ ॥ २० ॥ २१ ॥ २२॥ २३ ॥ २४॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

तारकामययुद्धंचब्रह्मलोकस्यवर्णनम् ॥ योगनिद्रासमुत्थानंविष्णोर्वाक्यंचवेधसः ७ पृथ्वीवाक्यंचदेवानामंशावतरणंतथा ॥ ततोनारदवाक्यंचस्वप्न
 गर्भविधिस्तथा ८ आर्यास्तवःपुनःकृष्णेसमुत्पत्तिःप्रपंचतः ॥ गोव्रजेगमनंविष्णोःशकटस्यनिवर्त्तनम् ९ पूतनायावधोभंगोयमलार्जुनयोरपि ॥ वृ 
कसंदर्शनंचैववृंदावननिवेशनम् १० प्रावृषोवर्णनंचापियमुनाह्रददर्शनम् ॥ कालीयस्यापिदमनंधेनुकस्यचभंजनम् ११ प्रलंबनिधनंचैवशरद्वर्णनमे
वच ॥ गिरियज्ञप्रवृत्तिश्चगोवर्द्धनविधारणम् १२ गोविंदस्याभिषेकंचगोपीसंक्रीडनंतथा ॥ रिष्टासुरस्यनिधनमक्रूरप्रेषणंतथा १३ अंधकस्यच
वाक्यानिकेशिनोनिधनंतथा ॥ अक्रूरागमनंचैवनागलोकस्यदर्शनम् १४ धनुर्भंगस्यकथनंकंसवाक्यमतःपरम् ॥ कुवलयापीडवधश्चाणूरांधवध
स्तथा १५ कंसस्यनिधनंचापिविलापःकंसयोषिताम् ॥ उग्रसेनाभिषेकश्चयादवाश्वासनंतथा १६ प्रत्यागतिर्गुरुकुलादथोक्तारामकृष्णयोः ॥ म
थुरायाश्चोपरोधोजरासंधनिवर्त्तनम् १७ विकद्रुवाक्यंरामस्यदर्शनंभाषणंतथा ॥ गोमंतारोहणंचापिजरासंधगतिस्तथा १८ गोमंतस्यगिरेर्दाहःकरवी
रपुरेगतिः ॥ शृगालस्यवधस्तत्रमथुरागमनंततः १९ यमुनाकर्षणंचैवमथुरापक्रमस्तथा ॥ उपायेनवधःकालयवनस्यप्रकीर्तितः ॥ २० ॥ निं
र्माणंद्वारवत्यास्तुरुक्मिणीहरणंतथा ॥ विवाहश्चैवरुक्मिण्यारुक्मिणोनिधनंतथा २१ बलदेवाह्निकंपुण्यंबलमाहात्म्यमेवच ॥ नरकस्यवधःपारिजा
तस्यहरणंतथा २२ द्वारवत्याविशेषेणपुनर्निर्माणकीर्त्तनम् ॥ द्वारकायांप्रवेशश्चसभायांचप्रवेशनम् २३ नारदस्यचवाक्यानिवृष्णिवंशानुकीर्त्तनम् ॥
षट्पुरस्यवधाख्यानंमेध्यकस्यनिबर्हणम् २४ समुद्रयात्राकृष्णस्यजलक्रीडाकुतूहलम् ॥ तथाभैमप्रवीराणांमधुपानप्रवर्त्तकम् २४ ततश्छालिक्यगांधर्व
समुदाहरणंहरेः ॥ आनोश्चदुहितुर्भानुमत्याहरणकीर्त्तनम् २६ शंबरस्यवधश्चैवधन्योपाख्यानमेवच ॥ वासुदेवस्यमाहात्म्यंबाणयुद्धंप्रपंचितम् २७ भ
विष्यंपुष्करंचैवप्रपंचेनैवकीर्तितम् ॥ वराहंनारसिंहंचवामनंबहुविस्तरम् २८ कैलासयात्राकृष्णस्यपौंड्रकस्यवधस्ततः ॥ हंसस्यडिंभकस्यैववधश्चैवप्र
कीर्तितः २९ पुरत्रयस्यसंहारइतिवृत्तांतसंग्रहः ॥ कथितोनृपशार्दूलसर्वपापप्रणाशनः ३० वृत्तांतंशृणुयाद्यस्तुसायंप्रातःसमाहितः ॥ सयातिवैष्णवंधा
मलब्धकामःकुरूद्वह ॥ धन्यंयशस्यमायुष्यंभक्तिमुक्तिफलप्रदम् ३१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिवृत्तांतसंग्रहोनामचतुस्त्रिंशाधि 
कशततमोऽध्यायः ॥ १३४ ॥ ॥ ७ ॥

॥ ३० ॥ ३१ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिटीकायांवृत्तांतसंग्रहोनामचतुस्त्रिंशाधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ ७ ॥ ॥ ७ ॥

हरिवंशइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ इतिश्रीमहाभारतेखि

समाप्तोयंहरिवंशः ॥ अथश्रवणफलकथनम् ॥ जनमेजयउवाच ॥ हरिवंशेपुराणेतुश्रुतेमुनिवरोत्तम ॥ किंफलंकिंचदेयंवैतद्ब्रूहित्वंममाग्रतः १ ॥ वैशं
पायनउवाच ॥ हरिवंशेपुराणेतुश्रुतेचभरतोत्तम ॥ कायिकंवाचिकंचैवमनसासमुपार्जितम् २ तत्सर्वंनाशमायातिहिमंसूर्योदयेयथा ॥ अष्टादशपुरा
णानांश्रवणाद्यत्फलंभवेत् ३ तत्फलंसमवाप्नोतिवैष्णवोनात्रसंशयः ॥ श्लोकार्द्धंश्लोकपादंवाहरिवंशसमुद्भवम् ४ शृण्वंतिश्रद्धयायुक्तावैष्णवंपदमाप्नुयुः
जंबुद्वीपंसमाश्रित्यश्रोतारोदुर्लभाःकलौ ५ भविष्यंतिनराराजन्सत्यंसत्यंवदाम्यहम् ॥ स्त्रीभिश्चपुत्रकामाभिःश्रोतव्यंवैष्णवंयशः ६ दक्षिणाचात्रदेया
वैनिष्कत्रयसुवर्णकम् ॥ वाचकाययथाशक्त्यायथोक्तंफलमिच्छता ७ स्वर्णशृंगींचकपिलांसवत्सांवस्त्रसंयुताम् ॥ वाचकायप्रदद्याद्वैआत्मनःश्रेयकां
क्षया ८ अलंकारंप्रदद्याच्चपाण्योर्वैभरतर्षभ ॥ कर्णस्याभरणंदद्याद्यानंचसविशेषतः ९ भूमिदानंसमादद्याद्ब्राह्मणायनराधिप ॥ भूमिदानसमंदानंनभूतं
नभविष्यति १० शृणोतिश्रावयेद्वापिहरिवंशंतुयोनरः ॥ सर्वथापापनिर्मुक्तोवैष्णवंपदमाप्नुयात् ११ पितॄनुद्धरतेसर्वानेकादशसमुद्भवान् ॥ आत्मानं
ससुतंचैवस्त्रियंचभरतर्षभ १२ दशांशश्चात्रहोमोवैकार्यःश्रोत्रानराधिप ॥ इदंमयातवाग्रेचसर्वंप्रोक्तंनरर्षभ १३ यस्यस्मरणमात्रेणसर्वपापैःप्रमुच्यते ॥
अपुत्रःपुत्रमाप्नोतिअधनोधनमाप्नुयात् १४ नरमेधाश्वमेधाभ्यांयत्फलंप्राप्यतेनरैः ॥ तत्फलंलभतेनूनंपुराणश्रवणाद्धरेः १५ ब्रह्महाभ्रूणहागोघ्नःसुरा
पोगुरुतल्पगः ॥ सकृत्पुराणश्रवणात्पूतोभवतिनान्यथा १६ इदंमयातेपरिकीर्तितंमहच्छ्रीकृष्णमाहात्म्यमपारमद्भुतम् ॥ शृण्वन्पठन्नाशुसमाप्नुयात्फ
लंयच्चापिलोकेषुसुदुर्लभंमहत् १७ ॥ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिश्रवणफलकथनंनामपंचत्रिंशाधिकशततमोऽध्यायः ॥ १३५ ॥
॥ इतिहरिवंशग्रंथःसमाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ शुभमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

लेषुहरिवंशेभविष्यपर्वणिटीकायांश्रवणफलकथनंनामपंचत्रिंशाधिकशततमोऽध्यायः ॥ १३५ ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्द्धरवंशावतंसश्रीगोविंदसूनोर्नी
लकंठस्यकृतौभारतभावदीपेहरिवंशांतर्ग्रंथार्थप्रकाशकःसमाप्तिमगमत् ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

हरिवंशाख्योऽयं ग्रंथः मुम्बय्यां गोपाळनारायणकम्पनीत्याख्यजनता
धिपतिना नारायणात्मजेन विनायकरायेण स्वकीयमुद्रायन्त्रेऽङ्कित्वा
प्रकाशितः खरसंवत्सरे शकाब्दाः १८१३ ख्रिस्ताब्दाः १८९१.

## संस्कृत.

| | | |
|---|---|---|
| विष्णुसहस्रनाम | रु० ० | १॥ |
| विष्णुसहस्रनामावली | ० | २ |
| कृष्णभक्तिचन्द्रिका | ० | ५ |
| वैद्यमनउत्सव | ० | ५ |
| कुवलयाश्वविलासः | १ | ० |
| नीतिवाक्यामृतम् | १ | ० |
| राघवपान्डवीयंसटीकम् | २ | ० |
| राधाविनोद सटीक | ० | २ |
| रामार्यगुच्छा | ० | २ |
| भागीरथीचम्पूः | १ | ४ |
| षट्पदमञ्जरी सटीक | ० | ४ |
| धातुकारिकावली | ० | २ |
| भाद्रपदमासमाहात्म्य | ० | १० |
| वैशाखमासमाहात्म्य | ० | ८ |
| रघुवंश इंग्रजीभाषांतरासहित | २ | १२ |
| सप्तशती रेशमी | ० | ५ |
| भगवतगीतारेशमी | ० | ५ |
| हरिवंशसटीक | ६ | ० |
| अध्यात्मरामायणसटीक | २ | ० |
| सत्यगणपतिव्रतकथा | ० | ४ |
| चातुर्मासमाहात्म्य | ० | ८ |
| गायत्रीपुरश्चरण | ० | ४ |
| चैत्रमासमाहात्म्य | ० | १२ |
| रतिमन्मथनाटकं छायासमेतम् | ० | १० |
| मुद्गलाचार्यकृतआर्यासटीक | ० | १० |

## संस्कृत.

| | | |
|---|---|---|
| भामिनीविलासः सटीकः | रु० १ | ० |
| महाभारत सटीक | ४० | ० |
| श्रीकृष्णजन्मखंड | ३ | ८ |
| देवीभागवत | ७ | ० |
| गीताश्रीधरी टीका | १ | ४ |
| ऋग्वेदसंहिता | ४ | ० |
| ऋग्वेद सायनाचार्यकृतभाष्यासहीत | ५० | ० |
| धर्मसिंधु | ३ | ० |
| विजयध्वजी भागवत | १० | ० |
| स्तोत्ररत्नाकर | १ | ० |
| बोधायनसनिर्णयप्रयोगमाला | ८ | ० |
| मार्कंडेय पुराण | ४ | ८ |
| ऋग्वेदी ब्रह्मकर्म | ३ | ८ |
| हिरण्यकेशी ब्रह्मकर्म | ४ | ० |
| व्रतराज टिप्पणीसहीत | ५ | ० |
| पंचदशी सटीक | ३ | ० |
| यजुर्वेद ( तैत्तिरेयकृष्ण ) संहिता | ३ | ० |
| योगवासिष्ठ सटीक | २० | ० |
| अमरकोश सटीक | १ | ० |
| हटयोगप्रदीपिका सटीक | २ | ८ |
| बृहज्जातक सटीक | २ | ० |
| वीरसिंहावलोकन | १ | १२ |
| शंकरानंदीगीता | ५ | ० |
| सतोपख्यानरामायण | १ | ८ |
| महाशिवपुराणम् सटीकम् | १६ | ० |

## संस्कृत.

| | | |
|---|---|---|
| श्रीमद्भागवतं विजयध्वजीसं० | रु० १० | ० |
| आनन्द रामायणम् | ५ | ० |
| श्रीमद्भागवतं गुटकात्मकं | ३ | ८ |
| गरुडपुराणं ( प्रेतकल्पः ) सटीकम् | १ | ० |
| स्तोत्ररत्नाकर | १ | ० |
| सिद्धान्तकौमुदी | २ | ८ |
| क्रियापद प्रकाशः | ० | १२ |
| रामाश्वमेध | २ | ८ |
| कथासरित्सागर | ६ | ० |
| कुवलयानन्द सटीक | १ | ८ |
| दशकुमार चरित्र | १ | ८ |
| पञ्चदशी सटीक | ३ | ० |
| गीतगोविन्द सटीक | १ | ० |
| श्रीवेङ्कटेश महात्म्य | ५ | ० |
| कुमार संम्भव | २ | ० |
| मध्वविजयमूळ | ० | १२ |
| भोजचम्पूः | १ | ० |
| अमरकोशमळ | ० | ८ |
| मध्वविजय सटीक | ५ | ० |
| अनुभूति प्रकाश | २ | ४ |
| अमरकोश ( रामाश्रमी टीका ) | ५ | ० |
| बाणकृत कादंबरी सटीक | ५ | ० |
| रामाश्वमेध | ३ | ० |
| किरातार्जुनीय काव्य | २ | ० |
| मनुस्मृति सटीक | २ | ० |

## संस्कृत.

| | | |
|---|---|---|
| गीतामधुसुदनी टीका | रु० ४ | ० |
| गीतामृततरङ्गिणी भाषाटीका | १ | ४ |
| बृहज्ज्योतिषार्णव सटीक | ७ | ० |
| सर्वार्थचिंतामणि | ० | १२ |
| भोजप्रबंध | ० | ८ |
| शाकुन्तलनाटक सटीक | १ | ४ |
| पञ्चरत्नीगीता | ० | ७ |
| लघुकौमुदी | ० | ६ |
| हितोपदेश | ० | ८ |
| नलचम्पूः सटीक | २ | ० |
| रघुवंश सटीक | १ | ० |
| तर्कसंग्रह | ० | ६ |
| साम्बपुराण | २ | ० |
| गर्गसंहिता | ४ | ० |
| एकादशीमाहात्म्य | ० | १० |
| संस्कार भास्कर | ३ | ० |
| चिकित्साक्रमकल्पवल्ली | ३ | ० |

॥ इति श्रीहरिवंशः टीकासमेतः संपूर्णः ॥

